*Parimal Sanskrit Series No. 11*

# RĀMĀYAṆA OF VĀLMĪKI

WITH THE COMMENTARIES
TILAKA OF RĀMA, RĀMĀYAṆAŚIROMAṆI OF
ŚIVASAHĀYA AND BHŪṢAṆA OF GOVINDARĀJA

*EDITED BY*

SHASTRI SHRINIVASA KATTI MUDHOLAKARA

INCLUDES AN EXHAUSTIVE INTRODUCTION
IN SANSKRIT AND INDEX OF VERSES

*by*

SATKARI MUKHOPADHYAYA

## Vol. I

BĀLAKĀṆḌA

*Sole Distributors :*

MEHARCHAND LACHHMANDAS
ORIENTAL BOOKSELLERS & PUBLISHERS
DARYAGANJ, NEW DELHI-110 002

परिमल संस्कृत ग्रन्थमाला संख्या-११

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम्

रामप्रणीतरामायणतिलक—शिवसहायप्रणीत
रामायणशिरोमणि—गोविन्दराजप्रणीत-
रामायणभूषणेति-टीकात्रयेणोपस्कृतम् ।

तच्च

**कट्टी श्रीनिवासशास्त्रिभिः**

संशोधितं पाठान्तरैः टिप्पण्यादिभिश्च समलंकृतम्

तथा

**श्रीसातकडिमुखोपाध्यायशर्मणा**

विनिर्मितया विशदभूमिकया श्लोकानुक्रमण्या च
सनाथीकृतम् ।

**प्रथमो भागः**

[बालकाण्डम्]

**परिमल पब्लिकेशन्स**

**दिल्ली — अहमदाबाद**

प्रकाशक :

**परिमल पब्लिकेशन्स**

३३/१७ शक्तिनगर
दिल्ली-११०००७
(भारत)

अधिकृत विक्रेता :

**मेहरचन्द लछमनदास**

प्रकाशक एवं पुस्तक-विक्रेता
१ अन्सारी रोड, दरियागंज
नई दिल्ली-११०००२ (भारत)

१९८३
मूल्य : रु० १६०

मुद्रक :

एo केo डिस्ट्रीब्यूटर्स, द्वारा
डीलक्स आफसेट प्रिंटर्स
दिल्ली-११००३५

# प्रस्तावना

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद् रामायणकथा लोकेषु प्रचरिष्यति ॥[1]

नेयं कविगुरोर्दम्भोक्तिरपि तु त्रिकालाबाधितदृष्टेर्महर्षेर्भूतार्थकथनमिदम् । अन्यूनद्विसहस्रवर्षेभ्यो न केवलं भारते वर्षे अपि तु द्वीपान्तरेष्वनेकेष्वियं रामायणकथाऽऽपामरप्रेक्षावज्जननिर्विशेषं मनुष्यहृदयानि आवर्जयति । सेयं रामकथा महर्षिणा प्राचेतसेन वाल्मीकिना रामायणे महाकाव्य उपनिबद्धाऽद्यापि सहृदयैर्धर्मार्थकाममोक्षार्थिभिरितिवृत्ततत्त्वानुसन्धित्सुभिः समाजशास्त्रजिज्ञासुभिश्च सानुरागं सश्रद्धं सकौतुकं च परिशील्यते । विश्वस्मिन् लौकिकवाङ्मये न दृश्यते ग्रन्थान्तरं यस्य जनानां चरित्रे चिन्तने च इयान् गभीरः प्रभावोऽनुभूयेतेति युक्तमेवाह विपश्चिन्माकेदोनेल महोदयः ।[2] श्रीमद्विवेकानन्दस्वामिपादा अपि रामायणं महाभारतं च प्राचीनार्यज्ञानस्य विश्वकोशौ समुन्नतमानवसंस्कृतेराधारौ च मन्वते ।[3]

श्रीमद्वाल्मीकिरचितं रामायणमिदं वाङ्मयप्रकारेषु कतमस्मिन्नन्तर्भवतीति जिज्ञासायां बहु वक्तव्यं विमर्शनीयं च वर्तते । प्रतीच्याः समीक्षका रामायणं (तथैव महाभारतमपि) Epic-नाम्ना व्यपदिशन्ति, epic-शब्दस्य भारतीयभाषासु महाकाव्यमिति रूपान्तरमपि अद्यत्वे प्रसिद्धम् । अतएव रामायणमपि महाकाव्यत्वेनैव निर्दिश्यते । अत्र केचन प्रत्यवतिष्ठन्ते—यवनमहाकविहोमेरनिर्मिते 'इलिआद'-'ओदिसी'-इत्याख्ये महाकाव्ये तथा रोमकमहाकवि-वेर्गिल-निर्मितम् 'ईनिद' महाकाव्यं च पाश्चात्यकाव्यशास्त्रोक्तलक्षणानुसारं epic-पदवाच्यानि, रामायणे तादृशं epic-लक्षणं न संगच्छते; epic-संज्ञकं काव्यं वीररसप्रधानं च भवति, रामरावणयोर्युद्धवर्णनसत्त्वेऽपि रामायणं न

1. रामायणम् I. 2 36-37
2. "Probably no work of world literature, secular in origin, has ever produced so profound an influence on the life and thought of a people as the Rāmāyaṇa." —A. A. Macdonell in Encyclopaedia of Religion and Ethics, vol. x, p. 574.
3. "In fact, the Ramayana and the Mahabharata are the two encyclopaedias of the ancient Aryan life and wisdom, portraying an indeal civilization which humanity has yet to aspire after."—The Complete Works of Swami Vivekananda, 10th ed., Advaita Ashrama, Almora, 1972, vol. 4, p. 101.

वीररसमात्रप्रधानं, तत्र शृङ्गारकरुणादीनां सर्वेषां रसानां समानत्वेन सत्त्वात् ।[1] दण्ड्यादिकाव्यशास्त्र-कर्तृनिर्दिष्टं[2] महाकाव्यलक्षणमपि न तथा रामायणे घटते, यथा कालिदास-भारव्यादिकृतिषु । अतएव रामायणं न महाकाव्यमिति ।

रामायणे पाश्चात्यकाव्यशास्त्रोक्तं epic-लक्षणं न घटत इति सर्वथोररीकुर्मः । किन्तु तेन रामायणस्य महाकाव्यत्वहानिर्न शङ्कनीया । 'महाकाव्य'-पद epic-पदस्यैव छायामात्रमिति नव्यानां मतं त्वश्रद्धेयम्, भारतीयालंकारशास्त्रेषु 'महाकाव्य'नाम्नः काव्यप्रकारस्य भूयस्या प्रसिद्धेः । आख्यानेतिहासत्वेऽपि[3] रामायणस्य काव्यत्व न कथमपि व्याहन्यते । रामायणमात्मानमसकृत् काव्य-त्वेनैव[4] निर्दिशति ।

सकललौकिककाव्येषु रामायणस्य आकृत्या गुणेन च महत्त्वे को नाम कृतात्मा सन्दिह्यात् । अतः काव्यत्वेन महत्त्वेन च रामायणस्य महाकाव्यत्वं निर्विवादमेव ।[5] अपि च दण्डि-भामहादिनिर्दिष्टं महाकाव्यलक्षणं रामायणे न घटत इति तु न, सूक्ष्मेक्षिकया पर्यालोच्यमाने रामायणस्याधारेणैवालङ्कारि-कैस्तादृशं महाकाव्यलक्षण प्रत्यपादीति प्रतिभाति ।[6] न केवलं रामायणं स्वयमेवोत्कृष्टं महाकाव्यमपि तूत्तरकालिकमहाकाव्यानामादर्शभूतमेव । अतएवेदमादिकाव्यं[7] तत्कर्ता चादिकविरिति व्यपदिश्येते भारतीयैतिह्यविद्भिः । किन्तु केचन नव्या समीक्षका रामायणस्यादिकाव्यत्वे संशेरते । तन्मतेन तु वर्तमानरामायण उपलभ्यमाना काव्यगुणभूयिष्ठाः श्लोका उत्तरकाले प्रक्षिप्ताः; रामायणस्यासकृत् परिवर्तन परिवर्धन-प्रक्रियायामेव तत्रोपन्यस्ताः । अतएव कालिदासाश्वघोषभारव्यादिमहाकविकृतानां

---

1. रसैः शृङ्गारकारुण्यहास्यरौद्रभयानकैः ।
   वीरादिभी रसैर्युक्तं (वीरादिभिश्च संयुक्तं) काव्यमेतदगायताम् ॥ - रामायणम्, I. 4.9.

2. द्रष्टव्यो दण्डिकृत काव्यादर्शः, I. 14-19.

3. क. "एतदाख्यानमायुष्यम्"— I.1. 99; "महदुत्पन्नमाख्यानं रामायणमिति श्रुतम्"— I. 5.3; "एतावदेतदाख्यानं"—VII. 111.1.
   ख. "पूजयंश्च पठंश्चेममितिहासं पुरातनम्"—VI. 131. 112.

4. "न ते वागनृता काव्ये काचिदत्र भविष्यति"—I. 2 35
   "कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्"—I. 2 41
   "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्"—I. 4.5 इत्येवमादिषु स्थलेषु ।

5. द्रष्टव्यम्—रवीन्द्रनाथठाकुर, प्राचीन साहित्य, रवीन्द्ररचनावली, विश्वभारती, 1347 [1940], ५म भाग, पृ० 501-502.

6. Pusalkar, A. D., The Rāmāyaṇa : its history and character in the Cultural Heritage of India, 2nd ed, Ramakrishna Mission Institute of Culture, Calcutta, 1969, vol. II, p. 26.

7. "आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम्"— रामायणम्, VII. 111.15

स्वलंकृतकाव्यानां वाल्मीकेराधमर्ण्यं, नोपपद्यत इति । अस्य पक्षस्यासारत्वं संस्कृतकाव्यमर्मज्ञैः ए. बेरीडेल् कीथ महाभागैः सुष्ठु दर्शितम् । काव्यगुणसमृद्धाः केचन श्लोका वाल्मीकेरुत्तरवर्तिकाले प्रक्षिप्ता अपि न ईशापूर्वद्वितीयशताब्द्या अनन्तरभाविन इति तु निश्चप्रचम् । प्रागुक्तमहाकवीनामेकोऽपि ईशापूर्वद्वितीयशताब्द्याः पूर्वमाविर्बभवेति नाद्यापि केनापि निर्णीतम् । अतोऽलंकृतसंस्कृतकाव्यपरम्परायामिदानीमुपलभ्यमानं वाल्मीकिरामायणमेवादिममिति सिद्धान्तो विप्रतिपत्तिविरहितो भवति ।[1]

विश्वकविश्रीरवीन्द्रनाथठाकुरमहाशयास्तु मन्यन्ते— काव्यम् द्विधा—कविविशेषस्य काव्यम् कस्यचित् बृहतः सम्प्रदायस्य काव्यं च । द्वितीये प्रकारे न केवलं कविविशेषोऽपि तु कृत्स्नः कश्चिद् भूभाग, कृत्स्नः कश्चिद् कालखण्डश्च स्वहृदयं स्वानुभवं च व्यक्तीकृत्य तत् काव्यं समग्रस्य मानवसमुदायस्य चिरन्तनरिक्थरूपेणार्पयतः ।… रामायण-महाभारतयोरखिला भारतभूर्निःशेषमात्मानं प्रकटितवती ।[2]

प्रागेवोक्तं यद् रामायणमात्मानमितिहासपदेनापि निर्दिशति । इतिहास-पुराणयोर्वेदोपबृंहकत्वं प्रसिद्धं महाभारते ।[3] रामायणमपि वेदोपबृंहणार्थमेव महर्षिणा प्रवर्तितम्[4]— अतएव रामायणस्यापीतिहासत्वं स्वतः सिद्ध्यति । इतिहासनाम्नो वाङ्मयस्य प्राचीनत्वं प्रसिद्धं; बृहदारण्यकादिश्रुतिषूल्लेखात् ।[5] किन्तु तत्र तत्र श्रुतिषु इतिहासशब्देन ब्राह्मणग्रन्थस्थाः संवादा एव लक्ष्यन्त इति श्रीशंकरभगवत्पादाः ।[6] श्रीभगवत्पादवचनस्येदमेव तात्पर्यं यद् यत्र यत्र ब्राह्मणेषु 'इति ह' इत्यादिपदजातद्योतितप्राचीनाख्यानानि उपवर्णितानि तत्तदेवेतिहासलक्षणाक्रान्तम् । अत एव "इति ह आस" इतीतिहासशब्दनिरुक्तिरपि संगच्छते । गच्छति काले प्राचीनाख्यानवर्णनपरेषु ब्राह्मणातिरिक्तग्रन्थेष्वपि इतिहासशब्दो रूढ इति न काऽपि विसंगतिः । अनयैव रूढ्या रामायणस्यापीतिहाससंज्ञा । भारतीयैतिह्ये रामायणस्येतिहासत्वेन प्रसिद्धेरिदमपि ध्वन्यते यद् रामायणमाधुनिककाव्यवन्न कविकल्पनाप्रसूतं कथावस्तु उपजीव्य प्रावर्तिषि, अपि तु प्राचीनतथ्यविशेषमुपजीव्यैव विरचितम्; अतएवाधुनिकेऽप्यर्थे रामायणे इतिहासः (history) अनुस्यूतो वर्तते ।[7] रामायणस्य काव्यत्वेतिहासत्वयोः सिद्धयोर्धर्मशास्त्र-

---

1. Keith, A. Berridale, A History of Sanskrit literature, Oxford University Press, London, 1966, p. 42-43.

2. द्रष्टव्यम्—श्रीरवीन्द्रनाथठाकुर, प्राचीन साहित्य, रवीन्द्ररचनावली, विश्वभारती, कलिकाता, 1347 [1940], ५म भाग, पृ० 501-502.

3. इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् ।
विभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥—महाभारतम्

4. स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः । - रामायणम्, I. 4.6.

5. बृहदारण्यकोपनिषत्, II. 4.10; IV. 1.2; IV. 5.11.

6. "इतिहास इत्युर्वशीपुरूरवसोः संवादादिः, 'उर्वशी हाप्सराः' इति ब्राह्मणम् ।"—तत्रैव भाष्यम् ।

7. Pusalkar, A.D., op. cit., p. 27.

वल्लोकशिक्षकत्वमपि स्वत एव सिद्धयति ; "सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च•• कान्तेव सरसताऽऽपादनेनाभिमुखीकृत्य रामादिवद् वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोग कवे. सहृदयस्य च करोतीति···"—इत्याद्यालंकारिकवचनप्रामाण्यात् ।[1] अस्य महाकाव्यस्य धर्मकामार्थसहितत्वं स्वयं महर्षिणैवोदीरितम् ।[2]

रामकृतवालिवधलङ्काजयादिरूपकच्छलेन रामायणे दाक्षिणात्ये श्रीलङ्काद्वीपे चार्यसंस्कृते-विजय एवोपवर्णित इति केषांचन पाश्चात्यपण्डितानां[3] मतमश्रद्धेयम्, श्रीमद्विवेकानन्दस्वामिपादैः सम्यङ् निराकृतं च ।[4] एतादृशेष्वन्येष्वपि विषयेषु पाश्चात्यपण्डितानां भ्रमविजृम्भिता उक्तय उपेक्षणीया एवेति तत्र विस्तरे न प्रसज्यते ।

रामायणग्रन्थोऽद्यत्वे चतुर्षु पाठसंप्रदायेषु ईषद्भिन्नपाठतया दृश्यते, ते यथा—दाक्षिणात्य-पाठः, गौडीयपाठः, पाश्चात्यपाठः, पश्चिमोत्तर(काश्मीरक)पाठश्च । तत्र आन्ध्र-ग्रन्थ-केरल-कर्णाटक-लिपिचतुष्टयेनाङ्कितोऽपि दाक्षिणात्यपाठः प्रायः सर्वत्र समरूपः । गौडीयकाश्मीरकपाठयोर्मिथः साम्यं वैषम्यं च दरीदृश्येते । देवनागरलिपिलिखितमातृकासूपलब्धः पाश्चात्यपाठस्तु दाक्षिणात्यकाश्मीरक-पाठयोः समन्वयरूप इति प्रतिभाति ।[5] सुनिपुणपर्यालोचनया दाक्षिणात्यपाठ एव प्राचीनतमो यावदुपलब्धं शुद्धतमश्चेति निरूपयितुं शक्यते । बहोः कालात् कण्ठपाठेनैव रामायणस्य प्रचलनमेव चतसृषु पाठ-परम्परासु मिथः पाठभेदे निदानमिति शार्मण्यविद्वांस एम्० ह्विन्तार्नित्स्महाभागा आमनन्ति ।[6] तन्न मनोरमम्; महाभारताभिज्ञानशाकुन्तलादिग्रन्थानामपि तादृशपाठसंप्रदायभेददर्शनात् । लक्षश्लोकात्मकं महाभारतमभिज्ञानशाकुन्तलं नाटकं च शताब्दीर्यावत् कण्ठपाठेन प्रचलतः स्मेति न श्रद्धास्पदम् । वस्तुतस्तु बहुशतयोजनविस्तीर्णायां भारतभूमौ विभिन्नदेशेषु पृथक्-पृथक् परःसहस्रवर्षाणि पठ्यमानस्य जनानामतिप्रियस्य ग्रन्थस्य पाठभेदोऽनिवार्य एव । विशेषतस्तु मुद्रणव्यवस्थाया असत्त्वे, तत्र तत्र लेखकै-र्विद्वद्भिश्च स्वबुद्धिप्रतिभाऽनुसारं स्वसम्प्रदायानुकूलं च संयोजन-परिवर्जनादि क्रियते स्मेति न किमपि

---

1. Mammata Bhatta's Kavyaprakāśa with Maheswara's Commentary, Āda-śa, Metropolitan Printing and Pub. House, Calcutta, 1936, p. 10 11
2. तदिदं वर्तयिष्यावः सर्वं निखिलमादितः ।
धर्मार्थकामसहितं श्रोतव्यमनसूयता ।। —I.5.4.
3. Weber and Lassen.
4. द्रष्टव्यम्, प्राच्य ओ पाश्चात्य, स्वामीजीर वाणी ओ रचना, ६ष्ठ खण्ड, उद्बोधन कार्यालय, कलिकाता, 1383 (1977), पृ० २१०.
5. The Vālmiki-Rāmāyaṇa : Critical edition, Orienal Institute, Baroda, 1960-1975, vol. I, introd., p. XXIX-XXX; Pusalkar, A. D., op. cit., p. 23-24.
M. Winternitz महोदयस्तु पाश्चात्यपाठमुपेक्ष्य त्रय एव पाठसप्रदाया इति मन्यते । द्रष्टव्यम्—Winternitz, M., A History of Indian Literature, University of Calcutta, 1927, vol. I, p. 498.
6. Winternitz, M., op. cit., p. 499.

चित्रम् । एतदत्रावधेयम् संजातेऽपि प्रागुक्तरूपे पाठसंप्रदायभेदे ग्रन्थस्य मूलरूपं प्रकृतिश्चाद्यापि अविकृते एव वर्तेते ।

विभिन्नपाठसंप्रदायानुसारिणो ग्रन्थस्य मुद्रणमपि बहुधा जातम् । गौडीयपाठस्य बालकाण्डायोध्याकाण्डयोराङ्गलानुवादसहितस्य प्रथमं मुद्रणं वङ्गान्तर्गतश्रीरामपुरनगरे श्रीविलियमकेरीनाम्ना क्रैस्तवधर्मप्रचारकेण विहितम् ।[1] अनयोरेव काण्डयोर्द्वितीयं मुद्रणं (लातिनानुवादसहितम्) शार्मण्यदेशस्थ-बन् नगरेऽभूत् ।[2] गौडीयपाठस्य समग्रस्यापि मुद्रणं यूरोपखण्डे इतालीदेशे निष्पन्नम् ।[3] तदनन्तरं वङ्गेषु टीकानुवादसहितस्यास्य पाठस्यासकृन्मुद्रणं जातम् । विस्तरभियाऽत्र तेषां प्रत्येकमुल्लेखाद्विरमामः । पश्चिमोत्तरपाठस्यैकं संस्करणं श्रीभगवद्दत्त-रामलभयप्रभृतिभिर्विद्वद्भिः सुष्ठु परिशोधितं सत् लवपुरीय-दयानन्दमहाविद्यालयेन प्राकाश्यं नीतम् ।[4]

गोविन्दराज-महेश्वरतीर्थकृतटीकाभ्यां समुपेतो दाक्षिणात्यपाठ इदम्प्रथमतया[5] मद्रासनगरे ग्रन्थलिप्यां मुद्रापितः ।[6] तदनन्तरं च पुनरस्य पाठस्य प्रकाशनं देवनागरलिप्यां मुम्बईनगरे जातम् ।[7] एतदपि संस्करणमद्य यावत् प्रमाणत्वेनाङ्गीक्रियते ।

प्रागेवोक्तं पाश्चात्यपाठस्तु दाक्षिणात्य-पश्चिमोत्तरपाठयोः समन्वयरूपः । मुम्बईनगरेऽन्यत्रापि तिलकाद्यनेकटीकासहितस्य मूलमात्रस्य वाऽस्य पाठस्य प्रकाशनमभूत् ।[8] प्रस्तुतं संस्करणमपि

---

1. The Ramayana of Valmeeki, in the original Sungskrit : with a prose translation and explanatory notes by William Carey and Joshua Marshman., Serampore, 1806-1810.
2. Ramayana, id est carmen epicum de Ramae rebus gestis poetae antiquissimi Valmicis opus : tetum codd. mss. collatis recensuit interpretationem latinan et annotationes criticas adiecit Augustus Guilelmus a Schlegel, Bonnae ad Rhenum, typis regis sumtibus editoris. 1829-1838.
3. Ramayana, poema indico di Valmici. Testo Sanscrito secondo i codici manosteritti della Scoula Gaudana per Gaspare Gorresio. Parigi, Stamperia Reale, Stamperia Nazionale, Stamperia Imperiale, 1843-1867. अस्य संस्करणस्य भारते पुनर्मुद्रिता प्रतिकृतरिदानीमुपलभ्यते । (Indian Heritage Trust, Madras, 1980-1983)
4. D.A.V. College, Research Dept., Lahore, 1923-1931
5. एतस्मात् पूर्वमपि मुद्रितं चेत् तन्नास्माकं दृग्गोचरीभूतमिति सविनयं निवेदयामः ।
6. Valmiki's Ramayana, with the commentaries of Govindaraja and Mahesvaratirtha. Edited in Grantha characters by K. Venkatakṛṣṇa Śāstri. Madras, 1889.
7. Srimad Valmiki Ramayana according to the Southern readings. Edited by T. R. Krishnacharya, Nirnaya Sagar Press, 1905. अस्य संस्करणस्य पुनर्मुद्रिता प्रतिकृतिरिदानीमुपलभ्यते (Sri Sadguru Publications, Delhi, 1982)
8. मूलमात्रं मुम्बईनगरस्थ-निर्णयसागरमुद्रणालयेन १९०७ तमे ईशवीयेऽब्दे, तिलकटीकायुतं १८८८ तमे ईशवीयेऽब्दे मुद्रापितम् ।

मुख्यतया पाश्चात्यपाठानुसारीनि विज्ञेयम् । आर्यावर्ते काशीगोरक्षपुरप्रभृतिस्थलेषु प्राकाश्यं नीतानि प्राय: सर्वाण्येव संस्करणानि पाठसम्प्रदायमिममनुसरति ।

सर्वेषामेतेषां चतुर्णां सम्प्रदायानां पाठान् परस्परं संवाद्य सर्वप्रान्तेभ्य: समाहृतानां सकललिप्यङ्कितानां मातृकाणां नवीनशोधपरिपाट्या, विमर्शेन समीक्षात्मकं किनपि संस्करणं बडोदरानगरस्थप्राच्यविद्यामन्दिरेण प्राकाश्यं नीतम् ।[1] अस्य संस्करणस्य भूमिकावलोकनाद् विज्ञायते यदद्यत्वे रामायणस्य किंचिदधिकद्विसहस्रसंख्याका मातृका उपलभ्यन्ते ।[2] तासु प्राचीनतमा नेपाल(नेवारी)लिप्यां १०७६ तमे वैक्रमसंवत्सरेऽङ्किता दिल्लीवास्तव्यानामिदानीं कीर्तिशेषाणां डा० रघुवीरविपश्चिदुत्तमानां सग्रहे विद्यते । तदीयसुपुत्रै: डा० लोकेशचन्द्रमहाभागैरस्या मातृकाया: काचन प्रतिकृतिरपि मुद्रापिता ।[3] आसां पङ्क्तीनां निवेदयित्रा सा मातृका न सम्यक् परीक्षिता, अत: सा कतमं पाठसम्प्रदायमनुसरतीति न निश्चयेन वक्तुं शक्यते ।[4]

अद्यत्व उपलभ्यमानं श्रीमद्वाल्मीकिरामायणं सप्तभि: काण्डैर्विभक्तं किञ्चिदधिकचतुर्विंशतिसहस्रश्लोकात्मकं च ।[5] काण्डानि च प्रत्येकमनेकै: सर्गैर्विभक्तानि । तत्र काण्डानि यथा —१. बालकाण्डम्, २. अयोध्याकाण्डम्, ३. आरण्यकाण्डम्, ४. किष्किन्धाकाण्डम्, ५. सुन्दरकाण्डम्, ६. युद्धकाण्डम्, ७. उत्तरकाण्डं च । दक्षिणात्यपाठानुसारं[6] तु सर्वमाहृत्य सर्गसंख्या अष्टचत्वारिंशदुत्तरषट्शतमिता दृश्यते । बालकाण्डचतुर्थसर्गस्थद्वितीयश्लोके सर्गसंख्या "सर्गशतान् पञ्च" (अर्थत: पञ्चशतानि) इत्युक्तम् । अत्र रामायणतिलकटीकाकृतस्तु इत्थं समादधति—"तत्र पञ्चशतरूपसर्गसंख्या षट्काण्डानामेव, श्लोकसंख्या तु सोत्तराणामेव ।" कतकटीकाकृतस्तु षट्सु काण्डेषु सर्गसंख्या षट्त्रिंशदधिकपञ्चशतमिता,[7] श्लोकसंख्या च चतुर्विंशतिसहस्रापेक्षयाऽप्यधिकेति निरदिशन् । तन्मतेन तु

---

1. The Vālmīki-Rāmāyaṇa : Critical edition. Board of editors, J. M. Mehta···et al. 7 vols. Oriental Institute, Baroda, 1960-1975.

2. Ibid., vol. I. introd., p. xxix.

3. Ramayana of Valmiki : facsimile edition of the oldest manuscript dated samvat 1076. Reproduced by Lokesh Chandra. Sharda Rani, Delhi, 1982. (From the collection of Prof. Raghuvira)

4. प्रागुक्तबडोदरासंस्करणस्य बालकाण्डभूमिकायां XV पृष्ठे समुल्लिखितया N1-संज्ञकया मातृकयाऽस्या: संबन्धोऽनुसन्धेय: ।

5. चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषि: ।
तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम् ॥ —रामायणम् I. 4.2.

6. कुम्भघोणसंस्करणे यथा ।

7. अस्माकं गणनया तु षट्सु काण्डेषु आहृत्य ५३७ सर्गा विद्यन्ते ।

"चतुर्विंशत्सहस्राणी" त्यादिश्लोक एव प्रक्षिप्तः ।[1] प्रक्षिप्तवादविषयेऽग्रे विस्तरेण विमर्शिष्यते ।

यद्यपि रामायणस्य कथावस्तु जानपदानां कर्षकाणां पर्णकुटिरादारभ्य पौराणां कृतात्मनां समुन्नतसौधावलीं यावत् सर्वत्रैव लब्धप्रसरं वरीवर्ति तथापि प्रसङ्गप्राप्तत्वात् संक्षेपतस्तदत्र वर्ण्यते । तत्र बालकाण्डे अयोध्याधिपतिदशरथपरिचयात् प्रभृति रामस्य सीताविवाहानन्तरमयोध्याप्रत्यावर्तनं यावत्, अयोध्याकाण्डे रामाभिषेकव्यवसायादारभ्य ससीतालक्ष्मणस्य रामस्य दण्डकारण्यप्रवेशं यावत्, अरण्यकाण्डे दण्डकारण्ये रामेण महर्षीणां दर्शनादारभ्य पम्पादर्शनं यावत्, किष्किन्धाकाण्डे रामविप्रलम्भादारभ्य हनूमतः समुद्रलङ्घनावष्टम्भं यावत् सुन्दरकाण्डे हनूमतः समुद्रलङ्घनादारभ्य लङ्कायाः प्रत्यावृत्तस्य तस्य रामसमाश्वसनं यावत्, युद्धकाण्डे हनूमत्प्रशंसनादारभ्य श्रीरामपट्टाभिषेकं यावत्, कथा ह्युपवर्णिता । उत्तरकाण्डे तु मुख्यतया रावणस्य पूर्वे वृत्तान्ता वर्णिताः । सीतावनवासादिरामस्वर्गारोहणान्ता रामकथाऽप्यत्रैवोत्तरकाण्डे दृश्यते ।

वाल्मीकिरामायणे बहवोऽंशा महर्षिणा वाल्मीकिना न स्वयं निर्मिता अपि तु तदनन्तरभाविभिः कविभिर्व्याख्यातृभिः पुराणपाठकैर्वा विरच्य मूलग्रन्थे प्रक्षिप्ता इत्यत्र प्रायः सर्वे पाश्चात्त्यभूमण्डलाभिजनाः संस्कृतविद्वांसस्तथा तन्मतानुसारिणो भारतीयपण्डिता ऐकमत्यं बिभ्रति । अतएव रामायणस्यप्रक्षिप्तांशविषये क्रियमाणं विवेचनं नाप्रासङ्गिकम् । आदावेवेदमवधारणीयं यत् प्रक्षिप्तवादो न नव्यानां विदुषां किमपि नवीनमाविष्करणम् । अस्मद्देशे पाश्चात्त्यसरण्या पाठसमीक्षाप्रवर्तनात् बहोः कालात्पूर्वमेव सूक्ष्मशेमुषीशालिनो नागेशशिवसहायमाधवयोगिप्रभृतयष्टीकाकृतः प्रक्षिप्तश्लोकविषये बहु व्यमृशन् । विस्तरस्तु तत्तदाकर एव द्रष्टव्यः ।

वाल्मीकिरामायणे सन्त्यनेके प्रक्षिप्ताः श्लोका इत्यत्रास्माकं सिद्धान्ततो न काऽपि विप्रपतिपत्तिः । अत्र वयमपि विद्वन्मूर्धन्यानां गोविन्दराजमहाभागानां "यद्याप्याधुनिके पाठे श्लोकानां सर्गाणां च विपर्यासो दृश्यते, तथाऽपि बहुचतुर्युगान्तरितत्वेन विप्लवो युक्तः" इत्यस्मिन् वाक्ये श्रद्दध्मः । किन्त्वेतदपि न विस्मरणीयं यदद्य निःशेषेण प्रक्षिप्तश्लोकानां विवेको मनुष्यशक्तेरतीत एव ।

रामायणस्योत्तरकाण्डं प्रक्षिप्तमित्यत्र प्रायः सर्वेषां नव्यविदुषामैकमत्यमवलोक्यते । ते पुनर्बालकाण्डमपि प्रक्षिप्तत्वेन निर्दिशन्ति ।[2] अयोध्याकाण्डादारभ्य युद्धकाण्डं यावत् शुद्धत्वेनाङ्गीकृतेऽपि भाग इतस्ततः प्रक्षिप्ताः श्लोका वर्तन्ते इत्यपि ते तर्कयन्ति । तन्मतेन तु बालकाण्डस्य प्रक्षिप्तत्वे इमा उपपत्तयः — बालकाण्डस्य भाषा शैली च शेषभागस्थभाषाशैलीभ्यां निकृष्टतरे, शुद्धभागे बालकाण्ड-

---

1. "उक्तसंख्यापेक्षया षट्त्रिंशत्सर्गसंख्याऽऽधिक्यदर्शनात् चतुर्विंशत्सहस्रापेक्षया श्लोकसंख्याया अल्पाधिक्यदर्शनाच्च उत्तरकाण्डीयसर्गसंख्यानुक्तेश्च प्रक्षिप्तोऽयं श्लोको न त्वार्षः ।"

2. Winternitz, M., op. cit., p. 495 ff., Jacobi, H., Das Ramayana, Geschichte und Inhalt, Bonn, 1893; Macdonell, Arthur, A., A history of Sanskrit literature, William Heinemann, London, 1917, p. 304, etc. etc.

गनवृत्तानामुल्लेखो नास्ति, क्वचित् बालकाण्डेन शुद्धभागस्य विरोधोऽपि दृश्यते,[1] अनेकत्र प्रकृतकथासूत्रविच्छेदेनाख्यानान्तराण्युपन्यस्तानि, बालकाण्डे रामो विष्णोरवतारत्वेन कीर्तित इति च । अत्र वयं ब्रूमः—प्राचीनानां सिद्धहस्तानां कवीनां ग्रन्थकृतां च भाषाशैल्यौ वर्ण्यविषयानुरोधेन भिन्नतां भेजेते स्म । विशेषतस्तु पाणिनेः प्राक् भाषाया रूपेऽनिर्णीते, अलंकारशास्त्राभावाच्च रीत्यादीनामनिरूपितत्वे, वाल्मीकिसदृशानां कवीनां हृदयात् स्वतोऽभ्युद्गतेषु काव्यप्रवाहेषु सर्वत्र भाषाशैल्योरेकरूपता नापेक्षिता । भाषापरीक्षणेन प्राचीन संस्कृतग्रन्थानां कालनिर्णयस्तु सदैव सदोष एव भवति । अस्मिन प्रसङ्गे ई० बी० कावेल (E. B. Cowell) चन्द्रकान्ततर्कालंकारयोः संवादः स्मर्तव्यः । प्रकृतकथासूत्रविच्छेदेनोपदेशात्मकानामाख्यानान्तरणां समावेशो न प्रक्षिप्तत्वे प्रमाणम् । लोकशिक्षार्थं प्रवृत्तेषु पुराणेतिहासेषु पञ्चतन्त्रादिकथाग्रन्थेषु चेयं परिपाटी सर्वत्रावलम्ब्यते । रामायणस्येतिहासत्वं पूर्वमेव प्रतिपादितम् । तुष्यतिदुर्जनन्यायेन तादृशाख्यानानामप्रासङ्गिकत्वाङ्गीकारेऽपि आख्यानानामेव प्रक्षिप्तत्वं सिद्धयेत्, न पुनर्मूलग्रन्थस्य । रामस्य विष्ण्ववतारत्वकथनं बालकाण्डोत्तरकाण्डयोः प्रक्षिप्तत्वे न प्रमाणम् । अत्र नव्यानामियमुपपत्तिः—वाल्मीकिमतेन रामस्य नावतारत्वं रामायणे तथात्वेनानुक्तत्वात्, बालकाण्डोत्तरकाण्डयोरवतारत्व वर्णितमिति चेत् ? तयोः प्रक्षिप्तत्वं तत्रावतारत्ववर्णनात् । इमे पण्डितप्रकाण्डास्तर्केऽस्मिन् महान्तमन्योन्याश्रयदोष न पश्यन्तीत्यहो तेषां तर्कविद्याप्रावीण्यम् । रामस्य विष्ण्ववतारत्वविषयेऽग्रे यथाबुद्धि किंचित् प्रस्तोष्याम. । समग्रस्य बालकाण्डस्य प्रक्षिप्तत्वविषये एतदप्यवधारणीयम् —"गच्छता मातुलकुल भरतेन तदाऽनघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥' इत्ययोध्या-

---

1. ईदृशविरोधस्यैकमुदाहरणं M. Winternitz ( p cit., p. 487 and 496 ) महोदया इत्थं प्रस्तुवन्ति—बालकाण्डे रामविवाहसमय एव लक्ष्मणस्यापि विवाहो वर्णितः (I. 73.30-35); परन्तु अरण्यकाण्डे रामः शूर्पणखां प्रति लक्ष्मणमकृतदारत्वेन निर्दिशति (III 18.3) । विन्तार्नित्स्महोदयानां वाचोयुक्तिमिमां न मनोरमां मन्यामहे । अनेन न कथमपि चतुर्णां दशरथात्मजानां विवाहवृत्तान्तः प्रक्षिप्ततया गणयितुं शक्यते । तद्वचनानुरोधेन वृत्तान्तस्यास्य प्रक्षिप्तत्वस्वीकारे रामविवाहोऽपि प्रक्षिप्त एव स्यात्, सीतारामयोः परिणये सन्दिग्धे, सम्पूर्णा रामायणकथैव निर्मूला जायेत । सत्यमेवेदं यत् श्रीरामः शूर्पणखां प्रति लक्ष्मणस्याकृतदारत्वमावेदयति । अत्र प्रसङ्गस्तावदनुसन्धीयताम्—प्रथमदर्शने राम "ऋजुबुद्धितया" शूर्पणखायै सभातृभार्यस्यात्मनः परिचयं विवृत्य तस्या अपि परिचयं पप्रच्छ (III. 17.15-20); तदुत्तरेण शूर्पणखा न केवलं रामं पतित्वेन कामयामास (III. 17. 26-27), अपि तु सीताया रूपं बहुधा निन्दित्वा तां लक्ष्मणं च भक्षितुमियेष ("अनेन ते सह भ्रात्रा भक्षयिष्यामि मानुषीम्"—III. 17.29) । रामसदृशाय रूपवते पुरुषाय कयाचित् मुग्धया कामिन्या अनुरागनिवेदने न किमपि स्वभावविरुद्धं पश्यामः किन्तु तादृश्या कान्तस्य भ्रातृभार्ययोर्भक्षणं राक्षसोचितमेव । तां राक्षसोचितां दम्भोक्तिमाकर्ण्य रामस्य हृदये हास्यरसस्योद्रेकः स्यात् । तत्तु स्वयं महर्षिणा "—प्रहस्य मदिरेक्षणाम् । इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥" (III. 17.30) इत्यत्र "प्रहस्य"-"वाक्यविशारदः" इत्येताभ्यां सुष्ठु संकेतितम् । वस्तुतस्तु रामेण लक्ष्मणाकृतदारत्वकथनं परिहासविजल्पितमेवेति दिक् ।

काण्डप्रथमश्लोके मूलग्रन्थारम्भोऽकल्पनीय ।[1] विनैव भरतशत्रुघ्नयोः परिचयप्रसङ्गं सहसा तयोर्मातुलकुलगमनवृत्तान्तेन रामायणसदृशो ग्रन्थ आरभ्येतेति न कोऽपि विश्वसेत् । मूलतोऽयोध्याकाण्डगता ग्रन्थारम्भसूचका केचन श्लोकास्तस्मात् काण्डात् विच्छिद्य बालकाण्डस्य पञ्चमसर्गे स्थापिता इति वदन्तः, इमां स्वाभाविकीं शङ्कां समाधातुं प्रयतन्ते माकेदोनेलमहाभागाः ।[2] तत्तु तत्रभवतां प्रौढिवादमात्रम् । वस्तुतस्तु बालकाण्डपञ्चमसर्गे सगरादीक्ष्वाकुवंशकोसलजनपदायोध्यानगरीवर्णनेन तदनन्तरं च दशरथपरिचयेन च कथारम्भ स्वाभाविकः शोभनश्च । तदनन्तरं कथानायकस्य जन्मबाल्यविवाहादिवर्णनमपि सर्वथा समीचीनम् । आदिकविः स्वकाव्यनायकस्य बाल्यचरितादिकं स्वकाव्यजीवातुभूतायाः सीताया विवाहं च परिहृत्य नायकभ्रात्रोर्मातुलकुलगमनाद् ग्रन्थारम्भं कुर्यादिति महती कष्टकल्पनेयम् ।

उत्तरकाण्डस्य प्रक्षिप्तत्वेऽपि नव्यानामुपपत्तयो बालकाण्डसंबन्ध्युपपत्तिसदृश्य एव । अतस्ताः पूर्वमेवास्माभिर्दत्तोत्तरा । विशेषस्त्वयं—युद्धकाण्डावसाने फलश्रुतिर्दृश्यते यया ग्रन्थसमाप्तिः सूच्यते, महाभारतीये रामोपाख्यान उत्तरकाण्डगता कथा नास्ति इति च । एतादृशस्य महाकायस्य ग्रन्थस्य मध्येऽपि फलश्रुतिः स्यादेव । तेन तदुत्तरभागस्य प्रक्षिप्तत्वं न निश्चयेन सिद्ध्यति । प्रायः फलश्रुतयो मूलग्रन्थरचनाया बहो कालादनन्तरं ग्रन्थस्य प्रसिद्धौ जातायामन्यैर्विरच्यन्ते । तथात्वे स्वयं फलश्रुतिरेव प्रक्षिप्तेति युक्ततरं नः प्रतिभाति । महाभारतीयं रामोपाख्यानं रामायणादुत्तरकालवर्तीति स्वयं विन्तर्नित्समहोदया अङ्गीकुर्वन्ति ।[3] महाभारते[4] रामोपाख्यानवर्णनप्रयोजनमन्यत् । न तत् कात्स्न्येन रामचरितवर्णनमपि तु सङ्कटदुःखभाजो जना अभ्युदयं प्राप्नुवन्तीति सिद्धान्तस्य प्रतिपादनमात्रम् । तादृशं प्रयोजनमनिवार्यतयोत्तरकाण्डं नापेक्षते । अतः समग्रमुत्तरकाण्डं प्रक्षिप्तमित्यश्रद्धेयम् । सीतावनवास-रामाश्वमेधलवकुशोत्पत्त्यादिवृत्तान्ता नूनं मूलरामायणस्यांशभूताः, अन्यथा प्रकृतकथाया तुनोऽङ्गहानिप्राप्तेः । अस्मिन् विषये ए० डी० पुसलकरविदुषां सुविचारित सिद्धान्तं वयमपि युक्तमुत्पश्यामः ।[5]

---

1. एतत्तु दाक्षिणात्यपाठानुसारेणोक्तम् वडोदरास्थप्राच्यविद्यामन्दिरप्रकाशिते पाठसमीक्षात्मकसंस्करणे "कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् । भरतं केकयीपुत्रमब्रवीद्रघुनन्दनः ।" (दाक्षिणात्यपाठे I. 77. 17) इत्यत्रायोध्याकाण्डारम्भो दृश्यते । उभयत्राऽपि समानैव नो विप्रपतिपत्तिः ।
2. Macdonell, A., op. cit., p. 304.
3. Winternitz, M., op. cit., p. 501.
4. महाभारतम्, III. 147-148.
5. Pusalkar, A. D., op. cit., p. 25 :
   "The writer of this paper, however, is of the view that the whole of the Uttarakānda cannot be rejected as spurious, though it was undoubtedly composed by Vālmīki after the other cantos were completed: but parts of it, which relate to the Rāma story, namely, the accounts of Śatrughna and Lakṣmaṇa, the repudiation of Sītā, the birth of Kuśa and Lava, the horse sacrifice, the installation of Kuśa and Lava, the departure of Rāma, and a few minor incidents are genuine."

ये तु तावद् बालकाण्डोत्तरकाण्डे प्रक्षिप्ते मन्यन्ते तैरेतन्न विस्मर्तव्यं यदुभे इमे अतिप्राचीनकालादेव रामायणस्याङ्गतया प्रसिद्धे । बालकाण्डं महाकविनाऽश्वघोषेण विदितमासीदित्यनुमातुं शक्यते । बुद्धचरितसौन्दरानन्दसंपादकाः ई. एच् जन्स्टोन्महाशया अश्वघोषस्य बालकाण्डपरिचयं निराकुर्वन्ति;[1] वालकाण्डे विश्वामित्रस्य तपोभङ्गप्रसङ्गेऽप्सरसो मेनकाया उल्लेखात्,[2] बुद्धचरितसौन्दरनन्दयोस्तु समान एव प्रसङ्गे घृताच्या नामग्रहणात् ।[3] इमे महाभागाः किष्किन्धाकाण्डगत[4] घृताचीनामसंयुक्तं श्लोकं प्रक्षिप्तं मन्यन्ते । अत्र वयं ब्रूमः, अप्सरसो नामभेदमात्रादश्वघोषस्य बालकाण्डपरिचयो न निराकर्तुं शक्यते; नाम्नोऽप्रस्तुतत्वात् । विश्वामित्रसदृशो महातपा मुनिरपि कस्याश्चिदप्सरसो मोहात् तपसो भ्रष्टोऽभूदित्येवाश्वघोषस्य प्रकृतो विषयः । अद्यत्वे यथा तथाऽऽकरग्रन्थसंवादेन न स्वकृतिं रचयन्ति स्म पूर्वे कविप्रभृतयः, स्वकीया स्मृतिरेव तेषामवलम्बोऽभवत् । ईदृश्यां स्थितौ नाम्नां परावृत्तिस्तु स्वाभाविक्येव । किष्किन्धाकाण्डगतश्लोकस्य प्रक्षिप्तत्वकथनमपि प्रौढिवादमात्रम्, श्लोकस्यास्य सकलपाठसम्प्रदायमातृकासु यथावद्दर्शनात् । अपि च, सर्वथाऽविचारितेयमुक्तिपरम्परा तत्रभवतामाङ्ग्लपण्डितधौरेयाणाम् । यतस्तन्मतेन बालकाण्डमश्वघोषेणाविदितमासीत्, किष्किन्धाकाण्डगतः श्लोकोऽपि प्रक्षिप्तः; तर्हि महाकवेरश्वघोषस्य विश्वामित्रतपोभङ्गोल्लेखे किं निदानं स्यात् ? पुराणेतिहासादिषु शास्त्रेषु बहुश्रुतस्य महाकवेः स्वकपोलकल्पितमेतदिति त्वश्रद्धेयम् ।[5]

---

1. Johnston, E. H., The Buddhacarita, Lahore, 1936 (Reprinted : Motilal Banarsidass, Delhi, 1978) pt. II. introd., p. xix

2. ततः कालेन महता मेनका परमाप्सराः ।
पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ।।
... ..............................
तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव ।
विश्वामित्राश्रमे सौम्य सुखेन व्यतिचक्रमुः ।।
—रामायणम् I. 62 4-8 (Critical ed., Baroda)

3. विश्वामित्रो महर्षिश्च विगाढोऽपि महत्तपः ।
दश वर्षाण्यहर्मेने घृताच्याप्सरसा हृतः ।।
—बुद्धचरितम् IV. 20
ब्रह्मर्षिभावार्थमपास्य राज्यं भेजे वनं यो विषयेष्वनास्थः ।
स गाधिजश्चापहृतो घृताच्या समा दशैकं दिवसं विवेद ।।
—सौन्दरनन्दम् VII. 35.

4. घृताच्यां किल संसक्तो दशवर्षाणि लक्ष्मण ।
अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ।।
—रामायणम् IV. 34.7 (Critical ed., Baroda)

5. रामानुजादयः टीकाकृतो यदत्र घृताचीमेनकयोर्नामान्तरमात्रभिन्नत्वेन बालकिष्किन्धाकाण्डयोरेकवाक्यतां साधयन्ति तन्न मनोरमं, महाभारतविरोधात् ।

वस्तुतस्तु, बालकाण्डमश्वघोषमहाकविना सुपरिज्ञातमेवासीत् । अश्वघोषो वाल्मीकेरादिकवित्वं वाग्भङ्ग्या निर्दिशति ।[1] बालकाण्डपरिचयाभावे वाल्मीकेरादिकवित्ववर्णनं निर्मूलमेव स्यात् । अत्रान्यदपि प्रमाणमुपस्थापयिष्यामः । महाभारतखिलांशरूपं हरिवंशपुराणं महाकवेरश्वघोषस्य पूर्वं प्रादुरभवत्, तेन हरिवंशवर्णित-भीष्मविषयककथावर्णनात् ।[2] महाकविना स्वरचिते वज्रसूचीनाम्नि ग्रन्थे[3] महाभारतमाकरत्वेन निर्दिश्य हरिवंशाच् श्लोकद्वयमुदाहृतम् ।[4] हरिवंशे तु बालकाण्डगता विश्वमित्रकर्तृकास्त्रदान-रामकर्तृकहरधनुभङ्गादिविषया वर्णिताः ।[5] अनेन बालकाण्डस्य हरिवंशादपि प्राचीनत्वं सिद्ध्यति । अश्वघोषप्रादुर्भावस्तु कुषाणवंशीयबौद्धनरपतेः कनिष्कस्य राज्यकाल एवेति सर्वे इतिवृत्ततत्त्वज्ञाः प्रमाणयन्ति । कनिष्कनरपतिश्चेशवीयद्वितीयशताब्द्यां भारतवर्षस्योत्तरपश्चिमभागं मथुरापर्यन्तं शशासेति निश्चितप्रायम् । अतः, वाल्मीकिरामायणस्य बालकाण्डमीशापूर्वप्रथमशताब्द्यामविद्यतेति विप्रपत्तिशून्यम् ।

उत्तरकाण्डस्यापि सुप्राचीनत्वे तादृशान्येव भूयांसि पेशलानि प्रमाणानि उपस्थापयितुं शक्यन्ते । श्रीरामपट्टाभिषेक एव युद्धकाण्डस्य पर्यवसानं दृश्यते । श्रीरामस्य स्वर्गारोहणं तूत्तरकाण्डस्य दशोत्तरशततमे[6] सर्गे वर्णितम् । हरिवंशगता रामकथाऽपि स्वर्गारोहणपर्यन्ता,[7] न पुनः पट्टाभिषेकान्ता ।

---

1. वाल्मीकिरादौ च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः ।
—बुद्धचरितम्, I.43.

2. बुद्धचरितम् XI. 18; सौन्दरनन्दम् VII. 44.
उभयत्राश्वघोषेण हरिवंशमेवानुसृतमिति जनस्टॉन् महाभागः स्वयमुररीकुर्वन्ति । द्रष्टव्यम्:
Johnston, E. H., Aśvaghoṣa's Buddhacarita, Pt. II, Lahore, 1936 (Reprinted: Motilal Banarsidass, Delhi, 1978), p. 152; The Saundarananda of Aśvaghoṣa, Pt. II, Lahore, 1928, p. 40.

3. "...we do not find any definite evidence against Aśvaghoṣa being the author of the Sanskrit text."—Mukhopadhyaya, Sujitkumar, The Vajrasūci of Aśvaghoṣa, rev. 2nd. ed., Visvabharati, Santiniketan, 1960, p. xii.

4. तत्रैव, पृ० 1 :
सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।। 3 ।।
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।। 4 ।।
(हरिवंशपर्व, कलिकाता संस्करणम्, श्लोकसंख्या 1292 ..)

5. हरिवंशपर्व, पुण्याख्यपत्तने चित्रशालाख्ये···, 1936, I. 41. 24-28.

6. एतत्तु दाक्षिणात्यपाठानुसारेण ।

7. हित्वाऽयोध्यां दिवं यातो राघवः स महाबलः ।।
स्वगणं रावणं हत्वा दिवमाचक्रमे प्रभुः ।।
—I. 41. 54-55.

अनेनोत्तरकाण्डस्यापि हरिवंशात् प्राचीनत्वं सिद्धयति । महाकविकालिदासो बालोत्तरेतिकाण्डद्वितय-सहितं वाल्मीकिरामायणमतिप्राचीनतयाऽजानात् । बालकाण्डवर्णिता रामजन्मविश्वामित्रयाच्ञाताट-कावध-हरधनुभङ्गादिविषया महाकविना कालिदासेन रघुवंशैकादशाध्यायेऽनूदिता इव लक्ष्यन्ते । किं बहुना, "मा निषाद"[1] इतिश्लोकमपि[2] महाकविः स्वकाव्ये स्मरति ।[3] रघुवंशचतुर्दशसर्गादिषूत्तर-काण्डगतवृत्तान्त एवोपवर्णित इत्यत्रापि न कोऽपि मतिमान् संशयीत । तथाऽप्यस्मदाचार्यदेशीयाः डा० सुकुमारसेनमहानुभावा यदुत्तरकाण्डगतविषयवर्णने वाल्मीकेः कालिदासस्य प्राचीनत्वं पश्यन्तीति[4] तन्नास्माकं बुद्धौ प्रतिभाति । विराधकबन्धोपाख्यानादीनि यानि भिन्नत्वानि तत्रभवन्त उल्लिखन्ति तानि कवीनां स्वातन्त्र्यद्योतकानि, न पुनः प्राचीनतरत्वसाधकानीति ब्रूमः । अद्यापि ये रामायण-महाभारते उपजीव्य काव्यनाटकादीनि निर्मान्ति तेऽपि ईदृशं स्वातन्त्र्यमङ्गीकुर्वन्त्येव । रघुवंशकाव्यस्य सूक्ष्मेक्षिकया पर्यालोचनेन सम्यक् परिज्ञायते यत् महाकवेः कालिदासस्य समय एव बालकाण्डोत्तर-काण्डसहितं रामायणं प्राचीनत्वेनार्षत्वेन च लोकबुद्धावारूढमासीत् । कालिदाससमयनिरूपणविषये, पिष्टस्य पुनः पेषणवदनावश्यकश्रमपरिहारबुद्धयाऽत्र वाचां विस्तराद् विरमामः । समासत एतन्मात्र-मेवात्र ब्रूमः—यद्यपि पाश्चात्त्या विपश्चिदग्रेसरास्तन्मतानुसारिणश्चास्मद्गुरुकल्पा अनेके भारतीया विद्वांसः कालिदासं गुप्तवंशजराजयोर्द्वितीयचन्द्रगुप्तकुमारगुप्तयोः समानकालिकमतएवेशवीयचतुर्थ-शताब्द्यामुत्पन्नं मन्यन्ते, तथाऽप्यस्माभिरन्यत्रानेकपण्डितप्रकाण्डानां पदाङ्काननुसरद्भिर्बलवत्तरप्रमाण-कलापैस्तस्य महाकवेरीशापूर्वद्वितीयशताब्द्यां प्रादुर्भावः निःसंशयं प्रतिपादितः ।[5] अतएव बालकाण्डो-त्तरकाण्डयोरीशापूर्वद्वितीयशतकादपि प्राचीनत्वं, हरिवंशकृत्कालिदासादिभिरभियुक्तैः स्वीकृतत्वात् प्रामाण्यं च सिद्धयतः ।

अद्यत्वे उपलभ्यमाने रामायणेऽन्तराऽन्तरा केचन प्रक्षिप्ताः श्लोका विद्यन्त इति तु पूर्वमस्मा-भिरुररीकृतम् । चतुर्विंशतिसहस्रसंख्याकेषु श्लोकेषु कियन्तः कतमे च श्लोकाः प्रक्षिप्ता इत्येतस्य विषयस्य दुर्निर्णेयप्रायत्वेऽपि विद्वांसस्तत्र बहुविधानि अनुमानानि प्रयुञ्जते । शार्मण्यदेशाभिजनाः सुगृहीतनामानो याकविपण्डिताः प्रक्षिप्तांशनिर्णयार्थं भूयांसं श्रममकार्षुः । ते मन्यन्ते – पुरुषानुक्रमेण

---

1. मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥
—रामायणम्, I. 2. 15

2. शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥
—तत्रैव I. 2. 18

3. निषादविद्धाण्डदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥
—रघुवंशम्, XIV. 70.

4. सेन, सुकुमार, रामकथार प्राक् इतिहास, जिज्ञासा, कलिकाता. 1977, पृ. 31.

5. मुखोपाध्याय, सातकडि, भल्गा थेके गङ्गार ऐतिहासिक पर्यालोचना, मासिक वसुमती, भाद्र 1365 (August 1958), पृ. 2-11.

रामायणगायका रामायणमधि सक्रिया आसन्, तैर्यथा प्रत्नभागस्य संस्कारो विहितस्तथैव यथावसरं नवनवश्लोकानां वि यासो पि कृतः। किन्तु सूक्ष्मेक्षिकयाऽवलोकयता रामायणस्य मूलांशो न दुर्निर्णेय इति।[1] ते स्वकीये 'दास् रामायण'-इत्याख्ये ग्रन्थे केषांचन प्रक्षिप्तांशानां निर्देशोऽपि कृतः। विन्तर्नित्स्महोदयानामपि तत्र तत्र सम्मतिरवलोक्यते।[2] तन्मतेन तु पाठसंवादेन मूलभागनिर्णय-प्रयासे कृते चतुर्विंशतिसहस्राणां श्लोकानां चतुर्थांश एव शुद्धतया निरूपयिष्यन्ते।[3] तत्र प्रमाणन्त्विदं प्रदर्शयन्ति याकविपण्डितेनोदाहरणतया षट्शतानां श्लोकानां समीक्षया तच्चतुर्थांशस्य शुद्धताऽवलोकिता। अस्यां युक्तिपरम्परायां नैकान् दोषान् पश्यामः। प्रथमतस्तु षट्शतानां श्लोकानां समीक्षायां यत्तथ्यत। प्रतिभाति तच्चतुर्विंशतिसहस्रश्लोकमिते कृत्स्न एव ग्रन्थे संगच्छत इति तु न रमणीयम्। ग्रन्थ-शुद्धतानिरूपणे सांख्यिकीं विद्यां न प्रशस्तं साधनं मन्यामहे। तेषां मुख्योऽयं तर्कः—एकस्मिन् पाठ-संप्रदायेऽविद्यमानः श्लोकोऽन्यस्मिन्नन्येषु वा दृष्टश्चेत् तस्यापि शुद्धता संशयग्रस्ता।[4] इमं तर्कमपि न निर्दोषं मन्यामहे। यैर्गायकैर्यथावसरं श्लोकप्रक्षेपः कृतस्तैः स्वबुद्ध्या श्लोकपरिवर्जनमपि कर्तुं शक्यते। विशेषतस्तु भारतवर्षस्य विशालायतनत्वात् पाठसम्प्रदायानां परस्परसंवादो न सुकर आसीत्। दाक्षिणात्ये गायकैर्यः श्लोकः परिहृत उदीच्यां तस्य विद्यमानतायां न काऽपि बाधा ऽसीत्। अपि च, प्राचीन-समये मुद्रणव्यवस्थाया अभावात् लेखकपरम्परयैव ग्रन्थानां प्रचार आसीत्। लेखकानामनवधानादपि कस्मिन्नपि पाठसम्प्रदाये श्लोकविशेषस्य लोप स्वाभाविक एव। इदानीं चतुर्णामिव पाठसंप्रदायानाम-नेकमातृकाः संवाद्य यत् समीक्षात्मक संस्करणं वडोदरास्थप्राच्यविद्यामन्दिरेण प्राकाश्यं नीतं तदव-लोकनेन याकविपण्डितस्यानुमानं नाङ्गीकर्तुं शक्यते। तस्य संस्करणस्य सविशेष पर्यालोचनया विज्ञायते यत् रामायणे प्रक्षिप्तभागः समग्रस्य ग्रन्थस्य तृतीयांशान्नाधिको भवेत्; अत इदानीमुपलभ्यमानस्य रामायणस्य द्वितृतीयांशस्य शुद्धतायां न संशयः।[5]

किं तावद्रामायणस्योपजीव्यम्, रामायणस्य कथावस्तु महर्षिणा वाल्मीकिना स्वकल्पनयोद्भा-वितमुत वा पूर्वेभ्यो ग्रन्थेभ्य आहृतमित्यादिषु विषयेषु विदुषामन्योन्यं मतानि बहुधा भिद्यन्ते। राम-कथायाः कदा कथं वा समुद्गम इत्यत्रापि पण्डितैर्बहु विचारितम्। अवलोक्यतां तावदत्र रामायणं स्वयं किमावेदयति। बालकाण्डस्य प्रथमसर्गादवगम्यते यद् रामस्य राज्यसमय एव वाल्मीकिरपि विद्यमान आसीत्। 'कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान्'[6] इत्यस्य वाल्मीकिप्रश्नस्योत्तरेण नारदेने-क्ष्वाकुवंशप्रभवो राम एव स्तुतः।[7] अनेनैतत्त्रितयं सिद्ध्यति—१. रामायणं न निराधारं, वाल्मीकिनाम्नः कस्यचित् कवेः कल्पनामात्रं वा, २. रामायणकथानायको रामो वाल्मीकेः समकालीन एवासीत्,

---

1. Jacobi, H., Das Rāmāyaṇa, Geschichte und Inhalt, Bonn, 1893, p. 60.
2. Winternitz, M., op. cit., p. 501.
3. Ibid.
4. Winternitz, M., op. cit., p. 499.
5. द्रष्टव्यम् —Pusalkar, A. D., op. cit., p. 24-25.
6. रामायणम् I. 1. 2.
7. तत्रैव, I. 1. 8

३. सत्यवाचो नारददेवर्षेर्मुखाद् रामचरितं समाकर्ण्यैव वाल्मीकिना रामायणं विरचितम्— इति च। नवीनाः समीक्षका इतिवृत्ततत्त्वविदश्च यथा वा तथा चिन्तयन्तु, रामायणविषयकमेतदेव भारतीयमैतिह्यम्। अद्यत्व इतिहासव्याख्यातारोऽपि उररीकुर्वन्ति यद् बहुकालव्यापिन्या परम्परयाऽऽगतमैतिह्यं निर्मूलमुपेक्षणीयं च न भवति। वाल्मीकिनामा कश्चित् कविरासीत् तेनैवेतस्ततः प्रचलिता रामविषयिणी-वीरगाथा उपजीव्य रामायणं नाम महाकाव्यं, संस्कृतभाषाया आदिकाव्यभूतं व्यरचि; वाल्मीकेरस्तित्वे रामायणकाव्यकर्तृत्वे च संशयहेतुर्नास्तीति व्हिन्तरनित्स्विदुषां मतं[1] भारतीयैतिह्येन न वस्तुतो विरुध्यते। रामसदृशपुरुषाणां चरितविषये "गाथा नाराशंसी"-सदृशा गाथा लोके प्रचरन्ति स्मेत्यत्र न किमपि चित्रं पश्यामः। किन्तु, एतदत्रावधेयं यद् रामायणं न तादृशीनामज्ञातकर्तृकलोकगाथानां सञ्चयमात्रमपि तु तद्गाथागतकथावस्तूनि आत्मसात् कृत्वा विरचितं परिशीलितभाषाशैलीसमृद्धं महाकाव्यमेव।

शार्मण्यदेशीया वेदादिशास्त्रनिष्णाता वेबरमहोदया वाल्मीकिरामायणे होमेरकृतयावनमहाकाव्यस्य च्छायामाविष्कुर्वन्तीति तूपेक्षणीयम्; याकविप्रभृतिभिरनेकैः पण्डितप्रकाण्डैस्तादृशसिद्धान्ताभासस्यानेकधा सोपपत्तिकं निरसनात्। ऋग्वेदे बीजरूपेणानुस्यूता काचन कथाऽग्रे रामायणरूपेण विपरिणतेति यदन्ये प्रपञ्चयन्ति तदपि दृढतरप्रमाणाभावान्न रमणीयतया प्रतिभाति।

डॉ० दीनेशचन्द्रसेनप्रभृतयो विद्वांसोऽन्योन्यनिरपेक्षास्तिस्रः कथाः संघटय्य रामायणकथा विनिर्मितेति मन्यन्ते।[2] ता यथा —१. 'दसरथजातक'-वर्णिता रामकथा, २. महनीयचरित्रस्य ब्राह्मणवीरस्य रावणस्य विषये दाक्षिणात्ये प्रचलिता बह्वृचः कथा, ३. प्राचीनसमये जनेषु बहुलप्रचलितवानरोपाख्यानपरम्परासम्बन्धिन्य कथाः।[3] एतेषां विद्वद्धौरेयाणामयमाधारः, 'दसरतजातक'-गता रामकथा रामायणात् प्राचीना अतएव रामायणस्याधारभूता; 'दसरथजातकं' तु रामरावणयुद्ध रामवानरसख्यं च नोल्लिखति, अतोऽनन्तरभाविनि-काले रामायणरचनावसरे वाल्मीकिना त्रिविधा इमाः कथाः संयोजिताः। 'दसरथजातक' कथामवलम्ब्य वेबर[4]-दीनेशचन्द्रसेन[5]-राहुलसांकृत्यायना[6]नन्दकौसल्यायन[7]-सुनीतिकुमारचट्टोपाध्याय-सुकुमारसेन[8]प्रभृतिभिर्महान् भ्रम एवोत्पादितः। अतएव विषयोऽयं विस्तरेण

---

1. Winternitz, M., op. cit. p. 475.
2. Sen, Dineshchandra, The Bengali Ramayanas, University of Calcutta, 1920, p. 3 ff.
3. Ibid., pp. 4, 9, 32-33, 42-43 ff.
4. Indian Antiquary, 1872.
5. Loc. cit.
6. सांकृत्यायन, राहुल, वोल्गासे गंगा, किताब महल, इलाहाबाद।
7. कोसल्यायन, आनन्द, जातक, हिन्दी साहित्य सम्मेलन, प्रयाग, 2013 [1956], प्रथम भाग, भूमिका, पृ० 24.
8. सेन, सुकुमार, रामकथार प्राक् इतिहास, जिज्ञासा, कलिकाता, 1977, 4-7.

विमर्शमपेक्षते । अवलोक्यतमिदानीं का नाम सा दसरथजातककथा यां विद्वांसो वाल्मीकेरपि आधारभूतां मन्यन्ते[1] —

पुरा वाराणस्यां दशरथनामा राजाऽसीत् । सोऽग्रमहिष्या राम-लक्ष्मणौ पुत्रौ सीतां च दुहितरं लेभे । अग्रमहिष्यामुपरतायां द्वितीया पत्नी तेनाग्रमहिषीपदे वृता । तस्या भरतकुमारो जातः । राजाऽस्यै कमपि वरं प्रत्यश्रौषीत् । गच्छति काले महिषी राजानं स्वपुत्राय राजपदं वरत्वेन ययाचे । राजा तु महिष्या रामलक्ष्मणयोः प्राणहानिमाशङ्क्य तौ सीतासहितौ वनं प्रेषयामास । ते हिमालयं गत्वा तत्रैवोषुर्वन्यफलादिभिः शरीरयात्रां निर्वाहयन्तः । राजा दशरथः पुत्रशोकं वोढुमशक्तो नवमे वर्षे देहं तत्याज । भरतकुमारो रामपरिजनमानेतुं वनमगच्छत् । रामः पितृशोकेन न रुरोद । फलाहरणादनन्तरमाश्रमं प्रत्यावृत्तौ सीतालक्ष्मणौ रामो दशरथस्वर्गप्राप्तिवार्तां श्रावयामास । प्राकृतबुद्धित्वात्तौ पितुर्मरणं विदित्वा रुरुदतुः । रामस्तान् सीतालक्ष्मणभरतान् त्रयोदशभिर्गाथाभिः सान्त्वयामास जगतोऽनित्यत्वादिदोषान् दर्शयन् । भरतेन राज्यग्रहणाय भूयोभूयः प्रार्थितोऽपि रामः पित्राज्ञालङ्घनभिया न राज्यमङ्गीचकार भरताय स्वपादुकायुगलमार्पयत् । तदेव सिंहासन उपस्थाप्य भरतो राज्यं शशास । वर्षत्रये समतिक्रान्ते[2] वाराणसीं प्रत्यावृत्तो रामो भ्रातृभ्याममात्यैश्च राज्येऽभिषिक्तः, सीताऽपि (रामपत्नीरूपेण) अग्रमहिषीपदेऽभिषिक्ता ।

इमामेव कथां दीनेशचन्द्रसेन-सुनीतिकुमारचट्टोपाध्यायप्रभृतिभिर्याथातथ्येनाङ्गीकृत्य बहु विजल्पितम् । रामसमये भारतवर्षे पुरुषस्य सहोदरया स्वस्रा परिणयः प्रचलित आसीदित्यपि तैः सिद्धान्तितम् ।[3] अथेदानीं 'दसरथजातक'स्य प्राचीनत्वं तस्य यथातथ्यं च विमृशामः ।

'पालिभाषायां दसरथजातकस्य पाठद्वयं लभ्यते, एकः प्राचीनः सुत्तपिटकखुद्दकनिकायान्तर्गतस्त्रयोदशश्लोकात्मकः, अपरस्तु गद्यपद्यात्मको जातकत्थवण्णनायाम् (क्रै० ६ष्ठशताब्दी) अस्ति... रामकथायाः प्राचीनतरं सम्पूर्णतया भारतीयं रूपमत्रैव प्राप्नुमः' इति निगदयन्तस्तत्रभवन्तः सुकुमारसेनमहोदया[4] इतिवृत्ततत्त्वनिष्ठा अपि महान्तं भ्रमं तन्वते । वस्तुतस्तु खुद्दकनिकायगतेन जातकेन

---

1. V. Fausboll सम्पादित-The Jataka-ग्रन्थात् No. 461 संक्षिप्य लिख्यते ।

2. एतज्जातकानुसारं रामो द्वादश वर्षाणि हिमालय उवास ।

3. "The fact of her marriage with Rama in the concluding portion of the story certainly sounds strange. But students of ancient history know very well that the practice of the Egyptians and Babylonians. ......This story thus relates the legend that was prevalent in Northern India about Rama at a very early period of history."—Sen, Dineshchandra, The Bengali Ramayanas, University of Calcutta, 1920, p. 14-15.

4. सेन, सुकुमार, op. cit, p. 5, 9.

जातकत्थवण्णनागतस्य जातकस्य न पाठान्तरसम्बन्धोऽपि तु व्याख्येयव्याख्यासम्बन्ध एव । जातकत्थवण्णनास्थदसरथजातके पृथक् गाथा न सन्ति, व्याख्यानार्थं खुद्दकनिकायस्थजातकगाथा एव टीकाकर्त्रा तत्रोदाहृताः। पालीत्यपराभिधमागधीभाषामयस्य स्थविरवादिबौद्धशास्त्रस्य 'तिपिटक'-नामकस्य भागविशेषः खुद्दकनिकायो नाम पञ्चदशावान्तरग्रन्थसमूहरूपः। तत्र जातकनामा दशमोऽवान्तरो ग्रन्थः। तस्मिन्नेव जातकग्रन्थे ४६१ संख्याक 'दसरथजातकं' त्रयोदशगाथात्मकं यथा—

एथ लक्खण सीता च, उभो ओतरथोदकं।
एवायं भरतो आह, राजा दसरथो मतो ॥ १ ॥

केन रामप्पभावेन सोचितब्बं न सोचसि।
पितरं कालकतं सुत्वा न तं पसहते दुखं ॥ २ ॥

य न सक्का निपालेतुं पोसेन लपतं बहुं।
स कस्स विञ्ञू मेधावी, अत्तानमुपतापये ॥ ३ ॥

दहरा च हि वुद्धा च, ये बाला ये च पण्डिता।
अड्ढा चेव दलिद्दा च सब्बे मच्चुपरायणा ॥ ४ ॥

फलानमिव पक्कान निच्चं पतनतो भयं।
एवं जातान मच्चानं निच्चं मरणतो भयं ॥ ५ ॥

सायमेके न दिस्सन्ति पातो दिट्ठा बहुज्जना।
पातो एके न दिस्सन्ति सायं दिट्ठा बहुज्जना ॥ ६ ॥

परिदेवयमानो चे किञ्चिदत्थं उदब्बहे।
सम्मूळ्हो हिंसमत्तानं कयिरा तं विचक्खणो ॥ ७ ॥

किसो विवण्णो भवति हिंसमत्तानमत्तनो।
न तेन पेता पालेन्ति, निरत्था परिदेवना ॥ ८ ॥

यथा सरणमादित्तं वारिना परिनिब्बये।
एवं पि धीरो सुतवा, मेधावी पण्डितो नरो।
खिप्पमुप्पतितं सोकं वातो तूलं व धसये ॥ ९ ॥

मच्चो एको व अच्चेति, एको व जायते कुले।
संयोगपरमात्वेव, सम्भोगा सब्बपाणिनं ॥१०॥

तस्मा हि धीरस्स बहुस्सुतस्स
सम्पस्सतो लोकमिमं परं च।
अञ्ञाय धम्मं हदयं मनं च
सोका महन्ता पि न तापयन्ति ॥११॥

सोहं यसं च भोगं च भरिस्सामि च आतकं ।
सेसं च पालयिस्सामि, किच्चमेतं विजानतो ॥१२॥

दस वस्ससहस्सानि सट्ठि वस्ससतानि च ।
कम्बुग्गीवो महाबाहु रामो रज्जमकारयि ॥१३॥[1]

आसां गाथानां छाया यथा—

एतं लक्ष्मण सीते च उभौ अवतरतमुदके ।
एवायं भरत आह राजा दशरथो मृतः ॥ १ ॥

केन राम प्रभावेण शोचितव्यं न शोचसि ।
पितरं कालकृतं श्रुत्वा न त्वां प्रसहते दुःखम् ॥ २ ॥

यं न शक्या निपालयितुं पुंसा लपता बहु ।[2]
स कस्माद् विज्ञो मेधावी आत्मानमुपतापयेत् ॥ ३ ॥

दहराश्च हि वृद्धाश्च ये बाला ये च पण्डिताः ।
आढ्याश्चैव दरिद्राश्च सर्वे मृत्युपरायणाः ॥ ४ ॥

फलानामिव पक्वानां नित्यं पतनतो भयम् ।
एवं जातानां मर्त्यानां नित्यं मरणतो भयम् ॥ ५ ॥

सायमेके न दृश्यन्ते प्रातर्दृष्टा बहुजनाः ।[3]
प्रातरेके न दृश्यन्ते सायं दृष्टा बहुजनाः ॥ ६ ॥

परिदेवयमानश्चेत् कञ्चिदर्थमुद्बिभृयात् ।
सम्मूढो हिंसन्नात्मानं कुर्यात्तद् विचक्षणो ॥ ७ ॥

कस्माद् विवर्णो भवति हिंसन्नात्मानमात्मनः ।
न तेन प्रेताः पाल्यन्ते निरर्था परिदेवना ॥ ८ ॥

यथा शरणमादीप्तं वारिणा परिनिर्वापयेत् ।
एवमपि धीरः श्रुतवान् मेधावी पण्डितो नरः ।
क्षिप्रमुत्पतितं शोकं वातो तूलामिव ध्वंसयेत् ॥ ९ ॥

---

1. सुत्तपिटके खुद्दकनिकाये जातकपालि, नालन्दा, नवनालन्दा महाविहार, 1959, पठमो भागो, पृ० 229-230.
2. वाक्यसंगतिर्दुर्घटा प्रतिभाति ।
3. बहवो जना इत्यर्थः ।

मर्त्य एक एवात्येति एक एव जायते कुले ।
संयोगपरमास्त्वेव संभोगाः सर्वप्राणिनाम् ।।१०।।

तस्माद्धि धीरस्य बहुश्रुतस्य
संपश्यतो लोकमिमं परं च ।

आज्ञाय धर्मं हृदयं मनश्च
शोका महन्तोऽपि न तापयन्ति ।।११।।

सोऽहं यशश्च भोगं च भरिष्यामि च ज्ञातकम् ।
शेषं च पालयिष्यामि कृत्यमेतद् विजानतः ।।१२।।

दशवर्षसहस्राणि षष्टिवर्षशतानि च ।
कम्बुग्रीवो महाबाहू रामो राज्यमकारयत् ।।१३।।

स्पष्टमेतत् प्रतिभाति यदत्र तिपिटकशास्त्रांशभूते जातके सीताया रामसहोदरत्वस्य गन्धोऽपि नास्ति । न चात्र कृत्स्नं रामोपाख्यानं, समासतो वोपवर्णितम्; उपाख्यानारम्भ-नायकचरितवर्णनादीनां तथाऽन्येषामावश्यकवृत्तान्तानामनुल्लेखात् । अतएवास्याधारेण रामकथाया कियान् शुद्धोंऽशः, कियान् वा प्रक्षिप्त इत्यादिनिर्णयः साहसमात्रमेव । अनित्येऽस्मिन् संसारे गतासूनां कृते शोको न ज्ञानिना करणीय इत्युपदेश एवास्य जातकस्य प्रयोजनम् । रामसुग्रीवादिसौख्यकथाऽत्र न प्रसङ्गप्राप्ता, अतएवात्र वानराणामुल्लेखो नास्ति । युद्धरावणवधादि न वर्णितं, बौद्धसिद्धान्तेनासमञ्जसत्वात् । अथेदानीमस्य प्राचीनत्वे प्रश्नः । यद्यपि कृत्स्नं मागधीभाषामयं तिपिटकं बुद्धभाषितत्वाद् बुद्धसमकालीनमिति स्थविरवादिबौद्धपरम्परा वर्तते, तथापि कृत्स्नस्य तिपिटकशास्त्रस्य तावत्प्राचीनत्वं नास्ति, तत्र निद्देससदृशटीकाग्रन्थस्य सत्त्वात्, धम्मपदप्रभृतिसंग्रहग्रन्थानां दर्शनाद्, विशेषतस्तु क्रिस्तपूर्वतृतीयशताब्दीजन्मनो मौर्यसम्राजोऽशोकस्य गुरुणा मोग्गलिपुत्त-तिस्स-स्थविरेण विरचितस्य 'कथावत्थु'-ग्रन्थस्यापि तत्रान्तर्भावात् । 'तिपिटक'-शास्त्रं तिसृभिः सङ्गीतिभि संकलितं संस्कृतं चेत्यपि बौद्धपरम्परा जागर्ति । मौर्यसम्राजोऽशोकस्य समये समाहूतायां तृतीयसङ्गीत्यामेव महासाङ्घिकानां बहिष्कारेण स्थविरवादिशास्त्रस्य संकलनमभूदिति निश्चेतुं शक्यते । तदानीमपि तिपिटकशास्त्रं मुखपाठपरम्परयैव प्रचलदासीत् । तस्येदम्प्रथमतया पुस्तकेषु लेखनं श्रीलङ्काद्वीपे क्रिस्तपूर्वप्रथमशताब्द्यां[1] वट्टगामनि-अभयस्य (क्रि० पू० २९-१७) राज्यसमयेऽभूदिति 'महावंस'ग्रन्थावलोकनात् परिज्ञायते ।[2] ईदृशमसम्पूर्णमनिश्चितोद्भवकालं ग्रन्थं वाल्मीकिरामायणस्याधाररूपेण स्वीकृतवन्तो विद्वांसो मूलोच्छेदिनं पाण्डित्यप्रकर्षमेव प्रदर्शयन्ति ।

---

1. Law, B. C., A History of Pali literature, London, 1933, p. 11.
2. "हानिं दिस्वान सत्तानं तदा भिक्खू समागता ।
चिरट्ठितत्थं धम्मस्स पोत्थकेसु लिखापयुं ।।
—महावंसो, or, The Great Chronicle, edited by N. K. Bhagwat, University of Bombay, 1936, XXX. 101.

जातकट्ठकथावर्णितजातकस्य प्रमाणत्वेन ग्रहणं भूयसेऽपि हास्याय भवति । सिंहलदेशीयपरम्परायां त्रिपिटकटीकाकृतोऽट्ठकथाकारा विसुद्धिमग्गादिग्रन्थप्रणेतारो बुद्धघोषाचार्या एव जातकट्ठकथाकर्तृत्वेन स्मर्यन्ते । बुद्धघोषाचार्यास्तु ईशवीयपञ्चमशताब्द्यां श्रीलङ्कायामुषित्वा स्वग्रन्थान् विरचयामासुरितीतिहासविदः प्रमाणयन्ति । जातकट्ठकथा न बुद्धघोषाचार्यैर्विरचिता, अपि तु ततोऽप्यर्वाचीनेन केनचित् सिंहलाभिजनेन भिक्षुणा सिंहलद्वीप एव विनिर्मितेत्यत्र प्रायः सर्वेषां विदुषामैकमत्यम् ।[1] प्राचीनसमये भारते लोकप्रचलिता जातककथा यदा सिंहलदेशं नीतास्तदा तासु सिंहलदेशीयैर्यथेच्छं नवनवकथानां संयोजनमपि कृतम् ।[2] जातकट्ठकथा बुद्धघोषनिर्मिता वाऽस्तु तस्मादर्वाचीनेनान्येन केनाऽपि विरचिता वा भवतु तुल्यमेवास्य प्रामाण्यं रामकथाप्रसङ्गे । जातकट्ठकथा सिंहलद्वीप ईशवीयपञ्चमशताब्द्यां तदुत्तरवर्तिनि वा समये भारतीयेन केनचिद् बौद्धभिक्षुणा विरचिता । बुद्धघोषाचार्य ईशवीयपञ्चमशताब्द्यामासीदित्यत्र न कोऽपि मतभेदः ।[3] यद्यपि महावंसादि[4]-सिंहलदेशीयग्रन्थेषु बुद्धघोषस्य ब्राह्मणकुलोत्पन्नत्वं वेदादिशास्त्रपारङ्गमत्वं बोधगयासमीपवर्तिदेशाभिजनत्वं च बहुधा प्रपञ्चितानि तथाऽपि तादृशवर्णनानां याथार्थ्ये महती संशीतिरस्माकम् । धर्मानन्दकोसम्बीमहोदयैर्बुद्धघोषविषये उक्तवर्णनस्यासारत्वं सुष्ठु प्रदर्शितम् ।[5] एतादृशस्य जातकट्ठकथाकारस्य वचनप्रामाण्याद् ये वाल्मीकिरामायणं संशोधितुं विशेषेण रामसीतयोः सहोदरत्वादि साधयितुं प्रयतन्ते कियत्तेषां वचसां प्रामाण्यं तत् सुधियो विभावयन्तु । पूर्वमेवोक्तमस्माभिर्यद् वाल्मीकिरामायणं यथावत् कालिदासेन[6] विदितम्, अश्वघोषेणापि[7] परिज्ञातमासीत् । जातके जातकट्ठकथायां वा सीताहरणरावणवधादिवृत्तान्ता न सन्त्यत एव मूलरामकथायां तेषामसद्भाव आसीदित्यपि साहसिकम् । बुद्धघोषाचार्यादिभिः सर्वे इमे वृत्तान्ताः सुपरिचिता एवाभूवन् ।[8] केवलं साम्प्रदायिकविद्वेषबुद्ध्या दसरथजातकट्ठकथायां रामकथायां तेन विकृति-

---

1. Malalasekera, G. P., The Pali literature of Ceylon, M. D. Gunasena and Co., Colombo, 1958, p. 122-126.
2. Ibid., 126.
3. Ibid., p. 91: Law, Bimala Caurn, A history of Pali literature, London, 1932, p. 389; Winternitz, M., A history of Indian literature, University of Calcutta, 1927, v. 2, p. 197.
4. The Mahāvansa: edited by A. P. Buddhadatta ( Sinhalese script ), M. D. Gunasena and Co., Colombo, 1959, XXXVII. 215.
5. Visuddhimagga of Buddhaghosācariya: edited by Henry Clarke Warren, revised by Dharmananda Kosambi, Harvard University Press, Cambridge, Massachusetts, 1950, pref., p. xi-xv.
6. पाश्चात्त्यविदुषां मतेन ईशवीयचतुर्थशताब्द्यां तत्पञ्चमशताब्द्यां वाविद्यमानेन ।
7. ईशवीयद्वितीयशताब्द्यामुत्पन्नेन ।
8. बुद्धघोषाचार्यः स्वयं भणति—
"अक्खानं ति भारतरामायणादि । तं यस्मिं ठाने कथयति, तत्थ गन्तुं न वट्टति ।"—दीघनिकायट्ठकथा सुमङ्गलविलासिनी (Pali Text Society, London), I. 84; अपि च "भारतयुद्धसीताहरणादिनिरत्थककथा"—तत्रैव, I. 86.

रापादितेति निश्चप्रचमेव। वस्तुतस्तु रामायणमहाकाव्यस्य रामकथाया चामूलचूडमविच्छेदः, जातकट्ठकथास्थरामकथायाश्च विकृतरूपत्वं सोपपत्तिकं प्रतिपादितं कामिलबूल्के नामभिर्बेलजियमदेशाभिजनैर्विद्वद्भिः।[1]

दृष्टपूर्वमेवास्माभिर्यत् स्मरणातीतकालादेवारभ्य भारतीयपरम्परायां महर्षिवाल्मीकिरेव रामायणकर्तृत्वेन पूज्यते। रामायणे तदीयचरित्रविषये त्वेतदेव वर्ण्यते—

वाल्मीकिर्नाम मुनिश्रेष्ठस्तमसातीरसमीपस्थे स्वाश्रम उवास।[2] तस्य शिष्येष्वनेकेषु भरद्वाजो मुख्य आसीद् यतोऽयमेवैको रामायणे नाम्नोल्लेखितः।[3] महर्षेराश्रमो जाह्नव्या अपि समीपे,[4] तस्या दक्षिणतीर एवाऽऽसीत्। गुणवतो वीर्यवतो धर्मज्ञस्य कस्यचिन्महापुरुषस्य चरित श्रोतुकामेन महर्षिणा वाल्मीकिना नारदमुखादेव रामचरितमाकर्णितम्।[5] तदनन्तर सशिष्यो महर्षिः स्नानार्थी तमसातीरमगमत्। तत्र केनचिन्निषादेन क्रौञ्चमिथुनयोरेकं निहतमवलोक्य तच्छोकाकुलस्य महर्षेर्मुखात्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

इति श्लोक उदपद्यत।[6] एतस्मिन्नन्तरे प्रजापतिर्ब्रह्मा तदीयाश्रममाजगाम।[7] विस्मितेन मुनिना पृष्टो ब्रह्मा वाल्मीकिनोच्चारितायाश्छोन्दोमय्या वाण्याः श्लोक इत्याख्या कथिता।[8] तदादेशेनैव महर्षिर्वाल्मीकिर्नारदाच्छ्रुतं रामोदन्तमुपजीव्य रामायणकाव्यं चतुर्विंशतिश्लोकसहस्रै रचयामास।[9] अथ स्वाश्रमपालितौ रामात्मजौ कुशलवौ रामायणमध्यापयामास।[10] तौ च गाननिपुणौ ऋषिब्राह्मणसाधूनां समितिषु जगतुः।[11] सर्वोऽप्य वृत्तान्तो रामराज्याभिषेकात् सीतापरित्यागादनन्तरमेव जातः। रामाज्ञया लक्ष्मणेन जाह्नव्यास्तीरे परित्यक्ता सीता वाल्मीकिशिष्यैर्दृष्टा तस्मै महर्षये निवेदिता च।[12]

---

1. कामिलबुल्के, रामकथा, p. 109- 110 ff.
2. रामायणम्, I. 2. 3.
3. तत्रैव, I. 2. 5, 7.
4. तत्रैव, I. 2. 3.
5. तत्रैव, I. 1.
6. तत्रैव, I. 2. 3-15.
7. तत्रैव, I. 2. 23.
8. तत्रैव, I. 2. 31.
9. तत्रैव, I. 4. 1-2.
10. तत्रैव, I. 4. 4-6.
11. तत्रैव, I. 4. 13.
12. तत्रैव, VII. 49. 1-7.

करुणार्द्रचेतसा महर्षिणा स्वयं नदीतीरमागतेन सीता प्रत्युद्गृहीता, आश्रमसमीपवासिनीभ्यस्तापसीभ्यो रक्षणावेक्षणाद्यर्थं समर्पिता च ।[1] तत्रैवाश्रमे सीता यमौ पुत्रौ सुषुवे । महर्षिणा ताभ्यां भूतविनाशिनी रक्षा प्रददे, तयोः कुशलवेति नाम्नी च कृते ।[2] लवणवधार्थं प्रयातः शत्रुघ्नो वाल्मीकेराश्रमसन्निधौ रात्रिमुवास शुश्राव च तस्मान्महर्षेः पौराणिकीः कथाः । तस्यामेव रात्रौ कुशलवावजायेताम् ।[3]

रामेणाश्वमेधयज्ञे प्रवर्तिते महर्षिर्वाल्मीकि, सीतया कुशलवाभ्यां च सार्धमयोध्यामाजगाम । तस्यैव निर्देशेन कुशलवौ रामसदसि रामायणमगायताम् । रामायणश्रवणाद्रामः कुशलवयोः परिचयं विदित्वा, वाल्मीकिसन्निधावस्थितां सीतां च विज्ञाय सीतया शपथग्रहणार्थं मुनेरनुज्ञां प्रार्थयन् तत्सन्निधौ दूतान् प्रेषयामास । परेद्युः प्रभाते सीतासहितो महर्षी रामस्य यज्ञवाटं जगाम । तत्र गम्भीरैर्मितै-रर्थवद्भिश्च वचोभिः सीतायाः पूतं शीलमुद्घोषयामास । एतावत्येव वाल्मीकिविषयिणी वार्ता रामायण उपलभ्यते । तस्य कुलजन्मबाल्यविद्याध्ययनदारग्रहाणादिविषये न किमपि वर्णनं तत्र दृश्यते । कुलविषये त्वेतावन्मात्रम् — कुशलवौ तं भार्गवं (भृगुकुलोत्पन्नं) कथयतः । स्वयं महर्षिस्तु आत्मानं प्रचेतसो दशमं पुत्रमाह । अन्यत्र वाल्मीकिश्च्यवनर्षेः पुत्रत्वेन तत्कुलोत्पन्नत्वेन वा प्रसिद्धः ।[4] वाल्मीकिरामायणेऽपि च्यवनस्य नाम श्रूयते । वाल्मीकेराश्रमे रात्रिमुषित्वा शत्रुघ्नश्च्यवनं संबभाषे तस्मान्मान्धातृवधवृत्तान्तं चाश्रौषीत् ।[5] अनेन च्यवनस्य वाल्मीकिसमीपनिवासो ज्ञायते । किन्तु तयोः कीदृशः सम्बन्धः, समकुलो-त्पन्नत्वादत्र च्यवनेति वाल्मीकेरेव नामान्तरं न वेति निश्चेतुमशक्ता वयम् ।

अयमेव वाल्मीकिः रामायणस्य कर्ता संस्कृतवाङ्मयस्यादिकविः । सोऽशेषाणां शास्त्राणां पारङ्गमः, करुणहृदयश्च । रामायणस्यादावन्ते चास्योदारहृदयस्य हृदयवैशद्यं मानवरूपेणास्तित्वं च सम्यक् प्रकटीभवतः । ये तावदीदृशस्य कारुणिकस्य महामानवस्यास्तित्वे कवित्वे च संदिहन्ति, स्ववै-दुष्याभिनवत्वावलेपिभ्यो नमो वयं तेभ्यः कुर्मः ।

डा० सुकुमारसेनमहोदया वाल्मीकिरामायणविषये बह्वीः स्वकल्पनापोढा वार्ताः श्रावयन्ति । तन्मतेन तु अश्वघोषेण विदिता रामकथा जातकानुसारिणी न तु वाल्मीकिरामायणानुसारिणी ।[6]

---

1. रामायणम्, VII. 49. 9-24.
2. तत्रैव, VII, 66. 1, 3, 5.
3. तत्रैव, VII. 65; VII. 66. 1.
4. अध्यात्मरामायणे कृत्तिवासकृते वङ्गरामायणे च । वाल्मीकेश्च्यवनपुत्रत्वं तत्कुलोत्पन्नत्वं वा महा-कविरश्वघोषोऽपि जानाति स्म । स चाह—
   वाल्मीकिरादौ च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः । — बुद्धचरितम् I. 43.
5. रामायणम् VII. 67.
6. "किन्तु अश्वघोषेर जाना काहिनी रामायण अनुगत नय, जातक 'क' काहिनीर अनुगत ।"
   —रामकथार प्राक् इतिहास, जिज्ञासा, कलिकाता, 1977, पृ० 31.

श्रद्धेयाध्यापकवर्याणां मतमिदमविचारितं भ्रमविजृम्भितं च मन्यामहे । महाकविरश्वघोषो वाल्मीकिं नामत उल्लिखति, तस्यादिकवित्वं च बहुमानमुद्घोषयतीति अस्माभिः प्रदर्शितपूर्वम् । यो नाम वाल्मीकिं नामतो कुलतश्च जानाति, तस्य कवित्वमपि न विस्मरति स एव तत्प्रणीतां रामकथां न जानातीत्यहो अश्रुतपूर्वेयं वाचोयुक्तिः । अथेदानीमवलोक्यतां बुद्धचरितस्यैकः श्लोकः । महाभिनिष्क्रमणोद्यतं सिद्धार्थं तदीयसारथिश्छन्दो बभाषे—

नास्मि यातुं पुरं शक्तो दह्यमानेन चेतसा ।
त्वामरण्ये परित्यज्य सुमन्त्र इव राघवम् ॥[1]

तिपिटकांशभूतं गाथात्मकं दसरथजातकं तदट्ठकथां च प्रत्यक्षरं विविच्याप्यस्माभिस्तत्र तत्र सुमन्त्रस्य नामोल्लेखो रामवनगमनसमये सुमन्त्रकर्तृक सारथ्यं वा नावलोकितम् । ससीतलक्ष्मणं रामं वने विसृष्टवतः सुमन्त्रस्यायोध्याप्रत्यावर्तनमादिकविर्वाल्मीकिरित्थं वर्णयति—

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
.............. . ............ ..........
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥[2]

अथेदानीं सुधियः स्वयमेव विभावयन्तु अश्वघोषविदिता रामकथा वाल्मीकेरनुगता न वेति ।

एतस्मादप्याश्चर्यतरं किमपि उपन्यस्यन्ति तत्रभवन्तो डा॰ सुकुमारसेनमहाशया वाल्मीकेः स्वरूपवर्णनमधिकृत्य । तन्मतेन तु वाल्मीकिर्न ऋषिर्न चादिकविरपि तु राजसभासु सामान्यजनानां समाजेषु च प्राचीनराजोदन्तजातं गायतां पर्यटतां चारणानामेकतम एवासीत् । इमे गायकाश्चारण-शब्देन भट्ट (भाट इतिभाषायाम्)-शब्देन च व्यपदिश्यन्ते । तत्रभवन्तो यथा वा तथा मन्यन्तां तेन न किमप्युचीयते अपचीयते वा । किन्तु महाकविं कालिदासमपि स्वपक्षानुकूलं मन्यमाना यदाहुस्तदेव कौतुकमुपजनयति ।[3] महाकविः कालिदासो रघुवंशचतुर्दशसर्गे वाल्मीकिमित्थं वर्णयति—

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।[4]

प्राचीनसमये कविशब्दः कस्मिन्नर्थे प्रयुज्यते स्म तन्नातितिरोहितं सुधियाम् ।[5] किमपरकर्तृकगाथागायकेषु

---

1. बुद्धचरितम् VI. 36.
2. रामायणम् II. 57. 3, 5.
3. " 'च्यवन' (=चरक, पर्यटक) गोष्ठीर वाल्मीकिओ कालिदासेर काछे एइ रकम चारणभाट छिलेन, रामकथार सृष्टिकर्ता छिलेन ना ।...... ताइ कालिदास वाल्मीकिके ठिक रामकथार आदि कवि बलेन नि ।...... लवकुशेर गान सम्बन्धे वाल्मीकिप्रसङ्गे शुधु एइटुकुमात्र बलेछेन ये तारा ये गान गाइत ता वाल्मीकिर काछे शिखेछिल"—रामकथार प्राक्-इतिहास, पृ॰ 33.
4. महाकविकालिदासकृतं रघुवंशम् (निर्णयसागरसंस्करणम्, 1944), XIV. 14.
5. विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।
   धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ॥—अमरकोशः, II. 7. 5.

चारणमात्रेषु कालिदाससदृशो महाकविः कविशब्दं प्रयुञ्जीत ? तत्रैव रघुवंशे वाल्मीकिः सीतायै आत्मानमित्थं परिचाययति —"तवोरुकीर्तिः श्वशुरः सखा मे"[1] । अपि नाम गानोपजीवी कश्चिच्चारणो दशरथसदृशं सम्राजं सखायं ब्रूयात् ? कालिदासवर्णितो वाल्मीकिर्विनीतसत्त्वमाश्रममध्युवास न तु आजीविकार्थं द्वाराद्द्वारान्तरं पर्यटन्नासीत् ।[2] किमन्यत्—कालिदासो वाल्मीकिं तपःसिद्धलोकोत्तरशक्तिमद्दृषिरूपेणैव निर्दिशति ।[3] रामस्य यज्ञसदसि कुशलवाभ्यां गीतं रामायणं न केवलं ताभ्यां वाल्मीकेः श्रुतमपि तु तन्महाकाव्यं तेनैव महर्षिणा विरचितमासीदित्यपि कालिदासः स्पष्टं व्यनक्ति —

साङ्गं च वेदमध्याप्य किंचिदुत्क्रान्तशैशवौ ।
स्वकृतिं गापयामास कविः प्रथमपद्धतिम् ॥[4]

एतावदेवास्तां वाल्मीकिविषये समुत्पादितानां भ्रमाणां निरसनम् । प्रकृतमिदानीमनुसरामः ।

एतादृशि प्रस्तावनानिबन्धे प्रकृतग्रन्थकृत्समयनिर्णये परम्पराप्राप्तेऽपि तत्र नास्माभिः प्रयत्न आधीयते, दुःशकत्वात् । ईशापूर्वद्वितीयशताब्द्या अपि पूर्वं वाल्मीकिरामायणं सोत्तराकाण्डं पूर्णतामगमदित्यत्र तु संशीतेरवसरो नास्ति । किन्तु तस्मात् समयात् कियति पूर्वतरस्मिन् काले वाल्मीकिराविर्बभूव रामायणं च विरचयामासेति निश्चेतुमशक्ता वयमिति निर्द्वंधमुररीकुर्मः ।

वाल्मीकिरामायणस्य लोकप्रियत्वात् सम्प्रदायनिर्विशेषं सर्वग्राह्यत्वाच्च तस्य परःशताष्टीका व्यरच्यन्त । तासु स्वल्पसंख्याका एव मुद्राप्य प्राकाश्यं नीताः, शेषास्त्वद्यापि हस्तलिखितमातृकास्वेव निहिता वर्तन्ते ।

तासु बह्वीषु रामायणटीकासु गोविन्दराजकृता रामायणभूषणनाम्नी महतोत्कर्षेण राजते । टीकेयं टीकात्रयविभूषि ऽस्मिन् संस्करणे मुद्रापिता । अस्याष्टीकायाः कर्ता गोविन्दराजः कौशिकगोत्रोत्पन्नो काञ्चीनगर्यां वरदराजाज्जातः श्रीवैष्णवसम्प्रदायानुसारी चासीत् ।[5] टीकारम्भेऽयं टीकाकृत् स्वगुरुं शठकोपदेशिकं स्मरति । अयं शठकोपाचार्योऽहोबिलमठस्य षष्ठोऽध्यक्ष आसीदिति विद्वद्भिरनुमीयते । युद्धकाण्डटीकासमाप्तिश्लोकेऽयं भावनाचार्यप्रेरणया टीकां व्यरचयदित्यपि वदति ।

---

1. रघुवंशम्, XIV. 74
2. तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
—रघुवंशम् XIV. 75.
3. तमृषिः पूजयामास कुमारं क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥
—तत्रैव, XV. 12.
अपि च तत्रैव वाल्मीकिर्मन्त्रकृत्त्वेनापि स्मृत —
सखा दशरथस्यापि जनकस्य च मन्त्रकृत् । —XV. 31.
4. तत्रैव, XV. 13.
5. New Catalogus Catalogorum, University of Madras, 1971, vol. 6, p. 204.

एतेन टीकाकारोऽयमीशवीयषोडशशतके जनिमलभतेत्यनुमातुं शक्यते । श्रीवैष्णवसम्प्रदायसिद्धान्तानुसारेणैवानेन रामायणस्य व्याख्या कृता ।

अस्मिन् संस्करणे रामकृता तिलकटीकाऽपि मुद्रिता वर्तते । तिलकटीकायाः कर्ता स्वविशिष्टपरिचयादिकं किमपि नाविष्करोति केवलमात्मानं रामनामानमेव निर्दिशति । अयं च रामः शृङ्गवेरपुराधीशो वैयाकरणशिरोमणेर्नागेशभट्टस्याश्रयदाता[1]ऽऽसीदिति विद्वांसो मन्यन्ते । अतोऽयं नागेशसमकालवर्तितया ईशवीयाष्टादशशताब्द्यामेव विद्यते स्मेति निरूपयितुं शक्यते ।

संस्करणेऽस्मिन् मुद्रापिताऽन्यतमा टीका रामायणशिरोमणिनाम्नी वंशीधरबुधैः सार्धं शिवसहायनाम्ना विदुषा विरचितेति टीकारम्भश्लोकाद् ज्ञायते । बह्वन्विष्यापि वंशीधरशिवसहाययोर्विशिष्टपरिचयादिकं वेदितुमशक्ता वयम् । एतावदेव ज्ञायते यत् तोडिरामनामा ब्राह्मण आसीत्, तदात्मजः सीतारामस्तदात्मजश्च वंशीधरः ।[2]

एतट्टीकात्रयेण विभूषितस्य पाश्चात्यपाठसम्प्रदायानुसारिणो वाल्मीकिरामायणस्य पुनर्मुद्रितं संस्करणमिदं रामचरित्रानुरागिणां भक्तानां धर्मकामार्थमोक्षलिप्सूनामार्याणां तथा भारतीयसंस्कृतिजिज्ञासूनामनुसन्धातॄणां च प्रमोदाय भवेदिति बाढमाशास्महे ।

एतत्प्रस्तावनानिर्माणाय प्रेरयितारः परिमलप्रकाशनाध्यक्षाः दर्शनादिशास्त्रेषु कृतश्रमाः श्रीमन्तः कन्हैयालालजोशीमहाभागा मे कृतवेदिताभाजनम् । तेषां सुमहान्तमभ्युदयं कामये । येषां विद्वदुत्तमानां कृतिभ्यः सहायता समासादिता तेभ्योऽपि कृतज्ञतां धारयामि । सत्यानुरोधाच् शास्त्रानुरागाच्च येषां विदुषां मतानि समालोचितानि तान् प्रति न मे क्वापि द्वेषबुद्धिरस्ति । तेभ्योऽपि प्रणामाञ्जलीन् निवेद्य क्षमामभ्यर्थये ।

कृतमतिपल्लवितेनेति—

निवेदयति
विदुषामाश्रवः
भारद्वाजकुलोत्पन्न. श्रीहरिपदशर्मसूनुः
सातकडिमुखोपाध्यायशर्मा

---

1. याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीशाद् रामतो लब्धजीविकः ।।
—नागेशभट्टकृतलघुशब्देन्दुशेखरस्य प्रारम्भश्लोकः २ ।

2. आसीद्भूसुरवंशविश्रुतयशाः श्रीतोडिरामस्ततः
सीताराम इतिश्रुतोऽजनि ततोऽभूच्छ्रीलवंशीधरः ।।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणमाहात्म्यम् ।

श्रीगणेशाय नमः । श्रीसीतारामचन्द्राभ्यां नमः । श्रीहनुमते नमः ।

श्रीरामश्शरणं समस्तजगतां रामं विना का गती रामेण प्रतिहन्यते कलिमलं रामाय कार्यं नमः ।
रामात्तृप्यति कालभीमभुजगो रामस्य सर्वं वशे रामे भक्तिरखण्डिता भवतु मे राम त्वमेवाश्रयः ॥ १ ॥
चित्रकूटालयं राममिन्दिरानन्दमन्दिरम् । वन्दे च परमानन्दं भक्तानामभयप्रदम् ॥ २ ॥
ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः । नमामि देवं चिद्रूपं विशुद्धं परमं भजे ॥ ३ ॥
ऋषय ऊचुः । भगवन्सर्वमाख्यातं यत्पृष्टं विदुषा त्वया । संसारपाशबद्धानां दुःखानि सुबहूनि च ॥ ४ ॥
एतत्संसारपाशस्य छेदकः केन सः स्मृतः । कलौ वेदोक्तमार्गाश्च नश्यन्तीति त्वयोदिताः ॥ ५ ॥
अधर्मनिरतानां च यातनाश्च प्रकीर्तिताः । घोरे कलियुगे प्राप्ते वेदमार्गबहिष्कृते ॥ ६ ॥
पाखण्डत्वं प्रसिद्धं वै सर्वश्च परिकीर्तितम् । कामार्त्ता ह्रस्वदेहाश्च लुब्धा अन्योन्यतत्पराः ॥ ७ ॥
कलौ सर्वे भविष्यन्ति स्वल्पायुर्बहुपुत्रकाः । स्त्रियः स्वपोषणपरा वेश्याचरणतत्पराः ॥ ८ ॥
पतिवाक्यमनादृत्य सदाऽन्यगृहतत्पराः । दुःशीलेषु करिष्यन्ति पुरुषेषु सदा स्पृहाम् ॥ ९ ॥
असद्वार्त्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः । परुषानृतभाषिण्यो देहसंस्कारवर्जिताः ॥ १० ॥
वाचालाश्च भविष्यन्ति कलौ प्रायेण योषितः । भिक्षवश्चापि मित्रादिस्नेहसंबन्धयन्त्रिताः ॥ ११ ॥
अन्नोपाधिनिमित्तेन शिष्यान्बध्नन्ति लोलुपाः । उभाभ्यामपि पाणिभ्यां शिरःकण्डूयनं स्त्रियः ॥ १२ ॥
कुर्वन्त्यो गृहभर्तॄणामाज्ञां भेत्स्यन्त्यतन्द्रिताः । पाखण्डालापनिरताः पाखण्डजनसङ्गिनः ॥ १३ ॥
यदा द्विजा भविष्यन्ति तदा वृद्धिंगतः कलिः । घोरे कलियुगे ब्रह्मन् जनानां पापकर्मिणाम् ॥ १४ ॥
मनःशुद्धिविहीनानां निष्कृतिश्च कथं भवेत् । यथा तुष्यति देवेशो देवदेवो जगद्गुरुः ॥ १५ ॥
ततो वदस्व सर्वज्ञ सूत धर्मभृतांवर । वद सूत मुनिश्रेष्ठ सर्वमेतदशेषतः ॥ १६ ॥
कस्य नो जायते तुष्टिः सूत त्वद्वचनामृतात् । ॥ १७ ॥
सूत उवाच । शृणुध्वं ऋषयः सर्वे यदिष्टं वो वदाम्यहम् । गीतं सनत्कुमाराय नारदेन महात्मना ॥१८॥
रामायणं महाकाव्यं सर्ववेदेषु सम्मतम् । सर्वपापप्रशमनं दुष्टग्रहनिवारणम् ॥ १९ ॥
दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम् । रामचन्द्रकथोपेतं सर्वकल्याणसिद्धिदम् ॥ २० ॥
धर्मार्थकाममोक्षाणां हेतुभूतं महाफलम् । अपूर्वं पुण्यफलदं शृणुध्वं सुसमाहिताः ॥ २१ ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः । श्रुत्वैतदार्षं दिव्यं हि काव्यं सिद्धिमवाप्नुयात् ॥ २२ ॥
रामायणेन वर्त्तन्ते सुतरां ये जगद्धिताः । त एव कृतकृत्याश्च सर्वशास्त्रार्थकोविदाः ॥ २३ ॥
धर्मार्थकाममोक्षाणां साधनं च द्विजोत्तमाः । श्रोतव्यं च सदा भक्त्या रामायणपरामृतम् ॥ २४ ॥
पुराऽर्जितानि पापानि नाशमायान्ति यस्य वै । रामायणे महाप्रीतिस्तस्य वै भवति ध्रुवम् ॥ २५ ॥
रामायणे वर्त्तमाने पापपाशेन यन्त्रितः । अनादृत्य असद्गाथाः सक्तबुद्धिः प्रवर्त्तते ॥ २६ ॥

रामायणं नाम परं तु काव्यं सुपुण्यदं वै शृणुत द्विजेन्द्राः ।
यस्मिञ्छ्रुते जन्मजरादिनाशो भवत्यदोषः स नरोऽच्युतः स्यात् ॥ २७ ॥

वरं वरेण्यं वरदं तु काव्यं संतारयत्याशु च सर्वलोकम् ।
सङ्कल्पितार्थप्रदमादिकाव्यं श्रुत्वा च रामस्य पदं प्रयाति ॥ २८ ॥
ब्रह्मेशविष्ण्वाख्यशरीरभेदैर्विश्वं सृजत्यत्ति च पाति यश्च ।
तमादिदेवं परमं वरेण्यमाधाय चेतस्युपयाति मुक्तिम् ॥ २९ ॥
यो नामजात्यादिविकल्पहीनः परावराणां परमः परः स्यात् ।
वेदान्तवेद्यः स्वरुचा प्रकाशः स वीक्ष्यते सर्वपुराणवेदैः ॥ ३० ॥

ऊर्जे माघे सिते पक्षे चैत्रे च द्विजसत्तमाः । नवाह्ना खलु श्रोतव्यं रामायणकथामृतम् ॥ ३१ ॥
इत्येवं शृणुयाद्यस्तु श्रीरामचरितं शुभम् । सर्वान् कामानवाप्नोति परत्रामुत्र चोत्तमान् ॥ ३२ ॥
त्रिसप्तकुलसंयुक्तः सर्वपापविवर्जितः । प्रयाति रामभवनं यत्र गत्वा न शोचते ॥ ३३ ॥
चैत्रे माघे कार्तिके च सिते पक्षे च वाचयेत् । नवाहस्सु महापुण्यं श्रोतव्यं च प्रयत्नतः ॥ ३४ ॥
रामायणमादिकाव्यं स्वर्गमोक्षप्रदायकम् । तस्माद्धोरे कलियुगे सर्वधर्मबहिष्कृते ॥ ३५ ॥
नवभिर्दिनैः श्रोतव्यं रामायणकथामृतम् । रामनामपरा ये तु घोरे कलियुगे द्विजाः ॥ ३६ ॥
त एव कृतकृत्याश्च न कलिर्बाधते हि तान् । कथा रामायणस्यापि नित्यं भवति यद्गृहे ॥ ३७ ॥
तद्गृहं तीर्थरूपं हि दुष्टानां पापनाशनम् । तावत्पापानि देहेऽस्मिन्निवसन्ति तपोधनाः ॥ ३८ ॥
यावन्न श्रूयते सम्यक् श्रीमद्रामायणं नरैः । दुर्लभैव कथा लोके श्रीमद्रामायणोद्भवा ॥ ३९ ॥
कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते । ऊर्ज्जे मासि सिते पक्षे चैत्रे च द्विजसत्तमाः ॥ ४० ॥
यस्य श्रवणमात्रेण सौदासादयो मोचिताः । गौतमशापतः प्राप्तः सौदासो राक्षसीं तनुम् ॥ ४१ ॥
रामायणप्रभावेन विमुक्तिं प्राप्तवान्पुनः । यस्त्वेतच्छृणुयाद्भक्त्या रामभक्तिपरायणः ॥ ४२ ॥
स मुच्यते महापापैः पुरुषः पातकादिभिः । ॥ ४३ ॥

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये कल्पानुकीर्त्तनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

**ऋषय ऊचुः** । कथं सनत्कुमाराय देवर्षिर्नारदो मुनिः । प्रोक्तवान्कृतवान्धर्मान्कथं तौ मिलितावुभौ ॥ १ ॥
कस्मिन् क्षेत्रे स्थितौ तात तावुभौ ब्रह्मवादिनौ । यदुक्तं नारदेनास्मै तत्त्वं ब्रूहि महामुने ॥ २ ॥
**सूत उवाच** । सनकाद्या महात्मानो ब्रह्मणस्तनयाः स्मृताः । निर्ममा निरहंकाराः सर्वे ते ऊर्ध्वरेतसः ॥ ३ ॥
तेषां नामानि वक्ष्यामि सनकश्च सनन्दनः । सनत्कुमारश्च तथा सनातन इति स्मृतः ॥ ४ ॥
विष्णुभक्ता महात्मानो ब्रह्मध्यानपरायणाः । सहस्रसूर्यसंकाशाः सत्यवन्तो मुमुक्षवः ॥ ५ ॥
एकदा ब्रह्मणः पुत्राः सनकाद्या महौजसः । मेरुशृङ्गे समाजग्मुर्वीक्षितुं ब्रह्मणः सभाम् ॥ ६ ॥
तत्र गङ्गां महापुण्यां विष्णुपादोद्भवां नदीं । निरीक्ष्य स्नातुमुद्युक्ताः सिताख्यां प्रथितौजसः ॥ ७ ॥
एतस्मिन्नन्तरे विप्रो देवर्षिर्नारदो मुनिः । आजगामोच्चरन्नाम हरेर्नारायणादिकम् ॥ ८ ॥
नारायणाच्युतानन्त वासुदेव जनार्दन । यज्ञेश यज्ञपुरुष राम विष्णो नमोऽस्तु ते ॥ ९ ॥
इत्युच्चरन् हरेर्नाम पावयन्नखिलं जगत् । आजगाम स्तुवन्गङ्गां मुनिर्लोकैकपावनीम् ॥ १० ॥
अथायान्तं समुद्वीक्ष्य सनकाद्या महौजसः । यथार्हमर्हणं चक्रुर्ववन्दे सोऽपि तान्मुनीन् ॥ ११ ॥
अथ तत्र सभामध्ये नारायणपरायणम् । सनत्कुमारः प्रोवाच नारदं मुनिपुङ्गवम् ॥ १२ ॥
**सनत्कुमार उवाच** । सर्वज्ञोसि महाप्राज्ञ मुनीशानां च नारद । हरिभक्तिपरो यस्मात्त्वत्तो नास्त्यपरोधिकः ॥ १३ ॥
येनेदमखिलं जातं जगत्स्थावरजङ्गमम् । गङ्गा पादोद्भवा यस्य कथं स ज्ञायते हरिः ॥ १४ ॥

अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि ।

**नारद उवाच** । नमः पराय देवाय परात्परतराय च ॥ १५ ॥

परात्परनिवासाय सगुणायागुणाय च । ज्ञानाज्ञानस्वरूपाय धर्माधर्मस्वरूपिणे ॥ १६ ॥

विद्याविद्यास्वरूपाय स्वस्वरूपाय ते नमः । यो दैत्यहन्ता नरकान्तकश्च भुजाग्रमात्रेण च धर्मगोप्ता ॥ १७ ॥

भूभारसंघातविनोदकामं नमामि देवं रघुवंशदीपम् । आविर्भूतश्चतुर्द्धा यः कपिभिः परिवारितः ॥ १८ ॥

हतवान् राक्षसानीकं रामं दाशरथिं भजे । एवमादीन्यनेकानि चरितानि महात्मनः ॥ १९ ॥

तेषां नामानि संख्यातुं शक्यन्ते नाब्दकोटिभिः । महिमानं तु यन्नाम्नः पारं गन्तुं न शक्यते ॥ २० ॥

मनवोपि मुनीन्द्राश्च कथं तं क्षुल्लको भजेत् । यन्नाम्नः स्मरणेनापि महापातकिनोऽपि ये ॥ २१ ॥

पावनत्वं प्रपद्यन्ते कथं स्मरामि क्षुल्लधीः । रामायणपरा ये तु घोरे कलियुगे द्विजाः ॥ २२ ॥

त एव कृतकृत्याश्च तेषां नित्यं नमोऽस्तु ते । ऊर्जे मासि सिते पक्षे चैत्रे माघे तथैव च ॥ २३ ॥

नवाह्ना किल श्रोतव्यं रामायणकथामृतम् । गौतमशापतः प्राप्तः सुदासो राक्षसाधमः ॥ २४ ॥

रामायणप्रभावेन विमुक्तिं प्राप्तवानसौ ।

**सनत्कुमार उवाच** । रामायणं केन प्रोक्तं सर्वधर्मफलप्रदम् ॥ २५ ॥

प्राप्तः कथं गौतमेन सौदासो मुनिसत्तम । रामायणप्रभावेन कथं भूयो विमोक्षितः ॥ २६ ॥

अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि । सर्वमेतदशेषेण मुने नो वक्तुमर्हसि ॥ २७ ॥

शृण्वतां वदतां चैव कथां पापविनाशिनीम् ।

**नारद उवाच** । शृणु रामायणं विप्र यद्वाल्मीकिमुखोद्गतम् ॥ २८ ॥

नवाह्ना खलु श्रोतव्यं रामायणकथामृतम् । आस्ते कृतयुगे विप्रो धर्मकर्मविशारदः ॥ २९ ॥

सोमदत्त इति ख्यातो नाम्ना धर्मपरायणः । विप्रस्तु गौतमाख्येन मुनिना ब्रह्मवादिना ॥ ३० ॥

श्राविताः सर्वधर्मैश्च गङ्गातीरे मनोरमे । पुराणशास्त्रकथनैस्तेनासौ बोधितोपि च ॥ ३१ ॥

श्रुतवान्सर्वधर्मान्वै तेनोक्तानखिलानपि । कदाचित्परमेकान्ते परिचर्यापरोऽभवत् ॥ ३२ ॥

उपस्थितायापि तस्मै प्रणामं नह्यकारि च । स तु शान्तो महाबुद्धिर्गौतमस्तेजसां निधिः ॥ ३३ ॥

शास्त्रोदितानि कर्माणि करोति स मुदं ययौ । यस्त्वर्चितो मया देवः शिवः सर्वजगद्गुरुः ॥ ३४ ॥

गुर्ववज्ञाकृतं पापं राक्षसत्वे नियोक्तवान् । उवाच प्राञ्जलिर्भूत्वा विनयेषु च कोविदः ॥ ३५ ॥

**विप्र उवाच** । भगवन्सर्वधर्मज्ञ सर्वदर्शिन्सुरेश्वर । क्षमस्व भगवन्सर्वमपराधः कृतो मया ॥ ३६ ॥

**गौतम उवाच** । ऊर्ज्जे मासे सिते पक्षे रामायणकथामृतम् ।

नवाह्ना चैव श्रोतव्यं भक्तिभावेन सादरम् ॥ ३७ ॥

नात्यन्तिकं भवेदेतद्द्वादशाब्दं भविष्यति ।

**विप्र उवाच** । केन रामायणं प्रोक्तं चरितानि तु कस्य वै ॥ ३८ ॥

मनसा प्रीतिमापन्नो ववन्दे चरणौ गुरोः । एतत्सर्वं महाप्राज्ञ सङ्क्षेपाद्वक्तुमर्हसि ॥ ३९ ॥

**गौतम उवाच** । शृणु रामायणं विप्र वाल्मीकिमुनिना कृतम् । येन रामावतारेण राक्षसा रावणादयः ॥ ४० ॥

हतास्तु देवकार्यं हि चरितं तस्य तच्छृणु । कार्त्तिके च सिते पक्षे कथा रामायणस्य तु ॥ ४१ ॥

नवमेऽहनि श्रोतव्या सर्वपापप्रणाशिनी । इत्युक्त्वा चार्थसंपन्नो गौतमः स्वाश्रमं ययौ ॥ ४२ ॥

विप्रोऽपि दुःखमापन्नो राक्षसीं तनुमाश्रितः । क्षुत्पीडितः पिपासार्त्तो नित्यं क्रोधपरायणः ॥ ४३ ॥

कृष्णक्षपाद्युतिर्भीमो बभ्राम विजने वने । मृगांश्च विविधांस्तत्र मनुष्यांश्च सरीसृपान् ॥ ४४ ॥
विहगान्प्लवगांश्चैव प्रसभात्तानभक्षयत् । अस्थिभिर्बहुभिर्विप्राः पीतरक्तकलेवरैः ॥ ४५ ॥
रक्तार्द्रप्रेतकेशैश्च तेनासीत्तु भयङ्करः । ऋतुत्रये स पृथिवीं शतयोजनविस्तराम् ॥ ४६ ॥
कृत्वाऽतिदुःखितो पश्चाद्वनान्तरमगात्पुनः । तत्रापि कृतवान्नित्यं नरमांसाशनं तदा ॥ ४७ ॥
जगाम नर्मदातीरे सर्वलोकभयङ्करः । एतस्मिन्नन्तरे प्राप्तः कश्चिद्विप्रोऽतिधार्मिकः ॥ ४८ ॥
कलिङ्गदेशसम्भूतो नाम्ना गर्ग इति स्मृतः । वहन्गङ्गाजलं स्कन्धे स्तुवन्विश्वेश्वरं प्रभुम् ॥ ४९ ॥
गायन्नामानि रामस्य समायातोऽतिहर्षितः । तमायान्तं मुनिं दृष्ट्वा सुदासो नाम राक्षसः ॥ ५० ॥
प्राप्तो नः पारणेत्युक्त्वा भुजावुद्यम्य तं ययौ । तेन कीर्तितनामानि श्रुत्वा दूरे व्यवस्थितः ॥ ५१ ॥
असक्तस्तं द्विजं हन्तुमिदमूचे स राक्षसः ॥

**राक्षस उवाच** । अहो भद्रमहाभाग नमस्तुभ्यं महात्मने ॥ ५२ ॥
नामस्मरणमात्रेण राक्षसा अपि दूरगाः । मया प्रभाक्षिताः पूर्वं विप्राः कोटिसहस्रशः ॥ ५३ ॥
नामप्रावरणं विप्र रक्षति त्वां महाभयात् । नामस्मरणमात्रेण राक्षसा अपि भो वयम् ॥ ५४ ॥
परां शान्तिं समापन्ना महिमानोच्युतस्य हि । सर्वथा त्वं महाभाग रागादिरहितो द्विज ॥ ५५ ॥
रामकथाप्रभावेण पाह्यस्मात्पातकोन्नतात् । गुर्ववज्ञा मया पूर्वं कृता च मुनिसत्तम ॥ ५६ ॥
कृतश्चानुग्रहः पश्चाद्गुरुणोक्तमिदं वचः । वाल्मीकेर्मुनिना पूर्वं कथा रामायणस्य च ॥ ५७ ॥
ऊर्जे मासे सिते पक्षे श्रोतव्या च प्रयत्नतः । गुरुणापि पुनः प्रोक्तं रम्यं तु शुभदं वचः ॥ ५८ ॥
नवाह्ना खलु श्रोतव्यं रामायणकथामृतम् । तस्माद्ब्रह्मन्महाभाग सर्वशास्त्रार्थकोविद ॥ ५९ ॥
कथाश्रवणमात्रेण मुच्यन्ते पापकर्मभिः ।

**नारद उवाच** । ततो रामायणं ख्यातं राममाहात्म्यमुत्तमम् ॥ ६० ॥
निशम्य विस्मयाविष्टो बभूव द्विजसत्तमः । ततो विप्रः कृपाविष्टो रामनामपरायणः ॥ ६१ ॥
सुदासराक्षसं नाम चेदं वाक्यमथाब्रवीत् ।

**विप्र उवाच** । राक्षसेन्द्र महाभाग मतिस्ते विमलाऽभवत् ॥ ६२ ॥
अस्मिन्नूर्जे सिते पक्षे रामायणकथां शृणु । शृणु त्वं राममाहात्म्यं रामभक्तिपरायण ॥ ६३ ॥
रामध्यानपराणां च कः समर्थः प्रबोधितुम् । रामभक्तिपरो यत्र तत्र ब्रह्मा हरिः शिवः ॥ ६४ ॥
तत्र देवाश्च सिद्धाश्च रामायणपरा नराः । तस्मादूर्जे सिते पक्षे रामायणकथां शृणु ॥ ६५ ॥
नवाह्ना खलु श्रोतव्यं सावधानः सदा भव । इत्युक्त्वा कथयामास रामायणकथां मुनिः ॥ ६६ ॥
कथाश्रवणमात्रेण राक्षसत्वमपाकृतम् । विसृज्य राक्षसं भावमभवद्देवतोपमः ॥ ६७ ॥
कोटिसूर्यप्रतीकाशो नारायणसमप्रभः । शङ्खचक्रगदापाणिर्हरेः सद्म जगाम सः ॥ ६८ ॥
स्तुकत्वं ब्राह्मणं सम्यक् जगाम हरिमन्दिरम् । ॥ ६९ ॥

**नारद उवाच** । तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम् ।स तस्य महिमा तत्र ऊर्जे मासि च कीर्त्यते ॥७०॥
यन्नामस्मरणादेव महापातककोटिभिः । विमुक्तः सर्वपापेभ्यो नरो याति परां गतिम् ॥ ७१ ॥
रामायणे हि यन्नाम सकृदप्युच्यते सदा । तदैव पापनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ७२ ॥
ये पठन्ति सदाख्यानं भक्त्या शृण्वन्ति ये नराः । गङ्गास्नानाच्छतगुणं तेषां संजायते फलम् ॥ ७३ ॥

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये राक्षसमोक्षणं नाम द्वितीयोऽध्यायः ॥२॥

**सनत्कुमार उवाच**। अहो विप्र इदं प्रोक्तमितिहासं च नारद। रामायणस्य माहात्म्यं त्वं पुनर्वद विस्तरात् ॥ १ ॥
अन्यमासस्य माहात्म्यं कथयस्व प्रसादतः । कस्य नो जायते तुष्टिर्मुने त्वद्वचनामृतात् ॥ २ ॥
**नारद उवाच** । सर्वे यूयं महाभागाः कृतार्था नात्र संशयः। यतः प्रभावं रामस्य भक्तितः श्रोतुमुद्यताः॥ ३ ॥
माहात्म्यश्रवणं यस्य राघवस्य कृतात्मनाम् । दुर्लभं प्राहुरत्यन्तं मुनयो ब्रह्मवादिनः ॥ ४ ॥
शृणुध्वमृषयश्चित्रमितिहासं पुरातनम् । सर्वपापप्रशमनं सर्वरोगविनाशनम् ॥ ५ ॥
आसीत्पुरा द्वापरे च सुमतिर्नाम भूपतिः । सोमवंशोद्भवः श्रीमान् सप्तद्वीपैकनायकः ॥ ६ ॥
धर्मात्मा सत्यसंपन्नः सर्वसंपद्विभूषितः । सदा रामकथासेवी रामपूजापरायणः ॥ ७ ॥
रामपूजापराणां च शुश्रूषुरनहंकृतिः । पूज्येषु पूजानिरतः समदर्शी गुणान्वितः ॥ ८ ॥
सर्वभूतहितः शान्तः कृतज्ञः कीर्त्तिमान्नृपः । तस्य भार्य्या महाभागा सर्वलक्षणसंयुता ॥ ९ ॥
पतिव्रता पतिप्राणा नाम्ना सत्यवती श्रुता । तावुभौ दम्पती नित्यं रामायणपरायणौ ॥ १० ॥
अन्नदानरतौ नित्यं जलदानपरायणौ । तडागाराममपादीनसंख्यातानकारयत् ॥ ११ ॥
सोपि राजा महाभागो रामायणपरायणः । वाचयेच्छृणुयाद्वापि भक्तिभावेन भावितः ॥ १२ ॥
एवं रामपरो नित्यं राजा तु धर्मकोविदः । तस्य प्रिया सत्यवती देवी अपि सदाऽस्तुवत् ॥ १३ ॥
विश्रुतौ त्रिषु लोकेषु दम्पती तौ हि धार्मिकौ । आययौ बहुभिः शिष्यैर्द्रष्टुकामो विभाण्डकः ॥ १४ ॥
विभाण्डकं मुनिं दृष्ट्वा सुखमाप्तो जनेश्वरः । पाद्यमर्घ्यं सपत्नीकः पूजाभिर्बहुविस्तरम् ॥ १५ ॥
कृतातिथ्यक्रियं शान्तं कृतासनपरिग्रहम् । निजासनगतो भूपः प्राञ्जलिर्मुनिमब्रवीत् ॥ १६ ॥
**राजोवाच** । भगवन् कृतकृत्योद्य त्वदभ्यागमनेन भो। सतामागमनं सन्तः प्रशसन्ति सुखावहम् ॥ १७ ॥
यत्र स्यान्महतां प्रेम तत्र स्युः सर्वसम्पदः । तेजः कीर्तिर्धनं पुत्र इति प्राहुर्विपश्चितः ॥ १८ ॥
तत्र वृद्धिं गमिष्यन्ति श्रेयांस्यनुदिनं मुने । यत्र सन्तः प्रकुर्वन्ति महतीं करुणां प्रभो ॥ १९ ॥
यो मूर्ध्नि धारयद्ब्रह्मन्विप्रपादतलोदकम् । स स्नातो सर्वतीर्थेषु पुण्यवान्नात्र संशयः ॥ २० ॥
मम पुत्राश्च दाराश्च सम्पदश्च समर्पिताः । समाज्ञापय शान्तात्मन् वयं किं करवाणि ते ॥ २१ ॥
इत्थं वदन्तं भूपं तं स निरीक्ष्य मुनीश्वरः । स्पृशन्करेण राजानं प्रत्युवाचातिहर्षितः ॥ २२ ॥
**ऋषिरुवाच** । राजन्यदुक्तं भवता तत्सर्वं त्वत्कुलोचितम् । विनयावनताः सर्वे परं श्रेयो भजन्ति हि ॥ २३ ॥
प्रीतोस्मि तव भूपाल सन्मार्गपरिवर्तिनः । स्वस्ति तेऽस्तु महाभाग यत्पृच्छामि तदुच्यताम् ॥ २४ ॥
हरिसन्तोषकान्यासन्पुराणानि बहून्यपि । माघे मासि चोद्यतोसि रामायणपरायणः ॥ २५ ॥
तव भार्योपि साध्वीयं नित्यं रामपरायणा । किमर्थमेतद्वृत्तान्तं यथावद्वक्तुमर्हसि ॥ २६ ॥
**राजोवाच**। शृणुष्व भगवन्सर्वं यत्पृच्छसि वदामि तत्। आश्चर्यं यद्धि लोकानामावयोश्चरितं मुने ॥ २७ ॥
अहमासं पुरा शूद्रो मालतिर्नाम सत्तम । कुमार्गनिरतो नित्यं सर्वलोकाहिते रतः ॥ २८ ॥
पिशुनो धर्मविद्वेषी देवद्रव्यापहारकः। महापातकिसंसर्गी देवद्रव्योपजीवकः ॥ २९ ॥
गोघ्नश्च ब्रह्महा चौरो नित्यं प्राणिवधे रतः । नित्यं निष्ठुरवक्ता च पापी वेश्यापरायणः ॥ ३० ॥
किञ्चित्काले संस्थितोऽहमनादृत्य महद्वचः । सर्वबन्धुपरित्यक्तो दुःखी वनमुपागमम् ॥ ३१ ॥
मृगमांसाशनं नित्यं तथा मार्गविरोधकृत् । एकाकी दुःखबहुलो निवसन्निर्जने वनम् ॥ ३२ ॥
एकदा क्षुत्परिश्रान्तो निदाघान्ते पिपासितः । वसिष्ठस्याश्रमं दृष्ट्वा अपश्यन्निर्जनं वनम् ॥ ३३ ॥
हंसकारण्डवाकीर्णं तत्समीपे महत्सरः । पर्यन्ते वनपुष्पौघैश्छादितं तन्मुनीश्वर ॥ ३४ ॥
अपिबं तत्र पानीयं तत्तटे विगतश्रमः । उन्मूल्य बिल्वमूलानि मया क्षुच्च निवारिता ॥ ३५ ॥

वसिष्ठस्याश्रमं तिष्ठन् निवासं कृतवानहम् । शीर्णैः स्फटिकसङ्घातैस्तत्र गृहमकारिषम् ॥ ३६ ॥
पर्णैस्तृणैश्च काष्ठैश्च गृहं सम्यक् प्रकल्पितम् । तत्राहं व्याधसत्वस्थो हत्वा बहुविधान्मृगान् ॥ ३७ ॥
आजीविकां च कुर्वाणो वत्सराणां च विंशतिम् । अथोपनयता साध्वी विन्ध्यदेशे समुद्भवा ॥ ३८ ॥
निषादकुलसम्भूता नाम्ना कालीति विश्रुता । बन्धुवर्गैः परित्यक्ता दुःखिता जीर्णविग्रहा ॥ ३९ ॥
ब्रह्मन्क्षुत्तृट्परिश्रान्ता शोचती भुक्तिकृत्क्रियाम् । दैवयोगात्समायाता भ्रमन्ती विजने वने ॥ ४० ॥
मासि ग्रीष्मे च तापार्त्ता ह्यन्तस्तापप्रपीडिता । इमां दुःखवतीं दृष्ट्वा जाता मे विपुला घृणा ॥ ४१ ॥
मया दत्तं जलं चास्यै मांसं वनफलं तथा । गतश्रमा तु सा पृष्टा मया ब्रह्मन् यथातथम् ॥ ४२ ॥
न्यवेदयत्स्वकर्माणि तानि शृणु महामुने । इयं काली तु नाम्ना वै निषादकुलसम्भवा ॥ ४३ ॥
दाम्भिकस्य सुतां विद्धि न्यवसद्विन्ध्यपर्वते । परस्वहारिणी नित्यं सदा पैशुन्यवादिनी ॥ ४४ ॥
बन्धुवर्गैः परित्यक्ता यतोहं पापचारिणी । कान्तारे विजने ब्रह्मन्त्वत्समीपमुपागता ॥ ४५ ॥
इत्येवं स्वकृतं कर्म सर्वं मह्यं न्यवेदयत् । वसिष्ठस्याश्रमं पुण्यं अहं चेयं च वै मुने ॥ ४६ ॥
दम्पतीभावमाश्रित्य स्थितौ मांसाशिनौ तदा । उद्यमार्थे गतौ चैव वसिष्ठस्याश्रमं तदा ॥ ४७ ॥
दृष्ट्वा चैव समाजं च देवर्षीणां च सत्तम । रामायणपरा विप्रा माघे दृष्ट्वा दिने दिने ॥ ४८ ॥
निराहारौ च विक्रान्तौ क्षुत्पिपासाप्रपीडितौ । अनिच्छया गतौ तत्र वसिष्ठस्याश्रमं प्रति ॥ ४९ ॥
रामायणकथां श्रोतुं नवाह्ना चैव भक्तितः । तत्काल एव पञ्चत्वमावयोरभवन्मुने ॥ ५० ॥
कर्मणा तेन तुष्टात्मा भगवान्मधुसूदनः । स्वदूतान्प्रेषयामास मदाहरणकारणात् ॥ ५१ ॥
आरोप्य मां विमाने तु जग्मुस्ते च परं पदम् । आवां समीपमापन्नौ देवदेवस्य चक्रिणः ॥ ५२ ॥
भुक्तवन्तौ महाभोगान्यावत्कालं शृणुष्व मे । युगकोटिसहस्राणि युगकोटिशतानि च ॥ ५३ ॥
उषित्वा रामभवने ब्रह्मलोकमुपागतौ । तावत्कालं च तत्रापि स्थित्वेन्द्रपदमागतौ ॥ ५४ ॥
तत्रापि तावत्कालं च भुक्त्वा भोगाननुत्तमान् । ततः पृथ्वीं वयं प्राप्ताः क्रमेण मुनिसत्तम ॥ ५५ ॥
अत्रापि सम्पदतुला रामायणप्रसादतः । अनिच्छया कृतेनापि प्राप्तमेवंविधं मुने ॥ ५६ ॥
नवाह्ना किल श्रोतव्या कथा रामायणस्य च । भक्तिभावेन धर्मात्मञ्जन्ममृत्युजरापहम् ॥ ५७ ॥
अवशेनापि यत्कर्म कृतं तु सुमहत्फलम् । ददाति शृणु विप्रेन्द्र रामायणप्रसादतः ॥ ५८ ॥

**नारद उवाच**। एतत्सर्वं निशम्यासौ विभाण्डको मुनीश्वरः। अभिनन्द्य महीपालं प्रययौ स्वतपोवनम् ॥ ५९ ॥
तस्माच्छृणुध्वं विप्रेन्द्रा देवदेवस्य चक्रिणः । रामायणकथा चैव कामधेनूपमा स्मृता ॥ ६० ॥
माघे मासे सिते पक्षे रामायणं प्रयत्नतः । नवाह्ना किल श्रोतव्यं सर्वधर्मफलप्रदम् ॥ ६१ ॥
य इदं पुण्यमाख्यानं सर्वपापप्रणाशनम् । वाचयेच्छृणुयाद्वापि रामभक्तिश्च जायते ॥ ६२ ॥

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये माघफलानुकीर्तनं नाम तृतीयोऽध्यायः॥ ३॥

---

**नारद उवाच**। अन्यमासं प्रवक्ष्यामि शृणुध्वं सुसमाहिताः। सर्वपापहरं पुण्यं सर्वदुःखनिबर्हणम् ॥ १ ॥
ब्राह्मणक्षत्रियविशां शूद्राणां चैव योषिताम् । समस्तकामफलदं सर्वव्रतफलप्रदम् ॥ २ ॥
दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम् । रामायणस्य माहात्म्यं श्रोतव्यं च प्रयत्नतः॥ ३ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । पठतां शृण्वतां चैव सर्वपापप्रणाशनम् ॥ ४ ॥
आसीत्पुरा कलियुगे कलिको नाम लुब्धकः । परदार–परद्रव्य–हरणे सततं रतः ॥ ५ ॥
परनिन्दापरो नित्यं जन्तुपीडाकरस्तथा । हतवान् ब्राह्मणान् गावः शतशोथ सहस्रशः॥ ६ ॥

देवस्वहरणे नित्यं परस्वहरणे तथा । तेन पापान्यनेकानि कृतानि सुमहान्ति च ॥ ७ ॥
न तेषां शक्यते वक्तुं संख्यावत्सरकोटिभिः । स कदाचिन्महापापो जन्तूनामन्तकोपमः ॥ ८ ॥
सौवीरनगरं प्राप्तः सर्वैश्वर्यसमन्वितम् । योषिद्भिर्भूषिताभिश्च सरोभिर्विमलोदकैः ॥ ९ ॥
अलङ्कृतं विपणिभिर्ययौ देवपुरोपमम् । तस्योपवनमध्यस्थं रम्यं केशवमन्दिरम् ॥ १० ॥
छादितं हेमकलशैर्दृष्ट्वा व्याधो मुदं ययौ । हराम्यत्र सुवर्णानि बहूनीति विनिश्चितः ॥ ११ ॥
जगाम रामभवनं कीनाशश्चौर्यलोलुपः । तत्रापश्यद्द्विजवरं शान्तं तत्त्वार्थकोविदम् ॥ १२ ॥
परिचर्यापरं विष्णोरुत्तङ्कं तपसां निधिम् । एकाकिनं दयालुं च निःस्पृहं ध्यानलोलुपम् ॥ १३ ॥
दृष्ट्वासौ लुब्धको मेने तं चौर्यस्यान्तरायिणम् । देवस्य द्रव्यजातं तु समादाय महानिशि ॥ १४ ॥
उत्तङ्कं हन्तुमारेभे उद्यतासिर्मदोद्धतः । पादेनाक्रम्य तद्वक्षो गलं संगृह्य पाणिना ॥ १५ ॥
हन्तुं कृतमतिं व्याधं उत्तङ्को प्रेक्ष्य चाब्रवीत् ।

**उत्तङ्क उवाच** । भो भो साधो वृथा मां त्वं हनिष्यासि निरागसम् ॥ १६ ॥
मया किमपराद्धं ते तद्वद त्वं च लुब्धक । वृथापराधिनो लोके हिंसां कुर्वन्ति यत्नतः ॥ १७ ॥
न हिंसन्ति वृथा सौम्य सज्जना अपि साधवः । विरोधिष्वपि मूर्खेषु निरीक्ष्यावस्थितान् गुणान् ॥ १८ ॥
विरोधं नाधिगच्छन्ति सज्जना शान्तचेतसः । बहुधा वाच्यमानोपि यो नरः क्षमयान्वितः ॥ १९ ॥
तमुत्तमं नरं प्राहुर्विष्णोः प्रियतरं तथा । ॥ २० ॥
सज्जनो न याति वैरं परहितरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभीकरोति मुखं कुठारस्य ॥ २१ ॥
अहोविधिर्वै बलवान् बाधते बहुधा जनान् । सर्वसङ्गविहीनोपि बाध्यते तु दुरात्मना ॥ २२ ॥
अहो निष्कारणं लोके बाधन्ते दुर्जना जनान् । धीवराः पिशुना व्याधा लोकेऽकारणवैरिणः ॥ २३ ॥
अहो बलवती माया मोहयत्यखिलं जगत् । पुत्रमित्रकलत्राद्यैः सर्वदुःखेन योज्यते ॥ २४ ॥
परद्रव्यापहारेण कलत्रं पोषितं च यत् । अन्ते तत्सर्वमुत्सृज्य एक एव प्रयाति वै ॥ २५ ॥
मम माता मम पिता मम भार्या ममात्मजा । ममेदमिति जन्तूनां ममता बाधते वृथा ॥ २६ ॥
यावदर्पयति द्रव्यं तावद्भवति बान्धवः । अर्जितं तु धनं सर्वे भुञ्जन्ते बान्धवाः सदा ॥ २७ ॥
दुःखमेकनमो मूढस्तत्पापफलमश्नुते । इति ब्रुवाणं तमृषिं विमृश्य भयविह्वलः ॥ २८ ॥
कलिकः प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः । तत्सङ्गस्य प्रभावेन हरिसन्निधिमात्रतः ॥ २९ ॥
गतपापो लुब्धकश्च सानुतापोऽभवद्ध्रुवम् । मया कृतानि पापानि महान्ति सुबहूनि च ॥ ३० ॥
तानि सर्वाणि नष्टानि विप्रेन्द्र तव दर्शनात् । अहं वै पापधीर्नित्यं महापापसमाचरम् ॥ ३१ ॥
कथं मे निष्कृतिर्भूयात् कं यामि शरणं विभो । पुनर्जन्मार्जितैः पापैर्लुब्धकत्वमवाप्तवान् ॥ ३२ ॥
अत्रापि पापजालानि कृत्वा कां गतिमाप्नुयाम् । इति वाक्यं समाकर्ण्य कलिकस्य महात्मनः ॥ ३३ ॥
उत्तङ्को नाम विप्रर्षिरिदं वाक्यमथाब्रवीत् ।

**उत्तङ्क उवाच** । साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ॥ ३४ ॥
यस्मात्संसारदुःखानां नाशोपायमभीप्ससि । चैत्रे मासि सिते पक्षे कथा रामायणस्य च ॥ ३५ ॥
नवाह्ना किल श्रोतव्या भक्तिभावेन सादरम् । यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ ३६ ॥
तस्मिन् क्षणेऽसौ कलिको लुब्धको वीतकल्मषः । रामायणकथां श्रुत्वा सद्यः पञ्चत्वमागतः ॥ ३७ ॥
उत्तङ्कः पतितं वीक्ष्य लुब्धकं तं दयापरः । एतद्दृष्ट्वा विस्मितश्च अस्तौषीत्कमलापतिम् ॥ ३८ ॥

कथां रामायणस्यापि श्रुत्वा च वीतकल्मषः । दिव्यं विमानमारुह्य मुनिमेतदथाब्रवीत् ॥ ३९ ॥
विमुक्तस्त्वत्प्रसादेन महापातकसङ्कटात् । तस्मान्नतोस्मि ते विद्वन् यत्कृतं तत्क्षमस्व मे ॥ ४० ॥
**सूत उवाच** । इत्युक्त्वा देवकुसुमैर्मुनिश्रेष्ठमवाकिरन् । प्रदक्षिणात्रयं कृत्वा नमस्कारं पुन पुनः ॥ ४१ ॥
ततो विमानमारुह्य सर्वकामसमन्वितम् । अप्सरोगणसङ्कीर्णं प्रपेदे हरिमन्दिरम् ॥ ४२ ॥
तस्माच्छृणुध्वं विप्रेन्द्राः कथां रामायणस्य च । चैत्रे मासि सिते पक्षे श्रोतव्यं च प्रयत्नतः ॥ ४३ ॥
नवाह्ना किल रामस्य रामायणकथामृतम् । तस्मादृतुषु सर्वेषु हितकृद्धरिपूजकः ॥ ४४ ॥
ईप्सितं मनसा यद्यत् तदाप्नोति न संशयः । सनत्कुमारैर्यत्पृष्टं तत्सर्वं गदितं मया ॥ ४५ ॥
रामायणस्य माहात्म्यं किमन्यच्छ्रोतुमिच्छसि । ॥ ४६ ॥

इति श्रीस्कन्द० उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये चैत्रमासफलानुकीर्तनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

**सूत उवाच**। रामायणस्य माहात्म्यं कथितं वो मुनीश्वराः। इदानीं श्रोतुमिच्छामि विधिं रामायणस्य च॥ १ ॥
एतच्चापि महाभाग मुने तत्वार्थकोविद । कृपया परयाविष्टो यथावद्वक्तुमर्हसि ॥ २ ॥
**नारद उवाच**। रामायणविधिं चैव शृणुध्वं सुसमाहिताः । सर्वलोकेषु विख्यातं स्वर्गमोक्षाविवर्धनम्॥ ३ ॥
विधानं तस्य वक्ष्यामि शृणुध्वं गदतो मम । रामायणकथां कुर्वन् भक्तिभावेन चार्चिताः ॥ ४ ॥
येन चीर्णेन पापानां कोटिकोटिः प्रणश्यति । चैत्रे माघे कार्त्तिके च पञ्चम्यामथवारभेत् ॥ ५ ॥
सङ्कल्पं तु ततः कुर्यात्स्वस्तिवाचनपूर्वकम् । अहोभिर्नवभिः श्राव्यं रामायणकथामृतम् ॥ ६ ॥
आदितश्चान्तपर्यन्तं नवाह्ना तत्कथामृतम् । प्रत्यहं शृणुयाद्यस्तु रामचन्द्रप्रसादतः ॥ ७ ॥
प्रत्यहं दन्तकाष्ठं च अपामार्गस्य शाखया । कृत्वा स्नायीत विधिवद्रामभक्तिपरायणः ॥ ८ ॥
स्वयं च बन्धुभिः सार्द्धं शृणुयात्प्रयतेन्द्रियः । स्नानं कृत्वा यथाचारं दन्तधावनपूर्वकम् ॥ ९ ॥
शुक्लाम्बरधरः शुद्धो गृहमागत्य वाग्यतः । प्रक्षाल्य पादावाचम्य स्मरन्नारायणं प्रभुम् ॥ १० ॥
नित्यं देवार्चनं कृत्वा पश्चात्सङ्कल्पपूर्वकम् । रामायणपुस्तकं च अर्चयेद्भक्तिभावतः ॥ ११ ॥
आवाहनासनाद्यैश्च गन्धपुष्पादिभिर्व्रती । ॐ नमोनारायणायेति पूजयेद्भक्तितत्परः ॥ १२ ॥
एकवारं द्विवारं वा त्रिवारं वापि शक्तितः । होमं कुर्य्यात्प्रयत्नेन सर्वपापनिवृत्तये ॥ १३ ॥
एवं यः प्रयतः कुर्याद्रामायणविधिं तथा । स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् ॥ १४ ॥
रामायणव्रतकर्त्ता धर्मकारी च सत्तमः । चाण्डालं पतितं वापि वस्त्रान्नेनापि नार्चयेत् ॥ १५ ॥
नास्तिकान् भिन्नमर्य्यादान्निन्दकान् पिशुनानपि । रामायणव्रतपरो वाङ्मात्रेणापि नार्चयेत् ॥ १६ ॥
कुण्डाशिनं गायकं च तथा देवलकाशनम् । भिषजं काव्यकर्त्तारं देवद्विजविरोधिनम् ॥ १७ ॥
परान्नलोलुपं चैव परस्त्रीनिरतं तथा । रामायणव्रतपरो वाङ्मात्रेणापि नार्चयेत् ॥ १८ ॥
इत्येवमादिभिः शुद्धो वशी सर्वहिते रतः । रामायणपरो भूत्वा परां सिद्धिं गमिष्यति ॥ १९ ॥
नास्ति गङ्गासमं तीर्थं नास्ति मातृसमो गुरुः । नास्ति विष्णुसमो देवो नास्ति रामायणात्परम्॥ २० ॥
नास्ति वेदसमं शास्त्रं नास्ति शान्तिसमं सुखम् । नास्ति शान्तिपरं ज्योतिर्नास्ति रामायणात्परम्॥ २१ ॥
नास्ति क्षमासमं सारं नास्ति कीर्त्तिसमं धनम् । नास्ति ज्ञानसमो लाभो नास्ति रामायणात्परम्॥ २२ ॥
तदन्ते वेदविदुषे गां दद्याच्च सदक्षिणाम् । रामायणं पुस्तकं च वस्त्रालङ्करणादिकम् ॥ २३ ॥
रामायणपुस्तकं यो वाचकाय प्रयच्छति । स याति विष्णुभवनं यत्र गत्वा न शोचति ॥ २४ ॥
नवदिनफलं कर्तुः शृणु धर्मविदां वर । पञ्चमेहनि चारभ्य रामायणकथामृतम् ॥ २५ ॥

कथाश्रवणमात्रेण सर्वपापैः प्रमुच्यते । यदीह यत्कृतं तस्य पुण्डरीकफलं लभेत् ॥ २६ ॥
व्रतधारी तु श्रवणं यः कुर्यात्स जितेन्द्रियः । अश्वमेधस्य यज्ञस्य द्विगुणं फलमश्नुते ॥ २७ ॥
रामायणं श्रुतं येन कथितं मुनिसत्तमाः । स लभेत्परमं पुण्यमग्निष्टोमाष्टसंभवम् ॥ २८ ॥
पञ्चकृत्वो व्रतमिदं येन सर्वं महात्मना । अग्निष्टोमाक्षयं पुण्यं द्विगुणं पुण्यमाप्नुयात् ॥ २९ ॥
एवं व्रतं च षड्वारं कुर्याद्यस्तु समाहितः । अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत् ॥ ३० ॥
नारी वा पुरुषः कुर्य्यादष्टकृत्वो मुनीश्वराः । नरमेधस्य यज्ञस्य फलं पञ्चगुणं लभेत् ॥ ३१ ॥
नरो वा प्यथ नारी वा नवरात्रौ समाचरेत् । गोमेधसवजं पुण्यं स लभेत्त्रिगुणं नरः ॥ ३२ ॥
रामायणं तु यः कुर्य्याच्छान्तात्मा प्रयतेन्द्रियः । स याति परमानन्दं यत्र गत्वा न शोचति ॥ ३३ ॥
रामायणपरो नित्यं गङ्गास्नानपरायणः । धर्ममार्गप्रवक्तारो मुक्ता एवं न संशयः ॥ ३४ ॥
यतीनां ब्रह्मचारीणां प्रवीराणां च सत्तमाः । नवाह्ना किल श्रोतव्यं कथा रामायणस्य च ॥ ३५ ॥
श्रुत्वा नरो रामकथामेतदाप्नोति भक्तितः । ब्रह्मणः पदमासाद्य तत्रैव परिमोदते ॥ ३६ ॥
तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम् । श्रोतॄणां च परं श्राव्यं पवित्राणामनुत्तमम् ॥ ३७ ॥
दुःस्वप्ननाशनं धन्यं श्रोतव्यं च प्रयत्नतः । नरोऽत्र श्रद्धया युक्तः श्लोकं श्लोकार्द्धमेव च ॥ ३८ ॥
पठनान्मुच्यते सद्यो ह्युपपातककोटिभिः । सतामेव प्रयोक्तव्यं गुह्याद्गुह्यतमं तु यत् ॥ ३९ ॥
वाचयेद्रामभवने पुण्यक्षेत्रे च संसदि । ब्रह्मद्वेषरतानां च दम्भाचाररतात्मनाम् ॥ ४० ॥
लोकवञ्चकवृत्तीनां न ब्रूयादिदमुत्तमम् । त्यक्तकामादिदोषाणां रामभक्तिरतात्मनाम् ॥ ४१ ॥
गुरुभक्तिरतानां च वक्तव्यं मोक्षसाधनम् । सर्वदेवमयो रामः स्मृतश्चार्त्तिप्रणाशनः ॥ ४२ ॥
सद्भक्तवत्सलो देवो भक्त्या तुष्यति नान्यथा । अवशेनापि यन्नामकीर्त्तिते वा स्मृतेऽपि वा ॥ ४३ ॥
विमुक्तपातकः सोपि परमं पदमश्नुते । संसारघोरकान्तारदावाग्निमधुसूदनः ॥ ४४ ॥
स्मरणं सर्वपापानि नाशयत्याशु सत्तमाः । मदर्थकमिदं पुण्यं काव्यं शुश्राव चोत्तमम् ॥ ४५ ॥
श्रवणात्पठनाद्वापि सर्वपापविनाशकः । यस्य रामरसे प्रीतिर्वर्तते भक्तिसंयुता ॥ ४६ ॥
स एव कृतकृत्यश्च सर्वशास्त्रार्थकोविदः । तदार्जितं तपः पुण्यं तत्सत्यं सफलं द्विजाः ॥ ४७ ॥
यदर्थश्रवणे प्रीतिरन्यथा न हि वर्त्तते । रामायणपरा ये तु रामनामपरायणाः ॥ ४८ ॥
त एव कृतकृत्याश्च घोरे कलियुगे द्विजाः । नवाह्ना किल श्रोतव्यं रामायणकथामृतम् ॥ ४९ ॥
ते कृतज्ञा महात्मानस्तेषां नित्यं नमो नमः । रामनामैव नामैव नामैव मम जीवनम् ॥ ५० ॥
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ।

सूत उवाच । एवं सनत्कुमारस्तु नारदेन महात्मना ॥ ५१ ॥
सम्यक् प्रबोधितः सद्यः परां निर्वृतिमाप ह । तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम् ॥ ५२ ॥
नवाह्ना किल श्रोतव्यं सर्वपापैः प्रमुच्यते । श्रुत्वा चैतन्महाकाव्यं वाचकं यस्तु पूजयेत् ॥ ५३ ॥
तस्य विष्णुः प्रसन्नः स्याच्छ्रिया सह द्विजोत्तमाः । वाचके प्रीतिमापन्ने ब्रह्मा विष्णुमहेश्वराः ॥ ५४ ॥
प्रीता भवन्ति विप्रेन्द्रा नात्र कार्य्या विचारणा । रामायणवाचकाय गावो वासांसि काञ्चनम् ॥ ५५ ॥
रामायणपुस्तकं च दद्याद्वित्तानुसारतः । तस्य पुण्यफलं वक्ष्ये शृणुध्वं सुसमाहिताः ॥ ५६ ॥
न बाधन्ते ग्रहास्तस्य भूतवेतालकादयः । तस्यैव सर्वश्रेयांसि वर्द्धन्ते चरिते श्रुते ॥ ५७ ॥
न चाग्निर्बाधते तस्य न चौरादिभयं तथा । एतज्जन्मार्जितैः पापैः सद्य एव विमुच्यते ॥ ५८ ॥
सप्तवंशसमेते तु देहान्ते मोक्षमाप्नुयात् । इत्येतद्वः समाख्यातं नारदेन प्रभाषितम् ॥ ५९ ॥

सनत्कुमारमुनये पृच्छते भक्तितः पुरा । रामायणमादिकाव्यं सर्ववेदार्थसम्मतम् ॥ ६० ॥
सर्वपापहरं पुण्यं सर्वदुःखनिबर्हणम् । समस्तपुण्यफलदं सर्वयज्ञफलप्रदम् ॥ ६१ ॥
ये पठन्त्यत्र विबुधाः श्लोकं श्लोकार्द्धमेव च । न तेषां पापबन्धस्तु कदाचिदपि जायते ॥ ६२ ॥
रामार्पितमिदं पुण्यं काव्यं तु सर्वकामदम् । भक्त्या शृण्वन्ति विदन्ति तेषां पुण्यफलं शृणु ॥६३॥
शतजन्मार्जितैः पापैः सद्य एव विमोचिताः । सहस्रकुलसंयुक्ताः प्रयान्ति परमं पदम् ॥ ६४ ॥
किं तीर्थैर्गोप्रदानैर्वा किं तपोभिः किमध्वरैः । अहन्यहनि रामस्य कीर्त्तनं परिशृण्वताम् ॥ ६५ ॥
चैत्रे माघे कार्तिके च रामायणकथामृतम् । नवरात्रोभिः श्रोतव्यं रामायणकथामृतम् ॥ ६६ ॥
रामप्रसादजनकं रामभक्तिविवर्धनम् । सर्वपापक्षयकरं सर्वसंपद्विवर्द्धनम् ॥ ६७ ॥
यस्त्वेतच्छृणुयाद्वापि पठेद्वा सुसमाहितः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ६८ ॥

इति श्रीस्कन्दपुराणे उत्तरखण्डे रामायणमाहात्म्ये नारदसनत्कुमारसंवादे फलानुकीर्त्तनं नाम पञ्चमोऽध्यायः ॥५॥

॥ ॐ तत्सत्परमात्मने नमः ॥

# अथ स्मार्तानां श्रीरामायणपठनोपक्रमानुसन्धेयक्रमः ।



**श्रीमहागणपतिध्यानम्** ॥ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम् ॥ २ ॥ अनन्तरं श्रीमच्छङ्करभगवत्पादादिगुरुपरम्परानुसन्धेया ॥ **सरस्वतीप्रार्थना** ॥ ॥ दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण । भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमाना समाना सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३ ॥ ॥ **वाल्मीकिनमस्क्रिया** ॥ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ५ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥ ॥ **हनुमन्नमस्क्रिया** ॥ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ८ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १० ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२ ॥ ॥ **श्रीरामायणप्रार्थना** ॥ ॥ यः कर्णाञ्जलिसंपुटैरहरहः सम्यक्पिबत्यादराद्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु । जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम् ॥ १३ ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी । पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥ श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् । काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥ १७ ॥ ॥ **श्रीरामध्यानक्रमः** ॥ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८ ॥ वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च । सुग्रीवश्च बिभीषणश्च युवराट् तारासुतो जाम्बवान्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९ ॥ नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोस्तु रुद्रेन्द्रयमानिलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २० ॥ ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया । पारायणावसाने च पुनः पूजा कर्तव्या ॥

**पारायणसमापनसमयानुसन्धेयश्लोकक्रमः** ॥ ॥ स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः। अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम्। एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥ शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा। स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥ रामाय रामभद्राय रामचन्द्राय वेधसे। रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते। वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥ यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा। अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणात्मने। चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ९ ॥ अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत्। अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ १० ॥ त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः। यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ११ ॥ ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते। मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ १२ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्। करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ १३ ॥

श्रीसीताविवाहपट्टाभिषेकसर्गयोस्तु—'इयं सीता अभ्यषिञ्चन्' इति श्लोकपठनात् पूर्वं विशेषतो ध्यानावाहननैवेद्यादिनीराजनान्तसपर्या संविधेया ॥

---

# अथ वैष्णवानां श्रीरामायणपठनोपक्रमानुसन्धेयक्रमः।

प्रथमतः स्वस्वसंप्रदायनिर्वाहकाचार्यानुसन्धानम्। ततः लक्ष्मीनाथेत्यारभ्य प्रणतोस्मि नित्यमित्यन्तम्। अनन्तरं श्रीशैलपूर्णविषयं पितामहस्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यन्तविषयाः साम्प्रदायिकश्लोका अनुसन्धेयाः। यद्वा श्रीधरादिस्वाचार्यपर्यन्ताः प्रतिव्यक्तिश्लोका अनुसन्धेयाः ॥ ततः—कूजन्तं राम रामेति मधुरं मधुराक्षरम्। आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः। शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २ ॥ यः पिबन्सततं रामचरितामृतसागरम्। अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम्। रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम्। कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ५ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्। वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः। आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम्। पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम्। बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम्। रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११ ॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम्। आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ १२ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम्। अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३ ॥ ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

**पारायणसमापनक्रमः** ॥ ॥ एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रत्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ २ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ ३ ॥ कावेरी वर्धतां काले काले वर्षतु वासवः । श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥ स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥ वेदवेदान्तवेद्याय मेघश्यामलमूर्तये । पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥ विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः । भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥ पितृभक्ताय सततं भ्रातृभिः सह सीतया । नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥ त्यक्तसाकेतवासाय चित्रकूटविहारिणे । सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥ सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥ दण्डकारण्यवासाय खण्डितामरशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥ सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥ हनुमत्समवेताय हरीशाभीष्टदायिने । वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥ श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥ आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥ ततः पितामहस्येत्यारभ्य स्वाचार्यान्ताः श्लोका अनुसन्धेयाः । सीताविवाहपट्टाभिषेकसर्गयोस्तु—इयं सीता मम सुता, अभ्यषिञ्चन्नरव्याघ्रम् इति श्लोकपठनात् पूर्वं मध्ये विशेषतो भगवदाराधनं च कर्त्तव्यम् ॥

---

# अथ माध्वानां रामायणपठनोपक्रमोनुसन्धेयक्रमः ।



श्रीमद्धनुमद्भीमभध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः । श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥ वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥ सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् । सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥ सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥ अभ्रमं भङ्गरहितमजडं विमलं सदा । आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६ ॥ भवति यदनुभावादेडमूकोऽपि वाग्मी जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः । सकलवचनचेतो देवता भारती सा मम वचसि निधत्तां सन्निधिं मानसे च ॥ ७ ॥ मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः । जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥ चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९ ॥ कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १० ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ११ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥ गोष्पदीकृतवारांशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४ ॥ मनोजवं मारुततुल्यवेगं

जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १५ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ १८ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥ आपदामपहर्तारं दातारं सर्वसम्पदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २० ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ २१ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ २२ ॥ वन्दे वन्द्यं विधिभवमहेन्द्रादिवृन्दारकेन्द्रैर्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च । धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥ २३ ॥ भूपारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् । चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥ महाव्याकरणाम्भोधिमन्थमानसमन्दरम् । कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥ मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् । नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥ स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णवे । उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७ ॥ वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया । यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥ सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे । विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥ हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् । तस्य निस्सरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥

**पारायणसमापनक्रमः** ॥ ॥ स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ३ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥ इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥

**एवं पाठक्रमं ज्ञात्वा ध्यात्वा रामं सशक्तिकम् ॥**
**कुर्वन् पाठं सावधानमभीष्टं साधयेन्नरः ॥ १ ॥**

श्रीः

आदिकविश्रीवाल्मीकिमुनिप्रणीत-

# रामायणस्य

## बालकाण्डम् ।

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।



तिलक-रामायणशिरोमणि-गोविन्दराजीय(भूषण)ेति-

टीकात्रयसमलंकृतम्

## बालकाण्डम् ।



### प्रथमः सर्गः ।

आदिकविश्रीवाल्मीकेर्नारदं प्रति प्रश्नः । तस्योत्तररूपेण संक्षेपतो नारदकृतं रामचरितवर्णनं, तच्छ्रवणफलकथनं च

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ ॥

---

### अथ रामकृता तिलकाख्या टीका ।

श्रीगणेशाय नमः ॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

श्रीमद्राघवपादपद्मयुगलं पद्मार्चितं पद्मया पद्मस्थेन तु पद्मजेन विनुतं पद्माश्रयस्याप्तये ।
यद्वेदैश्च नुतं सुखैकनिलयं सर्वाश्रयं निष्क्रियं शश्वच्छंकरशंकरं मुहुरहो सन्नौमि तल्लब्धये ॥ १ ॥
श्रीमद्ब्रह्म तदेव बीजममलं यस्याङ्कुरश्चिन्मयः काण्डैः सप्तभिरन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकैः सुविलसच्छाखाशतैः पञ्चभिश्चात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥ २ ॥
वाल्मीकिगिरिसंभूता रामाम्भोनिधिसंगता । श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम् ॥ ३ ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ ४ ॥
रामं रामानुजं सीतां भरतं भरतानुजम् । सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥ ५ ॥
कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ६ ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ७ ॥
यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ८ ॥
गोष्पदीकृतवारीशं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ९ ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ १० ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ११ ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ १३ ॥
जयति रघुवंशतिलकः कौसल्याहृदयनन्दनो रामः । दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥ १४ ॥
जितं भगवता तेन हरिणा लोकधारिणा । अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥ १५ ॥
नत्वा रामं शिवं साम्बं रामो रामप्रवर्तकः । रामायणस्य तिलकं कुरुते रामतुष्टये ॥ १६ ॥

ननु रामायणस्यैहिकामुष्मिकफलदत्वे मानाभावात्किं तद्व्याख्यानेनेति चेन्न — 'इदं पवित्रं पापघ्नम्' इत्यादि — 'जनश्च शूद्रोऽपि महत्त्वमीयात्' इत्यन्तश्लोकैरैहिकार्थसाधकत्वस्य स्पष्टमत्रैव श्रूयमाणत्वात्, 'शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा' इति मूलरामायणवचनेन ब्रह्मलोकावाप्तिः फलस्य स्पष्टमुक्तत्वाच्च । अपि च गायत्र्या ब्रह्मानुसंधानाद्ब्रह्मलोकावाप्तिवत्तत्प्रतिपाद्यस्य लीलावतार रूपतया रामस्य विभववैभवानुसंधानेन ब्रह्मलोकावाप्तिरुचितैव । न च 'काव्यालापांश्च वर्जयेत्' इति निषेधप्रसक्तिस्तस्यानृषिप्रणीतपुरुषार्थसाधनकाव्यविषयत्वात्, यत्रास्याध्ययने त्रैवर्णिकस्याधिकारो गायत्रीप्रतिपाद्यार्थप्रतिपादकत्वात् श्रवणे तु स्त्रीशूद्रादीनामप्यधिकारः। अथादिकविर्वाल्मीकिः सर्वोत्तमवस्तुवर्णनाय कृतसंकल्पो दिव्यतत्काव्यकृतिशक्तिलाभाय तादृशवस्तुज्ञानाय च कृतकष्टसमाधिसाधितपरमपुण्यचयस्तत्पुण्यचयसुप्रीतभगवन्नियोगसमुपागतं देवर्षिं नारदमभ्यर्च्य 'को न्वस्मिन्' इत्यादि पप्रच्छ । स च देवर्षी रामकथामुदितमना रामचरितमनुसृत्य संक्षेपत उपदिश्य यथागतं जगाम । ततस्तदनुग्रहलब्धं रामचरितरहस्यं निरवशेषं तत्प्रसादादेव सम्यग्विज्ञाय भूलोकवर्तिनां चतुर्णां वर्णानां तापत्रयविमोचनाय ब्रह्मांशभूत एव भगवान्प्राचेतसो वाल्मीकिः स्वकृतशतकोटिरामायणसारभूतं चतुर्विंशत्यक्षरगायत्र्याख्यपरमब्रह्मविद्याविलासभूतं रामायणं चतुर्विंशतिसहस्रश्लोकरूपं कुशलवाभ्यामग्राहयत् । तस्यास्य दिव्यकाव्यस्याद्यः सर्गो वाल्मीकेर्नारदस्योपदेशरूपः । तत्र 'नापृष्टः कस्यचिद्ब्रूयात्' इति न्यायेनापेक्षितप्रश्नोपक्षेपः—

**तपःस्वाध्यायेत्यादि** । 'श्रुत्वा चैतत्' इत्यन्तेन संबन्धः। तपस्त्वेन श्रुतः स्वाध्यायस्तपःस्वाध्यायः । "तपः स्वाध्याय इति ब्राह्मणम्" इत्यापस्तम्बोक्तेः । स्वाध्यायशब्देनाप्रायत्यानध्ययनकालदेशपरिहारादिनियमोपेततया फलवदर्थावबोधपर्यन्तं स्वशाखाध्ययनमुच्यते । तस्मिन्निरतः तदभ्यासनिरत इति यावत् यत्तु तपश्च स्वाध्यायश्च तपःस्वाध्यायौ तयोर्निरतः । तपःशब्देन चित्तप्रसादहेतुभूतं व्रतनियमादिकमोच्यते । यद्वा "यस्य ज्ञानमयं तपः" इति श्रुतेस्तपःशब्देन ब्रह्मविषयज्ञानमुच्यत इति, तन्न । तपोविशिष्टपुंविशेषप्रसिद्धमुनिपुंगवशब्देनैवोक्ततपःसंपत्तेः सिद्धत्वादिति कतककृतः । एवं हि तपोरतमित्येव सिद्धे स्वाध्यायपदवैयर्थ्यापत्तिः । तस्मात्तपःशब्देन निदिध्यासनजन्यपरिपाकवद्ब्रह्मज्ञानमुच्यते । मुनिपुंगवशब्देन मननजन्यपरिपाकवत्त्वमेवोच्यत इति न तेन गतार्थतेत्यन्ये । वाग्विदां स्वरूपतोऽर्थतश्च शब्दब्रह्मतत्त्वविदां पाणिनिपतञ्जल्यादीनां मध्ये वरं श्रेष्ठम् । मुनिश्चासौ उक्तार्थः । तेषु पुंगवं श्रेष्ठम् । एवं विशिष्टं नारदम् । तपस्वी कृच्छ्रैकादश्युपवासादिलक्षणं मुख्यं तपः, "तपो नानशनात्परम्" इति श्रुतेः स्वाध्यायरूपं च तपः, समनस्केन्द्रियाणामैकाग्र्यरूपं च तपस्तद्वान् । वाल्मीकिर्वल्मीकस्यापत्यम् 'वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ' इति ब्रह्मवैवर्तोक्तेः । वल्मीकप्रभवत्वेन गोणीपुत्रादिवद्गौणमस्य वल्मीकापत्यत्वं गृहीत्वेञ् साधुरपत्यार्थः । यद्वा वल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः । नारदम् नराणामिदं नारमज्ञानं तद्द्यति खण्डयति ज्ञानोपदेशेनेति नारदः 'गायन्नारायणकथां सदा पापभयापहाम् । नारदो नाशयन्नेति नृणामज्ञानजं तमः' इति नारदीयोक्तेः । तं पप्रच्छेत्यन्वयः । अत्र प्रष्टुरुक्तविशेषणैश्च दिव्यार्थविषयश्रवणाधिकारसंपदुक्ता । वक्तुरप्युक्तविशेषणैः सार्वज्ञ्यादि प्रतिपादितम् । ग्रहणधारणहेतुशिष्यानुग्रहक्षमत्वं च प्रतिपादितम् ॥ १ ॥

## रामायणशिरोमण्याख्या टीका ।

### श्रीगणेशाय नमः ।

श्रीसीतारामचन्द्राभ्यां नमः ॥ श्रीहनुमते नमः ॥

स्वस्तिश्रीमन्तं करुणावन्तं श्रीहनुमन्तं नौमि कले ।
नित्यं विहरन्तं हरिजनवन्तं क्षमावहन्तं कौशबले ॥
सीतापतिपातिकं परसरसिकं श्रितजनमतिकं दीनपातिम् ।
रघुनायकहृदयं हृद्रिपुविजयं शरणदमभयं सर्वनतिम् ॥ १ ॥
वन्दे श्रीसहितं गुरुमतिमहितं श्रुतिरसदयितं परममहम् ।
सीतारघुवीरं सुखमतिधीरं सुखदगभीरं विदितमहम् ॥
विधिहरिहरवन्द्यं श्रितजननन्द्यं प्रीतिमदार्यं श्रुतिगम्यम् ।
साकेतपुरेशं द्विभुजपरेशं सर्वसुरेशं श्रुतिरम्यम् ॥ २ ॥
निश्शेषश्रुतिसारभूतममलं संतापसन्नाशकं
सीतारामपदारविन्दरसिकैः संसेव्यमानं सदा ।
वाल्मीकेर्मुखनिस्सृतं सुरतुतं रामायणं श्रीकरं
ब्रह्माद्यैर्विबुधैर्नितान्तरणितं दद्यात्स्वमर्थं हि नः ॥ ३ ॥
आसीद्भूसुरवंशविश्रुतयशाः श्रीतोडिरामस्ततः
सीताराम इति श्रुतोऽजनि ततोऽभूच्छ्रीलवंशीधरः ।
लब्ध्वा संमतिमस्य रामचरणौ ध्यायंस्त्रिवेण्यास्तटे
श्रीवाल्मीकिमुनेः कृतौ कृतमना व्यासं विचारावधौ ॥ ४ ॥
सीतारामसमारम्भां शुकाचार्यादिमध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ ५ ॥
वंशीधरबुधैः सार्धं सहायैः शिवपूर्वकः ।
करोमि रामरामाय रामायणशिरोमणिम् ॥ ६ ॥

### अथ लवकुशयोर्मङ्गलानि लिख्यन्ते ।

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि
कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ २ ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ३ ॥
यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ४ ॥
गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ५ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ६ ॥
आमिषीकृतमार्तण्डं गोष्पदीकृतवारिधिम् ।
तृणीकृतदशग्रीवमाञ्जनेयं नमाम्यहम् ॥ ७ ॥
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८ ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९ ॥
उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥१०॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं मनसा स्मरामि ॥ ११ ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ १२ ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १३ ॥
शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूजितः सदा ॥ १४ ॥
यः कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १५ ॥
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ १६ ॥
श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १७ ॥
रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥ १८ ॥
जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥ १९ ॥
इति लवकुशयोर्मङ्गलस्तवं पठित्वा रामायणं पठेत् ।

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इत्यादिश्रुतिषु पुरुषस्यैव परत्वप्रतिपादनात् 'धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम्' इत्यादिवाल्मीकीयवचनात्पुरुषत्वस्य रघुनाथमात्रपर्यवसन्नत्वात् श्रुतौ चाव्यक्तशब्देन 'अव्यक्तं शंकरे विष्णावव्यक्तं महदादिषु । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्' इति विश्वकोशाभिधानेन विष्ण्वादीनां ग्रहणात्साकारनिराकारब्रह्माङ्गित्वं रघुनाथस्य बोधितम् । अत एव लक्ष्मणांशभूतसंकर्षणान्तःस्थितश्रीरामस्य 'शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू' इत्याद्युक्तिः संगच्छते । अत एव 'एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' अस्य पुंसो रघुनाथस्यैतेंऽशकलाः विष्णुर्नित्यं वृन्दावनविहारी स्वयं रघुनाथ एवेत्यर्थकस्य संगतिः । तुशब्द एवार्थे । अयं भावः । निखिलेश्वरापेक्षया नन्दनन्दनो रामान्तरङ्ग इति । अत एव—"देवानां पूरयोध्या तस्यां हिरण्मयः कोशः" इत्यादिश्रुतिभिस्तद्धाम्नोऽपि सर्वपरत्वं व्याख्यातम् । अत एव 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति गीतावाक्ये अहमित्यपहाय अन्य इति वासुदेवोक्तिः संगच्छते । 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्युक्तिस्तु नन्दनन्दनेनाभेदमारोप्योक्तेति । किंच रामवाचकपुरुषोत्तमशब्दः निखिलेश्वरनियन्तृपरः । अयं पुरुषोत्तमशब्दस्तु निखिलभूतजीवनियन्तृपर इति न विरोधः । रामादन्यत्रोपलब्धपुरुषोत्तमशब्दार्थस्तु पुरुषः परमपुरुषो राम एव उत्तमो यस्मादिति । अत एव 'वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् । ब्रह्मणा चोदितं तच्च शतकोटिप्रविस्तरम् ॥ व्याहृतं नारदेनैव वाल्मीकाय निवेदितम्' इत्यादिवचनैर्ब्रह्मणो रामोपासकत्वं बोधितम् । अत एव शंकराचार्यरामानुजाचार्यमध्वाचार्यशिवत्वेन तत्तदभिमतैः शिवलक्ष्मणवायुभी रघुनाथ एवाश्रितः । अत एव "यदद्वैतं ब्रह्म यस्य तनुभा" इत्यादिश्रुतिः 'सर्वेषामवताराणामवतारी रघूत्तमः । रामपादनखज्योत्स्ना परब्रह्मेति गीयते' इत्यागस्त्यसंहितावचनं च संगच्छते । अत एव—'तस्मिन्साकेतलोके विधिहरहरिभिः सन्ततं सेव्यमाने दिव्ये सिंहासने स्वे जनकतनयया राघवः शोभमानः । युक्तो मत्स्यैरनेकैः करिभिरपि तथा नारसिंहैरनन्तैः कूर्मैः श्रीनन्दनन्दैर्हयगलहरिभिर्नित्यमाज्ञोन्मुखैश्च ॥ यज्ञः केशववामनौ नरवरो नारायणो धर्मजः श्रीकृष्णो हलधृक् तथा मधुरिपुः श्रीवासुदेवोऽपरः । एते नैकविधा महेन्द्रविधयो दुर्गादयः कोटिशः श्रीरामस्य पुरो निदेशप्रमुखा नित्यास्तदीये पदे' इत्यादीनि बृहद्ब्रह्मसंहितावचनानि संगच्छन्ते । अत्र नन्दनन्दनशब्दः नन्दं नन्दयति विविधोक्त्या शोकत्याजनाद्धर्षयतीति मथुरानिवासिपरः । श्रीकृष्णशब्दो द्वारकानिवासिपर इति न विरोधः । अत एव—'नारायणादिरूपाणि साकारैश्वर्यमुत्तमम् । नित्यं ब्रह्म निराकारैश्वर्यं नित्यं विभाति च' इति सुन्दरीतन्त्रवचनम् । 'नारायणोऽपि रामांशः शङ्खचक्रगदाधरः' इति वाराहसंहितावचनं च । 'आनन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च । अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिः' इति पञ्चरात्रवचनं च । 'ययौ तथा महाशंभू रामलोकमगोचरम् । तत्र गत्वा महाशंभू राघवं नित्यविग्रहम् ॥ ददर्श परमात्मानं समासीनं मया सह । सर्वशक्तिकलानाथं द्विभुजं रघुनन्दनम् ॥ द्विभुजाद्राघवान्नित्यात्सर्वमेतत्प्रवर्तते' इति सुन्दरीतन्त्रवचनं च । 'स्थूलं चाष्टभुजं प्रोक्तं सूक्ष्मं चैव चतुर्भुजम् । परं च द्विभुजं रूपं तस्मादेतत्त्रयं यजेत्' इत्यानन्दसंहितावचनं च । 'यो वै वसति गोलोके द्विभुजस्तु धनुर्धरः । सदानन्दमयो रामो येन विश्वमिदं ततम्' इति सदाशिवसंहितावचनं च । "रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते" इति रामोपनिषद्वचनं च । "राम एव परं ब्रह्म राम एव परं तपः । राम एव परं तत्त्वं श्रीरामो ब्रह्म

तारकम् ” इति हनुमदुपनिषद्वचनं च । “ आनन्दरूपो निष्परिणाम एष लोकश्चैतस्माद्रमते ’ इति शाण्डिल्यशाखावचनं च । ‘ ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः । तं रामं सच्चिदानन्दं नित्यं रासेश्वरं भजे ’ इति हनुमत्संहितावचनं च संगच्छते । तद्धामपरत्वप्रतिपादिका श्रुतिः—

“ अष्टाचक्रा नवद्वारा देवानां पूरयोध्या तस्यां हिरण्मयः कोशःस्वर्गो लोको ज्योतिषावृतः यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीं तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्तिं प्रजां ददुः ” इति । तैत्तिरीयशाखान्तर्गतारण्यमध्ये । “अथ यदरण्यायनमित्याचक्षते । ब्रह्मचर्यमेव तत् अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरः तदश्वत्थः सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुमितं हिरण्मयं तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषां सर्वेषु लोकेषु कामचारो भवति ” इति च । अत एव प्रभोः प्रभुरित्यादि संगच्छते । अथ यदरण्यायनमितिश्रुतेरर्थस्तु—

अथ यत् अरण्यायनमरण्यप्रापकं तदेव ब्रह्मचर्यमित्याचक्षते वेदा इति शेषः । तेन ब्रह्मचर्येण ये जना ब्रह्मलोके विद्यमानौ अरं च ण्यं चार्णवौ अनुविन्दन्ति मनसा प्राप्नुवन्ति तेषामेवैषः श्रुतिप्रसिद्धो ब्रह्मलोको भवति तेषामेव सर्वेषु लोकेषु कामचारो भवति हिरण्यगर्भलोकं व्यावर्तयितुं श्रुतिरेव निर्वक्ति इतो-भूलोकावधारात् तृतीयस्यां दिवि प्रकृतिमण्डलाद्बहिर्भाग इत्यर्थः । ब्रह्मलोके ब्रह्मप्रकाशितभुवने अरश्च अरनामकः ण्यो ण्यनामकश्च ह वै प्रसिद्धौ अर्णवौ समुद्रौ तत तत्रैव ऐरम् इरा प्राकृतावलक्षणमन्नं तन्मय ऐरो मण्डः तेन पूर्णमैरं मदीयं प्रमोदप्रापकं सरोऽस्तीति शेषः । तत् तत्रैव सोमसवनोऽमृतस्रावी अश्वत्थश्चलदलः तत् तत्रैव ब्रह्मणः सत्यज्ञानानन्तप्रकाशकरामस्य अपराजिता अयोध्यापरपर्यायाऽपराजिताशब्दवाच्या पूः । तत् तस्यां पुर्यां प्रभुमितं प्रभुभ्यां तत्स्वामिसीतारामाभ्यामेव मितं निःशेषतो ज्ञातं हिरण्मयं मण्डपमस्तीति शेषः । प्रभुभ्यामित्यत्र “ पुमान् स्त्रिया ” इत्येकशेषः । अयोध्याकाण्डे चतुश्चत्वारिंशसर्गे सूर्यस्यापीत्यस्यायमर्थः । सूर्यस्य सर्वावभासकादित्यस्यापि सूर्योऽवभासक इत्यर्थः ।

ननु “ तमेव भान्तमनुभाति सर्वम् ” इत्यादिश्रुत्या सूर्यावभासकत्वं ब्रह्मणः प्रसिद्धमिति । ब्रह्म किमित्यत आह—अग्नेः सर्वाग्र्यस्य प्रकाशब्रह्मणोऽप्यग्निः प्रकाशक इत्यर्थः । अत एव प्रभोः सर्वनियन्तुर्ब्रह्मादित्रयस्यापि प्रभुर्नियन्ता । अग्निशब्दस्य ब्रह्मपरत्वमग्र्यत्वादग्निनामासावित्यादिना मध्वाचार्यैर्व्याख्यातम् । अभिमतश्चायं सिद्धान्तो गोविन्दाचार्याणामपि । अत एव प्रभोः सर्वनियन्तुरपि नियन्तेति तैर्व्याख्यातम् । सर्वनियन्तृत्वं च विष्ण्वादीनामेवेति भावः । किंच सूर्यस्य प्रकाशकारणस्यापि सूर्यः कारणमित्यर्थः । ननु सूर्यकारणत्वेन वह्निः प्रसिद्ध इति किं स इत्यत आह—अग्नेरप्यग्निः कारणमित्यर्थः । ननु सर्वकारणत्वेन ब्रह्मणः प्रसिद्धत्वादिति किं तदित्यत आह—प्रभोः सकलनियन्तुरपि च प्रभुर्नियन्तेत्यर्थः । अत एव सर्वपरमकारणत्वं तस्यैवेत्याह—श्रियः श्रीरित्यादिभिः । सूर्यस्य सर्वजगदवभासकस्यापि सूर्यः अग्नेः सर्वदाहकस्याप्यग्निर्दाहक इति भूषणोक्तार्थस्तु न युक्तः । दाहकत्वेन प्रकाशकत्वेन च द्वयोः प्रसिद्ध्या अन्यतरोपादानस्य निरर्थकत्वापत्तिः । नापि सूर्यस्यापि प्रकाशको दाहकश्च अग्नेरपि प्रकाशको दाहकश्चेत्यर्थो युज्यते पतत्प्रकर्षदोषवत्तापत्तेरिति दिक् । न च ‘ रामपादनखज्योत्स्ना परब्रह्मेति गीयते ’ इदमप्रमाणं विरुद्धार्थप्रतिपादकत्वात् । घटः पट इतिवत् । एतत्प्रतिपाद्यार्थस्य विरुद्धत्वं तु—

“ सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम् । यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरं यः प्रधानमन्तरे संचरन् यं प्रधानं न वेद यस्य प्रधानं शरीरं यो विज्ञानमन्तरे संचरन् यं विज्ञानं न वेद यस्य विज्ञानं शरीरं सत्यं ज्ञानमनन्तं ब्रह्म । आनन्दं ब्रह्मेति व्यजानात् । तदेजति तन्नैजति तद्दूरे तदु अन्तिके ”

इत्यादिश्रुतिभिः सर्वकारणीभूतस्वगतसजातीयविजातीयभेदशून्यसर्वान्तर्यामिदेशकालवस्तुपरिच्छेदशून्यसर्वशक्तिनित्यशुद्धबुद्धस्वयंप्रकाशस्य ब्रह्मणो देशकालवस्तुपरिच्छिन्नरामनखज्योत्स्नात्वेन प्रतिपादनात् । तथाच यत्समानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यमिति व्याप्तिस्वरूपात्, विरुद्धार्थप्रतिपादकत्वाधिकरणीभूतेदन्त्वाश्रयवृत्तिघटाद्यभावीयप्रतियोगिताऽनवच्छेदकीभूतप्रमाणप्रतियोगिकभेदत्वावच्छिन्नसामानाधिकरण्यं विरुद्धार्थप्रतिपादकत्वस्यास्तीति द्वितीयप्रमाणेन एतदर्थस्याप्रामाण्यग्रस्तत्वाद्रामस्य ब्रह्मप्रकाशित्वमसिद्धमिति वाच्यम् । अद्वैतसिद्धान्ते “ भारूपः सत्यसंकल्पः ” इत्यादिश्रुतिभिर्ब्रह्मणः प्रकाशस्वरूपत्वेन प्रतीयमानत्वात् “ तस्य भासा सर्वमिदं विभाति ” इत्यादिश्रुतिभिश्च रामस्य प्रकाशाश्रयत्वश्रुत्या एतदर्थस्य विरुद्धत्वाभावेन स्वरूपासिद्ध्या, इदं प्रमाणप्रतियोगिकभेदानुयोगित्वाभाववत् प्रमाणप्रतियोगिकभेदानुयोगित्वाभावव्याप्याप्रोच्चारितत्वादिति सत्प्रतिपक्षितत्वेन च “ तस्य भासा सर्वमिदं विभाति ” इति परमप्रमाणभूतश्रुत्यनुगामित्वेन प्रामाण्यनिश्चयाद्बाधितत्वेन च एतद्द्वितीयस्य प्रमाणाभासत्वात् । तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धेरिव तदभावव्याप्यवत्ताबुद्धेश्च प्रतिबन्धकत्वात् । यद्यपि स्वरूपासिद्धेर्न साक्षादनुमितिप्रतिबन्धकत्वं तथापि धूमाभाववद्ध्रदत्वावच्छिन्नानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयविषयतायाः यथा वह्निव्याप्यधूमवान् ह्रद इति परामर्शनिरसनद्वारा वह्निमान् ह्रद इत्यनुमितिप्रतिबन्धकत्वं तथा विरुद्धार्थप्रतिपादकत्वाभाववदिदन्त्वावच्छिन्नानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयविषयितायाः प्रमाणप्रतियोगिकभेदविशिष्टत्वव्याप्यविरुद्धार्थप्रतिपादकत्ववदिदमिति परामर्शनिरसनद्वारा इदमप्रमाणमित्यनुमितिप्रतिबन्धकत्वम् । एवमन्यत्रापि यथासंभवमूह्यम् । तथा इदं वाक्यं प्रमाणं श्रुतिसिद्धार्थबोधकत्वात्, ‘ न जायते म्रियते वा

कदाचित्' इत्यादिवत् । इदं क्वचिदाश्रितं प्रकाशत्वात्सूर्यप्रकाशवदित्याद्यनुमानान्तराणामपि सानुकूलत्वात् । न च रामस्य ब्रह्मप्रकाशकत्वे ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यत्वाभावापत्तिः । तथाहि प्रकाशस्य प्रकाश्यतिरिक्तत्वेन वस्तुदेशपरिच्छेदः अत एव मध्यमपरिमाणत्वापत्त्या च कालपरिच्छेदः परिच्छेदपरिच्छेदशून्यत्वयोरेकत्रासंभवः । प्रकाशस्य प्रकाश्यायत्ततया स्वातन्त्र्यानुपपत्तिश्चेति वाच्यम् । प्रकाशप्रकाशिनोस्तादात्म्यस्वीकारेणादोषात् । न च ब्रह्मातिरिक्तवस्तुस्वीकारे "एकमेवाद्वितीयम्' इत्यादिश्रुतिभिर्ब्रह्मणि प्रतीयमानस्य स्वगतसजातीयविजातीयभेदशून्यत्वस्य हान्यापत्तिरिति वाच्यम् । इष्टापत्तेः । श्रुतेः स्वगतसजातीयविजातीयभेदशून्यार्थबोधकत्वाभावात् । सार्वकालिकद्वित्वसङ्ख्यापूरकप्रतियोगिकभेदसमानाधिकरणप्राधान्यविशिष्टं सदित्यर्थस्य स्वारसिकत्वात् । सजातीयत्वं च प्रधानत्वेन रूपेण अत एवाक्ष्यादिप्रतिपादनं संगच्छते । स्वगतभेदशून्यत्वप्रतिपादने तु विरुध्येत प्रधानान्तरस्यप्रकाशिनः सत्त्वादयमर्थो विरुद्ध इति तु न भ्रमितव्यम् । दत्तोत्तरत्वात् । अनुभूतं च तयोस्तादात्म्यं सविता प्रकाशते सवित्रा दग्ध इत्यादौ । अत एव विधिनिषेधकबोधकवाक्यानां न वैयर्थ्यम् । "अपाणिपादो जवनो ग्रहीता" इत्यादिना पाण्यादिनिषेधस्तु प्राकृतपाण्यादीनामिति न विरोधः । पारमार्थिकपाणिपादनिषेध इत्यर्थस्तु न युक्तः जवन इत्यादिना विरोधापत्तेः । अत एव " सत्यं भिदा सत्यं भिदा नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां विदधाति कामान् । भोक्ता भोग्यं प्रेरितारं च मत्वा " 'नत्वेवाहं जातु नासं' " भेदव्यपदेशाच्च ' इत्यादीनि श्रुतिस्मृतिसूत्राणि संगच्छन्ते । न च गुणक्रियाश्रयस्य द्रव्यत्वनियमात्प्रकाशिनो द्रव्यत्वापत्तिरिति वाच्यम् । इष्टापत्तेः । स्वीकृतं च नैयायिकैः परमात्मनो द्रव्यत्वम् । न चेदमनित्यं संयोगाश्रयत्वात् घटवदित्यनुमानेनानित्यत्वापत्तिरिति वाच्यम् संयोगाश्रयत्वस्यानित्यत्वाभाववति कालादौ वृत्तित्वेन व्यभिचरितत्वात् । " नित्यो नित्यानाम् " इत्यादिश्रुतिप्रामाण्येनेश्वरस्याश्रयस्यानित्यत्वाभावविशिष्टत्वेन बाधाच्च । एवं च हेतोस्तत्रावृत्तित्वेन स्वरूपासिद्धेश्च । इदं नित्यं नित्यगुणाश्रयत्वात् कालादिवदित्यनुमानेन सत्प्रतिपक्षितत्वाच्च । वक्तव्या चैषैव युक्तिः प्रकाशस्य गुणावन्यतमत्वस्वीकारे अनित्यवादनिरासाय दर्शनान्तरीयैरपि । न च प्रकाशस्याधेयत्वापत्त्या "अनाश्रयम्" इत्यादिश्रुतिविरोधः । तासां प्रकाशिपरत्वेनाविरोधात् । अत एव ' स्वमहिम्नि प्रतिष्ठितम् ' इत्यादिना न विरोधः । प्रकरणविरोध इति न भ्रमितव्यम् । तयोस्तादात्म्यात् । स्वीकृतं च वार्तिककारानुयायिभिः " आत्मैवेदं सर्वम् " इत्यादिश्रुतिव्याख्यावसरे तादात्म्यमिति दिक् ।

एतदनुरोधेन 'विष्णुना सदृशो वीर्ये ' इत्यस्य विष्णुर्न आसमन्ताद्भावेन सदृशो यस्येत्यादिरर्थः । ' विष्णोरर्धं महाभागम् ' इत्यस्य विष्णोः अर्धं वर्धकमित्यर्थः । उत्तरकाण्डघटकीभूते 'पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः । अभिप्रेतस्त्रिलोकेश जतस्मान्नान्यस्य मे पिता' इत्येतत्पद्ये विष्णुशब्दो व्यापकव्यापकपरः । सुरेश्वरशब्दो दानीश्वरपरः । अत एव त्रिलोकेश इत्यनेन न गतार्थता । तत्प्रकरणान्तर्गते 'ततो मनोरथं सत्यं पितुर्नारायणं प्रति' इत्यत्र नारायणशब्दार्थस्तु नारेण नीत्यैव अयते इति नारायणो मर्यादापुरुषोत्तम इत्यर्थः । एवं गूढार्थमजानतो नारायणादिवाच्या बहवः सन्ति तत्र क ईप्सित इति शङ्कां निरसन्नाह—'नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् ' एतदर्थस्तु पुरुषोत्तमादन्यः पुरुषोत्तमप्रतियोगिकभेदानुयोगी नारायणो मम पतिर्न पुरुषोत्तम एवेत्यर्थ इति । प्रकरणस्याभिधानियामकत्वादत्र पुरुषोत्तमशब्दः "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः " इति श्रुतिघटकपुरुषार्थकः । अतो नारायणस्यार्थान्तरप्रतिपादकपुरुषोत्तमशब्दप्रतिपाद्यत्वेऽपि न क्षतिः । एतदर्थविवक्षयैव ' नारायणो मम पतिर्नान्यः कश्चिन्मतो मम ' इति न त्वन्यः संमतो ममेति वा नोक्तम् । एवंचात्रादेयकोटिप्रविष्टनारायणशब्दो मर्यादापुरुषोत्तमपर एव । 'तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता ' इति वेदवतीवचनार्थस्तु तस्मात् संभावितकृतत्वादिमतीत्वाद्धेतोरयोनिजा योनिसंबन्धाभावेन प्रादुर्भूता साध्वी पतिव्रताशिरोमणिः धर्मिणो जनकस्य सुता अहं भवेयम् प्राप्नुयाम् । प्राप्त्यर्थकोऽत्र भवतिः । ' पश्य मृगो धावति । पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः । जानामि सीता धरणीप्रसूता जानामि रामो मधुसूदनश्च । जानामि मृत्युं मम तस्य हस्तात्तथापि सीतां न समर्पयामि ' इत्यादाविव वाक्यार्थस्य क्रियायामन्वयात्तस्यैव कर्मत्वेन तद्वाचकस्य प्रातिपदिकत्वाभावेन न ततो द्वितीयोत्पत्तिः ' सैषा जनकराजस्य प्रसूता तनया प्रभो । तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः । ' एतदर्थस्तु हे प्रभो ! हे महाबाहो ! सा सीता परमप्रेमास्पदीभूतवेदवतीप्राप्तीच्छाविषयीभूता जनकराजस्य तनया नित्यपुत्री अत एव प्रसूता तत्रैव प्रादुर्भूता एषा तव भार्या जानकी त्वं तु सनातनः सनति सर्वं रचयतीति सनम् " यतो वा इमानि भूतानि जायन्ते " इत्यादिश्रुतिप्रतिपादितं प्रकाशब्रह्म तदुपलक्षितब्रह्मादीन् आतनोति तत्तत्कार्यनियामकत्वेन विस्तारयति । किं च सनं तदेव अः विष्णुश्च आः ब्रह्मा च आः शिवश्च ते सनाः तान् तनोति सः 'अकारो वासुदेवः स्यादाकारस्तु पितामहः ' इत्येकाक्षरः । आः स्वयंभूरिभो वाजी खेदः शंकरवासवौ ' इति मात्रिकाकोशः । स विष्णुः हिस्त्वर्थः । पूर्वं क्रोधहतः शत्रुर्ययासौ निहतस्तया । उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् ' अस्यार्थः—यया वेदवत्या शैलाभः शत्रुरसौ रावणः पूर्वं क्रोधहतः क्रोधेन हतो निहतप्रायः तया वेदवत्या उपाश्रयित्वा जानकीमाश्रित्य निहतः अतस्तव वीर्यममानुषं प्राकृतमानुषवीर्याद्विलक्षणम् । प्रतापिसखस्य रावणभवनसमये पुनरेषा प्रादुर्भवितेति बोधयन्नाह—' एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः । क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा ' वेदवत्या उत्पत्तिप्रकारं बोधयन्नाह—एवमिति । या एषा वेदवती पूर्वं कृतयुगे आसीत् सा त्रेतायुगमनुप्राप्य रक्षसस्तस्य रावणस्य वधार्थं स्वस्वामिन्यै सीतायै वधयोग्यतां निवेदयितुमित्यर्थः । महात्मनो जनकस्य मैथिलकुले उत्पन्नेति

दिक् । वेदवतीप्रकरणस्थपद्यानामीदृशार्थः तुष्यतु दुर्जनन्यायेनोक्तः । वस्तुतस्तु लक्ष्मीरेव वेदवती कुशध्वजगृहे प्रादुर्भूता नारायणरूपभरतेनोद्वाहिता तदनुमत्यैव मन्थरया रामः प्रव्राजित इत्युत्तरकाण्डे वक्ष्यते 'विक्रमस्ते यथा विष्णो रूपे चैवाश्विनोरिव । बुद्ध्या बृहस्पतेस्तुल्यः प्रजापतिसमो ह्यसि ॥ क्षमा ते पृथिवीतुल्या तेजसा भास्करोपमः । वेगस्ते वायुना तुल्यो गाम्भीर्यमुदधेरिव ॥ अप्रकम्प्यो यथा स्थाणुश्चन्द्रे सौम्यत्वमीदृशम्' इत्युत्तरकाण्डीयसप्तत्रिंशसर्गश्लोकेष्वप्युपमानोपमेयभाव इपुत्रत्सविता गच्छतीतिवद्बोध्यः। किं च प्रजापतीनां ब्रह्मादीनां समः सृष्ट्यादिष्वेकाकारवर्तनं यस्मात्सः अत एव बृहस्पतेरपि बुद्ध्या तुल्यः तोलयितुमैश्वर्यादिना इयत्तां कर्तुं शक्यो यस्त्वमसि एतन्नअर्थस्तु बुद्ध्या अ इति छित्त्वा लब्धः। तस्य तव विक्रम इव विष्णोर्विक्रमः कविभिर्वर्ण्यत इति शेषः। ते रूपमिवाश्विनो रूपे। ते क्षमा पृथिवीक्षमा तुल्या यस्याः। स त्वं तेजसा भास्करोपमः भास्कर उपमोपमेयो यस्य । ते वेगः वायुना तुल्यः वायुर्न आसमन्तात्तुल्यो यस्य । ते गाम्भीर्यमिव उदधेर्गाम्भीर्यम् । त्वमिव स्थाणुः शिवः अप्रकम्प्यः । ईदृशं भवत्सौम्यत्वसदृशं सौम्यत्वं चन्द्रे अस्तीत्यर्थः । अत एव 'चन्द्रे सौम्यत्वमीदृशम्' इत्यस्य न वैरूप्यम् । 'उत्तस्थौ नागशयनात् हरिर्नारायणो यथा' इत्येतदर्थस्तु नागशयनात् न आगः आगमनमुत्पत्तिर्यस्य नित्यसिद्धमित्यर्थः । तदेव शयनमिति कर्मधारयः । तस्मात् नारायणः नारेण नीत्यैव अयनं गतिर्यस्य मर्यादापुरुषोत्तम इत्यर्थः । हरिः आश्रितानां निःशेषसंतापस्य निवर्तको रामः यथा यथावदुत्तस्थौ । एतेन सुतसंमाननं सूचितम्। अत एव नान्यतरवैयर्थ्यम् । उत्तरकाण्डे पञ्चाशत्तमे सर्गेऽयं श्लोकः 'भविष्यति दृढं रामो दुःखप्रायो विसौख्यभाक्। प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्द्रुतम्' एतदर्थः विसौख्यभाक्। विशेषसुखस्य भोक्तापि रामः दुःखप्रायो भविष्यति । तत्र हेतुः यतो महाबाहुः रामः प्रियैः विप्रयोगं वियोगं द्रुतं प्राप्स्यते । तदेव विशदयन्नाह-'त्वां चैव मैथिलीं चैव शत्रुघ्नभरतौ तथा । स त्यजिष्यति धर्मात्मा कालेन महता महान् ॥' इदमेकत्र न वक्तव्यमित्याह-'इदं त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा। राज्ञा वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥' त्वयि त्वया अत्र भरते न वक्तव्यमित्यनेन भरतेनैवावश्यं दुःखं भोक्तव्यमिति बोधितम् । तेन ज्ञाने दुःखाल्पत्वं भविष्यतीति व्यक्तम् । तेन वक्ष्यमाणशापो भरतोद्देश्यक एवेति ध्वनितम् । तेन विष्णुर्भरतस्यैव स्वरूपान्तरमिति व्यञ्जितम् । वक्ष्यमाणेन शत्रुघ्नस्यापि सन्निधावित्यनेन शत्रुघ्नज्ञाने भरतोऽप्यवश्यं ज्ञास्यतीति व्यक्तम्। तेन द्वयोः परस्परप्रेमास्पदत्वं व्यक्तम् । शापाकारं बोधयन्नाह तत्रेति । 'तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम्' अत्र पत्नीति त्वच्छब्दार्थे विशेषणम् । पत्नीसहित इत्यर्थः । श्रीण्यादित्वादिनिः। ग्रहणरूपधात्वर्थविहितणिजन्तप्रकृतिकभावघञन्तप्रकृतिकतद्धितान्तप्रकृतिकप्रथमान्तो वा। वियोगमिष्टवियोगजनितदुःखम्। अत एव विप्रयोग प्रियैर्द्रुतमित्युपक्रमेण न विरोधः । न च शापवाक्यानां भरतोद्देश्यकत्वे 'इहागतो हि पुत्रत्वं तव पार्थिवसत्तम । राम इत्यभिविख्यातस्त्रिषु लोकेषु मानद' इति विरुध्येत रामपरतया प्रतीयमानत्वादिति वाच्यम् । अस्य गूढार्थकत्वात् ।

तथाहि रामे इहास्मिँल्लोके तव पुत्रत्वमिति प्राप्ते सति त्रिषु लोकेषु अभितः विख्याः विशेषेण ख्यातिर्यस्य स एवातो व्यापकः। किं च विराकाश इव ख्यातं ख्यातिर्यस्य गगनसदृशः इह तव पुत्रत्वमागतः प्राप्तः विष्णुः भृगुशापकृतं महत्तत्प्रसिद्धं फलं प्राप्स्यते रामस्तु दीर्घकालमयोध्याधिपतिर्भविष्यति । उत्तरकल्पे अभीति सप्तम्यन्तं रामविशेषणम् । अं विष्णुं भाति प्रकाशयतीति तदर्थः । नन्वेवमपि उत्तरकाण्डसप्तविंशसर्गे इन्द्रप्रार्थितविष्णुप्रतिज्ञाबोधकेन 'प्रतिजाने च देवेश त्वत्समीपे शतक्रतो । भवितास्मि यथास्याहं रक्षसो मृत्युकारणम्' अनेन विरुध्येतेति चेन्न । कारणं भवितास्मीत्यनेन साक्षात्स्वकर्तृत्वाभावबोधनात् । अत एव अहमेव निहन्तास्मीत्यस्य घातयितास्मीत्यर्थः । अन्तर्भावितणिजर्थोऽत्र हन्तिः । 'रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा । प्रीयते सततं रामः सहि विष्णुः सनातनः ॥ आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ।' एतदर्थस्तु आदयति ब्रह्मादिद्वारा सर्वान् भोजयति तच्छीलः आदिदेवो नित्यप्रमोदः स एव स इति कर्मधारयः । महाबाहुः महान्तौ बाहू यस्य आजानुबाहुरित्यर्थः । हरिः आश्रितसकलसंतापहारकः नारायणो मर्यादापुरुषोत्तमः प्रभुः सर्वस्वामी सनातनो ब्रह्मादिप्रवर्तकोऽपि सः श्रुतिप्रसिद्धो विष्णुः स्वप्रकाशद्वारा सर्वत्र पूर्णो रामः इदं रामायणं सदा शृण्वतः पठतः पुरुषस्योपरि सततं प्रीयेत ।

रामायणप्रवृत्तिं बोधयन्नाह-'एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः। प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम्' एवमेतत्प्रकारकं पुरा पूर्वं विष्णोर्वृत्तं प्रवृत्तमत एव विस्रब्धं विश्वासोत्पादकमेतदाख्यानं प्रव्याहरत यूयं पठत अतो वो भद्रं कल्याणमस्तु । वो बलं च प्रवर्धताम् 'सर्वे एते महाभागा रावणाद्बलवत्तराः । न चान्यो राक्षसान्हन्ता सुरारीन्देवकण्टकान् ॥ ऋते नारायणं देवं शङ्खचक्रगदाधरम् । भवान्नारायणो देवश्चतुर्बाहुः सनातनः ॥ राक्षसान् हन्तुमुत्पन्नो ह्यजय्यः प्रभुरव्ययः ।' इति वक्ष्यमाणपद्यानां त्वयमर्थः—नारो नीतिस्तेनैव अयते गच्छतीति नारायणस्तं मर्यादापुरुषोत्तममित्यर्थः तथाहि-'न्याय्यात्पथः प्रचलनं यतो नैवास्य विद्यते। अतो नारायणो रामो विद्वद्भिः परिकीर्तितः' इत्याप्तवचनम् । देवं नित्यविहारिणं शङ्खचक्रगदाधरं शङ्खचगकदाः सन्ति अस्य स नारायणोऽधरो यस्मात् तं विष्णोरुत्तममित्यर्थः । ऋते विना अन्यः राक्षसान् हन्ता न । ननु स क इत्यत आह स भवानेव तद्विशेषणं नारायणोदेवः नारायणश्च आः ब्रह्मा च उः रुद्रश्च तेषां देवः पूज्यः अत एव चतुर्बाहुः चतुरोऽर्थादीन् वाहयति आश्रितेभ्यः प्रापयतीति सः सनातनो नित्यः

अजय्यः सर्वैर्जेतुमशक्यः अव्ययः सर्वविकारशून्यः प्रभुः प्रभोरपि प्रभुः राक्षसान् राक्षसत्वं हन्तुं निवर्तयितुं भवानेव उत्पन्नः प्रादुर्भूतः । अत एव 'विष्णुना सदृशो वीर्ये विष्णोस्तुल्यपराक्रमान् । न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च ॥ तानि कर्माणि श्रूयन्ते यानि युद्धे हनूमतः' इत्यादिभेदप्रतिपादकवचनैर्न विरोधः । अत एव न द्विभुजरामे चतुर्बाहुत्वप्रतिपादनं प्रत्यक्षविरोधः । चतुर्बाहुर्नारायणोऽपि भवानेवेति विशिष्य न विरोध इति तु न भ्रमितव्यम् । विशेषणवैयर्थ्यात् । चतुर्भुजशब्दस्यापि नारायणे संकेतितत्वेन पौनरुक्त्यस्य दुरुद्धरत्वाच्च 'इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम्' इत्युत्तरकाण्डनवतितमसर्गघटकपद्यघटकीभूतवैष्णवशब्दार्थस्तु विष्णोरिदं विष्णुप्रार्थनया प्रादुर्भूतं स्वकीयं जन्मेति विष्णूनां वैकुण्ठेशक्षीराब्धीशभूम्नामिदं जन्म भरतादिरूपेण प्राकट्यं स्मरेति वा । उत्तरकाण्डचतुरुत्तरशततमसर्गघटकस्य 'तत्राहं पूर्वके भावे पुत्रः परपुरंजय । मायासंभावितो वीर कालः सर्वसमाहरः ॥' इति कालवचनस्य तु अयमर्थः । पूर्वके पूर्व एव पूर्वकः तस्मिन्प्रथमे भावे सृष्ट्यादावित्यर्थः । मायासंभावितः जीवादिविषयकत्वत्कृपया प्रादुर्भावितः अत एव तव पुत्रः । अपुत्र इति छेदो वा त्वत्पुत्रसदृशः सर्वसमाहरः सर्वव्यवहारहेतुः कालोऽहमस्मीति शेषः । तत्र 'संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः' इति ब्रह्मवचनस्य त्वयमर्थः । पुरा लोकान् संक्षिप्य संक्षेपरूपेण कृत्वा महार्णवे शयानः महार्णवे शयः शयनं यस्य स एव अनिति पालयति विश्वमिति आ विष्णुस्तस्मान्मायया जीवादिविषयककृपयाप्सु मां त्वमजीजनः उत्पादितवान् । "शयवासवासिष्वकालात्" इति सप्तम्या अलुक् । तत्र– 'ततस्त्वमसि दुर्धर्षस्तस्माद्भावात्सनातनात् । रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान् ॥ अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः ।' इत्यस्य त्वयमर्थः भ्रातॄणां वीर्यवर्धनः वीर्यवान् भूतानां रक्षां विधास्यन् । अदित्यां यः पुत्रः तस्मिन्पुत्रे विष्णुत्वं स्वरूपव्यापकत्वं यतस्त्वमुपजग्मिवान् प्रापितवान् तस्मात्सनातनान्नित्याद्भावात्स्वप्रभावात् ततो विस्तारको दुर्धर्षस्त्वमसि । 'अथवा विजिगीषा ते सुरलोकाय राघव । सनाथा विष्णुना देवा भवन्तु विगतज्वराः' इत्यस्य त्वयमर्थः हे राघव ! सुरलोकाय यदि ते विजिगीषा तर्हि सनाथा इन्द्रसहिता देवा विष्णुना सह विगतज्वरा भवन्तु । भवद्दर्शनादिति शेषः । एतेन विष्ण्वादीनां रामदर्शने उत्कण्ठातिशयः सूचितः । एतदर्थविवक्षयैव त्वयेति नोक्तम् । उत्तरकाण्डषडुत्तरशततमसर्गघटकीभूतस्य 'ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः । हृष्टाः प्रमुदिताः सर्वे पूजयन्ति स्म राघवम्' इत्यस्यायमर्थः विष्णोः क्षीराब्धीशस्य चतुर्भागं सर्वांशविशिष्टं राघवं रघुकुलप्रादुर्भूतं लक्ष्मणं पूजयन्ति स्म । उत्तरकाण्डे दशाधिकशततमे सर्गे 'ततः पितामहो वाणीं त्वन्तरिक्षादभाषत । आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव ॥ भ्रातृभिः सह देवाभैः प्रविशस्व स्वकां तनुम् । यामिच्छसि महाबाहो तां तनुं प्रविश स्वकाम् ॥ वैष्णवीं तां महातेज यद्वाकाशं सनातनम् । त्वं हि लोकगतिर्देव न त्वां केचित्प्रजानते ॥ ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्' इत्यादेरयमर्थः हे विष्णो ! स्वप्रकाशद्वारा सर्वत्र पूर्णदेवाभैः देवान् आभान्ति प्रकाशयन्ति अन्तर्भावितणिजर्थः देवप्रकाशकैरित्यर्थः । भ्रातृभिः सह स्वकां तनुमिव तनुवन्नित्यसंबद्धं स्वप्रकाशप्रकाशितं स्वलोकमित्यर्थः । प्रविशस्व सभ्रातृरामप्रवेशनं संप्रार्थ्य तदीप्सितान्यकर्तृकप्रवेशं संप्रार्थयन्नाह—यामिति । हे महाबाहो ! यां व्यक्तिं यं यं जनमित्यर्थः । इच्छसि प्रवेशयितुं वाञ्छसि तां तं तं जनमित्यर्थः । वैष्णवीं वैकुण्ठेशक्षीराब्धीशभूमसंबन्धिनीं तां तनुं तत्तल्लोकमित्यर्थः । आकाशमाकाशवद्विपुलं सनातनं यन्महातेजः । स्वकां तनुं स्वलोकमित्यर्थः । तत् वा प्रविश प्रवेशय अत एव न पौनरुक्त्यम् । हिरिवार्थे । 'पितामहवचः श्रुत्वा विनिश्चित्य महामतिः । विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥' इत्यस्य त्वयमर्थः स रामः महामतिरनुजः अतिवुद्धीन् अनुजांशान् वैष्णवं वैकुण्ठेशादिसंबन्धिनं लोकं विवेश प्रवेशयामास तेजः साकेतलोकं तु सशरीरः सन् विवेश । राजा गच्छतीत्यादाविव रामपरिकरेष्वपि गमनकर्तृत्वं बोध्यम् । अत एव भ्रात्रंशानां प्रवेशनमुक्त्वा भ्रातृप्रवेशनं नोक्तम् । महामतिरनुज इति समुदायार्थस्य कर्मत्वम् । अत एव न तद्वाचका द्वितीया । तस्य प्रातिपदिकत्वाभावात् । वाक्यार्थस्य कर्मत्वस्वीकारादेव । 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः । पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः । जानामि रामो मधुसूदनश्च । पश्य मृगो धावति' इत्यादीनां संगतिः । अनुजः वैष्णवमित्यत्र च जात्यभिप्रायेणैकवचनम् । 'ततो विष्णुमयं देवं पूजयन्ति स्म देवताः' इत्यस्य त्वयमर्थः । विष्णुमयं विष्णून् वैकुण्ठेशादीन् मयते तत्तल्लोकं प्रापयतीति स तं देवं नित्यप्रमोदं रामं देवताः ब्रह्मप्रभृतिसुराः पूजयन्ति स्म प्राशंसन् । 'अथ विष्णुर्महातेजाः पितामहमुवाच ह । एषां लोकं जनौघानां दातुमर्हसि सुव्रत' इत्यस्य तु अयमर्थः । अथ साकेतलोकप्राप्त्यनन्तरं महातेजाः विष्णुः स्वप्रकाशद्वारा सर्वत्र पूर्णः । किंच विपा सर्वव्यापकेन विष्णुना नूयते स्तूयते असाविति विष्णुः । विष्ण्वादिस्तुत इत्यर्थः । संज्ञापूर्वकविधेरनित्यत्वाजश्त्वाभावः । आगमशास्त्रस्यानित्यत्वात्तुगभावः । पितामहं साकेतस्थब्रह्माणमुवाच 'त्यक्तात्मानश्च मत्कृते' इत्यस्य त्वयमर्थः मत्कृते त्यक्तः आत्मा प्रयत्नो यैस्ते । 'तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः । लोकान्संतानकान्नाम यास्यन्तीमे समागताः ॥' अस्यार्थः विष्णुवचनं विष्ण्वादिस्तुतरामवाक्यं श्रुत्वा उवाचेति शेषः । तद्वचनमेवाह समागताः भवद्भिः सार्धमिह प्राप्ताः सन्तानकान्साकेतान्तर्वर्तिदेशविशेषान् यास्यन्ति प्राप्स्यन्ति । क्वास्ति स लोक इत्यत आह—

'सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे' ब्रह्मलोकात् ब्रह्मणो महाविष्णोर्लोकात् साकेतोत्तरद्वारवर्तिमहावैकुण्ठादित्यर्थः ।

अनन्तरे समीपे सर्वैर्निखिलैर्ब्रह्मगुणैः परमानन्दादिभिर्युक्ते स लोकोऽस्तीत्यर्थः । ‘ वानराश्च स्वकां योनिमृक्षाश्चैव तथा ययुः ’ वानरा ऋक्षाश्च स्वकां योनिं स्थानं साकेतामित्यर्थः । ययुः प्रापुः रामेण सहैवेति शेषः । वानरादिषु निलीनानां देवांशानां वृत्तमाह—‘ येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसंभवाः । तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ’ सुग्रीवः सुग्रीवनिलीनसूर्यांशः । ‘ तथा ब्रुवति देवेशे गोप्रतारमुपागताः ’ एतेन साकेतस्थयोः संवादस्तैः श्रुत इति ध्वनितम् । तेन तेषां दिव्येन्द्रियप्राप्तिर्जातेति ध्वनितम् । एवमन्यविरोधाभासेष्वप्यूह्यम् । तत्रापाततो विरुद्धत्वेन प्रतिभासमानानां ‘ विष्णुना सदृशो वीर्ये । विष्णोरर्धं महाभागम् ’ इत्यादिवचनानां विशेषतस्तत्वनिर्णयाय महापातकनाशकैकवर्णघटितश्रीमद्वाल्मीकीयरामायणं व्याख्यायते । श्रुतश्रुतीनां प्राप्तमहत्सज्ञानां समातिशयरहितसत्यज्ञानानन्दस्वरूपदेशकालवस्तुपरिच्छेदशून्यसाकारनिराकारब्रह्मनियन्त्रवाङ्मनसगोचरवेदतात्पर्यगम्यसर्वेश्वरेश्वरश्रीसीतारामप्राप्तीच्छावतां तदन्वेषणशीलानां तदवबोधाय परमकारुणिकपरमरामरसास्वादनतत्परनारदब्रह्मोपदेशमवगत्य परमकारुणिक ऋषिर्वाल्मीकिर्वेदोपबृंहणभूतं रामाचरितप्रतिपादकं चतुर्विंशतिसहस्रसङ्ख्यात्मकश्लोकात्मकं श्रीमद्रामायणं प्रकटयामास । तत्र प्रथमे श्लोके गुरौ गुरुधर्मान्प्रदर्शयन्नाह—

तपःस्वाध्यायनिरतमिति । यस्य ज्ञानमयं तप इत्यादिप्रामाण्येन तपसो ज्ञानस्य प्रतिपादको यः स्वाध्यायो वेद उपनिषद्भाग इत्यर्थः । तत्र निरतं नितरां रतम् । एतेन “तं त्वौपनिषदं पुरुषं पृच्छामि ” इतिश्रुतिगम्यविषयकपिपृच्छिषा वाल्मीकेः सूचिता । किंच तपो वेदः “ तपो हि स्वाध्यायः” इतिश्रुतेः तस्य सूः प्रादुर्भावो यस्मात्स तपस्सूर्ब्रह्मा तस्याध्या उत्कण्ठापूर्वकं स्मरणं तेनायते प्राप्नोतीति सः तपःस्वाध्यायः साकेतनित्यविहारी रघुनाथस्तत्र निरतं तद्ध्यानपरायणमित्यर्थः । तत्र निरतं पप्रच्छेत्यनेन साकेताधीशविषयकसामान्यज्ञानवान्वाल्मीकिरिति ध्वनितम् । किंच तपसे तपः कारयितुं सूर्ब्रह्मकर्मकप्रेरणा यस्य स तपस्सूर्विष्णुः प्रेरणार्थकषूधातोर्भावक्विबन्तः सूरिति निष्पन्नस्तस्याध्या उत्कण्ठापूर्वकं स्मरणं तेनायते तत्स्मृतिविषयीभवतीति तपस्स्वाध्यायः स एव तत्र निरतमित्यर्थः । किंच तपसः सूः तपःकर्मकब्रह्मप्रेरणा यस्मै स तपःसूः शिवः तस्याध्या तेनायते यः स एव तत्र निरतम् । किंच उक्तदिशा तपस्सूशब्दस्य ब्रह्मविष्णुमहेशपरत्वमवगतम् । तथा चैकशेषेण तपस्स्वां ब्रह्मविष्णुमहेश्वराणामाध्या उत्कण्ठापूर्वकं स्मरणं तेनायते स साकेताधीश एव तत्र निरतं तद्विषयकज्ञानवन्तमित्यर्थः । तपःस्वाध्याय इत्यनेन ब्रह्मविष्णुमहेश्वरोपास्यत्वमुपायान्तरागम्यत्वं च साकेताधीशस्य सूचितम् । अत एव वाग्विदां वाग्वेदितॄणां मध्ये वरं श्रेष्ठम् । किंच वाग्विद्भिर्वेदाद्यभिज्ञैर्व्रियते साकेताधीशज्ञानलाभार्थं स्वीक्रियते पूजालङ्कारादिभिरर्च्यते वासौ वाग्विदां वरस्तं संभक्तिस्वीकारान्यतरार्थकवृधातोः कर्मणि प्रत्ययः । अत एव मुनिपुंगवं विज्ञानिश्रेष्ठम् ‘ बुधे च पुंगवः श्रेष्ठे वृषभे भिषजां वरे ’ इति विश्वः । अत एव नारदं न ऋच्छति विज्ञानमन्तरा न निवर्तते इति नारमज्ञानं तद्यति साकेताधीशज्ञापनद्वारा निर्मूलयतीति नारदस्तम् । उक्तं च नारदीये—‘नारदो नाशयन्नेति नृणामज्ञानजं तमः ’ इति । तपस्वी साकेताधीशसामान्यज्ञानवान् वाल्मीकिर्वल्मीकगौणपुत्रः परिपप्रच्छ । गौणत्वं च बहुकालिकतपस्स्थितिहेतुकवल्मीकाकृतित्वप्राप्त्यनन्तरं वरुणकृतवृष्ट्या निष्पन्नत्वात् अत एव वक्ष्यमाणप्राचेतसत्वव्यवहारोऽपि न विरुद्धः प्रचेतोनिरूपितगौणपुत्रत्वस्याप्यस्मिन्सुवचत्वात् गौणपुत्रत्वयोर्विरोधाभावात् अत एव भृगुपुत्रत्वमप्यस्मिन्न विरुद्धम् । भृगुनिरूपितमुख्यपुत्रत्वस्यास्मिन्विद्यमानत्वात् गौणपुत्रत्वमुख्यपुत्रत्वयोर्विरोधाभावात् अत एव ‘ अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः । वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ ’ इति ब्रह्मवैवर्तवचनम् । ‘ अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ’ इति लवकुशोक्तिश्च । ऋक्षो भूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते ’ इति विष्णुपुराणवचनं च संगच्छते । अत्र तस्मादित्युत्तरान्वयि । अत एव ज्ञापकादस्य ऋक्ष इति रूढं नाम तस्यात्रानुक्तिस्तु आत्मनाम गुरोर्नामेत्यादिस्मृत्याऽऽत्मनामग्रहणस्य निषिद्धत्वान्निषेधस्य च रूढनामविषयत्वात् । वस्तुतस्तु स्मृतौ ग्रह उच्चारणमर्थः ज्ञानाद्यर्थत्वे निषेधस्यासंभवापत्तिः । लेखनमात्रे च नोच्चारणमित्याद्यङ्गीकारस्तदा रामाचरितस्य दुर्लभत्वबोधनफलकस्वतपःप्रख्यापनार्थं यौगिकनामोक्तिरिति बोध्यम् । अत्र प्रथमो वर्णः गायत्रीप्रथमवर्णप्रतिनिधिभूतः एवं प्रतिश्लोकसहस्रादिवर्णाः गायत्री द्वितीयादिवर्णप्रतिनिधिभूताः अत एव श्रीमद्रामायणस्य गायत्रीमयत्वमिति वर्णयन्ति । तच्चिन्त्यम् । प्रतिश्लोकसहस्रादौ तादृशवर्णानामनुपलब्धेः । केषाञ्चिदुपलब्धत्वेऽपि पदैकदेशत्वात् । अर्थवत्त्वाभावेन प्रयोजनाभावात् । वर्णमात्रघटकत्वेन गायत्रीमयत्वे निखिलपुराणेतिहासादीनां तत्त्वापत्तेः । इष्टापत्तावस्योत्कर्षत्वानापत्तेः । नच तद्वर्णमयत्वाभावे गायत्रीमयत्वानुपपत्तिः । तथात्वे वेदसंमितत्वाभावापत्त्या ‘पुण्यं वेदैश्च संमितम् ’ इत्यादिवचनस्यासंभवापत्तिरिति वाच्यम् । तद्वर्णमयत्वाभावेऽपि तदर्थवत्त्वेन तन्मयत्वस्याबाधात् । तदर्थवत्त्वे तद्वर्णमयत्वस्याहेतुत्वात् । अत एव निखिलवेदानां गायत्रीतादृशवर्णमयत्वाभावेऽपि तदर्थवत्त्वं संगच्छते । तदर्थवत्त्वं तु गायत्रीप्रतिपाद्यसंविश्रन्तर्यामिपरमात्मप्रतिपाद्यत्वेन । अत एव आदित्यहृदये ‘ब्रह्मेशाना-च्युतेशाय ’ लक्ष्मणप्रतिज्ञाने ‘पौरुषे चाप्रतिद्वन्द्वः’ सुमित्रोपदेशे ‘ प्रभोः प्रभुः ’ इत्याद्युक्तयः संगच्छन्त इति दिक् ॥ १ ॥

## श्रीगोविन्दराजीया( भूषणाख्या ) टीका ।

श्रीगणेशाय नमः ॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

आचार्यं शठकोपदेशिकमथ प्राचार्यपारंपरीं
श्रीमल्लक्ष्मणयोगिवर्यंयमुनावास्तव्यनाथादिकान् ।
वाल्मीकिं सह नारदेन मुनिना वाग्देवतावल्लभं
सीतालक्ष्मणवायुसूनुसहितं श्रीरामचन्द्रं भजे ॥ १ ॥

श्रीमत्यञ्जनभूधरस्य शिखरे श्रीमारुतेः सन्निधा-
वग्रे वेङ्कटनायकस्य सदनद्वारे यतिक्ष्माभृतः ।
नानादेशसमागतैर्बुधगणै रामायणव्याक्रियां
विस्तीर्णां रचयेति सादरमहं स्वप्नेऽस्मि संचोदितः ॥ २ ॥
क्वाहं मन्दमतिर्गभीरहृदयं रामायणं तत्क्व च
व्याख्यानेऽस्य परिश्रमस्त्वहमहो हासास्पदं धीमताम् ।
को भारोऽत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपा-
कूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ ३ ॥
वैयर्थ्यं पुनरुक्ततामनुचितारम्भं विरोधं मिथो-
ऽसाधुत्वं च पदप्रबन्धरचनावाक्येषु निःशेषयन् ।
स्वारस्यं च पदे पदे प्रकटयन् रामायणस्य स्वयं
व्याख्यामेष तनोति सज्जनमुदे गोविन्दराजाह्वयः ॥४॥
पूर्वाचार्यकृतप्रबन्धजलधेस्तात्पर्यरत्नावली-
र्ग्राहंग्राहमहं शठारिगुरुणा संदर्शितेनाध्वना ।
अन्यव्याकृतिजातरूपशकलैरायोज्य सज्जीकृतैः
श्रीरामायणभूषणं विरचये पश्यन्तु निर्मत्सराः ॥ ५ ॥
सुस्पष्टमष्टादशकृत्व एत्य श्रीशैलपूर्णार्यतिशेखरीयम् ।
शुश्राव रामायणसंप्रदायं वक्ष्ये तमाचार्यपरंपरात्तम् ॥ ६ ॥
क्वचित्पदार्थं क्वचिदन्वयार्थं क्वचित्पदच्छेदसमर्थनानि ।
क्वचित्क्वचिद्गाढनिगूढभावं वक्ष्ये यथापेक्षमवेक्षणीयम् ॥ ७ ॥

श्रियः पतिरवाप्तसमस्तकामः समस्तकल्याणगुणात्मकः सर्वेश्वरः ‘ वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥ ’ इत्युक्तरीत्या श्रीवैकुण्ठाख्ये दिव्यलोके श्रीमन्मणिमण्डपे श्रीभूमिनीलाभिः सह रत्नसिंहासनमध्यासीनो नित्यैर्मुक्तैश्च निरन्तरपरिचर्यमाणचरणनलिनोऽपि तद्वदेव स्वचरणयुगलपरिचरणार्हानपि तद्दीनान्प्रलये प्रकृतिविलीनान्मधूच्छिष्टमग्नहेमकणसदृक्षान्क्षीणज्ञानान् जीवानवलोक्य ‘ एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥ ’ इत्युक्तरीत्या दयमानमनाः ‘ विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥ ’ इत्युक्तप्रकारेण महदादिसृष्टिक्रमेण तेषां स्वचरणकमलसमाश्रयणोचितानि करणकलेवराणि दत्त्वा नदीतरणाय दत्तैः प्लवैर्नदीरयानुसारेण सागरमवगाहमानेष्विव तेषु तैर्विषयान्तरप्रवणेषु तेषां सदसद्विवेचनाय शासनाच्छास्त्रमित्युक्तरीत्या स्वशासनरूपं वेदाख्यं शास्त्रं प्रवर्त्यापि तस्मिन्नप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिभिस्तैरनादृते स्वशासनातिलङ्घिनं जनपदं स्वयमेव साधयितुमभियियासुरिव वसुधाधिपतिः स्वाचारमुखेन तान् शिक्षयितुं रामादिरूपेण चतुर्धावतितीर्षुरन्तराऽमरगणैः सहद्रुहिणैरभ्यर्थितः स्वाराधकस्य दशरथस्य मनोरथमपि पूरयितुं चतुर्धावततार । तत्र रामरूपेणावतीर्य रावणं निहत्य पितृवचनपरिपालनादिसामान्यधर्ममन्वतिष्ठत् । लक्ष्मणरूपेण रावणिं निरस्य भगवच्छेषस्वरूपं विशेषधर्मं भरतरूपेण गन्धर्वान्निर्वास्य भगवत्पारतन्त्र्यरूपं शत्रुघ्नरूपेण लवणासुरं ध्वंसयित्वा भागवतशेषत्वं

१॥

तानिमान्धर्मांस्तानीमानि चापदानानि तत्कालमात्रपर्यवसितानि भविष्यन्तीति मन्वानः सर्वलोकहितपरः पितामहो भगवान् ब्रह्मा रामचरित्रपवित्रितं शतकोटिप्रविस्तरं प्रबन्धं निर्माय तं नारदादीनध्याप्य भूलोकेऽपि सततराममन्त्रानुसंधानसंधुक्षितहृदयवाल्मीकिमुखेन संग्रहेण प्रवर्तयितुं नारदं प्रेषयामास । तदुक्तं मात्स्ये—‘ वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् । ब्रह्मणा चोदितं तच्च शतकोटिप्रविस्तरम् ॥ आहृत्य नारदेनैव वाल्मीकाय निवेदितम् ’ इति । वाल्मीकिरपि निखिलवेदान्तविदितपरतत्त्वनिर्दिधारयिषया यदृच्छयोपगतं नारदं पृष्ट्वावगतपरतत्त्वस्वरूपः तदनु प्रसन्नेन विधिना दत्तसकलसाक्षात्कारप्रबन्धनिर्माणशक्तिर्वेदोपबृंहणमारभमाणः तस्यार्थप्रधानसुहृत्संमितेतिहासतां व्यङ्ग्यप्रधानकान्तासंमितकाव्यतां च पुरस्कुर्वन् काव्यालापांश्च वर्जयेदिति निषेधस्यासत्काव्यविषयतां च निर्धारयन्स्वग्रन्थे प्रेक्षावतां प्रवृत्त्यर्थं तदङ्गानि दर्शयति प्रथमतश्चतुःसर्ग्या । तत्र प्रथमसर्गेण विषयप्रयोजने दर्शयति । तत्र च ‘ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ’ इति वेदान्तरहस्यस्य प्रश्नपूर्वकं ज्ञेयत्वविधानात् ‘नापृष्टः कस्यचिद्ब्रूयात्’ इत्यपृष्टोत्तरस्य प्रत्यादिष्टत्वाच्च प्रश्नमाविष्करोत्यादितः पञ्चश्लोक्या । अथ प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च गुरुनमस्कारं देवतानमस्कारं च विदधाति—

**तपस्स्वाध्यायेति** । तत्र “आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् । आचार्यवान् पुरुषो वेद ” इत्यादिश्रुत्या सदाचार्योपदेशस्यैवातिशयावहत्वात्स्वगुरोराचार्यलक्षणपूर्तिं दर्शयति द्वितीयान्तपदैः । तत्र वेदसंपन्नत्वमाह—**तपःस्वाध्यायनिरतमिति** । तपश्च स्वाध्यायश्च तपःस्वाध्यायौ । अल्पाच्तरं पूर्वमिति तपःशब्दस्य पूर्वनिपातः तपश्चान्द्रायणादि । स्वाध्यायो वेदः । ‘ स्वाध्यायो वेदतपसोः’ इति वैजयन्ती । तयोर्निरतं निरन्तरासक्तम् । आवश्यकत्वादेतदुभयमुक्तम् । तदाह मनुः ‘तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा कल्मषं हन्ति विद्यया ज्ञानमश्नुते ’ इति । यद्वा तपो ज्ञानं तप आलोचन इत्यस्माद्धातोरसुन्प्रत्ययः । श्रुतिश्चात्र भवति “ यस्य ज्ञानमयं तपः ” इति । योग इति यावत् । स्वाध्यायो वेदः तयोर्निरतं ‘स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत् । स्वाध्याययोगसंपत्त्या गमिष्यति परां गतिम् ’ इत्युक्तप्रकारेण सक्तमित्यर्थः । यद्वा तपो वेदः “तपो हि स्वाध्यायः” इतिश्रुतेः । स्वाध्यायो जपः ‘ स्वाध्यायो वेदजपयोः ’ इत्युक्तेः । तत्र निरतम् । “ स्वाध्यायान्मा प्रमदः ” । ‘ वेदमेव जपेन्नित्यम् ’ इत्युक्तरीत्या सक्तमित्यर्थः । यद्वा तपो ब्रह्म “ब्रह्मैतदुपास्स्वैतत्तपः” इतिश्रुतेः । तपःप्रधानः स्वाध्यायस्तपःस्वाध्यायः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । वेदान्त इति यावत् तत्र निरतम् । “स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्” इत्युक्तरीत्याध्ययनाध्यापनादिपरमित्यर्थः । यद्वा तपो व्याकरणम् तथोक्तं वाक्यपदीये ‘आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः । प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः’ इति तदितरेषाम-

ङ्गाद्युपलक्षणं तत्सहितः स्वाध्यायः तपःस्वाध्यायः तत्र निरतं षडङ्गवेदाध्यायिनमित्यर्थः । यद्वा तपः स्वं यस्यासौ तपःस्वः अध्यायो वेदः । इङ् अध्ययने इत्यस्माद्धातोरध्यायन्यायेत्यादिना निपातनात् अत एव "स्वाध्यायोऽध्येतव्यः" इत्यत्र स्वस्य अध्यायः स्वाध्यायः स्वशाखेत्याचार्यैर्व्याख्यातं तत्र निरतोऽध्यायनिरतः तपःस्वश्चासावध्यायनिरतश्च तपःस्वाध्यायनिरतः इति कर्मधारयः तम्। यद्वा तपो ब्रह्म तद्रूपः स्वाध्यायः तपःस्वाध्यायः तस्मिन् निरतं सामगानलोलमित्यर्थः। 'वेदानां सामवेदोऽस्मि' इति भगवता गीतत्वात्।एवं वेदाध्ययनमुक्तम्। अथ 'यदधीतमविज्ञातं निगदेनैव शब्द्यते।अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि' इति केवलाध्ययनस्य निन्दितत्वात्तदर्थज्ञत्वमाह–वाग्विदां वरमिति । वाग्वेदः ' अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ' इति वाक्शब्दस्य वेदे प्रयोगात् । तां विदन्ति जानन्तीति वाग्विदः वेदार्थज्ञाः तेषां मध्ये वरं श्रेष्ठं निर्धारणे षष्ठी । यद्वा वाक् व्याकरणं 'यश्च व्याकुरुते वाचम् । वाग्योगविदुष्यति चापशब्दैः' इत्यादौ व्याकरणपर्यायत्वेन शिष्टैर्व्यवहृतत्वात् । एतदङ्गान्तराणामुपलक्षणं षडङ्गविदामग्रेसरमित्यर्थः । एतेन वेदार्थाभिज्ञत्वमर्थसिद्धम् । यद्वा वाग्विदो यावद्विवक्षितार्थप्रतिपादनक्षमशब्दप्रयोगविदः तेषां वरम् । पूर्वं वेदाध्ययनमुक्तम् । अत्र तदध्यापनम् । यद्वा गोबलीवर्दन्यायेन वाचो वेदव्यतिरिक्तानि शास्त्राणि तद्विदां वरम् । अनेन चतुर्दशविद्यास्थानवेदित्वमुक्तम् । यद्वा भूमविद्योपक्रमे नारदेनात्मनः सर्वविद्याभिज्ञत्वमुक्तम् " ऋग्वेदं भगवोऽध्येऽमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि " इति तदिदमुच्यते–वाग्विदां वरमिति । यद्वा वाक् सरस्वती 'गीर्वाग्वाणी सरस्वती ' इति वचनात्। तया विद्यन्ते लभ्यन्त इति वाग्विदः सरस्वतीपुत्रा मरीच्यादयः। विद्लृ लाभ इत्यस्माद्धातोः कर्मणि क्विप् । भगवद्भक्ततया तेषां वरम्–अनेनाभिजात्यमुक्तम् । तपःस्वाध्यायनिरतमित्यनेन विद्योक्ता । समाहितत्वमाह मुनिपुंगवमिति । तेन "अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमभीप्सेत् " इत्यापस्तम्बोक्तमाचार्यलक्षणं ज्ञापितम् । मुनयो मननशीलाः "मनेरुच्च" इति इन्प्रत्ययः । पुमांश्चासौ गौश्चेति पुंगवः "गोरतद्धितलुकि" इति समासान्तष्टच्प्रत्ययः श्रेष्ठ इत्यर्थः । ' बुधे च पुंगवः श्रेष्ठे वृषभे भिषजां वरे ' इति विश्वः । मुनिषु पुंगवो मुनिपुंगवः तम् । सप्तमीति योगविभागात्पात्रेसमितादिवत्समासः । तपःस्वाध्यायनिरतमित्यनेन वेदार्थस्य श्रवणमुक्तं वाग्विदां वरमित्यनेन मननं मुनिपुंगवमित्यनेन निदिध्यासनम् । यद्वा " तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः " इत्युक्तक्रमेण त्रिभिरेतैः पदैः पाण्डित्यबाल्यमौनान्युक्तानि । नरस्य संबन्धि नारम् "नराच्चेति वक्तव्यम्" इत्यण् । अज्ञानमित्यर्थः । तत् द्यति खण्डयतीति नारदः । दो अवखण्डने इत्यस्माद्धातोः । "आदेच उपदेशेऽशिति" इत्यात्वे सति "आतोऽनुपसर्गे कः" इति कप्रत्ययः । अज्ञाननिवर्तक इत्यर्थः । उक्तं च नारदीये 'गायन्नारायणकथां सदा मायाभयापहाम् । नारदो नाशयन्नेति नृणामज्ञानजं तमः ' इति । यद्वा नारं ज्ञानं तद्ददातीति नारदः । यद्वा नरति सद्गतिं प्रापयतीति नरः परमात्मा । नॄ नय इत्यस्माद्धातोः पचाद्यच् । तदुक्तं भारते–' नरतीति नरः प्रोक्तः परमात्मा सनातनः' इति । स एव नारस्तं ददात्युपदिशतीति नारदस्तम् । एवमाचार्यलक्षणपूर्तिमुक्त्वा अधिकारित्वसंपूर्तिप्रदर्शनाय शिष्यलक्षणमाह–तपस्वीत्यादिना । तपोऽस्यास्तीति तपस्वी "तपःसहस्राभ्यां विनीनी" इतिमत्वर्थीयो विनिप्रत्ययः । भूमादयो मत्वर्थाः । तदुक्तम् ' भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ' इति । प्रशस्ततपस्क इत्यर्थः । तेन " तपसा ब्रह्म विजिज्ञासस्व । स तपोऽतप्यत । स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात्" इतिश्रुतं ब्रह्मज्ञानसाधनं तप उक्तम् । यद्वा तपो वेदो व्याकरणं ज्ञानं च तद्वान् । तपःशब्दानां तन्त्रावृत्त्येकशेषाद्यन्यतमेन अर्थस्मरणे सति एकपदोपात्तकृतिकालादीनामिव अन्वयबोधः सुलभः । तथाचाधीतसाङ्गसशिरस्कवेदोऽधिगताल्पास्थिरफलकेवलकर्मज्ञान इत्युक्तम् । निर्वेदश्च तपः । 'तपस्वी तापसे शोच्ये' इति वैजयन्ती । तेन संजातमोक्षाभिलाष इत्युक्तम् । तादृश एव हि ब्रह्मज्ञानाधिकारी । तपस्वीत्यनेन शमदमादिसंपत्तिरपि सिद्धा । यद्वा तपो न्यासः "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इतिश्रुतेः । न्यासः शरणागतिः प्रणिपातरूपा एवम् 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इत्याद्युक्तानि प्रणिपातपुरःसराणि दर्शितानि । वल्मीकस्यापत्यं वाल्मीकिः "अत इञ्" इतीञ्प्रत्ययः । नन्वसौ कथं वल्मीकापत्यं यतोऽयं भृगुपुत्र एव प्रतीयते।तथा च विष्णुपुराणे 'ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते' इति । अत्रापि उत्तरकाण्डे वक्ष्यति 'भार्गवेणेति संस्कृतौ । भार्गवेण तपस्विना' इति च । अन्यत्र च प्रचेतोपत्यत्वमभिधीयते ' चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत' इति 'वेदः प्राचेतसादासीत्' इति च प्रसिद्धम् । अतः कथमस्य वल्मीकापत्यत्वम् । उच्यते । निश्चलतरतपोविशेषेणास्य वल्मीकावृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतसोऽपत्यत्वं वल्मीकापत्यत्वं च संगच्छते । ननु कथं तत्प्रभवत्वमात्रेण तदपत्यत्वं मैवम्, गोणीपुत्रः कलशीसुत इत्यादिव्यवहारस्य तत्प्रभवेऽपि बहुलमुपलब्धेः । उक्तं च ब्रह्मवैवर्ते 'अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः । वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ' इति । मास्त्वपत्यार्थत्वम् तथापि वाल्मीकिशब्दः साधुरेव गहादिषु पठितत्वात् । यद्वा भृगुवंश्यः कश्चित् प्रचेता नाम तस्यायं पुत्रः ऋक्षो नाम 'चक्रे प्रचेतसः पुत्रः' इति पुत्रत्वाभिधानात् । भार्गवभृगुनन्दनशब्दौ रामे राघवरघुनन्दनशब्दवदुन्नेयौ । वाल्मीकिशब्दः पुत्रत्वोपचारात् । अत एव क्वचिद्वाल्मीकेन महर्षिणा इति संबन्धमात्रेऽण् प्रयुज्यते । सत्स्वपि नामान्तरेषु वाल्मीकिशब्देनाभिधानं ज्ञानाङ्गशमदमाद्युपेतत्वस्फोरणाय। परिपप्रच्छ परि विशेषेण पृष्टवान् । कोऽन्वस्मिन्नित्यादिवक्ष्यमाणमिति शेषः। तप इति भिन्नं पदं वा ब्रह्मवाचि । नारदं ब्रह्म परिपप्रच्छेत्यर्थः । अतो न द्विकर्मकत्वहानिः । उक्तं हि वृत्तिकृता 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासु-

को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् । धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥

जिमथूसुषाम्' इत्यादिना प्रच्छेर्द्विकर्मकत्वम्। परिपप्रच्छेति परोक्षे लिट्। प्रश्नस्य परोक्षत्वं विवक्षितभगवद्गुणानुसंधानकृतवैचित्या- त्सुप्तोऽहं किल विललापेतिवत्। विभक्तिप्रतिरूपकमव्ययं वा। स्वविनयव्यञ्जनाय प्रथमपुरुषनिर्देशो वा 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इतिवत्। स्वस्मिन्नन्यत्वमारोप्य परोक्षनिर्देशो वा। अनेन "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्याथर्वणिकी श्रुतिर्गुरूपसदनविषयोपबृंह्यते।

तथाहि तपस्वीत्यनेन परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादित्यस्यार्थोऽदर्शि। अधीतसाङ्गसशिरस्कवेदोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषो हि तपस्विशब्दार्थो वर्णितः। वाल्मीकिरित्यनेन सम्यक्प्रशान्तचित्ताय शमान्वितायेत्यस्यार्थो दर्शितः। स्वाध्यायनिरतमित्यनेन श्रोत्रियपदार्थ उक्तः "श्रोत्रियंश्छन्दोऽधीते" इति श्रोत्रियशब्दार्थप्रकाशनात्। वाग्विदां वरमित्यनेन विद्वच्छब्दार्थः। मुनिपुंगवमित्यनेन ब्रह्मनिष्ठशब्दार्थः। नारदशब्देन गुरुशब्दार्थः। 'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते' इति तन्निरुक्तिः। परिपप्रच्छेत्यनेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्येतदुपपादितम्। "विधिवदुपसन्नः पप्रच्छ" इति श्रुतेः। अत्र ब्रह्मवाचितपःशब्दप्रयोगेण देवतानमस्काररूपं मङ्गलमाचरितम्। तथोक्तम् अइति भगवतो नारायणस्य प्रथमाभिधानमभिदधता किं नाम मङ्गलं न कृतमिति। 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे मङ्गलार्थाः स्युर्लिपितो गणतोऽपि च' इति। निरन्तरनिरतिशयानन्दरूपं तपो ज्ञानरूपं ब्रह्म स्वाध्याय सुष्ठु ध्यात्वेति वा देवतानमस्कारः गुरुनमस्कारश्च कृतो भवति। कथं तपःसु निरतं नारदमाध्याय परिपप्रच्छेति। यद्वा परि पूजयित्वेत्यर्थः। 'परिः समन्ततो भावव्याप्तिदोषकथासु च। भाषाश्लेषे पूजने च वर्जने वचने शुभे' इतिवचनात्। नारदं संपूज्य पप्रच्छेत्यर्थः। 'पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम्। मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च' इतिवत्। अस्य श्रीरामायणस्य गायत्र्यक्षरसंख्यानुसारेण चतुर्विंशतिसहस्रग्रन्थसङ्ख्यया प्रवृत्तत्वात् प्रथमसहस्रोपक्रमे तकारः प्रयोक्तव्य इति सत्स्वपि ब्रह्मवाचकेषु शब्दान्तरेषु तपःशब्दस्यैव प्रयोगः। प्रबन्धादौ तकारप्रयोगश्चावश्यकः। तस्य वक्तुर्वाचकस्य च सौख्यकरत्वात्। तथोक्तम् 'वस्तुलाभकरो णस्तु तकारः सौख्यदायकः' इति। साहित्यचूडामणौ तु 'तकारो विघ्ननाशकः' इत्युक्तम्। किंच तकारस्य जलं भूतं बृहस्पतिर्देवता। अतः शुभावहोऽनेन प्रबन्धारम्भः। अत एवोक्तं चमत्कारचन्द्रिकायाम् 'वर्णानामुद्भवः पश्चाद्भक्तिः सङ्ख्या ततः परम्। भूतबीजविचारश्च ततो वर्णग्रहा अपि' इत्यारभ्य 'एतत्सर्वमविज्ञाय यदि पद्यं वदेत्कविः। केतकारूढकपिवद्भवेत्कण्टकपीडितः' इति। 'कारणात्पञ्चभूतानामुद्भूता मातृका यतः। अतो भूतात्मका वर्णाः पञ्चपञ्चविभागतः॥ वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धयस्तथा॥ तत्र स्वरेशः सूर्योऽयं कवर्गेशस्तु लोहितः। चवर्गप्रभवः काव्यष्टवर्गोद्भवसंभवः॥ तवर्गोत्थः सुरगुरुः पवर्गोत्थः शनैश्चरः। यवर्गजोऽयं शीतांशुरिति सप्तग्रहाः क्रमात्' इति॥ अत्र तपःस्वा इति यगणः आदिलघुत्वात्। तदुक्तम् 'आदिमध्यावसानेषु यरता यान्ति लाघवम्। भजसा गौरवं यान्ति मनौ तु गुरुलाघवम्' इति। यगणप्रयोगश्चार्थकर इत्युक्तं चमत्कारचन्द्रिकायाम् 'करोत्यर्थानादिलघुर्यगणो वायुदैवतः' इति। ननु तपस्तापः सुतरामाधिः स्वाधिस्तयोरायै निरतमिति ग्रन्थारम्भे अश्लीलवचनमनुचितम्। तदुक्तम् 'अश्लीलं तदमाङ्गल्यं जुगुप्साव्रीडभीकरम्' इति। मैवम्। प्रसिद्धिविशेषेण तपोवेदयोरेव प्रथमतरं बुद्ध्यारोहेणाश्लीलत्वप्रसङ्गाभावात्। यथा भगिनीलिङ्गादिप्रयोगेषु। अत्र सर्वत्र प्रायेण पथ्यावक्त्रं वृत्तम्। तदुक्तं वृत्तरत्नाकरे 'युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्' इति। वृत्तविशेषास्तु तत्र तत्र वक्ष्यन्ते। अत्र वृत्त्यनुप्रासः शब्दालंकारः तकारादीनामावृत्तेः। तदुक्तं काव्यप्रकाशे 'वर्णसाम्यमनुप्रासः' इति। विशेषणानां साभिप्रायत्वात्परिकरो नामार्थालंकारः। उक्तमलंकारसर्वस्वे 'विशेषणानां साभिप्रायत्वे परिकरः' इति। तपःस्वाध्यायनिरतत्वादीनां गुरूपसत्तिहेतुज्ञानानुष्ठानप्रतिपादकत्वात् पदार्थहेतुकं काव्यलिङ्गमलंकारः। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंकृतिः' इतिलक्षणात्। अत्र वाल्मीकिनारदयोः स्वरूपकथनेन शिष्याचार्याभ्यामेवं भवितव्यमिति द्योतनाद् वाक्यगतवस्तुना वस्तुध्वनिः॥ १॥

२ ] ति० टी०—अथ प्रश्नमभिनयति—को न्विति। नुशब्दो वितर्के। सांप्रतं वर्तमानकालेऽस्मिँल्लोके भूलक्षणे को नु गुणवान्। प्रशस्तबहुगुणवानित्यर्थः। भूमप्रशंसादौ मतुप्। अस्यैव प्रपञ्चः कश्च वीर्यवानित्यादि। दिव्यास्त्रबलादिजशक्तिविशेषेण पराभिभवसामर्थ्यं वीर्यं तद्वान्। कश्च श्रौतस्मार्तसकलधर्मरहस्यज्ञः। बह्वीमप्यपकृतिमुपेक्ष्यैकामप्युपकृतिं बह्वीं मन्यत इति कृतज्ञः। सत्यवाक्यः सर्वावस्थास्वपि यथाश्रुतदृष्टतत्त्वार्थवक्ता। दृढव्रतः आपद्यपि धर्माय परिगृहीतव्रतविशेषस्य त्यागरहितः॥ २॥

रा० टी०—प्रश्नाकारमाह—को न्वस्मिन्नित्यादिभिः। अस्मिन् लोके सांप्रतमस्मिन्काले गुणवान् अतिशयसौशील्यादिमान् कोऽस्ति अस्तीत्यध्याह्रियते। यत्र क्रियान्तरं न श्रूयते तत्राऽस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि प्रयुज्यते इति भाष्योक्तेरस्तेः सर्वत्र संबन्धो बोध्यः। तत्र भवन्तीति लटः संज्ञा। वीर्यवान् अतिशयपराक्रमवाँश्च कः। धर्मज्ञः अतिशयधर्मज्ञाता च कः। कृतज्ञः कृतं कथंचिज्जातोपकृतिमेव जानाति स्मरति नानन्तरजाताऽपकृतिगणं जानातीति। कृतज्ञश्च कः वक्ष्यति च 'कथंचिदुपकारेण कृतेनैकेन तुष्यति। न स्मरत्यपकाराणां शत-

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः । विद्वान्कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥**

मप्यात्मवत्तया ' इति । सत्यवाक्यः सत्यं मृषासंसर्गरहितं वाक्यं लीलाभाषादिष्वपि यस्य स च कः । वक्ष्यति च 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ' इति । दृढव्रतः एकपत्न्यादिविषयकदृढव्रतवांश्च कः । तथा वक्ष्यति 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ' इति अस्मिँल्लोके अस्मिन् काले इत्युक्तेः प्रकटीभूतेश्वरेश्वरविषयकोऽयं प्रश्न इति ध्वनितम् । अन्यथा 'अयोध्यां च परित्यज्य पादमेकं न गच्छति' इत्याद्युक्त्या सार्वकालिकरघुनाथस्थितेः प्रसिद्धत्वादस्मिन्काले इत्याद्युक्तेरनर्थकत्वं प्रसज्येत । सर्वत्र किंशब्दसंबन्धेन परिगणितगुणाद्यन्यतमस्यापि रघुनाथादन्यत्रानुपलम्भत्वं बोधितम् । तेन प्रष्टुस्तद्गुणादिषु प्रीत्यतिशयो व्यक्तः ॥ २ ॥

गो० टी०—कथं परिपप्रच्छेत्याकाङ्क्षायां प्रश्नप्रकारं दर्शयति—को न्वित्यादिश्लोकत्रयेण । ' नुः पृच्छायां विकल्पे च ' इत्यमरः । अस्मिन् लोके भूलोके सांप्रतमस्मिन्काले : 'अस्मिन्कालेऽधुनेदानीं संप्रत्येतर्हि सांप्रतम्' इति बाणः । लोकान्तरे विष्णोर्विदितत्वात् । अत्रैव कालान्तरे नृसिंहादेः प्रसिद्धत्वाच्च तद्व्यावृत्त्यर्थमेवमुक्तम् । गुणा अस्य सन्तीति गुणवान् । भूमादयो मत्वर्थाः । अस्मिन् लोके अस्मिन्काले को वा सकलकल्याणगुणसंपन्न इत्यर्थः । एवं सामान्येन गुणसमुदायं पृष्ट्वा विशिष्य तत्तद्गुणाश्रयं पृच्छति कश्च वीर्यवान् इत्यादिना । यद्वा गुण्यते आवर्त्यते पुनः पुनराश्रितैरनुसंधीयत इति गुणः सौशील्यम् । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति विश्वः । सुशीलं हि नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषः तस्याधिक्यं सौशील्यं तद्वान् । सौशील्ये गुणशब्दोऽभियुक्तैः प्रयुक्तः । 'वशी वदान्यो गुणवानृजुः शुचिः ' इति । को वा सौशील्यवानित्यर्थः । सर्वत्र प्रश्ने न्विति किंशब्दोऽपि यत्र न प्रयुक्तस्तत्रानुषञ्जनीयः । एकेनैव किंशब्देनोपपत्तावप्यादरातिशयात् पुनः पुनस्तत्प्रयोगः । प्रदानवदेव तदुक्तमिति न्यायेन प्रतिगुणं गुण्यावृत्त्यभिप्रायेण वा लोके गुणसंबन्धाद्गुण्यतिशयः । इह तु गुणिसंबन्धाद्गुणातिशय इति द्योतनाय गुणिनः प्रथमं निर्देशः । गुणाः सत्यज्ञानेत्युक्तेः । कश्च वीर्यवान् चकार उक्तसमुच्चये । सत्स्वपि विकारहेतुष्वविकृतत्वं वीर्यम् 'औषधं वीर्यवद्'इत्यादौ तथादर्शनात् तद्वान् । धर्मः अलौकिकश्रेयःसाधनं तं सामान्यरूपं विशेषरूपं च जानातीति धर्मज्ञः । चकारोऽनुक्तसमुच्चयार्थः । परिहार्याधर्मज्ञश्चेत्यर्थः । कृतमुपकारं स्वल्पं प्रासङ्गिकमपि बहुतया जानातीति कृतज्ञः अपकारास्मरणं चशब्दार्थः । वक्ष्यति 'न स्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेण कृतेनैकेन तुष्यति' इति । सत्यं कृच्छ्रेष्वप्यनृतशून्यं वाक्यं वचनं यस्य सः सत्यवाक्यः । तथा वक्ष्यति 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन' इति । दृढव्रतः निश्चलसंकल्पः 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः' इति ॥ २ ॥

३ ] ति० टी०—चारित्रेणेति । चरित्रमेव चारित्रम् । स्वार्थिकोऽण् । वृत्तसंपदनेनोच्यते । सर्वभूतेषु सर्वप्राणिषु मध्ये कः पुमान्हितः । ऐहिकामुष्मिकहितवहोऽशत्रुभ्यः । यत्तु सर्वप्राणिषु सापराधिष्वपि हितकरणशील इति व्याचक्षते तत्तु हितयोगे चतुर्थ्यापत्तेरयुक्तम् । विद्वानात्मानात्मसकलपदार्थतत्त्वज्ञः । समर्थो लौकिकव्यवहारे प्रजारञ्जनादौ चातुर्यं सामर्थ्यं तद्वान् । कामाधिकसौन्दर्यवत्त्वेन 'नित्यसुखरूपत्वेन चैकप्रियं केवलप्रियं दुःखासंभिन्नप्रियत्ववद्दर्शनं यस्य सः । यस्त्वेकं प्रति प्रियं दर्शनं यस्येति तदयुक्तम्, सर्वप्रियत्वस्य प्रतिपादनात् । एकोऽद्वितीयः स चासौ प्रियदर्शनश्चेत्यर्थ इति तीर्थः ॥ ३ ॥

रा० टी०—चारित्रेणेति । चारित्रेण नित्यकुलाचारेण युक्तो नित्ययुक्तश्च कः । ' विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इत्यनेन नित्यचारित्रनित्ययुक्तैतद्घटकीभूतनित्यपदलोपो ज्ञातव्यः । अन्यथा क्षणिककुलाचारक्षणिकयुक्तत्वस्य बहूनां प्रसिद्धत्वादेतत्प्रश्नस्य निरर्थकत्वापत्तिः । एतेन प्रश्नविषयीभूतस्य सर्वविलक्षणत्वं बोधितम् । सर्वभूतेष्वपराधयुक्तेष्वपि हितः प्रियकर्ता च कः एतेन परमात्मनो युद्धादिप्रवृत्तिस्तदनुग्रहार्थैवेति प्रश्नकर्तुर्ज्ञानमस्तीति सूचितम् । किंच सर्वाणि भूतानि येभ्यः तानि तेषु ब्रह्मणीत्यर्थः । बहुत्वमादरार्थम् । हितो नियामकत्वेन प्राप्तश्च कः । गत्यर्थहिधातुप्रकृतिकनिष्ठाप्रत्ययान्तो हित इति । विद्वान्सर्वज्ञश्च कः समर्थः अघटितघटनापटीयांश्च कः । एकप्रियदर्शनः एकं प्राकृतभिन्नं प्रियं दर्शनं यस्य प्राकृतभिन्नत्वविशिष्टप्रियदर्शनविशिष्टश्च क इत्यर्थः । किंच एकैः प्रधानैर्ब्रह्मादिभिः प्रियत्वेन दृश्यतेऽसाविति एकप्रियदर्शनः ब्रह्मादिप्रीतिविषयीभूतश्च क इत्यर्थः । किंच एकः सर्वादिभूतः स एव प्रियदर्शनः सर्वादिभूतत्वसमानाधिकरणप्रियदर्शनवांश्च क इत्यर्थः । किंच एकं केवलं प्रियं दर्शनं यस्य नित्यप्रीतिविषयीभूतदर्शनविषयीभूतश्च कइत्यर्थः । किंच एकः साधारणः सरलस्वभाव इत्यर्थः । प्रियं दर्शनं यस्य स प्रियदर्शनः स एव स इति कर्मधारयः । सरलस्वभावत्वसमानाधिकरणप्रीतिविषयीभूतदर्शनविषयीभूतत्ववांश्च क इत्यर्थः । किंच एकः सर्वत्र समबुद्धिः स एव प्रियदर्शनः सर्वत्र समत्वे सति प्रियदर्शनश्च क इत्यर्थः । किंच एके अल्पाः प्रियदर्शना यस्मात् अन्यत्र सर्वत्राल्पप्रियदर्शनत्वबुद्धिसंपादकप्रियदर्शनविषयीभूतश्च क इत्यर्थः । किंच एकप्रियदर्शनः अद्वितीयप्रियदर्शनविषयीभूतश्च क इत्यर्थः । तथा च कोशः ' एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पसंख्यायां च प्रवर्तते ' इति । यत्र चकारन्यूनता तत्र तदावृत्त्यान्वयो बोध्यः ॥ ३ ॥

गो० टी०—चरित्रमाचारः तदेव चारित्रं वायसराक्षसादिवत्स्वार्थेऽण्प्रत्ययः तेन युक्तः सर्वदाप्यनुल्लङ्घितकुलाचार इत्यर्थः । सर्वभूतेषु सर्वप्राणिषु विषये । 'भूतं क्ष्मादौ च जन्तौ च न स्त्रियां गुणसत्त्वयोः' इति बाणः । हितः हितकरः हितशब्दात्तत्करोतीति णिच्

**आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः । कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥**
**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे । महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥**

पश्चाल्लच् णिलोपे पूर्वरूपे च रूपम्। भूतशब्देन स्वपरतारतम्याभाव उक्तः। सर्वशब्देन सापराधेष्वपि हितकरत्वमुक्तम् । वेत्तीति विद्वान् सर्वज्ञाः। "विदेः शतुर्वसुः" इत्यनेन वस्वादेशः । समर्थः सर्वकार्यधुरंधरः । प्रियं दर्शनं यस्यासौ प्रियदर्शनः एकश्चासौ प्रियदर्शनश्च एकप्रियदर्शनः । अयमिव नान्यो लोके प्रियदर्शनोऽस्तीत्यर्थः । यद्वा एकप्रियदर्शनः एकरूपप्रियदर्शनः । लोके हि कस्यचिद्दर्शनं कदाचित्प्रियं भवति कदाचिदप्रियं च भवति । 'तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम्' इति वचनात् । अयं तु न तथा । किंतु 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इत्युक्तरीत्या सदानुभवेऽप्यपूर्ववद्विस्मयमादधात इत्यर्थः। तथैवोत्तरयिष्यति—सदैकप्रियदर्शन इति । 'एके मुख्यान्यकेवलाः' इत्युभयत्राप्यमरः ॥ ३ ॥

४ ] ति० टी०—आत्मवानिति । वशीकृतान्तःकरण इत्यर्थः । जितक्रोधो निन्दाहिंसादिजनकचित्तवृत्तिविशेषरहितः। क्रोधोऽत्र कामादीनामप्युपलक्षणम् । द्युतिः सर्वलोकस्य दिदृक्षाजनको देहकान्तिविशेषस्तद्वान् । अनसूयको विद्यैश्वर्यादितपःसु परौन्नत्यासहनमसूया तद्रहितः । असूयतेः कण्ड्वादियगन्तादुपतापार्थाण्ण्वुल् । संयुगे युद्धकाले जातरोषस्य कस्य रोषाद्देवाश्च देवा अपीन्द्रादयोऽपि अपिना असुराश्च बिभ्यति अतिबलवतोऽस्मानप्यस्य क्रोधः संहरिष्यतीति भयं प्राप्नुवन्तीत्यर्थः। कस्येति संबन्धसामान्ये षष्ठीत्यन्ये। कस्य संयुगे कस्माद्बिभ्यतीति तीर्थः ॥ ४ ॥

रा० टी०—आत्मवानिति । आत्मा कथंचित्स्वसांमुख्यमात्रेण रक्षकत्वरूपः प्रशस्तः स्वभावोऽस्यास्तीत्यात्मवाँश्च कः । किंच आत्मानः जीवधृतिदेहस्वभावपरमात्मानः सन्ति नियम्यत्वेनास्येति । तत्र प्रमाणम् "भीषास्माद्वातः पवते" इत्यादि 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' इत्याद्यागमः । आत्मशब्दस्य जीवादिवाचकत्वे 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरोऽनुसंधेयः। अत्र वर्ष्मशब्देन लक्षणया जीवस्यापि ग्रहणम् । अत एव आत्मा द्विविधो जीवात्मा परमात्मा चेत्यादिग्रन्थाः संगच्छन्ते । जितक्रोधः सापराधेष्वपि क्रोधरहितश्च कः एतेनापराधिभ्यो दण्डदानं तच्छुद्धिहेतुकमिति ध्वनितम् । द्युतिमान् अतिशयप्रकाशवान् सर्वेषां प्रकाशकानां प्रकाशकश्च क इत्यर्थः । "तस्य भासा सर्वमिदं विभाति" इति श्रुतिः । किंच अजितकः अथो द्युतिमानिति पदच्छेदः । अजितः ईश्वरैरपि जेतुमशक्यः कः कृतिर्यस्य सोऽजितकः भावकप्रत्ययान्तयत्नार्थककम्धातुनिष्पन्नः क इति। अत एव अथः सर्वे द्युतिमन्तो यस्मात्तादृशश्च कः । अनसूयकः नास्ति असूया गुणेषु दोषाविष्करणं यस्य यस्मिन्वेत्यनसूयकश्च कः । वैधिके कपि "आपोऽन्यतरस्याम्" इति ह्रस्वः। असूया तु 'दोषारोपो गुणेष्वपि' इत्यमरः। किंच अनिति पालयति सर्वमिति अनो विष्णुः पचाद्यच् तत्र सुः प्रेरणा यस्य सोऽनसुः प्रेरणार्थकसुधातोर्भावक्विबन्तः सूरिति उपलक्षणतया शिवब्रह्मविष्णुप्रेरक इत्यर्थः । उः शंभुः यः सर्वत्र प्राप्तिमान् विष्णुः याधातुप्रकृतिकघञर्थकप्रत्ययान्तप्रकृतिकार्शआद्यजन्तो य इति । 'यकारस्तु प्रजापतिः' इत्यभिधानाद् यो ब्रह्मा च तयोरेकशेषे याविति ततः उश्च यौ च उयाः शंभुविष्णुब्रह्माणस्तेषां कं सुखं यस्माद् स उयकः 'कं सुखेऽपि प्रकीर्तितम्' इतिकोशः । शंभुविष्ण्वादिभ्योऽपि सुखदाता अनसुश्चासौ उयकश्च अनसूयकश्च कः जातरोषस्य कृपया शिक्षार्थं स्वीकृतकोपाभासस्य कस्य संयुगे संग्रामे देवाः चकारादन्येऽप्यसुरादयो बिभ्यति भयं प्राप्नुवन्तीत्यर्थः । कस्य संयुगे इत्यन्वयात्र किंशब्दाद्भीत्रार्थानामित्यपादानमूलकपञ्चमीप्रसक्तिः । कस्य बिभ्यतीत्यन्वये तु अपादानत्वाविवक्षया तदप्रसक्तिः संबन्धसामान्यविवक्षया च षष्ठी ॥ ४ ॥

गो० टी०—आत्मवानिति । आत्मवान् धैर्यवान् 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इत्यमरः । अप्रकम्प्यधैर्य इत्यर्थः । जितक्रोधः विधेयकोपः । दण्ड्यार्हेष्वेवाहितकोप इत्यर्थः। 'क्रोधमाहारयत्तीव्रम्' इति हि वक्ष्यति । द्युतिमान्कान्तिमान् 'रूपं संहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनवासिनः' इति हि वक्ष्यति । गुणेषु दोषाविष्करणमसूया । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । अविद्यमानासूया यस्यासावनसूयकः ।"शेषाद्विभाषा" इति कपि "आपोऽन्यतरस्याम्" इति ह्रस्वः।यद्वा अनसूयकः असुञ् कण्ड्वादौ पठितः । तस्मात् "कण्ड्वादिभ्यो यक्"इतियक्प्रत्ययः "अकृत्सार्वधातुकयोः" इति दीर्घः। ततो "निन्दहिंस—" इत्यादिना वुञ् स न भवतीत्यनसूयकः । देवाश्चेति चकारेणासुरादयः समुच्चीयन्ते । जातरोषस्य कस्य संयुगे देवादयः सर्वे बिभ्यतीत्यन्वयः । अतो न "भीत्रार्थानाम्" इति किंशब्दात्पञ्चमी । शत्रुविषयः कोपो मित्राणामपि भयमावहतीत्यर्थः । यद्वा चकारोऽप्यर्थः । अनुकूला अपि बिभ्यति किं पुनः प्रतिकूला इत्यर्थः । यद्वा संयुगे जातरोषस्य कस्य बिभ्यतीत्येवान्वयः । "शेषे षष्ठी" । 'संज्ञापूर्वको विधिरनित्यः' इत्यपादानसंज्ञापूर्वकपञ्चम्यभावः । अत्र श्लोकत्रये समृद्धिमद्वस्तुवर्णनादुदात्तालंकारः ॥ ४ ॥

५ ] ति० टी०—एतदित्युक्तगुणसामान्यापेक्षया नपुंसकम् । एतद्विधपुरुषगुणजातं कस्यास्तीति श्रोतुमहमिच्छामि । उक्तगुणसामग्र्यस्यैकत्र दुर्लभत्वात्तादृशपुरुषविशेषज्ञाने मे परं सर्वस्मादपि कौतुकान्तरादुत्कटं कौतुकं वर्तते । नन्वेवंविधनरो मयापि दुर्ज्ञेयो नेत्याह—हि यतो महर्षे अपरोक्षीकृताशेषार्थ ! त्वमेवंविधमुक्तगुणवन्तं नरं दिव्यपुरुषं ज्ञातुं समर्थोऽसि सर्वलोकप्रसिद्धसामर्थ्योऽसि । तस्मात्त्वत्त एव श्रोतुमिच्छामीति पूर्वेण संबन्धः ॥ ५ ॥

रा० टी०—स्वकृतप्रश्नोत्तरस्य द्रुतं शुश्रूषया ऋषिं प्रोत्साहयन्नाह—एतदित्यादिना । हे महर्षे ऋषिश्रेष्ठ ! यतो मे

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः । श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥
बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः । मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥

परं कौतूहलमाश्चर्यमस्ति अतो भवतः एतन्मत्प्रश्नविषयीभूततत्त्वमहं श्रोतुमिच्छामि यत एवंविधं नरमीश्वरनियन्तृदिव्यपुरुषं ज्ञातुं बोधयितुं त्वं समर्थोऽसि अन्तर्भावितणिजर्थः । परं कौतूहलं हि मे इत्युक्त्या "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिबोधितवाङ्मनसगोचरातीतप्राकट्यं कथमिति हेतुर्व्यक्तः । तेन तद्वस्तुनो दुर्लभत्वं बोधितम् ॥ ५ ॥

गो० टी०—अथायं प्रश्नो विजिगीषामूलमिति नारदो मन्येतापीतिमन्वानः स्वप्रश्नो जिज्ञासाहेतुक इति दर्शयन् प्रश्नमुपसंहरति—एतदिति । एतत्पूर्वोक्तगुणाश्रयभूतं वस्तु अहं जिज्ञासुः न विजिगीषुः श्रोतुं न तु क्षेप्तुमिच्छामि न तु ब्रूहि इति निर्बध्नामि अहं तावदिच्छामि मयि भवतः प्रसादोऽस्ति चेद्वक्तुमर्हसीति भावः । तत्र हेतुमाह—परमिति । हिर्हेतौ 'हिर्हेतावववधारणे' इति बाणः । यस्मात्कारणान्मे परमुत्कृष्टं कौतूहलं विस्मयोऽस्ति तस्मादिच्छामि । यद्वा हिः प्रसिद्धौ मुखविकासाद्यनुभावैर्मम हर्षस्तव स्पष्ट इत्यर्थः । स्वप्रश्नोत्तरदानदेशिकालाभानिर्विण्णः संप्रति भवद्दर्शनेन संजाताभिलाषोऽस्मि ब्रूहि मत्पृष्टमिति भावः । आचार्यस्य ज्ञानवत्तामनुमाय शिष्येणोपसत्तिः क्रियते इतिन्यायेन नारदस्य प्रष्टव्यविषयज्ञानसंभावनामाह—महर्ष इति । ऋषिः ज्ञानस्य पारं गन्ता । ऋष्गताविरयस्माद्धातोः "इगुपधात्कित्" इतीन् । गत्यर्थो ज्ञानार्थः । महांश्चासौ ऋषिश्च महर्षिः "आन्महतः समानाधिकरणजातीययोः" इत्यात्वम् । हेतुगर्भविशेषणं महर्षित्वात्त्वमेवंविधं नरं पुरुषं ज्ञातुमर्हसि ब्रह्मणः सकाशाद्विदितसकलविशेषस्त्वं कथं मे जिज्ञासोर्न वदेरिति भावः । अत्र पूर्वार्धे काव्यलिङ्गमलंकारः उत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वात् 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंकृतिः' इतिलक्षणात् । उत्तरार्धे परिकर इति अनयोः संसृष्टिः । अन्ते चास्येतिकरणं बोध्यम् इति परिपप्रच्छेति संबन्धः ॥ ५ ॥

६ ] ति० टी०—श्रुत्वेति । एतदुक्तप्रश्नजातम् । त्रिलोकज्ञः भूर्भुवःस्वर्लोकलक्षणांस्त्र्यवयवलोकांस्तत्रत्यवृत्तान्तं जानातीत्यर्थः । एवं च द्विगुत्वाभावान्न ङीप् । नारदो वाल्मीकेरेतद्वचः श्रुत्वा श्रूयतामिति चामन्त्र्यैकाग्र्यसिद्धयेऽभिमुखीकृत्य स्वगतस्यार्थस्य चिरं प्रतिपिपादयिषितस्य जिज्ञासुलाभेन प्रहृष्टो भूत्वा वक्ष्यमाणं वाक्यमब्रवीत् ॥ ६ ॥

रा० टी०—उत्तरं वर्णयितुं वृत्तमाह—श्रुत्वेत्यादिना । त्रिलोकज्ञः त्रिषु ब्रह्मविष्णुमहेश्वरेषु लोको दृष्टिर्यस्य स त्रिलोकः सर्जनाद्यर्थं तत्तत्काले तत्तदाज्ञापकसाकेताधीश इत्यर्थः । तज्जानातीति त्रिलोकज्ञो नारदो वाल्मीकेरेतदुक्तं वचः श्रुत्वा चाभित्यविहारिसाकेताधीशमनुसंधाय तं प्रश्नकर्तारमामन्त्र्य प्रश्नस्य च हृष्टः अतिहर्षविशिष्टः सन् श्रूयतामिति वाक्यमब्रवीत् । तत्तदाज्ञापक इत्यनेन साकेताधीशस्य त्रिगुणातीतत्वं ध्वनितम् । तज्जानातीत्यनेन ऋषेर्विज्ञानिश्रेष्ठत्वं व्यक्तम् । प्रहृष्ट इत्यनेन एतादृक्प्रश्नकर्तृशिष्यः परमात्मातिकृपया लभ्यत इत्यतीव भाग्यवत्ता ममेति हेतुर्ध्वनितः । तेन नासंवत्सरवासिने प्रब्रूयादिति निषेधस्यानवसरः सूचितः । अनुसंधाय इत्यनेन तद्वस्तुनो दुर्बोधत्वं बोधितम् ॥ ६ ॥

गो० टी०—एवं "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्युक्तं गुरूपसदनविधिमुपबृंह्य "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्युक्तं प्रवचनविधिमुपबृंहयति—श्रुत्वेत्यादिना । तत्र "नासंवत्सरवासिने प्रब्रूयात्" इतिनियमस्य ज्येष्ठपुत्रव्यतिरिक्तविषयात् वाल्मीकेश्च भृगुपुत्रतया भ्रातृपुत्रत्वात् शुश्रूषानिरपेक्षं प्रीत्योपदिदेशेत्याह—श्रुत्वा चेति । त्रयाणां लोकानां समाहारस्त्रिलोकं पात्रादित्वान्न ङीप् । यद्वा त्रित्वविशिष्टो लोकस्त्रिलोकः । नवरसरुचिरामित्यत्र काव्यप्रकाशे तथैव व्याख्यानात् । यद्वा त्रयो लोका यस्मिन् तत्त्रिलोकमिति ब्रह्माण्डमुच्यते तज्जानातीति त्रिलोकज्ञः । भूर्भुवःस्वरिति त्रैलोक्यम् । यद्वा विष्णुपुराणोक्तरीत्या कृतकमकृतकं कृतकाकृतकमिति त्रयो लोकाः । महर्लोकपर्यन्ताः कृतकाः । जनोलोकः कृतकाकृतकः । सत्यलोकोऽकृतक इति । यद्वा लोका जनाः । 'लोकस्तु भुवने जने' इत्यमरः । बद्धमुक्तनित्यमुक्तास्त्रयो लोकाः । नारदः ब्रह्मपुत्रतया तज्ज्ञानार्हं एतत्पूर्वोक्तरीत्या व्यङ्ग्यार्थगर्भं वाल्मीकेः स्वाभिमतस्य पुत्रस्य वचः परिपूर्णार्थं वाक्यं श्रुत्वा निशम्य चकारेण तदूहित्वा चेत्यर्थः । प्रहृष्टः स्वेनोपदिदिक्षितस्यैव पृष्टत्वेन संतुष्टः शतकोटिप्रविस्तररामायणे स्वावगतस्यैव अनेन पृष्टत्वात् रामगुणस्मरणामृतपानलाभादपूर्वशिष्यलाभाद्वा 'सोऽहं मन्त्रविदेवास्मि नात्मवित्' इत्युक्तरीत्या सनत्कुमारं प्रति स्वस्योपसर्पणस्मारकत्वाद्वा प्रहृष्टः सन् । कर्तरि क्तः । रामगुणानुसंधानजनितं निजवैचित्र्यं व्याजेन परिहर्तुं श्रूयतामित्यामन्त्र्याभिमुखीकृत्य वाक्यमुत्तररूपमब्रवीत् व्यक्तमुक्तवान् ॥ ६ ॥

७ ] ति० टी०—बहव इति । ये बहवो गुणास्त्वया कीर्तितास्त एकत्र प्राकृतपुरुषमात्रे दुर्लभा एव । चः पादपूरणे । अथापि हे मुने ! यस्तैर्युक्तस्तं बुद्ध्वा स्मृत्वाहं वक्ष्यामि तादृशो नरः श्रूयताम् । प्राप्तकाले लोट् । तस्य श्रवणं ते प्राप्तकालमित्यर्थः ॥ ७ ॥

रा० टी०—तद्वाक्यमेवाह—बहव इत्यादिना । ये बहवो गुणास्त्वया कीर्तिताः पृष्टाः । चादपृष्टा अपि प्राकृतविलक्षणा एतज्जातीयका गुणास्ते दुर्लभा एव । ईश्वरनियन्तृपरमपुरुषाद्भिन्ने नैव सन्तीत्यर्थः । अत्र एकघटसत्त्वेऽपि घटान्तराभावतात्पर्येण घटो नास्तीत्यनुभवाभावादभावीयप्रतियोगिताया सामान्यधर्मावच्छिन्नत्वनियमः । तेन गुणान्यतमस्याप्यभावः सूचितः । एकसत्त्वेऽपि द्वयं नास्तीति न्यायस्य तु नात्रावसरः

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः। नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ ८ ॥

स्तस्य द्विल्वादिवाचकोपात्तविषयत्वात्। यदि च ये गुणास्त्वया कीर्तितास्ते बहवोऽन्यत्र न सन्तीत्यन्वयस्तदान्यत्रापि कचित्केचन सन्तीति प्रतीयते। पूर्वकल्पेऽपि यदि जसुपात्तसंख्याया विवक्षा तदा सोऽप्युत्तरेण सम एवेति दिक्। अतो बुद्ध्वा ईश्वरनियन्तृदिव्यपुरुषं विचार्य अहं वक्ष्यामीति तैर्भवत्पृष्टापृष्टान्यावृत्तिप्राकृतविलक्षणगुणैर्युक्तो नरः एकत्वविशिष्टः प्राकृतविलक्षणपुरुषस्त्वया श्रूयताम्। बुद्ध्वा वक्ष्यामीत्यनेन पुनः पुनर्विचारादेव तद्रम्तु ऽभ्यत इति सूचितम् ॥ ७ ॥

गो० टी०—वक्ष्यमाणस्यासदुत्तरत्वपरिहारायात्मनो वाल्मीकेराशयाभिज्ञत्वमाह—बहव इति। यद्वा वेदान्तोदितगुणानां विष्णोरन्यत्रासंभवात्तेषां पुरुषशब्दवाच्यत्वासंभवात्तुर्मुखसंप्रदायाच्च विष्णावेव परतत्त्वतां परिशेषयन्नाह—बहव इति। बहवो विपुलाः अनेकगुणवितनिमूलभूता इत्यर्थः। अनेनापृष्टानामपि वक्ष्यमाणानां गुणानां निदानमुपदर्शितम्। यद्वा बहवः अपरिच्छिन्ना इत्यर्थः। श्रूयते हि अपरिच्छिन्नत्वं गुणानाम्। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति। अत्रानन्दस्यैकस्यापरिच्छिन्नत्वोक्तिरितरेषामप्यपरिच्छिन्नत्वप्रदर्शनार्था। उक्तं हि यामुनाचार्यैः "उपर्युपर्यब्जभुवापि पूरुषान्" इत्यादिना। दुर्लभाः परमपुरुषादन्यत्रासंभाविताः अन्येषां न ब्रह्मा नेशान इत्यादिनाऽसंभाव्यत्वादिवचनादिति भावः। अनेन प्रश्नस्य देवताविशेषनिर्धारणपरत्वमात्मनावगतमिति व्यञ्जितम्। चकार उक्तसमुच्चयार्थः अनुक्तसमुच्चयार्थो वा। तेन स्वाभाविकानवधिकातिशयाऽसंख्येयकल्याणरूपा इत्युक्तम्। एवकार इतरत्र सर्वात्मना असंभावितत्वमभिव्यनक्ति। य इति वेदान्तप्रसिद्धिरुच्यते। गुणाः वीर्यादयः कीर्तिता इत्यनेन गुणानां प्रश्नकालेऽपि भोग्यतातिशयः सूच्यते। तैर्युक्तो न तु कल्पित इति निर्गुणवादनिरासः। नरः पुरुषः। 'पुरुषाः पूरुषा नराः' इतिनिघण्टुः। "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "पुरुषः पुण्डरीकाक्ष इतिश्रुतिस्मृत्यनुगतः पुरुषशब्दोऽनेन प्रत्यभिज्ञाप्यते। श्रूयतां न तु यथाकथंचित्परिकल्प्यतां श्रृण्वित्यभिधानाद्भिन्नयोक्तिरियं तात्कालिकं किंचित्प्रकल्प्यते इति भ्रमं वारयति अहं बुद्ध्वा वक्ष्यामीति मत्पितुर्ब्रह्मणः सकाशाच्छतकोटिप्रविस्तररामायणमुखेन विदित्वा वक्ष्यामि। अनेन संप्रदायाभिज्ञत्वमात्मनो दर्शितम्। यद्वा रामगुणानुसंधानवैचित्र्येण न मे किंचित्प्रतिभाति क्षणाद् बुद्ध्वा वक्ष्यामीत्यर्थः। अतो मध्ये वाक्यान्तरमलंकाराय अन्यथा वाक्यगर्भितमिति काव्यदोषः स्यात्। अहं वक्ष्यामि अहं भूत्वा वक्ष्यामि नेदानीं नारदोऽस्मि रामगुणश्रवणशिथिलत्वात्। रामगुणमग्नोऽयं नदीप्रवाहमग्न इव अवलम्बनयष्टिमपेक्षते हे मुने इति। यद्वा प्रश्नकाले समवधानविशेषमालक्ष्य श्लाघते मुने इति। अथ क्षणात्संधुक्षितो नारदो वाक्यशेषं पूरयति तैरिति। नर इत्यनेन परतत्त्वनिर्धारणं प्रश्नफलितार्थं द्योतयति। बुद्ध्वा इत्यनेन श्रुतिस्थतत्तच्छब्दार्थो विवृतः ॥ ७ ॥

८] ति० टी०—इक्ष्वाकिवति। इक्ष्वाकुवंशात्प्रभव आविर्भावो यस्य स तथा। रामो नाम राम इति नाम्ना प्रसिद्धो जनैश्च श्रुतोऽस्ति। तस्मिन्नेवैकत्र सर्वे त्वत्पृष्टा गुणाः, अन्ये च गुणा इति शेषः। तच्चेदं यौगिकं नाम। रमन्ते योगिनोऽस्मिन् यद्वा रमयति स्वकानिति योगस्य प्रदर्शनात्। तत्रान्त्ये नारकपूरुषादिवत् "अन्येषामपि दृश्यते" इति दीर्घः। तानेव गुणानाह नियतात्मा निगृहीतान्तःकरणः। वीर्यं व्याख्यातम्। द्युतिः कान्तिः। आपत्संपदोरविकृतिंश्रित्तस्य धृतिस्तद्वान्। वशी जिताशेषबहिरिन्द्रियः ॥ ८ ॥

रा० टी०—रघुनाथस्यैव पृष्टापृष्टतद्गुणाश्रयत्वं बोधयन्नाह—इक्ष्वाकुवंशेत्यादिना। इक्ष्वाकुवंशप्रभवः इक्ष्वाकुवंशे एव प्रभवः स्वपरिकराज्ञापनपूर्वकं प्राकट्यं यस्य सः। नियतात्मा नितरां यतः प्रयत्नं प्राप्त आत्मा ईश्वरो यस्मात्सः। किंच नियताः तत्तत्कार्ये नियमिताः आत्मानो जीवव्यक्तिदेहस्वभावपरमात्मानो येन सः। अत एव महावीर्यः महदीश्वरवर्तिवीर्यादप्यधिकं वीर्यं यस्य सः। अत एव द्युतिमान् ईश्वरः प्रकाशकर्ता। अत एव धृतिमान्सर्वाश्रयः। किंच धृतिः ईश्वरावतारधारणप्रेरणा तद्वान् अन्तर्भावितणिजर्थः। अत एव वशी साक्षात्स्वनियम्येश्वरद्वारा च सर्ववशकर्ता। अत एव जनैरस्मदादिभिर्नित्यं श्रुतः श्रूयमाणो नाम प्रसिद्धः रामोऽस्ति। किंच नामजनैः "नामरूपे व्याकरवाणि" इति श्रुतिबोधितनामरूपजनकैः परब्रह्मणा श्रुतः। स्वप्रकटितवेदवाक्यैर्नित्यं श्रूयत इत्यर्थः। बहुत्वमादरार्थम्। नाम इतिरूपस्याप्युपलक्षकम्। परब्रह्मणा नित्यं श्रूयत इत्युक्तेः परब्रह्मोपास्यत्वं रघुनाथस्य सूचितम्। तेन रघुनाथगुणानामीश्वरमोहकत्वं व्यक्तम्। रामपदार्थस्तु रेण रामवाचकमहामन्त्ररूपरकारोच्चारणेन अमति आश्रितहृदये प्राप्नोतीति रामः। एतेन सौशील्यादिगुणो व्यक्तः। इदं गुणवान्क इत्यस्योत्तरम्। किंच रेण रकारोपलक्षितपरशुरामादिना अम्यते सेवार्थं गम्यते असाविति रामः। परशुरामादि सेव्य इत्यर्थः। तेनातिशयपराक्रमवत्त्वं सूचितम्। इदं वीर्यवान्क इत्यस्योत्तरम्। किंच रो दानस्य अमः इयत्ताभावो यस्य स रामः। अपरिमितदातेत्यर्थः। तेनातिशयधर्मज्ञातृत्वं बोधितम्। इदं धर्मज्ञः क इत्यस्योत्तरम्। किंच रमयति अभिरमयति स्वाश्रितत्वसमानाधिकरणापकारित्वविशिष्टमपीति रामः "जनीजृष्क्नसुरञ्जोऽमन्ताश्च" इत्यत्र "वा चित्तविरागे" इत्यतो वेत्यनुवृत्तेर्मित्संज्ञाया वैकल्पिकत्वाद्ध्रस्वत्वविरहः। रम एव राम इति प्रज्ञाद्यणन्तो वा। एतेन कृतज्ञत्वं व्यक्तम्। इदं कृतज्ञः क इत्यस्योत्तरम्। किंच 'सकृदेव प्रपन्नाय। अप्यहं जीवितं जह्याम्' इत्यादिस्मृत्यां रमन्ते कर्मभक्तिज्ञानयोगिनो यस्मिन्स रामः। एतेन सत्यवाक्यत्वं सूचितम्। इदं सत्यवाक्यः क इत्यस्योत्तरम्। किंच राः दानमेव मा लक्ष्मीर्यस्य स रामः अनिवृत्तदातृत्ववानित्यर्थः। एतेन दृढव्रतत्वं सूचितम्। इदं दृढव्रतः क इत्यस्योत्तरम्।

किंच राकारवाच्यां पृथिवीममति स्वीयपालनार्थं समये प्राप्नोतीति रामः। एतेन नित्यं नित्यकुलाचारयुक्तत्वं व्यञ्जितम्। इदं चारित्रेण च को युक्त इत्यस्योत्तरम्। किंच रयुक्तानां स्वस्वैश्वर्यविशिष्टानां विष्णुब्रह्मरुद्राणाममः पालनाद्यर्थं यथालोकं गमनं यस्मात्स रामः। विष्ण्वादिप्रेरक इत्यर्थः। एतेन सर्वभूतहितत्वं ब्रह्मणि नियामकत्वेन प्राप्तत्वं च द्योतितम्। इदं सर्वभूतेषु को हित इत्यस्योत्तरम्। किंच रं वह्निसूर्यादितेजः अमति सर्वलोकहितार्थं प्रकाशकत्वेन प्राप्नोतीति रामः प्रकाशकानां प्रकाशक इत्यर्थः। अत्रार्थे "तस्य भासा सर्वमिदं विभाति" इति श्रुतिरनुग्राहिका। अत एव 'सूर्यस्यापि भवेत्सूर्यः' इत्याद्यप्युक्तम्। एतेन सर्वज्ञत्वं व्यक्तम्। इदं सर्वज्ञः क इत्यस्योत्तरम्। किंच रः रेफः नित्यमुच्चार्यमाणत्वेनास्यास्तीति रः शिवः स च अश्च आश्च राः हरहरिब्रह्माणः तैरम्यते काले सेवनार्थं गम्यते इति रामः। एतेनाघटितघटनापटीयस्त्वं सूचितम्। इदं समर्थः क इत्यस्योत्तरम्। किंच रेण स्वस्वैश्वर्येण युक्तौ यौ अश्च आश्च औ विष्णुब्रह्माणौ ताभ्यां तदुपलक्षिताशिवेन च अम्यते मनसा सदैव प्राप्यत इति रामः। वस्तुतस्तु दीर्घाकारः शंभोरपि वाचक इति नोपलक्षणप्रयोजनम्। एतेन विष्ण्वादिप्रियदर्शनत्वं व्यञ्जितम्। तेन यदि विष्ण्वादिप्रियदर्शनत्वं तर्हि अन्याप्रियदर्शनत्वं किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः। इदमेकप्रियदर्शनः क इत्यस्योत्तरम्। किंच राम् राक्षसत्वमपि अमयति स्वसांमुख्यमात्रेण दूरीकरोतीति रामः। एतेन स्वसांमुख्यमात्रेण रक्षकत्वं जीवादिनियामकत्वं च व्यक्तम्। इदमात्मवान् क इत्यस्योत्तरम्। किंच रौ भूमिराजानाविव अम्यते क्षमया अनवगाह्यहृदयत्वेन च प्रतीयते असाविति रामः। एतेन जितक्रोधत्वम् अजितक्रत्वं च व्यक्तम्। इदं जितक्रोधः कः अजितक्रः क इत्यनयोरुत्तरम्। किंच रस्य वाच्यो योऽमः न मीयते देशकालवस्तुभिः परिच्छिद्यते असाविति रामः। देशकालवस्तुपरिच्छेदशून्यप्रकाशवानित्यर्थः। एतेन द्युतिमत्त्वमधोद्युतिमत्त्वं च व्यक्तम्। इदं द्युतिमान् अधोद्युतिमान् क इत्यस्योत्तरम्। किंच रस्य धनस्य अमः अनियन्ता यस्य स रामः अपरिमितैश्वर्य इत्यर्थः। एतेन विष्ण्वाद्यैश्वर्यमेतदायत्तमेवेति ध्वनितम्। तेन विष्ण्वादिसुखदातृत्वं विष्ण्वादिप्रेरकत्वमसूयाराहित्यं च ध्वनितम्। इदमनसूयकः क इत्यस्योत्तरम्। किंच राणि देवादिराजादिहृदयानि अमयति कोपाभाससमये प्रकम्पयतीति रामः। एतेन देवादिभयहेतुत्वं ध्वनितम्। इदं कस्य बिभ्यति देवाश्चेत्यस्योत्तरम्। पृष्टषोडशसङ्ख्याकगुणानामुत्तरं षोडशसंख्याकरामपदार्थैर्बोधयित्वा अपृष्टगुणानपि कांश्चिद्बोधयन्नर्थान्तरत्रयमाह। किंच रैरिन्द्रियैः अ अमः न प्राप्तिरस्येति रामः वाङ्मनसगोचरातीत इत्यर्थः। वाङ्मनसगोचरातीतत्वोक्त्या वेदतात्पर्यविषयीभूतत्वं रघुनाथस्य व्यक्तम्। तेन तत्कृपयैव स लभ्यत इति सूचितम्। तथा च श्रुतिः "यमेवैष वृणुते तेन लभ्यः" इति। तेन तस्य कर्मालभ्यत्वं ध्वनितम्। तत्रार्थे श्रुतिः "न कर्मणा न प्रजया धनेन" इत्यादिः। किंच रावाच्याया: पृथिव्याः अमः प्राप्तिर्यस्याः सा रामा सीता सास्ति नित्यमस्येति रामः नित्यं सीतासंयुक्त इत्यर्थः। एतेन सीतारामयोः प्राकृतविलक्षणदेहाश्रयत्वं सूचितम्। तेन तस्य संयुक्तोपास्यत्वं व्यक्तम्। किंच रैर्महाराजाधिराजैः अम्यते प्राकट्यसमये सेवार्थं गम्यत इति रामः। तेन सर्वलोकस्वामित्वं व्यक्तम्। तेन श्रेयस्कामैः राम एवाश्रयणीय इत्यादेयं वस्तु व्यक्तमिति दिक्। अत्रापरिमितवाचकामशब्दस्तु माधातुप्रकृतिककप्रत्ययान्तेन नञ्समासात्सिद्धः। रकारस्य रामादिवाचकत्वे 'रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च। इन्द्रिये धनरोधे च भूपे रश्च प्रकीर्तितः' इत्येकाक्षरः प्रमाणम्। अकाराकारयोर्विष्णुब्रह्मवाचकत्वे 'अकारो वासुदेवः स्यादाकारस्तु पितामहः' इत्यादिना स एव। राशब्दस्य राक्षसवाचकत्वे "स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः। राक्षसा येन मरणं यान्ति" इत्यादिरामतापिन्युक्तश्रुतिः प्रमाणम्। 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इत्यनेन नित्यं श्रुत इत्येतद्घटकीभूतनित्यशब्दलोपः। यद्यपि पृष्टापृष्टगुणा रामपदेनैव बोधितास्तथापि स्पष्टतस्तत्तद्गुणप्रतिपत्त्यर्थं विशेषणान्तरोपादानम्। तत्र इक्ष्वाकुवंशप्रभव इत्यनेन चारित्रेण च को युक्त इत्यस्योत्तरम्। एवं यथासंभवमूह्यम् ॥ ८ ॥

गो० टी०–अथ वेदान्तोदितगुणानां रामे प्रदर्शनमुखेन रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परं तत्त्वमिति दर्शयति–इक्ष्वाकुवंशप्रभव इत्यादिना सर्गशेषेण। तत्र वेदान्तोदितगुणगणानां निधी रामत्वेनावतीर्णो विष्णुरेवेति महावाक्यार्थः। 'इक्ष्वाकुवंश' इत्यारभ्य 'सत्ये धर्म इवापरः' इत्यन्ता सार्धैकादशश्लोक्येकान्वया। इक्ष्वाकुर्नाम वैवस्वतमनोर्ज्येष्ठः पुत्रः तस्य वंशः पुत्रपौत्रादिपरंपरा। प्रभवत्यस्मादिति प्रभवः प्रादुर्भावस्थानम्। इक्ष्वाकुवंशः प्रभवो यस्य सः इक्ष्वाकुवंशप्रभवः। जनकादिमहाकुलेषु विद्यमानेषु कुतोऽत्रैव भगवानवतीर्ण इत्यपेक्षायामिक्ष्वाकुपदं प्रयुक्तम्। इक्ष्वाकुर्हि चिरं हरिमाराध्य तन्मूर्तिविशेषं नारायणमलभतेति पौराणिकी गाथा। अतस्तत्पक्षपातेन तद्वंशेऽवतीर्ण इति सूचयितुमिक्ष्वाकुपदम्। वंशेत्यनेन गुणवान् क इति पृष्टं सौशील्यमुक्तम्। रमयति सर्वान् गुणैरिति रामः 'रामो रमयतां वरः' इत्यार्षनिर्वचनबलात् कर्तर्यपि कारके घञ् वर्ण्यते। यद्वा रमन्तेऽस्मिन्सर्वे जना गुणैरिति रामः "अकर्तरि च कारके संज्ञायाम्" इति घञ्। तथा चागस्त्यसंहितायामुक्तम् 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते' इति। नामेति प्रसिद्धौ। चित्रकूटवासिना त्वया विदितो हीत्यर्थः। न केवलं भवता पामरैरपि विदित इत्याह–जनैः श्रुत इति। श्रुतः अवधृतः। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। ताटकाताटकेयवधविश्वामित्राध्वरत्राणाहल्याशापविमोक्षहरधनुर्भङ्गपरशुरामनिग्रहसप्ततालवेधवालिवधसिन्धुबन्धमूलबलनिबर्हणादिभिरवधारितनारायणभाव इत्यर्थः। य एवंभूतः स एव नियतात्मा स एव महावीर्य इत्येवं प्रतिपदं वक्ष्यमाणं तत्पदमनुषज्यते। रामरूपेणावतीर्णो विष्णुरेव वेदान्तोदिततत्तद्गुणक इति सर्वत्र तात्पर्यार्थः।

बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः । विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥
महोरस्को महेष्वासो गूढजत्रुररिन्दमः । आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १० ॥

आदौ स्वरूपनिरूपकधर्मानाह—नियतात्मेत्यादिना । नियतात्मा नियतस्वभावः निर्विकार इति यावत् । "नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इत्यादिश्रुतेः । महावीर्यः अचिन्त्यविविधविचित्रशक्तिकः । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इतिश्रुतेः । द्युतिमान् स्वाभाविकप्रकाशवान् । स्वयंप्रकाशः ज्ञानस्वरूप इति यावत् । "विज्ञानघन एव प्रज्ञानघनः" इतिश्रुतेः । धृतिमान् निरतिशयानन्दः । 'धृतिस्तु तुष्टिसंतोष' इति वैजयन्ती । "आनन्दो ब्रह्म" इति श्रुतेः । सर्वं जगद्वशेऽस्यास्तीति वशी । सर्वस्वामीत्यर्थः । "सर्वस्य वशी सर्वस्येशानः" इतिश्रुतेः ८

९ ] ति० टी०—बुद्धिमानिति । प्रशस्तबुद्धिः बुद्धेः प्राशस्त्यं च सकृद्गृहीताविस्मरणावापोद्वापादिशक्तिमत्त्वम् । सर्वत्र प्रशंसादौ मतुप् । नीतिः कामन्दकादिप्रसिद्धराजनीतिस्तद्वांस्तज्ज्ञाता । वाग्मी प्रशस्तवाक् । श्रीमान्सर्वातिशायिशोभैश्वर्यादियुक्तः । यद्वा "ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम्" इत्युक्तश्रौतश्रीमान् । शत्रूणां बाह्यान्तराणां निबर्हणो नाशकर्ता । बाहुलकात्कर्तरि ल्युट् । विपुलांस इत्यादिना सामुद्रिकलक्षणं कथ्यते । विपुलौ मांसलोन्नतावंसौ भुजशिरसी यस्य सः । 'स्कन्धो भुजशिरोंऽसः' इति कोशः । अस्य सुलक्षणत्वं च वररुचिनोक्तम्—'कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः' इति । महाबाहुः "आन्महतः—" इत्यात्वम् । 'शिरो ललाटश्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादं च पृष्ठं दश महत्सुखम्' इति ब्राह्मोऽस्य सुलक्षणत्वमुक्तम् । कम्बुग्रीवः कम्बुवद्रेखात्रयविशिष्टग्रीवः । महाहनुर्मांसलकपोलपरभागः । 'पूर्णमांसलहनुस्तु भूपतिः' इति संहिता ९

रा० टी०—बुद्धिमानिति । बुद्धिमान् अतिशयबुद्धिविशिष्ट इत्यर्थः । तद्बुद्धावतिशयत्वं च ब्रह्मविष्ण्वादिबुद्धिप्रवृत्तिहेतुत्वेन । इदमेव "यः सर्वज्ञः स सर्ववित्" इति श्रुत्योक्तम् । अतएव नीतिमान् ब्रह्मादिभ्योऽपि नीतिशिक्षक इत्यर्थः । अत्रार्थे श्रुतिः "धाता यथापूर्वमकल्पयत् । एष सेतुर्विधारणः । एषां लोकानामसम्भेदाय" इत्यादिः । वाग्मी अतिशयवचनवान् तद्वचनस्यातिशयत्वं च ब्रह्मादिमोहकत्वेन । श्रीमान् श्रियः ईर्लक्ष्मीस्वामिनी सीतेत्यर्थः । स्तद्वान् नित्यं तद्युक्त इत्यर्थः । शत्रुनिबर्हणः शत्रून्स्वाश्रितजनापकारिणो निबर्हयति साक्षाद्विष्ण्वादिद्वारा च दूरीकरोति अपकारित्वधर्मं निवर्त्तयतीति शत्रुनिबर्हणः "एष भूतपतिरेष भूतपालः" इत्यादिश्रुतिरेतदर्थबोधिका । शरीरलक्षणत्वेनापि सर्वविलक्षणत्वं रघुनाथस्य द्योतयञ्छरीरलक्षणान्याह—विपुलांस इत्यादिना सार्द्धश्लोकद्वयेन । विपुलौ मांसलोन्नतौ अंसौ स्कन्धौ यस्य स विपुलांसः । महापुरुष इत्यर्थः । अतएवोन्नतस्कन्धत्वं च महापुरुषलक्षणमिति सामुद्रिके उक्तम् । 'स्कन्धो भुजशिरोंऽसः' इति कोशः । एतेनान्यत्रापि यदिदं लक्षणमवलोक्यते तदा तत्रैतदंशविशेष इत्यूहनीयम् । 'पौरुषे चाप्रतिद्वन्द्वशरैनं जहि रावणिम्' इत्यादि वक्ष्यमाणेनात्रैव महापुरुषत्वस्य पर्यवसन्नत्वात् । अतएव 'कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः' इत्याद्यप्यनुकूलम् । महाबाहुः महान्तौ मांसलौ बाहू यस्य सः । अतएवाजानुबाहुरित्यनेन न पौनरुक्त्यम् । कम्बुग्रीवः कम्बुतुल्या रेखात्रयविशिष्टा ग्रीवा यस्य सः । महाहनुः महत्यौ पुष्टे हनू कपोलोपरिभागौ यस्य सः ॥ ९ ॥

गो० टी०—अथ सृष्ट्युपयोगिगुणानाह—बुद्धिमानित्यादिना । बुद्धिमान् सर्वज्ञः "यः सर्वज्ञः स सर्ववित्" इतिश्रुतेः । नीतिमान्मर्यादावान् । श्रुतिरत्र "धाता यथापूर्वमकल्पयत् । एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति । शोभना वागस्यास्तीति वाग्मी "वाचोग्मिनिः" इति ग्मिनिप्रत्ययः । कुत्वे जश्त्वे च कृते गकारलाभात् पुनर्गकारउक्तिशोभनत्वज्ञापनायेति न्यासकारः । सर्ववेदप्रवर्त्तकइत्यर्थः । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इतिश्रुतिः । श्रीमान् समृद्धोभयविभूत्यैश्वर्यः । 'श्रीः कान्तिसंपदोर्लक्ष्म्याम्' इतिबाणः । "सर्वमिदमभ्यत्ति" इति श्रुतिः । शत्रून् तद्विरोधिनो निबर्हयति नाशयतीति शत्रुनिबर्हणः । बर्ह हिंसायामित्यस्माद्धातोः कर्त्तरि ल्युट् । "एष भूतपतिरेष भूतपालः" इतिश्रुतेः । "अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्वएव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदितिनाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इत्यन्तरादित्यविग्रहोदितं सर्वाङ्गसुन्दरविग्रहं दर्शयति—विपुलांस इत्यादिना सार्द्धश्लोकद्वयेन । विपुलांसः उन्नतस्कन्धः । उन्नतस्कन्धत्वं च महापुरुषलक्षणमिति सामुद्रिकोक्तं 'कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः' इति । महाबाहुः वृत्तपीवरबाहुः । आयतत्वं तु वक्ष्यति आजानुबाहुरिति । 'आजानुलम्बिनौ बाहू वृत्तपीनौ महीश्वरे' इति सामुद्रिकलक्षणम् । कम्बुग्रीवः शङ्खतुल्यकण्ठः । इन्द्रमुखीतिवत् शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । 'कम्बुग्रीवश्च नृपतिर्लम्बकर्णोतिभूषणः' इति लक्षणं । 'रेखात्रयान्विता ग्रीवा कम्बुग्रीवेति कथ्यते' इतिहलायुधः । महत्यौ हनू यस्यासौ महाहनुः । "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । हनुः कपोलोपरिभागः । 'अधस्ताच्चिबुकं गण्डकपोलौ तत्परा हनुः' इत्यमरः । 'मांसलौ तु हनू यस्य भवतस्त्वीषदुन्नतौ । स नरो मृष्टमभाति यावदायुः सुखान्वितः' इतिलक्षणम् ॥ ९ ॥

१० ] ति० टी०—महोरस्क इति । महद्विशालमुरो यस्य सः । 'उरः शिरो ललाटं च' इत्युपक्रम्य 'विशालास्ते सुखप्रदाः'

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् । पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ११ ॥**

इत्युक्तेः । महेष्वासो महानिष्वासो धनुरस्य । गूढजत्रुर्गूढे मांसलत्वान्निमग्ने जत्रुणी वक्षोंऽसस्थे. विगते अस्थिनी यस्य । अरिन्दमो निजभक्तानामरीन्कामादीन्निजभक्त्यन्तरायकर्तृपापानि वा दमयतीत्यरिन्दमः । यद्वा अरिन्दम इति राज्ञोऽन्वर्थसंज्ञा । शत्रुञ्जय इतिवत् । आजानुबाहुर्जानुपर्यन्तदीर्घबाहुः । 'दीर्घभ्रूबाहुमुष्कश्च चिरञ्जीवी धनी नरः' इति ब्राह्मे । सुशिराः 'समवृत्तशिराश्चैव च्छत्राकारशिरास्तथा । एकच्छत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति' इति नारदः । सुललाटो रेखाधिकललाटः । 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः । शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा' इति कात्यायनः । सुविक्रमो गजसिंहादिगतिसदृशगतिः विक्रमः पादविक्षेपः । 'स्वरो गतिश्च नाभिश्च गम्भीरः स प्रशस्यते' इति ब्राह्मे ॥ १० ॥

रा० टी०—**महोरस्क इति** । महद्विशालत्वादिना प्रशंसनीयमुरो यस्य सः। अतएव स्थिरं विशालं कठिनमुन्नतं मांसलं समम् । 'वक्षो यस्य महीपालस्तत्समो वा भवेन्नरः' इत्यादिनैतस्य सुलक्षणत्वमुक्तम् । पीनवक्षा इत्यनेन तु न पौनरुक्त्यम् । आदिशब्देन पीनत्वातिरिक्तानां ग्रहणात् । पीनशब्दस्य मांसलार्थकत्वात्। महेष्वासः महान्सर्वपूज्यः इष्वासो धनुर्यस्य सः । गूढजत्रुः गूढे मांसलत्वेन निमग्ने जत्रुणी अंसद्वयमध्यवर्तिसक्थिनी यस्य सः। अयं जत्रुशब्दार्थः 'स्कन्धो भुजशिरोंसोऽस्त्री सन्धी तस्यैव जत्रुणी' इत्यमरादवगन्तव्यः । अरिन्दमः अरिन्दमा रेखा यस्य सः। अतएव लक्षणप्रतिपादकेभ्यो नास्य वैरूप्यम् ।नापि शत्रुनिबर्हण इत्यनेन पौनरुक्त्यम् । आजानुबाहुः जानुपर्यन्तदीर्घबाहुः । सुशिराः शोभनं समवृत्तं छत्राकारं च शिरो यस्य सः।अस्य सुलक्षणत्वं 'समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकछत्रां महीं भुक्ते दीर्घमायुश्च जीवति' इत्यादिनोक्तम् । सुललाटः सुष्ठु अर्द्धचन्द्रनिभं ललाटं यस्य सः। इदमपि लक्षणम् 'अर्द्धचन्द्रनिभं तुङ्गं ललाटं यस्य स प्रभुः' इत्यादिनोक्तम् । सुविक्रमः शोभनसिंहवृषभगजव्याघ्रपादन्यासतुल्यः विक्रमः पादविक्षेपो यस्य सः । एतल्लक्षणं तु 'सिंहर्षभगजव्याघ्रगतयो मनुजा मुने । सर्वत्र सुखमेधन्ते सर्वत्र जयिनस्सदा' इति जगद्वल्लभायां व्याख्यातम् ॥ १० ॥

गो० टी०—**महोरस्कइति** । महद्विशालमुरो यस्यासौ महोरस्कः । "उरःप्रभृतिभ्यः कप्" इतिकप् । लक्षणं तु 'स्थिरं विशालं कठिनमुन्नतं मांसलं समम् । वक्षो यस्य महीपालस्तत्समो वा भवेन्नरः' इति । मांसलत्वं तु वक्ष्यति पीनवक्षा इति । महान् इष्वासो धनुर्यस्यासौ महेष्वासः । अनेन तदुचितसंहननविशेषो लक्ष्यते । अतो न प्रक्रमविरोधः । गूढे मांसलत्वेनाप्रकाशे जत्रुणी अंसद्वयसंधिगतास्थिनी यस्यासौ गूढजत्रुः। 'स्कन्धो भुजशिरोंसोऽस्त्री संधी तस्यैव जत्रुणी' इत्यमरः । 'विषमैर्जत्रुभिर्निःस्वा अतिसूक्ष्मैश्च मानवाः । उन्नतैर्भोगिनो निम्नैर्निःस्वाः पीनैर्नराधिपाः' इतिलक्षणं । अरिं दमयति निवर्त्तयतीत्यरिन्दमः । "संज्ञायां भृतवृजिधारिसहितपिदमः" इतिखच् । असंज्ञायामप्यार्षः । अरिशब्देन पाप्मा विवक्षितः । अपहतपाप्मेत्यर्थः ।अनेनायं विग्रहपरिग्रहो न कर्ममूलः किंत्वनुग्रहमूलः । 'इच्छागृहीताभिमतोरुदेहः' इति स्मृतेः । अतः न प्रक्रमभङ्गः । जानूरुपर्व तत्पर्यन्तं विलम्बिबाहुराजानुबाहुः सुष्ठु समं वृत्तं छत्रायतं शिरो यस्यासौ सुशिराः । 'समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकछत्रां महीं भुङ्क्ते दीर्घमायुश्च जीवति' इतिलक्षणं । सुललाटः ललाटसौष्ठवं प्रोक्तं । 'अर्धचन्द्रनिभं तुङ्गं ललाटं यस्य स प्रभुः' इति । शोभनः विक्रमः पादविक्षेपो यस्यासौ सुविक्रमः । शोभनत्वं च गजादितुल्यत्वम् । तथोक्तं जगद्वल्लभायां 'सिंहर्षभगजव्याघ्रगतया मनुजा मुने। सर्वत्र सुखमेधन्ते सर्वत्र जयिनःसदा' इति ॥ १० ॥

११ ] ति० टी०—**सम इति** । समो नातिदीर्घो नातिह्रस्वः । 'षण्णवत्यङ्गुलोत्सेधो योनांशः स दिवौकसाम्' इत्युक्तेः । समान्यन्यूनानधिकपरिमाणानि विभक्तानि पृथग्भूतान्यङ्गान्यवयवा यस्य सः । 'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः' इत्युक्तेः । स्निग्धवर्णः स्निग्धश्यामलवर्ण इत्यर्थः । 'स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम्' इत्युक्तेः । प्रतापः स्मृतिमात्रेण रिपुहृदयविदारणक्षमं पौरुषं तद्वान् । 'प्रतापौ पौरुषातपौ' इति कोशः । पीनवक्षा मांसलसमोन्नतवक्षाः । विशालाक्षो विस्तृतायतनेत्रः । 'नासिका चक्षुषी कर्णौ यस्यायतौ' इत्युक्तेः । लक्ष्मीवान्सीतारूपलक्ष्मीशक्तिमान् सर्वावयवसौन्दर्यवान्वा । मोपधत्वाद्वत्वम् । एवमुक्तरीत्या शुभानि सामुद्रिकशास्त्रोक्तानि लक्षणानि यस्य स शुभलक्षणः ॥ ११ ॥

रा० टी०—**समइति** । समः अतिह्रस्वातिदीर्घत्वाभाववान् सुलक्षणप्रतिपादकशास्त्रोक्तोन्नतत्वविशिष्ट इत्यर्थः । इदमपि लक्षणम् 'षण्णवत्यङ्गुलोत्सेधस्सार्वभौमो भवेन्नृपः' इत्यादिनोक्तम् । समविभक्ताङ्गः समानि न्यूनाधिकपरिमाणशून्यानि विभक्तानि अमीलितान्यङ्गानि करचरणादीनि यस्य सः।इदमपि लक्षणं 'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ च सुस्फितौ यस्य स्तः स तु भूपतिः' इत्यादिनोक्तम् । स्निग्धवर्णः स्नेहयुक्तो वर्णश्श्यामलो यस्य सः। इदमपि लक्षणं 'स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम्' इत्यादिना प्रतिपादितम्। प्रतापवान् परमतेजस्वी अतएव नास्य प्रकरणाद्वैरूप्यम् । पीनवक्षाः पीनं मांसलं वक्षो यस्य सः । विशालाक्षः विशाले पद्मपत्रायिते अक्षिणी यस्य सः "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्" इतिषच् । इदमपि लक्षणं सामुद्रिके 'रक्तान्तैः पद्मपत्राभैर्लोचनैस्सुखभोगिनः' इत्यनेन प्रतिपादितम् । अतएव लक्ष्मीवान्सर्वावयवशोभासंपन्नः शुभलक्षणः शुभानि अनुक्तान्यपि लक्षणानि यस्य सः ॥ ११ ॥

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः। यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान्॥ १२ ॥
प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः। रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३ ॥

गो० टी०-समः नातिदीर्घो नातिह्रस्वः। तथात्वं च तत्रैवोक्तं। 'षण्णवत्यङ्गुलोच्छ्रायः सार्वभौमो भवेन्नृपः' इति। समानि अन्यूनाऽधिकपरिमाणानि विभक्तानि अश्लिष्टानि अङ्गानि करचरणाद्यवयवा यस्य स समविभक्ताङ्गः। तानि चोक्तानि सामुद्रिके। 'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके। कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः' इति। स्निग्धः स्नेहयुक्तो वर्णो यस्य स स्निग्धवर्णः। तत्रोक्तं वररुचिना 'नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम्। त्वचः स्नेहेन शय्या च पादस्नेहेन वाहनम्' इति। प्रतापवान् तेजस्वी समुदायशोभासंपन्न इत्यर्थः। पीनवक्षा मांसलवक्षाः। विशाले पद्मपत्रायते अक्षिणी यस्य सः विशालाक्षः। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्" इति षच्। अत्र सामुद्रिकं। 'रक्तान्तैः पद्मपत्राभैर्लोचनैः सुखभोगिनः' इति। लक्ष्मीवान् अवयवशोभायुक्तः। शुभलक्षणः अनुक्तसकललक्षणसंपन्नः॥ ११॥

१२ ] ति० टी०-धर्मज्ञ इति। सत्याऽमोघा सन्धा 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्यादिरूपिणी प्रतिज्ञा यस्य। यशस्वी रावणवधादिना दिव्ययशःसंपन्नः। ज्ञानसम्पन्नो ब्रह्मज्ञानपरिपूर्णः। अतएव जटायुषं प्रति 'मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्' इत्युक्तिः संगच्छते। ब्रह्मज्ञस्यैव ब्रह्मोपदेशेऽधिकारात्। विना ब्रह्मोपदेशमनुत्तमलोकावाप्त्यसंभवात्। न विद्यन्ते उत्तमा येभ्यस्तेऽनुत्तमाः। 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इत्यादिवचस्तु मायामात्रमित्यन्यत्र विस्तरः। शुचिः प्रातःस्नानादिना प्राणायामाभ्यामादिना प्रत्याहारादिजन्यरागद्वेषहानेन च मायिकशरीरत्वाच्च नित्यं बाह्यान्तरशुद्धः। वश्यः पित्राचार्यदेवेषु। विनीतः समाधिमान्विजतत्त्वसमाधिमान्॥ १२॥

रा० टी०-धर्मज्ञइति। धर्म्मज्ञः धर्म्मं शरणागतरक्षणादिरीतिं। स्वीकृतो न त्याज्य इत्याद्याकारिकां जानातीति सः। वक्ष्यति च 'मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन' इत्यादिना। अतएव सत्यसन्धः सत्या सन्धा प्रतिज्ञा यस्य सः। वक्ष्यत्येतत् 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः' इत्यादिना सन्धाशब्दस्य प्रतिज्ञापरता 'प्रतिज्ञाने वधे सन्धा' इति वैजयन्ती कोशादवगन्तव्या। प्रजानां जनानां हिते स्वलोकप्राप्तये एव रतः प्रकटक्रीडाकालकः। अतएव वक्ष्यमाणेन रक्षिता जीवलोकस्येत्यनेन न गतार्थता। चशब्दएवार्थे। हितशब्दः प्राप्त्यर्थकहिधातुप्रकृतिकभावक्तिबन्तः। अतएव यशस्वी नित्यं निरतिशयातिशययशोविशिष्टः। ज्ञानसम्पन्नः ज्ञानेन अहमनन्यगतिः रघुनाथएवागतिकगतिरित्याकारकेण सम्पद्यते प्राप्नोतीति कप्रत्ययोपस्थितभूतत्वस्याविवक्षा। सम्पूर्वकपदः प्राप्त्यर्थकत्वं सम्पद्यते। विधिवशात्खलु कोपि काल इत्यादौ प्रसिद्धम्। अतएव शुचिः अतिपावनहेतुः। वश्यः पित्राचार्य्यादिषु विनीतः आश्रिततन्त्रो वा अतएव 'अहं भक्तपराधीनः' इत्यादि सङ्गच्छते। अतएव समाधिमान् आश्रितपालनविषयकविचारविशिष्टः॥ १२॥

गो० टी०-एवमाश्रितानुभाव्यदिव्यमङ्गलविग्रहशालित्वमुक्त्वाश्रितरक्षणोपयोगिगुणानाह-धर्मज्ञइत्यादिना। स्वजनस्य च रक्षितेत्यनेन। धर्मं शरणागतरक्षणरूपं जानातीति धर्मज्ञः। वक्ष्यति 'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन। दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्' इति। सत्या सन्धा प्रतिज्ञा यस्य स सत्यसन्धः। 'प्रतिज्ञानेऽवधौ सन्धा' इतिवैजयन्ती। 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः' इति। प्रजानां प्राणिनां हिते हितकरणे रतः तत्परः। यशस्वी आश्रितरक्षणैककीर्त्तिः। "तस्य नाम महद्यशः" इतिश्रुतेः। ज्ञानसंपन्नः। "यः सर्वज्ञः स सर्ववित्" इत्युक्तरीत्या स्वरूपतः स्वभावतश्च सर्वविषयज्ञानशीलः। शुचिः पावनः परिशुद्धो वा। ऋजुरिति यावत्। वश्यः वशं गतः। "वशं गत" इति निपातनात्। आश्रितपरतन्त्रइत्यर्थः। समाधिमान् समाधिः आश्रितरक्षणचिन्ता तद्वान्॥ १२॥

१३ ] ति० टी०-प्रजापतीति। प्रजापतिसमः यद्यपि रामो ब्रह्मैव तथापि मानुषधर्माणां शोकमोहादीनां मायिकानां तत्र दर्शनेनौपाधिकभेदमादाय तत्समत्वोक्तिः। भार्गवलोकप्रतिबन्धरूपाज्जटायुमोक्षप्रदानरूपात्स्वेन सह सर्वायोध्यावासिजनस्य सशरीरस्य ब्रह्मलोकनयनरूपाच्च कारणात्तत्समत्वम्। सर्वथा स्वतन्त्रस्यैवेदृशेषु योग्यत्वात्। श्रीमानित्येवमादीनां पौनपुन्यं सकलैश्वर्यादिमत्त्वबोधनार्थम्। धाता पितेव सर्वप्रजाधारणपोषणसामर्थ्ययुक्तः। रिपुनिषूदन आश्रितजनरिपुनाशकः कामादिरिपुनाशकश्च। अन्यथा जगद्गुरोर्भगवतो रिपोरेवाभावेनैतद्विशेषणासंगतिः स्यात्। बाहुलकात्कर्तरि ल्युट्। जीवलोकस्य प्राणिसमूहस्य सकलव्यवहारप्रवर्तकत्वेन रक्षिता। धर्मस्य तत्तद्वर्णाश्रमधर्मस्य मर्यादापरिपालनद्वारा रक्षिता॥ १३॥

रा० टी०-प्रजापती। प्रजापतिसमः प्रजापतीनां प्रजानियन्तॄणां ब्रह्मादीनां समः प्रजापालनादिषु समत्वमेकाकारवर्त्तनं यस्मात्सः। भावप्रधानो निर्देशः। श्रीमान् नित्यं विभूतिधारी अग्निहोत्रीति यावत्। अत्र 'श्रीर्वेशरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च॥ विभूतौ च मतौ च स्त्री स्त्रुः स्त्रियां निर्भरे स्त्रवे' इति मेदिनी प्रमाणम्। 'भूतिर्भस्मनि संपदि' इत्यपि। अतएव धाता वेदोक्तकर्मकारी। अतएव रिपुनिषूदनः रिपून्वेदद्रुहो निषूदयति तद्धर्मत्वं निवर्त्तयतीति सुषामादित्वात्षत्वम्। अतएव जीवलोकस्य रक्षिता जीवन्ति प्राणधारणं कुर्वन्तीति जीवा मनुष्यादयः जीवयन्ति प्राणधारणं कारयन्तीति जीवाः ईश्वराः ते च ते

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता । वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४ ॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् । सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५ ॥

---

त्येकशेषः । लोकाः भुवनानि तेषां समाहारः जीवलोकं तस्य रक्षिता पालकः।अतएव धर्मस्य परिरक्षिता तत्तद्धर्मप्रवर्तक इत्यर्थः॥

गो०टी०—प्रजापतिसमः 'मध्येविरिञ्चिगिरिशं प्रथमावतारः' इत्युक्तरीत्या जगद्रक्षणाय प्रजापतितुल्यतयावतीर्णः । श्रीमान् पुरुषकारभूतया लक्ष्म्या अविनाभूतः । धाता पोषकः डुधाञ् धारणपोषणयोरितिधातोस्तृच् । रिपून्शत्रून् निषूदयति निरस्यतीति रिपुनिषूदनः । "सूददीपदीक्षश्च" इति प्रतिषेधस्यानित्यत्वात् "अनुदात्तेतश्च हलादेः" इतियुच् नन्द्यादिपाठाद्वा ल्युः । सुषमादित्वात्षत्वं । आश्रितविरोधिनिरसनशील इत्यर्थः । अथावतारैकान्तागुणानाह—रक्षितेति । लोके सार्वभौमः स्वकीयजनरक्षण एव वर्तते । अयं तु न तथा किंतु सर्वस्य प्राणिजातस्य रक्षिता । ताच्छील्ये तृन् । शेषे षष्ठी । ननु यदि सर्वेषां रक्षिता तर्हि दुष्कृतिनमपि सुखिनमापादयेदित्यत्राह—धर्मस्यपरिरक्षितेति । आचरणप्रचारणाभ्यां सर्वधर्मस्य व्यवस्थापयिता । उच्छास्त्रप्रवर्तिनोपि चिकित्सकन्यायेन अलङ्घयितेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—रक्षितेति । स्वस्य धर्मस्य यज्ञाध्ययनदानदण्डयुद्धादिरूपस्य रक्षिता सादरमनुष्ठाता । स्वजनस्य स्वभक्तजनस्यावश्यंभाविनोऽप्यनिष्टस्य निरासपूर्वकं परमेष्टमोक्षदानेन रक्षिता । तच्चाम्बरीषप्रह्लादध्रुवादीनां रक्षणेन प्रसिद्धमेव । वेदानामृग्यजुःसामाथर्वणां छन्दःकल्पव्याकरणज्योतिषनिरुक्तशिक्षारूपवेदाङ्गानां च तत्त्वज्ञः पाठतोऽर्थतश्च ज्ञाता । शस्त्रास्त्रादिप्रतिपादकं शास्त्रं धनुर्वेदस्तस्मिन्निष्ठितःसम्यक्ज्ञाता ॥ १४ ॥

रा० टी०—रक्षितेति । स्वस्य धर्मस्य प्रवर्तकत्वरूपमहाराजाधिराजत्वस्य परिरक्षिता नित्यं स्वीकर्ता । अतएव स्वजनस्यापि रक्षिता परिरक्षिता । यस्मिन्सर्वरक्षकत्वं तस्मिन्स्वजनरक्षकत्वं सिद्धमेवेति । पुनः स्वजनरक्षकत्वप्रतिपादनं गोबलीवर्दन्यायेन विशिष्टबोधनाय । अतएव वेदवेदाङ्गतत्त्वज्ञः वेदानामृग्यजुस्सामाथर्वणां अङ्गानां 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दो विचितिरित्येतैः षडङ्गो वेद उच्यते' इत्यशेषोक्तानां तत्त्वं जानातीति सः पाठतोऽर्थतश्च निखिलज्ञातेत्यर्थः । धनुर्वेदे च निष्ठितः धनुर्वेदे शस्त्रास्त्रप्रतिपादकशास्त्रे निष्ठितः परमज्ञातेत्यर्थः ॥ १४ ॥

गो० टी०—स्वस्य स्वकीयस्य शरणागतरक्षणरूपस्य धर्मस्य विशेषधर्मस्य विशिष्यरक्षिता । यद्वा । धर्मस्य तत्तद्वर्णाश्रमधर्मस्य नित्यं समन्ततो रक्षिता । लोके सर्वधर्मप्रवर्तकोपि 'धर्मोपदेशसमये जनाः सर्वेऽपि पण्डिताः । तदनुष्ठानसमये मुनयोपि न पण्डिताः' इति न्यायेन स्वधर्मानुष्ठाने स्खलति न तथायमित्याह । स्वस्य धर्मस्य रक्षिता स्वासाधारणस्यक्षत्रिय धर्मस्य रक्षितेत्यर्थः । लोके सर्वरक्षकोपि कश्चित्स्वजनरक्षणं कर्तुं न प्रगल्भते । 'दास्यमैश्वर्यभावेन ज्ञातीनां च करोम्यहम् । अर्धभोक्ता च भोगानां वाग्दुरुक्तानि च क्षमे' इति भगवताप्युक्तेः । तदपि कर्तुमर्हति इत्याह—स्वजनस्य च रक्षितेति । स्वजनस्य च । स्वजनस्यापीत्यर्थः । अनेन स्वजनरक्षणस्य दुर्घटत्वं सूचितं । यद्वा चस्त्वर्थः। स्वजनस्य शरणागतस्य विशेषेण रक्षिता । विशेषस्तु तदपराधसहिष्णुत्वं । वक्ष्यति 'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्' इति । यद्वा लोके कश्चित्सर्वान् रक्षन् स्वजनं पीडयति । असौ तु स्वजनस्यापि रक्षितेत्यर्थः । अथवा स्वावतारप्रयोजनमाह—रक्षितेति । गीतायां हि 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे' इति । स्वजनस्य स्वशेषभूतस्येति सर्वलोकविशेषणं रक्षणहेतुसंबन्धद्योतनार्थम् । रक्षिता इष्टप्रापकः । अनेन साधुपरित्राणमुक्तम् । चशब्दोन्वाचये । रक्षिता च अनिष्टनिवर्तकः । अनेनानुषङ्गिकदुष्कृद्विनाशउक्तः । धर्मस्य सामान्यविशेषरूपस्य स्थापनमाहेतरवाक्यद्वयेन । रक्षिता स्वस्य धर्मस्य सीतापरिणयमुखेन स्वाश्रमोचितधर्माणामनुष्ठाता । यद्वा स्वस्य धर्मः परत्वं तस्य रक्षिता । हरधनुर्भङ्गपरशुरामजयादिना हि परत्वं स्थापितं । यद्वा धर्मो धनुः । 'स्वाम्यस्वभावसुकृतेष्वर्थो धर्म तु कार्मुके' इति बाणः । सदा धनुर्द्धरः । स्वजनस्य च रक्षिता स्वभृतो जनः स्वजनः ज्ञानी 'ज्ञानी त्वात्मैव मे मतम्' इति गीतायामुक्तत्वात् । तस्य रक्षिता । आत्मन इव सर्वयोगक्षेमावह इत्यर्थः । अथाऽस्याष्टादशविद्यास्थानाभिज्ञत्वमाह—वेदेति । विदन्त्यनेन धर्मादिकमिति वेदः । करणे घञ् । स चतुर्विधः । ऋग्यजुःसामाथर्वणभेदात् । वेदस्य किंचित्कराणि वेदाङ्गानि । तानि च षट् । तथोक्तं 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दसां विचितिश्चेति षडङ्गानि प्रचक्षते' इति । तत्र शिक्षा नाम अकारादीनां वेदवर्णानां स्थानकरणप्रयत्नस्वरादिबोधिका । यागक्रियाक्रमोपदेशः कल्पः । साधुशब्दव्याख्यानं व्याकरणम् । 'वर्णागमोवर्णलोपोवर्णविपर्यय' इत्यादिना निश्चयेनोक्तं निरुक्तम् । कर्मानुष्ठानकालादिप्रतिपादकं शास्त्रं ज्यौतिषम् । छन्दसां पद्यानां शास्त्रं छन्दोविचितिः । वेदाश्च वेदाङ्गानि च वेदवेदाङ्गानि तेषां तत्त्वं तत्त्वार्थः तं जानातीति तथोक्तः । "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । धनुर्वेदो नाम धनुर्हस्तमुष्टिस्थितिविशेषाकर्षणविमोक्षणदिव्यास्त्रादिप्रयोगप्रतिपादको ग्रन्थः । चकार इतरोपवेदसमुच्चयार्थः । क्षत्रियो धनुर्वेदप्रधान इति तस्य निर्देशः। ते चोपवेदाश्चत्वारः । तथाहि 'आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव च । अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टयम्' इति । आयुर्वेदो वाहटं वैदिकधर्मानुष्ठानविरोधिरोगनिवर्तकौषधादिप्रतिपादकम् । गान्धर्ववेदो भरतशास्त्रं सामगानोपयोगि । अर्थशास्त्रं चाणक्यादिप्रणीतं । नीतिशास्त्रं कर्मानुष्ठानोपयोग्यर्थसाधनं तेषु निष्ठितः निष्ठावान् ॥ १४ ॥

१५ ] ति० टी०—सर्वेति । साङ्ख्ययोगतर्कपूर्वोत्तरमीमांसासूत्राणि सव्याख्यानानि शास्त्राणि, स्मृतय उपस्मृतयश्च

**सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः । आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ १६ ॥**
**स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः । समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७ ॥**
**विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः । कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८ ॥**

तत्त्वार्थशासकत्वाच्छास्त्रम्, सर्वमूलशब्दशासकत्वाद्व्याकरणं च शास्त्रम्, तथैव कामन्दकादीन्यपि नीतिशास्त्राणि, सर्वेषामेषामर्थतत्त्वज्ञः। स्मृतिमाननुकाधीतवेदशास्त्रार्थविस्मरणरहितः । प्रतिभानवान्व्यवहारकाले श्रुतस्याश्रुतस्य चोचितार्थस्य शीघ्रं प्रतिभासः प्रतिभानं तद्वान् । तदुक्तम्—'प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः' इति । सर्वलोकप्रियो द्रष्टृस्मर्तृलोकानामिहामुत्र हितावहः । साधुर्मृदुमधुरस्वभावः । अदीनात्मा सहजासाधारणक्षात्रभावेनादीनस्वभावः । अतिव्यसनपरम्परायामप्यक्षुभितान्तःकरणो वा । विचक्षणो यथोचितलौकिकालौकिकसर्वक्रियासु कुशलः ॥ १६ ॥

**रा० टी०—सर्वेति ।** सर्वशास्त्रार्थतत्त्वज्ञः रूढियोगवृत्त्या शास्त्रशब्दप्रतिपादितसाङ्ख्ययोगतर्कपूर्वोत्तरमीमांसास्मृत्याद्यर्थतत्त्वाभिज्ञः। वेदाङ्गानां पृथगुपादानं तन्महत्त्वद्योतनाय । स्मृतिमान् अधीतवेदादिविस्मरणराहितः । प्रतिभानवान् प्रतिभानं श्रुताऽश्रुतोभयोचितार्थस्य झटिति स्फूर्तिस्तद्वान् । अतएव सर्वलोकप्रियः सर्वेषां लोकानां जनानां प्रियः 'लोकस्तु भुवने जने' इति कोशः । साधुः मृदुमधुरस्वभावः । अदीनात्मा न कदाचिद्दीनः आत्मा स्वभावो यस्य सः । नित्यक्षत्रियत्वादित्यर्थः । विचक्षणः लौकिकालौकिकक्रियाकुशलः ॥ १६ ॥

**गो० टी०—सर्वशास्त्रार्थतत्त्वज्ञइति।** सर्वशास्त्राणि उपाङ्गव्यतिरिक्तानि उपाङ्गानि गोबलीवर्दन्यायात् ' धर्मशास्त्रं पुराणं च मीमांसान्वीक्षिकी तथा । चत्वार्येतान्युपाङ्गानि शास्त्रज्ञाः संप्रचक्षते' इति। तत्र धर्मशास्त्रं पूर्वकाण्डोपबृंहणं पुराणं वेदान्तोपबृंहणम् । न्यायमीमांसे सर्ववेदसाधारण्यौ तेषामर्थतत्त्वं अर्थयाथात्म्यं निगूढाशयमित्यर्थः । तज्जानातीति तथा । अष्टादशविद्यास्थानतत्त्वज्ञइत्यर्थः । स्मृतिमान् ज्ञातार्थविषये विस्मरणलेशरहितः । प्रतिभानवान् व्यवहारकाले श्रुतस्याश्रुतस्य वा झटिति स्फुरणं प्रतिभानं तद्वान् । अथ सर्वदा सदुपास्यत्वमाह—**सर्वेति।** सर्वे लोकाः प्रिया यस्यः स सर्वलोकप्रियः । सर्वेषां लोकानां प्रियः सर्वलोकप्रियः सर्वलोकप्रियत्वात् । सद्भिरभिगन्तव्यइत्यर्थः । साधुः तत्कार्यसाधकः उण्प्रत्ययः । यद्वा साधुरुचितः सदभिगमनोचित इत्यर्थः । ' साधुस्त्रिषूचिते सौम्ये सज्जने वार्धुषावपि ' इति वैजयन्ती । अदीनात्मा अकार्पण्यात्मा । अतिगम्भीरप्रकृतिरिति यावत् । विचष्टइतिविचक्षणः । नन्द्यादित्वाल्ल्युः ' अस्युस्यनेष्वाक्षिङः ख्याञ्नेतिवाच्यम् ' इतिख्यात्रादेशाभावः । विविधं वक्तीत्यर्थः ॥ १६ ॥

१६ ] **ति० टी०—सर्वदेति ।** सर्वदा होमदेवपूजासभाधिष्ठानकालेषु तत्तत्कालोचितैः सद्भिः सात्त्विकस्वभावैः पुरोहितद्विजमन्त्रिप्रधानादिभिः सिन्धुभिर्नदीभिः समुद्र इव अभिगतः सेवितः । यद्वा सद्भिर्भक्तैः सदा सेवितः । भगवत्सेवायां कालनियमाभावात् । दृष्टान्तेन तं प्राप्तानां सतां भक्तानां तेन सहैक्यं ध्वनयति । आर्यः सर्वपूज्यः । सर्वेषु सुखदुःखोदर्केषु समो हर्षविषादरहितः शत्रुमित्रोदासीनेषु वैषम्यरहितः । तत्तत्कार्यानुरूपफलदातेत्यर्थ इत्यन्ये । सदैव सर्वावस्थासु मुहुर्मुहुरनुभवेऽप्यननुभूतपूर्ववद्विस्मयनीयदर्शनः ॥ १६ ॥

**रा० टी०—**अतएव सद्भिर्वसिष्ठादिभिः सर्वदाभिगतः नित्यं प्राप्तः। तत्र दृष्टान्तमाह सिन्धुभिर्नदीभिस्समुद्र इव 'सिन्धुर्ना सरिति स्त्रियाम्' इति कोशः। आर्यः ईश्वरेश्वरोऽपि सर्वसमः पित्राचार्यादिमत्त्वेन लोकसदृश एव । अतएव वसिष्ठादिशिष्यत्वादि राघवस्य सङ्गच्छते । एतेन रघुनाथस्य परमदयालुत्वातिशयस्सूच्यते। चोऽप्यर्थे । अतएव सदैव नित्यमेव प्रियं दर्शनं यस्य सः । प्रतिक्षणमनुभूतोऽपि अननुभूतइव लक्ष्यत इत्यर्थः । अतएव ' तदेव रूपं रमणीयतायाः क्षणे क्षणे यन्नवतामुपैति ' इत्युक्तम्। एतेन रघुनाथस्य विलक्षणसौन्दर्यातिशयस्सूचितः ॥ १६ ॥

**गो० टी०—**अतएव सर्वदा सदुपास्यमानत्वमाह—**सर्वदेति।** सर्वदा अध्ययनाभ्यासकालेष्वपि सद्भिः सत्पुरुषैः अभिगतः परिगतः । परिवारितइत्यर्थः । कथमिव समुद्रः सिन्धुभिरिव नदीभिरिव । ' स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे' इति वैजयन्ती । सर्वदाभिगतः सद्भिः सुरलोकेलिश्रमविश्रान्तएकान्ते छायामवगाहमाने रामे सन्तः सर्वे तत्तदर्थविशेषश्रवणाय परिवृत्य स्थिताइत्यर्थः । तथा च वक्ष्यति ' ज्ञानवृद्धैर्वयोवृद्धैः शीलवृद्धैश्च सज्जनैः। कथयन्नास वै नित्यमस्त्रयोग्यान्तरेष्वपि ' इति । अस्त्रयोग्योऽस्त्राभ्यासः । समुद्र इव सिन्धुभिः एवं सदभिगमनं न रामस्याज्ञातज्ञापनाय । तस्य स्वतएव पूर्णत्वात् । किं तु स्वेषामेवापूर्वार्थविशेषलाभाय गत्यन्तराभावादिति भावः । सिन्धवो हि स्वासनलाभायैव समुद्रमभियान्ति न तु तस्यातिशयापादनाय । एवमभिगमनहेतुभूतं सौलभ्यादिकं विशदयति—**आर्यइति ।** आङ्पूर्वाद्गृगतावित्यस्माद्धातोः कर्मणि ण्यत्प्रत्ययः। अभिगन्तुमर्हइत्यर्थः । किं सतामेव नेत्याह—सर्वसमःजातिगुणवृत्त्यादितारतम्यं विना सर्वेषामाश्रयणीयत्वे तुल्यः । अस्य कादाचित्कत्वं वारयत्येवकारः । चकारउक्तसमुच्चयार्थः। किंचिदुपदेशाभावेपि सौन्दर्यादभिगन्तव्यत्वमाह—**सदैकप्रियदर्शनइति ।** सदानुभवेपि नवनवतया भासमानइत्यर्थः ॥ १६ ॥

१७-१८ ] **ति० टी०—स चेति ।** स रामः सर्वैर्गुणैर्युक्त उक्तैर्वक्ष्यमाणैश्च । कौसल्यानन्दवर्धनत्वेन महाकुलप्रसूतत्वप्रधानमहिषीपुत्रत्वादिरूपस्याभिषेकोचितधर्मस्य सत्ता दर्शिता । गाम्भीर्यमगाधाशयत्वं तत्र समुद्रतुल्यः । धैर्यं मनसाप्यक्षुभ्यत्वम्, इष्टवियोगाद्यनभिभूतचित्तत्वं, च रणेऽचलतया सहा-

याभावेऽपि स्थितिश्च, तेन हिमवत्सदृशः ॥ १७ ॥ **विष्णुनेति**। यद्यपि रामो विष्णुरेव सर्वरूपश्च तथापि मानुषोपाधिभेदात्सर्वत्र सादृश्यं द्रष्टव्यम् । यद्वा विष्णुना सदृश इत्यनन्वयालङ्कारः। चन्द्रवत्प्रजाव्यवहारनिरीक्षणकाले सौम्यदर्शनः। क्रोधे युद्धकालिके कालाग्निसदृशः। परैरधृष्य इति यावत्। क्षमाप्रतीकारसामर्थ्येऽप्यपकारसहिष्णुता तया पृथिवीतुल्यः ॥ १८ ॥

**रा० टी०**–इदानीं " न तत्समश्चाभ्यधिकश्च दृश्यते " इति श्रुत्या ' समो न विद्यते यस्य विशिष्टः कुत एवहि' इति स्मृत्या च वास्तवरघुनाथोपमानाभावेऽपि वस्तुनो दुरवगाहत्वाद्बालान्बोधयितुमिषुवत्सविता गच्छतीतिवत्तद्गुणांशांशसदृशगुणवतः उपमानत्वानर्हानपि तद्गुणसदृशगुणवन्तमीश्वरमपि उपमानत्वेन प्रकल्प्याह–**सचेत्यादिना** सार्द्धश्लोकद्वयेन। अस्मिन्पक्षेऽर्थस्स्पष्ट एव। यद्वा तद्गुणलेशगुणानामन्यत्रापि प्रतीयमानत्वात्तत्तदुपमानत्वेन रघुनाथं वर्णयन्नाह–**सचेत्यादिना**। सर्वगुणोपेतः सर्वैरुक्तवक्ष्यमाणैर्गुणैरुपेतो युक्तः कौसल्यानन्दवर्द्धनः कोसलस्य दक्षिणकोसलाधिपतेरपत्यं स्त्री कौसल्या " वृद्धेत्कोसलाजादाञ्ञ्यङ्'' इति ञ्यङ्। ञ्यङ्प्रत्ययान्ताच्चाप्। तस्या आनन्दं वर्धयति सः प्रतिक्षणमद्भुतमातृनवानन्ददातेत्यर्थः। किञ्च कौसल्याया आनन्दो यस्मात् स कौसल्यानन्दो दशरथस्तं कौसल्या च आनन्दस्तदानन्दकर्त्ता दशरथश्च कौसल्यानन्दौ तौ वा यशःप्रख्यापनेन प्रतिक्षणं विलक्षणप्रमोददानेन च वर्द्धयतीति सः। असदृशः वास्तवसादृश्यप्रतियोगित्वानुयोगित्वानाक्रान्तः। अत्रार्थे श्रुतिस्मृती " न तत्समश्चाभ्यधिकश्च दृश्यते"। 'समो न विद्यते यस्य विशिष्टः कुत एव हि ' इति असदृशपदाद्वृत्त्या बहुव्रीहितत्पुरुषोभयाश्रयणादयमर्थो लब्धः। वीर्ये सोमवत्प्रियदर्शनः वीर्येण स्वस्वप्रभावेण युक्ताः इः कामः ईर्लक्ष्मीः सोमः उमासहितशिवोऽस्त्याधारत्वेनास्येति सोमवान् चन्द्रश्च ते प्रियदर्शना यस्मात्सः। 'वीर्यं शुक्रे च शक्तौ च वीर्यं तेजःप्रभावयोः' इति हैमः। ' इकारः कथ्यते कामोः लक्ष्मीरीकार उच्यते ' इत्येकाक्षरः। एतेन प्रियदर्शनत्वेन प्रसिद्धाः कामलक्ष्मीचन्द्रमसः यत्प्रसादात्प्रियदर्शनास्तस्य प्रियदर्शनत्वं किं वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो ध्वनितः। किञ्च वीर्यस्य शुक्रहेतुभूतकामस्य ईर्भस्मत्वप्राप्तिर्यस्मात्स एव सोमवाँश्चन्द्रशेखरः तस्य प्रियं तृप्तिकारकं दर्शनं यस्य। यद्दर्शनमन्तरा शिवस्यापि न तृप्तिरित्यर्थः। क्रोधे भक्तापकारिदोषापनयनहेतुभूते क्रोधाभासे कालाग्निः सदृशो यस्य। क्षमया पृथिवी समा यस्य। त्यागे धनदश्चासौ इनो राजा च धनदेनो रन्तिदेवः कुबेरो वा समो यस्य तादृशः। यो विष्णुना विष्णुः स्वप्रकाशद्वारा व्यापक एव ना नराकृतिः परमपुरुषो रघुनाथस्स इव। गाम्भीर्ये समुद्रः। रघुनाथनिष्ठगाम्भीर्यांशांशसदृशगाम्भीर्यवान्समुद्रो लक्ष्यत इत्यर्थः। स इव धैर्येण हिमवान्। तन्निष्ठधैर्यांशांशसदृशधैर्यवान् हिमवाँश्च लक्ष्यत इत्यर्थः। सत्ये स इव। अपर उत्कृष्टो धर्मो लक्ष्यत इत्यर्थः। यद्वा। सर्वगुणोपेतः उक्तवक्ष्यमाणगुणयुक्तः। अतएव विष्णुर्न आसमन्ताद्भावेन सदृशो यस्येत्यर्थः। नैकधेत्यादिवत्समासः। कौसल्यानन्दवर्द्धनः। वीर्ये सोमवत्प्रियदर्शनो रघुनाथः क्रोधे कालाग्निसदृशः क्षमया पृथिवीसमः त्यागे धनदेन समः वर्ण्यते। कविभिरिति शेषः। स्वस्ववाक्यावनार्थमिति भावः। स इव गाम्भीर्ये समुद्रः स इव धैर्येण हिमवान्स इव सत्येऽपरो धर्मः वर्ण्यत इत्यर्थः। अत्र पक्षे अव्याख्यातार्थपदस्य पूर्वव्याख्यातार्थो बोध्यः। कौसल्यानन्दवर्द्धन इत्यनेन जनकादधिकपुत्रानन्दो मातरीति ध्वनितम्। एतेन ' विष्णोरर्द्धं महाभागम् ' इत्यादौ रघुनाथस्य विष्णोरर्द्धत्वोक्त्या तत्सादृश्यं रामे सुवचमिति भूषणोक्तं व्याख्यानं निरस्तम्। 'सूर्यस्यापि भवेत्सूर्या ह्यग्नेरग्निः प्रभोः प्रभुः' इत्यादिना विरोधात्। न च विष्णुर्न आसमन्ताद्भावेन सदृशो यस्येति बहुव्रीहिस्वीकारे विष्णोरर्द्धं महाभागमितिविरुध्येतेति वाच्यम्। तत्रार्द्धशब्दस्य वर्द्धकपरत्वात्। अर्द्धयतीत्यर्द्ध इति व्युत्पत्तेः। पचाद्यच्। विष्ण्वैश्वर्यावतारादीनां रघुनाथायत्तत्वाद्धामनादिस्वरूपस्य रघुनाथप्रेरणावर्द्धयत्वाच्च वर्द्धकत्वं सुवचमेव। अतएव 'सर्वेषामवताराणामवतारी रघूत्तमः' इत्यादि सङ्गच्छते। अतएव सूर्यस्यापीत्यादिना न विरोधः। किञ्चात्रार्द्धशब्दस्य समांशवाचकत्वे वाक्यार्थ एव दुरुपपादस्स्यात्। तथाहि नहि विष्णोस्स्वरूपे समांशविभागो युक्तः। विष्णोरपि द्विभुजत्वापत्तेः शक्तिविशेषेण द्विभुजत्वाभावेऽप्यनित्यत्वप्रसङ्गात्। वचनप्रामाण्येनानित्यत्वाभावेऽपि तद्विवक्षिताधिकत्वस्य विष्णौ दुरुपपादत्वाच्च। नह्यधिकभुजादिकं शक्त्याधिक्ये नियामकम्। कार्तवीर्यार्जुनस्य सहस्रभुजत्वेपि चतुर्भुजविष्ण्वपेक्षया शक्त्याधिक्यस्य कार्त्तवीर्यार्जुनेऽश्रुतत्वात्। नाप्यैश्वर्यादौ समांशविभागो युज्यते। तदैश्वर्यादेरपरिमेयत्वात्। नह्यनन्तपदार्थं समप्रविभागं कर्तुं कश्चिच्छक्नोति। अतएव नह्याकाशं कश्चिदर्द्धत्वेन विभजते नापि खण्डवाचकत्वमनित्यत्वप्रसंगात् अखण्डप्रतिपादकश्रुतिविरोधाच्च। अन्यतरस्याधिकत्वे मानाभावेनान्यतरस्यैवोपमानत्वमित्यत्र विनिगमकाभावाच्च। अर्द्धस्य महाभागविशेषितत्वे रघुनाथस्यैवाधिकत्वेन्यविवक्षितोपमानत्वस्य विष्णौ भङ्गाच्च। अतो वर्द्धकपर एव अर्द्धशब्दस्य समांशखण्डयोः रूढ्या यौगिकार्थस्य बाधादयमर्थो न युक्त इति तु न भ्रमितव्यम्। प्रत्ययादिभेदेन शब्दभेदात्। अतएव "कप्यासं पुण्डरीकमेवमक्षिणी पुरुषः" इत्यादौ कपिशब्दस्य वानरे रूढत्वेऽपि सूर्यपरत्वं रामानुजाचार्यैर्व्याख्यातम्। पुनर्भूशब्दस्य 'पुनर्भूर्दिधिषूरूढा' इत्यादिना द्विर्विवाहितायां रूढत्वेऽपि 'पुनर्भूर्यौगिकः पुंसि' इति दीक्षितैरुक्तम्। "रुजार्थानाम्भाववचनानामज्वरेः" इति सूत्रे वचनशब्दस्य वाचि रूढत्वेऽपि कर्तृपरत्वमाश्रित्य भावकर्तृकाणामित्यर्थस्सम्पादितो महाभाष्यादौ। बृहदारण्यकश्रुतौ पञ्चमेऽध्याये नवमब्राह्मणे जनकसभागतयाज्ञवल्क्यशाकल्यसंवादे "कतमोऽध्यर्द्धः" इति प्रश्ने "योयं पवते" इत्युक्तम्। "कथमध्यर्द्धः" इति प्रश्ने "यदस्मिन्निदꣳ सर्व्वमध्यार्ध्नोत्" इत्युत्तरम्। तत्रार्द्धशब्दस्य वर्द्धकपरत्वम्। विष्णुशब्दस्य पायसपरत्वे विष्णोरर्द्धमित्यादौ विष्णुशब्देन वस्तुतो नारायणस्यानुपस्थानात्तत्प्रतियोगिकसादृश्यानुयोगिकत्वं रामे युक्तम्। विष्णोरर्द्धमित्युक्तेरिति भूषणकारोक्तेरसम्भवाच्च। वि-

धनदेन समस्त्यागे सत्ये धर्म इवापरः । तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् ॥ १९ ॥
ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् । प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २० ॥

---

ष्णोरीश्वरत्वेनेश्वरस्येश्वरान्तराप्रसिद्धिरित्यपि न भ्रमितव्यम् । " तमीश्वराणां परमं महेश्वरम् " इत्यादिश्रुतिषु ईश्वरान्तरस्य प्रसिद्धत्वादिति दिक् । सार्द्धश्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०–अथ 'इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात्' इति भगवद्गुणानां वर्षायुतेनापि वर्णयितुमशक्यत्वेन संग्रहेण वदन्नुत्तरमुपसंहरति–सचेति । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या " वृद्धेत्कोसलाजादाञ्ञ्यङ् " इतिञ्यङ्प्रत्ययः " यङश्चाप् " इतिचाप् । तस्या आनन्दं वर्द्धयतीति कौसल्यानन्दवर्द्धनः । चशब्द एवकारार्थः । कौसल्यासुतत्वेनावतीर्णो विष्णुरेव वेदान्तोदितसकलगुणसंपन्नः परमात्मा न तु ब्रह्मादिष्वन्यतमइत्यर्थः । दशरथनन्दन इत्यनुक्तिः पुत्रलाभफलस्य कौसल्ययैव लाभात् । अतएव वक्ष्यति " कौसल्या लोकभर्त्तारं सुषुवे यं मनस्विनी ' इति । अथास्य निस्सीमाभ्यधिकत्वं वक्तुं लोके प्रकृष्टवस्तूनां तदेकैकगुणसाम्यमाह–समुद्रइत्यादिश्लोकद्वयेन । गाम्भीर्यं नाम स्वान्तर्गतपदार्थाप्रकाशकत्वं यथा समुद्रः स्वान्तर्गतं रत्नादिकमप्रकाशयन्नेव वर्त्तते तथायमपि स्वीयं परत्वमप्रकटयन्नेवास्ते इत्यर्थः । वक्ष्यति ' आत्मानं मानुषं मन्ये ' इति । धैर्यं नाम शोकहेतुसद्भावेपि निःशोकत्वं । तेन हिमवानिव हिमवत्सदृशः ' गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ' इति ह्युक्तं । अत्र वस्तुतः समुद्रादेरुपमानत्वाभावेऽपि प्रतिपत्तॄणामुपमानत्वं संभवतीत्येवमुक्तं यथा ' इषुवद्गच्छति सविता ' इत्यत्र ॥ १७ ॥ विष्णुनेति । वीर्यविषये विष्णुना सदृशः विष्णोरर्धत्वेन रामस्य विष्णुसादृश्यं सुवचमेव । " स उ श्रेयान् भवति जायमानः " इत्युक्तत्वेन तदंशस्यापि तत्सदृशत्वं युक्तमेव । सोमवत्प्रियदर्शनः शोकनिवृत्तिपूर्वकमाह्लादकरः । क्रोधे कालाग्निसदृशः कालाग्निकोधसमक्रोध इत्यर्थः । स्वविषयापराधमेव स्वयं सहते । स्वाश्रितविषयापराधकरणे तु ज्वलज्ज्वलन इव शीतलतरेऽपि हृदये कोपमावहतीत्यर्थः । जले हि कालाग्निर्ज्वलति । क्षमया क्षमारूपसदृशधर्मेण पृथिवीसमः । पृथिवीतुल्यक्षमइत्यर्थः । स्वस्मिन्नपकारकरणे अचेतनवद्वर्त्तत इत्यर्थः । 'न स्मरत्यपकाराणां शतमप्यात्मवत्तया ' इति वक्ष्यति ॥ १८ ॥

१९–२० ] ति० टी०–धनदेनेति । त्यागे धनत्यागे धर्मार्थधनव्ययविषयेऽपेक्षितधनसंपत्तौ धनदेन नवनिधीशेन समः । अस्मिन्नेवांश उपमा, न तु त्यागांशे । तस्य धनसंग्रह एव प्रवृत्तेः । धनदव्यवहारस्तु कतिपयत्रिदशेभ्यो भगवदाज्ञया कतिपयधनदानमात्रादिति बहवः । सत्ये सत्यवचनेऽपरो धर्म इव धर्मस्य मूर्त्यन्तरमिवेत्युत्प्रेक्षा । एतदन्तं बालकाण्डीयार्थसंग्रहः । ' तमेवम्' इत्यादिनायोध्याकाण्डीयार्थसंग्रह आरभ्यते । तत्रेक्ष्वाकुवंशप्रभव इत्यनेन भगवदाविर्भावः सूचितः । महाबाहुःशत्रुनिबर्हण इत्यनेन विश्वामित्रानुग्रहजशस्त्रास्त्रसंपत्तिताटकावधादि सूचितम् । लक्ष्मीवानित्यनेन सीतापरिणयः सूचितः । सत्यपराक्रममित्यनेन भार्गवलोकप्रतिबन्धादि सूचितम् । एवंगुणसंपन्नं प्रागुक्तरीत्या सकलकल्याणगुणयुक्तम् । सत्यपराक्रमममोघपराक्रमम् ॥ १९ ॥ ज्येष्ठमिति । ज्येष्ठगुणैर्यौवराज्याभिषेकार्हगुणैर्युक्तम् । प्रकृतीनां प्रजानां हितैरिहामुत्रहितावहैर्युक्तम् । ज्येष्ठं सुतं रामम् । प्रकृतिप्रियकाम्यया प्रकृतीनां प्रियं कर्तुमिच्छया । ' छान्दसः काम्यच् ' इति प्राञ्चः । प्रकृतिसंबन्धेनात्मनः प्रियं कर्तुमिच्छया । युवराजेन हि प्रजाकृत्ये संपादिते सति व्यवहारादिनिरीक्षणजन्यश्रमनिवृत्तिरूपं प्रियं स्वस्य भवतीति वयम् ॥ २० ॥

रा० टी०–बालकाण्डोक्तं सूचयित्वाऽयोध्याकाण्डवृत्तमाह–तमेवमित्यादिना । सत्यपराक्रमम् अमोघवीर्यं प्रियं सर्वप्रीतिविषयीभूतं जेष्ठं पूर्वप्रादुर्भूतं श्रेष्ठगुणैर्युक्तम् । श्रेष्ठे ज्येष्ठे येऽनुचिताः गुणा वात्सल्यादयस्तैर्युक्तम् । प्रकृतीनाम्प्रजानां हितैर्हितफलकोपदेशैर्युक्तम् । एवं सर्वगुणसम्पन्नं तं सुतं स्वपुत्रं रामं प्रकृतिप्रियकाम्यया प्रजाकल्याणेच्छया महीपतिः अप्रतिहतचक्रो राजाधिराजो दशरथः प्रीत्या अतिप्रेम्णा यौवराज्येन संयोक्तुमैच्छत् दशरथशब्दार्थस्तु दशसु दिक्षु अप्रतिहतो रथो यस्य सः अर्द्धचतुष्टयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०–त्यागे त्यागविषये धनदेन कुबेरेण समः । तद्वद्दातेत्यर्थः । कुबेरस्य त्यागित्वं ' त्यागे च धनदो यथा ' इत्यादिवक्ष्यमाणवचनशतसिद्धं । न च तस्य लुब्धत्वं कुतश्चित्सिद्धं त्यागे सत्यपि धनदवदाढ्यइति व्याख्यानं तु प्रक्रमविरुद्धं । न ह्याढ्यत्वं कश्चिद्गुणः । तथासति लुब्धत्वमेवास्य सिद्धं स्यात् । सत्ये सत्यवचने अपरः उत्कृष्टवस्त्वन्तररहितः धर्मः धर्मदेवतेव स्थितः । धर्मदेवतेव निरपायसत्यवचनइत्यर्थः । सत्ये अपरो धर्म इव स्थित इति व्याख्याने प्रकृतौपम्ये विरोधः । तस्योत्प्रेक्षारूपत्वात् । क्वचिदुपमा क्वचिदुल्लेखः क्वचिदुत्प्रेक्षेति विजातीयसंकर इत्यप्याहुः । एवं वेदान्तोदितजगत्कारणत्वसर्वज्ञत्वसर्वशक्तित्वसर्वान्तर्यामित्वप्रमुखसमस्तकल्याणगुणाकरं ब्रह्म किं रामत्वेनावतीर्णो विष्णुरुत ब्रह्म रुद्रादिष्वन्यतम इति वाल्मीकिना वेदोपबृंहणाय पृष्टे वेदान्तोदितगुणानां तदन्येष्वसंभवात्तस्यैव संभवाच्च स एव वेदान्तोदितं परं तत्त्वमित्युपदिष्टं । तत्रतत्र जगत्कारणप्रकरणेषु प्रयुक्ताः स्वयम्भूशिवादिशब्दाः सद्ब्रह्मादिसामान्यशब्दवदपर्यवसानवृत्त्यावयववृत्त्या वा परमात्मपरा इत्यप्यर्थसिद्धम् । एवं वेदान्तसारार्थः संदर्शितः । ननु ब्रह्मस्वरूपमिव फलस्वरूपं तदुपायस्वरूपमपि वेदार्थत्वादुपबृंहणीयं तदुभयं किमिति न पृष्टं नोपदिष्टं च । मैवं । परिपप्रच्छेत्यत्र परिणा तदुभयस्वरूपमपि पृष्टमेवोत्तरे च 'प्रजानां च हिते

यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः । तस्याभिषेकसंभारान्दृष्ट्वा भार्याऽथ कैकयी ॥ २१ ॥
पूर्वं दत्तवरा देवी वरमेनमयाचत । विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥

रत' इत्यादिनोपायत्वं सदैकप्रियदर्शन इत्यादिनोपेयत्वं च तस्यैवेत्युक्तं । ननु सिद्धस्यैव तस्योपायत्वे सर्वमुक्तिप्रसंग इति चेन्न । य उपायोपेयाधिकारी तस्यैव फलं दिशति नानधिकारिण इति व्यवस्थापनात् । अधिकारश्च तत्प्राप्त्यपेक्षासाधनान्तरपरित्यागश्चेत्युत्तरग्रन्थे सुव्यक्तं । ननु वेदोपबृंहणमिदं रामायणमित्युक्तं । धर्मोऽपि वेदार्थः । स कथं नोपबृंहितः । किंचेयता ग्रन्थेन वेदान्तार्थ उपबृंहितः । किमतः परग्रन्थेन । उच्यते । उक्तानुक्तांश्च कल्याणगुणांस्तच्चरित्रनिदर्शनमुखेन प्रतिपादयितुमुत्तरग्रन्थः पूर्वभागोपबृंहणं च रामायणपुरुषाचारमुखेन हि सामान्यधर्मो विशेषधर्मश्चोपबृंहितः । ननु तथापि कथं बालकाण्डकथा नोपदर्शिता । मैवं । तत्र प्रदर्शनीयगुणविशेषाभावात् । न च साप्यत्यन्ताप्रदर्शिता । इक्ष्वाकुवंशप्रभवइत्यवतरणं महावीर्य इति ताटकाताटकेयादिवधः धनुर्वेदे च निष्ठित इति कौशिकाधिगतनिखिलदिव्यास्त्रवत्त्वं श्रीमानिति वैदेहीलाभश्चेति बालकाण्डकथासूचनात् । अथायोध्याकाण्डकथां प्रस्तौति–**तमेवमित्यादिना**। आदौ श्लोकद्वयमेकान्वयं । दशसु दिक्षु रथो यस्य स दशरथः । अप्रतिहतरथत्वेन रामाय राज्यं दत्तं भीतिदत्तत्वाभावेन पुनरनादातव्यत्वमुक्तं । महीपतिः अस्वामिदत्तत्वाभाव उच्यते । एवं दातृदोषेण पुनरनाहरणीयत्वमुक्त्वा संप्रदानगुणेनाप्याह–**तमित्यादिना** । तं प्रसिद्धं । एवंगुणसंपन्नं पूर्वोक्तसर्वगुणसमृद्धं । सर्वस्य स्वामिभूतामिति यावत् । सत्यपराक्रमममोघपराक्रमं सर्वरक्षणशक्तमिति यावत् ॥ १९ ॥ ज्येष्ठं जन्मक्रमेणापि राज्यार्हं । श्रेष्ठगुणैर्युक्तं नीतिशास्त्रोक्तषाड्गुण्ययुक्तं सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः कामन्दकोक्ताः । प्रियं प्रीतिविषयं । अनेन तात्कालिकप्रीतिदानव्यावृत्तिः । सुतं जन्मनैव राज्यार्हं । प्रकृतीनां प्रजानां हितैः हितकरणैर्युक्तं । अनेन सर्वानुकूल्यमुक्तं । एवंभूतं रामं प्रकृतिप्रियकाम्यया अमात्यादीनां प्रीतिकरणेच्छया । इच्छायां काम्यच्प्रत्ययः । "अप्रत्ययात्" इत्यप्रत्ययः । "अजाद्यतष्टाप्" प्रीत्या स्वप्रीत्या च । चकारोर्थसिद्धः । "गामश्वं पुरुषं जगत्" इतिवत् । मन्त्रिवृद्धैरालोचनपूर्वकं कृतत्वादप्रत्याख्येयत्वमुच्यते । 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे । छन्दःकारणगुह्येषु जन्मामात्यादिमातृषु' इत्युभयत्र वैजयन्ती ॥ २० ॥

२१–२२ ] ति० टी०–**यौवराज्येनेति**। युवराजस्य भावो यौवराज्यम् । पितरि राज्यं कुर्वत्येव सर्वराजव्यापारेऽभिषेकपूर्वकमधिकृतः पुत्रो युवराजः । संयोक्तुं योजयितुम् । महीपतिर्दशरथः ऐच्छत् । अथ तस्य रामस्य यौवराज्याभिषेकेऽपेक्षितान्संभारान् "औदम्बर्यां सन्दी तस्यै प्रादेशमात्राः पादाः स्युः" इत्यादिना बह्वृचब्राह्मणेनोपदिश्यमानान्दधिमधुसर्पिरादीन्संभृतान्दृष्ट्वा मन्थरावचनाज्ज्ञात्वा । कैकेयी राज्ञः कनीयसी भार्या । अत्र कैकेयीत्येव । यद्यपि केकयशब्दादणि "केकयमित्रयु–" इत्यादिना यादेरियादेशे गुणे आदिवृद्धौ ङीपि "यस्येति च" इति लोपे साधु, तथापि 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इति न्यायेन कैकयीति प्रयोगः। पुंयोगलक्षणे ङीषि 'केकयी' इति पाठ इत्यन्ये ॥ २१ ॥ पूर्वं पूर्वस्मिन्काल इन्द्रसहायार्थं प्रवृत्तदशरथस्य दैत्यैर्युद्धकाले दशरथेतरप्रयुक्तामासुरीं मायां धवलाङ्गमुनिदत्तविद्यया निवारयित्र्यै कैकेय्यै तुष्टेन दशरथेन दत्तौ वरौ यस्यै सा। देवी सैव राज्याभिषेकसमये प्राप्ताभिषेका देवी तद्वत्प्रियतमैनं वक्ष्यमाणलक्षणं वरं प्राप्तकालत्वादयाचत राजानम् । याचेर्द्विकर्मकत्वात् । वरद्वयमाह—रामस्य राज्यादुद्वासनम्, भरतस्य स्वपुत्रस्याभिषेचनम् ॥ २२ ॥

रा० टी०–**तस्येति**। अथाऽनन्तरं पूर्वं शम्बरासुरविजयकाले सारथ्यकरणेन राजप्रसादसमये राज्ञा दत्तवरा दत्तो वरो यस्यै सा देवी केकयी भार्या अभिषेकसम्भारान् वेदोक्तदध्यादिसामग्रीर्दृष्ट्वा मन्थरावाक्यादवगत्य रामस्य विवासनं भरतस्याभिषेचनं च एनं वरं भूपतिमयाचत। दृशिर्ज्ञानसामान्ये। केकयीशब्दार्थस्तु केकयस्य केकयजनपदाधिपतेः कन्या केकयी "पुंयोगादाख्यायाम्" इति ङीष्। तत्र योगशब्देनाविशेषाज्जन्यजनकभावोऽपि गृह्यते। प्रसिद्धश्च केकयीशब्दः 'प्राक्केकयीतो भरतस्ततोऽभूत्' इत्यादिना भट्टिकाव्यादौ जनपदशब्दादित्यञि टिड्ढेति ङीपि तु कैकेयीति स्यात् । "तद्धितेष्वचाम्" इति वृद्धेः। "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशश्च। "अतश्च" इति लुक् तु न। "नप्राच्यभर्गादि–" इति निषेधात् । प्रसिद्धश्च कैकेयीशब्दोऽपि कैकेयिकामाः फलितास्तवेतायदौ रघुकाव्ये वक्ष्यते च । अत्रापि बहुशः स्थले कैकयीशब्दस्यापि प्रामाणिकत्वे इयादेशविधायके विकल्पानुवृत्तिरनुसर्त्तव्या अनुसृता च कैश्चित्। किञ्च कं सुखमेव एकं केवलं केकंतयति देवादीन् प्रापयतीति केकयी । गौरादित्वं प्रज्ञादित्वं वाकल्प्यमिति दिक् । सार्द्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

गो० टी०–युवा चासौ राजा च युवराजः तस्य भावः कर्म वा यौवराज्यम् । ब्राह्मणादित्वात् ष्यञ् । तेन पितरि राज्यं निर्वहत्येव सर्वनिर्वाहकत्वेनाभिषिक्तः पुत्रो युवराजस्तस्य भावेनेत्यर्थः । संयोक्तुं घटयितुमैच्छत् । तत्संभारान् समभरदित्यर्थः । एवं पुनरादानायोग्यं रामाय राज्यप्रदानमुक्त्वा अपरिहरणीयमनन्तरभावि कैकेय्या याचनमाह–**तस्येति** । सार्द्धश्लोक एकान्वयी । अथ रामाय राज्यप्रदानेच्छानन्तरं तस्य रामस्याभिषेकः कर्मविशेषः । तस्य संभारानुपकरणानि । "औदुम्बर्या सन्दी तस्यै प्रादेशमात्राः पादाः स्युः" इत्यादीनि "दधिमधुसर्पिरातपवर्ष्याआपः" इत्यन्तानि ब्राह्मणोक्तानि दृष्ट्वा मन्थरामुखेन दर्शन इव ज्ञात्वा। भार्या भर्तुं योग्या न तु स्वातन्त्र्यार्हा । पूर्वं पूर्वकाले । विभक्तिप्रतिरूपकमव्ययम् । तेन दशरथेन दत्तवरा शम्बरासुरविजयकाले सारथ्यकरणपारितोषिकतया दत्तवरा । याचनहेतुत्वेनेदमुक्तम् । तच्छब्दस्य दशरथपरामर्शितया

**स सत्यवचनाद्राजा धर्मपाशेन संयतः । विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥**
**स जगाम वनं वीरः प्रतिज्ञामनुपालयन् । पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २४ ॥**
**तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह । स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥ २५ ॥**

---

शम्बरासुरसमर्दं सूचितम् । दशसु दिक्षु अप्रतिरुद्धरथो हि सः । दीव्यतीति देवी । पचाद्यच् । देवडिति टित्त्वेन पाठात् ङीप् । भोगोपकरणभूतेति व्यामोहमूलोक्तिः । कैकयी केकयानां राजा कैकयः । 'क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्' इत्यञ् । "जनपदे लुप्" केकयस्यापत्यं स्त्री कैकयी । "जनपदशब्दात्क्षत्रियादञ्" इत्यपत्यार्थेऽञ् । "टिड्ढाणञ्" इत्यादिना ङीप् । नन्वञ्प्रत्यये "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशः किं न स्यात् । उच्यते । "जराया जरसन्यतरस्याम्" इत्यतोऽन्यतरस्यामित्यनुवृत्तेस्तस्य वैकल्पिकत्वात् । नचेयादेशाभाव आर्ष इति वाच्यम् । कैकेयीकैकयीति शब्दभेदप्रकाशिकायामुक्तेः । 'प्राक् कैकयीतो भरतस्ततोऽभूत्' इतिभट्टिप्रयोगात् । केकयीतिपाठे तु केकयान् जन्मभूमित्वेनाचष्ट इति केकयी । तदाचष्टइति णिजन्तादौणादिके क्रियामिकारप्रत्यये टिलोपे णिलोपे च कृते "कृदिकारादक्तिनः" इति ङीषित्याहुः । केकयशब्दो मूलप्रकृतिरेवोपचारात् स्त्र्यपत्ये वर्तते । शार्ङ्गरवादिपाठात् ङीनिति न्यासकारः । कैकयी । एनं दशरथम् । "द्वितीयाटौस्स्वेनः" इत्यन्वादेशे एनादेशः । रामस्य विवासनं भरतस्याभिषेचनं च वरमयाचत अर्थितवती । याचिर्द्विकर्मकः ॥ २१ ॥ २२ ॥

२३ ] ति० टी०—स इति । सत्यवचनात् । धर्मपरनिर्देशेन सत्यप्रतिज्ञत्वादित्यर्थः । अतो हेतोः सत्यरूपेण धर्मपाशेन संयतो बद्धः सन्दशरथः प्रियं सुतमपि विवासयामास ॥ २३ ॥

रा० टी०—सइति । धर्मस्य पः पालनं तस्य आशो व्याप्तिस्तेन संयुतः । धार्मिकशिरोमणिरित्यर्थः । स राजा महाराजाधिराजो दशरथः सत्यवचनात्सत्याऽयोध्या राजधान्यस्त्यस्येति सत्यो रघुनाथस्तस्मिन्यद्वचनं ब्रह्मप्रार्थनास्वीकारसूचकवाक्यं तस्माद्धेतोः प्रियं सुतं रामं विवासयामास । एतेनारण्यगमनमन्तरा ब्रह्मप्रार्थनास्वीकारसिद्धिर्न स्यादिति हेतुर्व्यक्तः । तेन महाराजाधिराजस्य ब्रह्मप्रार्थनादिविज्ञातृत्वं परमदयालुत्वं च रघुनाथसुखसुखित्वं च व्यक्तम् । तेन महाराजदशरथवदेव वर्तितव्यमित्युपदेशो व्यञ्जितः । एतदर्थविश्लेषेवयव धर्मपाशेन बन्धितस्संबद्धो वेति नोक्तम् । अतएव धर्मपाशेन संयुतइत्यनेन सत्यवचनादित्यस्य न गतार्थत्वम् । एतेन सत्यवचनादित्यस्य विरुद्धमर्थं प्रकल्प्य दशरथो न मुक्त इति भूषणकारवचनमाकाशमनवकाशमितिवद्ध्येयम् । न च कालवशानुग इत्यादिवक्ष्यमाणायोध्याकाण्डवाक्येन रघुनाथानुचरेषु कालवशत्वाभावसंपादनात् प्राकृतेषु कालवशत्वाभावस्यासम्भवेन रघुनाथानुचराणां प्राकृतविलक्षणत्वप्रतिपादनेन विरोधाच्च ॥ २३ ॥

गो० टी०—सइति । राजा सर्वरञ्जकः । 'राजा प्रकृतिरञ्जनात्' इति प्रयोगात् । औणादिकः कनिन् प्रत्ययः । यद्यपि 'रजकरजनरजस्सूपसंख्यानम्' इतिवचनादत्र नलोपप्रसक्तिर्नास्ति तथापि रजस्साहचर्यादौणादिकस्य तत्र ग्रहणम् । स पूर्वं रामाय दत्तराज्यः । मन्त्रिप्रमुखैरालोचनपूर्वकं प्रतिज्ञातरामाभिषेक इत्यर्थः । दशरथः । धर्म एव पाशो धर्मपाशः । "उपमितं व्याघ्रादिभिः" इतिसमासः । व्याघ्रादेराकृतिगणत्वात् । तेन संयतो बद्धः सन् सत्यवचनात् । स्त्रीविषयवचनसिद्धिहेतोः प्रियं सुतं विवासयामास । 'रामो विग्रहवान् धर्मः' इत्युक्तरीत्या प्रथमं अङ्गीकृतं परमधर्मं परित्यज्यानन्तरं प्रवृत्तं स्त्रीविषयं क्षुद्रधर्ममवलम्बितवानित्यर्थः । एतेन 'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघविनाशनम् ॥ आकुश्य पुत्रमघवान् यदजामिलोपि नारायणेति म्रियमाण उपैति मुक्तिम् । कामाद्गोप्यो भयात्कंसः' इत्येवं यथाकथञ्चित् भगवन्नामवतां मुक्तिसिद्धौ सर्वदा रामपरायणस्य दशरथस्य कथं न मुक्तिरिति शङ्का दूरोत्सारिता । सिद्धसाधनत्यागात् काशकुशावलम्बनात् धर्मपाशप्रतिबन्धाच्च मुक्तिप्रसंगाभावात् । तथाच मुमुक्षुणा दशरथवन्न वर्तितव्यमित्युक्तं भवति ॥ २३ ॥

२४ ] ति० टी०—स इति । वीरोऽनेकैरपराङ्मुखतया योद्धापि स रामः पितुः प्रतिज्ञां सत्यतया स्वविवासनेनानुपालयन् । यद्वा कैकेयीसंनिधौ पितृवचनपरिपालनविषयां स्वकृतां प्रतिज्ञां परिपालयत्पितृवचनकृतान्निर्देशादाज्ञातो मातुश्च कैकेय्याः प्रियकारणात्प्रियसिद्धिनिमित्तं वनं जगाम । अनेन पितृतत्पत्नीसंतोषकरणमेव सर्वात्मना पुत्रस्य धर्म इति भगवतोपदिष्टम् ॥२४॥

रा० टी०—सइति । कैकय्याः प्रिये विवासने यत्कारणं ब्रह्मप्रार्थनास्वीकारसिद्ध्या भवितव्यम् । तस्माज्जातात्पितुर्वचननिर्देशाद्धेतोः प्रतिज्ञां स्वकृतप्रतिश्रवमनुपालयन्स वीरो रामो वनं जगाम ॥ २४ ॥

गो० टी०—पितृवचनपरिपालनमवश्यं कर्तव्यमेतद्रामाचारमुखेन दर्शयति—सजगामेति । स रामः वीरोपि राज्यपरिपालनसमर्थोपि कैकेय्याः प्रियकारणात् प्रीतिहेतुभूतात् स्त्रीपारवश्येनोक्तादपीत्यर्थः । पितुर्वचननिर्देशात् वचनमेव निर्देशः आज्ञा । 'आज्ञायामपि निर्देशे' इति बाणः । तस्माद्धेतोः प्रतिज्ञां कैकेयीसमक्षं कृतां प्रतिज्ञामनुपालयंश्च । "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे शतृप्रत्ययः । वक्ष्यति । 'तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् । करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते' इति स्वप्रतिज्ञापालनार्थं पितृवचनपालनार्थं चेत्यर्थः । वनं दण्डकावनमुद्दिश्य जगाम ॥ २४ ॥

२५ ] ति० टी०—तमिति । व्रजन्तं भ्रातरम् । प्रियो रामे सहजप्रीतिमान् ॥ २५ ॥

---

१ संयुत इति पाठः । २ केकय्या इति पाठः ।

भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् । रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥
जनकस्य कुले जाता देवमायेव निर्मिता । सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ॥ २७ ॥

**रा० टी०–तमिति** । भ्रातुर्दयितः नित्यं भ्रातृनिष्ठप्रीतिविषयः प्रियः नित्यं रामविषयकप्रीतिमान् अतएव विनयसम्पन्नस्सुमित्रानन्दवर्द्धनो भ्राता लक्ष्मणः सौभ्रात्रं सुभ्रातृत्वम् । वियोगासहिष्णुत्वसूचकचेष्टादीत्यर्थः । अनुदर्शयन्नाचरन् व्रजन्तं तं भ्रातरं रामं स्नेहादनुजगाम । ह इति महत्त्वप्रसिद्धम् । सुमित्रानन्दवर्द्धनः कौशल्यानन्दवर्द्धनवद्व्याख्येयः । सुमित्राशब्दार्थस्तु सुमिदं रामविषयकातिस्नेहं त्रायते पालयति नित्यं नवंनवं संवर्द्धयतीत्यर्थः। मिदशब्दोभावक्विबन्तः। त्रशब्दः कर्तृकप्रत्ययान्तः। सार्द्धश्लोक एकान्वयी ॥ २६ ॥

**गो० टी०**–इक्ष्वाकुवंशेत्यादिना समस्तकल्याणगुणपरिपूर्णत्वोक्त्या परत्वमुक्तं तमेवमित्यादिनाभिषेकप्रवृत्तिनिवृत्तिकथनात्सौलभ्यमुक्तं । अथ परत्वसौलभ्यानुगुणं समाश्रयणमाह–**तंव्रजन्तमिति** । यद्वा । अथ सिद्धसाधननिष्ठैः लक्ष्मणवत् कैङ्कर्यपरैर्भवितव्यमिति व्यञ्जयन्नाह–**तं व्रजन्तमिति**सार्द्धश्लोकएकान्वयः । प्रीणातीति प्रियः । रामे प्रीतिमान् । "इगुपधज्ञाप्रीकिरःकः" इति कः । अनेनानुगतिहेतुर्भक्तिरुक्ता । भ्राता 'भ्राता स्वामूर्तिरात्मनः' इति मूर्तिभूतः । विनयसंपन्नः कैङ्कर्यहेतुविनययुक्तः। विनयः शेषत्वज्ञानं रामकैङ्कर्यरूपाचारो वा । ' विनयो धर्मविद्यार्थशिक्षाचारप्रशान्तिषु' इति वैजयन्ती। सुमित्रायाः आनन्दं वर्द्धयतीति सुमित्रानन्दवर्द्धनः।'सृष्टस्त्वं वनवासाय । रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ' इति सुमित्रयैवोक्तत्वात् । दयितः रामस्येष्टतमः । "यमेवैष वृणुते तेन लभ्यः" इत्युक्तरीत्या प्रियतमत्वेन वरणीय इत्यर्थः । लक्ष्मणः कैङ्कर्यलक्ष्मीसंपन्नो भविष्यतीति ज्ञात्वा लक्ष्मण इति वसिष्ठेन कृतनामधेयः 'स तु नागवरः श्रीमान् । अन्तरिक्षगतः श्रीमान्' इत्युक्तेः कैङ्कर्यलक्ष्मीवत्त्वं । लक्ष्मणो लक्ष्मिसंपन्न इति वक्ष्यति । पामादिषु पाठात् "लक्ष्म्याअच्च" इतिपामादिगणसूत्रान्मत्वर्थीयो नप्रत्ययः अकारश्चान्तादेशः । 'लक्ष्मीवान् लक्ष्मणः श्रीमान् ' इतिपर्यायपाठश्च । सुभ्रातुर्भावः सौभ्रात्रं । भावे अण् ।अनुशतिकादित्वात् उभयपदवृद्धिः । रामं विना क्षणमपि जीवनाक्षमत्त्वं सुभ्रातृत्वं । वक्ष्यति । 'नच सीता त्वया हीना न चाहमपि राघव । मुहूर्त्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ' इति रामस्य लक्ष्मणविरहासहत्वं सुभ्रातृत्वं । तच्च वक्ष्यति । 'न च तेन विना निद्रां लभते पुरुषोत्तमः । मृष्टमन्नमुपानीतमभाति नहि तं विना' इति । तदनुदर्शयन् सन् । यद्वा एवं सुभ्रातृभिर्वर्त्तितव्यमिति दर्शयन्निवेति गम्योत्प्रेक्षा । व्रजन्तमेकान्ते स्वाभिमतसकलकैङ्कर्यप्रधानप्रवृत्तं भ्रातरं । उपलक्षणमिदं ।' माता पिता च भ्राता च निवासः शरणं सुहृत् । गतिर्नारायण' इत्युक्तसकलविधबन्धुः । वक्ष्यति । 'अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः' इति स्नेहात् 'बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्द्धनः' इत्युक्तरामभक्तेरेव हेतोरनुजगाम । येनयेन भ्राता गच्छति तेनतेन सह गच्छतीतिवदपूर्वोयं कश्चिद्वृत्तिविशेष इति ऋषिर्विस्मयते हेति । 'ह विस्मये विषादे च' इतिबाणः । आशालेशमात्रेण स्वस्मिन्नेवाधिकप्रेमाणं भगवन्तं कुत्रचित् एकान्तस्थले स्वमनोरथानुरूपविशिष्टविपयसकलकैङ्कर्यलाभायानुसरन्नधिकार्यत्र विनिर्दिश्यते ॥ २६ ॥

२६–२७] **ति० टी०–भ्रातरमिति** । भ्रातृ रामस्य दयितः प्रियः । सौभ्रात्रं सुभ्रातृभावम् । स्नेहमिति यावत् । स्नेहादेव जगाम । न पित्रादिनिर्देशादिति भावः । अथ रामस्य दयितेष्टा । प्राणसमा निरतिशयप्रेमास्पदम्।हिता नित्यं हितकारिणी॥२६॥ जनकस्य कुलेऽन्वये जाता । यद्यप्येषाऽयोनिजा तथापि सीरध्वजस्य देवयजनलाङ्गलपद्धतावाविर्भूतत्वादेवमुक्तिः । अतएवाह–देवमायेवेति। सेवाचिन्त्योदयस्थितिलया । देवैरेव स्वकार्यसिद्ध्याकाङ्क्षिभिर्निर्मिताविर्भाविता। यद्वा इवशब्द एवार्थे। देवेन भगवताविर्भाविता स्वमायैव । भगवतोऽनाद्यन्ता सर्वकार्यसहायभूता सहजशक्तिरेव हि मायाः । यत्तु तिलोत्तमादिवद्देवमायेव स्थितेति, तन्न। निर्मितपदवैयर्थ्यापत्तेः । सर्वैः स्त्रीलक्षणैः संपन्ना युक्ता ॥ २७ ॥

**रा० टी०–रामस्येति** । प्राणसमा प्राणसदृशी दयिता प्रिया हिता प्रियकरी किञ्च प्राणवत्समाहिता रघुनाथेन नित्यं स्वीकृता जनकस्य कुले जाता प्रादुर्भूता सर्वलक्षणसम्पन्नेत्यादिविशेषणचतुष्टयविशिष्टा सीतेव निर्मिता प्रकटिता देवमायाविष्णवअवतारभूतमोहिनीत्यर्थः । देवमायाशब्दार्थस्तु देवानां मा आयुर्बलादिसम्पत्तिस्तां यात्यमृतदानद्वारा प्रापयति सा अन्तर्भावितणिजर्थो यातिः । किञ्च निर्गतं मितमियत्ता यस्यास्सा देवस्य परमात्मनो मायाकृपेव अपरिमितपरमात्मदयालुतैव ततो निश्रित्य प्रादुर्भूतेवेत्यर्थः । अतएव नारीणां सर्वैर्लक्षणैस्सामुद्रिकोक्तशुभसूचकसकललक्षणैः सम्पन्ना नित्यं संयुक्तेत्यर्थः । अतएवोत्तमा ब्रह्माण्यादितोऽपि श्रेष्ठा । अतएव वधूः रघुनाथमनोहारिणीत्यर्थः । सीता रामस्य भार्या राममनुगता अन्वगच्छत् । तत्र दृष्टान्तः शशिनं चन्द्रमसं यथा रोहिणी चन्द्रस्यासाधारणस्त्री । अनेनोपमालङ्कारेण यथा चन्द्रः संयुक्तसुखप्रदः वियुक्तदुःखप्रदः तथा रघुनाथोऽपि धर्मसंयुक्तसुखप्रदः धर्मवियुक्तदुःखप्रदः प्रतीत इत्युपमालङ्कृतिर्व्यञ्जिता । तेन रघुनाथस्य सर्वसमत्वं ध्वनितम्। अत्राप्युपमानोपमेयभाव इष्टुवत्सविता गच्छतीतिवत् । किञ्च राममनुगता सीता शशिनं रोहिणी इव अनुगतेत्यर्थः । वधूशब्दः लुप्ताकारकावपूर्वककम्पनार्थकधूप्रकृतिकक्विबन्तः । ' माया दम्भे कृपायां च ' इति कोशान्मायाशब्दः कृपापरः । अपिहैतौ अर्द्धचतुष्टयमेकान्वयि ॥ २६ ॥ २७ ॥

**गो० टी०**–अथ सीतायाः । साधनदशायां पुरुषकारतया

सीताऽप्यनुगता रामं शशिनं रोहिणी यथा । पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् । गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥
गुहेन सहितो रामो लक्ष्मणेन च सीतया । ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥

---

कलदशायां प्राप्यतया चान्वयात्तया नित्ययोगं दर्शयति—**रामस्येत्यादिश्लोकद्वयेन** । रामस्याभिरामस्यापि दयिता अभिरामा नित्यं भार्या हृदि संततं भार्या । बिभर्तेः "ऋहलोर्ण्यत्" इतिण्यत् । प्राणसमा उक्तार्थद्वये हेतुरयं । हिता चेतनहितपरा । मित्रमौपयिकं कर्तुमित्यादि वक्ष्यति । रामहितपरा वा । वक्ष्यति 'स्मारये त्वां न शिक्षये' इति । जनकस्य कुले जाता । आचारप्रधानेत्यर्थः । देवमायेव निर्मिता अमृतमथनानन्तरमसुरमोहनार्थं निर्मिता विष्णुमायेव स्थिता । 'मायया मोहयित्वा तान् विष्णुः स्त्रीरूपमास्थितः' इतिउक्तेः । यद्वा । निर्मिताकृतमूर्तिः देवमाया विष्णोराश्चर्यशक्तिरिव स्थिता । अनेन सौन्दर्यपराकाष्ठोक्ता । अथवा निर्मिता कृतावतारा देवमाया देवस्य विष्णोर्लक्ष्मीः । वक्ष्यति उत्तरकाण्डे 'ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्' इति । इवशब्दो वाक्यालङ्कारे एवकारार्थे वा ॥ २६ ॥ सर्वलक्षणसंपन्ना सामुद्रिकोक्तैः सर्वैरुत्तमस्त्रीलक्षणैः संपन्ना नारीणामुत्तमा पूर्वोक्तसर्वप्रकारेण सर्वस्त्रीश्रेष्ठा । पुरुषोत्तमरामानुरूपनार्युत्तमेत्यर्थः । वधूर्दशरथस्नुषा अचिरोढा वा । 'अचिरोढा तु वधूः' इतिवैजयन्ती । सीता सीता लाङ्गलपद्धतिः तज्जन्यत्वात्तद्व्यपदेशः । अनेनायोनिजत्वोक्तेर्दिव्यलोकवासकालिकसौन्दर्यान्यूनतोक्ता । अपिशब्देन लक्ष्मणानुगतिः समुच्चीयते । राममनुगता निरवधिकसौन्दर्याकृष्टहृदयतयानुगतवती रोहिणी यथा । यथाशब्द इवार्थः । 'यथा तथैवैवं साम्ये' इत्यमरः । रोहिणीनाम चन्द्रस्यासाधारणपत्नी । 'वरिष्ठा सर्वनारीणामेषा च दिवि देवता । रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते' इति । न केवलं रामसौन्दर्याकृष्टानुगता किं तु कलङ्किनं रोहिणीव पातिव्रत्यस्वरूपप्रयुक्ता गतेत्यर्थः । अयमर्थोऽनसूयासमक्षं व्यक्तीभविष्यति ॥ २७ ॥

२८-२९ ] ति० टी०—**सीतेति** । सीता लाङ्गलपद्धतिस्तद्दुत्थत्वात्सीता । शशिनं रोहिणीव राममनुगता ॥ २८ ॥ **शृङ्गेति** । गङ्गाकूले वर्तमानशृङ्गवेरपुरे स्थितं निषादाधिपतिं प्रियमिष्टं गुहमासाद्य तत्सहितो लक्ष्मणादिसहितश्च रामः सूतं रथेन स्वप्रापणार्थमागतं गङ्गाकूले व्यसर्जयत्परावर्तितवान् ॥ २९ ॥

रा० टी०—**पौरैरिति** । **पौरैः** पुरोद्भवैर्बालवृद्धादिभिरपि दशरथेन पित्रा च दूरं स्वस्वोचितादधिकमनुगतः द्रुतं पुनः सम्मेलनेच्छया अल्पानुगमने कर्तव्ये दूरानुगमनेन तेषां प्रीत्यतिशयो ध्वनितः । धर्मात्मा परमधर्मप्रवर्तकः रघुनाथः शृङ्गवेरपुरे जातं प्रियं परमप्रीतिमन्तं निषादाधिपतिं गुहं गङ्गाकूले आसाद्य सम्प्राप्य सूतं रथेन स्वप्रापणार्थमागतं सुमन्त्रं व्यसर्जयत्स रथं परावर्तयदित्यर्थः । शृङ्गवेरशब्दार्थस्तु शृङ्गं वाति अवयवत्वेन प्राप्नोतीति शृङ्गवाः शृङ्ग्यृषिः तस्य ईरः प्राप्तिर्यस्मिन्तत् शृङ्गवेरम् । किञ्च शृङ्गाणि सन्ति येषां ते शृङ्गाः मृगाः पर्वता वा । अर्शआद्यच् । तैस्सह तेषु वा अवेरन्नित्यं प्राप्तिर्यस्य स एव ऋषिः तस्य पुरं तद्विवाहे लब्धपत्तनमिति यावत् । अवेत्युपसर्गाकारलोपः । अयं पाठो मदसम्मतः । भूषणकारसम्मतशृङ्गिबेरेति पाठे "अतइनिठनौ" इति इन्प्रत्ययः । एतेन तद्देशस्यातिपवित्रत्वं सूचितम् । तत्र जातमित्यनेन शृङ्ग्यपेक्षसेवकोयमिति ध्वनितम् । तेन स रघुनाथकृपाधिकारीति सूचितम् । गुहशब्दार्थस्तु गूहति परमात्मप्रेम्णा श्रेष्ठानप्याच्छादयतीति गुहः रघुनाथविषयकपरमप्रीतिमानित्यर्थः । इगुपधलक्षणः कः । सार्द्धश्लोक एकान्वयी ॥ २८ ॥ २९ ॥

गो० टी०—रामभक्त्यविशेषाल्लक्ष्मणसीतावत् पौराणामप्यनुवृत्तिं दर्शयति—**पौरैरिति** । पुरे भवाः पौराः । अनेन स्त्रीबालवृद्धाविशेषउक्तः । दूरमनुगतइत्यनेन विरहासहिष्णुत्वोक्त्या पौराणां परमा भक्तिरुक्ता । 'पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते' इतिवचनात् । पौरैरित्यनेन तद्देशवासएव रामभक्तिहेतुरित्युक्तं । पित्रा दशरथेन च । चशब्दोऽन्वाचये । अल्पमनुगतइत्यर्थः । आद्वारं हितेनानुगतं पित्रेत्यनेन पुत्रकृतवात्सल्यादनुगत इत्युक्तं । एवं परत्वसौलभ्ये दर्शिते । अथ वात्सल्यसौशील्ये दर्शयति—**शृङ्गिबेरपुरइति** । धर्मौ आश्रितवात्सल्यसौशील्ये आत्मा स्वभावो यस्य सः तथा आश्रितवात्सल्यसौशील्यस्वभावो रामः शृङ्गिबेरपुरे शृङ्गिणः कृष्णसारादयः तेषां बेराणि कृत्रिमशरीराणि । 'प्रतिछन्दः प्रतिनिधिर्बेरं सप्रतिरूपकम्' इति वैजयन्ती । वञ्चनेन सजातीयमृगग्रहणार्थानि यस्मिन् तच्छृङ्गिबेरं । तथात्वात् । तदाख्ये पुरे गङ्गाकूले शृङ्गिबेरपुरसन्निहितगङ्गातीरे इत्यर्थः । एतेन गङ्गातीरत्वमात्रेण नोद्देश्यत्वं किंतु भक्तसेवितत्वेनेत्युक्तं । 'सा काशीति नचाकाशीति' इत्याद्यभियुक्तोक्तेः । निषादाः प्रतिलोमजातिविशेषाः । 'निषादो मृगघाती स्यात्' इति वैजयन्ती । तेषामधिपतिरिति जात्यपकर्ष उक्तः । प्रीणातीति प्रियः तं स्वस्मिन् प्रीतिमन्तमित्यर्थः । गूहति गोपयति वञ्चयति परस्वमितिगुहः । इगुपधलक्षणः कप्रत्ययः । तं जातितो वृत्तितो गुणतः कुलतश्च हीनमपि स्वस्मिन्नानुकूल्यमात्रेणादरणीयत्वमुक्तं । निषादाधिपतिमासाद्येत्यनेन सौशील्यमुक्तं । महतो मन्दैस्सह नीरन्ध्रेण संश्लेषो हि सौशील्यं । धर्मात्मेत्यनेन महत्त्वमुक्तं । आसाद्येत्यत्राभिविधिवाचिना अर्थात् नैरन्ध्र्यमुक्तं । शृङ्गिबेरपुरे गुहमासाद्येत्यनेन दोषभोग्यत्वरूपं वात्सल्यमुक्तं । सूतं सुमन्त्रं पारम्पर्येणानुवर्तमानमपि व्यसर्जयत् व्यसृजत् । स्वार्थे णिच् । सद्यः प्रसूतवत्सवात्सल्यात् पूर्ववत्संपरिहरन्त्या धेनोरिव वात्सल्यातिशय उक्तः ॥ २८ ॥ २९ ॥

३०-३१ ] ति० टी०—**गुहेनेति** । पूर्वार्धं पूर्वश्लोकान्व-

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् । रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥
देवगन्धर्वसङ्काशास्तत्र ते न्यवसन्सुखम् । चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥ ३२ ॥

यि । अथ ते सीतारामलक्ष्मणा वनेन पुरोवर्तिप्राप्तवनद्वारेणे परम्परं वनं गत्वा । तेवनं पादचारस्तेन वनं गत्वेत्यर्थ इति संप्रदायः ॥ ३० ॥ **चित्रेति** । अनु पश्चाद्भरद्वाजस्य शासनाच्चित्रकूटं प्राप्य तत्र रम्यमावसथं पर्णशालां कृत्वा तत्र वने रममाणा त्रयो देवगन्धर्वसदृशाः सुखं न्यवसन्नित्यन्वयः ॥ ३१ ॥

रा० टी०—सूतविसर्जनानन्तरकालिकं रामवृत्तमाह—**गुहेनेत्यादिना**। गुहेन लक्ष्मणेन च सीतया च सहितो रामः अवनेन अवनी पृथ्वी एवास्याधारत्वेन यस्मिन्गमने तेन पादत्राणादिरहितसञ्चारेणेत्यर्थः । किञ्च तेवनेन लीलया वनं गङ्गाजलसमीपं गत्वा प्राप्य अतिष्ठदिति शेषः । अत्र प्रथमपक्षे ते इति तत्रान्वयि अमृतस्वरूपे इति तदर्थः । 'तश्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित्' इति मेदिनी। चकारउभयान्वयी। तेवनेनेति देवनार्थकतेवृधातुप्रकृतिकल्युडन्तत्वेन सिद्धम्। यद्वा। सरामः गुहादिनैव सह वनं गङ्गाजलसमीपं हितः चलित आसीदिति शेषः । हित इति गत्यर्थकहिप्रकृतिकनिष्ठान्तम् । "विनापि तद्योगं तृतीया" इति सिद्धान्तः। देवगन्धर्वसङ्काशाः देवादिप्रकाशकास्ते त्रयः सीतारामलक्ष्मणाः बहूदकाः अगाधजलाः नदीः गङ्गां तीर्त्वा । बहुत्वमादरार्थम्। भरद्वाजस्य शासनात् भरद्वाजशिक्षात: चित्रकूटमनुप्राप्य द्रुतं सङ्गम्य तत्र चित्रकूटे रम्यमावसथं पर्णशालां कृत्वा रममाणा:विहरन्तः सन्तः सुखं न्यवसन् । देवगन्धर्वसङ्काशाइत्यनेन रामस्याटवीगमनमात्रेणास्मदरयो निहतप्राया इति देवादिनिश्चयः सूचितः। सार्द्धश्लोकद्वयं संमिलितान्वयि॥३०॥३१॥

गो० टी०—स्वस्मिन्नाशालेशमात्रेण जनितं गुहविषयप्रेमातिशयं दर्शयति—**गुहेनेति** । रामः गुहेन सहितः सन् लक्ष्मणेन सीतया च सहितः। गुहसंधानानन्तरमेव लक्ष्मणसीताभ्यां नित्यानपायिभ्यां साहित्यमासीत् । ततः पूर्वं सिद्धमपि सदसत्प्रायमासीदित्यर्थः। यद्वा दृष्टान्तार्थं लक्ष्मणसीतासाहित्यकथनं तादृशस्नेहो गुहेप्यासीदिति भावः । सहितः संहितः 'समोवाहिततयोः' इतिमलोपः । सः रामः लक्ष्मणेन सीतया च सह गुहेन सहितः प्रहितः। गङ्गां तारित इत्यप्याहुः ॥ ३० ॥ भरद्वाजस्य शासनात् चित्रकूटमनुप्राप्य प्रजाभरणशीलो भरद्वाजः । इत्थं निरुक्तमृगारण्यके— "एष एव बिभ्रद्वाजः प्रजा वै वाजः ता एष बिभर्ति यद्बिभर्ति तस्माद्भरद्वाजइत्याचक्षते " इति । यद्वा 'वाजं रेतः वाजकरणम्' इत्यादौ तथाप्रयोगात् । बिभ्रद्वाजं भरद्वाजः । नित्यब्रह्मचारीत्यर्थः । " भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास" इतिश्रुतेः । तस्य शासनान्नियमनाच्चित्रकूटे भवद्भिः स्थातव्यं तस्यैवमेव मार्ग इत्येवंरूपात् । अनु सदृशं 'पश्चात्सादृश्ययोरनु' इत्यमरः । राजकुमाराणां स्वेषामुचितमित्यर्थः।' सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने '

इति वक्ष्यति । पश्चाद्भागे वा चित्राणि आश्चर्यावहानि कूटानि शिखराणि यस्यासौ चित्रकूटः तं । ' आश्चर्यालेख्ययोश्चित्रम् ' इत्यमरः। प्राप्य गत्वा रम्यं रमणीयं जलरामणीयकस्थलरामणीयकादियुक्तं आवसथं पर्णशालारूपं गृहं । 'धिष्ण्यमोको निवसनं स्थानावसथवास्तु च ' इत्यमरः। कृत्वा निर्माय। अत्र पर्णशालानिर्माणे लक्ष्मणस्य साक्षात्कर्तृत्वं इतरयोस्तु उचितदेशप्रदर्शनादिना प्रयोजककर्तृत्वं "समानकर्तृकयोः पूर्वकाले" इत्यत्र सूत्रे गृहैकत्ववदुद्देश्यगतत्वेन द्वित्वस्याविवक्षितत्वादनेकक्रियास्वपि क्त्वाप्रत्ययः संभवतीति न्यासकारोक्तेः क्त्वाप्रत्ययबाहुल्यं । तत्र वने चित्रकूटोपान्तवने रममाणाः लीलारसमनुभवन्तः सन्तः सीतारामयोः पुष्पावचयसलिलक्रीडादिकं रतिः । ' वैदेहि रमसे कच्चिच्चित्रकूटे मया सह । पश्यन्ती विविधान्भावान्मनोवाक्कायसंयुतान् ' इति हि वक्ष्यति । लक्ष्मणस्य तु विशिष्टविषयकैङ्कर्यलाभजा प्रीतिः । वक्ष्यति ' भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ' इति । त्रयो रममाणाः इत्यनेनानन्दहेतुभेदेप्यानन्दांशे तौल्यमुच्यते परमं साम्यमुपैति । भोगमात्रसाम्यलिङ्गाच्चेतिवत्। रममाणा इति वर्त्तमाननिर्देशेन नैरन्तर्यमुक्तं । वर्त्तमानार्थकस्याप्यस्य न्यवसन्निति भूतप्रत्ययान्तविशेषणत्वं । "धातुसंबन्धे प्रत्ययाः" इत्यनुशासनात् 'अग्निष्टोमयाजी पुत्रस्ते भविता' इतिवत् संभवति ॥ ३१ ॥

३२ ] ति० टी०—तथा पुत्रशोकातुरोऽनिर्वाच्यपुत्रवियोगजन्यशोकपीडितः ॥ ३२ ॥

रा० टी०—रामगमनानन्तरकालिकायोध्यावृत्तमाह—**चित्रकूटमित्यादिना**। रामे चित्रकूटं तथा उक्तप्रकारेण गते प्राप्ते सति पुत्रशोकातुरः प्रकटितपुत्रवियोगजनितशोकाक्रान्तः राजा दशरथः सुतं विलपन् हा सुत इति विलापं कुर्वन्स्वर्गं स्वः स्वर्गे गीयते नित्यं प्रशस्यतेऽसौ स्वर्गः । अप्रकटायोध्यापरपर्यायसाकेतलोकस्तंजगाम। स्वर्शब्दस्य स्वर्गवाचकत्वं स्वरिति स्वर्गे परलोके चेत्यादिना मनोरमादौ स्पष्टम् । अर्द्धद्वयमेकान्वयि । एव मुत्तरत्रापि ॥ ३२ ॥

गो० टी०—अतएव देवगन्धर्वसंकाशाः सन्तः देवगन्धर्वा मनुष्यगन्धर्वेभ्योधिकानन्दाः । यद्वा देवी च देवश्च देवौ लक्ष्मीनारायणौ । "पुमान्स्त्रिया" इत्येकशेषः । गानं धारयन्तीति गन्धर्वाः । " एतत्सामगायन्नास्ते " इत्युक्ताः। सर्वदा सामगानपरोमुक्तः । देवौ च गन्धर्वश्च देवगन्धर्वाः तत्सदृशाः देवगन्धर्वसंकाशाः। निभादित्वादुत्तरपदभूता एव सन्तः सदृशवचनाः । तथाह्यमरः । ' स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः ' इति । तेते एव सन्तः साकेतवासिन एव सन्तः सुखं न्यवसन् । वक्ष्यति ' सुरम्यमासाद्य तु चित्रकूटं नदीं च

राजा दशरथः स्वर्गं जगाम विलपन्सुतम् । गते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः । स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४ ॥
गत्वा तु स महात्मानं रामं सत्यपराक्रमम् । अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३५ ॥

तां माल्यवतीं सुतीर्थाम् । ननन्द रामो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात्' इति । यद्वा तेएव सन्तः वनवासिनएव सन्तः । नागरिका अपि चिरं वनचरा इवावसन्नित्यर्थः । सुखग्लान्यादिभिस्तेषां वैदेशिकत्वगन्धोपि नाज्ञायतेतिभावः । सुखं यथा भवति तथान्यवसन् । कदाचिदपि दुःखलेशोपि नान्वभावीत्यर्थः । अत्र क्रियाभेदात् तच्छब्दद्वयप्रयोग इत्यप्याहुः । ते तीर्त्वा जग्मुरिति क्रियापदमध्याहृत्य केचियोजयन्ति । अत्र देवगन्धर्वसंकाशा इति पदगतेनोपमालङ्कारेण किंचिद्वस्तु ध्वन्यते । यस्तावत्स्वरूपज्ञानपूर्वकं भगवत्यनुरक्तो भवति तं भगवान् देव्या समागत्य दिव्यं विमानमारोप्यातिवाहिकगणैः सत्कार्य विरजां तीर्त्वा तिल्यकान्तारमासाद्यामानवेनानुशाप्य दिव्यलोके महामणिमण्डपमुपेत्य दिव्यसिंहासनारूढः श्रिया सह मोदमानस्तद्वचितसर्वदेशसर्वकालमर्वावस्थोचितसकलविधकैङ्कर्योऽस्मै स्वानन्दसममानन्दं दत्त्वा तेन सह यावत्कालमास्तइति॥ ३२ ॥

३३ ] ति० टी०–राजेति । तस्मिन्दशरथे गते लोकान्तरं गते मृते वसिष्ठाद्यैर्द्विजैस्त्रैवर्णिकैः । इदमुपलक्षणम् । तत्सहितैर्मन्त्रिवृद्धैरित्यपि बोध्यम् ॥ ३३ ॥

रा० टी०–गतइति । तस्मिन्महाराजदशरथे गते अप्रकटसाकेतं प्राप्ते सति वशिष्ठप्रमुखैर्वशिष्ठाद्यैर्द्विजै राज्याय राज्यं कर्तुं नियुज्यमानोपि महाबलो भरतः राज्यं नैच्छत् । एतेन भरतस्य परमसुभ्रातृत्वं बोधितम् । राज्यायात्र चतुर्थी "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति सूत्रविहिता । तुशब्दोऽप्यर्थे । मृत इति पाठस्तु सन्दर्भाशुद्ध्या न च कालवशानुग इत्यनेन विरोधाच्च न ऋषिप्रणीत इति प्रतीयते । सत्वे तु तस्मिन् प्रसिद्धे दशरथे मृते लोकान्तरं प्राप्ते सतीत्यर्थः । मृत इति आचारक्विबन्तप्रकृतिकक्तप्रत्ययान्तप्रकृतिकसप्तम्यन्तम् । किञ्च मृते मकारवाच्येषु जीवजातेषु ऋतः कृपा यस्य तस्मिन् लोककृपामूलकरामप्रेषणहेतुकसाकेतलोकप्राप्तिमति सतीत्यर्थः । सकारस्य जीववाचकत्वे प्रमाणम् "पञ्चविंशोयमात्मा" इति । श्रुतिः अतएव प्रणवार्थव्याख्याने 'अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृन्मकारार्थो जीवस्तदुपकरणं वैष्णवमिति' रामानुजाचार्यैर्व्याख्यातम् ॥ ३३ ॥

गो० टी०–गतेत्विति । तस्मिन् दशरथे गते सति स्वर्गप्राप्तिरपि नश्वरत्वेनानुपादेयेत्युक्तं । महाबलः राज्यभरणसमर्थः अतएव भरतः । भरतइति राज्यस्य भरणादित्युक्तरीत्या भावज्ञेन वसिष्ठेन भरत इति कृतनामा । वसिष्ठप्रमुखैर्द्विजैः वसिष्ठादिभिर्ब्राह्मणैः । राज्याय राज्यं कर्तुं नियुज्यमानः । "क्रियार्थोपपदस्य च कर्माणि स्थानिनः" इति चतुर्थी । राज्यं राजत्वं । "येचाभावकर्मणोः" इतिप्रतिषेधादनो न प्रकृतिभावः नैच्छन्नाभ्यलषत् । महाबलइत्यनेन सत्यामेव शक्तौ स्वरूपविरुद्धत्वाद्राज्यं नाङ्गीचकारेत्यवगम्यते । अतएव वक्ष्यति 'राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि । विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ कथं दशरथाज्जातो भवेद्राज्यापहारकः' इति ॥ ३३ ॥

३४ ] ति० टी०–राज्याय राज्यं कर्तुं तैर्नियुज्यमानः प्रेर्यमाणो महाबलः समर्थोऽपि सौभ्रात्राद्राज्यं नैच्छत् । ततो रामपादप्रसादकः पूज्यं रामं प्रसादयितुं वनं जगाम । पादशब्दः पूज्यवाची ॥ ३४ ॥

रा० टी०–सइति । रामपादप्रसादकः रामस्य पादौ प्रसादयति सः । किञ्च रामपादप्रसादादेव कं सुखं यस्य स वीरो भरतः वनं रामाधिष्ठितचित्रकूटारण्यं । जगाम रामपादप्रसादकइत्यनेन रघुनाथाङ्गानां चेतनत्वं भरतस्य प्रेमाधिक्यं च सूचितम् । तदङ्गानां चेतनत्वप्रतिपादिका "आनन्दरूपममृतं यद्विभाति तदा प्रणखादानन्दमेव सच्चिदानन्दात्मको भगवान् सच्चिदानन्दात्मिकास्य व्यक्तिः" इत्यादिः श्रुतिः । अर्द्ध पृथक् ॥ ३४॥

गो० टी०–सजगामेत्यर्द्धमेकं वाक्यम् । वीर्येण युक्तो वीरः । वीर्यमत्र शत्रुभूतरागादिजेतृत्वम् । विषयानाकृष्टचित्त इत्यर्थः । यद्वा ' एभिश्च सचिवैः सार्द्धं शिरसा याचितो मया । भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ' इत्युक्तरीत्या चतुरङ्गबलसहितः स भरतः रामपादप्रसादकः । पादशब्दः पूज्यवाची । ' पूज्ये तु पादनामाङ्कः ' इत्यमरः । प्रसादकः । " तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् " इति ण्वुल् । पूज्यं रामं प्रसादयितुमित्यर्थः । यद्वा रामचरणयोः प्रसादकः । रामस्यैव प्रसाद्यत्वेऽपि पादयोः प्रसाद्यत्वोक्तिः शेषभूतव्यवहारानुसारेण । राजानं द्रष्टुमिति वक्तव्ये राजपादौ द्रष्टुमिति हि भृत्यजनो व्यवहरति । वनं जगाम प्राप । वस्तुतो रामस्य कोपाभावेपि भरताय राज्यं दत्तमिति बुद्धिं निवर्तयितुमित्यर्थः । ' पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ' ॥ ३४ ॥

३५ ] ति० टी०–गत्वेति । स भरतो महात्मानं सत्यप्रतिज्ञत्वादिधर्मैर्महावैभवं भ्रातरं रामं गत्वार्यभावपुरस्कृतो विनीतवेषस्तं रामं राज्याय प्रतिनिवृत्तिमयाचत् । याचिर्द्विकर्मकः ॥ ३५ ॥

रा० टी०–गत्वेति । आर्ये रामे भावः परप्रीतिः पुरस्कृता प्रकटीकृता येन । किञ्च आर्यस्य भावः अतिचिन्तनं पुरस्कृतं येन स भरतः । सत्यपराक्रमम् अमोघवीर्यवन्तं महात्मानं महान्तः सर्वपराः आत्मानो धृत्यादयो यस्य तं भ्रातरं रामं गत्वा प्राप्य रामम् उक्तविशेषणविशिष्टमयाचदेव । अत्र रामविशेषणानामावृत्तिर्बोध्या । यद्वा रामस्य मा परमसम्पत्तिः सीता तस्यामार्यभावः श्रेष्ठत्वं पुरस्कृतं येन स भरतः सत्य-

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् । रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥ ३६ ॥
न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः । पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ॥ ३७ ॥
निवर्तयामास ततो भरतं भरताग्रजः । स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥

पराक्रमम् सत्यपरान्सत्यवक्तॄनाक्रमते प्राप्नोति स तम् । महात्मानम् मह्यते सर्वेश्वरैः पूज्यत इति महः आत्मा स्वरूपं यस्य तं भ्रातरं रामं गत्वा प्राप्यायाचदेव । अतएवान्यतररामपदस्य न निष्प्रयोजनत्वम् । तुशब्द एवार्थे ॥ ३६ ॥

गो० टी०—गत्वात्विति । अत्र स इत्यनुषज्यते । स आर्यभावपुरस्कृतः पुरस्कृतः आर्यभावः येन सः । आहिताग्न्यादित्वात्परनिपातः । यद्वा आर्यभावेन स्वस्यार्यभावेन पुरस्कृतः पूजितः । उचितमनेन क्रियत इति श्लाघित इत्यर्थः । 'पूजितः स्यात्पुरस्कृतः' इति बाणः । तथाविधः सन् सुमहान् आत्मा अन्तःकरणं यस्य तं सुमहात्मानं स्वतः प्रसन्नहृदयमित्यर्थः । सत्यपराक्रमं सत्ये पराक्रमोऽप्रच्युतत्वं यस्य तं रामं गत्वा तु प्राप्य तु विशेषोस्ति तस्याग्रे स्थितिरेवालं याचनमतिरिच्यत इति भावः । भ्रातरं राममयाचत प्रार्थयामास । स्वाभीष्टमिति शेषः । याचेर्द्विकर्मकत्वात्स्वरितेत्त्वादुभयपदी । क्रियाभेदाद्रामशब्दस्य न पुनरुक्तता ॥ ३६ ॥

३६-३७] ति० टी०—ननु पितृमातृदत्तं राज्यं तवैव योग्यमिति मम प्रतिनिवृत्तिरनुचितेत्यत्राह—त्वमेवेति । सर्वगुणश्रेष्ठे ज्येष्ठे सति कनिष्ठो न राज्यार्ह इति धर्मं त्वमेव जानासीति त्वमेव राजेति वचो राममब्रवीत् । रामोऽपि रमयतीति व्युत्पत्त्याश्रितचित्तरञ्जकोऽपि पितुरादेशाद्राज्यं नैच्छदित्युत्तरेणान्वयः । अत्र हेतुगर्भं विशेषणम् । परमोदारः स्वसुखसाधनस्य परस्मै दानमौदार्यं तद्युतः । सुमुखो राज्यादपि वनेऽम्लान्याधिकसुखप्रसादयुक्तः । सुमहायशाः प्रतिज्ञापालनरूपयशोभङ्गभिया नैच्छदिति कृतकृतः । तीर्थस्तु—परमोदारो याचकाभीष्टप्रदाननिरतोऽर्थिलाभेन प्रसन्नमुखः । सुमहायशा अर्थ्यवैमुख्येन प्रसिद्धकीर्तिरपि पित्राज्ञयैव भरतवाक्यं नैच्छदित्याह ॥ ३६ ॥ ततोऽस्य भरतस्य राज्याय राज्यरक्षणसामर्थ्यं लब्धुमहल्यादौ दृष्टशक्तिकाचिन्त्यवैभवस्वपदस्पृष्टे पादुके न्यासरूपेण दत्त्वा पुनःपुनः प्रतिनिवृत्तिं याचमानं भरतं चतुर्दशसमानन्तरं सर्वथा प्रतिनिवर्तितव्यमित्यभ्युपेत्य निवर्तयामास । अस्येति राज्यापेक्षया षष्ठी । दत्त्वेत्यत्र अस्मै इत्यर्थलभ्यम् । दत्त्वेत्यन्वयेऽपि संप्रदानस्य शेषत्वविवक्षया षष्ठीत्यन्ये । यत्तु निक्षेपे मुख्यदानाभावान्न चतुर्थी दत्त्वेत्यन्वयेऽपीति, तन्न । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति महाभाष्यप्रयोगविरोधात् ॥ ३७ ॥

रा० टी०—याचनमेवाह—त्वमेवेत्यर्द्धेन । हे धर्मज्ञ ! शास्त्रद्वारा ज्येष्ठस्यैव राज्याधिकार इत्यादिधर्मबोधकत्वमेव राजा भवेति वचः वचनं राममब्रवीत् । एतेन 'रामो द्विर्नाभिभाषते' इत्यादिशास्त्रप्रसिद्धानां रामगुणानां भरतस्य विस्मृतिरिति ध्वनितम् । तेन प्रेमप्रवाहप्राबल्यं सूचितम् । अर्द्धं पृथक् । रघुनाथवृत्तमाह—रामोपीत्यनेन । परमोदारः सर्वोदारशिरोमणिः । अतएव सुमुखः अदेयपदार्थयाचनश्रवणेऽपि प्रसन्नवदनः । अतएव सुमहायशाः परिपूर्णयशस्को महाबलो रामः पितुरादेशात्पित्राज्ञापनं संस्मृत्य न्यासं भरताय स्थापितं राज्यं भरतप्रार्थनयाऽपि नैवैच्छत् । ततोऽनन्तरमेव भरताग्रजो रामः राज्याय राज्यं कर्तुं पादुके अस्य अस्मै भरताय दत्त्वा भरतं पुनःपुनर्निवर्त्तयामास । चावेवार्थौ । अर्द्धचतुष्टयमेकान्वयि । पुनःपुनर्निवर्त्तयामासेत्यनेन भरतस्य रामवियोगासहिष्णुत्वं व्यक्तम् । राज्यं कर्तुं पादुके दत्त्वेत्यनेन पादुकयोश्चेतनात्वं ध्वनितम् ॥ ३६ ॥ ३७ ॥

गो० टी०—स्वाभीष्टमेवाह—त्वमेवेति । धर्मज्ञः ज्येष्ठे विद्यमाने न कनिष्ठो राज्यमर्हतीति धर्मं जानन् त्वमेव राजा नान्य इति रामं वचोऽब्रवीत् । "अकथितं च" इति द्विकर्मकत्वम् । ननु भरतकृता प्रपत्तिः कुतो नाफलत् । अधिकारवैगुण्याद्वा शरण्यवैगुण्याद्वा । नाद्यः अपेक्षातिरिक्तस्याभावात् । नान्त्यः तस्य सर्वगुणपरिपूर्णत्वादित्याशङ्क्य प्रबलप्रतिबन्धकस्य प्रारब्धस्य सद्भावात् न सा फलितेत्याह—रामोपीति । अपिशब्दः प्रतिविशेषणमन्वेति । रामोऽपि रमयतीति व्युत्पत्त्या स्वरूपगुणैराश्रितचित्तरञ्जनस्वभावोऽपि परमोदारोऽपि स्वपर्यन्तापेक्षितार्थप्रदोऽपि "य आत्मदा बलदा" इति श्रुतेः । सुमुखोपि अर्थिजनलाभेन प्रसन्नमुखोपि सुमहायशाः अपि 'नह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति' इत्युक्तरीत्या महाकीर्तिरपि महाबलोप्याश्रितमनोरथपूरणे निपुणोऽपि रामः पितुरादेशाद्बलवत्प्रतिबन्धकान्नैच्छत् चकारात्तदवसाने त्वैच्छदित्यर्थः । आदेशो नियोगः ॥ ३६ ॥ सर्वथा प्रपत्तेर्वैफल्यमनुचितमिति यावत्प्रतिबन्धकानिवृत्तिफलप्रतिनिधिं दर्शयतिस्मेत्याह—पादुकेचेति । चस्त्वर्थः । किंतु भरताग्रजः फलप्रदानोचितसंबन्धशीलः राज्याय राज्यं कर्तुं "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । अस्य भरतस्य पादुके न्यासं स्वप्रतिनिधिं दत्त्वा रामपादुके राज्यं कुरुतः अहं तयोः परिचारक इति भावयेति दत्त्वे[illegible] । पुनःपुनर्भरतं तस्मादेशान्निवर्त्तयामास । पुनःपुनरित्यनेन भरतस्य रामाविरहासहिष्णुत्वं द्योत्यते । स्वार्थत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वाभावान्न चतुर्थी । किंतु संबन्धसामान्ये षष्ठी ॥ ३७ ॥

३८ ] ति० टी०—स भरतो रामप्रतिनिवृत्तिरूपं काममनवाप्यैव रामपादौ नमस्कुर्वन्प्रतिनिवृत्त इति शेषः ॥ ३८ ॥

रा० टी०—सइति । स भरतः कामं प्रकटरघुनाथवियोगाभावमनवाप्य रामागमनकाङ्क्षया नन्दिग्रामे एव स्थित्वा रामपादौ तदुपलक्षितपादुके उपस्पृशन्राज्यमकरोत् । एतेन राज्यकरणे भरतस्य पादुकापारतन्त्र्यं बोधितम् । अर्द्धद्वयमेकान्वयि ३८

नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया । गते तु भरते श्रीमान्सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च । तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥ ४० ॥
प्रविश्य तु महारण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ ४१ ॥

---

गो० टी०–अथ प्रपन्नस्य यावत्प्रारब्धनिवृत्तिशेषिणि वृत्तिं दर्शयन्नाह–सकाममिति । स भरतः कामं रामकैङ्कर्यमनोरथमप्राप्यैव रामपादौ रामस्य पादुके । पादशब्दः पादुकोपलक्षकः । उपस्पृशन् प्रत्यहं सेवमानः सन् रामागमनकाङ्क्षया कदा राम आगमिष्यतीति प्रत्याशया चतुर्दशवर्षरूपप्रतिबन्धकमुत्तीर्य कदा रामकैङ्कर्यं लप्स्ये इति मनोरथमभिवर्धयन्नित्यर्थः । रामरहिततन्निवासस्थानिदुःसहतयाऽयोध्यां विहाय नन्दिग्रामे नन्दिग्रामाख्ये अयोध्यासन्निहिते कुत्रचित् ग्रामे राज्यमकरोत् तदाज्ञाकैङ्कर्यमकरोत् । परस्मैपदेन स्वस्य तस्मिन् फलत्वानिवृत्तिरवगम्यते ॥ ३८ ॥

३९-४० ] ति० टी०–ततो नमस्कृत्य प्रतिनिवृत्तो नन्दिग्रामे स्थित्वा रामश्चतुर्दशवर्षान्तरूपप्रतिज्ञातसमयानन्तरं राज्यायागमिष्यतीति रामागमनकाङ्क्षया पादुके पुरस्कृत्य राज्यमकरोत् । उत्तरार्धं स्पष्टम् ॥ ३९ ॥ रामइति । उक्तगुणविशिष्टो रामस्त्वत्यासन्नतया नागरस्य मन्त्रिवृद्धादिपौरजनस्य भरतस्य च तत्र चित्रकूटे आगमनमालक्ष्य संभाव्य तेषां प्रतिनिवर्तनप्रयासाद्दूरमितोऽपि दुरगमनमिति संचिन्त्य दण्डकान्दण्डकारण्यानि । अवान्तरबहुत्वाद्बहुवचनम् । तेषां रक्षघोरादिभूयिष्ठत्वादेकाग्रः सज्जो भूत्वा प्रविवेश । हेति प्रसिद्धौ॥४०॥

रा० टी०–अयोध्याकाण्डार्थमुक्त्वाऽरण्यकाण्डार्थं वक्तुमुपक्रमते। गतेत्वित्यादिना। भरते गते सत्येव श्रीमान्तापससंपद्विशिष्टः । तत्र हेतुः सत्यसन्धः सत्यप्रतिज्ञः अतएव जितेन्द्रियः अतएव एकाग्रः नियतवृत्तिः किञ्च एकां मुख्यां समाधिकरहितां गतिं एति ददातीति एकाग्रः परमपुरुषार्थदाता । रामस्तु नागरस्य नगरोद्भवस्य जनस्य साधारणस्येत्यर्थः । चेन भरतादेरपि पुनस्तूर्णं गमनं स्यादित्यालक्ष्य विचार्य दण्डकान् दण्डकारण्यानि तूर्णमेव प्रविवेश तदन्तर्गतवनानां बहुत्वाद्बहुवचनम्। एतेन पुनर्गमने तेषां श्रमः स्यादिति हेतुर्व्यक्तः। तेन तच्छ्रमासहिष्णुत्वं रघुनाथस्य सूचितम्। परमपुरुषार्थदाता इत्यनेन परमपुरुषार्थदानार्थमेवैतत्प्राकट्यादिकमिति ध्वनितम्। तेन परमपुरुषार्थाकाङ्क्षिभिरयमेवाश्रयणीय इत्युपदेशो व्यञ्जितः।सार्धश्लोक एकान्वयी। तुहशब्दावेवार्थौ ॥ ३९ ॥ ४० ॥

गो० टी०–अयोध्याकाण्डप्रतिपाद्यपितृवचनपरिपालनसिद्धिं निगमयन्नुत्तरकाण्डार्थं प्रस्तौति–गतेत्विति । अत्रार्धत्रयमेकं वाक्यम् । भरते तु विशेषोस्तीति तमेवाह । श्रीमान् प्रतिज्ञाभङ्गभयजनितविषादविगमादुत्पन्नकान्तिविशेषः सत्यसन्धः भरतनिर्बन्धेनाप्यविचाल्यप्रतिज्ञः । ‘सन्धा प्रतिज्ञा मर्यादा’ इत्यमरः । जितेन्द्रियः मातृभरतादिप्रार्थनाव्याजे सत्यपि राज्यभोगलौल्यरहितः रामः । नगरे भवो नागरः । “तत्र भवः” इत्यण् । तस्य जनस्य तत्र चित्रकूटे पुनरागमनमालक्ष्य आलोच्य चकारादृषिविप्रकारदर्शनाच्च तत्प्रदेशं विहाय एकाग्रः पितृवचनपालने दत्तावधानो विरोधिभूयिष्ठदेशत्वेन सावधानो वा दण्डकान् प्रविवेश । हेति विषादे । ‘एकसर्गोऽनन्यवृत्तिरेकाग्रैकायनावपि’ इति वैजयन्ती । सीतालक्ष्मणयोश्च प्रवेशोऽर्थसिद्धः । दण्डकस्य राज्ञो जनपदो दण्डकः । “तस्य निवासः” इत्यण् “जनपदे लुप्” इति लुप् । शुक्रशापेन वनतां प्राप्तः । कुत्सायां कन् । अवान्तरवनबहुत्वाद्बहुवचनम् । वक्ष्यत्युत्तरकाण्डे ‘शप्तो ब्रह्मर्षिणा तेन पुरा वै दण्डको हतः । ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ॥ तपस्विनः स्थिता यत्र जनस्थानमतोऽभवत्’ इति । दण्डकामिति पाठे दण्डको नाम राजाऽस्यामटव्यामस्तीति दण्डका । “अर्शआदिभ्योऽच्” इत्यच्प्रत्ययः । ततष्टाप् । क्षिपकादित्वान्नेत्वम् । एवमयोध्याकाण्डवृत्तान्तसंग्रहेण पितृवचनपरिपालनरूपसामान्यधर्मः शेषभूतस्य शेषिविषयकैङ्कर्यवृत्तिः प्रपन्नस्य भगवत्पारतन्त्र्यं प्रदर्शितम् । शत्रुघ्नवृत्तान्तप्रदर्शनेन तस्य भागवतपारतन्त्र्यं च सूचितम् ॥ ३९ ॥ ४० ॥

४१ ] ति० टी०– प्रविश्येति । महारण्यमित्यरण्यकाण्डकथासंग्रहः । राजीवं पद्मम् । अनेन राक्षसयुद्धारम्भकृतहर्षो ध्वनितः । शरभङ्गाख्या ऋषयः ॥ ४१ ॥

रा० टी०–अरण्यप्रवेशानन्तरं यद्वृत्तं तदाह–प्रविश्येत्यादिना । राजीवलोचनः पद्मपत्रविशालाक्षः रामः महारण्यं प्रविश्य । तुशब्देन शोभावलोकनादिकं च कृत्वा विराधं तन्नामकराक्षसं हत्वा शरभङ्गं तन्नामकमृषिं ददर्श । हशब्देन तदनुज्ञया सुतीक्ष्णं च अगस्त्यं च अगस्त्यभ्रातरम् इध्मवाहनामानं च तथातिप्रीत्या ददर्श । सार्धश्लोकएकान्वयी। अगस्त्यं च अगस्त्यभ्रातरमित्यत्र सन्ध्यभावस्तु संहिताया अविवक्षया । अपिश्चार्थे ॥४१॥

गो० टी०–अथ ब्राह्मणेषु विशिष्य सत्यप्रतिज्ञत्वप्रतिपादनपरमारण्यकाण्डवृत्तान्तं संगृह्णाति–प्रविश्येत्यादिना । रामो महारण्यं दण्डकारण्यं प्रविश्य । तु विशेषोस्ति तमाह । राजीवलोचनः अपूर्वसंस्थानविपिनविलोकनजनितकुतूहलेन विकसितनयनारविन्दः सन् तेनैवोत्साहेन विराधं राक्षसं हत्वा तद्धनमुपहारीकृत्य शरभङ्गं ददर्श । हेत्यैतिह्ये । तदनुज्ञया सुतीक्ष्णं चापीत्येकनिपातः समुच्चयार्थकः । अगस्त्यमगस्त्यभ्रातरं ददर्श । तथेति समुच्चये । अगस्त्यभ्राता सुदर्शनाख्यः । तदुक्तं सनत्कुमारसंहितायामगस्त्येन ‘यवीयानेष मे भ्राता सुदर्शन इति स्मृतः’ इति । कुम्भसम्भवस्यागस्त्यस्य भ्राता सहपोषणादिति बोध्यम् । अगस्त्यं च अगस्त्यभ्रातरमित्यत्र सन्धिकार्याभावो वाक्ये संहिताया अनित्यत्वात् । तथोक्तं ‘पदेषु संहिता नित्या

सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा । अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ । वसतस्तस्य रामस्य वने वनचरैः सह ॥ ४३ ॥
ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् । स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ४४ ॥

नित्या धातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति ॥ ४१ ॥

४२ ] ति० टी०—चापीति निपातसमुच्चयः पद्यपूरकः। अगस्त्यभ्रातेध्मवाहननामेति केचित् । 'ततो मुनेरगस्त्यस्य भ्रातागस्त्य इति श्रुतः। स चिन्वन्कानने वन्यं सखीभिः कोपितोऽशपत्' इति मार्कण्डेयपुराणे श्रूयते । दिव्यं धनुरादिकं कार्याय प्रतिगृहाणेत्येवं रूपादगस्त्यवचनात् । ऐन्द्रमिन्द्रादगस्त्यस्यागतं शरासनं धनुर्जग्राह । पूर्वं भार्गवं जित्वा ततः प्राप्तं यद्वैष्णवं धनुर्भगवता रामेण वरुणे न्यस्तं तदिन्द्रेण वरुणादानीयागस्त्ये स्थापितमित्यग्रेऽरण्यकाण्डे स्फुटम् । यद्वेन्द्रा विष्णुः ॥ ४२ ॥

रा० टी०—अगस्त्येति। अगस्त्यवचनात् अगस्त्याज्ञात एव। ऐन्द्रम् इन्द्रदत्तं शरासनं धनुः ऐन्द्रं खड्गं च ऐन्द्रौ अक्षयसायकौ न क्षयौ नाशाभावौ सहस्रशः क्षेपेऽपि येषां ते अक्षयास्सायकाः ययोस्तौ तूणी निषङ्गौ च। परमप्रीतः सन्नेव जग्राह। परमप्रीत इत्यनेनागस्त्यसम्माननं ध्वनितम्। एकश्चकार एवार्थे। अर्द्धद्वयमेकान्वयि ॥ ४२ ॥

गो० टी०—अगस्त्येति। अत्र राम इत्यनुषज्यते। रामः परमप्रीतः सन्। जगदेकवीरस्य स्वस्य सदृशायुधजाललाभाद्भृशं संतुष्टः सन् अगस्त्यवचनादेव न तु स्वाभ्यर्थनात्। ऐन्द्रमिन्द्रेण दत्तं "तस्येदम्" इति सबन्धसामान्येऽण्। 'दत्तो मम महेन्द्रेण' इति वक्ष्यमाणत्वात्। इदं शरासनादित्रयसाधारणं विशेषणम्। शरा अस्यन्ते क्षिप्यन्तेऽनेनेति शरासनं धनुः तच्च। खड्गं च अक्षयसायकौ समरसीम्नि सहस्रशो विनियोगेप्यक्षयशरौ तूणी निषङ्गौ जग्राह स्वीकृतवान् । वचनाज्जग्राहेत्यनेन खड्गादिकमगस्त्यो न स्पृष्टवान् किंतु निर्दिष्टवानित्युच्यते ॥ ४२ ॥

४३-४४ ] ति० टी०—खड्गंचेति। अनुरूपनिजायुधलाभात्परमप्रीतः। अक्षयाः सायका बाणा ययोस्तौ। तूणी इषुधी। वनचरैर्वानप्रस्थैः ॥ ४३ ॥ ऋषयइति। तद्वने वसतो रामस्यान्तिकमसुराः कबन्धादयो रक्षांसि खरादयस्तेषां वधाय वधं प्रार्थयितुं सर्वे ऋषयोऽभ्यागमन्। स रामस्तेषां राक्षसानां वधं तस्मिन्वने तेभ्यो ऋषिभ्यः प्रतिशुश्राव । प्राप्तकालमसुररक्षो योधयिष्ये नोपेक्षिष्य इति तद्वचोऽङ्गीकृतवा नित्यर्थः ॥ ४४ ॥

रा० टी०—वसतइति। वनचरैःवानप्रस्थैः सह वने वसतस्तस्य रामस्य समीपम् असुररक्षसाम् असुराः कबन्धादयः रक्षांसि खरादयः ते च तानि चेति द्वन्द्वः। अत्र पक्षे विभीषणव्यावृत्तिस्तु रामभक्तत्वेन विभीषणस्य राक्षसत्वाभावात्। कबन्धस्याऽसुरत्वंतु 'श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण। एवमुक्तस्तु धर्मात्मा दनुनानेन राघव' इत्यादिनावगम्यते । यदि च 'त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः। भीषणोयं महाकायो राक्षसो भुजविक्रमः॥ एतत्सञ्जल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः'। कबन्धं नामराक्षसमित्याद्युक्तिः तस्मिन् राक्षसत्वस्यैव निश्चयस्तदा पूर्वोदाहृतवाक्ये दनोर्दनुनामकराक्षसस्येत्यर्थः। दनुना दनुनामकस्वपितृसदृशेनेत्यर्थः। किञ्च दैत्यपुत्रत्वेपि कर्मजनितराक्षसत्वस्य सत्वे बाधकाभावेन न कश्चिद्विरोधः। एवं चाऽयमर्थः। असुराः सुरविरुद्धान्येव रक्षांसीति कर्मधारयः। तेन विभीषणव्यावृत्तिः। युक्तश्चायमेवार्थः। राक्षसानां तदा वने वधःसंयति रक्षसामित्याद्यनुरोधात् । एवं च यद्यसुरवधोप्युपलभ्येत तर्हि तत्र कर्मणा राक्षसत्वं बोध्यम्। तेषां वधाय वधं प्रार्थयितुं सर्वे वनस्था ऋषयोऽभ्यागमन्। असुररक्षांसीत्यनेन विभीषणभक्तिस्सर्वर्षिज्ञानविषयीभूतेति ध्वनितम्। तदा तस्मिन्काले वने स्थितः। किञ्च अवने सर्वरक्षणे प्रवृत्तः स रघुनाथः राक्षसानां संबन्धि तेषामृषीणां प्रार्थनावचनं प्रतिशुश्राव अङ्गीचकार। किञ्च तेषामृषीणांप्रति प्रत्येति प्रत्यापयति बोधयत्यर्थमिति वचनम्। प्रतिपूर्वकइण् धातुप्रकृतिकक्विबन्तप्रयोगः। नपुंसकत्वाद्ध्रस्वत्वम्। आगमशास्त्रस्यानित्यत्वात्तुगभावः। गत्यर्थकदीर्घप्रकृतिकक्विबन्तो वा। गत्यर्थानां ज्ञानार्थकत्वं प्रसिद्धमेव। अतएवानेन प्रतिज्ञातश्चेत्यस्य न पौनरुक्त्यम्। अन्यथा प्रतिपूर्वकश्रुधातोः प्रतिज्ञातार्थकत्वेन तद्रुपपादं स्यात्। सार्द्धश्लोक एकान्वयी। अवने इति व्याख्यानात्प्रथमोच्चारितवनेनास्य न निष्प्रयोजनकत्वम्। राक्षसानामपि वधव्याजेन मोक्षदायकत्वात्सर्वसंरक्षकत्वं । रघुनाथे सुवचमेव। अतएव समत्वप्रतिपादिकाः श्रुतयस्सानुकूलाः तेन रघुनाथस्य निर्हेतुकदयालुत्वं सूचितम् ॥ ४३–४४ ॥

गो० टी०—एवं विरोधिनिरसनानुकूल्यदर्शनलब्धावसरमुनिजनाभ्यर्थनमाह—वसतइति। वने शरभङ्गवने तस्य वसतः तस्मिन्वसतीत्यर्थः। षष्ठीचेति योगविभागात् "यस्य च भावेन भावलक्षणम्" इत्यस्मिन्नर्थे षष्ठी। यद्वा षष्ठ्यर्थसंबन्धसामान्यस्य उक्तविशेषे पर्यवसानं। 'शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः' इतिवक्ष्यमाणत्वाच्च शरभङ्गवन इति सिद्धं। सर्वे वैखानसवालखिल्यादय ऋषयः शरभङ्गाश्रमवासिनो वनचरैश्चित्रकूटपम्पावनप्रभृतिवनवासिभिः सह। वक्ष्यति 'पम्पावननिवासानामनुमन्दाकिनीमपि। चित्रकूटालयानां च क्रियते कदनं महत्' इति। यद्वा वनचरैः सह वने वसतस्तस्य। "षष्ठी चानादरे" इत्यनादरे षष्ठी । सविशेषणेहातिन्यायेन तस्य वने वासमनादृत्येत्यर्थः। वक्ष्यतिहि 'ते वयं भवता रक्ष्या भवद्विषयवासिनः। नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर' इति।

प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् । ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४५ ॥
तेन तत्रैव वसता जनस्थाननिवासिनी । विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४६ ॥
ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् । खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ४७ ॥

यद्वा वने वसतस्तस्य समीपमित्युपस्कार्यम् । आसुराणि असुरप्रकृतीनि रक्षांसि । अनेन 'विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः' इत्युक्तविभीषणव्यावृत्तिः । यद्वा असुराश्च रक्षांसि चेति द्वन्द्वः । असुराः कबन्धादयः । तत्र दनुशब्दप्रयोगात् । यद्वा असून्प्राणान्रान्ति गृह्णन्ति इत्यसुराणि । असुराणि च तानि रक्षांसि चेति कर्मधारयः । तेषां वधाय वधं कारयितुं प्रार्थयितुं वा । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । अभ्यागमन् अभिमुखतया आगताः । नह्यभिमुख्यादन्यच्छरणागतिर्नामास्ति । 'सत्तु कार्यवतां पुंसामलमेवाग्रतः स्थितिः'। यद्वा असुररक्षसां वने वसतस्तस्य असुररक्षसां वधायाभ्यागमन्नित्युभयत्राप्यन्वयः । काकाक्षिन्यायान्मध्यमणिन्यायाद्वा ॥ ४३ ॥ मुनीनां दुर्दशामालोक्य तद्विरोधिनिरसनं प्रतिज्ञातमित्याह—सतेषामिति । स रामः राक्षसानां वने दण्डकारण्ये तेषामृषीणां तथा प्रतिशुश्राव । यथा तैरर्थितं तथा प्रतिजज्ञे इत्यर्थः । 'आश्रवः सङ्गरः सन्धा प्रतिश्रवः संश्रवः प्रतिज्ञा च' इति हलायुधः ॥ ४४ ॥

४५ ] ति० टी०—प्रतिज्ञात इति । अग्निकल्पानामग्निसदृशानामृषीणाम् । सन्निधाविति शेषः । अपेक्षित इति वा शेषः । संयति युद्धेऽचिन्त्यामितनिजशक्तिवैभवाद्रक्षसां वधः प्रतिज्ञातश्चेति संबन्धः ॥ ४५ ॥

रा० टी०—ऋषिवचनश्रवणानन्तरं रामवृत्तमाह—प्रतिज्ञातश्चेत्यादिना । अग्निकल्पानाम् अग्निसदृशानाम् परमतेजस्विनामित्यर्थः । किञ्च अग्निवत्कल्पन्ते इत्यग्निकल्पाः अग्निसदृशसामर्थ्यवन्तः । यथाग्निः स्वसंबन्धमात्रेण तूलादीनां भस्म करोति तथा स्वदर्शनदानमात्रेण जनपापभस्मकर्तारः । किञ्च अग्निं कल्पयन्ति प्रकल्पयन्ति विधिना प्रतिदिनं संस्कुर्वन्तीत्यग्निकल्पाः अग्निहोत्रिणः तेषां दण्डकारण्यवासिनामृषीणां सन्निधावेव । रक्षसाम् राक्षसानां वधः संयति सङ्ग्रामे रामेण प्रतिज्ञातः । च शब्दएवार्थे ॥ ४५ ॥

गो० टी०—मुनिभिरर्थितो रामेण प्रतिज्ञातश्च कोर्थ इत्यत्राह—प्रतिज्ञातश्चेति । रामेण प्रतिज्ञातोर्थस्तु अग्निकल्पानामीषन्न्यूनमग्निसादृश्यं प्राप्तानाम् "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । अतएव दण्डकारण्यवासिनामृषीणामित्यत्र चतुर्थ्यर्थे षष्ठी । संयति युद्धे 'समुदायः स्त्रियां संयत् समित्याजिसमिद्युधः' इत्यमरः । रक्षसां वधः "कर्तृकर्मणोः कृति" इति कर्मण्यर्थे षष्ठी । प्रतिज्ञातं त्विति पाठे सामान्ये नपुंसकम् । प्रतिज्ञातं वस्तु वध इत्यर्थः ॥ ४५ ॥

४६ ] ति० टी०—तेनेति । तेन रामेण तत्रैव दण्डकारण्यदक्षिणप्रदेशवर्तिपञ्चवट्याश्रमे जनस्थानं नाम दण्डकारण्ये रावणस्य बलनिवेशस्थानम् । कामरूपिणीच्छया नानारूपधारिणी । यद्वा पुंसां काम्यमानरूपवती । विरूपिता कर्णनासाछेदेन वैरूप्यं प्रापिता । शूर्पणखेत्यत्र "नखमुखात्संज्ञायाम्" इति ङीष् निषेधः । "पूर्वपदात्संज्ञायाम्–" इति णत्वम् । विरुद्धं रूपं विरूपं तत्सञ्जातमस्या इति तारकादित्वादितच् ॥ ४६ ॥

रा० टी०—प्रतिज्ञाकरणानन्तरकालिकं वृत्तमाह—तेनेति । तत्रैव दण्डकारण्यदक्षिणप्रदेशवर्तिपञ्चवट्याश्रमे एव वसता तेन रामेण जनस्थाननिवासिनी जनस्थाने रावणबलनिवेशस्थले निवसनशीला । कामरूपिणी कामं स्वेच्छाविषयीभूतं रूपमस्त्यस्याः सा राक्षसी शूर्पणखा प्रयोज्यभूतलक्ष्मणेन विरूपिता नासिकाच्छेदेन कुत्सितरूपं प्रापिता । कामरूपिणीत्यत्र असुब्वत इति भाष्यप्रयोगोक्तदिशा लाघवमूलककर्मधारयात्र मत्वर्थीय इति निषेधाप्रवृत्तिः । शूर्पणखेत्यत्र "पूर्वपदात्संज्ञायाम्" इति णत्वम् । "नखमुखात्संज्ञायाम्" इति ङीषभावः ॥ ४६ ॥

गो० टी०—अथ प्रतिज्ञानिर्वाहबीजमुपक्षिपति—तेनेति । तत्रैव जनस्थाने वसता तेन रामेण जनस्थाने निवसतीति जनस्थाननिवासिनी "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः । कामेनेच्छया रूपमस्या अस्तीति कामरूपिणी । शूर्पतुल्या नखा यस्याः सा शूर्पणखा "पूर्वपदात्संज्ञायामगः" इति णत्वम् "नखमुखात्संज्ञायाम्" इति ङीषप्रतिषेधः । शूर्पणखाख्या राक्षसी विरूपिता कर्णनासिकाच्छेदेन वैरूप्यं प्रापिता । 'रामस्य दक्षिणो बाहुः' इति लक्ष्मणस्य रामबाहुत्वाद्रामस्य विरूपकरणकर्तृत्वोक्तिः । शूर्पनखीतिपाठे न सा संज्ञा ॥ ४६ ॥

४७ ] ति० टी०—तत इति । ततस्तद्वैरूप्यकरणानन्तरम् । सर्वराक्षसान् जनस्थाननिवासिन इति शेषः । उद्युक्तान्युद्धार्थं सन्नद्धान् ॥ ४७ ॥

रा० टी०—तत इति । ततः शूर्पणखाविरूपकरणानन्तरमेव शूर्पणखावाक्यात् । शूर्पणखोक्तवृत्तश्रवणादेव उद्युक्तान् कृतयुद्धोद्यमान्सर्वराक्षसान् जनस्थाननिवासिनिखिलरक्षांसि तत्र विशिष्टं खरं त्रिशिरसं च दूषणं च राक्षसं तेषां पदानुगाननुचरांश्च रणे एव रामो निजघान । सार्द्धश्लोक एकान्वयी ॥ ४७ ॥

गो० टी०—ततइत्यादि । सार्द्धश्लोकमेकं वाक्यम् । ततः शूर्पणखावैरूप्यकरणानन्तरं शूर्पणखावाक्यादुद्युक्तान् युद्धार्थं सन्नद्धान् सर्वराक्षसान् चतुर्दशसहस्रसंख्याकप्रधानराक्षसान् । तेष्वपि प्रधानं 'खरं त्रिशिरसं चैव दूषणं चैव राक्षसम्' चैवेतिनिपातद्वयसमुदायः समुच्चयार्थः । तेषां पूर्वोक्तानां राक्षसानां खरादीनां च पदानुगान् अनुचरांश्च रणे युद्धे निजघान हतवान् । यद्वा खरादीन् तेषां पदानुगान् सर्वराक्षसांश्च निजघानेति योजना ॥ ४७ ॥

निजघान रणे रामस्तेषां चैव पदानुगान् । वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥
रक्षसां निहतान्यासन्सहस्राणि चतुर्दश । ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ४९ ॥
सहायं वरयामास मारीचं नाम राक्षसम् । वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ ५० ॥
न विरोधो बलवता क्षमो रावण तेन ते । अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥
जगाम सहमारीचस्तस्याश्रमपदं तदा । तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥

४८ ] ति० टी०—पदानुगाननुचरान् । निवसता । रामेणेति शेषः । उत्तरश्लोकान्वयी ॥ ४८ ॥

रा० टी०—हतराक्षससंख्यां बोधयन्नाह—वने इत्यनेन । तस्मिन्वने निवसता रघुनाथेन जनस्थाननिवासिनां रक्षसां चतुर्दश सहस्राणि चतुर्दशसहस्रसङ्ख्यासङ्ख्यातानि निहतान्यासन् । रक्षसामित्यत्र षष्ठी राहोः शिर इतिवद्बोध्या । किञ्च रक्षसांमध्ये यानि चतुर्दशसहस्राणि जनस्थाने रावणेन नियुक्तानि तानि निहतान्यासन् । सङ्ख्यापरतया व्याख्यानेऽपि सङ्ख्येयवधं सङ्ख्यायामारोप्य सङ्ख्यावध इतिबोध्यम् । परन्तु सङ्ख्येयपरत्वेन व्याख्याने 'दशवर्षसहस्राणि दशवर्षशतानि च' इत्यत्र वक्ष्यमाणदिशा सहस्राणि चतुर्दशेत्यस्य द्विचत्वारिंशत्सहस्रसङ्ख्या सङ्ख्यातानि रक्षांसीति बोध्यम् । सङ्ख्यापरतया व्याख्याने तु चतुर्दशसहस्रसङ्ख्यासङ्ख्यातानीति बोध्यम् । सङ्ख्यापरत्वेन बहुवचनानुपपत्त्यभावात् । तथा च कोशः 'विंशत्याद्यास्सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः । सङ्ख्यायां द्विबहुत्वे स्त' इत्यादिः । अर्धद्वयमेकान्वयि ४८

गो० टी०—हतान् राक्षसान् परिसङ्ख्टे—वनइति । तस्मिन्वने निवसता रामेणेत्यनेनासहायत्वं दर्शितम् । जनस्थाननिवासिनामित्यनेनारण्यवर्तित्वेनातिघोरत्वमुक्तम् । रक्षसां चतुर्दशसहस्राणीति यौगपद्यमुक्तम् । निहतानीति निःशेषत्वमुच्यते । सहस्राणीति संख्यासंख्येययोरभेदेन निर्देशः । चतुर्दशसहस्रसंख्याकानि सैन्यानि वा ॥ ४८ ॥

४९ ] ति० टी०—रक्षसामिति । चतुर्दशसहस्राणि तत्सङ्ख्यासङ्ख्यातानि । सैन्यानीति शेषः । ज्ञातयः खरादयः । खरादयो हि रावणस्य वैमात्रेयाः । श्रुत्वा । शूर्पणखामुखादिति शेषः । मूर्च्छितो व्याप्तचित्तः ॥ ४९ ॥

रा० टी०—तत इति । ततो रघुनाथकृतराक्षसवधानन्तरं ज्ञातिवधं राक्षसध्वंसं रावणः श्रुत्वा । शूर्पणखावाक्यादिति शेषः । क्रोधमूर्छितः क्रोधव्याप्तचित्तोऽभवदित्यस्याध्याहारः । अर्धं पृथगन्वयि ॥ ४९ ॥

गो० टी०—एवं रामस्य सत्यप्रतिज्ञत्वे दर्शिते सीतायाः पुरुषकारत्वं वक्तुं बीजमुपक्षिपति—ततइति । ततः खरादिवधानन्तरं ज्ञातिवधं खरवधम् । खरस्य ज्ञातित्वं स्वमातृष्वसर्विश्रवसो जातत्वादित्यारण्यपर्वणि व्यक्तम् । श्रुत्वा अकम्पनशूर्पणखामुखेन ज्ञात्वा । रावणः रौति रावयतीति रावणः । वक्ष्यत्युत्तरकाण्डे 'यस्माल्लोकत्रयं चैतद्रवतो भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना तेन भविष्यसि' इति । यद्वा विश्रवसोऽपत्यं रावणः शिवादिगणे विश्रवसो विश्रवणरवण इति पाठाद्रवणादेशः अण् च । क्रोधमूर्छितः क्रोधेन मूर्छितः मूढः 'मूर्छितौ मूढसोच्छ्रयौ' इति वैजयन्ती । नचायं मूर्च्छतेर्निष्ठा मूर्त इति तद्रूपत्वात् । किंतु मूर्च्छाऽस्य संजातेति मूर्छितः तारकादित्वादितच् । मारीचं नाम राक्षसं सहायं वरयामास ॥ ४९ ॥

५०–५२ ] ति० टी०—क्रोधेन व्याप्तः स रावणो मारीचेन बहुशो बहुवारं परदारहरणस्य परमाधर्मत्वं बलवद्विरोधस्य निजनाशान्तत्वम् । अतस्तेन रामेण बलवता विश्वामित्राश्रमे मदनुभूतबलेन ते तव विरोधो न क्षमो न युक्तो न हितश्चेति वार्यमाणोऽपि मारीचं नाम प्रसिद्धं राक्षसं सीताहरणे सहायं वरयामास । 'वृञ् वरणे' इति स्वार्थे ण्यन्तोऽपि ॥ ५० ॥ नेति । पूर्वार्धं पूर्वान्वयि । कालचोदितो मृत्युप्रेरितो रावणस्तद्वाक्यं मारीचवाक्यं त्वनादृत्य ॥ ५१ ॥ सहमारीचो मारीचसहितः । "वोपसर्जनस्य" इति विकल्पात्सहस्य सादेशाभावः । तस्य खरादिहन्तृत्वेन प्रसिद्धस्य रामस्याश्रमपदमाश्रमस्थानं जगाम । ततस्तेन मायाविना मारीचेन तौ नृपात्मजौ रामलक्ष्मणौ दूरमपवाह्यापसार्य ॥ ५२ ॥

रा० टी०—सहायमिति । हे रावण ! बलवता तेन रामेण समं ते तव विरोधः त्वत्कर्तृको द्रोहः न क्षमः न युक्तः । एवं बहुशः बहुप्रकारवचनैः मारीचेन वार्यमाणः स रावणः कालचोदितः कालवशः सन् तद्वाक्यं मारीचोपदेशमनादृत्य मारीचं नाम तमेव राक्षसं सहायं वरयामास । सहायत्वेन स्वीचकारेत्यर्थः । तदा मारीचसाहाय्यस्वीकारकाले सहमारीचः मारीचसहितो रावणः तस्य रघुनाथस्य अश्रमपदम् अश्रमं श्रमनिवर्तकं पदं स्थानं जगाम । तदा तस्मिन्काले तेन मायाविना मारीचेन नृपात्मजौ नित्यराजसुतौ रामलक्ष्मणौ दूरमपवाह्य अपसार्य जटायुषं गृध्रं हत्वा निहतप्रायं कृत्वा रामस्य भार्यां जहार लङ्कां प्रापयामास । रावण इतिशेषः । सार्धश्लोकत्रयमेकान्वयि । तदेतदुभयान्वयि ॥ ५०–५२ ॥

गो० टी०—वार्यमाणइति । अत्रान्ते इतिकरणं द्रष्टव्यम् । स रावणः । हे रावण ! ते बलवता खरादिषु दृष्टापदानवता । बलीयसा तेन रामेण विरोधो न क्षमो न युक्तः । 'क्षमस्त्रिषु हिते योग्ये युक्ते शक्तौ पटावपि' इति शब्दरत्नाकरे । इति सुबहुशो मुहुर्मुहुः वार्यमाणोऽभूत् ॥ ५० ॥ अनादृत्येति । रावणः कालचोदितः कालेन मृत्युना प्रेरितः सन् तद्वाक्यं मारीचवाक्यमनादृत्य सहमारीचः मारीचसहितः । "तेनसहेतितुल्ययोगे" इति समासः । "वोप-

जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् । गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः । ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥
मार्गमाणो वने सीतां राक्षसं संददर्श ह । कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥

सर्जनस्य" इति सहशब्दस्य सभावाभावः । तदा तस्मिन्नेव काले तस्य खरदूषणादिहन्तृत्वेन प्रसिद्धस्य रामस्य आश्रमपदमाश्रमस्थानम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । जगाम प्राप ॥ ५१ ॥ तेनेति । मायाविना प्रशस्तमृगमायावता । "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । लोभनीयविचित्रकनकमृगवेषधारिणेत्यर्थः । तेन मारीचेन प्रयोज्येन नृपात्मजौ दशरथपुत्रौ दूरं यथा भवति तथा अपवाह्य अपसार्य दृश्यादृश्यतया रामं रामस्वरतुल्यस्वरेण लक्ष्मणं च दूरं निःसार्येत्यर्थः । मध्ये सीताविमोचनाय प्राप्तं जटायुषं जटायुर्नामकं गृध्रं हत्वा मरणपर्यवसायिनीं हिंसां कृत्वा रामस्य भार्यां नित्यानपायिनीं सीतां जहार हृतवान् । अत्रास्यं व्यादाय स्वपितीतिवदपूर्वकाले क्त्वा प्रत्ययः । सीतां हृत्वा जटायुषं जघानेत्यर्थः । अत्र मायानिर्मिता सीतैवापहृता स्वयमग्नावन्तर्हिता अतएव मायासीतायामग्निप्रविष्टायां निजसीताया उत्थानं यथाकथंचिल्लोकापवादात्पुनः संत्यागश्चोपपद्यते इत्याहुः ॥ ५२ ॥

५३ ] ति० टी०-जहारेति । हत्वा हतप्रायं कण्ठगतप्राणं कृत्वा रामस्य भार्यां जहारेति संबन्धः । निहतं निहतप्रायम् । श्रुत्वा । गृध्रमुखादिति शेषः ॥ ५३ ॥

रा० टी०-सीताहरणोत्तरकालिकं वृत्तमाह-गृध्रं चेत्यादिना । सीतान्वेषणसमय इति शेषः । गृध्रं जटायुषं निहतं च निहतमिव । चशब्द इवार्थे । दृष्ट्वा तन्मुखान्मैथिलीं हृतां च श्रुत्वा शोकसन्तप्तः सम्भोगपोषकप्रकटसीताविरहजन्यदुःखाक्रान्तः अतएवाकुलेन्द्रियो राघवः विललाप । अर्द्धद्वयमेकान्वयि ॥ ५३ ॥

गो० टी०-गृध्रंचेति । मृगरूपमारीचहननं पर्णशालायां सीताया अदर्शनेन तदन्वेषणं च चकारेण समुच्चीयते । निहतं मुमूर्षुं गृध्रं जटायुषं दृष्ट्वा तद्वचनान्मैथिलीं सीतां हृतां रावणेनापहृतां श्रुत्वा राघवः शोकेन सन्तप्तः सम्यक् तप्तः सन् सीताया अदर्शनेन तप्तः जटायोर्मरणेन सुतरां तप्तः । अतएव व्याकुलेन्द्रियः कलुषितसर्वेन्द्रियः सन् विललाप परिदेवनमकरोत् । 'विलापः परिदेवनम्' इत्यमरः । 'राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः । ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्' । अत्र राघवमैथिलीशब्दाभ्यां कुलद्वयावद्यकरमिदमपहरणमिति शोकातिशयहेतुरुच्यते । ननु विष्ण्ववतारभूतस्यास्य कथं शोकमोहौ सम्भवत इति । सम्भवत एव पुरुषधौरेयस्य । यदि हि लोकोत्तरगुणविशिष्टवस्तुविनाशेऽपि तौ न स्यातां तर्हि स कथं पुरुषधौरेयः स्यात् । तच्च कथमतिसुन्दरं स्यात् । तयोरुभयोर्नमस्कार एव स्यात् । वक्ष्यति च महापुरुषगुणमणिवर्णनप्रकरणे 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इति । मारुतिश्च वक्ष्यति 'दुष्करं कृतवान् रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति' इति ॥ ५३ ॥

५४-५५ ] ति० टी०-विललाप पर्यदेवयत् । आकुलेन्द्रियः शोकपरवशेन्द्रियः । तेनैव शोकेन निवृत्तिहेतुमप्राप्तेनाभिभूयमान एव सन्गृध्रं रावणेन सीतापहृतेति निवेद्य मृतं दग्ध्वा विधिना संस्कृत्य ॥ ५४ ॥ सीतां वने मार्गमाणः । मार्गयमाण इत्यर्थः । रूपेण विकृतं कबन्धं राक्षसम् । ददर्शेति संबन्धः ॥ ५५ ॥

रा० टी०-ततइति । ततो जटायुषो मरणानन्तरमेव तेन प्राकृतविलक्षणेन शोकेन सम्भोगपोषकशोकसूचकव्यापारेणोपलक्षितो रघुनाथः जटायुषं गृध्रं दग्ध्वा । प्रमीतक्रियां विधिना कृत्वेत्यर्थः । वने सीतां मार्गमाणः अन्वेषयन् घोरदर्शनं भयोत्पादकस्वरूपं रूपेण विकृतं रूपज्ञाप्यविकारविशिष्टं कबन्धंनाम प्रसिद्धं राक्षसं सन्ददर्श । ह प्रसिद्धमेतत् । सार्द्धश्लोक एकान्वयी । जटायुषः प्रमीतक्रियाकरणेन रघुनाथस्य परमकृतज्ञत्वं व्यञ्जितम् । तेन तिर्यक्जातीनामपि ज्ञानवत्तां वेदाधिकार इति ध्वनितम् । प्रसिद्धश्च काकभुशुण्डादिषु ॥५४॥५५॥

गो० टी०-ततइति । अर्द्धत्रयमेकं वाक्यं । तेनैव शोकेन गृध्रहननजनितेनैव शोकेन सीतापहरणजशोकादप्यधिकेनेत्यर्थः । ततः व्याप्तो रामः गृध्रं तिर्यग्विशेषमपि जटायुषं पितृसखत्वात् शेषिकार्याय त्यक्तप्राणत्वाच्च दग्ध्वा ब्रह्ममेधेन संस्कृत्य । 'यत्तु प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः । तत्स्वर्गगमनं तस्य क्षिप्रं रामो जजाप ह' इति वक्ष्यमाणत्वात् भक्तत्यक्तशरीरत्वाच्चेदं ब्रह्ममेधमर्हतीति । तथोक्तं नृसिंहपुराणे 'मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम । तस्मात्त्वं मत्प्रसादेन विष्णुलोकमवाप्स्यसि' इति सामान्यतश्चोक्तम् । यथाग्नेये 'विष्णोः कार्यं समुद्दिश्य देहत्यागो यतः कृतः । ततो वैकुण्ठमासाद्य मुक्तो भवति मानवः' इति । आश्वमेधिके च 'प्राणांस्त्यजति यो मर्त्यो मां प्रपन्नोऽपि मत्कृते । बालसूर्यप्रकाशेन व्रजेद्यानेन मद्गृहम्' इति । अत्रापि वक्ष्यति 'या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः । अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्' इति । अत्रापरा वृत्तिर्न च पुनरावर्त्तते इत्युक्ता मुक्तिरेव । नतु युद्धे अपलायनम् । तत्फलस्य स्वतः सिद्धत्वेन तदनुग्राह्यत्वाभावात् । नच संस्काराभावे सुकृतफलस्यानुत्पत्त्या तत्करणेन तदनुग्राह्यत्वमेवेति वाच्यम् । तिरश्चो यज्ञानधिकारेण तस्य तदभावेन तस्य तदनुग्राह्यत्वात् । अङ्गिफलस्यैवाङ्गफलत्वेन उपासनाङ्गानां यज्ञदानादीनामपि मुक्तिरेव फलमित्यभिप्रायेण या गतिर्यज्ञशीलानामित्याद्युक्तम् । यद्वा "इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन्" इत्यादिश्रुत्युक्तरीत्या मुक्तस्य सर्वलोकसंचारसंभवाद्या गतिरित्याद्युक्तं क्रममुक्तिपरमिदं वचनम् ।

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः । स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६ ॥
श्रमणां धर्मनिपुणामभिगच्छेति राघव । सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५७ ॥
शबर्या पूजितः सम्यग्रामो दशरथात्मजः । पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥ ५८ ॥

ननु ' आत्मानं मानुषं मन्ये ' इति मनुष्यत्वं भावयतः कथं परत्वासाधारणचिह्नं मोक्षप्रदत्वमुच्यते इति चेन्न । सत्येन लोकान् जयतीत्युक्तस्य सर्वलोकजयस्य मानुषत्वेप्यविरोधात् । एनं जटायुषं दग्ध्वा वने तां सीतां मार्गमाणः अन्वेषणं कुर्वन् । मार्ग अन्वेषण इत्यस्माद्धातोः शानच् । " आधृषाद्वा " इति विकल्पाण्णिजभावः । रूपेण शरीरेण विकृतं विकारयुक्तम् । "येनाङ्गविकारः " इति तृतीया । कुक्षिनिक्षिप्तमस्तकमित्यर्थः । घोरदर्शनं भयङ्करदर्शनं कबन्धं कबन्धाकारत्वात्कबन्धनामकं राक्षसं ददर्श । हेति खेदे । अमृतमन्वेषता कालकूटमलम्भीत्यर्थः । यद्यप्ययं दानव एव तथापि राक्षसप्रकृतित्वात्तथोक्तमिति ज्ञेयम् ॥

५६ ] ति० टी०—तमिति । तं कबन्धं निहत्य ददाह । महाबाहु रामः । स च कबन्धः स्वर्गतः स्वर्गगमनयोग्यं स्वीयं गन्धर्वरूपं प्राप्तवान् । ततस्तेन रूपेण । अस्य रामस्य ॥ ५६ ॥

रा० टी०—तमिति । महाबाहु रघुनाथः तं कबन्धं निहत्य ददाह । स च कबन्धः स्वः परलोकंगतः स गन्धर्वरूपी कबन्धः । गमनसमये इति शेषः । हे राघव! धर्मनिपुणीं परमधर्मज्ञामतएव श्रमणीं तपस्विनीं अतएव धर्मचारिणीं परमधर्मानुष्ठात्रीं शबरीमभिगच्छ इति अस्य अस्मै रघुनाथाय कथयामास च । सार्द्धश्लोक एकान्वयी ॥ ५६ ॥

गो० टी०—तमिति । महाबाहुः कबन्धभुजनिकर्तनक्षमभुजो रामः तं कबन्धं निहत्य तत्प्रार्थनया ददाह दग्धवान् । स च कबन्धो दाहेन हेतुना स्वः स्वर्गं गतः । इदमर्धमेकं वाक्यम् । सचेति । स स्वर्गं गच्छन् कबन्धोऽपि अस्य उपकारस्मृत्या क्षणमाकाशे स्थित्वा धर्मचारिणीं गुरुशुश्रूषादिधर्माचरणशीलाम् । आचार्याभिमानरूपचरमपर्वनिष्ठामित्यर्थः । 'पादमूलं गमिष्यामि यानहं पर्यचारिषम्'इति वक्ष्यमाणत्वात् । धर्मे अतिथिसत्काररूपे निपुणां समर्थां धर्मसूक्ष्मज्ञामित्यर्थः । रामः समागमिष्यतीति स्वादूनि फलान्यास्वाद्यास्वाद्य परीक्ष्य निक्षिप्तवती फलानीति प्रसिद्धिः । श्रमणीं परिव्राजिकाम् । ' चतुर्थमाश्रमं प्राप्ता श्रमणी नाम ते स्मृता ' इतिस्मरणात् । शबरीमिति । शबरीं विलोमजियम् । तदुक्तं नारदीये 'नृपाणां वैश्यतो जातः शबरः परिकीर्त्तितः । मधूनि वृक्षादानीय विक्रीणीते स्ववृत्तये ' इति । " जातेरस्त्रीविषयात् " इतिङीष् । अभिगच्छ आभिमुख्येन गच्छेति राघवं कथयामास । राघव इति पाठे तस्योत्तरश्लोकेनान्वयः । राघवेति पाठे हे राघव । शबरीमभिगच्छेति अस्य रामस्य कथयामासेत्यर्थः । अत्र भागवतभक्तिमहिम्ना हीनजातेरप्यभिगन्तव्यत्वमुक्तम् ॥ ५६ ॥

५७ ] ति० टी०—श्रमणां तापसीम् । धर्मनिपुणां सकलधर्मज्ञाम् । धर्मचारिणीमित्यस्य तु सकलधर्मानुष्ठात्रीमित्यर्थः । श्रमणामित्यत्र कर्तरि ल्युट् । तपसा श्राम्यतीत्यर्थात् । तामभिगच्छेति कथयामासेत्यन्वयः ॥ ५७ ॥

रा० टी०—सइति । शत्रुसूदनः स्वाश्रितारिदोषनिवर्त्तकः महातेजाः समाधिकरहिततेजोविशिष्टः स रघुनाथः शबरीमभ्यगच्छत् । अर्द्धं पृथगन्वयि ॥ ५७ ॥

गो० टी०—सइति । महातेजाः चरमपर्वनिष्ठजनलिप्सयाऽतिसंतुष्टः स राघवः शत्रुसूदनः । ' गमिष्याम्यक्षयाँल्लोकान्त्वत्प्रसादादरिन्दम ' इत्युक्तरीत्या तत्प्राप्तिप्रतिबन्धकनिवर्तकः । " सात्पदाद्योः " इतिषत्वाभावः । शबरीं नीचत्वसीमाभूमिभूतामभ्यगच्छदिति सौशील्यातिशयोक्तिः । दशरथात्मजः रामः शबर्यां सम्यक् पूजितः । षष्टिवर्षसहस्राणि वन्ध्यस्य दशरथस्य प्रसादेऽत्यन्तादरकृतभोजनादप्यतिशयितं तत्कालमात्रसमागतशबरीसमर्पितमृष्टान्नमिति भावः । शरभङ्गादिभिरगस्त्यान्तैः कृतं पूजामात्रम् । शबर्यां कृतं तु सम्यक्पूजनम् । तस्याश्चरमपर्वनिष्ठत्वादिति भावः । उक्तं हि ' मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् ' इति । यद्वा सम्यक् पूजनं परीक्षितरसैः फलैर्भोजनम् । पूजित इत्यत्र " मतिबुद्धिपूजार्थेभ्यश्च " इतिवर्त्तमाने क्तः । तथा च शबर्येत्यत्र " क्तस्य च वर्त्तमाने " इति कथं न षष्ठीति चेत् । अत्र केचिदाहुः आर्षः षष्ठ्यभाव इति । अन्ये तु नायं वर्त्तमाने क्तः किं तु भूते । तद्योगे च " न लोकाव्यय " इत्यादिना षष्ठीप्रतिषेधात्तृतीयैवेति । वस्तुतः पूजास्य संजातेति पूजितः । तारकादित्वादितच्प्रत्ययः । अनेन तृतीया भवत्येव ॥ ५७ ॥

५८ ] ति० टी०—शबर्येति । सम्यक्पूजितो यथाविध्यर्घ्याद्युपचारैः पूजितः । पम्पेत्यादिना किष्किन्धाकाण्डकथासंग्रहः । सङ्गतो मिलितः ॥ ५८ ॥

रा० टी०—शबर्येति । दथरथात्मजो दशरथनित्यसुतो रामः शबर्या सम्यक् पूजितः । आसीदिति शेषः । सम्यक्पूजित इत्यनेन शबर्याहृतफलादेः रघुनाथपरमप्रीतिविषयत्वं ध्वनितम् । तेन रघुनाथस्य परमभक्तवात्सल्यं सूचितम् । अर्द्धं स्वान्वयि । आरण्यकाण्डवृत्तमुक्त्वा किष्किन्धाकाण्डवृत्तमाह—पम्पातीरे इत्यादिभिः । वानरेण नित्यवानराकृतिना हनुमता सह पम्पातीरे संगतः संमिलितः । आसीदिति शेषः । ह इति हर्षे । अर्द्धं स्वान्वयि ॥ ५८ ॥

गो० टी०—एवं सत्यप्रतिज्ञत्वप्रधानमारण्यकाण्डचरितं संगृह्य मित्रकार्यनिर्वाहकत्वपरां किष्किन्धाकाण्डकथां संगृह्णाति—

१ श्रमणीमिति पाठः । २ राघवमिति पाठः । ३ आर्षमात्मनेपदमितिभावः । वस्तुतस्तु ताच्छील्याद्यर्थेषु चानशैतद्रूपम् । तृणं नखादन्नपि जीवमानइतिवत् ।

हनुमद्वचनाच्चैव सुग्रीवेण समागतः । सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥ ५९ ॥
आदितस्तद्यथा वृत्तं सीतायाश्च विशेषतः । सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ ६० ॥
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् । ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१ ॥
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च । प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ ६२ ॥

---

पम्पेति । पम्पानाम पद्मसरः तस्यास्तीरे तटकाननइत्युद्दीपकसंनिधानोक्तिः । हनुमता प्रशस्तहनुना । वीरकिणाङ्कितमुखेनेत्यर्थः । वानरेण संगतः संयुक्तो राम इति शेषः । हेति हर्षे । विरहिजनप्राणापहारिणि पम्पोपवने स्वकामिनीघटकसमागमोऽयं चौरैर्वनेऽपहृतसर्वस्वस्य स्वजनमुखावलोकनवदतीवाश्वासनमिति मुनेर्हर्षः । हनुमता का गतिरिहेदानीमिति अतिमात्रपर्याकुलतादशायां विजयकिणाङ्कितवदनवता पुरुषेण सङ्गमो यदृच्छया संजातः । वानरेणेति विशेषणेन रावणवत्संन्यासिवेषरहिततया स्ववेषेण समागमादाश्वसनीयता द्योत्यते । हनुमद्वचनात्सुग्रीवेण समागतः । चैवेति निपातसमुदायः समुच्चयार्थः । अनुकूलपुरुषकारलाभादुचितमित्रलाभो जात इति भावः ॥५८॥

५९ ] ति० टी०–हनुमद्वचनात्सुग्रीवो युष्मन्मैत्रीमपेक्षत इत्यादिरूपात् । समागतो मैत्रीं कृतवान् । हनुशब्दो ह्रस्वान्तो दीर्घान्तश्च । सुग्रीवायेति । सङ्गतायेति शेषः । शंसदकथयत् । छान्दसोऽडभावः । महाबलः सुग्रीवेण स्वकार्यसाधकमहाबलवत्त्वेनावगतः ॥ ५९ ॥

रा० टी०–हनुमदिति । हनुमद्वचनात्सुग्रीवो युष्मन्मैत्रीमपेक्षते इत्याद्याकारकादेव सुग्रीवेण समागतः सम्मिलितः महाबलः समाधिकरहितबलविशिष्टो रामः सुग्रीवाय आदितः स्वप्राकट्यादेवारभ्य तत्प्रसिद्धं स्वकीयं सर्वं वृत्तं सीतायाश्च तत्प्रसिद्धं वृत्तं विशेषतो विस्तरतो यथा यथावत् शंसत् अशंसत् । आगमशास्त्रस्यानित्यत्वादड्विरहः । सार्द्धश्लोक एकान्वयी । एकश्च एवार्थे ॥ ५९ ॥

गो० टी०–अथ सख्यहेतुं रहस्योद्भेदं दर्शयति–सुग्रीवायेति । महाबल इत्यनेन वृत्तस्मरणकालिककातर्यगोपनहेतुधैर्यमुच्यते । रामआदितः जन्मन आरभ्य तत्प्रसिद्धं सर्वं वृत्तं सुग्रीवाय शंसत् । अनित्यमागमशासनमित्यडभावः । अकथयदित्यर्थः । सीतायाः तद्वृत्तं च रावणहृतत्वादिकं यथावृत्तं वृत्तमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभावः । तदन्वेषणस्यावश्यकर्त्तव्यतया विशेषेणाशंसत् ॥ ५९ ॥

६० ] ति० टी०–आदित इति । जन्मनआरभ्येत्यर्थः । तत्प्रसिद्धं वृत्तं स्वीयं सीतायाश्च वृत्तं विशिष्य रावणापहारान्तमशंसत् । यद्यपि महाबलत्वाद्विनापि सहायं सर्वनिर्वाहकस्तथापि लोकरीतिमनुसृत्य सुग्रीवमैत्रीमुद्दिश्य सर्वमकथयदिति बोद्धव्यम् । वानरः सुग्रीवोऽपि रामस्य संबन्धि तत्सर्वं श्रुत्वा ॥६०॥

रा० टी०–सुग्रीव इति । वानरः नित्यवानराकृतिः सुग्रीवोपि रामस्य तत्सर्वं वृत्तं चात्सीतावृत्तं श्रुत्वैव प्रीतः सन्नेव अग्निसाक्षिकम् अग्निरेव साक्षाद्द्रष्टा यस्मिंस्तत्सख्यं रामेण सह चकार । अत्र प्रीत इत्यनेन सर्वकार्यसिद्धिर्जातैवेति सुग्रीवनिश्चयो ध्वनितः । एकश्च एवार्थे । अर्द्धद्वयमेकान्वयि ॥ ६० ॥

गो० टी०–सुग्रीवइति । चापीति निपातसमुदायः समुच्चयार्थः । वानरः सुग्रीवोऽपि रामस्य संबन्धि तत्सर्वं पूर्वोक्तं वृत्तान्तं श्रुत्वा प्रीतः रामस्य प्रयोजनापेक्षितत्वान्मामकमपि प्रयोजनं निर्वर्त्तयिष्यतीति संतुष्टः सन् । अग्निः साक्षी साक्षाद्द्रष्टा यस्य तदग्निसाक्षिकम् । "शेषाद्विभाषा" इतिकप्प्रत्ययः । रामेण सख्यं सखित्वम् । "सख्युर्यः" इति भावार्थे यप्रत्ययः । चकार कृतवान् । वानररामशब्दाभ्यां सख्यस्यासदृशत्वं व्यञ्जितं तेन च रामस्य सौशील्यातिशयो व्यज्यते । गुहस्य हीनमनुष्यजातितया तत्सख्यं सौशील्यहेतुः । तत्रापि स्त्रीत्वेन शबर्यभिगमनं ततस्तरां सौशील्यं सुग्रीवस्य तिर्यक्त्वेन ततस्तमाम् सौशील्यमिति भावः ॥ ६० ॥

६१-६२] ति० टी०–स्वसमानदुःखमहाबलसंबन्धलाभात्प्रीतः सुग्रीवोऽग्निसाक्षिकमग्निरेव साक्षाद्द्रष्टा यस्य तादृशं सख्यं चकार । ततो वैरानुकथनं वालिनस्तव च वैरे किं कारणमिति रामकृतप्रश्नं प्रति । प्रश्नोत्तरमिति यावत् ॥ ६१ ॥ रामाय यत्प्रत्युत्तरमावेदितव्यं तत्सर्वं रामवद्दारापहारान्तकष्टैः सञ्जातदुःखेन सुग्रीवेण प्रणयाद्रामायावेदितम् । तदा तद्वृत्तान्तश्रवणानन्तरकाले रामेण वालिवधं प्रति वालिवधमुद्दिश्यावश्यं वालिनं वधिष्यामीति प्रतिज्ञातम् ॥ ६२ ॥

रा० टी०–तत इति । ततः सख्यकरणानन्तरं दुःखितेन कृतदुःखसूचकचेष्टितेन वानरराजेन सुग्रीवेण वैरानुकथनम् । वालिना सह तव वैरे किं निमित्तमिति रघुनाथप्रश्नं प्रति उत्तरमित्यर्थः । सर्वं प्रणयादेव रामायावेदितम् । तदा तस्मिन्काले एव रामेण वालिवधं प्रति प्रतिज्ञातम् । वालिनमवश्यं हन्तास्मीति प्रतिज्ञां कृतवानित्यर्थः । सार्द्धश्लोक एकान्वयी । चशब्दावेवार्थौ ॥६१॥६२॥

गो० टी०–ततइति । ततः सख्यकरणानन्तरं दुःखितेन परमसुहृद्भूतरामसन्निधानादुद्बुद्धपूर्ववृत्तान्ततया बाष्पं मुञ्चतेत्यर्थः । वानरराजेन सुग्रीवेण । "कर्तृकरणयोस्तृतीया" इति कर्तरि तृतीया । वैरस्य वालिविरोधस्यानुकथनमनुकूलकथनम् । प्रश्नानुकूलमुत्तरमित्यर्थः । वालिना सह तव कुतो वैरमासीदित्येवं प्रश्नः । तंप्रति वक्तव्यं सर्वं रहस्यप्रकाशरूपं प्रणयात्स्नेहाद्विस्रम्भाद्वा । 'प्रणयास्त्वमी । विस्रम्भयाञ्चाप्रेमाणः' इत्यमरः । रामायावेदितमासमन्तादुक्तम् । कार्त्स्न्येनोक्तमित्यर्थः प्रतिज्ञातं चेति । चशब्दो भिन्नक्रमः । रामेण च तदा आवेदनानन्तरकाले वालिवधंप्रति प्रतिज्ञातम् । वालिवधप्रतिज्ञा कृते-

वालिनश्च बलं तत्र कथयामास वानरः । सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६३ ॥
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् । दर्शयामास सुग्रीवो महापर्वतसंनिभम् ॥ ६४ ॥
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः । पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६५ ॥
बिभेद च पुनः सालान्सप्तैकेन महेषुणा । गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ॥ ६६ ॥

त्यर्थः । भावे क्तः । वानरः सुग्रीवश्च तत्र ऋष्यमूके वालिनो बलम् । ' समुद्रात्पश्चिमात्पूर्वं दक्षिणादपि चोत्तरम् । क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ' इत्यादिना वक्ष्यमाणं बलमुत्साहवर्द्धनाय कथयामास ॥ ६१ ॥ ६२ ॥

६३ ] ति० टी०–वालिनश्चेति । तत्र ऋष्यमूकपर्वते । वानरः सुग्रीवो वालिनो बलमरुणोदयानन्तरं सूर्योदयात्प्रागेव रावणं गृहीत्वा चतुःसमुद्रलङ्घनादिरूपं कथयामास । किञ्च सुग्रीवो रामो वालितुल्यो न वेति शङ्कितः सञ्जातशङ्क आसीत् ॥ ६३ ॥

रा० टी०–वालिन इति । तत्र च तस्मिन्नपि समये सुग्रीवो वानरः राघवे वीर्येण शङ्कितः अयं वालिवधयोग्यबलो नवेति सन्देहवान् आसीत् । अतएव वालिनः नित्यमेव बलं कथयामास । नित्यमेवेत्यनेन वालिनोऽनवधानताविरहः सूचितः । तस्मिन्नपि समये शङ्कित आसीदित्यनेन बलवद्द्रोहस्य दुर्निवारत्वं सूचितम् । एकश्चकारोऽप्यर्थे । द्वितीय एवार्थे ॥ ६३ ॥

गो० टी०–सुग्रीवइति । सुग्रीवो राघवे विषये वीर्येण हेतुना नित्यं दर्शनादारभ्य सालभेदनपर्यन्तं मुहुर्मुहुराशङ्कित आसीच्च । अयं वालितुल्यवीर्यो नवेति शङ्कितवानित्यर्थः । नित्यशब्दस्य वीप्सापरत्वं महाभाष्ये " नित्यप्रहसितो नित्यप्रजाल्पित " इति । " मतिबुद्धि " इत्यादिसूत्रे शङ्कितादयोऽप्यर्थसिद्धा इति सूचनात् कर्त्तरि निष्ठा ॥ ६३ ॥

६४ ] ति० टी०–राघवेति । राघवस्य वालिमहाबलत्वे विश्वासार्थमुत्तमं बलप्रत्यायनोत्तमसाधनं महापर्वतसदृशं दुन्दुभेर्दैत्यस्य शरीरं दर्शयामास । यस्य काय इदानीमेतादृशस्तादृशो दुन्दुभिर्वालिना हत्वैतावद्दूरं प्रक्षिप्त इत्युक्त्वा दर्शयामासेत्यर्थः ॥ ६४ ॥

रा० टी०–राघवेति । सुग्रीवः राघवप्रत्ययार्थं वालिमहाबलवत्त्वे राघवविश्वासार्थमेव महापर्वतसन्निभं महापर्वततुल्यं दुन्दुभेः वालिनिहतदुन्दुभिनामासुरस्य उत्तमं बलप्रत्यायने परमं निमित्तं कायं शरीरं दर्शयामास । तुशब्द एवार्थे ॥ ६४ ॥

गो० टी०–राघवेति । तुशब्दो विशेषवाची । न केवलं शङ्कितोऽभूत् । किंतु प्रत्ययार्थमन्यद्दर्शयामास चेत्यर्थः । राघवप्रत्ययार्थं रामविषयज्ञानार्थम् । रामबलविज्ञानार्थमित्यर्थः । रामविषयविश्वासजननार्थमिति वा । ' प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ' इत्यमरः । दुन्दुभेः दुन्दुभ्याख्यस्य वालिहतस्यासुरस्य उत्तममशिथिलमतएव महापर्वतसन्निभम् । उत्तमग्रुन्नतं वा कायं कायाकारास्थि दर्शयामास । रामायेति शेषः । वाली एतदस्थिपादाग्रेऽन्यस्य ऊर्ध्वं क्षिपतीत्युक्त्वा दर्शयामासेत्यर्थः ॥ ६४ ॥

६५ ] ति० टी०–उत्स्मयित्वेति । बाहुलकात्स्वार्थे णिच् । ईषत्स्मितं कृत्वा ॥ ६५ ॥

रा० टी०–उत्स्मयित्वेति । महाबाहुः आजानुबाहुः महाबलो रघुनाथः अस्थि प्रेक्ष्य तदस्थिसमूहं दृष्ट्वा उत्स्मयित्वा उत्स्मित्य च पादाङ्गुष्ठेन संपूर्णं तदस्थि दशयोजनं चिक्षेप । उत्स्मयित्वेत्यनेन दृष्ट्वापि नित्यस्वसखं मां न विजानातीति हेतुर्व्यञ्जितः । पादाङ्गुष्ठेनेत्यनेनोत्क्षेपणे श्रमाभावः सूचितः । उत्स्मयित्वेत्यत्र आर्षोऽल्यबभाव इडागमश्च । उत्स्मयित्वेत्यत्र बाहुलकात् स्वार्थे णिजिति भट्टाद्युक्तिश्चिन्त्या । रूपासिद्धेः ॥ ६५ ॥

गो० टी०–उत्स्मयित्वेति । महाबलः अपरिमेयबलः । महाबाहुः बलानुगुणकार्यकरणसमर्थभुजः रामः अस्थि प्रेक्ष्य उत्स्मयित्वा कियन्मात्रमेतदित्यनादृत्य स्मित्वा । इडार्षः । पादाङ्गुष्ठेन सम्पूर्णमन्यूनं दशयोजनम् । पात्रादित्वात्समाहारे ङीबभावः । अत्यन्तसंयोगे द्वितीया । उच्चिक्षेप उद्यम्य चिक्षेप । " व्यवहिताश्च " इति उपसर्गस्य व्यवहितप्रयोगः । वालिना पादेन क्षिप्तम् । रामेण तु पादाङ्गुष्ठेन उत्क्षिप्यते । तेन द्वे धनुःशते । अनेन दशयोजनमिति विशेषः ॥ ६५ ॥

६६ ] ति० टी०–बिभेदेति । पुनश्च प्रत्ययं जनयन्स्वबलविश्वासमुत्पादयन् । हेतौ शता । फलमपि हेतुः । तदैकेनैव महेषुणा सकृत्प्रयोगेणैव सप्तसालान्सप्तसालवृक्षांस्तत्समीपस्थं गिरिं पर्वतं रसातलं षष्ठमधोलोकं च बिभेद । अतलवितलसुतलतलातलमहातलरसातलपाताला इति सप्ताधो लोकाः । एकसालमात्रभेदनेऽस्य वालिसाम्यशङ्का जायेत तन्निवृत्त्यर्थमनुक्तानामपि शा ( रसात ) लगिरिप्रस्थादीनां भेदनमिति मन्तव्यम् ॥ ६६ ॥

रा० टी०–बिभेदेति । तदा तस्मिन्काले पुनः सप्त सप्तसंख्याकान् शालान् वृक्षविशेषान् गिरिं तत्समीपस्थपर्वतं च रसातलं पृथिव्यधोभागवर्तिसप्तलोकांश्च एकेन सकृत्प्रयोगविशिष्टेनैव महेषुणा समाधिकरहितप्रभावविशिष्टबाणेन प्रत्ययं जनयन्सुग्रीवविश्वासमुत्पादयितुं रघुनाथः बिभेद । हेत्वर्थकः शतृप्रत्ययः । एतेन रामबाणसदृशः रामबाण एवेति अनन्वयालङ्कारो ध्वनितः ॥ ६६ ॥

गो० टी०–चिरं युद्धपरिश्रान्तेन वालिना आर्द्रं शरीरं प्रक्षिप्तम् । त्वया तु स्वस्थेन शुष्कमित्यनाश्वसन्तं प्रति प्रत्ययान्तरमकरोदित्याह—बिभेदेति । अत्र राम इत्यनुषज्यते । पुनश्च सप्त सालान् सर्जकतरून् तत्समीपस्थं गिरिं रसातलमधोलोकेषु षष्ठलोकं च प्रत्ययं विश्वासं जनयन् प्रत्ययजननार्थम् । " लक्षणहेत्वोः " इति शतृप्रत्ययः । एकेन महेषुणा बिभेद । महे-

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः । किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः । तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥
अनुमान्य तदा तारां सुग्रीवेण समागतः । निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे । सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ७० ॥
स च सर्वान्समानीय वानरान्वानरर्षभः । दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७१ ॥

---

हेतुणेत्यनेन सुग्रीवकार्यसाधनाय रामेण तप्तपरशुधारणं कृतमिति ध्वन्यते ॥ ६६ ॥

६७ ] ति० टी०–तत इति । ततः सालभेदानन्तरं तेनातिदुष्करेण कर्मणा वालिवधे विश्वासं प्राप्तः प्रीतमनाः कपिराज्यलाभोऽचिरादेवेति सन्तुष्टमनाः महाकपिः सुग्रीवः किष्किन्धाख्यां गुहां रामसहितो जगाम ॥ ६७ ॥

रा० टी०–तत इति । ततः शालभेदानन्तरं स महाकपिः सुग्रीवः तेन दुरूहबाणकर्मणा प्रीतमनाः प्रसन्नचित्तः विश्वस्तः वालिकर्मकवधयोग्योयमिति विश्वासं प्राप्तश्चासीदिति शेषः । तदा तस्मिन्काले रामसहितः सन् किष्किन्धां तदाख्यां गुहां जगाम विवेश । प्रीतमना इत्यनेन रघुनाथसदृशो न कश्चिद्बलवानिति निश्चयो जात इति हेतुर्ध्वनितः ॥ ६७ ॥

गो० टी०–ततइति । ततः सालादिभेदनानन्तरं तेनातिमानुषचरित्रेण विश्वस्तः अयमवश्यं वालिहननक्षम इति विश्वासं प्राप्तः प्रीतमनाः अचिरादेव राज्यं लप्स्ये इति सन्तुष्टचित्तः महाकपिः आत्मानं कपिराजं मन्यमानः स सुग्रीवः रामसहितः सन् तदा तस्मिन्नेव काले किष्किन्धां किष्किन्धाख्यां गुहां गुहावत्पर्वतमध्यवर्त्तिनीं पुरीं जगाम । चकारेण पुनर्गमनं समुच्चीयते ॥ ६७ ॥

६८ ] ति० टी०–तत इति । हरिवरः कपिश्रेष्ठोऽगर्जत्सिंहनादं कृतवान् । हरीश्वरो वाली ॥ ६८ ॥

रा० टी०–ततइति । ततो गुहागमनानन्तरं हेमपिङ्गलः सुवर्णवर्णसदृशवर्णः हरिवरः सुग्रीवः अगर्जत् । सुग्रीववृत्तमुक्त्वा वालिवृत्तमाह–महता अन्यकालिकनादविलक्षणेन तेन तात्कालिकसुग्रीवकृतेन नादेन हरीश्वरो वानरराजो वाली निर्जगाम । हेमपिङ्गल इत्यनेन सुग्रीवस्य शोकजनितवैवर्ण्यध्वंसः सूचितः ६८

गो० टी०–ततः किष्किन्धागमनानन्तरं हरिवरः आत्मनः कपिवरत्वनिश्चयवान् हेमपिङ्गलः स्वर्णवत्पिङ्गलवर्णः । हर्षप्रकर्षेण निवृत्तवैवर्ण्य इत्यर्थः । सुग्रीवो गर्जितानुगुणकण्ठध्वनिः अगर्जत् घोषं चकार । महता पूर्वगर्जितविलक्षणेन तेन नादेन हेतुना हरिवरो वाली गृहान्निर्जगाम ॥ ६८ ॥

६९–७० ] ति० टी०–अन्विति । तदाङ्गदमुखादवगतसुग्रीवराममित्रत्वेन संयुगनिर्गमनं वारयन्तीं तारां स्वस्त्रियं मयाऽकृतापकारो धर्मज्ञो रामो मह्यं नापकरिष्यतीत्यादिवचनैरनुमान्यानुमतिं प्रापय्य । कृतानुमतिकां कृत्वेति यावत् । सुग्रीवेण सह वाली युद्धाय समागतोऽभवत् । तत्र संयुगे । एनं वालिनम् ॥ ६९ ॥ ततइति । सुग्रीववचनात् 'वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः' इत्येवंरूपात्सुग्रीववचनात् । आहवे रणे । प्रत्यपादयत्प्रतिष्ठापितवान् । सुग्रीववचनादित्यनेनानपकारिवालिवधस्यायुक्तत्वेऽपि मित्रापकारित्वेन तदुक्त्या हननमिति ध्वनितम् ॥ ७० ॥

रा० टी०–अनुमान्येति । तदा तस्मिन्काले रामसुग्रीवयोर्मैत्री जातेति श्रूयते अतः स जेतुमशक्य इति प्रतीयते अतस्तत्र न गन्तव्यमिति वदन्तीं तारां स्वस्त्रियमनुमान्य धर्मात्मा राघवोऽनपराधिनं मां न हन्तेत्यादिवचनैः सन्तोष्य सुग्रीवेण समागतो वाली युयुधे इति शेषः । अर्धं पृथगन्वयि । निजघानेति । तत्र तस्मिन् आहवे सङ्ग्रामे ततः तस्मात् 'वालिनं जहि काकुत्स्थ' इत्यादिना प्रसिद्धात्सुग्रीववचनात्सुग्रीवप्रार्थनात एनं वालिनमेकेन शरेण । चकारात्सकृत्प्रयुक्तेन राघवो निजघान भक्तापकारजनितं वालिनो दोषं निवर्त्तयामास । अतएव निशब्दप्रयोगः । वालिवधोत्तरकालिकं वृत्तमाह । राघवो रघुनाथः वालिनं हत्वा तद्राज्ये वालिराज्ये सुग्रीवमेव प्रत्यपादयत् । संस्थापयामासेत्यर्थः । एवकारेणाङ्गदव्यवच्छेदः । सार्द्धश्लोकः सम्मिलितान्वयः । अत्र राघवसुग्रीवमैत्रीं श्रुत्वापि अनपराधिनं मां राघवो न हन्तेत्युक्तेः । मित्रत्वेन रघुनाथशरीरभूतः सुग्रीव इत्यंशे वालिनोऽज्ञानं सूचितम् । वालिनो दोषं निवर्तयामासेत्यनेन रघुनाथस्य परमदयालुत्वं सूचितम् ॥ ६९ ॥ ७० ॥

गो० टी०–अनुमान्येति । वाली तदा निर्गमनकाले तारामद्य वनादागतेनाङ्गदेन सुग्रीवो रामसहायस्तिष्ठतीति कथितम् । अद्य पराजितो निर्गतः पुनरागतः अतस्त्वद्गमनमनुचितमिति वारयन्तीं तारामनुमान्य धार्मिकाग्रेसरो रामः कथं मामनपराधिनं हन्यादिति परिसान्त्व्य सुग्रीवेण समागतः । अयुध्यतेत्यर्थः । राघवः महाकुलप्रसूतत्वेन धर्मसूक्ष्मज्ञः तत्र युद्धभूमौ एनं परेण युद्धकृतमपि वालिनं तदा परेण युद्धकाले । चोवधारणार्थः । एकेन शरेण निजघान । द्वितीयशरप्रयोगे तदाभिमुख्येन तद्वधो दुर्लभ इति भावः । युद्धेऽभिमुखस्य बलं वालिनमेव गच्छतीति वरप्रसिद्धिः ॥ ६९ ॥ ततइति । सुग्रीववचनात्सुग्रीवप्रार्थनावचनात् । आहवे सुग्रीवस्य युद्धे वालिनं हत्वा ततः वालिवधानन्तरं राघवः तद्राज्ये वालिराज्ये सुग्रीवमेव प्रत्यपादयत् स्थापयामासेत्यर्थः ७०

७१ ] ति० टी०–स चेति । स सुग्रीवः । दिदृक्षुरन्वेषिषुः सर्वान्वानरान्समानीय सर्वा दिशः प्रस्थापयामास ॥ ७१ ॥

रा० टी०–राज्यप्राप्त्यनन्तरं सुग्रीवकृत्यमाह–सचेत्या-

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान्बली । शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२ ॥
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् । ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७३ ॥
निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च । समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७४ ॥

---

दिना । वानरर्षभः वानरराजत्वेनाभिषिक्तः जनकात्मजां दिदृक्षुः सा क्वास्तीति ज्ञातुकामः । दृशिर्ज्ञानसामान्ये । स सुग्रीवः सर्वान्वानरान् चकाराद्दृक्षान्समानीय आहूय दिशः चतस्रः ककुभः प्रस्थापयामास ॥ ७१ ॥

**गो० टी०**—अथ सुग्रीवस्य प्रत्युपकारं दर्शयति—**सचेति** । वानरर्षभः वानरराजत्वेनाभिषिक्तः स च सुग्रीवोऽपि जनकात्मजां दिदृक्षुः द्रष्टुमिच्छुः सन् सर्वान् नानादेशनिवासिनो वानरान् समानीय आहूय दिशश्चतस्रः प्रति प्रस्थापयामास । शीघ्रं सीतां दृष्ट्वाऽऽगच्छतेति आदिष्टवानित्यर्थः ॥ ७१ ॥

७२ ] **ति० टी०—तत इति** । गृध्रस्य सम्पातेर्वचनात् ‘ तस्यां वसति वैदेही दीना कौशेयवासिनी ’ इत्येवंरूपात् । पुप्लुव उल्लङ्घितवान् । इतः सुन्दरकाण्डकथासङ्ग्रहः ॥ ७२ ॥

**रा० टी०**—सुन्दरकाण्डवृत्तमाह—**ततइत्यादिभिः** । ततः प्रस्थानानन्तरं बली अपरिमेयपराक्रमो हनुमान् सम्पातेः तन्नामकगृध्रस्य वचनात्सागरान्तर्लङ्कायां सीताऽस्तीति तं तरत तां द्रक्ष्यथ इत्याद्याकारकाच्छतयोजनविस्तीर्णं लवणार्णवं लवणसमुद्रं पुप्लुवे उल्लङ्घे । अत्र बलीत्यनेन सर्वकार्यसिद्धिं कर्ताऽयमिति ध्वनितम् । नच पुप्लुवे लवणार्णवमित्यत्र प्लुधातोरुत्तरदेशसंयोगानुकूलव्यापारार्थकत्वेन लवणार्णवस्य संयोगाश्रयत्वाभावेन कर्मत्वानापत्तिरिति वाच्यम्। समुद्रशब्दस्य लक्षणया समुद्रोत्तरतीरपरतया तस्य संयोगाश्रयत्वेनाऽदोषात् । वस्तुतस्तु अधोदेशसंयोगाभावानुकूलोत्तरदेशसंयोगानुकूलव्यापारः प्लवतेरर्थः । एवं च अधोदेशसंयोगाभावरूपफलाश्रयत्वाल्लवणार्णवस्य कर्मत्वम् । उत्तरदेशस्य धात्वर्थकुक्षिप्रविष्टत्वान्न द्विकर्मकत्वम् । उत्तरदेशसंयोगानुकूलव्यापारार्थकत्वेन लक्षणया लवणार्णवं पुप्लुव इत्यादेर्निर्वाहेऽपि गच्छतिप्लवत्योः पर्यायतापत्त्या ग्राम....मंकजिगमिषायां ग्रामं गच्छतीत्यादिवद्ग्रामं प्लवत इत्यस्यापत्तिः । प्लुधातुसमभिव्याहृतकर्माणि लक्षणैवेत्यत्र तु न विनिगमकम् । किञ्च ग्रामपार्श्वेन ग्रामोत्तरदेशसंयोगेऽपि ग्रामं प्लवत इति प्रयोगापत्तिरिति दिक् ॥ ७२ ॥

**गो० टी०**—ततः सुन्दरकाण्डकथां संगृह्णाति—**ततइति** । ततः प्रस्थानानन्तरं बली अपरिच्छेद्यबलः । भूमार्थे मत्वर्थीयः । हनुमान् प्रशस्तहनुः । अन्वर्थसंज्ञेयम् । तथा चेन्द्रो वक्ष्यति ‘ मत्करोत्सृष्टवज्रेण हनुस्तस्य तदा क्षतः । नाम्नैष हरिशार्दूलो भविता हनुमानिति ’ । आभ्यां पदाभ्यां पूर्वकथाप्रस्तावेन जाम्बवता कृतोत्साहत्वम् । तदुद्भूतनिरवधिकबलवत्त्वं च बोध्यते । सम्पातेः सम्पातिनामकस्य जटायुज्येष्ठस्य पक्षिणो वचनात् । इतः शतयोजनात्परे समुद्रमध्ये लङ्कायां सीता वर्तते । ‘ तर समुद्रं तां पश्यसि ’ इतिवचनात् । शतयोजनविस्तीर्णं लवणार्णवं पुप्लुवे । प्लुत्वा ततारेत्यर्थः ॥ ७२ ॥

७३ ] **ति० टी०—तत्रेति** । अशोकवनिकां गतां प्रमदवनस्थितां ध्यायन्तीम् । राममिति शेषः ॥ ७३ ॥

**रा० टी०—तत्रेति**। तत्र समुद्रतरणानन्तरकाले रावणपालितां लङ्कां पुरीं समासाद्य प्राप्य अशोकवनिकां गतां रावणेन स्थापितां ध्यायन्तीं रामं स्मरन्तीं सीतां हनुमान्ददर्श । अशोकवनिकां गतामित्यनेन सीताशोकध्वंसो द्रुतं भवितेति ध्वनितम् ॥ ७३ ॥

**गो० टी०—तत्रेति** । हनुमान् रावणपालितां लङ्कां समासाद्य तत्र लङ्कायामशोकवनिकामन्तःपुरोद्यानं गतां ध्यायन्तीं राममेव नैरन्तर्येण स्मरन्तीं सीतां ददर्श ॥ ७३ ॥

७४ ] **ति० टी०—निवेदयित्वेति** । अभिज्ञानमङ्गुलीयकरूपम् । प्रवृत्तिं रामसुग्रीवसख्यादिसर्ववृत्तान्तम् । समाश्वास्य राघवस्य सर्वोऽपि व्यापारस्त्वत्प्रत्यापत्त्येकफलक इत्यादितत्त्वकथनेन वैदेहीं समाश्वास्य । ‘ गृहीत्वा प्रत्यभिज्ञानम् ’ इति पाठे प्रत्यभिज्ञानं सीतालकस्थितचूडामणिरूपम् । तोरणमशोकवनिकागतप्रासादबहिर्द्वारसन्निवेशम् । चकारादशोकवनं च मर्दयामास ॥ ७४ ॥

**रा० टी०—निवेदयित्वेति** । अभिज्ञानं रामप्रेषितोऽयमिति बोधकं रघुनाथदत्ताङ्गुलीयकं निवेदयित्वा वैदेह्यै दत्त्वा प्रवृत्तिं सुग्रीवमैत्रीकरणादिवृत्तान्तं च निवेद्य कथयित्वा चकारात्सीतैकवेद्यरघुनाथाङ्गचिह्नं बोधयित्वा वैदेहीं च समाश्वास्य रामः शीघ्रमागन्तेति प्रतिबोध्य तोरणमशोकवनिकाबहिर्द्वारं मर्दयामास दध्वंसे।‘तोरणोऽस्त्री बहिर्द्वारम् ’ इत्यमरः। किञ्च निवेत् परमवक्ता हनुमान् अभिज्ञानं मुद्रिकामयित्वा । प्रापय्येत्यर्थः। अन्यत्पूर्ववत् । आख्यानार्थकणिजन्तानिपूर्वकविद्धातोः क्विपा सिद्धं निवेदिति । अत्रार्थे न ल्यबभावे क्लेशकल्पना तत्प्रसक्तिविरहात् ॥ ७४ ॥

**गो० टी०—निवेदयित्वेति** । ततो हनुमान् अभिज्ञानमङ्गुलीयकरूपं रामचिह्नं निवेदयित्वा समर्प्य । अनित्यत्वात्समासेपि ल्यबभावः । अतएवाह न्यासकारः वाछन्दसीति वक्तव्ये क्त्वापि छन्दसीति वचनमसमासेऽपि ल्यबर्थम् । तेनार्च्यदेवानागत इति सिद्धमिति । अनेन व्यभिचारेण समासे ल्यब्विधेरनित्यत्वं सिद्धमेव । प्रवृत्तिं सुग्रीवसख्यकरणसेनासमूहीकरणप्रभृतिरामागमनवृत्तान्तं ‘वार्ता प्रवृत्तिर्वृत्तान्तः’ इत्यमरः। चकारात् ‘ नैव दंशान्न मशकान्न कीटान्न सरीसृपान् । राघवोपनयेद्गात्रात्त्वद्गतेनान्तरात्मना’ इति रामस्य सीतैकपरायणत्व..दिकं समुच्चीयते । निवेद्य उक्त्वा च वैदेहीं समाश्वास्य सपस्ते कान्तः

पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि । शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७५ ॥
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन्राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया ॥ ७६ ॥
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् । रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ७७ ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् । न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७८ ॥

---

समागमिष्यतीति सान्त्वयित्वा तोरणमशोकवनिकाबहिर्द्वारं मर्दयामास । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः ॥ ७४ ॥

७५ ] ति० टी०—पञ्चेति । सेनाग्रगाः सैन्यपतयः पिङ्गलनेत्रप्रभृतयः मन्त्रिसुता जम्बुमाल्यादयः । अक्षं रावणसुतं निष्पिष्य चूर्णीकृत्य ग्रहणमिन्द्रजित्प्रयुक्तब्रह्मास्त्रकृतबन्धनं समुपागमत्प्राप्तः ॥ ७५ ॥

रा० टी०—पञ्चेति । सेनाग्रगान्सेनापतीन् पिङ्गलनेत्रादीन् पञ्च सप्त मन्त्रिसुतान् जम्बुमाल्यादीनपि शूरं शौर्यविशिष्टमक्षं रावणसुतं च निष्पिष्य विनाश्य ग्रहणं मेघनादप्रयुक्तब्रह्मास्त्रबन्धनं समुपागमत् ॥ ७५ ॥

गो० टी०—पञ्चेति । अग्रे गच्छन्तीत्यग्रगाः सेनाया अग्रगाः सेनाग्रगाः । अन्तादिष्वपाठेऽपि 'अन्यत्रापि दृश्यते' इति डप्रत्ययः । तान् पञ्च पिङ्गलनेत्रप्रमुखान् जम्बुमालिप्रमुखान्सप्त मन्त्रिसुतानपि हत्वा शूरमक्षमक्षकुमारं रावणद्वितीयपुत्रं निष्पिष्य चूर्णीकृत्य ग्रहणमिन्द्रजित्प्रयुक्तब्रह्मास्त्रेण ब्रह्मणो बन्धनं समुपागमत्प्राप्तः ॥ ७५ ॥

७६ ] ति० टी०—अस्त्रेणेति । मदस्त्रस्यामोघत्वात्तेन बन्धनमात्रं चतुष्पञ्चघटिकानन्तरं पुनर्मोक्षश्चेति ब्रह्मदत्तवरात् । तावता कालेन ब्रह्मास्त्रमुक्तमात्मानं ज्ञात्वापि यदृच्छया कार्यान्तरप्रसङ्गेन रावणदर्शनापेक्षया । यन्त्रिणो बद्ध्वा नेतॄंस्तान्राक्षसान्प्रति वीरो हन्तुं समर्थोऽपि मर्षयन्क्षमां कुर्वन् । रावणसमीपं प्राप्तवानिति शेषः । 'ममर्ष' इति वा पाठः ॥ ७६ ॥

रा० टी०—अस्त्रेणेति । पैतामहाद्ब्रह्मदत्तात् । मदस्त्रादपि ते निर्मुक्तिर्भविष्यतीति वरादात्मानमस्त्रेण उन्मुक्तं ब्रह्मास्त्रबन्धशून्यं ज्ञात्वा बुद्ध्वा यत्स्वामिकार्यविचारशीलो वीरो हनुमान् यदृच्छया रावणसभागमनहेतुना यन्त्रिणः बद्ध्वा नयनकर्तॄन्राक्षसान्मर्षयंस्तदपराधं सहमान आस्तेति शेषः । राक्षसानामपराधतादात्म्यात्कर्मत्वम् । प्रयत्नार्थकयद्धातुप्रकृतिकक्विबन्तो यदिति । यदिति विशेषणोक्त्या रावणसभागमनतद्वचनश्रवणमन्तरा तदभिप्रायो दुर्विज्ञेय इति रावणसभागमने हेतुर्ध्वनितः । तेन रघुनाथसख्यकरणे अनाज्ञापितपरमहितसत्कार्यकारिहनुमत्तुल्यः हनुमानेवेति अनन्वयालङ्कारो ध्वनितः । तेन रघुनाथाश्रितैः हनुमानाश्रयणीय इत्यादेयं वस्तु व्यक्तम् ॥ ७६ ॥

गो० टी०—अस्त्रेणेत्यादि । श्लोकद्वयमेकान्वयि । वीरः सुरासुराप्रधृष्यरावणपालितलङ्काप्रधर्षणादिना प्रख्यातवीर्यः । महाकपिः स्वयमक्षत एवानेकराक्षसहननक्षम इत्यर्थः । पैतामहात्पितामहदत्ताद्वरादात्मानं यदृच्छया प्रयत्नं विना अस्त्रेण ब्रह्मास्त्रेण उन्मुक्तं परित्यक्तं ज्ञात्वा यन्त्रिणः आत्मानं रज्जुयन्त्रेण बद्ध्वा इतस्ततः कृषत इत्यर्थः । राक्षसान् मर्षयन् तदपराधान् क्षममाण इत्यर्थः ॥ ७६ ॥

७७ ] ति० टी०—तत इति । ततो रावणदर्शनादिव्यापारानन्तरं सीतामृते सीतावस्थानप्रदेशं विना लङ्कां दग्ध्वा रामाय प्रियं सीतादर्शनरूपप्रियवार्तामाख्यातुं पुना रामान्तिकं महाकपिर्हनुमानायादागतः ॥ ७७ ॥

रा० टी०—तत इति । ततः स्वविषये रावणकृत्यानन्तरमेव महाकपिः वानरश्रेष्ठः पूजनीयो वानर इति वा । मैथिलीं मैथिलराजप्रादुर्भूतां सीतामृते विना लङ्कां तदाख्यां पुरीं दग्ध्वा सन्दह्य प्रियं रघुनाथपरमाह्लादजनकीभूतसन्देशमाख्यातुं वक्तुं रामाय पुनरायात् "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इति चतुर्थी । प्रियमाख्यातुमित्युक्त्या सीतारघुनाथवृत्तान्तादन्यत् किञ्चिन्न हनुमान् स्मरतीति व्यक्तम् । चशब्द एवार्थे ७७

गो० टी०—तत इति । मैथिलीं मिथिलराजसुतां सीतामृते विना कुलप्रभावात्तन्मात्रमदग्ध्वा लङ्कां पुरीं दग्ध्वा रामाय प्रियं सीतादर्शनाप्रियमाख्यातुं वक्तुं पुनरायात् ॥ ७७ ॥

७८ ] ति० टी०—सोऽभीति । प्रदक्षिणं प्रदक्षिणादिमुख्यमुपचारम् । महात्मानं परमात्मानम् । अमेयात्माऽपरिच्छेद्यबलबुद्धिधैर्यादिवैभवः । तत्त्वतः । सार्वविभक्तिकस्तसिः । दृष्टा सीतेति तत्त्वं न्यवेदयदित्यर्थः । अत्र दृष्टेति पदस्य प्रथमप्रयोगो रामस्य सीतेति श्रवणे तद्विषयक्रियापदसंशयो माभूदित्यर्थः ॥ ७८ ॥

रा० टी०—रघुनाथप्राप्तिकालिकं हनुमद्वृत्तमाह—सोऽभिगम्येत्यादिना । अमेयात्मा अपरिमितधैर्यबलादिमान्स हनुमान् महात्मानं परमधैर्यवन्तं राममभिगम्य साम्मुख्येन प्राप्य प्रदक्षिणं च कृत्वा । विनापि चं समुच्चयः । तत्त्वतो वस्तुतः सीता मया दृष्टेति न्यवेदयत् सम्यक् कथयामास । प्रदक्षिणं कृत्वेत्यनेन कथनात्पूर्वमाचरणादपि सीतादर्शनं बोधितमिति व्यञ्जितम् । अत्र पूर्वं दृष्टेत्युक्त्या एतदुच्चारणात्पूर्वं सीतापदमात्रश्रवणेन तद्विषयकसंशयो माभूदिति हेतुर्व्यक्तः । परमधैर्यवन्तमित्युक्त्या क्षणांशमपि वियोगानर्हीभूतसीतावियोगेऽयं प्राणान्कथं धारयतीति हनुमत्सन्देहनिवर्त्तको हेतुः सूचितः । तेन हनुमतः परमाभिज्ञत्वं सूचितम् । तत्त्वत इत्यनेन मायिकसीतादर्शनव्यावृत्तिर्बोधिता ॥ ७८ ॥

गो० टी०—सोऽभिगम्येति । अमेयात्मा अपरिच्छेद्यबुद्धिः स हनुमान् महात्मानं सीतावियोगज्वरेऽप्यवार्यधैर्यं राममभिगम्य आभिमुख्येन प्राप्य । अनेन हनुमतः कृतकार्यत्वं बो-

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः । समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७९ ॥
दर्शयामास चात्मानं समुद्रः सरितां पतिः । समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ८० ॥
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे । रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८१ ॥
तामुवाच ततो रामः परुषं जनसंसदि । अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८२ ॥

तितम् । प्रदक्षिणं च कृत्वा सीता तत्त्वतो यथावद्दृष्टेति न्यवेदयत् अकथयत् । सीता दृष्टेति वक्तुं शक्यत्वेपि दृष्टा सीतेत्युक्तिः रामस्य सीतादर्शनजीवनादिविषयसंशयो माभूदिति वदन्ति । अन्ये त्वदृष्टेति प्रतिभासेतेति दृष्टेत्युक्तमिति । अपरे तु सन्तोषातिशयप्रकटनाय प्रथमं कृतकार्यनिर्देश इति ॥ ७८ ॥

७९ ] ति० टी०—तत इति । ततो युद्धकाण्डकथासङ्ग्रहः । क्षोभयामास । लङ्कागमनमार्गदान औदासीन्यात्समुद्रमापातालमाकुलीचकारेत्यर्थः ॥ ७९ ॥

रा० टी०—सुन्दरकाण्डवृत्तं समाप्य युद्धकाण्डवृत्तमाह—तत इत्यादिभिः । ततो हनुमद्वाक्यश्रवणानन्तरम् । सुग्रीवसहितो रघुनाथः महोदधेः समुद्रस्य तीरं गत्वा प्राप्य आदित्यसन्निभैः आदित्यप्रकाशकैः शरैर्बाणैः समुद्रं क्षोभयामास आपातालमाकुलीचकार । एतेन बाणव्यापारात्पूर्वं लङ्कामार्गदाने समुद्रस्यानवधानता सूचिता ॥ ७९ ॥

गो० टी०—अथ युद्धकाण्डकथां संगृह्णाति—ततइत्यादि । ततः हनुमद्वाक्यश्रवणानन्तरं सुग्रीवसहितः सन् महोदधेः शतयोजनविस्तीर्णसिन्धोस्तीरं गत्वा आदित्यसन्निभैः शरैः समुद्रं क्षोभयामास आपातालमाकुलीचकार ॥ ७९ ॥

८०] ति० टी०—दर्शयामासेति । समुद्रः। शरक्षोभित इति शेषः । समुद्रवचनात् 'एष सेतुं महोत्साहः करोतु मयि वानरः । तमहं धारयिष्यामि ' इत्येवंरूपान्नलं सेतुमकारयत् । नलेन सेतुं कारितवानित्यर्थः ॥ ८० ॥

रा० टी०—दर्शयामासेति । प्राप्तक्षोभानन्तरम् । एवोनन्तरार्थकः । सरितां पतिः समुद्रः आत्मानं स्वस्वरूपं दर्शयामास । चकारात्स्वापराधक्षमापनवचनं समुच्चारयामास । रामः समुद्रवचनात् समुद्रप्रार्थनातः । चकारात्स्वाश्रितकल्याणाय स्वाचरितसूचनार्थं नलं सेतुमकारयत् नलेन सेतुं रचयामास । नलस्य कर्मत्वं " हृक्रोरन्यतरस्याम् " इति विहितम् । स्वाश्रितकल्याणायेत्यनेन रघुनाथस्य परमदयालुत्वं सूचितम् ॥ ८० ॥

गो० टी०—दर्शयामासेति । सरितां नदीनां पतिः। अनेन रामकोपशान्तये कालिय इव समुद्रः सपत्नीकः समागत इति ध्वन्यते । समुद्रः आत्मानं निजरूपं दर्शयामास । रामायेति शेषः। समुद्रवचनादेव नलं सेतुमकारयच्च नलेन सेतुं कारयामास । "हृक्रोरन्यतरस्याम् " इति प्रयोज्यकर्तुः कर्मत्वम् ॥ ८० ॥

८१ ] ति० टी०—तेनेति । तेन सेतुना । आहवे युद्धे । अत्र कश्चिन्मध्ये 'अभ्यषिञ्चत्' इत्यादिश्लोकद्वयम्—'अभ्यषिञ्चत्स लङ्कायां राक्षसेन्द्रं विभीषणम्। कर्मणा तेन महता देवा इन्द्रपुरोगमाः ॥ सदेवर्षिगणास्तुष्टा राघवं तेऽभ्यपूजयन् । तथा परमसन्तुष्टैः पूजितः सर्वदैवतैः ॥' लङ्कायां राज्ये राक्षसेन्द्रं तत्त्वव्यवहारविषयो भवति यथा तथाऽभ्यषिञ्चत् । तेन कर्मणा रावणहननादिरूपेण । सदेवर्षिगणा देवर्षिसहिता गणाः । अर्थादृषिगणास्तत्सहिता देवा इत्यर्थः । तदिदं श्लोकद्वयम् । 'पूजितः सर्वदैवतैः। अभिषिच्य च' इत्यनेन पुनरुक्तमिति प्रक्षिप्तमेव बोध्यम्। सीतां प्राप्यानु पश्चात्परां व्रीडां रक्षोगृहे चिरोषितां पुनर्गृहीतवानिति लोकापवादशङ्कयातिशयितां लज्जामुपागमत् ॥ ८१ ॥

रा० टी०—सेतुबन्धनोत्तरकालिकं वृत्तमाह—तेनेत्यादिना । रामः तेन स्वकारितेन सेतुना लङ्कां पुरीं गत्वा प्राप्य आहवे तत्रत्यसंग्रामे रावणं हत्वा परां लक्ष्म्यादिश्रेष्ठां सीतामनुप्राप्य सम्यक् स्वीकृत्य व्रीडामिन्द्रादिसाहाय्यकारकरघुकुलोद्भवो वानरसाहाय्येन स्वपरिग्रहं प्राप्त इति वानरप्रभावानभिज्ञजना वदिष्यन्तीति लज्जाभासमुपागमत् प्राप । अत्र व्रीडां प्रापेत्युक्त्या रघुनाथस्य परममर्यादापालकत्वं व्यक्तम् ॥ ८१ ॥

गो० टी०—तेनेति । रामस्तेन सेतुना लङ्कां पुरीं गत्वा आहवे युद्धे रावणं हत्वा सीतां प्राप्य अनु पश्चात् परामातिशयितां व्रीडां लज्जामुपागमत् पौरुषनिर्वहणाय रिपुहननपूर्वकं सीता पुनः प्राप्ता । परगृहास्थितां कथमङ्गीकरिष्यामीति लज्जितोऽभूदित्यर्थः ॥ ८१ ॥

८२] ति० टी०—तामिति । जनसंसदि वानरराक्षससभायां परुषं मर्मस्पृक् । ' दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ' इत्यादिवचनमुवाच । लोकस्य नास्यां रामस्य कामादिदोषतः पुनर्जिघृक्षास्तीति प्रत्यायनार्थम् । अमृष्यमाणा पातिव्रत्यसंशयजनितमुक्तवचनम् । सतीत्यनेन पातिव्रत्यबलान्निजेच्छयाग्निप्रादुर्भावनशक्तिमत्त्वद्योतनमिति केचित् । लक्ष्मणप्रादुर्भावितो ज्वलन इत्यन्ये ॥ ८२ ॥

रा० टी०—तामिति । ततोऽनन्तरं जनसंसदि वानरादिसभामध्ये तां सीतां रामः परुषं वक्तुमनर्हं वचः उवाच । जनसंसदीत्यनेन परुषोक्तिर्न स्वाभिप्रेतेति ध्वनितम्। सती सतीभिः पतिव्रताभिः ईयते मनसा प्राप्यते । स्वसतीत्वनिर्वाहार्थं नित्यं स्मर्यत इत्यर्थः । किञ्च सतीनां ईः सम्पत्तिर्यस्याः सा । सतीनां परमदेवतेत्यर्थः । पूर्वान्तवद्भावेन ङ्यन्तत्वात्सुलोपः । सा लक्ष्म्यादिपरा सीता अमृष्यमाणा अन्यप्रत्ययार्थं वचोऽन्यार्थमसहमाना ज्वलनं प्राकृतवह्नित्वेन जनैः प्रतीयमानं विवेश स्वस्वरूपभूततेजसि तस्थौ । अतएव सतीत्यनेन अमृष्यमाणा इत्यस्य न विरुद्धत्वम्। एतेन सीतारामयोः परमचतुररसिकशिरोमणित्वं ध्वनितम् ॥ ८२ ॥

ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् । कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ८३ ॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः । बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः ॥ ८४ ॥
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८५ ॥

गो० टी०—तामिति । ततः व्रीडाप्राप्तेर्हेतोः । 'यत्तयतस्ततो हेतौ' इत्यमरः । तां तादृशपातिव्रत्यां सीतां जनसंसदि देव्रादिसभायां परुषं वचनमुवाच । "अकथितं च" इति द्विकर्मकत्वम् । जनसंसदीत्यनेन प्रत्ययोत्पादनार्थं शपथं कुर्विति सूचितम् । सती पतिव्रता सीता अमृष्यमाणा रामोक्तपरुषवचनमसहमाना ज्वलनं लक्ष्मणानीतमग्निं विवेश ॥ ८२ ॥

८३-८४] ति० टी०—तत इति । अग्निवचनात् 'विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव' इत्येवंरूपात् । विगतकल्मषां निष्पापां स्वयं ज्ञात्वा लोकस्य च तथात्वं प्रत्याय्य । सीतामङ्गीचकारेति शेषः । क्वचित्तु ' अग्रहीदमलां रामो वचनाच्च गुरोस्तदा ' इति पठ्यते । तत्रामलामिति पुनरुक्तमापद्यते ॥ ८३ ॥ सदेवर्षीति । तेन कर्मणा सीताप्रत्यानयनान्तेन कर्मणा । ऋषिदेवगणसहितचराचरप्रजासहितं त्रैलोक्यं तुष्टं तुतोष । तत्सन्तोषेण च प्रहृष्टसन्तोषवशादेव सर्वदैवतैः पूजितश्च रामो बभौ । अत्र केचिदचराणां वृक्षादीनां रावणकृतपीडापरिज्ञानाभावेन रावणवधजन्यसन्तोषभावादेवं व्याचक्षते—' देवऋषिगणम् ' इति पाठः । " ऋत्यकः " इति प्रकृतिभावः । तत्र देवगणा इन्द्रादयः, ऋषिगणा विश्वामित्रादयः । एतद्रूपं यत्रैलोक्यं सचराचरम् । अत्र चरप्रजा गतिभक्षणमात्रप्रधानास्तिर्यक्स्रोतसः पशुपक्ष्यादय ऐरावतादयः । अचरप्रजाश्चरप्रजाभिन्नाज्ञानयुक्तप्रजा अवाक्स्रोतसो मनुष्याः । एवं च स्वस्वशेषतिर्यगवाक्स्रोतोयुतं देवर्षिगणरूपं त्रैलोक्यं तुष्टम् । रावणस्य मर्त्योपेक्षित्वात्प्राधान्येन देवर्षिग्रहणमित्याहुः ॥ ८४ ॥

रा० टी०—ततइति । ततः ज्वलनप्रवेशानन्तरम् । अग्निवचनात् ' विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव ' इत्याद्याकारकात् । विगतकल्मषां कल्मषसंबन्धशून्यां सीतां ज्ञात्वा जनान् बोधयित्वा । स्वीचकारेति शेषः । महता अतिप्रशंसनीयेन तेन सर्वप्रतीतिजनकेन महात्मनः सर्वश्रेष्ठस्य राघवस्य कर्मणा सदेवर्षिगणं देवर्षिगणसहितं सचराचरं चराचरसहितं त्रैलोक्यं तुष्टं सन्तोषं प्राप्तमासीत् । अतएव सर्वदैवतैः निखिलसुरैः पूजितः । अतएव सम्प्रहृष्टः परमहर्षं प्राप्तो रामः बभौ शुशुभे । श्लोकद्वयं सम्मिलितान्वयि । विगतकल्मषां बोधयित्वेत्यनेन रामस्य लोकापवादभीरुत्वं बोधितम् । तेन रघुनाथे सौशील्यगुणो व्यक्तः । सर्वदैवतैः पूजितस्तर्हि मनुष्यादिभिः पूजित इति किं वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो व्यक्तः । ज्ञात्वेत्यत्रान्तर्भावितणिजर्थः ॥ ८३ ॥ ८४ ॥

गो० टी०—'ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् । बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः' इति क्रमः । अन्यस्तु लेखकप्रमादकृतः । ततः अग्निप्रवेशानन्तरमग्निवचनात्सीतां विगतकल्मषां करणत्रयेपि दोषगन्धरहितां ज्ञात्वा रामः सम्प्रहृष्टः सन् बभौ सर्वदैवतैः पूजितश्च बभूव । अहो रामस्य धर्मापेक्षितेति स्तुतोऽभूदित्यर्थः ॥ ८३ ॥ कर्मणेति । महात्मनो महास्वभावस्य राघवस्य तेन कर्मणा रावणवधेन सचराचरं स्थावरजङ्गमसहितं सदेवऋषिगणं त्रैलोक्यं त्रिलोकी । स्वार्थे ष्यञ् । तुष्टं सन्तुष्टमासीत् । स्थावरस्य सन्तोषः पल्लवोद्गमादिनाऽवगम्यते । ' अन्तःसंज्ञा भवन्त्येते ' इति विष्णुपुराणम् ॥ ८४ ॥

८५ ] ति० टी०—अभिषिच्येति । राक्षसेन्द्रं भावितरवव्यवहारविषयम् । कृतकृत्यः प्राक्प्रतिज्ञातविभीषणाभिषेकलक्षणकृत्यस्यापि कृतत्वात्कृतकृत्यः । अत एव विज्वरो विगतावश्यकर्तव्यविषयचिन्तातापः । प्रमुमोदेति च्छान्दसं परस्मैपदम् ८५

रा० टी०—सिंहावलोकनन्यायेन सीतासमागमनात् पौर्वकालिकं विभीषणराज्याभिषेकं प्रदर्शयन् रघुनाथवृत्तमाह—अभिषिच्येत्यादिना । तदा सीतासमागमात्पूर्वस्मिन्काले राक्षसेन्द्रं राक्षसनिष्ठस्वतानिरूपितस्वामितायोग्यं विभीषणं लङ्कायामभिषिच्य यथाविधि राज्याभिषेकं कारयित्वा । चकारात् विभीषणकृतसत्कृतिं प्राप्य । अतएव कृतकृत्यः कृतं निष्पादितं कृत्यं कर्तव्यं ब्रह्मादिप्रार्थनया स्वीकृतं राक्षसनिवर्तकत्वादि येन सः । अतएव विज्वरः विगतः ज्वरः सज्जनसन्तापो यस्मात्स रामः प्रमुमोद प्रमोदं प्राप । ह इति विभीषणप्रमोदद्योतकम् । अनुदात्तेत्वप्रयुक्तात्मनेपदस्यानित्यत्वात्परस्मैपदम् । वौ पक्षिणि जटायुषि ज्वरः पश्चात्तापो यस्येत्यपि विज्वरशब्दार्थं वर्णयन्ति गोविन्दाचारिणः । अप्रकृतत्वात् रघुनाथदर्शनजन्यप्राप्तपुरुषार्थकत्वेन शोकानर्हत्वाच्च एतद्विवरणीभूतयुद्धकाण्डे तत्स्थानदर्शनरूपप्रकरणेऽपि रामकर्तृकज्वरस्यावर्णनाच्च । " तेषां सर्वेषु लोकेषु कामचार " इत्यादिश्रुतिबोधितसर्वलोकगमनसामर्थ्यविशिष्टप्राप्तपरमपुरुषार्थदशरथसखजटायुषस्तेनसहागमनसम्भवाच्च न तद्व्याख्यातमस्माभिः ॥ ८५ ॥

गो० टी०—अभिषिच्येति । यद्यपि सीतासमागमात् पूर्वं विभीषणाभिषेकः तथाप्यत्र क्रमो न विवक्षित इति ज्ञेयम् । रामः विभीषयतीति विभीषणस्तम् । नन्द्यादित्वाल्ल्युः । शत्रुभयङ्करमित्यर्थः । लङ्कायां चाभिषिच्य समुद्रतीरेऽभिषेकः समुच्चीयते । यद्वा चोऽवधारणार्थः । अभिषिच्यैव कृतकृत्यो न तु रावणं हत्वैव । लङ्कायां विभीषणमभिषिच्य लुहिवनं छित्वा सहकारं स्थापयित्वेतिवत् । यद्वा चोन्वाचये । प्रधानतयाऽपवर्गमनुगृह्यानुषङ्गिकतया राज्येऽभिषिच्येत्यर्थः । ' शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां पुंसामपवर्गप्रदो हरिः ' इति वचनात् । अभिषिच्य तदा रामः अभिषेकात्पूर्वं कथं स्यादिति चित्रणोऽभूत् । अथ रमणीयोऽभूत् तदा रामो रामोऽभूत् । विज्वरः भरतो

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् । अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६ ॥
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः । भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत् ॥ ८७ ॥
पुनराख्यायिकां जल्पन्सुग्रीवसहितस्तदा । पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८८ ॥
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः । रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९ ॥

---

यथा राज्यं न स्वीकृतवान् तथायमपि चेत् किं कुर्यामिति पूर्वं ज्वरोऽभूत् । स इदानीं निवृत्त इत्यर्थः । यद्वा नागपाशप्रभृतिषु 'यन्मया न कृतो राजा राक्षसानां विभीषणः । तच्च मिथ्याप्रलप्तं मां प्रधक्ष्यति न संशयः' इति । योयमन्तस्तापः स इदानीं निवृत्त इत्यर्थः । न केवलं विज्वरः प्रमुमोद च प्रकर्षेण मोदं प्राप्तश्च । चक्षिङो ङित्करणादनित्यमनुदात्तेत आत्मनेपदत्वम् । अतोऽत्र परस्मैपदप्रयोगः । अनेन रामस्य रावणवधसीताप्राप्ती आनुषङ्गिकफले । स्वाश्रितविभीषणाभिषेचनमेव परमपुरुषार्थ इत्यवगम्यते । यद्वा वौ पक्षिणि जटायुषि ज्वरो यस्य सः । यथा लोके कस्यचित्पुत्रस्योत्सवे कथंचिन्मोदमानोऽपि पिता पूर्वातीतपुत्रस्मरणात् सन्तप्त एव भवति । एवं सर्वलोकपिता स्वामी च विभीषणाभिषेकसमये विनाभिषेकमतीतं जटायुषं स्मरन् किंचिदन्तस्तापोपपन्न एव मुमुदे इत्यर्थः । यद्वा विज्वर इत्यनिष्टनिवृत्तिरुक्ता । प्रमुमोदेतीष्टप्राप्तिः । हेति प्रसिद्धौ विस्मये वा । हन्त रामस्य सत्यप्रतिज्ञत्वमित्यर्थः ॥ ८५ ॥

८६ ] ति० टी०–देवताभ्य इति । सुप्तोत्थितवदुत्तिष्ठन्तु वानरा इत्येवंरूपं वरं रावणवधजनितहर्षवशात्स्वदिदृक्षया समागताभ्यो देवताभ्यः प्राप्य सुहृद्भिः सुग्रीवविभीषणादिभिः संवृतः पुष्पकेणायोध्यामुद्दिश्य प्रस्थितो जगाम ॥ ८६ ॥

रा० टी०–देवताभ्यइति । सुहृद्वृतः सुग्रीवादिविभीषणादिसहितो रामः देवताभ्यः रघुनाथविजयस्तवनाय आगतसुरेभ्यः वरं सुप्तोत्थिता इव वानरा उत्तिष्ठन्त्वित्यादिरूपं प्राप्य लब्ध्वा अतएव वानरान्समुत्थाप्य देवतादत्तवरेण यथावत्स्मृत्यादिविशिष्टान् सम्बोध्य पुष्पकेण विभीषणसमर्पितकुबेरविमानविशेषेण अयोध्यां प्रस्थितः । अयोध्योद्देश्यकसंयोगानुकूलव्यापारवानासेति शेषः । देवताभ्यो वरं प्राप्येत्युक्त्या 'यः कालकालो गुणी सर्वविद्यः' इत्याद्यागमगम्यदेवतादिस्थितिपरमहेतुभूतरघुनाथेन देवसम्माननं कृतमिति ध्वनितम् । चो हेतौ ॥ ८६ ॥

गो० टी०–देवताभ्यइति । रामः देवताभ्यः रामविजयश्लाघनायागताभ्यः वरं प्राप्य तेन वरेण वानरान् रणे मृतान् समुत्थाप्य सुप्तानिवोत्थाप्य सुहृद्भिः सुग्रीवविभीषणादिभिर्वृतः सन् पुष्पकेण कुबेरं विजित्य रावणेन समानीतेन पुष्पकाख्यविमानेन अयोध्यांप्रति प्रस्थितः ॥ ८६ ॥

८७] ति०टी०–भरद्वाजेति । 'चतुर्दशे तु सम्पूर्णे वर्षेऽहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम्' इति भरतेन प्रतिज्ञातत्वाद्भरद्वाजाश्रमे चतुर्दशसमासमाप्त्यनन्तरं मुनिवचनेनैकदिनविलम्बस्य प्राप्तत्वात्स्वागमनप्रबोधनाय हनुमद्विसर्जनम् । यद्वा महत्या वानरसेनया सहाकस्माद्गमने भरतादेः शङ्का मा भूदिति तद्विसर्जनम् ॥ ८७ ॥

रा० टी०–भरद्वाजेति । सत्यपराक्रमः सत्यो ध्वंसाप्रतियोगी पराक्रमो यस्य । किञ्च सत्याऽयोध्या साऽस्त्याधारत्वेन येषां ते सत्या अयोध्यावासिनः तान्नित्यं पिपर्तीति सत्यपरः । अतएव न क्रमते अयोध्यां परित्यज्य न क्वचिद्गच्छतीत्यक्रमः स एव स इति कर्मधारयः । आरामः सर्वलोकाभिरामदाता रामः भरद्वाजाश्रमं गत्वा प्राप्य भरतस्यान्तिके समीपे हनुमन्तं व्यसर्जयत् । स्वागमनबोधनाय प्रेषयामासेत्यर्थः । ध्वंसाप्रतियोगिपराक्रमविशिष्ट इत्यनेन सङ्केतितस्वागमनावधिदिनमेव भरद्वाजाश्रमगमनदिनमिति ध्वनितम् । अयोध्यायां नित्यं स्थित एव सर्वलोकाभिरामदातेत्यनेन परिच्छिन्नमूर्तेरपरिच्छिन्नत्वमपि व्यक्तम् । तेनाऽघटितघटनापटीयश्शक्तिमत्त्वं रघुनाथस्य व्यञ्जितम् । भरतस्यान्तिक इत्यनेन भरतविषयकरघुनाथप्रीतेराधिक्यं ध्वनितम् । रघुनाथमूर्तेः परिच्छिन्नापरिच्छिन्नत्वे प्रमाणम् । 'य एव विग्रहो व्यापी परिच्छिन्नः सएव हि । अयोध्यायां निवसते ततः पादं न गच्छति' इति सदाशिवसंहितावचनम् ॥ ८७ ॥

गो० टी०–भरद्वाजेति । सत्यपराक्रमः सत्यविषयपराक्रमवान् । राम इति क्रियाभेदाद्द्विरुक्तिः । भरद्वाजाश्रमं गत्वा भरतस्यान्तिकं समीपं प्रति हनूमन्तं व्यसर्जयत् व्यसृजत् । हनूशब्द ऊकारान्तोऽप्यस्ति । भरद्वाजेनात्र स्थातव्यमिति प्रार्थिते तद्दिवसेन चतुर्दशवर्षपूर्त्तेः 'पूर्णे चतुर्दशे वर्षे आगमिष्यामि' इति भरतं प्रत्युक्तेः । सत्यत्वरक्षणाय हनूमन्तं प्रेरितवानिति भावः ॥ ८७ ॥

८८] ति० टी०–पुनरिति । पुष्पकादवतीर्णत्वात्पुनस्तत्पुष्पकं समारुह्य । आख्यायिकां पूर्ववृत्तविषयां कथाम् । भरद्वाजाश्रमारोहात्पूर्वमिव जल्पन्कथयन् । सुग्रीवेति विभीषणादेरुपलक्षणम् ॥ ८८ ॥

रा० टी०–पुनरिति । तदा भरद्वाजाश्रमान्निर्गमनसमये सुग्रीवसहितो रघुनाथस्तत्प्रसिद्धं पुष्पकं पुनः समारुह्य । सावधानतया तत्र स्थित्वेत्यर्थः । आख्यायिकां भरतवृत्तप्रबन्धं जल्पन्कथयन् तदा तस्मिन्नेव दिने नन्दिग्रामं भरताधिष्ठितायोध्यैकदेशं ययौ प्राप । समारुह्येत्यनेन रघुनाथस्य हर्षातिशयः सूचितः । सर्वं वाक्यं सावधारणं भवतीति न्यायेनैवकारलाभः ॥ ८८ ॥

गो० टी०–पुनरिति । रामस्तत्पुष्पकं समारुह्य सुग्रीवसहितः सन् तदा गमनकाले आख्यायिकां पूर्ववृत्तकथाम् । 'आख्यायिकोपलब्धार्था' इत्यमरः । पुनः पुनः जल्पन् कथयन् अर्थात् भरतविषयाख्यायिकां सुग्रीवेण जल्पन्निति गम्यते । नन्दिग्रामं भरतस्थानं तदा तस्मिन्नेव काले शीघ्रमित्यर्थः । ययौ प्राप ॥ ८८ ॥

८९] ति० टी०–नन्दिग्राम इति । नन्दिग्रामे भ्रातृभिः सह स्वस्यापि व्रतप्रयुक्तां जटां हित्वा त्यक्त्वा रामः सीतामनुप्राप्य

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः। निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९० ॥
न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित्। नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९१ ॥

मुनिवेषत्यागेन सीतानुरूपं रूपं प्राप्य। यद्वा मुनिवेषत्यागेन हृष्टां सीतां प्राप्य प्राप्तविसृष्टं राज्यं पुनरवाप्तवान् ॥ ८९ ॥

रा० टी०–नन्दिग्रामइति। अनघः दूरीकृतदेवव्यसनः हितः सर्वलोकप्रियः भ्रातृभिर्भरतादिभिः प्रार्थितः स रामः नन्दिग्रामे भरतनिवासस्थाने जटां हित्वा संशोध्य सीतामनुप्राप्य संश्लिष्य राज्यं पित्राज्ञया विसृष्टं पुनरवाप्तवान् प्राप्तः। जटाशब्दो भावप्रधानः। तत्त्यागस्य संशोधनमन्तरेणासम्भवेन संशोध्येत्यर्थः फलितः। जटाव्यक्तिं त्यक्त्वेत्यर्थस्तु न युक्तः। सच्चिदानन्दात्मको भगवान्सच्चिदानन्दात्मिकास्य व्यक्तिः "आनन्दरूपममृतं यद्विभाति तदाऽऽप्रणखादानन्दमेव" इत्यादिश्रुतिप्रामाण्येन रघुनाथकेशादीनामानन्दरूपत्वेन स्वरूपानतिरेकत्वात्यागायोगात्। सीतां संश्लिष्येत्यनेन यावद्वनवासं सीतारामयोरेवं संश्लेषो न जात इति ध्वनितम्। तेन धैर्यातिशयो ध्वनितः ॥८९॥

गो० टी०–नन्दिग्राम इति। अनघः सम्यगनुष्ठितपितृवचनः। यद्वा 'शिरसा याचतस्तस्य वचनं न कृतं मया' इत्युक्तपापरहित इत्यर्थः। यद्वा निरस्तसमस्तव्यसनः। 'दुःखेनोव्यसनेष्वघम्' इति वैजयन्ती। रामः भ्रातृभिः सहितः। 'कदान्वहं समेष्यामि भरतेन महात्मना। शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन' इत्युक्तमनोरथपूर्णं इत्यर्थः। नन्दिग्रामे जटां हित्वा शोधयित्वा। उपलक्षणमेतत्। 'विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः। महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन्' इत्युक्तरूपः सीतामनुप्राप्य समीपे प्राप्य 'रामं रत्नमये पीठे सहसीतं न्यवेशयत्' इत्याद्युक्तरीत्या दिव्यसिंहासने सीतयाभिषेकं प्राप्येत्यर्थः। राज्यं पुनरवाप्तवान्। पितुर्वचनात्पूर्वं प्राप्तं विश्लिष्य पुनरय प्राप्त इत्यर्थः ॥ ८९ ॥

९० ] ति० टी०–एतदन्तं चरितं वृत्तत्वेनोपदिश्य देवर्षिरतःपरमुत्तरकाण्डविषयं भविष्यत्वेनोपदिशति–प्रहृष्टेति। अनेन च रावणवधानन्तरं रामे राज्यं प्रशासति सति वाल्मीकेर्नारदं प्रति प्रश्न इति ज्ञायते। प्रहृष्टः प्रातिस्विकपुत्रपश्वादिसंपत्त्या मुदितः क्षोभराहित्येन मुदितान्तःकरणः। लोकः सर्वप्रजाः। तुष्टो बहुप्रदाद्भगवतः सांसारिकपारमार्थिकार्थलाभात्तुष्टः। अतएव पुष्टो दारिद्र्यकार्श्यरहितः। आमयो मनःपीडा। रोगो देहजो व्याधिः। दुर्भिक्षेण चोरादिभयेन च रहितः। भविष्यतीति शेषः। यद्वा रामविरहेण दुःखितो राममेलनेन तुष्टः। तथा तद्विरहेण कृशस्तन्मेलनादेव पुष्टः ॥ ९० ॥

रा० टी०–प्रवृत्ते रामराज्ये प्रजावृत्तान्तमाह–प्रहृष्टेत्यादिभिः। लोकः रामानुशासनकालिकजनः प्रहृष्टो मुदितः। आसीदिति शेषः। प्रहृष्टः रोमाञ्चवत्तां प्राप्तः मुदितः तत्कारणीभूतसर्वाभिलषितप्राप्तिजनितप्रमोदविशिष्टः स एव स इति कर्मधारयः। अतएव तुष्टः परमसन्तोषं प्राप्तः। अतएव पुष्टः परिपूर्णशरीरसामर्थ्यविशिष्टः। अतएव सुधार्मिकः धर्मं चरतीति धार्मिकः। "धर्मं चरति" इति ठक्। शोभनश्चासौ धार्मिकश्च सुधार्मिकः। धार्मिकत्वे शोभनत्वं तु सकलधर्मफलभूतरघुनाथसेवनाश्रितत्वेन। अतएव निरामयः मानसव्यथारहितः। अतएव अरोगः शरीररोगवर्जितः। अतएव दुर्भिक्षभयवर्जितः दुर्भिक्षहेतुकभीतिरहितः। दुर्भिक्षजनकासन्तोषादेरभावात्कथं तच्छङ्काहेतुकभीतिः स्यादिति भावः। हिर्हेतौ। चो नित्यार्थकः। तत्सम्बन्धः सर्वत्र बोध्यः ॥ ९० ॥

गो० टी०–रामस्य राज्यप्राप्तिकृतं लोकस्यातिशयं दर्शयति–प्रहृष्टेति। लोकः जनः प्रहृष्टमुदितः। तदानीमासीदिति शेषः। एवमुत्तरत्रापि प्रहृष्टः सञ्जातरोमाञ्चः "हृषेर्लोमसु" इति अनिट्त्वविधानात्। मुदित इति तन्मूलसन्तुष्टान्तःकरणत्वमुच्यते। तुष्टः समस्तकामलाभजनितप्रीतियुक्तः। यद्वा 'इच्छामो हि महाबाहुं रघुवीरं महाबलम्। गजेन महता यान्तं रामं छत्रावृताननम्' इत्यभिलषितलाभ उच्यते। पुष्टः 'विषये ते महाराज रामव्यसनकर्शिताः। अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः' इत्युक्तरामविरहजकार्श्यत्यागात् पुष्टः। सुधार्मिकः सुधर्मः रामभक्तिपूर्वकं कर्म तच्चरतीति सुधार्मिकः। "धर्मं चरति" इति ठक्। 'स्त्रियो वृद्धास्तरुण्यश्च' इत्युक्तः। धर्मफलभागित्यर्थः। निरामयः शारीररोगरहितः। अरोगः मानसव्याधिरहितः। दुर्भिक्षभयवर्जितः। भिक्षाणां व्यृद्धिः दुर्भिक्षम्। व्यृद्धावव्ययीभावः। दुर्भिक्षात् भयं दुर्भिक्षभयं तेन वर्जितः। अनेन पूर्वं सीताविशिष्टरामवियोगे प्रजानामामयादिकमासीत्; तदिदानीं निवृत्तमित्युच्यते। प्रहृष्टेत्यादिरामाभिषेकदर्शनसन्तोषो न वर्णयितुं शक्य इत्याह कविः 'प्रहृष्टमुदितो लोकस्तुष्टः पुष्ट' इति। अथ प्रीतिकारितकैङ्कर्यसिद्धिं दर्शयति–सुधार्मिक इति। शोभनो धर्मो विशिष्टविषयकैङ्कर्यमेव। अथ कैङ्कर्यविरोधिनिवृत्तिमाह। निरामयो ह्यरोगश्चेति। कैङ्कर्योपकरणसमृद्धिमाह–दुर्भिक्षेति ॥ ९० ॥

९१ ] ति० टी०–नेति। स्वपितृषु स्वेषु च जीवत्स्विति शेषः। अविधवाः। भर्त्रनुगमनाद्वंशपुत्रसद्भावाद्वेति शेषः ॥९१॥

रा० टी०–प्रमोदप्रतिबन्धकाभावं विशदयन्नुत्तरकाण्डवृत्तमाह–न पुत्रेत्यादिभिः। रामराज्ये केचिदपि पुरुषाः क्वचित्स्वप्नादावपि पुत्रमरणं प्रीतिविषयीभूतसुतादिवियोगं न द्रक्ष्यन्ति। ब्राह्मणपुत्रस्य पुनः प्राणसंबन्धात्र तस्य वास्तवं मरणमिति न विरोध इति बोध्यम्। नार्यः स्त्रियः अविधवाः वैधव्यरहिताः नित्यं पतिव्रताः सर्वकालं स्वस्वपत्यनुकूलवर्तिन्यो भविष्यन्ति। लृडुपात्तायतनत्वस्याविवक्षा। कौशल्यादिविषये

१ इदं पूर्वटीकाद्वयविरुद्धम्।

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः । न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ ९२ ॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा । नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३ ॥
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा । अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९४ ॥
गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् । असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९५ ॥

---

तु न शङ्कावकाशः । तत्पतिवियोगाभासस्य रामराज्यप्राक्कालिकत्वात् । यथा नैतासां वास्तवः पतिवियोगस्तथा वनयात्रावर्णनसमये वक्ष्यामः । पुत्रशब्देन तदादिलाभ उपलक्षणविधया ॥९१॥

गो० टी०—अथ वर्णाश्रमधर्मपरिपालनप्रधानामुत्तरकाण्डकथां संगृह्णाति—नपुत्रेत्यादि । केचिदपि पुरुषाः क्वचित् कुत्रापि देशे किंचित्कादाचित्कमपि पुत्रमरणं न द्रक्ष्यन्ति । न द्रक्ष्यन्तीत्यनेन ब्राह्मणपुत्र इव कदाचित्प्राप्तमपि परिहरिष्यतीति भावः । नार्यश्चाविधवाः नित्यं पतिव्रताश्च भविष्यन्तीति । यद्वा विविधा धवा यासां ताः विधवा न विधवा अविधवा अव्यभिचारिण्यः । अव्यभिचारित्वेऽपि पत्यादव्यनुरागः कासांचित्स्यात्स नेत्याह—पतिव्रताइति । कौसल्यादयस्तु पुत्रवत्तया वृद्धतया च न विधवा इति भावः ॥ ९१ ॥

९२ ] ति० टी०—न चाग्निजमिति । पादत्रयेणाधिदैविकदुःखनिवृत्तिरुच्यते । चतुर्थेनाध्यात्मिकनिवृत्तिः ॥ ९२ ॥

रा० टी०—न चेति । अग्निजमग्निहेतुकं किञ्चित् पाकादिसमये अङ्गुल्यादिदाहजनितमपि भयं नाभवत् । चोप्यर्थे । जन्तवः अप्सु न मज्जन्ति । इदमुपलक्षणम् । अकालमृत्युं न प्राप्नुवन्तीत्यर्थः । वातजं वातहेतुकं किञ्चित् शोकादिजनितमपि भयं नाभवत् । तथा ज्वरकृतं देहपीडादि च नाभवत् ॥ ९२ ॥

गो० टी०—तत्र राज्ये तापत्रयगन्धोऽपि न भविष्यतीत्याह—नचेत्याद्यर्द्धत्रयम् । अग्निजं भयं न किंचित् । भविष्यतीत्यर्थः । जन्तवः नाप्सु मज्जन्ति । मङ्क्त्वा न मरिष्यन्तीत्यर्थः । एवमाधिदैविकनिवृत्तिरुक्ता । अथाध्यात्मिकादिनिवृत्तिमाह । नापि ज्वरकृतं तथा । न चापि क्षुद्भयमिति । न तस्करभयमित्याधिभौतिकोपलक्षणम् ॥ ९२ ॥

९३ ] ति० टी०—भौतिकदुःखाभावमाह—न चापीति । क्षुद्भयं क्षुदुपशमोपायाभावजं न च नैव भविष्यतीत्यनुषङ्गः ९३

रा० टी०—न चेति । क्षुद्भयमपि तत्र न । तथा तस्करभयमपि न । एतेन सर्वनियन्तृत्वं रघुनाथस्य सूचितम् । नगराणि पुराणि राष्ट्राणि ग्रामादीनि च धनधान्ययुतानि सर्वसमृद्धिमन्त्येव भविष्यन्ति । एकश्चकारोऽप्यर्थे द्वितीय एवार्थे ॥ ९३ ॥

गो० टी०—तत्र रामराज्ये अनिष्टनिवृत्तिमुक्त्वेष्टसिद्धिमाह—नगरेति । नगराणि राष्ट्राणि धनयुतानि धान्ययुतानि च भविष्यन्ति । अतएव सर्वे नागरिका जानपदाश्च यथा कृतयुगे तथाऽत्र त्रेतायामपि नित्यं प्रमुदिता भविष्यन्ति । " गत्यर्थाकर्मक " इत्यादिना कर्तरि क्तः ॥ ९३ ॥

९४-९५ ] ति० टी०—नित्यमिति । कृतयुगे स्वाभाविकादधर्मासंबन्धान्नित्यं प्रजामोदः, त्रेतायामधर्मस्य पादांशेन संबन्धेऽपि रामपालनवैभवात्तदनाक्रमेण नित्यप्रमोदत्वम् । अथ रामस्य भाविवृत्तान्तरमाह—अश्वेति । शतशब्दोऽनन्तवाची । इष्ट्वा दत्त्वेत्यादिस्वरूपकथनम् । न तु तेषां रामस्य स्वलोकप्राप्तिं प्रति हेतुतेति बोध्यम् । यत्तु कतककृताश्वमेधाद्यनुष्ठानस्य मातुपोपाधिप्रयुक्तावर्ज्याघशमनद्वारा ब्रह्मलोकप्राप्तौ हेतुत्वमित्युक्तम्. तन्न । भगवदवताराणां पुण्यपापसंबन्धस्य सर्वतन्त्रविरुद्धत्वात् । अश्वमेधाद्यनुष्ठानं तु लीलामात्रं लोकोपदेशायेत्यन्यत्र विस्तरः९०

रा० टी०—उपसंहरन्नाह—नित्यमिति । अतएव सर्वे तात्कालिका जनाः नित्यं यथावत्प्रमुदिताः । कृतयुगे प्रथमयुगेपि अतथा तात्कालिकजनास्तथा प्रमोदं न प्राप्ता इत्यर्थः । एतेन कौशल्यादीनामप्रकटसाकेतस्थत्वेन दशरथसंयोगसत्त्वान्न वास्तवपतिवियोग इति ध्वनितम् । किञ्च कौशल्यादीनां तात्कालिकवात्सल्यरसमग्नतयाश्शृङ्गारादिरसविस्मृतिरिति ध्वनितम् । अर्द्धं पृथक् । अश्वमेधेति । महायशाः समाधिकरहितकीर्तिविशिष्टो राघवः अश्वमेधशतैः शतत्रयसङ्ख्याविशिष्टाश्वमेधनामकयागैः तथा बहुसुवर्णकैः तन्नामकयागैः इष्ट्वा । गवां कोट्ययुतम् । दशसहस्राधिककोटिसङ्ख्यासङ्ख्येयगवीरित्यर्थः । विद्वद्भ्यः ब्रह्मविद्भ्यः विधिपूर्वकं यथाशास्त्रं दत्त्वा । असङ्ख्येयमियत्तारहितं धनं ब्राह्मणेभ्यः गोदानसम्प्रदानीभूतातिरिक्तविप्रेभ्यो दत्त्वा । किञ्च विद्वद्भ्यो ब्राह्मणेभ्यो विधिपूर्वकं यथाविधि गवां कोट्ययुतं दत्त्वा असङ्ख्येयं धनं च दत्त्वा यथाविधि प्रदाय यागविशेषस्य बहुसुवर्णनामकत्वं 'सुबहूनि सुवर्णानि यत्रोपकरणं वृताः । विन्दन्ति स क्रतुः सद्भिः स्मृतो बहुसुवर्णक' इत्यादिना प्रसिद्धम् । बहुवचनान्तशतशब्देन शतत्रयलाभः कपिञ्जलाधिकरणन्यायेन बोध्यः । सङ्ख्यापरत्वे एकशतार्थकत्वेऽपि न क्षतिः । गोदानसम्प्रदानभूतातिरिक्तविप्रेभ्यो धनं दत्त्वेत्यनेन तेषां गोदानग्रहणानपेक्षा व्यञ्जिता । तेन तेषां पूर्वप्राप्तगवीपूर्णत्वं व्यक्तम् । तेन रघुनाथराज्यकालिकब्राह्मणानां सन्तोषातिशयः सूचितः ॥ ९४ ॥ ९५ ॥

गो० टी०—एवं क्षत्रियासाधारणं प्रजापालनरूपं धर्ममुक्त्वा द्विजातिधर्मानाह—अश्वमेधेति । अर्द्धत्रयमेकान्वयम् । महायशाः प्रजापालनलब्धमहाकीर्तिः । अनेन द्रव्यशुद्धिरुक्ता । अश्वमेधशतैः अनेकाश्वमेधैः । ' दशवर्षसहस्राणि वाजिमेधमुपाकरोत्' इति वक्ष्यमाणत्वात् । तथा बहुसुवर्णकैः बहुसुवर्णकाख्यक्रतुविशेषैश्च । ' सुबहूनि सुवर्णानि यत्रोपकरणत्वतः । विन्दते स ह्यानप्रदर्शनेन पूर्वकतत्रोऽग्निष्टोमादयोऽपि ह्यनुष्ठिता इति सिद्धम् । गवां कोट्ययुतं दत्त्वा दशसहस्रकोटिपरिमिताः गाः ब्राह्मणेभ्यो

राजवंशाञ्छतगुणान्स्थापयिष्यति राघवः । चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥ ९६ ॥
दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ९७ ॥
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् । यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८ ॥

क्रतुः सद्भिः स्मृतो बहुसुवर्णकः' इति वचनात् । एवमुत्तरकत्वनु-दत्वा ब्रह्मलोकं ब्रह्मणः स्वस्य लोकं अप्राकृतस्थानं परमपदं प्रयास्यति । अत्र महायशा इत्यनेन यत्किञ्चिदपवादश्रवणमात्रेण सीतात्यागः सूचितः । दशवर्षसहस्राणि अश्वमेधानुष्ठानकाले इत्युक्त्या सीतां विनैव क्रत्वनुष्ठानस्य वक्ष्यमाणत्वाच्चाऽभिषेकात्परं स्वल्प एव वर्षसहस्रकाले सीतावियोग इत्यवसीयते । अश्वमेधारम्भश्च रावणवधरूपपापनिवर्हणार्थतया प्रसक्त इत्यविलम्बितः । ततः पूर्वमेव सीतावियोगः प्रथमाश्वमेधे सीताप्रतिरूपकरणात् । प्रतिकृत्यापि यज्ञानुष्ठानस्य प्रामाणिकत्वं वक्ष्यति दर्भशयनप्रकरणादौ ॥ ९४ ॥ ९५ ॥

९६ ] ति० टी०—**राजवंशानिति** । कामरूपकान्यकुब्जादितत्तद्राज्यपदस्थान्राजवंशाञ्शतगुणाननेकगुणवृद्धिर्यथा भवति तथा स्थापयिष्यति । शाश्वततत्तद्राज्यप्रदानेनेति शेषः । चातुर्वर्ण्यं चत्वारो वर्णाः । स्वार्थे ष्यञ् । नियोक्ष्यति । शङ्कितस्वधर्मभ्रंशमपीति शेषः ॥ ९६ ॥

रा० टी०—राजवंशान् राजोद्भवान् राज्ञो राजभिन्नांश्च शतगुणान् पूर्वापेक्षया अधिकसम्पत्तिमतः कृत्वा स्थापयिष्यति । अस्मिन् लोके चातुर्वर्ण्यं ब्राह्मणक्षत्रियविट्शूद्रान् स्वेस्वे धर्मे तत्तदुद्देश्यकवेदबोधिते कर्मणि नियोक्ष्यति । चातुर्वर्ण्यमित्यत्र स्वार्थे ष्यञ् । सार्द्धश्लोकद्वयमेकान्वयि ॥ ९६ ॥

गो० टी०—एवं धर्मानुष्ठातृत्वमुक्त्वा धर्मप्रवर्तकत्वमाह—**राजेति** । अस्मिन् लोके राघवः राजवंशान् क्षत्रियवंशान् शतगुणान् शतगुणितान् स्थापयिष्यति । शतगुणं विवृद्धान् । राजवंशान् प्रत्येकं राज्यप्रदानेन पालयिष्यतीत्यर्थः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । स्वार्थे ष्यञ् । स्वेस्वे स्वस्ववर्णाश्रमोचिते धर्मे । पूर्वादित्वात्सर्वनामत्वविकल्पः । नियोक्ष्यति प्रवर्त्तयिष्यति ॥ ९६ ॥

९७ ] ति० टी०—अवतारत्यागकालमाह—**दशेति** । उपासित्वा नित्यवदनुष्ठायेत्यर्थः । ब्रह्मलोकं मायिकं वैकुण्ठादिलोकम् । अनेन निजनित्यकर्मयोगोपेतस्यैव साक्षात्परम्परया ब्रह्मलोकप्राप्तिरिति ध्वनिः ॥ ९७ ॥

रा० टी०—**दशेति** । दशवर्षसहस्राणि दशसङ्ख्यागुणितानि वर्षसहस्राणि त्रिसहस्रसङ्ख्यासङ्ख्यातवर्षाणि त्रिंशत्सहस्रवर्षाणीत्यर्थः । दशवर्षशतानि च दशसङ्ख्यागुणितानि वर्षशतानि शतत्रयवर्षाणि सहस्रत्रयवर्षाणीत्यर्थः । एवं च त्रयस्त्रिंशत्सहस्रवर्षाणि राज्यं रामो नित्यरमणशीलः उपासित्वा कृत्वेत्यर्थः । ल्यबभावआर्षः । आब्रह्मलोकम् अः विष्णुः आः प्रजापतिः ब्रह्म शिवः तैर्लोक्यते हृदि नित्यं स्मर्यते तत् । किञ्च ब्रह्माभिन्नं लोकमानन्दघनं प्रकटायोध्यापुरं प्रयास्यति प्राप्स्यति । अप्रकटतया तत्रैव स्थास्यतीत्यर्थः । अत्र प्रशब्दोपादानेन तत्परिकराणामपि तादृक्स्थितिरिति व्यञ्जितम् । बहुवचनान्तसहस्रशब्देन बहुवचनान्तशतशब्देन च सहस्रत्रयशतत्रयलाभः कपिञ्जलाधिकरणन्यायेनावगन्तव्यः । एकसहस्रैकशतार्थकत्वं तु तत्र नोपपद्यते तयोर्बहुवचनान्तत्वात् 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनेनैकशेषमन्तराबहुवचनान्तत्वस्य दुर्लभत्वात् । अतएव 'त्रयोदशाब्दसाहस्रं ब्रह्मचर्यमखण्डितम्' इति भागवतं सानुकूलम् । भागवतस्य वास्तवोपपत्तिस्तूत्तरकाण्डे वक्ष्यते । शतानि सहस्राणीत्यादौ द्वितीया "कालाध्वनोः" इति सूत्रविहिता । 'राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः । दशवर्षसहस्राणि रामो राज्यमकारयत्' इति वक्ष्यमाणयुद्धकाण्डपद्यघटकीभूतदशसहस्रशब्दार्थः । दशगुणितानि वर्षसहस्राणि त्रिसहस्राणि वर्षाणि येषु तानि । त्रयस्त्रिंशत्सहस्रवर्षाणीत्यर्थः । उपलक्षणमेतत् दशवर्षशतानि चेत्यस्येति वा । यागकालातिरिक्तकालबोधकत्वे तु न काप्यनुपपत्तिरिति दिक् । अतो न विरोधः । एतेन 'दशवर्षसहस्राणि दशवर्षशतानि च' इत्यत्रैकादशसहस्रवर्षाणीति भूषणादौ व्याख्यातोऽर्थश्चिन्त्यः । तदुपपत्तेर्दुरुपपादत्वादिति दिक् ॥ ९७ ॥

गो० टी०—धर्मसंस्थापनातिशयप्रदर्शनाय राज्यपरिपालनकालबहुत्वं दर्शयति—**दशेति** । 'दशवर्षसहस्राणि दशवर्षशतानि च' एकादशसहस्रसंवत्सरानित्यर्थः । उपासित्वा उपास्य । वाछन्दसीति वक्तव्ये क्त्वापि छन्दसीति प्रयोगादनित्यो ल्यबादेशः । सान्त्वपूर्वं जनानुवर्त्तनेन परिपाल्येत्यर्थः । अत्यन्तसंयोगे द्वितीया । राज्यपालने व्यासङ्गाभावो दर्शितः । ब्रह्मलोकं वैकुण्ठं गमिष्यति ९७

९८ ] ति० टी०—अथ नारदः स्वोपदिष्टसंक्षेपरामायणपाठफलमुपदिशति—**इदमिति** । पवित्रं चित्तशोधनम् । पुण्यं सकलपुण्यसाधनम् । वेदैः संमितं सकलरहस्यवेदार्थप्रतिपादकत्वाद्वेदतुल्यम् ॥ ९८ ॥

रा० टी०—**इदमिति** । वेदैः सम्मितं समाधिकरहितवस्तुबोधकत्वेनाप्रमाणशङ्कारहितत्वादिना च चतुर्वेदसदृशम् । अतएव पुण्यं विपुलसत्कर्मलभ्यम् । अतएव पापघ्नं निखिलदुरितनिवर्तकम् । अतएव पवित्रं पविवद्वज्रवत्त्रायते शत्रुनिवर्त्तकत्वेन रक्षति तदिदं सर्वश्रुतिप्रसिद्धं रामचरितं प्रकटीभूतरघुनाथाचरितबोधकं यः पठेत्सः सर्वपापैः सर्वाणि पापानि भवन्ति येभ्यः तानि दारिद्र्यकामक्रोधादीनि सर्वाणि निखिलानि पापानि गुरुद्रोहादिजन्यानि तानि च तानि चेत्येकशेषः । तैः प्रमुच्यते । सर्वकालं सकारणपापसंसर्गशून्यो भवतीत्यर्थः । वेदैः सम्मितमित्यनेन वेदश्रवणाद्यधिकार्येवैतच्छ्रवणाद्यधिकारीति ध्वनितम् । पवित्रमिति लुप्तोपमया यथा वज्रधारीन्द्रादरयो बिभ्यति तथैतच्चरितधारिजनादरयो बिभ्यतीत्युपमालङ्कारः सूचितः । तेन श्रेयोर्थिभिरिदमेव सेव्यमित्यादेयं वस्तु व्यक्तम् । अत्रार्थे श्रुतिरपि

एतदाख्यानमायुष्यं पठन्रामायणं नरः । सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९९ ॥
पठन्द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ १०० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे प्रथमः सर्गः ॥ १ ॥

---

" ब्रह्महत्यासहस्राणि वीरहत्याशतानि च । स्वर्णस्तेयी सुरापी च गुरुतल्पायुतानि च ॥ कोटिकोटिसहस्राणि उपपातकजान्यपि । सर्वाण्यपि प्रणश्यन्ति रामचन्द्रस्य कीर्तनात्" इत्यादिगोविन्दाचार्युदाहृतरामोपनिषदि । ' यथा विधिनिषेधौ हि मुक्तं नैवोपसर्पतः । तथा न स्पृशतो रामोपासकं विधिपूर्वकम् ' इति स्मृत्यन्तरम् । तत्र विधिपूर्वकमित्यस्य रामचरितश्रवणपूर्वकमित्यर्थस्य शिष्टैर्व्याख्यातत्वात् । ' चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम्' इत्याद्यपि॥९८॥

गो० टी०–अथैतत्पाठस्य मोक्षसाधनत्वमाह–**इदमिति** । पूयतेऽनेनेति पवित्रम् । "कर्त्तरिचर्षिदेवतयोः" इति करणे इत्रप्रत्ययः । परिशुद्धिसाधनमित्यर्थः । न केवलं शुद्ध्यापादकं किन्तु पापघ्नम् । "अमनुष्यकर्तृकेच" इति टक्प्रत्ययः । पुण्यं लाङ्गलजीवनमितिवत् पुण्यसाधनम् । अनेन प्रायश्चित्तव्यावृत्तिरुक्ता । तद्धि पापमेव निवर्त्तयति । उक्तार्थत्रये हेतुमाह–वेदैश्चसंमितमिति । सर्ववेदसदृशमित्यर्थः । इदं रामचरित्रं संक्षेपरूपं यः पठेत् वेदवत् सनियमं प्रतिदिनं पठेत् स सर्वपापैः पूर्वोत्तराघैः प्रमुच्यते । तदुक्तं रामोपनिषदि " ब्रह्महत्यासहस्राणि वीरहत्याशतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥ कोटिकोटिसहस्राणि उपपातकजान्यपि । सर्वाण्यपि प्रणश्यन्ति रामचन्द्रस्य कीर्त्तनात् " इति ॥ ९८ ॥

९९ ] ति० टी०–सर्वपापमोक्षद्वारा मोक्षफलकत्वमुपपादितम् । पुण्यस्यापि त्रिगुणात्मकत्वेन पापतुल्यतया हेयत्वादिति मुमुक्षुफलमुद्दिश्य मुमुक्षूणामपि प्रवृत्तय आह–**एतदिति** । आयुष्यमायुष्करणम् । आख्यानमाख्यायिका । रामोऽयनं प्रतिपाद्यो यस्य तद्रामायणम् । संज्ञात्वाण्णत्वम् । गणो दासीदासादयस्तैः सह । इहैहिकान्भोगान्भुक्त्वा प्रेत्य मृत्वा स्वर्गे महीयते स्वर्गिभिः सत्कृतो मोदत इत्यर्थः । पठन्निति हेतौ शता ९९

रा० टी०–पठनफलमुक्त्वा पाठनफलमाह–**एतदित्यादिना** । रामायणं रामप्रतिपादकं रामप्रापकं वा । अतएवायुष्यं ध्वंसाप्रतियोग्यायुर्बलहेतुभूतम् । किञ्च आयुष्यं रसिकजनसंसेव्यमेतदाख्यानं प्रबन्धं पठन्नध्यापयन् । अन्तर्भावितणिजर्थः । सपुत्रपौत्रः पुत्रपौत्रसहितः सगणः मित्रमन्त्रिदासादिसहितो नरः प्रेत्य इह लोकात्प्रस्थाय स्वर्गे स्वः स्वर्गे गीयते नित्यं प्रशस्यते इति स्वर्गः साकेतलोकस्तत्र महीयते । तत्रत्यैः प्रशस्यते इत्यर्थः । किञ्च महीदेवादिकृतपूजाविशिष्टः स्वर्गे साकेतलोके ईयते तत्रत्यैर्जनैः प्राप्यते । अत्रार्थे श्रुतिरपि " पञ्चशतान्यप्सरोगणाः प्रधावन्ति शतं माल्यहस्ताः शतमञ्जनहस्ताः" इत्यादिकौषीतकीब्राह्मणादौ ॥ ९९ ॥

गो० टी०–एवं रामचरितपाठस्य मोक्षं फलमुक्त्वाऽऽनुषङ्गिकफलोक्तिपूर्वकं तस्य संबन्धि संबन्धपर्यन्ततामाह–**एतदिति** । आयुः प्रयोजनमस्यायुष्यम् । ' स्वर्गादिभ्योयद्वक्तव्य' इति यत्प्रत्ययः । आख्यानमाख्यायिकारूपमेतद्रामायणं बालरामायणं रामस्यायनं रामायणम् । अयगताविति धातोर्भावे ल्युट् । रामचरितमित्यर्थः । रामः अय्यते प्राप्यते अनेन इति वा रामायणम् । रामः अयनं प्रतिपाद्यो यस्येति वा रामायणम् । पठन्नरः वर्णाश्रमादिनियमं विना योऽपि कोऽपि सपुत्रपौत्रः दशपूर्वापरसहित इत्यर्थः । सगणः सभृत्यबन्धुः प्रेत्य आत्यन्तिकशरीरनाशं प्राप्य स्वर्गे परमपदे । " तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृतः" इति । तस्मिन्स्वर्गशब्दप्रयोगात् । विमुक्तसर्वपापं प्रति स्वर्गमात्रस्याफलत्वाच्च । महीयते पूज्यते । "तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतं चूर्णहस्ताः " इति श्रुतेः ॥ ९९ ॥

१०० ] ति० टी०–**पठन्निति** । द्विजो मुख्यद्विजो ब्राह्मणः पठन्वागृषभत्वं शब्दब्रह्मपारगत्वं प्राप्नुयात् । स्यादिति यद्यर्थे । यदि क्षत्रियस्तदा रामायणं पठन्भूपतित्वमाप्नुयात् । पण्यैः क्रयद्रव्यैः साध्यं मूलाद्द्विगुणत्रिगुणवृद्ध्यादिरूपं फलं यस्य तत्त्वं प्राप्नुयात् । धनसमृद्धिं प्राप्नुयादिति फलितोऽर्थः । शूद्रोऽपि जनस्त्रैवर्णिकदासः । अत्र शृण्वन्नित्यध्याहारः । महत्त्वं द्विजेतरसर्वप्रजाभ्यः श्रैष्ठ्यं महत्त्वं देहान्ते स्वोपरितनवर्णप्राप्तिलक्षणं च महत्त्वं प्राप्नुयात् । अस्य गायत्र्यर्थप्रतिपादकत्वध्वननाय गायत्र्यादिमाक्षरेणोपक्रम्य यादिति गायत्र्यन्तिमाक्षरेण समापितवान् ॥ १०० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०–एतत्पाठस्यैहिकयोग्यफलदातृत्वमप्यस्तीति बोधयन्नाह–**पठन्नित्यादिना** । द्विजो ब्राह्मणः एतद्रामायणं पठन् सन् वागृषभत्वं वाणीश्रेष्ठत्वमीयात् । शब्दब्रह्मपारगत्वं प्राप्नुयादित्यर्थः । क्षत्रियः पठन् भूमिपतित्वं पृथिवीश्वरत्वमीयात् । वणिग्जनः वैश्यजातिः पठन् पण्यफलत्वं धनधान्यवृद्धिमीयात् । शूद्रोऽपि पठन्महत्त्वं सर्वजनादरणीयत्वमीयात् । जनः प्रतिबन्धहेतुकब्राह्मणत्वाभाववान् पठन्सन् द्विजः स्यात् । भ्रष्टं स्वद्विजत्वं पुनः प्राप्नुयादित्यर्थः । जनः प्रतिबन्धहेतुकक्षत्रियत्वाभाववान् पठन्क्षत्रियः स्यात् । भ्रष्टं स्वक्षत्रियत्वं पुनः प्राप्नुयादित्यर्थः । जनः प्रतिबन्धहेतुकवैश्यत्वाभाववान् पठन् वणिग्जनः स्यात् । भ्रष्टं स्ववैश्यत्वं पुनः प्राप्नुयादित्यर्थः । जनः प्रतिबन्धहेतुकशूद्रत्वाभाववान् पठन् शूद्रः स्यात् । भ्रष्टं स्वशूद्रत्वं पुनः प्राप्नुयादित्यर्थः । जनशब्दएवावृत्त्या द्विजादीनां विधेयत्वं प्रकल्पयति अतएवैतस्य

## द्वितीयः सर्गः ॥ २ ॥

वाल्मीकिकृतनारदपूजनम् । तत्र दृष्टक्रौञ्चमिथुनात्क्रौञ्चस्य व्याधकृतहननं दृष्ट्वाऽऽदिकवेश्छन्दोमय्या वाचः प्रवृत्तिः । ततआदिकवेः स्वशिष्येण भरद्वाजेन सहाश्रमं प्रत्यागमनम् । ततो ब्रह्मणआगमनं रामचरितवर्णने उपदेशकरणं च ।

---

**नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः । पूजयामास धर्मात्मा सहशिष्यो महामुनिम् ॥ १ ॥**

---

सार्थक्यम् । यद्यप्यस्य वेदसम्मितत्वेन शूद्रकर्तृकपाठो न युज्यते तथापि निषादस्थपत्यधिकरणरीत्या ऋषिवचनप्रामाण्येन शूद्रस्यापि पाठाधिकारसम्भवात् युज्यत एव । तथाहि "निषादस्थपतिं याजयेत् " इत्यत्र निषादश्चासौ स्थपतिश्चेति कर्मधारयो वा निषादानां स्थपतिर्निषादस्थपतिरिति षष्ठीतत्पुरुषो वा निषादः स्थपतिर्यस्येति बहुव्रीहिर्वेति त्रिविधा विकल्प्य बहुव्रीहिषष्ठीतत्पुरुषत्वं गुरुत्वेन परित्यज्य कर्मधारयः स्वीकृतः । तत्र यद्यपि निषादानां वेदानधिकारित्वेन याजनाप्राप्तिस्तथापि वचनप्रामाण्येन निषादाभिन्नस्थपतियाजनं स्वीकृतम् । तथाऽत्रापि परमप्रमाणभूतऋषिवचनप्रामाण्येन शूद्रस्यापि रामायणपाठाधिकारः स्वीक्रियते । अत एव " वर्षासु रथकारोऽग्नीनादधीत " इति श्रुत्या जातिविशेषस्याग्न्याधानं स्वीकृतं मीमांसकैः । यदि तु ' शूद्रः पठन् ' इत्यत्र ब्राह्मणद्वारा पठन्नित्यर्थः स्वीक्रियते तदा नात्र शङ्कासमाधानावसर इति दिक् ॥ १०० ॥

श्रीमद्रामायणव्याख्या रामायणशिरोमणौ ।
समाप्तः प्रथमः सर्गो रामपादप्रसादतः ॥ १ ॥

इत्यार्षे श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे प्रथमः सर्गः॥ १ ॥

**गो० टी०**–अथ चातुर्वर्ण्यव्यतिरिक्तस्य नाधिकार इति सूचयन् वर्णविशेषनियतानि फलानि दर्शयति–**पठन्निति**। स्यादित्येतदव्ययं यद्यर्थे । इदं बालरामायणं पठन् द्विजो यदि वागृषभत्वं वाचि श्रैष्ठ्यं वेदवेदाङ्गपारगत्वमीयात् प्राप्नुयात् । ई गताविल्यस्माद्धातोर्लिङ् । पठन् क्षत्रियो यदि भूमिपतित्वं चक्रवर्तित्वमीयात् । पठन् वणिग्जनो यदि पण्यफलत्वमीयात् पणं मूल्यं तदर्हतीति पण्यं क्रयविक्रयार्हं वस्तु तदेव फलं लाभो यस्य स पण्यफलः तस्य भावः पण्यफलत्वम्। 'पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च' इत्यमरः। पणशब्दादर्हार्थे यत्प्रत्ययः। "अवद्यपण्य" इत्यादिना पणतेर्यत्प्रत्ययान्तो निपातो वा । पठन् शूद्रोऽपि जनो यदि महत्त्वं स्वजातिश्रेष्ठत्वमीयात् । यद्वा स्यादित्येतदल्पार्थेऽव्ययम्। स्यात्क्षत्रियः अल्पनृपतिः भूमिपतित्वमखण्डभूमण्डलेश्वरत्वमीयात्। एवमल्पब्राह्मण इत्यादि ज्ञेयम्। यद्वा स्याच्छब्दः कथंचिदर्थे निपातः। स्यादस्ति स्यान्नास्तीत्यादिसप्तभङ्गीव्याख्याने तथोक्तत्वात्। तथा च कथंचित्पठन् शास्त्रोक्तनियमं विनापि पठन्नित्यर्थः। एकदेशं पठन्निति वा। अथवा वागृषभत्वादिकमीयात्। 'स्याच्च सत्तां लभेत च'इति सर्वसाधारणं सत्तालाभरूपं फलम्। "अस्ति ब्रह्मेतिचेद्वेद। सन्तमेनं ततो विदुः" इति श्रुतेः। कश्चित् 'स्यात्प्रबन्धेचिरातीते' इतिवचनात् स्याच्छब्दः प्रबन्धपर इत्याह तदज्ञानविजृम्भितम्। ' स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ' इतिवाक्यशेषात्। पुराशब्दस्य नानार्थत्वं हि तत्रोच्यत इति । यद्यपि 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ' इति शूद्रस्येतिहासपुराणयोः श्रवणमात्रं स्मृतिभिरनुज्ञातं न तु पठनं तथापि पठन्नित्यादिऋषिवचनप्रामाण्यात् । वचनाद्रथकारस्येतिन्यायेनास्मिन् सङ्क्षेपपाठमात्रेऽधिकारोऽस्तीति सिद्धम्। तथा सहस्रनामाध्यायान्ते च दृश्यते 'य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्' इत्यारभ्य 'वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्। वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ' इति। यद्वा वेदोपबृंहणे शूद्रस्य सर्वथानधिकाराच्छूद्र इत्यत्र पठन्निति नानुषज्यते। किंतु शृण्वन्नित्यध्याह्रियते। 'शृण्वन् रामायणं भक्त्या' इति श्रवणस्यापि महाफलत्ववचनात् । अत्र सङ्क्षेपे तकारेणोपक्रम्य यादिति समापनाद्गायत्रीरूपत्वमस्य गम्यते। अत्र श्लोके उपजातिवृत्तम् । ' स्यादिन्द्रवज्रा ततजास्ततो गावुपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः' इतिलक्षणात् १००

प्रथमसर्गमुपसंहरति–इतीति । ऋषिणा प्रोक्तमार्षम् । " तेन प्रोक्तम् " इत्यण् । श्रीरामायणे श्रीरामायणाख्ये आदिकाव्ये प्रथमकाव्ये बालकाण्डे सङ्क्षेपो नाम प्रथमः सर्गः समाप्त इति शेषः। काव्यलक्षणं सर्गलक्षणं चोक्तं दण्डिना काव्यादर्शे– ' नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि । अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ' इति ॥

इतिकौशिकगोविन्दराजकृते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सङ्क्षेपरामायणं नाम प्रथमः सर्गः ॥१॥

---

१ ] **ति० टी०–नारदस्येति** । विशारदो विशिष्टा व्याकरणसंस्कारादिविशेषवती विचित्रार्था च शारदा वाणी यस्य सः। सहशिष्य इत्यत्र "वोपसर्जनस्य" इति वैकल्पिकत्वात्सत्वाभावः। प्रश्नानुरूपं वाक्यगुणसमूहवच्चोत्तरं सम्यग्दत्तमिति पूजयामासातिविचित्रं भगवद्वचनमित्यादिशब्दैः ॥ १ ॥

**रा० टी०**–नारदोपदेशश्रवणोत्तरकालिकं वाल्मीकिवृत्तमाह–**नारदस्येत्यादिना** । वाक्यविशारदः वाक्ये वक्तव्ये विविधा विशिष्टा वा शारदा वाणी यस्य सः। धर्मात्मा धर्मे आत्मा यत्नो

यथावत्पूजितस्तेन देवर्षिर्नारदस्तथा । आपृच्छ्यैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥
स मुहूर्ते गते तस्मिन्देवलोकं मुनिस्तदा । जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३ ॥
स तु तीरं समासाद्य तमसाया मुनिस्तदा । शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ४ ॥

यस्य। परमधर्मोपदेष्टेत्यर्थः । सहशिष्यः शिष्यसहितः महामुनिः सर्वमुनिश्रेष्ठः वाल्मीकिर्नारदस्य तद्वाङ्मनसागोचरेश्वरबोधकं वाक्यं श्रुत्वैव पूजयामास । अहो एतद्वद्धिवैभवमिति प्रशशंसेत्यर्थः । महामुनिमिति पाठे तु महाः मुनिं पूजयामासेत्यर्थः । तुशब्द एवार्थे ॥ १ ॥

गो० टी०–'श्रीमच्छठारिगुरुणा गुरुणोपदिष्टं रामायणस्य हृदयं सरसं गृहीत्वा। श्रीकौशिकान्वयकुलेन्दुरशेषबन्धुर्गोविन्दराजविबुधो विशदीकरोति ॥ ' अथ परमकारुणिको वाल्मीकिः 'इष्टं हि विदुषां लोके समासव्यासधारणम् ' इत्युक्तरीत्या संक्षेपेणोक्तं रामचरित्रं पुनर्विस्तरेण प्रतिपिपादयिषुस्तत्र प्रेक्षावत्प्रवृत्त्यर्थं वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं प्रतिपाद्यवैलक्षण्यं चेति वैलक्षण्यत्रयं निदिदर्शयिषुर्वक्तृवैलक्षण्यं तावदादौ दर्शयति–**नारदस्येत्यादिना** द्वितीयसर्गेण । वक्तृवैलक्षण्यं तु परमाप्तत्वम् । आप्तत्वं च यथार्थदर्शित्वे सति यथार्थवादित्वम्।तस्य परमत्वं तु पितामहवरप्रसादलब्धत्वम्।तदेतदुपदर्शयितुमुपोद्घाततत्वेनाह–**नारदस्येत्यादि** । तुशब्दो वैलक्षण्यपरः।'तु स्याद्भेदेऽवधारणे' इत्यमरः । स च काकाक्षिन्यायेनोभयत्रान्वेति । त्रिलोकज्ञतयेतरविलक्षणस्य नारदस्य शब्दतोर्थतश्चेतरवाक्यविलक्षणोत्कर्षं तत्पूर्वं संक्षेपरूपेणोक्तं वाक्यं संपूर्णार्थप्रतिपादकपदसमूहं प्रश्नानुरूपोत्तरं श्रुत्वा निशम्य वाक्ये विशारदो विद्वान् ' विद्वत्सुप्रगल्भौ विशारदौ ' इत्यमरः । वाक्यविशेषज्ञ इत्यर्थः । धर्मे आत्मा बुद्धिर्यस्यासौ धर्मात्मा धर्मस्वभावो वा । अत्र प्रकरणाद्गुर्वनुवर्तनधर्मज्ञइत्यर्थः । महामुनिः वेदान्तार्थनिर्णयसंपत्त्या सर्वोत्कृष्टमुनिर्वाल्मीकिः सहशिष्यः शिष्यसहितः सन् । " वोपसर्जनस्य " इति पक्षे सहशब्दस्य सभावाभावः । पूजयामास अहो वाक्यवैखरीति तद्वाक्यं श्लाघयामासेति वाक्यविशारदत्वोक्तिभङ्ग्याऽवगम्यते । महामुनिमिति पाठे वाल्मीकिपदाध्याहारः । तमिति प्रयोक्तव्ये अन्यत्वप्रतीतिकरमहामुनिपदप्रयोगास्वारस्यम् ॥ १ ॥

२ ] ति० टी०–**यथावदिति** । आपृच्छ्यैव साधु यामीत्युक्त्वैव । अभ्यनुज्ञातो यथासुखं विहरतामिति वाल्मीकिनानुगमनपूर्वमभ्यनुज्ञातः । अनेन गुरुशिष्ययोः स्नेहभक्तिप्रकाशनम् । विहायसमिति पुँल्लिङ्गम् ॥ २ ॥

रा० टी०–**यथावदिति** । तदा तस्मिन्काले तेन वाल्मीकिना यथावत्पूजितः स देवर्षिर्नारद आपृष्ट्वा अहं यामीत्युक्त्वैव अभ्यनुज्ञातः सुखं याहीति तत्सम्मतिं प्राप्तो विहायसमाकाशं जगाम । आकाशमार्गेण स्वलोकं प्रापेत्यर्थः । एतेन गुरुशिष्ययोरभीष्टार्थसिद्धिर्जातेति द्योतितम् ॥ २ ॥

गो० टी०–**यथावदिति** । देवश्चासौ ऋषिश्च देवर्षिर्नारदः। 'नारदाद्याः सुरर्षयः ' इत्युक्तेः । तेन वाल्मीकिना यथावत् यथार्हम् । पूजितः प्रदक्षिणनमस्कारादिभिरर्चितः सन् । तदा पूजावसाने आपृष्ट्वा आपृच्छ्य " क्त्वापि छन्दसि " इति ल्यबभावः । अभ्यनुज्ञातः गच्छ त्वमिति वाल्मीकिना कृताभ्यनुज्ञानः विहायसमाकाशं जगाम ॥ २ ॥

३ ] ति० टी०–**स इति** । स वाल्मीकिस्तस्मिन्नारदे देवलोकं गते सति मुहूर्तं स्वाश्रमे स्थित्वा पश्चान्माध्याह्निकार्थं जाह्नव्या अविदूरतः समीपे वर्तमानं तमसातीरं जगाम । यत्तु मुहूर्तमात्रेण देवलोकं गत इत्यन्वय इति, तन्न । छान्दसल्यक्कल्पने मानाभावात् । अव्ययत्वकल्पनस्याप्यगतिकगतिकत्वाच्च । ' मुहूर्तात् ' इति पाठस्तु कल्पितः ॥ ३ ॥ ४ ॥

रा० टी०–नारदगमनोत्तरकालिकं वृत्तमाह–**स इत्यादिना** । तस्मिन्नारदे देवलोकं देवकर्तृकदर्शनयोग्यम् । स्वलोकमित्यर्थः । गते तन्निष्ठसंयोगानुकूलव्यापारवति सति स मुनिर्वाल्मीकिर्मुहूर्तं घटिकाद्वयं स्थित्वा जाह्नव्या गङ्गाया अविदूरतः समीपे एव विद्यमानं तमसातीरं जगाम । मुहूर्तं स्थित्वेत्यनेन वाल्मीकेर्नारदविषयकप्रेमातिशयः सूचितः । समीपे विद्यमानां जाह्नवीं न गतस्तमसातीरमेव गत इत्यनेन तमसायां तत्प्रीत्यतिशयः सूचितः । तेन तत्स्थलस्य रघुनाथसञ्चारवत्त्वं ध्वनितम् । तुशब्द एवार्थे ॥ ३ ॥

गो० टी०–**स इति** । तस्मिन्नारदे मुहूर्तमल्पकालम् । ' मुहूर्तमल्पकाले स्यात् ' इति निघण्टुः । अत्यन्तसंयोगे द्वितीया । देवलोकं ब्रह्मलोकं गते वाल्मीके रामभक्तिं ब्रह्मणे कथयितुं प्राप्ते सति स मुनिर्वाल्मीकिस्तदा नारदगमनोत्तरकाले जाह्नव्या गङ्गाया अविदूरतः समीपे । सप्तम्यर्थे तसिः । स्थितमिति शेषः। तु गङ्गातोऽपि विलक्षणं तमसातीरं जगाम माध्याह्निकाभिषेकाय प्राप्तः ॥ ३ ॥

४]रा० टी०–**सत्विति** । तदा तस्मिन्काले स मुनिः वाल्मीकिस्तमसायास्तीरं समासाद्य सम्यक् प्राप्य अकर्दमं पङ्करहितं तीर्थम् ऋषिसेविततमसाजलं दृष्ट्वैव पार्श्वे स्थितं शिष्यं भरद्वाजमाह । तुशब्द एवार्थे । 'तीर्थं शास्त्राध्वरे क्षेत्रे मन्त्रोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भस्स्त्रीरजस्सु च विश्रुतम् ' इति विश्वकोशात्तीर्थशब्दस्य ऋषिजुष्टाम्भःपरत्वम् ॥ ४ ॥

गो० टी०–**स त्विति** । स मुनिस्तमसाया विलक्षणं तीरमासाद्य तदा आसादनकाले अकर्दममपङ्कं तीर्थं जलावतरणम् । 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्बुनि पावने । पात्रोपायावतारेषु ' इति वैजयन्ती । दृष्ट्वा पार्श्वे स्थितं शिष्यमाह ॥ ४ ॥

१ अस्य मतेनापृष्ट्वेति पाठः । एवं गोविन्दराजीयेऽपि ।

अकर्दममिदं तीर्थं भरद्वाज निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ ५ ॥
न्यस्यतां कलशस्तात दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥ ६ ॥
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना। प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥ ७ ॥
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः। विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ॥ ८ ॥
तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम्। ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ॥ ९ ॥

---

५ ] ति० टी०-अकर्दममिति। अवतरणप्रदेशस्य पङ्करहित्यमनेनोच्यते। तीर्थमपि शुद्धजलं निशामय पश्य। अत एव 'शमो दर्शने' इति मित्वाभावादह्रस्वत्वम्। रमणीयत्वे हेतुः-प्रसन्नाम्ब्विति। सन्मनुष्यचित्तस्य कामादिदोषराहित्येन नित्यप्रसन्नत्वात्सादृश्यम् ॥ ५ ॥

**रा० टी०-अकर्दममिति।** अकर्दमं पङ्करहितान्तर्बहिस्थलकम्। अत एव सन्मनुष्यमनो यथा सन्मनुष्यमनस्सदृशम्। अत एव रमणीयमतिरम्यम्। अत एव तीर्थम्। ऋषिभिर्जुष्टम्। इदं प्रसन्नाम्बु स्वच्छजलम्। हे भरद्वाज! निशामय पश्य। 'शमो दर्शने' इति दर्शने मित्वनिषेधाद्ध्रस्वविरहः ॥ ५ ॥

**गो० टी०-अकर्दममिति।** भरद्वाज इति वाल्मीकेः प्रधानशिष्यस्य नाम। हे भरद्वाज! अकर्दममपङ्कम्। अधःप्रदेशे पङ्करहितमित्यर्थः। अन्यत्र पापरहितं प्रसन्नाम्बु प्रसन्नसलिलं लोके किंचिदधः पङ्करहितत्वेऽपि जलं कलुषमेव भवति किञ्चिन्निर्मलोदकत्वेऽप्यधः सपङ्कमेव दृश्यते। न तथेदमितिभावः। अन्यत्राम्बुवत्प्रसन्नम् अत एव रमणीयं सन्मनुष्यमनो यथा सत्पुरुषहृदयसदृशमिदं तीर्थं निशामय पश्य। 'शमो दर्शने' इति मित्वाभावादर्शनार्थोयं शब्दः। सन्मनुष्यमनोवत्प्रसन्नाम्ब्विति वा योजना ॥ ५ ॥

६ ] ति० टी०-न्यस्यतामिति। 'वल्कला' इति पाठे छान्दसं स्त्रीत्वम्। 'वल्कलमस्त्रियाम्' इति निघण्टुः। इदमेवात्यासन्नमपि गङ्गातीर्थम्। मध्याह्नकालातिक्रमादगत्वेति शेषः ॥ ६ ॥

**रा० टी०-न्यस्यतामिति।** हे तात! कलशमुदपात्रं न्यस्यताम् अत्रैव ध्रियतामित्यर्थः। मम वल्कलं शरीराच्छादनहेतुभूतकदलीत्वक् दीयताम्। उत्तमं तमसातीर्थमृषिसेविततमसाजलमिदमेवावगाहिष्ये अत्रैव स्नास्यामीत्यर्थः। स्नानात्पूर्वमेव वल्कलादियाचनेन त्वमपि स्नानं कुर्विति गुर्वाज्ञापनं ध्वनितम् ॥ ६ ॥

**गो० टी०-न्यस्यतामिति।** हे तात वत्स! कलशमुदपात्रं न्यस्यतां भूमौ स्थाप्यताम्। मम वल्कलं स्नानशाट्यर्था वृक्षत्वक् दीयताम्। किमर्थमित्यत्राह-इदमेवेति। उत्तममकर्दमत्वादि गुणयोगेन जाह्नवीतीर्थाच्छ्रेष्ठमिदमेव तमसातीर्थमवगाहिष्ये। अत्रैव स्नास्यामि त्वमप्यत्र स्नाहीत्यर्थः ॥ ६ ॥

७ ] ति० टी०-एवमिति। वाल्मीकेनेति। "तस्येदम्" इत्यण्। प्रायच्छतेति छान्दसम्। नियतः सेवापरः ॥ ७ ॥

**रा० टी०-एवमिति।** नियतः स्नानकार्ये गुरुणा नियोजितः महात्मना परमपूज्येन वाल्मीकेन वल्मीकात्प्रादुर्भूतेन एवमनेन प्रकारेणोक्तो भरद्वाजः मुनेः नारदोपदिष्टवस्तुविषयकविश्वासशालिनः गुरोस्तस्य वाल्मीकस्य वल्कलं प्रायच्छत प्रादात्। सञ्ज्ञापूर्वकविधेरनित्यत्वात्प्रायच्छतेति आत्मनेपदम् ॥ ७ ॥

**गो० टी०-एवमिति।** महात्मना महामनसा वाल्मीकेन वाल्मीकिना। तस्येदमिति संबन्धमात्रेऽण्। सम्बन्धश्चात्र पुत्रत्वम्। एवं पूर्वोक्तरीत्योक्तः गुरोर्नियतः परतन्त्रः भरद्वाजः मुनेस्तस्य वाल्मीकेर्वल्कलं प्रायच्छत प्रादात्। यच्छादेशः। छन्दसि बहुलग्रहणादात्मनेपदम्।सम्बन्धसामान्ये षष्ठी। तस्मा इत्यर्थः ॥७॥

८ ] ति० टी०-स इति। नियतेन्द्रियो जितेन्द्रियः। विचचार। अनुष्ठानयोग्यैकान्तदेशनिरीक्षणायेति शेषः ॥ ८ ॥

**रा० टी०-वल्कलदानोत्तरकालिकं वृत्तमाह-स इत्यादिना।** नियतेन्द्रियः संयतेन्द्रियग्रामः स वाल्मीकिः शिष्यस्य भरद्वाजस्य हस्ताद्वल्कलमादाय गृहीत्वा विपुलं विस्तीर्णं तद्वनं तमसातीरारण्यं सर्वतः पश्यन् विचचार। ह इति हर्षे। एतेन तद्वनस्य मनोहरत्वं व्यक्तम्। तेन तत्र तिष्ठासा व्यञ्जिता ॥८॥

**गो० टी०-स इति।** नियतेन्द्रियः निगृहीतेन्द्रियोऽपि स वाल्मीकिः शिष्यहस्ताद्वल्कलमादाय विपुलं विशालं वनं सर्वतः पश्यन् सन् विचचार। हेति विस्मये। निगृहीतेन्द्रियस्य विपुलवनावलोकनं दैवकृतत्वाद्विस्मयनीयमित्यर्थः ॥ ८ ॥

९ ] ति० टी०-तस्येति। तस्य वनस्याभ्याशे समीपे चरन्भगवांस्तद्वनाभ्याश एव चरन्तमनपायिनमाभिव्याभिरहितमत एव चारुनिःस्वनं क्रौञ्चयोर्मिथुनं ददर्श। चरन्तमनपायिनमित्यार्षम् ॥ ९ ॥

**रा० टी०-तस्येति।** तत्र तस्मिन्वने तस्य तमसातीर्थस्य अभ्यासे समीपे एव चरन्तं विहरन्तमनपायिनं वियोगशून्यं चारुनिस्वनं मनोहरशब्दयुक्तं क्रौञ्चयोः पक्षिविशेषयोः मिथुनं युग्मं भगवान् वाल्मीकिः ददर्श। तुशब्द एवार्थे। चरन्तमित्यादिर्पुंस्त्वमार्षम् ॥ ९ ॥

**गो० टी०-तस्येति।** भगवान् माहात्म्यवान् 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः। शापानुग्रहसमर्थ इत्यर्थः। वाल्मीकिस्तत्र वने तस्य तीर्थस्याभ्याशे समीपे चरन्तं वर्तमानमनपायिनमविनाभूतम्। क्षणविरहासहिष्णुं क्रौञ्च-

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः । जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥
तं शोणितपरीताङ्गं चेष्टमानं महीतले । भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११ ॥
वियुक्ता पतिना तेन द्विजेन सहचारिणा । ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् । ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः । निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥

---

मिथुनमिति प्रसिद्धम् । चारुनिःस्वनमिति रतिकालिकस्वरोक्त्या रतिर्द्योत्यते । क्रौञ्चयोर्मिथुनं द्वन्द्वं पुँल्लिङ्गत्वमार्षम् । ददर्श ॥९॥

१० ] ति० टी०—तस्मादिति । मिथुनाद्विभक्तमेकं पुमांसं पापनिश्चयस्तद्धननरूपपापनिश्चयः । अत एव वैरनिलयो निजानपकारिष्वपि प्राणिष्वकारणवैराश्रयः स इव निषादस्तस्य पश्यतस्तं पश्यन्तमनादृत्य जघान । पश्यत इति षष्ठी चानादरे १०

रा० टी०—तस्मादिति । वैरनिलयः अकारणद्रोहाश्रयः अत एव पापनिश्चयः तद्वधोद्योगयुक्तः निषादः तस्य मुनेः पश्यत एव पश्यन्तमनादृत्यैव तस्मात् क्रौञ्चमिथुनात् वियुक्तमेकं केवलं पुमांसं जघान । तुशब्द एवार्थे । "षष्ठीचानादरे" इति सूत्रविहिता षष्ठी ॥ १० ॥

गो० टी०—तस्मात्त्विति । पापनिश्चयः रतिसमयेऽपि हननकरणात् । क्रूरनिश्चयः वैरनिलयः सर्वजन्तुविषयसहजशात्रवयुक्तो निषादस्तस्मान्मिथुनात्तन्मिथुनमासाद्य । ल्यब्लोपे पञ्चमी । पुमांसमेकमवयवं तस्य पश्यतः तं पश्यन्तं मुनिमनादृत्य "षष्ठी चानादरे" इत्यनादरे षष्ठी । जघान हतवान् ॥ १० ॥

११ ] ति० टी०—तमिति । चेष्टमानं लुठन्तम् । निहतं दृष्ट्वा निषादेनेति शेषः । करुणां गिरं दीनं शब्दम् । रुराव अकरोदित्यर्थः । पाठान्तरे 'खेपरिभ्रमा' । ख आकाशे परिभ्रमणं करोति सेत्यर्थः ॥ ११ ॥

रा० टी०—तमिति । शोणितपरीताङ्गं रुधिरव्याप्तशरीरं महीतले चेष्टमानं लुण्ठन्तं निहतं निषादेन हिंसितं क्रौञ्चं भार्या तत्स्त्री दृष्ट्वा तु अवलोक्यैव करुणां श्रवणमात्रेण कारुण्यनिष्पादिकां गिरं रुराव उच्चारयामास । तुशब्द एवार्थे ॥ ११ ॥

गो० टी०—तमिति । भार्या क्रौञ्ची निहतं व्याधहतमत एव महीतले भूतले चेष्टमानं घूर्णमानं शोणितपरीताङ्गं रुधिरव्याप्तशरीरं तं क्रौञ्चं दृष्ट्वा करुणां श्रोतुः कारुण्यावहां गिरं रुराव करुणशब्दमकरोत् । ओदनपाकं पचतीतिवत् । अरोदीत् ॥ ११ ॥

१२ ] ति० टी०—वियुक्तेति । सहचारिणा । अहोरात्रमिति शेषः । ताम्रशीर्षेण कुक्कुटादिवत्ताम्रवर्णशीर्षगतचूडायुक्तेन । मत्तेन कामसम्भोगवशादिति शेषः । अत एव पत्रिणा सम्भोगकालत्वाद्विततपक्षवता । सहितेन स्वसङ्गतेन तेनापूर्णरतित्वादत्यन्तं शोकः । इत्थंभूतेन पतिना वियुक्ता रुरावेति पूर्वेणान्वयः १२

रा० टी०—वियुक्तेति । मत्तेन सम्भोगहेतुभूतमदविशिष्टेन । अत एव पत्रिणा सम्भोगार्थं विस्तारितपक्षवता । अत एव सहचारिणा स्वस्त्रिया सहैव गच्छता । अत एव सहितेन स्वसदृशगमनविशिष्टेन ताम्रशीर्षेण अरुणचूडेन द्विजेन पक्षिविशेषेण तेन हतेन पतिना स्वपतिना वियुक्ता रुरावैवेति पूर्वेणान्वयः । नान्यत्किञ्चित् शुश्रावेत्यर्थः । एतेन तच्छोकस्य पराकाष्ठा सूचिता । विनापि प्रत्ययं पूर्वोत्तरपदयोश्चेति स्वशब्दलोपः । अत एव नाभावेनार्षकल्पना । वैशब्द एवार्थे । सहितेनेत्यत्र हितशब्दः गमनार्थकहिधातुप्रकृतिकभावनिष्ठान्तः ॥ १२ ॥

गो० टी०—वियुक्तेति । पतिना पत्या । नाभाव आर्षः । सहचारिणा सहचारशीलेन । ताच्छील्ये णिनिः । सहितेनेत्यनेन मनस्सङ्गतिरुच्यते इति न तेन पुनरुक्तिः । ताम्रशीर्षेण रक्तशिरसा । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । मत्तेन रतिपरवशेनेत्यर्थः । पत्रिणा प्रशस्तपक्षेण तेन द्विजेन पक्षिणा 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । भार्या वियुक्ता विरहिता सती करुणां गिरं रुरावेति पूर्वेणान्वयः । वैइति पादपूरणे । 'तु हि च स्म ह वै पादपूरणे' इत्यमरः । अत्र विशेषणानि भार्यायाः शोकातिरेकहेतुत्वेन निर्दिष्टानि ॥ १२ ॥

१३ ] ति० टी०—तथाविधमिति । तथाविधं कामभोगवशम् । धर्मात्मनो दयादाक्षिण्याहिंसादिधर्मप्रवणचित्तस्य । कारुण्यं दया । समपद्यत समजायत ॥ १३ ॥

रा० टी०—तथेति । तथाविधं सम्भोगोद्योगविशिष्टं द्विजं क्रौञ्चं निषादेन निपातितं पृथिव्यां लुण्ठितं दृष्ट्वा धर्मात्मनः परमधर्मज्ञस्य ऋषेस्तस्य वाल्मीकेः कारुण्यमनुकम्पा समपद्यत सम्यक् प्राप्नोत् ॥ १३ ॥

गो० टी०—तथेति । तथा शोणितपरीताङ्गमित्याद्युक्तरीत्या निषादेन निपातितं हिंसितमित्यर्थः । तं द्विजं दृष्ट्वा स्थितस्य धर्मात्मनः धर्मस्वभावस्य ऋषेर्वाल्मीकेः करुणैव कारुण्यम् । स्वार्थे ष्यञ् । दया समपद्यत आसीत् ॥ १३ ॥

१४ ] ति० टी०—तत इति । करुणवेदित्वात्सञ्जातकरुणत्वात् । ह्रस्वश्छान्दसः । विदेः सत्तार्थाल्लाभार्थाद्वा णिनिः । रुदतीं क्रौञ्चीं निशाम्य दृष्ट्वा । अयं काममोहितपक्षिवधरूपोऽधर्म एवेति निश्चित्य क्रौञ्चीविषयकरुणावत्त्वेन, अर्थात्पापकारिणि निषाद आविर्भूतरोषतयेदं वक्ष्यमाणं वचनमब्रवीत् ॥१४॥

रा० टी०—निपातितक्रौञ्चदर्शनहेतुककारुण्यप्राप्त्यनन्तरकालिकं वृत्तमाह—तत इत्यादि । रुदतीं क्रौञ्चीं निशाम्य दृष्ट्वा । ततः क्रौञ्चीरोदनश्रवणहेतोः करुणवेदित्वात् घृणाविशिष्टत्वाद्धेतोः

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १५ ॥**

'अयं पक्षिवधोऽधर्मः धर्मविरुद्धः' इदं वचनं द्विजः वाल्मीकिरब्रवीत् ॥ १४ ॥

**गो० टी०**—तत इति । ततः क्रौञ्चीविषयकारुण्यसम्पत्त्यनन्तरम् । द्विजः सहजकारुण्यस्वभावो मुनिः रुदतीं क्रौञ्चीं निशाम्य दृष्ट्वा । करुणवेदित्वात् कारुण्यभाक्त्वात् विद्लृ लाभे इत्यस्माण्णिनिः । अयं रतिकाले हिंसनमधर्म इति मत्वा इदं वक्ष्यमाणं वचनमब्रवीत् ॥ १४ ॥

१५ ] **ति० टी०**—मा निषादेति। क्रौञ्चहन्तृप्रत्यक्षदृश्यमाननिषादशापरूपोऽर्थस्तु स्पष्ट एव । किञ्च मा लक्ष्मीर्निषीदत्यास्मिंस्तत्संबोधनं मानिषाद ! यद्यस्माद्धेतोः क्रौञ्चमिथुनान्मन्दोदरीरावणरूपादेकं काममोहितं रावणमवधीर्हतवानसि तस्मात्त्वं शाश्वतीः समा अनेकान्संवत्सरानद्वितीयां प्रतिष्ठामखण्डैश्वर्यानन्दावाप्तिमगमः प्राप्नुहि । तेन 'अर्थतः शब्दतो वाऽपि मनाक्काव्यार्थसूचनम्' इत्युक्तेः श्रीरामकृतरावणवधरूपकाव्यार्थः काव्यादाववश्यकर्तव्याशीर्वादश्च सूचित इति तीर्थः ॥

कतककृत्तु—प्रत्यक्षसंहन्तृनिषादशापरूपोऽर्थस्तु स्पष्ट एव । किञ्च नितरां सदेवर्षिगणं त्रैलोक्यं सादयति पीडयतीति निषादस्तस्य संबुद्धिर्हे निषाद रावण ! यद्यस्मात्क्रौञ्चमिथुनात् अल्पीभावार्थकुञ्चेः पचाद्यच् कुञ्चम् ततः स्वार्थिकोऽण् क्रौञ्चम्। राज्यक्षयवनवासादिदुःखेनात्यल्पीभूतं परमकार्श्यं गतं यन्मिथुनं सीतारामरूपं तस्मादेकं सीतारूपं यस्मादवधीर्वधाभ्यधिकपीडां प्रापितवानसि तस्मात्त्वं प्रतिष्ठां या लङ्कापुरे पुत्रपौत्रभृत्यगणवैशिष्ट्येन ब्रह्मणा प्रतिष्ठा दत्ता तामतः परं मा गम इति काव्यार्थसूचनम्। त्रैलोक्यस्य परममङ्गलरूपं चेदं सत्यसरस्वत्या पुरस्तादाविर्भावितमित्याह । अत्रेदमवधेयम्—रावणवधे जातेऽयोध्याराज्यप्राप्त्यनन्तरं नारदं प्रति प्रश्न इति स्वयमेव व्याख्यातत्वादुत्तरकालिकैतच्छ्लोकस्यैव विधिघटितस्योक्तार्थस्य कतकमते कथं संगतिः । कथं वा सर्वज्ञा सत्यसरस्वती भूतमर्थमाशास्यत्वेन निर्दिशेदिति । तीर्थव्याख्यानेऽपीदं काव्यार्थसूचनं कविना कार्यमिति तदुक्तसम्मतिश्लोकार्थाद्गम्यते । तत्र वाल्मीकेस्तथा तात्पर्ये 'किमिदं व्याहृतं मया' इत्युक्तेरसङ्गतेः । न च किमिदमित्यस्य पद्यं गद्यं वेत्यर्थः । "तदप्येषः श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे" इत्यादि बहुशः श्रुतिषूपलम्भेनेदृशाक्षरसन्निवेशस्य श्लोकत्वेन मुनेरज्ञानमित्यस्यात्यन्तमनुचितत्वात् । प्राक्तननारदऋषिसंवादस्यापि श्लोकरूपतया तत्रैव सन्देहकरणौचित्याच्च । तत्प्रश्नोत्तरं सर्वं केवलसंस्कृतैरेव । एतच्छ्लोकोत्तरमेव श्लोकैस्तस्यापि निबन्धनमिति कल्पना तु न युक्ता मानाभावात् अन्यथोपपत्तेश्च । अधर्मत्वबुद्धिपूर्वं कथितवचनस्येदृशेऽर्थे तात्पर्यसम्भवस्याप्यभावाच्च । माङो योगाभावेऽगम इत्येतावन्मात्रेण लुङा भूतत्वस्यैव प्रतीत्याशिषो अप्रतीतेश्च । एतच्छ्लोकनिर्गमकाले कवेः काव्यं करिष्यामीति बुद्धेरप्यभावाच्च । ब्रह्मोपदेशानन्तरमेव हि तथा बुद्धिर्वाल्मीकेः ॥

मम तु प्रतिभाति—नारदात्स्वगुणश्रवणानन्तरं मुनेः स्ववर्णनेच्छां ज्ञात्वा स्वचरित्रस्य च करुणारसमयत्वेन तत्प्रधानकाव्येऽतिकरुणचित्तस्यैवाधिकारादृषेः करुणचित्तत्वजिज्ञासयेव पूर्वंभृगुदत्तशापस्य पुनरुक्तत्वकरणेन दार्ढ्यसम्पादनाय मुनेरीक्षणाय च भगवान्राम एव निषादरूपेण पश्यतो मुनेः पुरतस्तमनादृत्य क्रौञ्चं रक्षोविशेषरूपं जघान । ततस्तदिच्छावशादन्तर्यामितया तथा प्रेरणाच्च महानधर्मोऽयमनेन कृत इति रुषा 'पापमते निषाद ! यत्त्वं काममोहितं क्रौञ्चमिथुनान्मिथुनीभूतात्क्रौञ्चयुगाद्विभक्तमेकमवधीस्तत्त्वमपि शाश्वतीः समा आयुःशेषभूतानि बहूनि वर्षाणि प्रतिष्ठां स्त्रीसाहित्येन स्थितिमिह लोके मा गमो मा प्राप्नुहि । किन्त्वत्यल्पकालमेव तथा वास एकमिथुनीभावपर्यन्तमितियावत्' इति शप्तवान्मुनिः । 'एकमवधीः' इत्युक्तेर्यथा स त्वया स्त्रीविरहितः कृतः, सा च नायकहीना कृता, तथा त्वमपि प्रियया स्वभार्यया हीनो भव । सा च त्वया हीना भवत्विति पर्यवसानम्। अगम इत्यडागमस्तु माङ्योगेऽप्यार्षत्वात्। तस्य रक्षोरूपत्वं त्वेतदुत्तरं ब्रह्मणः सकाशात्सकलरामवृत्तान्तज्ञानवरलाभोत्तरकालकृते 'तस्मात्तु मिथुनादेकम्' इति श्लोके वैरनिलय इति विशेषणेन सूचितम् । रक्षःस्वेव तस्य लोकदृष्ट्या वैरनिलयत्वप्रसिद्धेः । निषादस्यापि प्राणिषु न वैरं किन्त्वाहारार्थमेव तद्धननमिति प्रसिद्धेश्च । अत एवारण्यकाण्डे मृगयाव्यसनमुपक्रम्य 'विना वैरं च रौद्रः' इति, 'तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् । निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥' इति च वक्ष्यति । 'त्रीण्येव व्यसनान्यत्र कामजानि भवन्तु ते' इति चोपक्रमे उक्तम् । नन्वीदृशोऽर्थस्त्वया केन मानेन निर्णीत इति चेच्छृणु । ऋष्यक्षरस्वारस्यात् । तच्चाग्रे स्फुटम् । तत्र सन्देहश्चेत्स्वान्तर्यामिणं पृच्छ । तदुक्तं पाद्मे शिवशिवासंवादे रामवैभववर्णने चतुर्विंशेऽध्याये—'ततो जानपदः कश्चित्पामरः काष्ठविक्रयी । स्ववधूगर्हणद्वारा रावणस्य गृहोषिताम् ॥ गर्हयामास वैदेहीं दुर्वृत्तं लोकनिन्दकः । तच्छ्रुत्वा देवि चारेभ्यो भीतो लोकापवादतः ॥ आहूय लक्ष्मणं प्राह रामो राजीवलोचनः । शृणु मे वचनं गुह्यं सीतासन्त्यागकारणम् ॥ वाल्मीकिनाऽथ भृगुणा शप्तोऽस्मि किल लक्ष्मण । तस्मादेनां त्यजाम्यद्य जनो नैवात्र कारणम् ॥' इति । तथा स्कान्दे पातालखण्डेऽयोध्यामाहात्म्ये तत्रत्यतीर्थाश्रमवर्णनप्रस्तावे—'शापोक्त्या हृदि सन्तप्तं प्राचेतसमकल्मषम् । प्रोवाच वचनं ब्रह्मा तत्रागत्य सुसत्कृतः ॥ न निषादः स वै रामो मृगयां चर्तुमागतः । तस्य संवर्णनेनैव सुश्लोक्यस्त्वं भविष्यसि ॥ इत्युक्त्वा तु जगामाशु ब्रह्मलोकं सनातनः । ततः संवर्णयामास राघवं ग्रन्थकोटिभिः ॥' कोटिभिः शतकोटिभिः । 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्' इत्यन्यत्रोक्तेः । तच्च संपूर्णं ब्रह्मलोक इत्यैतिह्यम् । इह तु कुशलवोपदिष्टा चतुर्विंशतिसहस्रीत्यलम् । योगवासिष्ठे तु शापान्तराण्यप्युक्तानि । तथाहि—'सनत्कुमारो निष्काम अवस-

द्रुह्मसद्मनि । वैकुण्ठादागतो विष्णुस्त्रैलोक्याधिपतिः प्रभुः ॥ ब्रह्मणा पूजितस्तत्र सत्यलोकनिवासिभिः । विना कुमारं तं दृष्ट्वा ह्युवाच प्रभुरीश्वरः ॥ सनत्कुमार स्तब्धोऽसि निष्कामो गर्वचेष्टया । अतस्त्वं भव कामार्तः शरजन्मनि नामतः ॥ तेनापि शापितो विष्णुः सर्वज्ञत्वं तवास्ति यत् । किञ्चित्कालं हि तत्त्यक्त्वा त्वमज्ञानी भविष्यसि ॥' शापितः शप्तः । किंचित्कालमवतारान्तरेऽत्यल्पकालम् । तत्त्यक्त्वा तद्रूपं त्यक्त्वा । अज्ञानी स इव । तथा—'भृगुर्भार्यां हतां दृष्ट्वा प्रोवाच क्रोधमूर्छितः । विष्णो तवापि भार्याया वियोगो हि भविष्यति ॥' तथा—'वृन्दया शापितो विष्णुश्छलनं यत्त्वया कृतम् । अतस्त्वं स्त्रीवियोगं हि वचनान्मम यास्यसि ॥' शापितः शप्तः । छलनं पतिवेषेण सम्भोगरूपम् । तथा—'भार्या हि देवदत्तस्य पयोष्णीतीरसंस्थिता । नृसिंहवेषधृग्विष्णुं दृष्ट्वा पञ्चत्वमागता ॥ तेन शप्तो हि नृहरिर्दुःखार्तः स्त्रीवियोगतः । तवापि भार्यया सार्धं वियोगो हि भविष्यति ॥' इति । दुःखार्तः तृतीयार्थे आर्षी प्रथमा । दुःखार्तेनेत्यर्थः । ताराशापोऽपि किष्किन्धाकाण्डे तत्रैव वक्ष्यत इत्यलं विस्तरेण । 'प्राचेतसेन मुनिना रामो राजीवलोचनः । तमसोपवने शप्तो वेषभृग्जानकीपतिः ॥ श्रीरामः प्राकृतां लीलां स्वीयां वर्णयितुं सदा । मन्दोदर्याः पतिः क्रूरः क्रौञ्चवद्धिनिपातितः ॥ अण्डजं निहतं दृष्ट्वा मुनिः शापमथाददौ । चिरं प्रतिष्ठा मा भूत्ते निषाद भुवि हिंसक ॥ शापं श्रुत्वैव सर्वात्मा तत्रैवान्तरधीयत । शोकाक्रान्तस्तु वाल्मीकिर्ब्रह्मणाऽऽशु सुबोधितः ॥' इति । ' त्यक्त्वा जीर्णदुकूलवद्वसुमतीं बद्धोऽम्बुधिर्बिन्दुवद्बाणाग्रेण जरत्कपोतक इव व्यापादितो रावणः । लङ्का कापि विभीषणाय सहसा मुद्रेव हस्तेऽर्पिता श्रुत्वैवं रघुनायकस्य चरितं को वा नरो नाञ्चति ॥' ॥ १६ ॥

**रा० टी०**—तत्रत्यहिंसानिवृत्तिफलकयत्नसूचनपूर्वकहिंसावलोकनजन्यशोकनिवर्तकप्रतिपिपादयिषितकाण्डसप्तार्थसूचकं पद्यमाह—मा निषादेत्यादिना । हे निषाद ! यद्यस्मात्काममोहितं कामासक्तं क्रौञ्चमिथुनादेकं पुमांसं पृथक्कृत्य त्वमवधीस्तस्मात् शाश्वतीः निरन्तराः समाः संवत्सरान् प्रतिष्ठामिह वने क्वचित्स्थानं त्वं मा गमः न प्राप्नुहि । पुनरिह वने तवागमनं न स्यादित्यर्थः । " आशंसायां भूतवच्च " इतिभविष्यत्काले लुङ् । अननुबन्धकमाशब्दप्रयोगान्माङ्योगाभावादडागमप्रसक्तिः । समा इत्यत्र द्वितीया " कालाध्वनोः " इति सूत्रविहिता । ' प्रतिष्ठा स्थितिमाहात्म्यम् ' इति वैजयन्तीकोशात्प्रतिष्ठाशब्दः स्थानपरः । किञ्च त्वमेतिनिषादविशेषणम् । त्वेन आत्मभिन्नेन रागादिना मः बन्धनं यस्य । अनात्मभूतरागादिवश इत्यर्थः । ' मा च मातरि मो माने बन्धने च प्रकीर्तितः ' इत्येकाक्षरकोशान्मशब्दस्य बन्धनवाचकत्वम् । त्वशब्दस्यान्यपरत्वं तु सर्वादिगणे प्रसिद्धम् । अत्र पक्षे सानुबन्धकमाङ्शब्दप्रयोगात् । अड्विरहभविष्यत्कालबोधकलुङौ सिद्धाविति बोध्यम् । अर्थस्तु पूर्ववत् । एतेन तत्रत्यहिंसाभाव एव सम्पादितः । न निषादप्राणवियोगः शापेनेति फलितम् । तेन ऋषेः क्रोधो न जात इति ध्वनितम् । तेन ऋषेः परमदयालुत्वं व्यक्तम् ॥

तत्रत्यहिंसानिवृत्तिफलकयत्नरूपार्थमुक्त्वा हिंसावलोकजन्यशोकनिवर्तकप्रतिपिपादयिषितकाण्डसप्तकस्वाभिप्रेतसंक्षिप्तार्थ उच्यते । हे मानिषाद ! मानिनां गर्वविशिष्टानां षः श्रेष्ठः परशुरामस्तमासमन्ताद्भावेन स्यति खण्डयति वैष्णवधनुःसज्जीकरणादिना तद्गर्वं निवर्तयतीति मानिषादः तत्संबोधने हेमानिषाद परशुरामाभिमाननिवर्तक ! त्वं शाश्वतीः समाः प्रतिष्ठामगमः प्राप्स्यसि । यद्यस्मात्क्रौञ्चवन्मिथुनीभूताः क्रौञ्चमिथुनाः जनकधनुर्यागसमागता अविवेकिनो भूपास्तेषु अतति व्याप्नोतीति क्रौञ्चमिथुनात् त्वमेकं केवलं काममोहितमविवेकिभूयकाममोहितत्वम् । अवधीः न्यवर्तयः । ' षः कीर्तितो बुधैः श्रेष्ठे तथा गम्भीरलोचने ' इत्येकाक्षरकोशात्षशब्दः श्रेष्ठपरः " आशंसायां भूतवच्च " इति सूत्रविहितोऽत्र लुङ् । काममोहितमिति भावनिष्ठान्तम् । इति बालकाण्डकथा सूचिता ॥

यद्वा मं बन्धनं सत्यवचनात्याज्यत्वादेव वरप्रदानसंशयाविष्टत्वम् । आसमन्तान्निषादयति दूरीकरोतीति तत्संबोधने हे मानिषाद महाराजाधिराजदशरथसंशयनिवर्तक ! तद्विशेषणं क्रौञ्चमिथुनादिति । क्रौञ्चवन्निरन्तरवनवासेन पक्षितुल्यानि मिथुनानि अनसूयाऽत्र्यादियुग्मोपलक्षितानि तानि आसमन्तादतति स्वदर्शनजनितानन्ददातृत्वेन प्राप्नोतीति क्रौञ्चमिथुनात् वन्यमुन्यानन्ददातः रघुनाथ ! यद्यस्मादेकमल्पमापाततः प्रतिभासमानं काममोहितं दशरथकाममोहितत्वम् । किञ्च कामेन रघुनाथेच्छया मोहितत्वं प्रकटस्ववियोगजनितदशरथौदासीन्यमवधीः । स्वाप्रकटस्वस्वरूपसंयोगबोधनद्वारा न्यवर्तयः । तस्मात् त्वं शाश्वतीः समाः प्रतिष्ठामगमः । इत्ययोध्याकाण्डकथासूचनम् ॥

यद्वा हे मानिष ! मानः देवकर्तृकपूजा अस्ति येषां ते मानिनः ब्रह्मविष्णुमहेश्वराः तेभ्योऽपि षः श्रेष्ठः तेषां षं येनेति वा । तत्संबोधनं हे मानिष ! अन्ते ब्रह्मादिश्रैष्ठ्यहेतुभूतेत्यर्थः । अत्र पक्षे षशब्दः भावप्रधाननिर्दिष्टो बोध्यः । तद्विशेषणं क्रौञ्चेति । मङ्गलप्रदेत्यर्थः । काममोहितमत्यन्तमोहं प्राप्तं यत् रक्षःकुलं समाः सर्वत्र समदृष्टयो ये दण्डकारण्यवासिऋषयस्तानाद भक्षयामास । तत् रक्षःकुलं क्रौञ्चमिथुनात् क्रौञ्चं वनगमनप्रतीयमानाल्पत्वं प्राप्तं यन्मिथुनं मिथुनत्वम् । मिथुनधर्मो विलासवचनादिस्तमतति प्राप्नोतीति क्रौञ्चमिथुनात्त्वमाशु शीघ्रमेकमल्पमश्रममिति यावत् । यथा स्यात्तथाऽवधीः । अतः प्रतिष्ठां मुनिकृतपूजामगमः । प्रायः अत एवातीः । अत्येति सर्वानतिवर्तसे इति अतीः । सर्वश्रेष्ठोसीत्यर्थः । इत्यारण्यकथासूचनम् ॥

यद्वा हे मानिष ! मस्य ऋष्यमूकपर्वतादन्यत्र सुग्रीवगमनप्रतिबन्धरूपबन्धनस्य आनिषः अत्यन्तध्वंसो यस्मात्तत्संबोधनम् । तद्विशेषणं क्रौञ्चेति वनवासहेतुकप्रतीयमानकृशत्वविशिष्टेत्यर्थः । यद्यस्मान्मिथुनात्तारावालियुग्माद्विभक्तमेकं काम-

मोहितं वालिनं त्वमवधीः । तस्मात् आदप्रतिष्ठाम् आदस्य स्वीकारकर्तुर्या प्रतिष्ठा स्वीकृतनिबर्हणजन्यप्रतिष्ठितत्वं शाश्वतीः समाः अगमः प्राप्स्यसि । आनिप इति आङ्निपूर्वकध्वंसार्थकषोधातुप्रकृतिकभावार्थककप्रत्ययेन सिद्धम् । आदेत्यत्र आङ्पूर्वकदाधातोः कः। इति किष्किन्धाकाण्डकथासूचनम् ॥

यद्वा हे कौञ्च ! प्रतीयमानसीताविरहहेतुकप्रतीयमानकृशताविशिष्ट ! यद्यस्मान्मिथुनात्तारासुग्रीवमाज्ञाप्य मया लक्ष्म्या सह निषीदति नित्यं तिष्ठतीति मानिषादो विष्णुस्तद्वत्सङ्ग्रामे प्रतितिष्ठतीति मानिषादप्रतिष्ठाः हनुमान् तं त्वमगमः सीतान्वेषणार्थं लङ्कां तारासुग्रीवद्वारा प्रैषयः। तस्मात् शाश्वतीः समाः बहुकालं रक्षसामेकं मुख्यं काममोहितं काममोहितत्वम् अवधीः न्यवर्तयः । मिथुनादित्यत्र ल्यब्लोपे पञ्चमी । प्रतिष्ठेत्यत्र विच्प्रत्ययः । अगम इत्यत्र गमिरन्तर्भावितणिजर्थः। इति सुन्दरकाण्डकथासूचनम् ॥

यद्वा हे षाद ! षं परोक्षत्वं इन्द्रियागोचरत्वम् आसमन्तात् यति खण्डयतीति षादः तत्संबोधनं षादेति । स्वावाङ्मनसगोचरत्वं परित्यज्य मम दृष्टिपथं गतेत्यर्थः। किञ्च षः श्रेष्ठः आदो ग्रहणकर्ता स एव स इति कर्मधारयः। तत्संबोधने हे षाद ग्रहणकर्तृश्रेष्ठ ! स्वीकृतापरित्यागधर्मविशिष्टेत्यर्थः। यद्यस्मात् क्रौञ्चं सीताहरणहेतोः परस्परं कुटिलतां प्राप्तं यन्मिथुनं मन्दोदरीरावणयुग्मं तस्माद्विभज्य एकं रक्षःप्रधानम् । काममोहितं कामेन रघुनाथेच्छया मोहितम् । अयं मम स्वामीति विवेकराहित्यविशिष्टं रावणं त्वमवधीः । तस्माद्धेतोः । मा देवसंपत्तिः त्वया आनि आजीवि । पुनः प्रापीत्यर्थः । अत एव शाश्वतीःसमाः प्रतिष्ठामिह लोकेऽपि महाराजत्वरूपं परममाहात्म्यमगमः प्राप्स्यसि । 'उपसर्गे परोक्षे च षकारः परिकीर्तितः । षः कीर्तितो बुधैः श्रेष्ठे' इति कोशौ । इति युद्धकाण्डकथासूचनम् ॥

यद्वा हे श सकलायोध्यावासिनित्यमङ्गलप्रद ! क्रौञ्चमिथुनात् तदुपलक्षितपक्षिण आरभ्य समाः साम्यविशिष्टपरमहंसपर्यन्ताः। सकलायोध्यावासिप्रजाइत्यर्थः । एकं मुख्यम् । अत एव कामं सर्वेच्छाविषयीभूतम्। अत एव ओहितं तं प्राप्स्यामि न वेति अतिशयतर्कविषयीभूतम्। मो महाशम्भुः अः महाविष्णुः आः महाब्रह्मा। तेषामानिषादः परमा स्थितिर्यत्र स मानिषादः स एव प्रतिष्ठाः सर्वोत्कृष्टमाहात्म्यविशिष्टःअप्रकटसाकेतपदार्थस्तम्। आशु शीघ्रमगमः प्रापयः अतस्त्वमतीः सर्वानतिवर्त्तसे । मकारस्य शिववाचकत्वे प्रमाणम् । 'मः शिवे मा रमायां च मा निषेधेऽव्ययं मतम्' इति विश्वः । इत्युत्तरकाण्डकथासूचनम् ॥१९॥

**गो० टी०**—तदेव वचनमाह—मानिषादेति। हे निषाद ! त्वं शश्वदेव शाश्वत्यः स्वार्थेऽण्। ततो ङीप् । ताः अनारता इत्यर्थः । समाः संवत्सरान् । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । अत्यन्तसंयोगे द्वितीया । प्रतिष्ठां क्वचित्स्थानम् । 'प्रतिष्ठा स्थितिमाहात्म्ये' इति वैजयन्ती । मागमः मा प्राप्नुहि । "आशंसायां भूतवच्च" इति लुङतिदेशात् । लृदित्वादङ् । नायं माङ् अपितु माशब्द इति काशिकाकारः। तेनाडागमेऽपि न विरोधः । दुर्घटवृत्तिकारस्तु अमेति पदच्छेदः। हे अम ! हे अलक्ष्मीक ! इति निषादविशेषणम् । ततो "न माङ्योगे" इत्यडभाव इत्याह । एवं पूर्वार्द्धेन शाप उक्तः । तत्र हेतुरुत्तरार्द्धेनोच्यते। यद्यस्मात्कारणात् क्रौञ्चमिथुनात् क्रौञ्चमिथुनमासाद्य ल्यब्लोपे पञ्चमी। एकं काममोहितं कामेन मोहं प्रापितम् रतिक्रीडाविवशमित्यर्थः। एकमवयवमवधीः हिंसितवानसि। तस्मात्तद्धदेव प्रतिष्ठां मागम इति योजना ॥

चतुर्मुखप्रसादेन वाल्मीकिमुखात् प्रथमोदितोऽयं श्लोकः केवलं शापपरो न भवितुमर्हतीति भगवन्मङ्गलाशासनपरतया मङ्गलाचरणपरोऽयं प्राथमिकः श्लोक इति पूर्वाचार्या वर्णयन्ति । तथाहि निषीदन्त्यस्मिन्निति निषादो निवासः । अधिकरणे घञ् । मा लक्ष्मीः तस्या निषादो मानिषादः श्रीनिवासस्तत्र सम्बुद्धिर्हे श्रीनिवास ! त्वं शाश्वतीः समाःसर्वकालं प्रतिष्ठां माहात्म्यमगमः गच्छ। लकारव्यत्ययः। यद्यस्मात् क्रौञ्चमिथुनात् राक्षसमिथुनाद्रावणमन्दोदरीरूपात् कामेन मन्मथेन मोहितं सीतापहर्तारमेकं रावणमवधीः। रावणं हत्वा कृतत्रैलोक्यत्राणस्त्वं यावत्कालं विजयी भवेत्यर्थः। वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। एवमनेन श्लोकेनेष्टदेवतास्मरणरूपं मङ्गलमाचरितम् ॥

'काव्यार्थसूचनं कैश्चिन्नान्यामेव निरूप्यते' इतिवचनादस्मिन्नेव श्लोके वक्ष्यमाणकाव्यार्थः सङ्क्षेपेण दर्शितः । तथाहि। मानिषादेत्यनेन सीतापरिणयपर्यवसायिनी बालकाण्डकथोद्बोधिता । प्रतिष्ठां त्वमगम इत्यनेन पितृवचनपरिपालनप्रतिष्ठाभिधायिन्ययोध्याकाण्डकथा वेदिता। शाश्वतीः समा इत्यनेन ऋषिगणविषयप्रतिज्ञानिर्वहणेन रामस्य प्रतिष्ठाप्रवृत्तिमभिदधत्यारण्यकाण्डकथा सूचिता । कुञ्च गतिकौटिल्याल्पीभावयोरित्यस्माद्धातोर्ऋत्विगित्यादिना क्विन्निपातनात् । नलोपः संयोगान्तलोपश्च न भवति । कुञ्चेव क्रौञ्चः स्वार्थेऽण् । तथा च क्रौञ्चयोः कुटिलयोस्तिरश्चोस्तारावालिनोर्मिथुनादेकं काममोहितं सुग्रीवभार्यापहर्तारं वालिनमवधीरिति किष्किन्धाकाण्डकथाभिहिता । क्रौञ्चौ अल्पीभूतौ कृशाविति यावत्। तयोरन्योन्यविरहक्लेशकृशीयसोः सीतारामयोरेकमवयवं सीतारूपमवधीः भृशं पीडितवानसीति सीताविरहदुःखातिशयवर्णनपरा सुन्दरकाण्डकथा बोधिता । क्रौञ्चौ कुटिलौ राक्षसौ तन्मिथुनादेकं काममोहितं रावणमवधीरिति युद्धकाण्डकथा सूचिता। दण्डकारण्यवासिऋषिपत्नीदर्शनाभिलाषमोहितसीतापीडाभिधानेनोत्तरकाण्डार्थोऽपि सङ्क्षिप्तः ॥

ननु मृगपक्ष्यादिवधस्य व्याकुलधर्मत्वात् कथमनपराधिनमेनं मुनिः शप्तुमर्हति । वक्ष्यति राम एव वालिवधप्रस्तावे 'प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम् । विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते' इति सत्यम्। तथापि रतिपरवशतादशायां तद्वधो दोष एवेति मुनेराशयः सूचयति हि

तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः । शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६ ॥
चिन्तयन्स महाप्राज्ञश्चकार मतिमान्मतिम् । शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः । शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८ ॥

रतिपरवशतां काममोहितामिति पदेन । अत एव भारते पाण्डुं प्रति मुनिः । 'अस्वर्ग्यमयशस्यं त्वमनुतिष्ठसि भारत । को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने ' इति । नन्विदं मल्यं गच्छतो मन्दरपथोपवर्णनं यदयमात्मनो वैलक्षण्यं परमाप्तत्वं वक्तुमारभ्य स्वचरित्रवर्णनं करोति । ब्रह्मागमनवरप्रदानादेरेव तदर्थं वक्तव्यत्वात् । उच्यते श्रूयतामवधानेन । ' अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम् ' इति दर्शितरीत्या काव्यार्थसूचनमियता ग्रन्थसन्दर्भेण क्रियते । तथाहि अकर्दममित्यादिना पावनं समुद्रसेतुस्थलमुच्यते । तस्याभ्याश इत्यादिना तत्तीरे मन्दोदर्या सह चरन्तं भोगान् भुञ्जानमनपायिनं चतुर्मुखवरप्रदानेन लब्धचिरायुषं चारुनिस्वनं रम्यवीणादिविनोदं क्रौञ्चयोराक्षसयोर्मिथुनं ददर्श धर्मबलेनालोकितवान् । तस्मादित्यादिना पापनिश्चयो निश्चितरावणपापः वैरनिलयः हिरण्यकशिपुरावणशिशुपालरूपजन्मत्रयानुसारित्वात्सहजशात्रवः निषीदन्त्यत्र सर्वाणि जगन्तीति निषादो विष्णुः । पुमांसं रावणं जघानेत्युच्यते । भार्यात्वित्यादिना मन्दोदरीप्रलापः । द्विजेन पुलस्त्यवंशत्वात् ब्राह्मणेन ताम्रशीर्षेण रत्नमुकुटधारित्वात् पत्रिणा वाहनपरिच्छदादिमता सहितेन कुम्भकर्णेन्द्रजिदादिसहायसंपन्नेन कारुण्यं जुगुप्सा 'जुगुप्सा करुणा घृणा' इत्यमरः । अधर्मोऽयमिति रावणकृतोयमधर्म इति । एतत्सर्वं रावणवधवृत्तान्तमवलोक्य पौलस्त्यवधाभिधानं तद्विषयप्रबन्धं निरमिमीतेति मानिषादेत्यस्य रामायणार्थसंग्रहपरत्वं चोक्तम् । अथवा अकर्दममित्यादिना गोदावरीतीर्थमुच्यते । तत्तीरे पञ्चवट्यां रामस्य सीतयासह वर्तनं तयोरेकस्याः सीताया रावणेन दुरात्मना हिंसनं पीडनमित्येतत्सर्वं साक्षात्कृत्य विधिचोदितो मुनिः सीतायाश्चरितमिति तद्विषयं प्रबन्धमकरोदित्यर्थः । तस्मिन् पक्षे अनपायिनमाद्यन्तशून्यं चारुनिःस्वनं सर्ववेदान्तप्रवर्तकं क्रौञ्चयोः कृशयोस्तपस्विनोः सीतारामयोः पापनिश्चयो वैरनिलयो निषादो लोकहिंसको रावणः सीतामपजहार सा च रुरोद । द्विजेन क्षत्रियेण । ताम्रशीर्षेण रत्नमुकुटारुणेन । पत्रिणा शरेणोपलक्षितेन । सहितेन लोकहितपरेण । अन्यत्सर्वं समानम् । मानिषादेत्याद्यर्थः शापार्थेन दर्शितः ॥ १५ ॥

१६ ] ति० टी०–तस्येति । मया मुनिना शान्तेन तपस्विना शकुनिशोकपीडितेनेदमीदृशं क्रूरं तपोनाशकरं किं व्याहृतमिति वीक्षतोऽन्तर्यामिप्रेरणया निषादे सर्वतो महत्त्वसम्भावनया दृश्यमानक्रौञ्चे तद्वैपरीत्यसम्भावनयातिनिन्द्यमयशस्करं महापातकेभ्योऽप्यधिकं पापं वृत्तमिति चिन्ता बभूव । यद्यप्येतत्सर्वं वाल्मीकिकृतमेव तथापि कुशलवगेयतयाऽस्य काव्यस्य करणात्तदुक्तितयैवमुक्तिः । अन्यथा स्वचिन्तायाः स्वापरोक्षत्वाद्बभूवेति लिट्सङ्गतिः स्यात् । यद्वा सर्गचतुष्टयमाद्यमुपोद्घातरूपं कस्यचिच्छिष्यस्य । वाल्मीकीयोपोद्घातत्वाच्च वाल्मीकीयोक्तिः । पारोक्ष्यमारोप्य स्वयमपि तथोक्तिरुपोद्घातत्वद्योतनायेत्यन्ये ॥ १६ ॥

रा० टी०–तस्येति । एवं राजोचितब्राह्मणानुचितव्याधनिवर्तकत्वप्रकारेणापि बोधकं पद्यं ब्रुवतः कथयतः वीक्षतः परधर्माचरणमयुक्तमिति विजानतः तस्य मुनेः हृदि चिन्ता बभूव । चिन्तास्वरूपमाह–अस्य शकुनेः क्रौञ्चस्य शोकार्तेन एतत् क्रौञ्चविषयकशोकविशिष्टेन मया किमिदं व्याहृतम् । कुत्सितमेतदुच्चारितम् । कुत्सितत्वं च ब्राह्मणानुचितव्याधनिस्सारणसूचकत्वेनेति बोध्यम् ॥ १६ ॥

गो० टी०–तस्येति । वीक्षतः तन्मिथुनं वीक्षमाणस्य संज्ञापूर्वको विधिरनित्य इति वा चक्षिङोऽनुदात्तस्य ङित्करणज्ञापितानित्यत्वेन वा परस्मैपदम् । एवं मानिषादेत्येवं ब्रुवतः । क्रौञ्चीं दृष्ट्वा मानिषादेत्येवं वदत इत्यर्थः । तस्य वाल्मीकेर्हृदि अस्य शकुनेरेतत्पक्षिनिमित्तं शोकार्तेन मया व्याहृतमिदं वाक्यं किं किंरूपमिति चिन्ता बभूव ॥ १६ ॥

१७ ] ति० टी०–चिन्तयन्निति । महदयशस्करमिदं कर्म वृत्तमिति चिन्तयन्सत्यसङ्कल्पतयेत्थं मतिं सङ्कल्पं चकार । तदभिलापकं वाक्यं शिष्यमब्रवीदिति सम्बन्धः ॥ १७ ॥

रा० टी०–चिन्तयन्निति । महाप्राज्ञः महान्तो भरद्वाजादयः प्राज्ञाः रघुनाथविषयकज्ञाननिष्ठाः यस्मात् । तत्र हेतुः मतिमान् तत्त्वविषयकज्ञाननिष्ठः मतिं चिन्तानिवर्तकनिश्चयं चकार प्रापेत्यर्थः । तत्स्वरूपं तु रघुनाथचिन्तनप्रतिबन्धकीभूतनिवर्तनं धर्मान्तरेणापि सम्पादनीयमिति । तत्र प्रमाणम् ' मन्निमित्तं कृतं पापं स वै पुण्याय कल्पते । मद्विरोधी च यो धर्मः स वै पापाय कल्पते ' अत एव मुनिपुङ्गवः मुनिश्रेष्ठः स वाल्मीकिः शिष्यं भरद्वाजमिदं वक्ष्यमाणं वाक्यं वचोऽब्रवीत् । चो हेतौ ॥ १७ ॥

गो० टी०–चिन्तयन्निति । प्रकर्षेण जानातीति प्रज्ञः ऊहापोहसमर्थः । प्रज्ञ एव प्राज्ञः "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण् । यद्वा प्रज्ञा धीः ' धीः प्रज्ञा शेमुषी मतिः ' इत्यमरः । साऽस्याऽस्तीति प्राज्ञः " प्रज्ञाश्रद्धावृत्तिभ्योऽण् " इति मत्वर्थीयोऽण् । महांश्चासौ प्राज्ञश्चेति महाप्राज्ञः मतिमान् शास्त्रज्ञानवान् स वाल्मीकिर्मतिमुत्तरश्लोके वक्ष्यमाणं निश्चयं चकार । स मुनिपुङ्गवः शिष्यमिदं वाक्यमब्रवीच्च । ब्रुविशासीत्यादिना द्विकर्मकत्वम् । अयोगव्यवच्छेदे एवकारः ॥ १७ ॥

१८ ] ति० टी०–पादेति । अष्टाक्षरानुष्टुप्पादैर्बद्धः । अक्षरसमश्छन्दःशास्त्रोक्तगुरुलघ्वक्षरवैषम्यरहितः । तथा तन्त्री-

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् । प्रतिजग्राह संतुष्टस्तस्य तुष्टोऽभवन्मुनिः ॥ १९ ॥
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन्यथाविधि । तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥ २० ॥
भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान्गुरोः । कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥

---

वीणा, लयस्तालमृदङ्गवेणुहस्ताभिनयानां समकालं विरामः, ताभ्यां युक्तः । तन्त्र्यामारोप्य वाद्यैः सह गातुं योग्य इति यावत् अतः शोकार्तस्य शापरूपतयानौचित्येन प्रवृत्तोऽपि मे मम श्लोको यशोरूपो भवतु अन्यथाऽयशोरूपो मा भूदित्यर्थः । अत्र 'भवतु' इति पाठ एव बहुपुस्तकसम्मतस्तीर्थसम्मतश्च । 'श्लोको यशसि पद्ये च' इति निघण्टुः ॥ १८ ॥

रा० टी०-पादेति । पादबद्धः पादैः अष्टाक्षरचतुर्भिरंशैर्बद्धः संयुक्तः अक्षरसमः । चतुर्ष्वपि पादेषु छन्दश्शास्त्रोक्तपथोचितगुरुलघ्वक्षरविशिष्टः। तन्त्रीलयसमन्वितः तन्त्र्यादिसूचितगानलालित्यसम्पादकलयविशिष्टः । शोकार्तस्य शकुनिविषयकशोकविशिष्टस्य मे प्रवृत्तः । अयं श्लोकः अन्यथा कथंचिदप्यन्यपरः न भवतु न प्रत्येतु रघुनाथकथाप्रतिबन्धकीभूतव्याधनिवर्तनसूचकमपि रघुनाथकथासूचकमेवेदं पद्यं भवत्विति फलितोऽर्थः । यद्वा 'तन्त्रीलयसमन्वितः तन्त्रिणां शास्त्राभिज्ञानामिलं प्रतिष्ठां तत्कृतमहत्त्वं तस्य यः प्राप्तिः तेन समन्वितः युक्तः पादबद्धोक्षरसमः पादे बद्धो यः उक्षरः उक्षा वृषभश्चासौ रश्चेति वृषभश्रेष्ठ इत्यर्थः तत्समः तत्सदृशः शोकार्तस्य मे प्रवृत्तः श्लोकः अन्यथा अन्यपरकः न भवतु यथा बद्धो वृषभः स्वस्थानादन्यत्र गन्तुं न शक्नोति तथाऽयं श्लोकस्तात्पर्यविषयीभूतरघुनाथादन्यत्र न गच्छत्विति फलितोऽर्थः । 'रश्च भूपे प्रकीर्तितः' इति कोशात् रशब्दः श्रेष्ठपरः ॥१८॥

गो० टी०-पादेति । शोकार्तस्य क्रौञ्चीशोकेनार्तस्य मे प्रवृत्तः मत्तः प्रवृत्तोयं संदर्भ इत्यर्थः । पादबद्धश्चतुर्भिः पादैर्युक्तः । अक्षरसमः प्रतिपादं समाक्षरः । तन्त्री वीणागुणः लयः तौर्यत्रिकस्यैककालविरामः । 'नाशे संश्लेषणे तौर्यत्रिकसाम्ये भवेल्लयः' इति रत्नमाला । ताभ्यां समन्वितः । तन्त्र्यामारोप्य वाद्यैः सह गातुं शक्य इत्यर्थः । श्लोको भवतु श्लोकलक्षणलक्षितत्वात् । श्लोकशब्दवाच्यो भवतु नान्यथा श्लोकादन्यः केवलपदसंदर्भो न भवतु इति मतिं चकारेति पूर्वेणान्वयः ॥ १८ ॥

१९ ] ति० टी०-शिष्य इति । एवं ब्रुवतस्तस्यर्षेर्वाक्यं यशो भवत्वित्येवंरूपम् हृष्टः सन् तथैवेदं यशोरूपमेवेदमित्यनुमोदनेन प्रतिजग्राहाङ्गीचकार । अयशोरूपेऽपि यशस्त्वानुमोदनेन गुरुस्तस्य तुष्टोऽभवदित्यर्थः ॥ १९ ॥

रा० टी०-शिष्यस्त्विति । ब्रुवतः कथयतः तस्य प्रसिद्धस्य मुनेः अनुत्तमं न उत्तममन्यद्यस्मात्सर्वोत्तममित्यर्थः । वाक्यं रघुनाथवर्णनपर एव मा निषादेति श्लोकः नान्यपर इत्येतद्वचनम् । सन्तुष्टः परमसन्तोषं प्राप्तः । शिष्यो भरद्वाजः प्रतिजग्राह । निश्शेषतो ज्ञातवानित्यर्थः । तेन हेतुना गुरुः वाल्मीकिः तस्य शिष्यस्योपरि तुष्टोऽभवत् । एतेन तद्वस्तुनो दुर्ज्ञेयत्वं सूचितम् । तेन भरद्वाजस्य बुद्धिमत्तातिशयो व्यञ्जितः । तु शब्दो हेत्वर्थे । अनुत्तमं वाक्यमित्यस्यार्थिकस्सम्बन्धो ब्रुवत इत्यत्रास्तीति बोध्यम् ॥ १९ ॥

गो० टी०-शिष्यस्त्विति । शिष्यः भरद्वाजः तस्य मुनेर्ब्रुवतः । तस्मिन्मुनौ ब्रुवति सति । "यस्य च भावेन भावलक्षणम्" इत्यस्मिन्नर्थे षष्ठी । अनुत्तमं सर्वरामायणार्थसंग्रहरूपत्वेन स्वापेक्षयोत्तमान्तररहितं वाक्यं मा निषादेत्यादिकं सम्प्रहृष्टः सन् प्रतिजग्राह वाग्विधेयं चकारेत्यर्थः । गुरुर्वाल्मीकिस्तस्य तुष्टोऽभवत् । स्वश्लोकधारणात्तस्मिन् प्रीतोऽभवदित्यर्थः१९

२० ] ति० टी०-स इति । अभिषेकमिति मध्याह्नकर्तव्यानुष्ठानोपलक्षणम् । तमेवार्थमवशतः शापार्थश्लोकोत्पत्तिरूपम् । उपावर्तत न्यवर्तत ॥ २० ॥

रा० टी०-स इति । ततः सन्तोषप्राप्त्यनन्तरम् तस्मिन् वर्णितकर्दमरहितत्वादिधर्मविशिष्टे तीर्थे पावनहेतुभूततमसाजले एव स मुनिः यथाविधि विधिमनतिक्रम्य अभिषेकं स्नानं कृत्वा तं मा निषादेत्यनेन प्रतिपादितमर्थं काण्डसप्तकसङ्क्षिप्तकथां चिन्तयन् विचारयन्नेव उपावर्तत स्वाश्रममागच्छत् । एतेन तदर्थस्य मनोहरत्वं व्यक्तम् । वैशब्द एवार्थे ॥ २० ॥

गो० टी०-स इति । ततः शिष्यविषयसंतोषानन्तरं स मुनिः तस्मिन् तीर्थे 'अकर्दममिदं तीर्थम्' इत्यादिना वर्णिते तीर्थे यथाविधि विधिमनतिक्रम्याभिषेकं माध्याह्निकस्नानं कृत्वा तमेवार्थमवशात् श्लोकोत्पत्तिरूपमेवार्थं चिन्तयन्सन्नुपावर्तत आश्रममागच्छत् । अभिषेकविधिस्तु व्यासस्मृतौ विशेषतो दर्शितः । 'ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् । पुष्पाक्षतान्कुशतिलान् गोमयं गन्धमेव च ॥ नदीषु देवखातेषु तटाकेषु सरस्सु च । स्नानं समाचरेन्नित्यं नदीप्रस्रवणेषु च ॥ मृदैकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि । अधश्चतसृभिः क्षाल्यं पादौ षड्भिस्तथैव च ॥ मृत्तिका च समादिष्टा त्वार्द्रामलकमात्रतः । गोमयस्य प्रमाणं तत्तेनाङ्गं लेपयेत्ततः ॥ लेपयेदथ तीरस्थस्तल्लिङ्गेनैव मन्त्रतः । प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः ॥ अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः । आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ॥ तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः । प्रेक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेजलाशये ॥ अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पं जलान्वितम् । प्रक्षिप्यालोकयेद्देवमृग्यजुःसामरूपिणम् ॥' इत्यादि ॥ २० ॥

२१ ] ति० टी०-श्रुतवान्बहुश्रुतः पृष्ठतः पृष्ठभागेन प्रसा-

---

१ इदमसङ्गतम् तेन सूत्रेण सप्तमीविधानात् षष्ठीचानादरे इत्यपिनानादराभावात् ।

स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् । उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ।। २२ ।।
आजगाम ततो ब्रह्मा लोककर्ता स्वयंप्रभुः । चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम् ।। २३ ।।
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः । प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ।। २४ ।।
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः । प्रणम्य विधिवच्चैनं पृष्ट्वा चैव निरामयम् ।। २५ ।।
अथोपविश्य भगवानासने परमार्चिते । वाल्मीकये च ऋषये सन्दिदेशासनं ततः ।। २६ ।।

---

रितकरः परिपूर्णं कलशमादायानु पश्चाजगामेत्यन्वयः ॥ २१ ॥

रा० टी०–भरद्वाज इति । ततः गुरोरुपावर्तनानन्तरम् । विनीतः विनयसम्पन्नः श्रुतवान् यथावद्गुरूक्ततत्त्वं ग्रहीता । मा निषादेत्येतच्छ्लोकगूढार्थं परिज्ञातेत्यर्थः । अत एव मुनिः तदर्थमननशीलः शिष्यो भरद्वाजः पूर्णं जलपूरितं कलशमादाय गृहीत्वा पृष्ठतः गुरोः पश्चादनुजगाम । अन्तररहितगमनं चकारेत्यर्थः । ह इति हर्षे ॥ २१ ॥

गो० टी०–भरद्वाज इति । ततः मुनेः उपावर्तनानन्तरं विनीतः विनयसम्पन्नः श्रुतवान् शास्त्रवान् अवधृतवान् वा । ‘ श्रुतं शास्त्रावधृतयोः ’ इत्यमरः । धृतगुरुश्लोक इत्यर्थः । मुनिर्मननवान् भरद्वाजो भरद्वाजाख्यः शिष्यः पूर्णं जलपूर्णं कलशमादाय पृष्ठतः पश्चादनुजगाम अनुगमनोक्तौ पृष्ठत इत्युक्तिरव्यवधानसूचनार्था ॥ २१ ॥

२२] ति० टी०–स इति । मुखतोऽन्याः कथाश्चकार, मनसा तु शापार्थकश्लोकविषयं ध्यानमास्थितः । यत्तु ध्यानमम्बाया गायत्र्याश्चतुर्मुखरुद्रप्राधान्येन ध्यानमास्थित इत्यर्थ इति, तन्न । तदा स्थितोऽन्याः कथाश्चकारेत्यस्यासङ्गतेरित्यलं ध्यानपदार्थानभिज्ञदूषणाभिनिवेशेन ॥ २२ ॥

रा० टी०–स इति । अश्रमपदं श्रमनिवर्तकस्वाश्रमं शिष्येण भरद्वाजेन सहैव प्रविश्य उपविष्टः सुखासननिविष्टः धर्मवित् परमधर्मं वेदिता । अत एव ध्यानमास्थितः रघुनाथस्मरणपरायणः स मुनिः । अन्याः रघुनाथसम्बन्धशून्याः कथाः उक्तीः चकार तत्याज । अत एव ध्यानेन सह अन्याः कथाश्चकारेत्यस्य न विरोधः । विक्षेपार्थककृधातोः रूपम् । चशब्द एवार्थे ॥ २२ ॥

गो० टी०–स इति । स वाल्मीकिः शिष्येण सहाश्रमपदमाश्रमस्थानं प्रविश्य । धर्मवित् कृतदेवपूजादिधर्मः । उपविष्टः कृतसुखासनः सन् ध्यानमवशोत्पन्नश्लोकविषयचिन्तामास्थितः प्राप्त एव सन् अन्याः कथाः पुराणपारायणानि चकार ॥२२॥

२३ ] ति० टी०–अथ तच्चिन्तां निवर्तयितुं ब्रह्मागमनमाह–आजगामेति । स्वयं प्रभुरनन्यसुखनिरीक्षकतया सर्वलोकसृष्ट्युपयोगिज्ञानैश्वर्यादिशक्तिमान् अत एव भूरादिलोकनिर्माता॥ तं शापवाक्योच्चारणवशादतिचिन्ताक्रान्तम् ॥ २३ ॥

रा० टी०–आजगामेति । ततः ध्यानस्थित्यनन्तरम् । लोककर्ता भुवनस्य निर्माता प्रभुः समर्थः चतुर्मुखः चत्वारि चतुर्वेदप्रादुर्भावहेतुभूतानि मुखानि यस्य । अत एव महातेजाः परमतेजस्वी ब्रह्मा तं नारदोपदिष्टं मुनिपुङ्गवं द्रष्टुं स्वयमाजगाम । एतेन नारदोपदिष्टार्थस्य मनोहरत्वं व्यञ्जितम् ॥ २३ ॥

गो० टी०–आजगामेति । लोककर्ता लोकस्रष्टा प्रभुः स्वामी चतुर्मुखः वेदचतुष्टयोच्चारणोपयोगिमुखचतुष्कः । महातेजाः महाप्रभावो ब्रह्मा मुनिपुङ्गवं नारदोक्तवैभवं वाल्मीकिं द्रष्टुं कुतूहलात्स्वयमाजगाम स्वस्थानस्थित एव रामायणप्रवर्तनसमर्थोऽप्यादरातिशयेन स्वयमेवाजगामेत्यर्थः ॥ २३ ॥

२४] ति० टी०–वाग्यतोऽतिसम्भ्रमवशाद्यतवाक् । प्रयतोऽतिनम्रः ॥ २४ ॥

रा० टी०–वाल्मीकिरिति । अथ ब्रह्मागमनानन्तरम् । वाग्यतः रघुनाथस्मरणपरायणत्वान्निवर्तितवचनान्तरः अत एव प्रयतः यतचित्तः वाल्मीकिः तं ब्रह्माणं दृष्ट्वा परमविस्मितः सन् सहसा त्वरया उत्थाय प्राञ्जलिः बद्धकरो भूत्वा तस्थौ । परमविस्मित इत्यनेन तात्कालिकब्रह्मागमनहेतुर्न ज्ञात इति हेतुर्ध्वनितः ॥ २४ ॥

गो० टी०–वाल्मीकिरिति । अथ ब्रह्मागमनानन्तरं तं ब्रह्माणं दृष्ट्वा सहसा उत्थाय । ‘ ऊर्ध्वं प्राणा ह्युत्क्रमन्ते यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते’ इति वचनात् । स्वप्राणा उत्क्रामेयुरिति सहसोत्थायेत्यर्थः । परमविस्मितः सन् वाग्यतः यतवाक् । आहिताग्न्यादित्वात्परनिपातः । प्रयतः नियतमनस्कः । प्रकृष्टः अञ्जलिर्यस्यासौ प्राञ्जलिः ; स च भूत्वा तस्थौ स्थितवान् ॥ २४ ॥

२५-२६] ति० टी०–पूजयामासेति । वन्दनं स्तुतिः । प्रणम्येति पृथगुक्तेः । एनमित्याद्युत्तरान्वयि ॥ २५ ॥ एनं मुनिम् । ब्रह्मा । अनामयमामयः पीडा तद्रहितम् । व्यवहीनमितियावत् । तप इति शेषः । तत्पृष्ट्वाऽनन्तरं स्वयमासनम् उपविश्य ऋषय आसनं दिदेश । आसन उपवेष्टुमनुमेन इत्यर्थः । ‘ वाल्मीकये च ऋषये ’ इति पाठः । एतेन ‘ ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ’ इत्युक्तेर्ब्राह्मणं प्रत्ययं प्रश्नः स्मार्ताचारविरुद्धः तं देवमित्यनेनैव सिद्धे एनमित्यस्य वैयर्थ्यापत्तिश्चेत्यपास्तम् ॥ २६ ॥

रा० टी०–पूजयामासेति । तं पुरस्थितं देवं ब्रह्माणं

---

१ पृष्ट्वानामयमव्ययमितिपाठः क. ख. । २ महर्षये इति पाठः क. ख. ।

ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने । उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे ॥ २७ ॥
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः । पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ॥ २८ ॥
यत्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् । शोचन्नेव पुनः क्रौञ्चीमुपश्लोकमिमं जगौ ॥ २९ ॥
पुनरन्तर्गतमना भूत्वा शोकपरायणः । तमुवाच ततो ब्रह्मा प्रहसन्मुनिपुङ्गवम् ॥ ३० ॥

---

प्रणम्य नमस्कृत्य पाद्यार्घ्यासनवन्दनैः पाद्यार्घ्यजलसमर्पणासनस्थापनस्तुतिभिर्विधिवत् यथाविधि पूजयामास । अथ वाल्मीकिकृतपूजाप्राप्त्यनन्तरम् । एनं वाल्मीकिमव्ययं निरवच्छिन्नम् अनामयं रोगादिराहित्यं पृष्ट्वा परमार्चिते अतिपूजिते आसने उपविश्य भगवान् षडैश्वर्यसम्पन्नः अत एव ततः स्वतेजसा व्याप्तो ब्रह्मा ऋषये परममन्त्रद्रष्ट्रे वाल्मीकये आसनं सन्दिदेश आसने स्थातुमाज्ञापयामासेत्यर्थः । ब्रह्मकर्तृकासनाज्ञापनेनायमृषिः सर्वश्रेष्ठ इति हेतुर्ध्वनितः । तेन रघुनाथचिन्तनस्य अतिपूज्यत्वसम्पादकत्वं ध्वनितम् । द्वयोरेकत्रान्वयः ॥ २५ ॥ २६ ॥

गो० टी०–पूजयामासेति । मुनिः तं देवं ब्रह्माणं पाद्यार्घ्यासनवन्दनैः पाद्यं पादोदकप्रदानम् अर्घ्यमर्घजलसमर्पणम् वन्दनं स्तुतिः एतैरुपचारैः पूजयामास । एनं ब्रह्माणम् । अन्वादेशे इदमएनादेशः । विधिवत् शास्त्रोक्तरीत्या प्रणम्य । अव्ययमविच्छिन्नमनामयं कुशलं पृष्ट्वा च पूजयामासेति योजना । प्रणामशास्त्रं तु ' मनो बुद्ध्यभिमानेन सह न्यस्य धरातले। कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥ प्रदक्षिणसमेतेन ह्येवं रूपेण सर्वदा । अष्टाङ्गेन नमस्कृत्वा ह्युपविश्याग्रतः प्रभोः ' इति । यद्वा तमेनं देवं विधिवत्प्रणम्यानामयं पृष्ट्वा च पाद्यार्घ्यासनवन्दनैः पूजयामास । वदि अभिवादनस्तुत्योरिति धातुः ॥ २५ ॥ अथेति । सार्धश्लोक एकः । अथ पूजानन्तरं भगवान् ब्रह्मा परमार्चिते परमं यथा भवति तथा वाल्मीकिनार्चिते । ब्रह्मोपवेशार्थं पूजिते आसने विष्टरे उपविश्य स्थित्वा महर्षये वाल्मीकये आसनमुपवेशनं संदिदेश आज्ञापयामास २६

२७ ] ति० टी०–लोकपितामह उपविष्टे सति तदनुज्ञया स्वयमुपाविशदिति सम्बन्धः॥ २७ ॥

रा० टी०–ब्रह्मणेति। तदा तस्मिन्काले ब्रह्मणा समनुज्ञातः आसने उपवेष्टुं ब्रह्माज्ञां सम्प्राप्तः । स वाल्मीकिरपि आसने उपाविशत् तस्थौ। लोकपितामहे सर्वोत्पत्तिहेतुभूते तस्मिन्ब्रह्मणि साक्षात् प्रत्यक्षतया उपविष्टे आसने उपवेशिते सति तद्गतेन रघुनाथचरिताविष्टेनैव मनसा वाल्मीकिः ध्यानं स्वकृतमानिषादेतिश्लोकस्मरणमास्थितः प्राप्तः । आसीदिति शेषः । उपविष्ट इत्यत्र अन्तर्भावितणिजर्थः । सार्द्धश्लोक एकान्वयी ॥ २७ ॥

गो० टी०–सोपि ब्रह्मणा समनुज्ञातः सन् आसने उचितनीचासने उपाविशत् । आसनानुज्ञानं लोकहितार्थमनेन काव्यं कारयितुं वाल्मीकये महर्षय इत्यत्राशुजिपादे पथ्यावक्त्रस्य गणनियमाभावात्तथोक्तम् । नन्वर्थत्रयकरणमीदृशैः करवाण्यहमित्यनेन विरुध्यते । मैवं लेखकदोषेणार्थान्तरपतनसंभवात् । उपविष्ट इति । लोकपितामहे तस्मिन्साक्षात्प्रत्यक्षतया उपविष्टेऽपि तदा तद्गतेन क्रौञ्चहननगतेन मनसा ध्यानमास्थितः । तद्विषयचिन्तामकरोत् ॥ २७ ॥

२८ ] ति० टी०–तद्गतेन क्रौञ्चगतेन । वैरं गृह्णाति सा चासौ बुद्धिस्तद्वता कर्तरि ल्युट् बाहुल्कात् । निषादेनेति शेषः। कष्टं कृतं क्रौञ्चवधरूपं तपोनाशसम्पादकशापनिःसारणेन कष्टं कृतम् । मयेति शेषः ॥ २८ ॥

रा० टी०–व्याधनिवर्तनकाण्डसप्तकप्रतिपिपादयिषितरघुनाथचरितसङ्क्षिप्तवर्णनोभयसूचकमानिषादेतिश्लोकस्य शोभनत्वं निश्चेतुं ब्रह्माणं प्रति पूर्ववृत्तमाह–पापेत्यादिना । पापात्मना पापान्वेषणमनस्केन अत एव वैरग्रहणबुद्धिना वैरग्रहणे वैरकर्मकसम्पादने बुद्धिर्यस्य तेन मया कष्टं कठिनम् । अकर्तव्यमित्यर्थः । कृतं सम्पादितम् ॥ २८ ॥

गो० टी०–पापात्मनेति । वैरग्रहणबुद्धिना वैरेण क्रौञ्चग्रहणबुद्धिना पापात्मना पापस्वरूपेण व्याधेन कष्टं कुत्सितं कर्म कृतम्। कथमित्यत्राह–यद्इति । यो व्याधः । तादृशं रतिलालसमित्यत्राग्राम्यत्वोक्तिः । चारुरवं रम्यरतिकूजितं क्रौञ्चमकारणान्निष्कारणम् ' निमित्तकारणहेतूनां प्रयोगे सर्वासां प्रायदर्शनम् ' इत्युक्तेः पञ्चमी । हन्याद्धन्तुं शक्नुयात् । शकिलिङ् ॥ २८ ॥

२९ ] ति० टी०–कष्टमेवाह—यदिति । हन्याद्धतवानित्यर्थे छान्दसम् । अकारणाद्दृश्यमानकारणं विना । उप समीपे । ब्रह्मणः समीपे ॥ २९ ॥

रा० टी०–किंतदित्याह–य इत्यादिना । यः व्याधः चारुरवं मनोहरशब्दं तादृशं पूर्वोक्तविशेषणविशिष्टं क्रौञ्चमकारणाद्धन्यात् अहन् तस्य उप समीपे क्रौञ्चीं शोचन्नेव अहमिमं द्व्यर्थकं मानिषादेतिश्लोकं जगौ अवदम् । ' बहु जगद पुरस्तात्तस्य मत्ता किलाहम् ' इति वल्लिट्प्रयोगः ॥ २९ ॥

गो० टी०–शोचन्निति । शोकपरायणः क्रौञ्चवधदर्शनेन दुःखपरवशः । पुनः क्रौञ्चीं गतमना भूत्वा क्रौञ्चीं विचिन्त्येत्यर्थः । मुहुः शोचन्नेव वाल्मीकिरिमं मा निषादेत्यादिश्लोकं अन्तर्मनसि उपजगावित्यन्वयः। व्यवहिताश्चेत्युपसर्गस्य व्यवहितप्रयोगः ॥ २९ ॥

३० ] ति० टी०–शोकपरायणः क्रौञ्चवधकृतक्रौञ्चीदुःखदर्शनजेन स्वस्य मुखतस्तपोहानिकरशापार्थकश्लोकस्यावशतो

श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा । मच्छन्दादेव ते ब्रह्मन्प्रवृत्तेयं सरस्वती ॥ ३१ ॥
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम । धर्मात्मनो भगवतो लोके रामस्य धीमतः ॥ ३२ ॥

निःसरणजेन च शोकेन व्याप्तः । अत एवान्तर्गतमना अन्तर्गते श्लोकार्थे एव दत्तचित्तः श्लोकं जगाविति सम्बन्धः । तं तथा शोकग्रस्तम् । प्रहसन्मदिच्छयावतीर्णां सरस्वतीं न जानातीति हासं कुर्वन् ॥ ३० ॥

रा० टी०—पुनरिति । पुनस्तदनन्तरम् । अन्तर्गतमनाः अन्तः अन्तरङ्गार्थे गतं निविष्टं मनो यस्य तादृक् शोकपरायणः शोकात्परः सकारणशोकसम्बन्धशून्यः नारदोपदिष्टरघुनाथः तस्मिन्नयनं स्थितिर्यस्य स आसीदिति शेषः । ततः वाल्मीक्युक्तिश्रवणानन्तरं मुनिपुङ्गवं मुनिश्रेष्ठं तं वाल्मीकिं ब्रह्मा प्रहसन्नुवाच । प्रहसन्नित्यनेन मा निषादेतिश्लोको रघुनाथपर एवेति ब्रह्मणाज्ञातमित्यभिप्रायः सूचितः । तेन रघुनाथस्मरणप्रतिबन्धकनिवर्तनमपि रघुनाथकथैवेति हेतुर्ध्वनितः ॥ ३० ॥

गो० टी०—तामिति । ततः मनसि श्लोकपाठश्रवणानन्तरं मुनिपुङ्गवं प्रहसन् मन्नियोगेन स्वजिह्वाग्रेऽवतीर्णां सरस्वतीमयं न जानातीति प्रहसन्नुवाच । मा निषादेत्यस्य श्लोकत्वनिश्चयं द्रढयति—श्लोक इति । त्वया बद्धो मा निषादेत्यादिः श्लोक एव । अत्र श्लोकविषये विचारणा चिन्ता न कार्या ॥ ३० ॥

३१ ] ति० टी०—तद्वचनमेवाह—श्लोक एवास्त्वयमिति । अयं त्वया बद्धः श्लोको यशोरूप एवास्तु । श्लोकशब्दस्य पद्यपरतया योजने 'अस्तु' इति पाठस्यासङ्गत्यापत्तेः । अस्तीत्युक्तेरेवे ब्रह्मण औचित्यात् । मम त्वयशोरूपस्य यशोरूपताशीर्दानमिति नासङ्गतिः । 'श्लोक एव त्वया' इति पाठेऽपि यशोरूप एवायं त्वया बद्धः । अत्र तव विचारः सन्देहो मास्तु । मद्वचनात्त्वत्सङ्कल्पाच्चास्य तथा भावप्राप्तेरित्याशयः । ननु भवतु त्वदाशिषा तथात्वमस्याः, परन्तु शान्तस्वभावस्यर्षेर्ममेदृशी वागत्यन्तमनुचितेत्यपि मा विषादं कुर्वित्याह—मच्छन्दादिति । मत्सङ्कल्पादित्यर्थः । विष्णोरवतारभूतस्य रामस्य सङ्कल्पोऽपि स्वसङ्कल्पत्वेनोक्तः । 'एका मूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः' इति हरिवंशोक्तेः । नन्वीदृशसङ्कल्पो ब्रह्मणोऽपि किमर्थमिति चेच्छृणु । येषां परस्य दारवियोगादिजनकं कर्म स्वस्य दारवियोगादिकं जनयितुं नालम्, तेषामपि ब्रह्मशापस्तज्जननेऽलमिति लोके ब्राह्मणमाहात्म्यं सूचयितुम् । एवं राज्यादिसत्त्वेऽपि कामजय एवोत्तमः, न तु तद्भोगचापलम्, इति च स्वव्यवहारेण शिक्षयितुम्, तत्प्रायश्चित्तविधया स्वकीर्तिवर्णनेन मुनेर्यशोवृद्ध्यर्थं भगवद्विषयमहापापप्रायश्चित्तत्वात्कैमुतिकन्यायेनेतरजनानां सर्वपापप्रायश्चित्तं रामायणश्रवणादीत्यर्थतत्त्वं बोधयितुं चेति गृहाण एतदृष्यक्षरस्वारस्यबलेन मया योजितम् अतो निरीर्ष्यं सहृदया विचारयन्तु ॥३१॥

रा० टी०—तद्वचनाकारमाह—श्लोक इति । हे ब्रह्मन् वेदतत्त्वार्थवेत्तः ! मच्छन्दात् मत्तं मत्कल्याणार्थं छन्दः प्रादुर्भावे सङ्कल्पो यस्य स रामः तस्मात् छन्दश्शब्दस्य सङ्कल्पपरत्वं नागोजीभट्टैरपि व्याख्यातम् । किञ्च मत्ता स्वविषयकज्ञानेन शं परं कल्याणं ददातीति मच्छन्दो रघुनाथस्तस्मात्तदिच्छात एवेत्यर्थः । ते तव इयं संक्षिप्तकाण्डसप्तकार्थप्रतिपादिका सरस्वती प्रवृत्ता अतः श्लोकः परमयशःकारणभूतरघुनाथप्रतिपादक एवायं त्वया बद्धः श्लोकरूपेण सम्पादितोऽस्ति अतोऽत्र विषये विचारणा अन्यपरोप्ययं श्लोकः सम्भवति न वेति विचारो न कार्यः । 'एवास्त्वयं बद्ध' इति भट्टसम्मतः पाठः ॥३१॥

गो० टी०—अकारणकार्योत्पत्तिकृतविस्मयं वारयति—मदिति । हे ब्रह्मन्! ते इयं सरस्वती मा निषादेत्यादिरूपा मच्छन्ददेव मदभिप्रायादेव नतु कारणान्तरात् प्रवृत्ता।प्रवर्तनप्रयोजनमाह—रामस्येति । हे ऋषिसत्तम ! 'नाऽनृषिः कुरुते काव्यम्' इत्युक्तरीत्या प्रतिलब्धकाव्यनिर्माणशक्तिक! सर्वं रामस्य चरितं रामचरितविषयप्रबन्धं कुरु ईदृशैः श्लोकैरिति शेषः । 'ईदृशै करवाण्यहम्' इत्यनुवादात् ॥ ३१ ॥

३२ ] ति० टी०—एवं परवशप्रवृत्तस्यापि शापस्य भगवद्विषयतयेतरसकलमन्वाद्युक्तप्रायश्चित्तानिवर्त्यस्य यं प्रत्यक्षौ शापस्तच्चरितवर्णनरूपं प्रायश्चित्तमुपदिशति—रामस्य चरितमिति । लोके रामस्य । रमते इति रामः । बाहुलकात्कर्तरि घञ् । तेन लोकाधिष्ठातुर्लोकान्तर्यामिणश्चेत्यर्थः ।कुरु वर्णयस्व । धर्मात्मन इत्यनेन रावणादिवधवत्क्रौञ्चवधोऽपि धर्मफलक एव लोकव्यवहारेण लोकहितत्वात्त्वद्रक्षकत्वाच्चेति सूचितम् ॥ ३२ ॥

रा० टी०—रामस्येति । हे ऋषिसत्तम ! अतः कृत्स्नं यावत्त्वद्बुद्धिविषयीभूतं रामस्य चरितं त्वं कुरु वर्णय । अर्द्धं पृथगन्वयि । तदेव विशदयन्नाह—धर्मेत्यादिना । धर्मात्मनः धर्मयोः पित्राज्ञापितविश्वामित्रसेवनादिवनगमनादिरूपयोः आत्मा यत्नो यस्य इत्यनेन बालायोध्याकाण्डसङ्क्षिप्तार्थसूचनम् । गुणवतः मुनिमोहकरूपादिविशिष्टस्य अनेनारण्यकाण्डार्थसङ्क्षिप्तसूचनम् । धीमतः सुग्रीवसख्यकरणकृतोपकृतिको हनुमान् मत्प्राणसम एवेत्यादिविषयकनिश्चयविशिष्टस्य अनेन किष्किन्धासुन्दरकाण्डकथासङ्क्षिप्तसूचनम् ॥ ३२ ॥

गो० टी०—एवं सामान्येन रामचरितविषयप्रबन्धनिर्माणमनुज्ञाय सङ्क्षेपकरणमादिशति—धर्मात्मन इति । अत्र विशेषणैः प्रबन्धनायकस्य रामस्य नायकगुणा दर्शिताः । नायकगुणवर्णनेन हि काव्यं प्रथते । उक्तं हि भोजेन-' कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति । नायको यदि वर्ण्येत लोकेत्तरगुणोत्तरः'

१ एवत्वयेति पाठः क. ख. ।

वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् । रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ ३३ ॥
रामस्य सहसौमित्रे राक्षसानां च सर्वशः । वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ॥ ३४ ॥
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति । न ते वागनृता काव्ये काचिदत्र भविष्यति ॥ ३५ ॥
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् । यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ॥ ३६ ॥
तावद्रामायणकथा लोकेषु प्रचरिष्यति । यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ॥ ३७ ॥

---

इति । नायकगुणास्तु 'महाकुलीनतौज्ज्वल्यं महाभाग्यमुदारता । तेजस्विता विदग्धत्वं धार्मिकत्वादयोऽपि च ' इत्युक्ताः । तत्र धर्मात्मनइत्यनेन धार्मिकत्वमुक्तम् । लोके लोकमध्ये । गुणवतः बहुगुणकस्य अनेन उदारतोक्ता । रामस्येत्यनेन तेजस्वित्वमौज्ज्वल्यं च । धीमत इत्यनेन पाण्डितत्वम् । धीरस्येत्यनेन वसुन्धराधुरन्धरत्वरूपं महाभाग्यम् । अन्यद्गुणशब्देन ज्ञेयम् । एवम्भूतस्य रामस्य वृत्तं चरित्रम् ' वृत्तं पद्ये चरित्रे च ' इत्यमरः । यथा येन प्रकारेण नारदात्ते त्वया श्रुतं तेन प्रकारेण कथय सङ्क्षेपेण कथयेत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—वृत्तमिति । अस्य नारदोक्तविशेषणत्वादपौनरुक्त्यम् । धियमीरयतीति धीरः तेन बुद्धिप्रेरकस्येत्यर्थः तेन गायत्र्यर्थभूतस्येत्युक्तम् ॥ ३३ ॥

रा० टी०—वीरस्य शत्रुनिबर्हणराज्यकरणाश्वमेधादिकसामर्थ्यविशिष्टस्य रामस्य अनेन युद्धोत्तरकाण्डकथासङ्ग्रहसूचनम् । लोके वृत्तमाचरितं यथा येन प्रकारेण नारदात्ते तव श्रुतं तेन प्रकारेण कथय वर्णय । धीरस्येति पाठे तु धियः रावणादीनामयोध्याप्रजानां च ब्रह्मादीनां च बुद्धीः ईरयति प्रेरयतीति धीरस्तस्येत्यर्थः अनेनापि काण्डद्वयार्थसङ्ग्रहः स्पष्ट एव ॥ ३३ ॥ काव्यकरणहेतुभूतवर्णनीयपदार्थवेदितृत्वं ते मत्प्रसादादपि भविष्यतीत्याह—रहस्यञ्चेत्यादिश्लोकद्वयेन । धीमतः मत्प्रार्थनास्वीकारविषयकनिश्चयविशिष्टस्य सहसौमित्रेः सौमित्रानित्यपुत्रलक्ष्मणसहितस्य तस्य अवाङ्मनसगोचरस्य रामस्य रहस्यं तदितराविदितं प्रकाशं जनान्तरप्रसिद्धं च यद्वृत्तमाचरितं राक्षसानां रावणादीनां च सर्वशः सर्वं विदिताविदितं यद्वृत्तं वैदेह्याः विदेहप्रादुर्भूतसीतायाश्च प्रकाशं रहो वा यदि यद्वृत्तं तत्सर्वं ते अविदितं त्वन्निष्ठज्ञानाविषयीभूतमपि विदितं त्वन्निष्ठज्ञानविषयीभूतमेव भविष्यति । चकारेणायोध्यायाः विदिताविदितत्वविश्वामित्रादिचेष्टितत्वादि जनकयागगतराजादीनां चेष्टितत्वादि अन्येषामपि वर्णनीयानां चेष्टितत्वादिकं ते विदितं भविष्यतीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ ३४ ॥

गो० टी०—ननु पुनर्विस्तरेण रामचरित्रवर्णनं नियोक्ष्यमाणस्तद्विषयज्ञानलाभमनुगृह्णाति—रहस्यमित्यादिना । श्लोकद्वयमेकवाक्यम् । धीमत इति रहस्यवृत्तसम्भवहेतुत्तयोक्तम् । सुमित्राया अपत्यं पुमान्सौमित्रिः बाह्वादित्वादिञ् सहसौमित्रेः सौमित्रिसहितस्य धीमतस्तस्य रामस्य रहस्यमनितरविदितं च । प्रकाशं सर्वविदितं च यद्वृत्तं राक्षसानां रावणादीनां च सर्वशः सर्वप्रकारं रहस्यप्रकाशरूपं यद्वृत्तं तत् वैदेह्याः सीतायाश्च अपिशब्दाद्भरतादीनां च प्रकाशं यदि वा रहो रहस्यं वा यद्वृत्तं तत्र सर्वमविदितमपि नारदमुखेनाज्ञातमपि ते विदितं भविष्यतीति योजना ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०—रामलक्ष्मणयो राक्षसानां सीतायाश्च यत्प्रकाशं तदीयानां प्रकाशं तवाविदितम् । यदि वा यदपि तदीयानामपि रहोऽविदितम्, तव तु सुतरामविदितम्, तदपि सर्वं ते विदितं भविष्यति । अनेन तत्करणयोग्यतादानम् । यच्च 'मा निषाद ' इतिवदपर्यालोच्यापि वाक्त्वत्तो निःसरिष्यति साऽपि नान्यथा भविष्यति, तेनास्या अपि सत्यत्वं भावीति ध्वनितम् ॥ ३४ ॥ ३५ ॥

रा० टी०—काव्यकरणप्रवृत्त्यर्थमृषिं प्रोत्साहयन्नाह—नत इत्यादिना । अत्र चिकीर्षिते काव्ये काचिदपि ते वाक् तवोक्तिः अनृता असम्भावितार्था न भविष्यति । अतः मनोरमामन्तःकरणाकर्षिकां श्लोकबद्धां पद्यरूपां दिव्यां प्राकृतभिन्नां रामकथां कुरु प्रकटय । अत्र वाल्मीकिप्रार्थनामन्तरेणैव एतद्ब्रह्मोक्त्या रामकथाप्रियत्वं ब्रह्मणो व्यक्तम् ॥ ३५ ॥

गो० टी०—एवं यथार्थदर्शित्वमनुगृह्य यथार्थवादित्वमनुगृह्णाति—नत इति । अत्र करिष्यमाणे काव्ये ते वाक्काचिदपि किञ्चिदपि वाक्यमित्यर्थः अनृता बाधितार्था न भविष्यति । यद्वा वाक्पदं कदाचिदपि अनृता दुष्टा न भविष्यति तेन काव्यदोषत्वेनोक्तानां पदवाक्यतदर्थदोषशून्यत्वमुक्तम् अतः रामकथां रामविषयप्रबन्धकल्पनां कुरु । काव्यनिर्माणप्रयोजनमाह—पुण्यां पापहराम् । प्रयोजनान्तरमाह—मनोरमां शब्दश्रवणसमनन्तरमेव विगलितवेद्यान्तरमानन्दं जनयन्तीमित्यर्थः । श्लोकबद्धामित्यनेन गद्यप्रबन्धेभ्यो हर्षचरितजातीयेभ्यो मिश्रप्रबन्धेभ्यो नाटकादिभ्यश्च व्यावृत्तिरुक्ता ॥ ३५ ॥

३६ ] ति० टी०—एवं सामर्थ्यं दत्त्वोपसंहरति—कुर्विति । यावदित्याद्युत्तरान्वयि ॥ ३६ ॥ ३७ ॥

रा० टी०—यावदिति । महीतले यावत्कालं गिरयः पर्वताः सरितो नद्यश्च स्थास्यन्ति तावत्कालं रामायणकथा लोकेषु चतुर्दशसु भुवनेषु प्रचरिष्यति प्रचारं प्राप्स्यति । अत्र सरि-

---

१ नित्यसुमित्रापुत्रेतियुक्तम् ।

तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि । इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत ॥
ततः सशिष्यो भगवान्मुनिर्विस्मयमाययौ । ॥ ३८ ॥
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः । मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥ ३९ ॥
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा । सोऽनुव्याहरणाद्भूयः शोकः[1] श्लोकत्वमागतः॥ ४० ॥

द्रिरिरहितमहीतलोपलम्भकावस्थायाः अनुपलम्भात् । ‘ यावत्स्थास्यन्ति गिरयः ’ इत्याद्युक्तिर्महाप्रलयपर्यन्तकालोपलक्षिका । यद्वा अलोकेषु प्राकृतलोकविलक्षणेषु वैकुण्ठादिषु गीयमाना रामायणकथा यावत्कालं गिरयः पर्वताः सरितो नद्यश्च स्थास्यन्ति तावत्कालं महीतले प्रचरिष्यति त्वन्नाम्ना प्रचारं प्राप्स्यति अत एव महीतले इत्यस्य न वैयर्थ्यम्॥ ३६ ॥

गो० टी०—यशोऽपि काव्यनिर्माणप्रयोजनमित्याह—यावदिति । गिरयः सरितश्च महीतले भूतले यावत्स्थास्यन्ति तावद्रामायणकथा रामायणरूपा कथा लोकेषु सप्तसु प्रचरिष्यति । यावत्त्वत्प्रबन्धप्रचारस्तावत्तव यशो भविष्यतीति हृदयम्॥३६॥

३७]रा० टी०—यावदिति।त्वत्कृता त्वया सम्पादिता रामायणकथा रामपर्यवसानकप्रबन्धो यावत्कालं प्रचरिष्यति तावत्कालं ऊर्ध्वगतिः सर्वत्राप्रतिहतगमनस्त्वं मल्लोकेषु मम लोको दर्शनं येषु तेषु स्थानेषु निवत्स्यसि स्वसमीपे एव त्वां निवासयिष्यामीत्यर्थः । एतेन वाल्मीकमुखनिस्सृतरामायणकथातिशुश्रूषा ब्रह्मणोऽस्तीति ध्वनितम् । चशब्दात्सर्वत्र लाभः ॥३७॥

गो० टी०—यशसः स्वतः पुरुषार्थत्वात्तत्फलमाह—यावद्रामेति । किञ्च त्वत्कृता रामस्य कथा यावत्प्रचरिष्यति तावन्मल्लोकेषु मध्ये यावच्छरीरपातमधः भूमौ तदुपरि ऊर्ध्वं च निवत्स्यसि ॥ ३७ ॥

३८ ] ति० टी०—तावदिति । यावत्त्वत्कृतकथाप्रचारस्तावदधश्च त्वं दयापूर्वमप्यतिमहति क्रोधकरणादधोगमनयोग्योऽपि त्वमूर्ध्वं सर्वोर्ध्वं वर्तमानेषु मल्लोकेषु निवासं प्राप्स्यसि । ततो मया सह मोक्ष्यस इत्यर्थः । लोकेष्विति तदवयवाभिप्रायं बहुवचनम् । ऊर्ध्वमधश्च विद्यमानेषु मल्लोकेषु मन्निर्मितलोकेषु निवत्स्यसि सर्वत्राप्रतिहतगतिः सञ्चरिष्यसि ततःपरं मुक्तिं प्राप्स्यसीति तीर्थः। तत्र मल्लोकेष्वित्यस्य चारितार्थ्यं चिन्त्यम्। इतीति । तत्रैवान्तर्धानेनास्याप्यन्तर्यामिरूपतोक्ता । तत इति । विस्मयमाश्चर्यम् ॥ ३८ ॥

रा० टी०—इतीति । भगवान्षडैश्वर्यसम्पन्नो ब्रह्मा इति इदमुक्त्वा तत्रैव वाल्मीकिस्थाने एव अन्तरधीयत तिरोदधौ । तत्रैवान्तरधीयत इत्यनेन रघुनाथकथास्थानत्यागासहिष्णुत्वं तस्य ध्वनितम् । तेन रामकथाविषयकप्रेमातिशयस्तस्य सूचितः। ततः ब्रह्मान्तर्धानानन्तरम्। सशिष्यः भरद्वाजादिसहितः मुनिः ब्रह्मोक्तिमननशीलः वाल्मीकिः विस्मयं ब्रह्मलोकं विहाय इहैव तिरोधानतया किमर्थं स्थित इत्याश्चर्यमाययौ प्राप ॥३८॥

गो० टी०—इत्युक्त्वेति । तत्रैव आसन एव ॥ ३८ ॥

३९ ] ति० टी०—तस्येति । प्रीयमाणा आश्चर्यमिदमस्मद्गुरोः पद्यं यद्ब्रह्मणाप्यनुमोदितम् । प्राहुश्च वक्ष्यमाणमित्यर्थः ॥ ३९ ॥

रा० टी०—तस्येति। ततः मुनिविस्मयप्राप्त्यनन्तरम्। तस्य वाल्मीकस्य सर्वे भरद्वाजादयः शिष्याः मुहुर्मुहुः प्रीयमाणाः गुरुप्रीतिविषयतां प्राप्नुवन्तः सन्तः इमं मा निषादेति श्लोकं पुनर्जगुः भृशविस्मिता अत्यन्तविस्मयं प्राप्ताश्च प्राहुः इदमत्यद्भुतमित्युच्चारणं चक्रुरित्यर्थः । एतेन तेषामानन्दातिशयः सूचितः ॥ ३९ ॥

गो० टी०—तस्ये।त। ततः मुनिविस्मयानन्तरम्। सर्वे तस्य वाल्मीकेः शिष्या मुहुर्मुहुः प्रीयमाणाः सन्त इमं मा निषादेति श्लोकं पुनर्जगुः । भृशं विस्मिताः अत्यन्तविस्मिताः सन्तः । अव्ययमात्रस्य समासे तु लोप इति मलोपः । प्राहुश्च अन्योऽन्यमिदमद्भुतमिति प्राहुश्चेत्यर्थः । आश्रम एव स्थिताभ्यां कुशलवाभ्यां भरद्वाजेन चात्र बहुवचनम् ॥ ३९ ॥

४० ] ति० टी०—तदेवाह—समेति । साम्यं गुरुलघ्वक्षरराहित्यम् । यो ऋषिणा गीतः सः । अन्वतिशयितशोकोत्पत्त्यनन्तरं व्याहरणाद्भूयः शोको विपुलः शोक एव श्लोकत्वं प्राप्त इति वयं मन्यामह इति प्राहुरिति सम्बन्धः । उत्प्रेक्षा चेयम् । तेनास्य श्लोकस्य करुणरसमयत्वं ध्वनितम्। अत्र नष्टक्रौञ्चालम्बनकः क्रौञ्चीविरावाद्युद्दीपितो निषादविषयक्रोधव्यभिचारिको ‘ मा निषाद ’ इत्यादिवाक्यानुभावकः करुणो रस इति बोध्यम् । यत्तु पूर्वश्लोके प्राहुरित्यस्य पठन्तीत्यर्थकरणम्, पुनः पुनः पाठेनानन्दवन्तोऽभूवन्निति फलितार्थकथनम्, अत्र च श्लोके भूयोऽनुव्याहरणान्मुहुर्मुहुः शिष्यैः पुनः पाठाच्छ्लोके शोकः श्लोकत्वेन प्रतिबद्धोऽभवच्छ्लोकत्वं प्राप्त इति तीर्थादिव्याख्यानं तदतिनिःसारमिति स्पष्टमेव ॥ ४० ॥

रा० टी०—श्लोकमहत्त्वं द्योतयन्नाह—समेत्यादिना । समानि न्यूनाधिकरहितानि अक्षराणि येषु तैश्चतुर्भिः पादैः यः श्लोको महर्षिणा वाल्मीकिना गीतः सः श्लोकः अनुव्याहरणात् शिष्यकर्तृकनिरन्तरपठनाद्भूयो महच्छ्लोकत्वं यशःसमपादकत्वादिश्लोकधर्ममागतः प्राप्तः । शोक इति पाठे तु शोकः निमित्तत्वेनास्याऽस्तीति । अर्शआद्यजन्तः शोकापनोदहेतुकः श्लोक इत्यर्थः । अन्यत्समानम् ॥ ४० ॥

१ श्लोक इतिपाठः क. ख. ।

तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः । कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥ ४१ ॥
उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारदर्शनः[1] ॥ ४२ ॥

गो० टी०–समेति । यः समाक्षरैरिति विषमवृत्तव्यावृत्तिः । चतुर्भिरित्यर्धसमवृत्तव्यावृत्तिः पादैश्चतुर्थांशैः । महर्षिणा गीरा उक्तः स श्लोकः । अनुव्याहरणात् शिष्यैः पुनःपुनर्व्यवह्रियमाणत्वात् । भूयः श्लोकत्वमागत इति पूर्वं श्लोकलक्षणलक्षितत्वात् श्लोकत्वं गतः । सम्प्रति श्लोक्यमानत्वात् । पुनः श्लोकत्वं गत इत्यर्थः । 'शोकः श्लोकत्वमागतः' इति पाठे शोककृतश्लोक एव शोक इत्युच्यत इति ज्ञेयम् । यः श्लोकः महर्षिणा समाक्षरैश्चतुर्भिः पादैर्बद्धः श्लोकः क्रौञ्चीविषयः तादृशश्लोकत्वमागतः स शोकवेगादुत्पन्न इत्यर्थः । कथमवगम्यते अनुव्याहरणात् । अनु पश्चात् शोकानन्तरमुच्चारणात् । शोके सति जातत्वादित्यर्थः ॥४०॥

४१ ] ति० टी०–तस्येति । ईदृशैः 'मा निषाद' इतिवत्करुणारसप्रधानैरित्यर्थः । अनेनान्ये रसा अत्र गुणीभूता इति ध्वनितम् ॥ ४१ ॥

रा० टी०–तस्येति । भावितात्मनः भावितः परिशीलितः आत्मा सर्वनियन्ता रघुनाथो येन तस्य वाल्मीकेरियं बुद्धिर्निश्चयः जाता तत्स्वरूपमाह–ईदृशैः मा निषादेति वद्गानयोग्यैः पद्यैः काव्यं सद्यःपरनिर्वृत्यादिसम्पादकं रामायणं राममात्रपर्यवसानकं कृत्स्नं सम्पूर्णमहं करवाणि । परनिर्वृत्यादयश्च 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इति काव्यप्रकाशपद्यतोऽवगन्तव्याः ॥ ४१ ॥

गो० टी०–अथ मुनेः कृतिप्रणयनविषयसङ्कल्पमाह–तस्येति । भावितात्मनश्चिन्तितपरमात्मनः । अनेनारम्भकर्तव्यं विघ्नविघातकं मङ्गलं मुनिना आचरितमित्युक्तम् । तस्य वाल्मीकेः इयं बुद्धिर्जाता । इदंशब्दार्थमाह–कृत्स्नमित्यादि । सर्वं रामायणाख्यं काव्यमीदृशैर्मा निषादेति श्लोकप्रकारैः श्लोकैः । करवाणि इति इयं बुद्धिरित्यन्वयः । ईदृशैरिति प्रायिकाभिप्रायमेतद्वृत्तान्तराणामपि तत्रतत्र प्रयोगात् ॥ ४१ ॥

४२ ] ति० टी०–उदारेति । उदारस्य यद्वृत्तं चरितम् उदारं वा यच्चरितं तद्रूपार्थबोधकैः पदैः मनोरमैः श्रुतिकटुत्वादिदोषरहितैः । अस्य यशस्विनो रामस्य दाशरथे रामस्य नारदोपदिष्टस्य । श्लोकशतैरिति शतशब्दोऽनन्तवाची ॥ ४२ ॥

रा० टी०–उदारेति । तदा ब्रह्मान्तर्धानोत्तरकाले । उदारधीः उदारा दुर्ज्ञेयपदार्थप्रतिपादकत्वेन महती धीरस्येति सः । अत एव कीर्तिमान्प्रशस्ता कीर्तिरस्येति सः । मुनिर्वाल्मीकिः । समाक्षरैः समानि तुल्यानि चतुर्ष्वपि पादेषु अक्षराणि येषु तैः । उदारवृत्तार्थपदैः उदाराः अभीष्टार्थदातारो वृत्तार्था रघुनाथाचरितरूपार्थाः येषु तान्येव पदानि तैः । अत एव मनोरमैः मनोहरैः श्लोकशतैः वक्ष्यमाणानुरोधेन चतुर्विंशतिसहस्रसङ्ख्यासङ्ख्यातश्लोकैर्यशस्विनो न्यूनाधिकरहितकीर्तिविशिष्टस्यास्य रामस्य यशस्करं कीर्तिसम्पादकं काव्यं दोषरहितालङ्कारसहितशब्दार्थकप्रबन्धं चकार रचयामास । 'उदारो दातृमहतोः' इतिकोशादुदारशब्दस्य उभयपरत्वम् ॥ ४२ ॥

गो० टी०–अथ यथासङ्कल्पं काव्यरचनामाह–उदारेति । कीर्तिरस्यातीति कीर्तिमान् । अनेन 'काव्यं यशसेर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इत्यालङ्कारिकोक्तकाव्यप्रयोजनेष्वस्य यश एव प्रधानं प्रयोजनमिति दर्शितम् । काव्यनिर्माणानन्तरं भाविनो यशसः पूर्वभावोक्त्यातिशयोक्तिरुक्ता । उदारा महती धीर्यस्यासौ उदारधीः । 'उदारो दातृमहतोः' इत्यमरः । तेन कवित्वबीजभूता निपुणतोक्ता । तदुक्तं काव्यप्रकाशे 'शक्तिर्निपुणता लोके काव्यशास्त्राद्यवेक्षणात् । 'काव्यज्ञशिक्षयाभ्यास' इति 'हेतुस्तदुद्भव' इति । मुनिः मननशीलः । अनेन विविक्तसेवित्वमरोचकित्वं चोक्तम् । तदुक्तं वामनेन 'द्वये हि कवयः अरोचकिनः सतृणाऽभ्यवहारिणश्च' इत्यादि । तदा ब्रह्मवरप्रदानानन्तरकाले । अनेन कवित्वहेतुभूता शक्तिरुक्ता । यशस्विनोऽपि रामस्य यशस्करम् । तदुक्तं दण्डिना 'आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् । तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति' इति इतरकीर्त्यपेक्षया काव्यनायकत्वकृता कीर्तिरनुपमेत्यर्थः । काव्यं कवेर्लोकोत्तरवर्णननिपुणकवेः कर्म काव्यं शब्दार्थयुगलम् । तथोक्तम् । 'सगुणौ सालङ्कारौ शब्दार्थौ दोषवर्जितौ काव्यम्' इति । अत्र काव्यशब्देन काव्यसन्दर्भरूपं महाकाव्यमुच्यते । तल्लक्षणमुक्तं काव्यादर्शे । 'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ॥ इतिहासकथोद्भूतमितरद्वारसंश्रयम् । चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥ नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥ अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः ॥ सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जनम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ॥' इति । एवम्भूतं काव्यं श्लोकशतैरवयवैश्चकार । श्लोकशब्देन गद्यपद्यमिश्रप्रबन्धेषु स्वग्रन्थस्य पद्यरूपता दर्शिता । शतैरित्यनेन शतकादिक्षुद्रप्रबन्धव्यावृत्तिरुक्ता । बहुवचनार्थं च स्वयमेव विवरिष्यति चतुर्विंशतिसहस्राणीति । कीदृशैः श्लोकशतैः उदारवृत्तार्थपदानि येषां तैः वृत्तानि पथ्यावक्त्रोपजातिवंशस्थवसन्ततिलकादीनि तेषामु-

१ काव्यमुदारधीर्मुनिरितिपाठः क. ख. ।

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वितीयः सर्गः ॥ २ ॥

दारत्वं नाम तत्तद्रसाभिव्यञ्जकत्वम्। अर्था वाच्यलक्ष्यव्यङ्ग्याः तेषामुदारत्वं द्राक्षापाकनारिकेलपाकरसालपाकेषु द्राक्षापाकत्वम्। एतल्लक्षणमुक्तं रुद्रटेन ' द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः ' इति। पदानि वाचकलक्षकव्यञ्जकानि तेषामुदारत्वम् 'या पदानां परान्योन्यं मैत्री शय्येति कथ्यते ' इत्युक्तलक्षणशय्यावत्त्वम्। पुनः कीदृशैः मनोरमैरमणीयैः। अनेन वैदर्भीगौडीपाञ्चाली चेत्युक्तासु रीतिषु वैदर्भीरीतिमत्त्वमुक्तम्। तल्लक्षणं चोक्तम् 'बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता । नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ' इति। समाक्षरैः प्रतिपादं समानाक्षरैः । अनेन विषमवृत्तादिरूपता व्यावृत्ता ॥ ४२ ॥

४३ ] ति० टी०–एवं काव्यनिर्माणमुक्त्वा तत्र श्रोतॄनभिमुखीकरोति–तदिति । समासस्तत्पुरुषादिः, सन्धिरेकादेशादिजः, योगः प्रकृतिप्रत्यययोः, एते उपगता यथाव्याकरणालङ्कारशास्त्रमर्यादं यस्मिन्काव्ये तादृशं काव्यं रघुवरचरितं तद्वर्णनरूपम्। सगः पतत्प्रकर्षादिदोषरहितः, मधुरः करुणारसयुक्तत्वेन माधुर्यगुणप्रधानः, उपनतः प्रसन्नतयोपलभ्यमानो योऽर्थस्तद्बोधकवाक्यैर्निबद्धम् उपनतत्वेन प्रसादगुणवत्ता दर्शिता। समुदायेन वैदर्भीरीतिमत्त्वं ध्वनितम् । रघोर्गत्यर्थान्निष्पन्नरघुवरशब्देन तस्य सर्वान्तर्यामित्वं ध्वनितम् । ईदृशस्यापि मिथ्यार्थकत्वेऽनुपादेयत्वं स्यादत आह–मुनिप्रणीतं ब्रह्मानुग्रहप्राप्तसत्यवागृषिप्रणीतम् । पुरुषार्थस्वर्गमोक्षादिसाधनत्वं तु रघुवरचरितमित्यनेनोक्तप्रायमेव । दशशिरसश्च वधमित्यनेन वनान्तमिदं श्रोतव्यमिति सूचितम् तेनैव सूचितफलाभावात्। उत्तरकाण्डं त्वस्य खिलम् भारतस्य हरिवंशवत्। अत एवाग्रिमसर्गे वनसञ्चरणपर्यन्तवृत्तान्वेषणमेव समाधिना ऋषिर्वक्ष्यतीति प्राञ्चः। परे तु दशशिरसो वधं चेत्यन्वयः। तेन सीतात्यागादिरूपोत्तरकाण्डीयवृत्तान्तसङ्ग्रह इत्याहुः॥४३॥

इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–सावधानसम्पत्त्यर्थं शिष्यानाह–तदित्यादिना । उपगतसमाससन्धियोगम् उपगता यथाशास्त्रं स्थापिताः समासास्तत्पुरुषादयः सन्धयो यणादयः योगाः प्रकृतिप्रत्ययसंबन्धाः यस्मिन् तत् । सममधुरोपनतार्थवाक्यबद्धं सममेतत्प्रकर्षादिदोषरहितं मधुरं प्रधानीभूतशृङ्गारादिरससहितं तयोः समाहारः सममधुरम्, उपनतः सहृदयैः प्रसन्नतयोपलभ्यमानोऽर्थो यस्य तदेव तदिति कर्मधारयः तेन बद्धं संयुक्तम्। मुनिना वाल्मीकिना प्रणीतं तत्प्रसिद्धं रघुवरचरितं काण्डसप्तात्मकं दशशिरसो रावणस्य वधं च निशामयध्वं शृणुत। गोबलीवर्दन्यायेन पुना रावणवधोपादानम्। किञ्च दशशिरसो वधं वधविशिष्टं रघुवरचरितं शृणुतेत्यर्थः। नित्यसापेक्षत्वादेकदेशेऽन्वयः। एतेन दशशिरसो वधं वधपर्यन्तमित्यर्थः प्रयुक्तः गमकमन्तरेण लक्षणाया अयुक्तत्वात् ॥ ४३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०–एवं प्रबन्धनिर्माणमभिधाय कुशलवादिभ्यस्तत्प्रतिपादनं सङ्ग्रहेण दर्शयति–तदिति। स्वग्रन्थस्योत्तमकाव्यत्वप्रदर्शनाय निर्दोषत्वमाह–उपगतसमाससन्धियोगमिति समासास्तत्पुरुषादयः, सन्धयः संहिताः, योगः पदव्युत्पत्तिः, उपगताः शास्त्रानुरूपेण प्राप्ताः समाससन्धियोगा यस्मिन् तत्तथोक्तम्। अनेन समासदोषसन्धिदोषपददोषशून्यत्वमुक्तम्। प्रधानमल्लनिबर्हणन्यायेनैतत्सर्वदोषराहित्यस्योपलक्षणम् । अथ काव्यगुणान् प्राधान्येन दर्शयति–समेति। समैर्मधुरैरुपनतार्थैर्वाक्यैर्बद्धं रचितम्। तत्र समतालक्षणमुक्तं दण्डिना 'समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ' इति । माधुर्यलक्षणं च तेनैवोक्तम् 'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ' इति । उपनतार्थत्वमर्थव्यक्तिः। तत्स्वरूपं च तेनैवोक्तम् ' अर्थव्यक्तिरमेयत्वमर्थस्य ' इति। रघुवंश्या राघवस्तेषु वरो रामस्तच्चरितं तच्चरितविषयकं मुनिना वाल्मीकिना मया प्रणीतं मुनिना नारदेन वा प्रणीतं दशशिरसो रावणस्य वधमधिकृत्य कृतं ग्रन्थम् "अधिकृत्य कृते ग्रन्थे" इति विहितस्याणो लुक् । निशामयध्वमिति निशामयेत्यर्थः " क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः " इति तध्वमोर्हिस्वादेशस्य वैकल्पिकत्वात्तध्वमः पाक्षिकः स्वादेशाभावः " मितां ह्रस्व" इति विहितस्य ह्रस्वस्य "घटादयो मितः इति" 'संज्ञापूर्वको विधिरनित्य' इति अनित्यत्वाद्ध्रस्वाभावः। किंतु णिचि दीर्घ एव आश्रावयदित्यर्थः। शिष्यानिति शेषः। "णिचश्च" इत्यात्मनेपदम्। यद्वा मुनिः रघुवरचरितं चकार तन्निशामयध्वमिति शिष्यान्प्रति परोक्षतयोच्यते। श्रवणेऽपि चरितस्य दर्शनसमतया भानान्निशामयध्वमित्युच्यते। निर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितमिति हि वक्ष्यते पूर्वश्लोके। वंशस्थवृत्तं ' जतौ तु वंशस्थमुदीरितं जरौ ' इति लक्षणात्। अत्र पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ४३ ॥

इति श्रीगोविन्दराजकृतौ श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

१ समकेति युक्तम् २ निशामयतेति युक्तम् ।

## तृतीयः सर्गः ॥ ३ ॥

वाल्मीकिना रामायणनिबद्धविषयाणां संक्षेपत उपाख्यानम् ।

श्रुत्वा वस्तु समग्रं तद्धर्मार्थसहितं हितम् । व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥
उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः । प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २ ॥
रामलक्ष्मणसीताभी राज्ञा दशरथेन च । सभार्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३ ॥
हसितं भाषितं चैव गतिर्यावच्च चेष्टितम् । तत्सर्वं धर्मवीर्येण यथावत्सम्प्रपश्यति ॥ ४ ॥

---

१ ] ति० टी०—श्रुत्वेति । नारदात्काव्यविषयं रामचरितरूपं वस्तु श्रुत्वा समग्रं प्रकाशरहस्यसहितं कुर्विति च ब्रह्ममुखाच्छ्रुत्वा तस्य धीमतो रामस्य यद्वृत्तं चरितं सरहःप्रकाशं तद्भूयः पुनर्व्यक्तं साक्षात्कारविषयो यथा भवति तथा कर्तुमन्वेषते उद्युङ्क्ते स्मेति शेषः । धर्मार्थेति त्रिवर्गोपलक्षणं फलत्वेन तत्सहितम् । हितं मोक्षफलकम् ॥ १ ॥

रा० टी०—मुनिवृत्तमाह—श्रुत्वेत्यादि । धर्मार्थसहितं धर्मो रघुनाथाश्रयणमेवार्थः परमपुरुषार्थस्तेन सहितम् अत एव हितं सर्वोपकारकं समग्रं सम्पूर्णं वस्तु श्रुत्वा नारदब्रह्मणोरुपदेशादवगत्य धीमतः समाधिकरहितबुद्धिविशिष्टस्य तस्य श्रुतितात्पर्यं विषयीभूतस्य रघुनाथस्य व्यक्तमिह लोकेऽपि प्रकटीभूतं यद्भूयो विस्तृतमाचरितं तदन्वेषते व्यचारयत् । ‘वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवद्वा’ इति लट्प्रयोगः । एतेन तद्वस्तुनो दुर्बोधत्वं सूचितम् । ‘धर्मात्मा धर्मसंहितम्’ इति पाठे तु धर्मात्मेति मुनिविशेषणम् । धर्मसंहितमिति वस्तुविशेषणम् । रघुनाथाऽऽचरितरूपधर्मविशिष्टमित्यर्थः । “समो वा हितततयोः” इत्यत्र वाशब्दसत्वान्मकारस्थानिकानुस्वारैः श्रुतिः ॥ १ ॥

गो० टी०—पूर्वस्मिन्सर्गे स्वग्रन्थस्यात्यन्तादरणीयत्वद्योतनाय परमात्मतत्त्वरूपं वस्तुवैलक्षण्यं प्राधान्येनोक्तं संप्रति तदर्थमेव विषयवैलक्षण्यं दर्शयति विषयस्य वैलक्षण्यं नाम सम्यक्ज्ञानावधृतत्वं लोकोत्तरनायकगुणपरिष्कृतत्वं च । तत्र प्रथमं सम्यक्ज्ञानावधृतत्वं विवक्षुस्तद्वस्त्वन्वेषणमाह—श्रुत्वेति । धर्मे आत्मा स्वभावो यस्यासौ धर्मात्मा इत्यन्वेषणहेतूक्तिः । धर्मसंहितं धर्मसहितम् “समो वा हितततयोः” इति विकल्पितत्वान्मकारलोपाभावः । समग्रं कृत्स्नं तत्तु नारदोक्तं वस्तु कथाशरीरं श्रुत्वा भूयस्ततोधिकं धीमतो रामस्य यद्वृत्तं चरित्रमस्ति तद्व्यक्तं यथा भवति तथान्वेषते पर्यालोचयति स्म “वर्तमानसामीप्ये वर्तमानवद्वा” इति लट् ॥ १ ॥

२ ] ति० टी०—उद्योगमेवाह—उपेति । आचम्येत्यर्थः । सम्यक्स्मृत्युक्ताचमनरीत्या इदमन्येषामपि प्रायत्यसम्पादकानामुपलक्षणम् । प्रागग्रेषु दर्भेषु स्थित्वा धर्मेण योगजेन ब्रह्मप्रसादरूपेण च गतिं रामादीनां चरितरूपामन्वेषतेऽतियत्नेन पश्यति स्म ॥ २ ॥

रा० टी०—उपेति । मुनिः नारदोपदिष्टतत्त्वमननशीलो वाल्मीकिः सम्यग्यथाविधि । उदकमुपस्पृश्य आचम्य प्राचीनाग्रेषु दर्भेषु स्थित्वा कृताञ्जलिः प्रार्थनासूचकबद्धयुगलकरः सन् धर्मेण वेदबोधितकर्मणोपलक्षितामित्यध्याहारः । गतिं सीतारामाचरितमन्वेषते व्यचारयत् ॥ २ ॥

गो० टी०—धर्मात्मेत्यनेन सूचितमन्वेषणप्रकारमाह—उपस्पृश्येति । मुनिः सम्यग्यथाशास्त्रमुदकमुपस्पृश्य आचम्येत्यर्थः । ‘उपस्पर्शस्त्वाचमनम्’ इत्यमरः । प्राचीनाग्रेषु दर्भेषु स्थित्वा निजगुरुमुद्दिश्य कृताञ्जलिः सन् धर्मेण ब्रह्मप्रसादरूपश्रेयःसाधनेन गतिं रामादिवृत्तमन्वेषते ॥ २ ॥

३–४] ति० टी०—रामेत्यादि । श्लोकद्वयमेकं वाक्यम् । भार्याकौसल्याद्यास्तत्सहितेन दशरथेन रामादिभिश्च यत्प्राप्तं सम्बद्धं चरितं राज्यपालनादिरूपं हसितादिरूपं च तत्सर्वं तत्र समाधौ तत्त्वतो धर्मवीर्येण योगजबलेन पश्यति स्म ॥ ३ ॥ ४ ॥

रा० टी०—विचारोत्तरकाले विचारविषयीभूतवस्तुसाक्षात्कारो जात इत्याह—रामेत्यादि श्लोकद्वयेन । रामलक्ष्मणसीताभिस्तत्रायोध्यायां प्राप्तं प्रकटितं यद्धसितं हसनं भाषितं वचनरचना गतिः गमनम् अन्यच्च यावच्चेष्टितं दातृत्वादि तत्सर्वं धर्मवीर्येण रघुनाथस्मरणरूपबलेन यथावद्यथाकामं तत्त्वतः मायाराहित्येन सम्पश्यति सम्यगजानात् । सराष्ट्रेण राज्यसहितेन सभार्येण कौशल्यादिसहितेन दशरथेन राज्ञा च यत्प्रकटतः प्राप्तं हसितत्वादि भाषितं यथावत्सम्प्रपश्यति पश्यतीत्युक्त्या पुनर्न तद्विस्मृतिरिति ध्वनितम् ॥ ३ ॥ ४ ॥

गो० टी०—गतिशब्दार्थं विवृण्वन्धर्मेण अन्वेषणफलमाह—रामेति । रामादिभिर्यत्प्राप्तं तत्र विषये तत्त्वतः तत्त्वेन सम्प्रपश्यति समन्तात्प्रकर्षेण पश्यति तत्सर्वं विशदतरं पश्यतीत्यनुषज्यते ॥ ३ ॥ किं प्राप्तं तत्राह—हसितमिति । पूर्वोक्तरामादीनां यद्धसितं हासः यच्च भाषितं भाषणम् भावे क्तः । या च गतिर्गमनं यच्च चेष्टितं चेष्टा युद्धादिकमिति यावत् तत्सर्वं धर्मवीर्येण ब्रह्मवरप्रसादशक्त्या यथा वृत्तं तत्त्वेन सम्प्रपश्यति ।

---

१ धर्मात्मा धर्मसंहितामितिपाठः क. ख. । २ यद्वृत्तमितिपाठः क. ख. । ३ इदं तु न सूत्रं तद्वृत्तिरेव । ४ विसर्गोऽप्युक्तः ।

स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने । सत्यसन्धेन रामेण तत्सर्वं चान्ववैक्षत ॥ ५ ॥
ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः । पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥
तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महामतिः । अभिरामस्य रामस्य तत्सर्वं कर्तुमुद्यतः ॥ ७ ॥
कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् । समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥
स यथाकथितं पूर्वं नारदेन महात्मना । रघुवंशस्य चरितं चकार भगवान्मुनिः ॥ ९ ॥

अत्र योगजधर्मस्थानीयत्वात् ब्रह्मप्रसादो धर्मशब्देनोच्यते स च साक्षात्कारहेतुश्चक्षुरादिवदिति प्रमाणतोऽध्यवसीयते ॥ ४ ॥

५ ] ति० टी०—अयोध्यावासकालिकं वृत्तं निरीक्ष्य तदनन्तरं वनकालिकं च निरीक्षितमित्याह—**स्त्रीतृतीयेनेति** । द्वितीयो लक्ष्मणः । तत्सर्वं चेति चस्य तदुत्तरकालिकमुत्तरकाण्डस्थं चेत्यर्थ इत्यपरे ॥ ५ ॥

रा० टी०—अयोध्यावृत्तसाक्षात्कारानन्तरं वनवृत्तविचारमाह—**स्त्रीतृतीयेनेति** । स्त्री सीता तृतीया यस्य सीतालक्ष्मणसहितेनेत्यर्थः । सत्या सन्धा प्रतिज्ञा यस्य तेन । वने चरता वनगमनशीलेन रामेण यत्प्राप्तं प्रकटीकृतं चरितं तत्सर्वं तथैव अन्ववेक्षितं वाल्मीकिना विचारितमित्यर्थः चशब्द एवार्थे ॥ ५ ॥

गो० टी०—नगरनिवासकालीनचरितावलोकनमभिधाय वनवासकालीनवृत्तान्तनिरीक्षणमाचष्टे—**स्त्रीति** । स्त्री तृतीया यस्य तेन सीतालक्ष्मणसहितेनेत्यर्थः । वने दण्डकारण्ये चरता सत्यसन्धेन सत्यप्रतिज्ञेन रामेण यत्प्राप्तं तत्सर्वं चान्ववेक्षितं साक्षात्कृतम् वाल्मीकिनेति शेषः । धर्मवीर्येणेति सिद्धम् ॥ ५ ॥

६ ] ति० टी०—नेदं दर्शनं स्वप्नवदित्याह—**तत इति** । पूर्वाचरितयोगाभ्यासादित्यर्थः । योगं समाधिम् । तत्र समाधौ पुरा पश्यति अपश्यदित्यर्थः । यन्निर्वृत्तं जातम् इदमुपलक्षणम् । यच्च भावि तच्चरित्रं पश्यति स्मेति यावत् ॥ ६ ॥

रा० टी०—विचारोत्तरकाले तत्साक्षात्कारो जात इत्याह—**तत इत्यादिना** । ततः विचारानन्तरं धर्मात्मा धर्मे रघुनाथोपासने आत्मा मनो यस्य । अत एव योगमुपासनोपायमास्थितः प्राप्तः मुनिः तत्र अयोध्यादौ यन्निर्वृत्तं लक्ष्मणसीतारामाचरितं तत्सर्वं पाणावामलकं यथा पाणिगतधात्रीफलमिव पुरा पूर्वं पश्यति तत्त्वतोऽज्ञानादित्यर्थः ॥ ६ ॥

गो० टी०—एवं रामादिवृत्तान्तदर्शनस्य विशदतमत्वमाह—**तत इति** । ततः अवेक्षणानन्तरं धर्मात्मा वाल्मीकिः योगं ब्रह्मप्रसादरूपोपायमास्थितः सन् ' योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु ' इत्यमरः । तत्र रामादौ पुरा यन्निर्वृत्तं निष्पन्नं तत्सर्वं वृत्तं पाणौ आमलकमिव पश्यति स्म ॥ ६ ॥

७ ] ति० टी०—**तदिति** । धर्मेण योगजेन अत एव महामतिः । तत्सर्वमतीतमनागतं च तद्विषयं काव्यम् । अभिरामस्येत्यनेन तादृशकाव्यकरणस्य रागप्राप्ततोक्ता ॥ ७ ॥

रा० टी०—रघुनाथवर्णनीयसर्ववृत्तसाक्षात्कारोत्तरकालिकं वृत्तमाह—**तदित्यादिना** । महाद्युतिः अतिप्रकाशयुक्तः स वाल्मीकिः अभिरामस्य सर्वाभिरामहेतोः रामस्य धर्मेण वेदबोधितकर्मत्वेन उपलक्षितमिति शेषः । तत्प्रसिद्धं सर्वं निवर्णयिष्यमाणनिखिलरघुनाथचरितं तत्त्वतो मायाराहित्येन दृष्ट्वा ज्ञात्वा कर्तुं चरितं वर्णयितुमुद्युक्तः उद्योगवानासीदित्यर्थः । महाद्युतिरित्युक्त्या रघुनाथसाक्षात्कारस्य प्रभावातिशयः सूचितः।महामतिरिति पाठे तु महती समाधिकशक्त्या मतिर्यस्येत्यर्थः ॥ ७ ॥

गो० टी०—अथ दर्शनफलग्रन्थनिर्माणोद्योगमाह—**तदित्यादि** । श्लोकद्वयमेकान्वयम् । महाद्युतिः रामगुणानुभवजनितहर्षप्रकर्षकृतद्युतियुक्तः स वाल्मीकिस्तत्सर्वं रामवृत्तान्तं तत्त्वतो धर्मेण पूर्वोक्तेन दृष्ट्वा अभिरामस्य निरवधिकभोग्यस्य चरित्रं चरितविषयप्रबन्धं कर्तुमुद्यतः उद्युक्तोऽभूत् ॥ ७ ॥

८-९ ] ति० टी०—**कामेति** । कामरूपो योऽर्थः पुरुषार्थस्तद्रूपेण गुणेन फलेन युक्तम् धर्मार्थरूपपुरुषार्थफलेन विस्तरवत् विस्तरेण तदुभयप्रतिपादकं तदात् चेत्यर्थः । रत्नैः काव्यगुणालङ्कारव्यङ्ग्यैराढ्यं पूर्णम् । सर्वश्रुतीनां मनोभूताः सारभूता उपनिषदस्तासां हरं तदर्थप्रतिपादकम् तेन मोक्षफलकत्वम् । व्याख्यानान्तरं त्वचमत्कारीत्युपेक्षितम् ॥ ८ ॥ **स इति** । रघुवंशस्य तद्वंशावतीर्णरामस्य नारदकथनक्रमेणैव तच्चरितं तत्प्रतिपादकं काव्यं चकारेत्यर्थः ॥ ९ ॥

रा० टी०—**कामेति** । रत्नाढ्यं रत्नपरिपूर्णं समुद्रमिव । रत्नपरिपूर्णसमुद्रसदृशमित्यर्थः । कामार्थगुणसंयुक्तं कामार्थगुणैः कामश्च अर्थश्च गुणशब्देन कामार्थगुणवत्तासम्पादको धर्म उच्यते स च ते कामार्थगुणाः तैः संयुक्तं यथाकामम् । कामार्थधर्मदायकमित्यर्थः । धर्मार्थगुणविस्तरं धर्मार्थयोर्गुणत्वसम्पादको मोक्ष इत्यर्थः । तं विस्तृणाति परिपूरयति तत् । सर्वश्रुति सर्वाः श्रुतयस्तात्पर्यवृत्त्या प्रतिपादकत्वेन यस्मिन् तत् अत एव मनोहरं सदयहृदयापकर्षकं रघुवंशस्य चरितं महर्षिणा नारदेन यथा येन प्रकारेण पूर्वं कथितं तेन प्रकारेण ऋषिर्वेदतत्त्वज्ञः अत एव भगवान् रघुनाथज्ञानरूपैश्वर्यविशिष्टः स वाल्मीकिश्चकार वर्णयामासेत्यर्थः द्वयोरेकत्रान्वयः । समुद्रमिव रत्नाढ्यमित्युपमालङ्कारेण यथा समुद्रे रत्नानि सुकृतमहायत्नलभ्यानि तथा वेदे रघुनाथचरितान्यपि सुकृतमहायत्नल-

१ न्चरितमितिपाठः क. ख. । २ वाल्मीकिनेतियुक्तम् ।

जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् । लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥ १० ॥
नाना चित्राः कथाश्चान्या विश्वामित्रसहायने । जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११ ॥
रामरामविवादं च गुणान्दाशरथेस्तथा । तथाभिषेकं रामस्य कैकेय्या[1] दुष्टभावताम् ॥ १२ ॥

भ्यानीत्युपमालङ्कारो ध्वनितः तेन रघुनाथाचरितं सद्गुरुकृपयैव लभ्यमिति सद्गुरुराश्रयणीय इति वस्तु व्यक्तम् ॥८॥ ९ ॥

गो० टी०—कीदृशं चरित्रमित्यत्राह—कामार्थेति । कामश्चार्थश्च कामार्थौ गुणशब्देनाप्राधान्यमुच्यते अप्रधानाभ्यामर्थकामाभ्यां संयुक्तं त्याज्यताप्रदर्शनार्थं तत्रतत्रार्थकामप्रतिपादकमित्यर्थः । धर्मार्थयोर्धर्ममोक्षयोर्गुणोतिशयस्तं विस्तृणातीति धर्मार्थगुणविस्तरम् पचाद्यच् प्राधान्येन धर्मापवर्गप्रतिप्रादकमित्यर्थः । 'अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने' इति वैजयन्ती । अत एव रत्नाढ्यं समुद्रमिव स्थितम् समुद्रो यथा शङ्खशुक्त्यादियुक्तोऽपि प्राधान्येन रत्नानि वहति तथा स्थितमित्यर्थः । सर्वेषां जनानां श्रुतिमनसी श्रोत्रहृदये हरतीति सर्वश्रुतिमनोहरम् शब्दमाधुर्याच्छ्रोत्राकर्षकं अर्थसौष्ठवाच्चित्ताकर्षकमित्यर्थः ॥ ८ ॥ यथोद्योगं प्रबन्धनिर्माणमाह—स इति । भगवान्स ऋषिः रघुवंशस्य रघुवंशोद्भवस्य रामस्य चरित्रं पूर्वं नारदेन महर्षिणा यथा कथितं येन प्रकारेणोक्तं तथा चकार ॥९॥

१० ] ति० टी०—विस्तरेण वर्णनीयानर्थान् 'इष्टं हि विदुषां लोके समासव्यासधारणम्' इत्युक्तेः समासेन सङ्क्षेपेणाह—जन्मेत्यादिना । वीर्यं स्वयमक्षतस्य पराभिभवसामर्थ्यम् । सर्वानुकूलतां सर्वेषामनुवर्तनरूपां प्रियतां विश्लेषासहत्वपर्यवसायिनी वस्तुसौन्दर्यबलाद्विषयलाभेऽप्यनिवर्त्याविद्यमानानामपि दोषाणामदर्शनकरी, व्यसनसहस्रसम्पातेऽप्यनिवर्त्या या अनुपस्कृतवस्तुमात्रालम्बिनीच्छा प्रेमपदवाच्या तद्विषयताम् । एवं भगवति रामे मायाशबले जातं प्रेम चित्तशुद्धिद्वारा शुद्धविषयं प्रेमोत्पाद्य निदिध्यासनद्वारा मुक्तिजनकज्ञानपर्यवसायीति बोध्यम् । क्षान्तिम् 'उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते' इत्युक्तरूपाम् । सौम्यतामक्रूरदर्शनताम् ॥ १० ॥

रा० टी०—रघुनाथचरितमेव सङ्क्षेपेणाह—जन्मेत्यादिभिरासर्गम् । रामस्य साकेताधीशरघुनाथस्य जन्म ब्रह्मप्रार्थनाहेतुकं प्रादुर्भावं सुमहत्सुमहत्त्वम् ईश्वरेश्वरत्वमित्यर्थः । वीर्यं समातिशयशून्यपराक्रमं सर्वानुकूलतां सर्वहितकारकत्वं लोकस्य प्रियतां लोकनिष्ठप्रीतिविषयत्वं क्षान्तिं जनकृतापराधादर्शकत्वं सौम्यतां सर्वप्रियदर्शकत्वं सत्यशीलतां सत्यस्वभावत्वं वाल्मीकिश्चकार वर्णयामासेत्यर्थः एकोनत्रिंशत्तमेनान्वयः । सुमहदिति भावप्रधानो निर्देशः ॥ १० ॥

गो० टी०—अथ विस्तरेण ब्रह्मोपदिष्टरीत्या रामचरितनिर्माणं दर्शयति—जन्मेत्यादिना । सर्गशेषेण द्वितीयान्तानां तत्प्रतिपादकपरत्वं बोध्यम् । वाल्मीकिर्भगवान् ऋषिश्चकारेति वक्ष्यमाणे कर्तृक्रिये अनुषञ्जनीये । जन्मेति जन्मनः सुमहत्त्वं दशरथमहातपोबललभ्यत्वं विष्णोरवतारत्वं च । वीर्यं ताटकाताटकेयादिहननक्षमं बलं सर्वानुकूलतां सर्वानुवर्तित्वमार्जवमिति यावत् । लोकस्य प्रियतां प्रेमास्पदत्वम् । क्षान्तिं अपराधसहिष्णुतां सौम्यतां रम्यतामनुग्रतां वा । 'सौम्यः पुमान् बुधे विप्रे त्रिषु स्यात्सोमदैवते । रम्ये अनुग्रे च' इति रत्नमाला । सत्यशीलतां सत्यस्वभावताम् 'शीलं स्वभावे सद्वृत्ते' इत्यमरः ॥१०॥

११ ] ति० टी०—नानेति । विश्वामित्रसहायने विश्वामित्रेण सह गमने तदुपस्थितिकाले सभायां मार्गे गमनकाले च चित्राः नाना कथाः अन्याश्च कथा योगवासिष्ठोक्ता ब्रह्मप्रतिपादिकाः कथा अत्र ग्रन्थे उक्ता गङ्गादिकथाश्चेत्यर्थः । एतेना श्लोके मानेत्यन्या इति च व्यर्थमित्यपास्तम् । जानक्याश्चेति चेनोर्मिलादिसङ्ग्रहः ॥ ११ ॥

रा० टी०—नानेति । विश्वामित्रसमागमे विश्वामित्रेण साकं महाराजाधिराजदशरथादिसमागमे सति अन्याः रामजन्मादिभिन्नाः नानाचित्रकथाः नाना बहुविधानि चित्राणि आश्चर्याणि यासु ता एव कथा इति कर्मधारयः । महाराजदशरथचेष्टावशिष्ठाद्युपदेशाहल्यादिस्वरूपप्रापणादिका इत्यर्थः । जानक्या जनकप्रादुर्भूतसीतायाः चकारेणोर्मिलादीनां विवाहं च धनुषः तत्र स्थापितशिवचापस्य विभेदनं विवाहहेतुकधनुर्भङ्गं च । नाना चित्राः कथा इति 'व्यस्तः सहायने' इति च भद्रसम्मतः पाठः । अर्थे तु न वैलक्षण्यम् ॥ ११ ॥

गो० टी०—नानेति । विश्वामित्रसमागमे विश्वामित्रेण रामलक्ष्मणयोः संयोगे सति अन्या रामचरितादन्या नानाप्रकारचित्रकथा आश्चर्यावहाः कथाश्च जानक्याश्चेति चकारेणोर्मिलादयः समुच्चीयन्ते धनुषो हरचापस्य विभेदनं भङ्गं च ॥ ११ ॥

१२ ] ति० टी०—रामेति । द्वितीयः परशुरामः । गुणान्विनयजयरूपान् ॥ १२ ॥

रा० टी०—रामेति । रामेण दाशरथिरघुनाथेन सह रामविवादं परशुरामविवादं च तृतीयेति योगविभागात्सम्बन्धसामान्ये षष्ठीं प्रकल्प्य षष्ठीति सूत्रेण वा समासः । दाशरथेः रामस्य गुणान् विनयविजयादिरूपांश्चेत्यर्थः । तथेति चार्थे । एवमुत्तरत्रापि । रामस्याभिषेकम् । अभिषेकोद्योगमित्यर्थः । कैकेय्या दुष्टभावतां प्रातिभासिकदुष्टस्वभावत्वम् ॥ १२ ॥

गो० टी०—रामेति । रामेण परशुरामेण रामस्य राघवस्य विवादम् रामेण रामविवादमित्यत्र तृतीयेतियोगविभा-

१ कैकेय्याइति युक्तम् ।

विघातं चाभिषेकस्य रामस्य च विवासनम् । राज्ञः शोकं विलापं च परलोकस्य चाश्रयम् ॥ १३ ॥
प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् । निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४ ॥
गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम् । भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥
वास्तुकर्मनिवेशं च भरतागमनं तथा । प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६ ॥
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् । दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७ ॥
दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम् । अनसूयासमास्यां च अङ्गरागस्य चार्पणम् ॥ १८ ॥

---

गात्समासः अतो नैकशेषप्रसक्तिः । दाशरथेर्गुणान् अयोध्याकाण्डादौ वक्ष्यमाणान् । तथेति समुच्चयार्थः सर्वत्र द्रष्टव्यः। रामस्याभिषेकोद्योगं कैकेय्या दुष्टभावतां दुष्टहृदयत्वं च ॥ १२ ॥

१३ ] ति॰ टी॰–विघातं चेति । विवासनं वनं प्रति प्रस्थापनम् । परलोकस्य चाश्रयं परलोकगमनम् मरणमिति यावत् ॥ १३ ॥

रा॰ टी॰–विघातं चेति । अभिषेकस्य रामाभिषेकोद्योगस्य विघातं केकयीकृतविघ्नम् । रामविवासनं वनप्रेषणं च राज्ञो महाराजदशरथस्य शोकं प्रकटीभूतरामवियोगजनितशोचनं च विलापं तच्छोकजनितहारामेत्याद्युच्चारणं च परलोकस्य अप्रकटायोध्यापुरस्य आश्रयं स्थितिं च ॥ १३ ॥

गो॰ टी॰–विघातमिति । अभिषेकस्य रामाभिषेकस्य विघातं कैकेयीदुष्टहृदयत्वकृतं विघ्नं च रामस्य विवासनं च राज्ञो दशरथस्य शोकेन विलापं प्रविलापं च राज्ञः परलोकस्य स्वर्गस्याश्रयमाश्रयणं च ॥ १३ ॥

१४ ] ति॰ टी॰–प्रकृतीनामिति । प्रकृतीनां वञ्चनापूर्वकविसर्जनमयोध्यां प्रति परावर्तनम् । निषादाधिपो गुहः । सूतः सुमन्त्रः ॥ १४ ॥

रा॰ टी॰–प्रकृतीनामिति । प्रकृतीनां प्रजानां विषादं रामवियोगजनितदुःखं प्रकृतीनां विसर्जनमयोध्यां प्रति परावर्तनं च निषादाधिपसंवादं गुहेन सम्भाषणं च सूतोपावर्तनमयोध्यां प्रति सूतपरावर्तनं च । तथेति समुच्चये ॥ १४ ॥

गो॰ टी॰–प्रकृतीनामिति । प्रकृतीनां प्रजानां विषादं दुःखं प्रकृतीनां विसर्जनं वञ्चनेन निर्यापणं च । निषादाधिपसंवादं गुहेन सह सम्भाषणम् । सूतस्योपावर्तनं पुनरागमनं च १४

१५ ] ति॰ टी॰–गङ्गाया इति । अभ्यनुज्ञानं सम्मतिः१५

रा॰ टी॰–गङ्गायाश्चेति । गङ्गायाः सन्तारं सन्तरणं च भरद्वाजस्य दर्शनं भरद्वाजकर्मकावलोकनं च । एवश्चार्थे । अपीति पाठे सोपि तत्रैव भरद्वाजाभ्यनुज्ञानाद्भरद्वाजाज्ञातः चित्रकूटस्य दर्शनमवलोकनं च ॥ १५ ॥

गो॰ टी॰–गङ्गायाश्चेति । स्पष्टम् ॥ १५ ॥

१६ ] ति॰ टी॰–वास्त्विति । वास्तुकर्म चित्रकूटे गृहनिर्माणम् । निवेशं तत्र गृहेऽवस्थानम् । प्रसादनं भरतकर्तृकम्१६

रा॰ टी॰–वास्त्विति । वास्तुकर्म चित्रकूटे पर्णमयगृहरचनां निवेशं तत्र प्रवेशं च भरतागमनं भरतकर्तृकचित्रकूटप्राप्तिं च । तथेति चार्थे । रामस्य प्रसादनं रामकर्मकभरतकर्तृकप्रसादनं च पितुः महाराजाधिराजदशरथस्य सलिलक्रियां सलिलदानं च ॥ १६ ॥

गो॰ टी॰–वास्त्विति । वास्तुकर्म शास्त्रोक्तप्रकारेण यथोचितमन्दिरनिर्माणम् । निवेशं शास्त्रोक्तवास्तुपूजादिपूर्वकं गृहे प्रविश्यावस्थानं रामस्य प्रसादनं भरतेनेति शेषः । सलिलक्रियां सलिलदानम् ॥ १६ ॥

१७ ] ति॰ टी॰–पादुकेति । श्रेष्ठपादुकयोर्भरतकृतमभिषेकम् । नन्दिग्रामस्य नितरामतिशयेन ऽऽसनम् भरते तत्र गते सर्वप्रजास्तत्रैव वासं कृतवत्य इत्यर्थः ॥ १७ ॥

रा॰ टी॰–पादुकेति । पादुकयोः प्राक्चेतनत्वनित्यत्वाभ्यां सर्वपादुकाश्रेष्ठयोः अभिषेकं राज्यनियन्तृत्वेन स्थापनं च नन्दिग्रामनिवासनं भरतकर्तृकनन्दिग्रामनिवासं च स्वार्थे णिच् प्रयोजकाविवक्षा वा । दण्डकारण्यगमनं रामकर्तृकदण्डकारण्यप्रवेशं च विराधस्य वधं च रामेणेति शेषः तथाशब्दश्चार्थे ॥ १७ ॥

गो॰ टी॰–पादुकेति । पादुकाग्र्ययोः पादुकाश्रेष्ठयोः । श्रैष्ठ्यं धृतत्वात् । अभिषेकं राज्यनियन्तृतया स्थापनं नन्दिग्रामे निवासनं निवसनम् स्वार्थेऽण् पादुकयोः स्थापनं वा ॥ १७ ॥

१८ ] ति॰ टी॰–दर्शनमिति । अनसूयासमास्यामनसूयया सह सीतायाः समास्या सहासनम् । यद्यप्येतद्विराधवधात्पूर्वमेव तथापि क्रमे तात्पर्याभावाद्व्यत्ययेनाभिधानम् । अङ्गरागश्चन्दनादिः ॥ १८ ॥

रा॰ टी॰–दर्शनमिति । शरभङ्गस्य ऋषेः दर्शनं शरभङ्गऋषिकर्मकावलोकनं सुतीक्ष्णेन ऋषिणाभिसङ्गमं सम्मेलनं च क्वचित्सुतीक्ष्णेन समागममिति पाठः । अर्थे तु न विशेषः । अनसूयासहास्यामनसूयया अत्रिपत्न्या सहास्यां सीतायाः सहस्थितिमङ्गरागस्य चन्दनस्य अर्पणमनसूयाकर्तृकसीतोद्देश्यकसमर्पणं च । समास्यामिति भट्टसम्मतपाठे तु अनसूयया सह सम्यगासनमित्यर्थः अत्र क्रमो न विवक्षितः अत एव विराधवधात्पूर्ववृत्तमनसूयावृत्तमुत्तरत्रोक्तम् 'आस्या त्वासनमासीने' इत्यमरः ॥ १८ ॥

गो॰ टी॰–दर्शनमिति । अनसूयया अत्रिपत्न्या सहास्यां

दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा । शूर्पणख्याश्च संवादं विरूपकरणं तथा ॥ १९ ॥
वधं खरत्रिशिरसोरुत्थानं रावणस्य च । मारीचस्य वधं चैव वैदेह्या हरणं तथा ॥ २० ॥
राघवस्य विलापं च गृध्रराजनिबर्हणम् । कबन्धदर्शनं चैव पम्पायाश्चापि दर्शनम् ॥ २१ ॥
शबरीदर्शनं चैव फलमूलाशनं तथा । प्रलापं चैव पम्पायां हनूमद्दर्शनं तथा ॥ २२ ॥
ऋष्यमूकस्य गमनं सुग्रीवेण समागमम् । प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३ ॥
वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् । ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४ ॥

---

सहासनम् सीताया इति शेषः । 'आस्या त्वासनमासीना' इत्यमरः । अत्र सर्वत्र क्रमो न विवक्षितः । रामायणप्रतिपाद्यसङ्क्षेपमात्रे तात्पर्यात् । अङ्गरागस्य चन्दनस्य ॥ १८ ॥

१९ ] ति० टी०—दर्शनमिति । अगस्त्यसकाशाद्धनुषो ग्रहणम् ॥ १९ ॥

रा० टी०—दर्शनमिति । अगस्त्यस्य कुम्भोद्भवमुनेः दर्शनमवलोकनं च अपिना तत्पूजनादिकं च । धनुषः अगस्त्यसमर्पितवैष्णवचापस्य ग्रहणं रामकर्तृकस्वीकारं च । शूर्पणख्याः शूर्पणखायाः संवादं बहुविधकथनं च । विरूपकरणं शूर्पणखायाः कर्णनासिकाच्छेदनं च अत्र नखमुखेति निषेधेऽपि ङीष् आर्षः । तथाशब्दौ चार्थकौ ॥ १९ ॥

गो०-टी०—अगस्त्येति । शूर्पणख्या इति ङीबत्रार्षः ॥ १९ ॥

२०-२२] ति० टी०—वधमिति । उत्थानं जानकीहरणाद्योगम् ॥ २० ॥ २१ ॥ २२ ॥

रा० टी०—वधमिति । खरत्रिशिरसोः तदुपलक्षितखरत्रिशिरोदूषणादीनां वधं रामकर्तृकहननं च रावणस्योत्थानं शूर्पणखावाक्यात् । मारीचसहितरावणकर्तृकरामाश्रमकर्मकगमनं च । मारीचस्य वधं रामकर्तृकहननं च । वैदेह्या हरणं रावणकर्तृकानयनं च । एवतथाशब्दौ चार्थौ ॥ २० ॥

गो० टी०—खरत्रिशिरसोरिति दूषणादीनामुपलक्षणम् । उत्थानं निर्गमनम् ॥ २० ॥

२१] रा० टी०—राघवश्चेति । राघवस्य रामस्य विलापं सम्भोगपोषकसीतावियोगहेतुकरामकर्तृकविलापं च गृध्रराजनिबर्हणं गृध्रराजस्य जटायुषः निबर्हणं रावणकर्तृकहिंसनम् । अपिना तत्प्रमीतक्रियां च कबन्धदर्शनं कबन्धकर्मकावलोकनं च । पम्पायाः तन्नामकसरसः दर्शनमवलोकनं च । एवश्चार्थे ॥ २१ ॥

गो० टी०—मारीचस्येति । एवकारः पादपूरणार्थः । एवमुत्तरत्र सर्वत्र द्रष्टव्यम् ॥ २१ ॥

२२] रा० टी०—शबर्येति । शबर्याः तन्नामकश्रमण्या दर्शनं च एतेन तत्समर्पितफलाशनं हनुमद्दर्शनं च । तथाशब्दश्चार्थे । महात्मनः मह्यते रमादिभिः पूज्यते इति महा सीता तत्रात्मा मनो यस्य तस्य राघवस्य पम्पायां पम्पासमीपे प्रलापं च एतेन लक्ष्मणकृतप्रलापशामकोक्तिं च ॥ २२ ॥

गो० टी०—कबन्धेति । चापीत्येकनिपातः समुच्चयार्थः २२

२३ ] ति० टी०—ऋष्येति । प्रत्ययोत्पादनं सालभेदादिभिः सुग्रीवस्य विश्वासजननम् । विग्रहं युद्धम् ॥ २३ ॥

रा० टी०—ऋष्येति । ऋष्यमूकस्य सुग्रीवाधिष्ठिततन्नामकपर्वतस्य गमनं प्राप्तिं च सुग्रीवेण समागमं तत्र सुग्रीवरामसम्मेलनं च प्रत्ययोत्पादनं रामसुग्रीवपरस्परविश्वासजननं च सख्यं तयोः परस्परं मित्रभावं च वालिसुग्रीवविग्रहं च सुग्रीवकर्तृकविग्रहहेतुकथनमित्यर्थः ॥ २३ ॥

गो० टी०—ऋष्येति । ऋष्यमूकस्येति कर्मणि षष्ठी । प्रत्ययोत्पादनं सालभेदनादिभिः सुग्रीवस्य विश्वासजननम् । वालिसुग्रीवविग्रहं वालिसुग्रीवयुद्धं वालिसुग्रीवयोर्वैरानुकथनं वा ॥ २३ ॥

२४ ] ति० टी०—वालीति । सुग्रीवप्रतिपादनं सुग्रीवस्य राज्ये स्थापनम् । समयं शरदि यात्रा कर्तव्येति रामसुग्रीवयोः सङ्केतम् । वर्षेति वर्षाकालिकवासाङ्गीकरणम् ॥ २४ ॥

रा० टी०—वालीति । वालिप्रमथनं वालिकर्मकवधं च सुग्रीवप्रतिपादनं सुग्रीवस्य प्रतिपादनं रामकर्तृकराज्यस्थापनं च ताराविलापं वालिवधहेतुकशोकजनिततारकर्तृकप्रलापं च समयं वर्षर्त्वपाये सीतान्वेषणीयेति रामसुग्रीवकृतसङ्केतं वर्षरात्रनिवासनं वर्षा वृष्टियुक्तः कालः चातुर्मास्यमित्यर्थः तस्य रात्रयः तेषु निवासनं निवासं च । एवश्चार्थे सचावृत्त्या चहीनेष्वप्यन्वेति । वर्षरात्रेत्यत्राजिति योगविभागादच्प्रत्ययः । रात्राह्नेति पुंस्त्वम् । ताराविलापसमयमिति समस्तपाठे समाहारद्वन्द्वेनैकवद्भावो बोध्यः ॥ २४ ॥

गो० टी०—वालीति । वालिप्रमथनं वालिवधम् । सुग्रीवप्रतिपादनं सुग्रीवाय राज्यप्रदानमित्यर्थः । ताराविलापं ताराप्रलापम् । समयं शरदि सीतान्वेष्टव्येति रामसुग्रीवयोः सङ्केतम् 'समयः कालसिद्धान्तप्रतिज्ञाशपथेषु च । सङ्केताचारयोश्च' इति रत्नमाला । ताराविलापसमयमितिपाठे 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावः । वर्षरात्रनिवासनं वर्षं दृष्टिस्तद्युक्ता रात्रयो वर्षरात्राः "रात्राह्नाहाः पुंसि" इति पुंलिङ्गत्वम् तेषु निवासनं निवसनम् स्वार्थेऽण् वर्षदिनेष्वित्यर्थः रात्रिशब्दस्य दिवसपरत्वं रात्रिरामादौ दृष्टम् ॥ २४ ॥

---

१ अगस्त्यदर्शनं चैव जटायोरभिसंगमम् । पञ्चवट्याश्च गमनं शूर्पणख्याश्च दर्शनमिति वा पाठः ।

कोपं राघवसिंहस्य बलानामुपसंग्रहम् । दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५ ॥
अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् । प्रायोपवेशनं चैव सम्पातेश्चापि दर्शनम् ॥ २६ ॥
पर्वतारोहणं चैव सागरस्यापि लङ्घनम् । समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७ ॥
राक्षसीतर्जनं चैव च्छायाग्राहस्य दर्शनम् । सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ॥ २८ ॥
रात्रौ लङ्काप्रवेशं च एकस्यापि विचिन्तनम् । आपानभूमिगमनमवरोधस्य दर्शनम् ॥ २९ ॥
दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् । अशोकवनिकायानं सीतायाश्चापि दर्शनम् ॥ ३० ॥
अभिज्ञानप्रदानं च सीतायाश्चापि भाषणम् । राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् ॥ ३१ ॥
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च । राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ॥ ३२ ॥

---

२५ ] ति० टी०—कोपमिति । उपसङ्ग्रहं वानराणां मेलनम् । पृथिव्याश्च निवेदनं सुग्रीवेण वानरान्प्रति पृथ्वीसंस्थानकथनम् ॥ २५ ॥

रा० टी०—कोपमिति । राघवसिंहस्य राघवश्रेष्ठरामस्य कोपं सुग्रीवानवधानतानिवर्तककोधाभासं बलानां सैन्यानामुपसङ्ग्रहं सुग्रीवकर्तृकसम्मेलनं च दिशः प्रस्थापनं सर्वदिक्कर्मकवानरप्रेषणं च पृथिव्या द्वीपसमुद्रादिरूपायाः निवेदनं अवयवशः सुग्रीववर्णनं च एवश्चार्थे ॥ २५ ॥

गो० टी०—कोपमिति । राघवसिंहस्य राघवाणां श्रेष्ठस्य कोपं सुग्रीवविषयक्रोधम् । बलानां सेनानामुपसंग्रहं सम्मेलनम् । दिशः प्रति वानराणां प्रस्थापनम् । पृथिव्याश्च निवेदनं पृथिव्याः द्वीपसमुद्रादिसन्निवेशकथनम् ॥ २५ ॥

२६–२८ ] ति० टी०—अङ्गुलीयकदानं रामकर्तृकं हनुमति । प्रायोपवेशनं प्रायेणानशनेन वानराणामुपवेशनं समुद्रसमीपे वासः ॥ २६ ॥ २७ ॥ २८ ॥

रा० टी०—अङ्गुलीयकेति । अङ्गुलीयकदानं हनुमत्सम्प्रदानकरामकर्तृकसीताप्रतीतिसम्पादकाङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनं ऋक्षस्य बिलं स्वयंप्रभाबिलं तस्य दर्शनं च प्रायोपवेशनं प्रायाय प्राणत्यागाय उपवेशनमनशनतया स्थितिं च । सम्पातेः जटायुषो ज्येष्ठभ्रातुः दर्शनं च । अपिना तेन सह सम्भाषणम् । एवेति पाठे सोऽप्यर्थको बोध्यः ॥ २६ ॥

गो० टी०—अङ्गुलीयकेति । हनुमत इति शेषः । ऋक्षस्य बिलं स्वयंप्रभाबिलं तस्य तथा संज्ञा । प्रायोपवेशनं प्रायाय मरणाय उपवेशनं शयनम् । सम्पातेर्जटाय्वग्रजस्य॥२६॥

२७] रा० टी०—पर्वतेति । पर्वतारोहणं च एवेन हनुमत्कृतदेवप्रार्थनां सागरस्य लङ्घनं च समुद्रवचनादेव उत्थितस्य मैनाकस्य दर्शनं च चकारेण हनुमन्मैनाकसंवादम् । उत्थितस्येति शेषः । क्वचित्सागरस्यापीति पाठः ॥ २७ ॥

गो० टी०—पर्वतेति । समुद्रलङ्घनाय महेन्द्रपर्वतारोहणम् । समुद्रवचनाच्चेति चकारेण देवाज्ञा समुच्चीयते मैनाकस्य हिमवत्पुत्रस्य गिरेः ॥ २७ ॥

२८ ] रा० टी०—राक्षसीतर्जनमिति । राक्षस्योः राक्षसीरूपधारिरक्षःकुलोत्पन्नसुरसालङ्किन्योः तर्जनं हनुमत्कर्मकभर्त्सनं च छायाग्राहस्य सिंहिकायाः दर्शनं निधनं च लङ्कामलयदर्शनं लङ्कामलयस्य लङ्काधिकरणीभूतपर्वतैकदेशस्य दर्शनं च एवश्चार्थे २८

गो० टी०—सिंहिकाया इति । सिंहिकाया असुरस्त्रियाः । लङ्कामलयस्य लङ्काधारपर्वतैकदेशस्य मलयः 'पर्वतान्तरे । पर्वतांशे प्रियोद्यान' इति रत्नमाला । ऐकस्य हनुमतः ॥ २८ ॥

२९ ] ति० टी०—एकस्यापि विचिन्तनमसहायस्य कर्तव्यार्थविचारं चेत्यर्थः । अवरोधोऽन्तःपुरम् ॥ २९ ॥

रा० टी०—रात्राविति । रात्रौ लङ्काप्रवेशं च एकस्य वानरप्रधानीभूतहनुमतः विचिन्तनमापानभूमिगमनं राक्षसकर्तृकमद्यपानस्थलकर्मकहनुमत्कर्तृकप्राप्तिं च अवरोधस्यान्तःपुरस्य दर्शनं च । एकस्यापीति पाठे अपिश्चार्थे ॥ २९ ॥

गो० टी०—आपानेति । आपानभूमिः मद्यपानभूमिः । अवरोधस्यान्तःपुरस्य ॥ २९ ॥

३० ] ति० टी०—यानं गमनम् ॥ ३० ॥

रा० टी०—दर्शनमिति । रावणस्य दर्शनं च पुष्पकस्य दर्शनं च अशोकवनिकायानं हनुमत्कर्तृकाशोकवनिकाप्राप्तिं च सीतायाः दर्शनं च । अपी चार्थौ । क्वचित्सीतायाश्च प्रदर्शनमिति पाठः ॥ ३० ॥

गो० टी०—अशोकेति । अशोकवनिकायानं हनुमतोऽकवनिकागमनम् । अभिज्ञानप्रदानं सीतायै अङ्गुलीयकदानम् ॥ ३० ॥

३१–३२ ] ति० टी०—अभिज्ञानं रामदत्ताङ्गुलीयकम् ३२

रा० टी०—अभिज्ञानेति । अभिज्ञानप्रदानं सीतासम्प्रदानकमुद्रिकाप्रदानं च सीतायाः भाषणं च अपिना हनुमतो भाषणं राक्षसीतर्जनं राक्षसीकर्तृकसीताकर्मकभर्त्सनं च त्रिजटा विभीषणसुता तस्याः स्वप्नदर्शनं रामशुभसूचकस्वप्नावलोकनं च एवश्चार्थे ॥ ३१ ॥

---

१ इदं तुत्तरश्लोकटीकायामपेक्षितम् ।

ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् । प्रतिप्लवनमेवाथ मधूनां हरणं तथा ॥ ३३ ॥
राघवाश्वासनं चैव मणिनिर्यातनं तथा । सङ्गमं च समुद्रेण नलसेतोश्च बन्धनम् ॥ ३४ ॥
प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् । विभीषणेन संसर्गं वधोपायनिवेदनम् ॥ ३५ ॥
कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् । रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ॥ ३६ ॥
विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् । अयोध्यायाश्च गमनं भरद्वाजसमागमम् ॥ ३७ ॥
प्रेषणं वायुपुत्रस्य भरतेन समागमम् । रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥
स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् । ॥ ३८ ॥

गो० टी०—राक्षसीति । राक्षसीनां तर्जनं सीतां प्रतीति शेषः । त्रिजटा विभीषणपुत्री तस्याः स्वप्नदर्शनं रामश्रेयोविषयस्वप्नदर्शनम् । मणिप्रदानं हनुमते चूडामणिप्रदानम् । वृक्षभङ्गमशोकवनिकावृक्षभङ्गम् ॥ ३१ ॥

३२] रा० टी०—मणिप्रदानमिति । सीतायाः मणिप्रदानं हनुमद्द्वारा सीताकर्तृकरघुनाथोद्देश्यकचूडामणिसमर्पणं च वृक्षभङ्गं सीताश्रयीभूतशिंशपातिरिक्ताशोकवनिकोत्पाटनं च राक्षसीविद्रवं राक्षसीपलायनं च तथाशब्देन राक्षसीकर्तृकहनुमद्वृत्तकथनं किङ्कराणां रावणभृत्यभटानां निबर्हणं नाशनं च एवौ चार्थौ ॥ ३२ ॥

गो० टी०—राक्षसीविद्रवमिति । एकाक्ष्येककर्णीप्रभृतिराक्षसीनां पलायनं हनुमद्भयादिति शेषः । किङ्कराणां रावणभटानाम् । वायुसूनोर्हनुमतः ग्रहणमिन्द्रजितेति शेषः । लङ्कादाहेनाभिगर्जनं राक्षसानामित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—ग्रहणमिति । लङ्काया दाहेन तत्रत्यानामाक्रन्दनं लङ्कादाहे हनुमद्गर्जनमित्यर्थो वा । 'अभिमर्दनम्' इति पाठे लङ्काया दाहेनाभितो मर्दनमित्यर्थः । प्रतिप्लवनं पुनः सागरोत्तरणम् ॥ ३३ ॥

रा० टी०—ग्रहणमिति । वायुसूनोः हनुमतो ग्रहणं रावणसभानयनं च लङ्कादाहाभिगर्जनं लङ्कादाहे हनुमदभिगर्जनं च लङ्कादाहश्च अभिगर्जनं चेति समाहारद्वन्द्वो वा । अभिमर्दनमिति पाठे तु दाहेन राक्षसानां हिंसनं चेत्यर्थः । अथानन्तरं प्रतिप्लवनं पुनः समुद्रसन्तरणं मधूनां मधुवनोद्भवक्षौद्राणां हरणं वानरकर्तृकादानं च एवतथाशब्दौ चार्थौ ॥ ३३ ॥

गो० टी०—प्रतीति । प्रतिप्लवनं पुनः समुद्रलङ्घनम् । मधूनां मधुवनस्थमधूनां ग्रहणं वानरैरिति शेषः । मणिनिर्यातनं रामाय चूडामणिप्रदानम् ॥ ३३ ॥

३४ ] ति० टी०—मणिनिर्यातनं सीतया दत्तस्य स्वशिरोरत्नस्य राघवे दानम् । नलसेतोर्नलनिर्मितसेतोः ॥ ३४ ॥

रा० टी०—राघवेति । राघवाश्वासनं 'दृष्टा सीतेति तत्त्वतः' इत्यादिना रामसमवधानीकरणं च मणिनिर्यातनं सीतासमर्पितचूडामणिसमर्पणं च तथाशब्देन ससैन्यसुग्रीवरामगमनम् समुद्रेण सङ्गमं रघुनाथकर्तृकसमुद्रसमागमं च नलसेतोः नलैकसाध्यसेतोर्बन्धनं च ॥ ३४ ॥

गो० टी०—सङ्गमं चेति । नलसेतोः नलेन बन्धनीयसेतोः प्रतारं प्रतरणम् ॥ ३४ ॥

३५ ] ति० टी०—प्रतारम् । सेनाया इति शेषः ॥ ३५ ॥

रा० टी०—प्रतारमिति । समुद्रस्य प्रतारं सेतुनोत्तरणं च रात्रौ लङ्कावरोधनं च विभीषणेन संसर्गमाभाषणपूर्वकसम्बन्धं च वधोपायनिवेदनं विभीषणकर्तृकरावणादिवधयत्नकथनं च । आवृत्त्या चकारः चहीनेष्वप्यन्वेति ॥ ३५ ॥

गो० टी०—विभीषणेनेति । वधोपायनिवेदनं इन्द्रजिदादिवधोपायदर्शनम् ॥ ३५ ॥

३६ ] ति० टी०—निबर्हणं मारणम् । अरे रावणस्य ३६

रा० टी०—कुम्भकर्णस्येति । कुम्भकर्णस्य निधनं वधं च मेघनादनिबर्हणं हिंसनं च रावणस्य विनाशं च सीतावाप्तिं च अरेः पुरे लङ्कायां विभीषणाभिषेकं च पुष्पकस्य रावणाहृतकुवेरविमानस्य दर्शनं च ॥ ३६ ॥

गो० टी०—अरेः पुर इति शौर्यातिशयोक्तिः । उत्तरत्र चान्वयः ॥

३७] ति० टी०—अयोध्यायाश्च गमनं तदुद्देश्यकं गमनम् ॥ ३७ ॥

रा० टी०—अयोध्याया इति । अयोध्यायाश्च गमनं रामकर्तृकप्रस्थानं च भरद्वाजसमागमं च वायुपुत्रस्य हनुमतः प्रेषणं च रघुनाथेन भरतं प्रतीति शेषः । भरतेन समागमं हनुमद्द्वारा साक्षाच्च भरतसम्मेलनं च ॥ ३७ ॥

गो० टी०—अयोध्यायाश्चेति । रामाभिषेकाभ्युदयं रामाभिषेकमहोत्सवम् । स्वराष्ट्रेत्यर्द्धमधिकम् । वैदेह्याश्च विसर्जनमित्यन्तं चकार भगवान् ऋषिरिति पूर्वेण संबन्धनीयम् ॥ ३७ ॥

३८ ] ति० टी०—रामाभिषेकाभ्युदयं रामाभिषेकोत्सवम् । सर्वत्र चकारेत्यनुकृष्यते ॥ ३८ ॥

रा० टी०—रामेति । रामाभिषेकाभ्युदयं रामराज्याभिषेकोत्सवम् । सर्वसैन्यविसर्जनं स्वस्वस्थानं प्रति सुग्रीवादिप्रेषणं च स्वराष्ट्ररञ्जनं प्रजाप्रमोदनं च वैदेह्याः प्रकटरूपायाः विसर्जनं च एवश्चार्थे ॥ ३८ ॥

अनागतं च यत्किञ्चिद्रामस्य वसुधातले । तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ॥ ४ ॥

रामस्य राज्यप्राप्त्यनन्तरं पुत्रमुखादेव स्वचरितश्रवणमित्येतावदुपोद्घातरूपेण वर्णनम् ।

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥ १ ॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः । तथा सर्गशतान्पञ्च षट् काण्डानि तथोत्तरम् ॥ २ ॥

गो० टी०—सीताभूप्रवेशप्रभृत्युत्तरकाण्डकथामाह—अनागतं चेति । वाल्मीकिनामा भगवान् ऋषिः रामस्य वसुधातले अनागतं भावि यत्किञ्चिच्चरितमस्ति ब्राह्मणपुत्रजीवनाश्वमेधादिकं तदुत्तरे काव्ये उत्तरकाण्डे चकार प्रतिपादितवान्। यत्किञ्चिदित्यनेन सीताविसर्जनात्पूर्वकालस्य भूयस्त्वमनन्तरकालस्याल्पत्वं च द्योत्यते इत्याहुः । एतदुत्तरकाण्डे विचारयिष्यते ॥ ३८॥

इति श्रीमद्रामायणे बालकाण्डे भूषणे मणिमञ्जीराख्याने तृतीयः सर्गः ॥ ३ ॥

३९ ] ति० टी०—अनागतं चेति । यत्किञ्चिदित्यनेन सीताविसर्जनात्पूर्वकालिकस्य भूयस्त्वमनन्तरकालस्याल्पता द्योत्यते तत्सर्वमुत्तरे सर्वतो विशिष्टे काव्ये चकार निबबन्धेत्यर्थः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—अनागतमिति । वसुधातले रामस्य यत्किञ्चिच्चरितमनागतमप्रकटितं भविष्यत्कालिकमित्यर्थः । तदेव उत्तरे काव्ये उत्तरे काण्डे भगवान्परममाहात्म्यवान् ऋषिः त्रिकालज्ञः चकार वर्णयामास । भूतवर्तमानकालिकरामचरितानि षट्सु काण्डेषु वर्णितानि भविष्यत्कालिकरामचरितानि उत्तरकाण्डे वर्णितानीत्यर्थः चशब्द एवार्थे ॥ ३९ ॥

इत्यार्षे श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

१] ति० टी०—प्राप्तेति । अनेन रावणवधोत्तरमेतत्काव्यकरणमिति सूचितम् । वाल्मीकिस्तद्विषयवासी ऋषिरित्यर्थादवगन्तव्यम् । चरितं तत्प्रतिपादकं काव्यम् अर्थवच्छन्दयलङ्काराद्रिप्रशस्तार्थम् । 'आत्मवान्' इति पाठेऽवहितान्तःकरणः । प्राशस्त्ये मतुप् आत्मशब्दश्चान्तःकरणवाची ॥ १ ॥

रा० टी०—पूर्वसर्गे रामचरितं सङ्क्षेपतो वर्णयामास इदानीं विस्तरतोपि रामचरितं वर्णयति—प्राप्तेत्यादिभिः । ऋषिः सर्वज्ञः अत एव आत्मवान् रामचरितवर्णनविषयकयत्नवान् अत एव भगवान् परममाहात्म्यवान् वाल्मीकिः प्राप्तराज्यस्य प्रकटीकृतस्वकीयनित्यमहाराजत्वस्य रामस्य कृत्स्नं स्वबुद्धिविषयीभूतं चरितं विचित्रपदं विचित्राणि दोषरहितत्वालङ्कारव्यञ्जकत्वसहितत्वादिना आश्चर्याणि पदानि प्रतिपादकत्वेन यस्मिन् तच्चकार रचयामास । पदमर्थवदिति पाठे तु विचित्राणि दोषरहितत्वानुप्रासादिना आश्चर्याणि पदानि यस्मिन् तदर्थवत् दोषरहितत्वालङ्कारादिना प्रशस्तार्थविशिष्टं कृत्स्नं चरितं तत्प्रतिपादककाव्यं चकार चकारेति परस्मैपदेन लोकोपकारार्थं कृतवानित्यर्थः सम्पन्नः तेन स्वस्य रामचरितश्रवणमात्रेण कृतार्थत्वं बोधितम् ॥ १ ॥

गो० टी०—पूर्वस्मिन् सर्गे प्रतिपाद्यवैलक्षण्यमुक्तं सम्प्रति प्रबन्धवैलक्षण्यं कथ्यते प्रबन्धस्य वैलक्षण्यं नाम परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वं महाजनपरिगृहीतत्वं प्रबन्धनायकश्लाघितत्वमित्यादि । प्राप्तेति । परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वं चानेनोच्यते । प्राप्तराज्यस्य स्वीकृतराजभावस्य पुरोहितादित्वात्यक्प्रत्ययः लोकरक्षणाय रघुकुलेऽवतीर्णस्येत्यर्थः। रामस्य सकलगुणाभिरामस्य अनेन प्रतिपाद्यमहिम्ना काव्यस्य आदरणीयतातिशय उक्तः । तदुक्तं वामनेन 'उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसम्पदः' इति । विचित्रपदमाश्चर्यपदसन्निवेशम् । अनेन काव्यस्यात्मभूता रीतिरुक्ता । तदुक्तं वामनेन 'रीतिरात्मा काव्यस्य विशिष्टपदरचना रीतिः । समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुदिता वैदर्भीनाम रीतिः' इत्यादिना । यद्वा विविधानां विचित्राणां शब्दार्थालङ्काराणां पदं स्थानं कृत्स्नं चरितं प्रतिपादकग्रन्थसन्दर्भम् । अनेन विज्ञानाद्यनेकफलसुपुरुषचरित्रत्वमुक्तम्। तथोक्तम् 'परिवड्ढइ विण्णाणं संभाविज्जइ जसो विसप्पंति गुणा। सुव्वइ सु पुरिसचरिअं किं तंजेणण हरंति व्वालावा। परिवर्द्धते विज्ञानं सम्भाव्यते यशो विसर्पन्ति गुणाः। श्रूयते सुपुरुषचरितं किं तयेन न हरन्ति काव्यालापाः' इति। भगवान् ब्रह्मप्रसादलब्धदिव्यज्ञानवान् आत्मवान् प्रबन्धरचनानुकूलयत्नवान् ऋषिः 'नानृषिः कुरुते काव्यम्' इत्युक्तरीत्या काव्यनिर्माणपटुः वाल्मीकिः चकार परोपकाराय कृतवान् । उदारधीरिति पूर्वमुक्तं प्राप्तराज्यस्येत्यनेन रामराज्यकरणकाले रामायणकरणमिति गम्यते । एतज्ज्ञापनायैव पुनरारम्भः ॥ १ ॥

२ ] ति० टी०—चतुर्विंशदिति । चतुर्विंशतिरित्यर्थक-

श्छान्दसः शतानिति पुँल्लिङ्गोऽप्येवम् । तत्र पञ्चशतरूपसर्गसङ्ख्या षट्काण्डानामेव । श्लोकसङ्ख्या तु सोत्तराणामित्याहुः । कतककृतस्तु—उक्तसङ्ख्यापेक्षया षट्त्रिंशत्सर्गसङ्ख्याधिक्यदर्शनात् चतुर्विंशत्सहस्रापेक्षया श्लोकसङ्ख्याया अप्याधिक्यदर्शनाच्च उत्तरकाण्डीयसर्गसङ्ख्यानुक्तेश्च प्रक्षिप्तोऽयं श्लोको न त्वार्ष इत्याहुः ॥ २ ॥

रा० टी०—भ्रममूलकप्रक्षेपनिस्सारणाभावाय चिकीर्षितग्रन्थसङ्ख्यामाह—**चतुर्विंशदिति** । ऋषिः सर्वज्ञो वाल्मीकिः श्लोकानां ' तपस्स्वाध्याय ' इत्यादि 'तद्ब्रह्माप्यन्वमन्यत' इत्यन्तानां चतुर्विंशत्सहस्राणि चतुर्विंशतिसहस्रसङ्ख्याः उक्तवान् । चतुर्विंशत्सहस्रशब्दः सङ्ख्यापरः । अत एव ' सङ्ख्यायां द्विबहुत्वे स्तः इत्यनुशासनाद्बहुवचनम् । अन्यथा ' विंशत्याद्याः सदैकत्वे ' इति कोशात्तदनुपपन्नं स्यात् । अत एव श्लोकानामिति षष्ठ्युपपत्तिः सङ्ख्याया उक्तेः सङ्ख्येयोक्तिमन्तराऽसम्भवेन सङ्ख्येयोक्तिद्वारा सङ्ख्या उक्तवानिति फलितोऽर्थः । चतुर्विंशत्सहस्रशब्दे इकारलोप आर्षः । पञ्च पञ्च सङ्ख्यागुणितान्सर्गशतान् सर्गाणां शतांश्च उक्तवान् । षट्काण्डानि षट्सङ्ख्यासङ्ख्यातानि काण्डानि च उक्तवान् । पूर्वस्तथाशब्दश्चार्थे स एव सर्वत्रान्वेति। शतशब्दस्य पुँस्त्वं तु "शतायुतप्रयुताः पुंसि च" इतिलिङ्गानुशासनादवगन्तव्यम्। क्वचिच्छतमिति पाठः । तस्यैकत्वं तु ' विंशत्याद्याः सदैकत्वे ' इति कोशात्सिद्धम् तस्य साधुत्वं तु " पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् " इति सूत्रेण निष्पन्नम् । तथोत्तरम् । तथाशब्दः दशाधिकशतसङ्ख्यासङ्ख्येयपरः । एवञ्च तथा दशाधिकशतसर्गसहितमुत्तरं सप्तमकाण्डमुक्तवानित्यर्थः । तथाहि ' त व्योम शून्यम् ' इत्याद्युक्तेः तशब्दस्य व्योमपरत्वं तस्य च शून्यबोधकत्वं ज्योतिश्शास्त्रादौ स्पष्टमेव । 'शिलोच्चये थकारः स्यात् ' इति कोशात् थशब्दस्य पर्वतपरत्वं सोऽस्ति अस्या इति अर्श आद्यचा थाशब्दः पृथिवीपरः तेनाप्येकत्वबोधकत्वं तत्रैव स्पष्टम् । ' अकारो वासुदेवे स्यात् ' इति कोशात् । अशब्दः परमात्मपरः तेन "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुत्या एकत्वं बोध्यते एवञ्च ' अङ्कानां वामतो गतिः ' इति न्यायात्तथाशब्देन दशाधिकशतबोधः उत्तरकाण्डस्य पृथगुक्तिस्तु भविष्यत्कालिकरघुनाथचरितविषयत्वेन भूतवर्तमानकालिकरघुनाथचरितविषयीभूतकाण्डान्तरेभ्यो वैलक्षण्यं द्योतयितुम् एतेन उक्तसङ्ख्यापेक्षया षट्त्रिंशत्सर्गसङ्ख्याधिक्यदर्शनात् चतुर्विंशतिसहस्रापेक्षया श्लोकसङ्ख्याया अपि आधिक्यदर्शनाच्च उत्तरकाण्डीयसर्गसङ्ख्यानुक्तेश्च प्रक्षिप्तोयं श्लोको न त्वार्ष इति भट्टोदाहृतकतककृतको दुस्तर्क इति बोध्यम् । एतच्छ्लोकोक्तसङ्ख्यासङ्ख्यातातिरिक्तत्वेन भासमानानां सर्गश्लोकानां समूलां गतिं वक्ष्यामः । ' काण्डानि षट् कृतानीह सोत्तराणि महात्मना' इत्युत्तरकाण्डचतुर्नवतितमसर्गघटकपद्यघटकसोत्तराणीति अस्यार्थस्तु सशब्देनाकाश उच्यते सस्य वायोरयं जनक इति व्युत्पत्तेः तेन शून्यलाभः । ओ वासुदेवः । तेनैकत्वलाभः पुनरो वासुदेवः तेनाप्येकत्वलाभः । स च स च स चेति द्वन्द्वः । एवं चाङ्कानां वामतो गतिरिति न्यायेन दशाधिकशतलाभः। तैस्तत्सङ्ख्याकसर्गैर्विशिष्टमुत्तरं काण्डं येषु तानि दशाधिकशतसङ्ख्याकसर्गविशिष्टोत्तरकाण्डविशिष्टानीत्यर्थः । सशब्दस्य वायुपरत्वं तु 'सो वायुः परदेशदूरगमनम् ' इत्यादिना । वायोः सदैवतत्त्वेनाभेदाध्यवसायात्सिद्धामिति दिक् ॥ २ ॥

गो० टी०—अथ प्रक्षेपभ्रंशसम्भावनापरिहाराय नातिसङ्क्षेपविस्तरश्लोकसर्गकाण्डवत्तयात्यन्तादरणीयत्वाय चाह—**चतुर्विंशदिति** । ऋषिर्वाल्मीकिः ' तपःस्वाध्याय ' इत्यारभ्य 'तद्ब्रह्माप्यन्वमन्यत' इत्यन्तेन चिकीर्षिते रामायणाख्ये प्रबन्धे श्लोकानां चतुर्विंशत्सहस्राण्युक्तवान् इकारलोपश्छान्दसः "पङ्क्तिविंशति " इतिसूत्रे विंशतीत्येव निपातनात् आदशतः सङ्ख्याः सङ्ख्येये वर्तन्ते ततः परं सङ्ख्याने सङ्ख्येये च वर्तन्त इति नियमात् सहस्रशब्दोऽत्र सङ्ख्यापरः चतुर्विंशतिसहस्रसङ्ख्याकश्लोकांश्चकारेत्यर्थः । तथेति समुच्चये पञ्चसर्गशतांश्च कृतवान् " शतायुतप्रयुताः पुंसि च " इतिलिङ्गानुशासनवचनात् पुँल्लिङ्गत्वम् । सर्गशतं पञ्चेतिपाठे शतमित्येतत् " पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् " इतिसूत्रे शतमिति बहुत्वे निपातनात्साधु । षट्काण्डानि उत्तरं च षड्भ्य उत्तरं सप्तमकाण्डं च कृतवान् । परत्वमोक्षप्रदत्वादीनां व्यक्ततया प्रतिपादनेन सर्वोत्तरत्वादुत्तरमिति पृथगुक्तिः । यद्यप्याधुनिके पाठे श्लोकानां सर्गाणां च विपर्यासो दृश्यते तथापि बहुचतुर्युगान्तरितत्वेन विप्लवो युक्तः । यद्वा सङ्कल्पमात्रपरोऽयं श्लोकः कृतवान् कर्तुमुद्युक्त इत्यर्थः ग्रन्थसमाप्तिदशायां कापि वृद्धिरुपजातेति न कोऽपि विरोधः यद्वा अन्यूनाभिप्रायमिदं वचनं पञ्चशतसर्गेषु चतुर्विंशतिसहस्रश्लोकेषु च न न्यूनतेत्यर्थः यद्वाल्पीयसीमधिकसङ्ख्यामनादृत्य प्रकृष्टसङ्ख्यया व्यपदेशोऽयम् । यथा ' मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ' इत्यमरः । ' चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ' इत्युक्तब्रह्मदिनस्य चतुर्दशमन्वनुसारेण चतुर्दशधा विभागे मन्वन्तरस्यैकसप्तत्याधिक्यात् । वर्तमानसङ्ख्या तु ' बालकाण्डे तु सर्गाणां सप्तसप्ततिरीरिता । अयोध्याकाण्डगाः सर्गाश्शतं चैकोनविंशतिः ॥ आरण्यकाण्डे सर्गाणां पञ्चसप्ततिरीरिता । किष्किन्धाकाण्डगाः सर्गाः सप्तषष्टिरुदीरिताः ॥ सर्गाणां सुन्दरे काण्डे त्वष्टषष्टिरुदीरिता । एकत्रिंशच्छतं सर्गा दृश्यन्ते युद्धकाण्डगाः ॥ दशोत्तरशतं सर्गा उत्तरे काण्ड ईरिताः ' अत्र सर्गशतान् पञ्चेत्येतत्षट्काण्डानामेव नतु सोत्तराणां षट्काण्डानीत्येतत्प्रत्यासत्तेः । चतुर्विंशतिसहस्रश्लोकात्मकता तु सप्तकाण्डापेक्षयेत्यप्याहुः । ' बालकाण्डगताः श्लोकाश्चमरारिप्रकीर्तिताः ( २२६६ ) । अयोध्याकाण्डगाः श्लोकाश्शुकभावाः प्रभाषिताः ( ४४१९ ) ॥ आरण्यकाण्डगाः श्लोकाः खगसाराः प्रदर्शिताः ( २७३२ ) । किष्किन्धाकाण्डगाः श्लोका मीरचाराः प्रकीर्तिताः ( २६२० ) ॥ श्लोकास्तु सुन्दरे काण्डेताननागाः प्रभाषिताः ( ३००६ ) । युद्धकाण्डगताः

कृत्वा तु तन्महाप्राज्ञः सभविष्यसहोत्तरम्[1] । चिन्तयामास को न्वेतत्प्रयुञ्जीयादिति प्रभुः ॥ ३ ॥
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः । अगृहीतां[2] ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ । भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥

श्लोका निधिधीशाः प्रवेदिताः ( ६९९० )॥ श्लोकाः स्युरुत्तरे काण्डे वलरागाः प्रभाषिताः (३२३४ )।' श्लोकाः (२४२९३) तत्रैवमवधातव्यं बालकाण्डे त्रिंशे सर्गे ' स तेन परमास्त्रेण मानवेन समाहतः ' इत्यतः पूर्वमेकं सहस्रम् । त्रिषष्टितमे ' विश्वामित्रो महातेजा भूयस्तेपे महत्तपः' इत्यतः पूर्वं द्वे सहस्रे । अयोध्याकाण्डे चतुर्दशे ' चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम् ' इत्यतः पूर्वं त्रीणि सहस्राणि । चतुश्चत्वारिंशे ' वर्तते चोत्तमां वृत्तिं लक्ष्मणोस्य सदानघ ' इत्यतः पूर्वं चत्वारि सहस्राणि । एकसप्ततितमे ' द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ' इत्यतः पूर्वं पञ्च सहस्राणि । एकोनशततमे ' उटजे राममासीनं जटामण्डलधारिणम् ' इत्यतः पूर्वं षट् सहस्राणि । आरण्यकाण्डे द्वादशे ' ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् ' इत्यतः पूर्वं सप्त सहस्राणि । सप्तचत्वारिंशे ' मम भर्ता महातेजा वयसा पञ्चविंशकः ' इत्यतः पूर्वं चाष्टौ सहस्राणि । किष्किन्धाकाण्डे चतुर्थे ' ततः परमसंहृष्टो हनूमान्प्लवगर्षभः ' इत्यतः पूर्वं नव सहस्राणि । एकत्रिंशे ' नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ' इत्यतः पूर्वं दश सहस्राणि । किष्किन्धाकाण्डसमाप्तावेकादश सहस्राणि । सुन्दरकाण्डे सप्तविंशे ' ततस्तस्य नगस्याग्रे ' इत्यतः पूर्वं द्वादश सहस्राणि । षट्चत्वारिंशे ' नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः ' इत्यतः पूर्वं त्रयोदश सहस्राणि । सुन्दरकाण्डसमाप्तौ चतुर्दश सहस्राणि । युद्धकाण्डे अष्टाविंशे ' रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ' इत्यतः प्राक् पञ्चदश सहस्राणि । पञ्चाशे ' प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ' इत्यतः प्राक् षोडश सहस्राणि । उत्तरभागारम्भे ' कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ' इत्यतः प्राक् सप्तदश सहस्राणि । अशीत्यन्तेन अष्टादश सहस्राणि । द्वादशशततमे ' मरणान्तानि वैराणि ' इत्यतः प्राक् एकोनविंशतिस्सहस्राणि । युद्धकाण्डसमाप्तौ विंशतिस्सहस्राणि । उत्तरकाण्डे द्वाविंशे ' ततः प्राचोदयत्सूतस्तान् हयाञ्शुचिरप्रभान् ' इत्यतः पूर्वं एकविंशतिस्सहस्राणि । चत्वारिंशत्समाप्त्या द्वाविंशतिस्सहस्राणि । षट्सप्ततितमे ' ब्राह्मणस्य च धर्मेण त्वया वै रक्षितस्सुतः ' इत्यतः पूर्वं त्रयोविंशतिस्सहस्राणि । ततः प्रबन्धसमाप्त्या चतुर्विंशतिस्सहस्राणीत्याहुः ॥ २ ॥

३ ] ति० टी०—कृत्वा त्विति । सहशब्दः सहितपरः भविष्येण सह सहितं विशिष्टं यदुत्तरं तेन सहितमिदं काव्यं ब्रह्मनियोगात्तत्प्रसादाच्च कृत्वा को नु प्रभुः समर्थ एतत्प्रयुञ्जीयात्सभासु पठञ्छ्रावयेत्सभ्यानिति तु चिन्तयामास । सहोत्तरमित्यत्रोत्तरपदार्थस्य सभविष्यमिति सविशेषणत्वेऽप्यार्षः समासः । भविष्यं च सीताविसर्जनम्[3]आरभ्येत्येके तस्या भूप्रवेशोत्तरकालिकमिति परे प्रयुञ्जीयादिति च्छान्दसम् ॥ ३ ॥

रा० टी०—कृत्वेति । महाप्राज्ञः महती पूजनीया प्रज्ञा यस्य स वाल्मीकिः । सहोत्तरम् उत्तरकाण्डसहितं तत्काण्डषट्कं[4] रामायणं कृत्वा सभविष्यं सभेषु सभावत्पुरुषेषु विष्यं रामायणव्यापकत्वं यथा स्यात्तथा को नु प्रभुः एतद्धारणसमर्थः एतद्रामायणं प्रयुञ्जीयात् सभासदान् श्रावयेदित्यर्थ इति चिन्तयामास एतेन रामचरितेषु ऋषेः परमानुरागः सूचितः । विष्यशब्दस्तु व्याप्त्यर्थकविषधातोर्ण्यति सञ्ज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावेन सिद्धः । सभशब्दोऽर्शआद्यजन्तः । प्रयुञ्जीयादित्यार्षम् ॥ ३ ॥

गो० टी०—अथास्य काव्यस्य महाजनपरिग्रहं वक्तुं पीठिकामारचयति—कृत्वेति । महाप्राज्ञः प्रकर्षेण जानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः " प्रज्ञादिभ्यश्च " इति स्वार्थेऽण्प्रत्ययः । यद्वा प्रज्ञा धीः ' धीः प्रज्ञा शेमुषी मतिः ' इत्यमरः । सास्यास्तीति प्राज्ञः " प्रज्ञाश्रद्धार्चाभ्यो णः " इति मत्वर्थीयो णप्रत्ययः । महांश्चासौ प्राज्ञश्चेति महाप्राज्ञः निरतिशयज्ञानसंयुतो वाल्मीकिः सहोत्तरं रामाभिषेकादुत्तरेण वृत्तान्तेन सहितं विकल्पात् सहशब्दस्य सभावाभावः । सभविष्यमश्वमेधोत्तरभाविवृत्तान्तसहितम् अश्वमेधपूर्वकाले अस्य काव्यस्य प्रवृत्तत्वात् । तत्काव्यं कृत्वापि एतत्काव्यं प्रभुः समर्थः । ' प्रभुः शक्ताधिपौ ' इति भास्करः । कः पुरुषः प्रयुञ्जीयात् वाग्विधेयं कुर्यात् इति चिन्तयामास । प्रयुञ्जीयादित्यत्रात्मनेपदाभावोऽनित्यत्वात् । सभविष्यमित्यत्र औणादिकेस्यप्रत्यये इण्निमित्तं षत्वम् ॥ ३ ॥

४–५ ] ति० टी०—तस्येति । भावितात्मनो रामचरितबन्धनेन शुद्धचित्तस्य । अगृहीतामिति च्छान्दसम् आवां गातारावित्युक्त्वा पादग्रहणं कृतवन्तौ । मुनिवेषौ राजकुमारावप्याश्रमस्थितिवशात्तथाभूतौ कुशीलवौ कुशलवौ कुशशब्दस्य कुशीभावः पृषोदरादित्वात् । ददर्श काव्यग्रहणे योग्यतयापश्यदित्यर्थः ॥ ४ ॥ ५ ॥

रा० टी०—तस्येति । भावितात्मनः भावितः परिशीलितः आत्मा सर्वनियन्तृरघुनाथो येन अत एव चिन्तयमानस्य रामचरितप्रवृत्त्युद्योगं विचारयतस्तस्य प्रसिद्धस्य महर्षेः वाल्मीकेः पादौ मुनिवेषौ मुन्यनुवर्तित्वात्तद्वेषधरौ कुशीलवौ अगृह्णीताम् ।

१ सभविष्यमिति पाठः । २ अगृह्णीतामिति पाठः क. ख. । ३ विसर्जनादारभ्येति युक्तम् । ४ स्वार्थिकेणि क्लीबभाव इति भावः ।

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ । वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् । पौलस्त्यवधमित्येवं चकार चरितव्रतः ॥ ७ ॥

रामायणग्रहणार्थं तत्पादस्पर्शमकुरुतामित्यर्थः एतेन तयोरन्तर्वेदित्वं सूचितम् तेनोत्तमशिष्यत्वं द्योतितम् तदुक्तम् ‘ उत्तमश्चिन्तितं कुर्यात् ’ इत्यादिना । भट्टास्तु अगृहीतामिति पाठमुक्त्वा छान्दसमिदमित्याहुः ॥ ४ ॥

गो० टी०—तस्येति । ततः वाल्मीकिचिन्तानन्तरं मुनिवेषौ वस्तुतो राजकुमारौ कुशीलवौ कुशलवौ इकारश्छान्दसः । चिन्तयमानस्य भावितात्मनश्चिन्तितपरमात्मनः तदनुकूलशिष्यलाभाय कृतपरमात्मनमस्कारस्येत्यर्थः तस्य महर्षेः पादौ अगृह्णीतां रामायणग्रहणार्थमन्ववर्तेतामित्यर्थः ॥ ४ ॥

५] रा० टी०—पादग्रहणानन्तरकालिकं वृत्तमाह—कुशीलवाविति । धर्मज्ञौ गुरुशुश्रूषणाभिज्ञौ अत एव यशस्विनौ कीर्तिमन्तौ स्वरसम्पन्नौ स्वरोपलक्षितगानविद्यानिपुणौ आश्रमवासिनौ स्वाश्रमवसनशीलौ भ्रातरौ सोदर्यौ राजपुत्रौ राजनिष्ठनित्यजनकतानिरूपितजन्यताविशिष्टौ कुशीलवौ ददर्श एव न तदानीं किञ्चिदुवाचेत्यर्थः तुशब्द एवार्थे न किञ्चिदुवाचेत्यनेन ऋषेः कुशलवविषयकप्रीत्यतिशयः सूचितः ॥ ५ ॥

गो० टी०—कुशीलवाविति । धर्मज्ञौ गुरुशुश्रूषाधर्मज्ञौ राजपुत्रौ आसमाप्तेः वीर्यवन्तौ यशस्विनौ विद्यान्तराभ्यासजकीर्तियुक्तौ भ्रातरौ तुल्यस्वरौ स्वरसंपन्नौ शारीरवन्तौ आश्रमवासिनौ स्वाश्रमवासित्वेन स्नेहविषयभूतौ कुशीलवौ कुशलवौ ददर्श उपदेशयोग्यावाकलय्याजुहावेत्यर्थः अनेन रामाभिषेकानन्तरकाले रामायणकरणं प्राप्तराज्यस्य रामस्येति सर्गादावुक्तम् अनन्तरं कुशलवोत्पत्तिरिति सूचितम् एतज्ज्ञात्वैव वाल्मीक्याश्रमे सीता त्यक्ता रामेण ॥ ५ ॥

६ ] ति० टी०—स त्विति । धीधारणावती मेधा । परिनिष्ठितौ जातवेदाध्ययनौ । उपबृंहणं वेदस्य तत्तदर्थे तात्पर्यग्रहणं तद्रूपायार्थाय प्रयोजनाय अनेन श्रुतितात्पर्यविषयीभूतार्थप्रतिपादकतया प्रामाण्यमस्योपादेयत्वं च सूचितम् ॥ ६ ॥

रा० टी०—स इति । प्रभुः दुर्बोधवस्तुबोधनसमर्थः स वाल्मीकिः मेधाविनौ परमबुद्धिमन्तौ अत एव वेदेषु ऋग्यजुस्सामाथर्वसु परिनिष्ठितौ तदध्ययनसम्पन्नौ तौ कुशलवौ वेदोपबृंहणार्थाय वेदानामुपबृंहणं तात्पर्यबोधनं तदेव अर्थः प्रयोजनं तस्मै अग्राहयत अपाठयत ॥ ६ ॥

गो० टी०—स त्विति । वेदेषु ऋग्यजुःसामाथर्वणलक्षणेषु चतुर्षु विषये मेधाविनौ मेधा धारणक्षमा बुद्धिः ‘ मेधा धीधारणाक्षमा ’ इति यादवः । तद्वन्तौ “ अस्मायामेधास्रजो विनिः ” इति मत्वर्थीयो विनिप्रत्ययः अनेनाक्षरराशिग्रहणफलमध्ययनमुक्तम् । परितो निष्ठा परिनिष्ठा साङ्गाध्ययनं साऽनयोः सञ्जातेति परिनिष्ठितौ तारकादित्वादितच् अनेन विशेषणद्वयेनाधीतसाङ्गवेदत्वादापातप्रतिपन्नवेदार्थत्वाच्च तदुपबृंहणापेक्षित्वमुक्तम् । तौ कुशलवौ प्रभुः स्वतन्त्रो वाल्मीकिः वेदोपबृंहणार्थाय वेदोपबृंहणरूपप्रयोजनाय वेदोपबृंहणरूपस्वग्रन्थपठनायेत्यर्थः उपबृंहणं नाम नानाशाखानुसारेण निर्णीतवेदार्थप्रतिपादको ग्रन्थः । अग्राहयताग्राहयत् स्वार्थे णिच् ॥ ६ ॥

७ ] ति० टी०—काव्यमिति । रामस्यायनं चरितं तत्प्रतिपादकं च महत्काव्यं पौलस्त्यवधमित्येवंनामकं चकार तत्तावदग्राहयतेति पूर्वेण सम्बन्धः यथा कृष्णचरितवर्णनरूपमाघकाव्यस्य शिशुपालवध इति नाम ॥ ७ ॥

रा० टी०—किमपाठयतेत्यत आह—काव्यमिति । चरितव्रतः चरितमाचरितं व्रतं रघुनाथोपासनं येन स मुनिः वाल्मीकिः पौलस्त्यवधं रावणादिवधप्रतिपादकं रामायणं रामचरितप्रतिपादकं सीतायाश्चरितं सीतासम्बन्धिचरितविशिष्टमत एव महत् सर्वश्रेष्ठमत एव कृत्स्नं संपूर्णं एतज्जातीयकादन्यत्सर्वं न्यूनमित्यर्थः एतेन एतल्लाभान्न किञ्चिद्दुर्लभमिति ध्वनितम् । किञ्च कृतां सुकृतिनां लः स्नानं सादरावलोकनादि यस्मिन् सुकृद्भिरादृतमित्यर्थः । तत्काव्यं चकार इति तदेव अग्राहयदित्यर्थः । एवेन पाठान्तरव्यवच्छेदः तेन रामचरितविषयकप्रेमाधिक्य सूचितम् । इत्येवमिति भाट्टपाठः ॥ ७ ॥

गो० टी०—काव्यमिति । चरितव्रतश्चरितव्रतत्वेन निरतिशयज्ञानो वाल्मीकिः काव्यं कवेः कर्म कवयते वर्णयतीति कविः कविवर्णन इत्यस्माद्धातोरौणादिक इप्रत्ययः लोकोत्तरवर्णननिपुण इत्यर्थः यद्यपि “ इगन्ताच्च लघुपूर्वात् ” इति अणा भवितव्यं तथापि “ ब्राह्मणादित्वात् ष्यञ् ” इति काशिकाकारः यद्वा तस्मादेव धातोः “ ऋहलोर्ण्यत् ” इति ण्यत्प्रत्यये आदिवृद्धौ च काव्यमिति रूपदोषवर्जितं गुणालङ्कारसहितं शब्दार्थयुगलमित्यर्थः । तदुक्तं काव्यप्रकाशे ‘ तददोषौ शब्दार्थौ सगुणौ सालङ्कृती पुनः क्वापि ’ इति । वेदोपबृंहणत्वेऽपि कान्तासंमितत्वादस्य काव्यत्वव्यपदेशः । तथाहि त्रिविधः संदर्भः प्रभुसंमितः सुहृत्संमितः कान्तासंमितश्चेति । शब्दप्रधानो वेदः प्रभुसंमितः । अर्थप्रधान इतिहासादिः सुहृत्संमितः । व्यङ्ग्यप्रधानं काव्यं कान्तासंमितम् । महदितिकाव्यविशेषणं तस्य महत्त्वमुत्तमकाव्यत्वम् । तदप्युक्तं तत्रैव ‘इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ’ इति । यद्वा महत्काव्यं महाकाव्यम् । तल्लक्षणमुक्तं दण्डिना ‘ सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ’ इत्यादिना । ननु काव्यं नारम्भणीयम् ‘ काव्यालापांश्च वर्जयेत् ’ इतिनिषेधादित्याशङ्क्याह—रामायणमिति । रमयतीति रामः ‘ रामो रमयतां वरः’ इत्यार्षनिर्वचनात् । यद्वा रमन्तेऽस्मिन् सर्वे जना इति रामः । “ अकर्तरि च कारके संज्ञायाम् ” इति घञ् । सः अय्यते प्रतिपाद्यतेऽनेनेति रामायणम् । अयगताविति धातोः कर्मणि ल्युट् “ पूर्वपदात् संज्ञायामगः ”

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् । जातिभिः सप्तभिर्युक्तं तन्त्रीलयसमन्वितम् ॥ ८ ॥
रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः । वीरादिभी रसैर्युक्तं काव्यमेतदगायताम् ॥ ९ ॥
तौ तु गान्धर्वतत्त्वज्ञौ स्थानमूर्छनकोविदौ । भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ १० ॥
रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ ॥ ११ ॥

इति णत्वम् । समस्तगुणसंपन्नरामविषयत्वान्नास्य निषिद्धत्वं किंतूपादेयत्वमेवेत्यर्थः। तदुक्तं भामहेन 'उपश्लोक्यस्य माहात्म्यादुत्तमाःकाव्यसंपदः' इति । प्रतिपादितं चोद्भटेन 'गुणालङ्कारचारुत्वयुक्तमप्याधिकोज्ज्वलम्। काव्यमाश्रयसंपत्त्यामरुणेवामरद्रुमः' इति। रुद्रटेनाप्युक्तम् 'उदारचरितनिबन्धनात् प्रबन्धप्रतिष्ठा' इति। निषेधस्त्वसत्काव्यविषय इति भावः। इदं च रामचरितप्रतिपादनमप्राधान्येन प्राधान्येन तु सीताचरितमेव प्रतिपाद्यत इत्याह— कृत्स्नं सीतायाश्चरितमिति कृत्स्नं रामायणं सीताचरितपरम् । अत एवोक्तं श्रीगुणरत्नकोशे 'श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे ' इति । आभाणकश्च ' प्रातर्द्यूतप्रसङ्गेन मध्याह्ने स्त्रीप्रसङ्गतः । रात्रौ चोरप्रसङ्गेन कालो गच्छति धीमताम् ' इति । उपायपुरुषकारयोर्मध्ये उपायस्वरूपं भारते दर्शितं पुरुषकारस्वरूपं श्रीरामायण इति रहस्यपदवी । अत एव ' कृपावानविकत्थनः ' इत्याद्युक्तलक्षणधीरोदात्तरूपो रामः कुशलवाभ्यां रामायणं श्रुतवान् । रामायणस्य रामैकपरत्वे स्वेनैव सदसि श्रवणं न सङ्गच्छते सीतापरत्वे तु सङ्गच्छते विरहिणः कामिनीकथाचरितश्रवणस्य स्वाभाव्यात् । एवं व्यञ्जनावृत्त्या सीतारामयोः प्रतिपादनमुक्त्वा शब्दवृत्त्या सिद्धमितिवृत्तमाह—पौलस्त्येति । पुलस्त्यस्य गोत्रापत्यं पौलस्त्यः गर्गादित्वाद्यञ् तस्य वधः वधस्य फलत्वात्तेन व्यपदेशः पौलस्त्यवधमधिकृत्य कृतो ग्रन्थः पौलस्त्यवधः " अधिकृत्य कृते ग्रन्थे " इत्यण् " लुबाख्यायिकाभ्यः प्रत्ययस्य बहुलम् " इति तस्य लुप् यद्वाऽणि पुनरादिवृद्धौ तदेव रूपम् । वधप्रधानत्वादितिवृत्तस्य फलेन व्यपदेशः । तथाहि पञ्चकाव्यप्रतिपाद्यानि । तदुक्तम् 'बीजबिन्दुपताकाख्याः प्रकरी कार्यमित्यपि। अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः' इति । ' आरम्भयत्नप्राप्त्याशा नियताप्तिः फलागमः' इति पञ्चावस्थाः । तत्र 'स्वल्पोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यते तथा ' तच्च बालकाण्डोक्तविष्ण्ववतरणसीतापरिणयादि । ' वस्तुनः सति विच्छेदे बिन्दुरच्छेदकारणम्' इति । यथायोध्याकाण्डे अभिषेकवृत्तान्तेन रावणवधरूपकार्यविच्छेदे प्राप्ते वनवासकरणमच्छेदकारणम् । 'यदन्तरानुवृत्तं स्यात्सा पताकेति कीर्त्यते ' यथा सुग्रीववृत्तान्तः । कथान्तरप्रसङ्गेन प्रकरी स्यात् । प्रदेशभाक् यथा विभीषणादिवृत्तान्तः । ' समग्रफलसम्पत्तिः फलयोगो यथोचितः' यथा रावणवधः । एवंफलत्वात्पौलस्त्यवधमिति निर्देशः । इत्येवेत्यस्यायमर्थः पौलस्त्यवधव्याजेनाप्रधानरामचरितं प्रधानसीताचरितं कृतवानिति यच्चकार तद्गापयामासेति योजना । उत्तरश्लोकेऽगायतामित्यनुवादात् ॥ ७ ॥

८-११ ] ति० टी०—पाठ्य इति । इतः श्लोकचतुष्टयमेकान्वयम् । पाठ्यगेययोर्भावे ण्यत्यतौ तेन पाठे गाने चेत्यर्थः । गानं तन्त्रीनाडीसमुत्थश्रुतिभेदोपेतम् उभयत्रापि मधुरं श्रोतृसुखजनकम् । प्रमाणानि द्रुतमध्यविलम्बितानि। सप्तजातयः षड्जादयः सप्तस्वराः सप्तस्वरविशिष्टगानानुरोधीति यावत्॥८॥ रसैरिति । वीरादीत्यादिना बीभत्साद्भुतशान्तसङ्ग्रहः शृङ्गारादिरसैश्च युक्तम् नवरसयोगीति यावत् । ईदृशं काव्यं तावगायताम् ॥ ९ ॥ तौ विशेषयति—तौ त्विति । गान्धर्वस्य समग्रनाट्यस्य तत्त्वज्ञौ स्थानं च मूर्छना च तयोः समाहारः स्थानमूर्छनं तत्र कोविदौ तत्तत्त्वज्ञौ । ' यदूर्ध्वं हृदयग्रन्थेः कपोलफलकादधः । प्राणसञ्चारणस्थानं स्थानमित्यभिधीयते ॥ उरः कण्ठः शिरश्चेति तत्पुनस्त्रिविधं भवेत् । मन्द्रं मध्यं च तारं च ' इति शाण्डिल्यः । तथा—' यत्रैव स्युः स्वराः पूर्णा मूर्छना सेत्युदाहृता ' इति च । यत्र गीतविशेष इत्यर्थः । रूपिणौ प्रशस्तरूपवन्तौ ॥ १० ॥ रूपेति । अत्र रूपमवयवसंस्थानम् । उक्तस्य स्वरसम्पन्नावित्यस्यैव विवरणं मधुरस्वरेति । बिम्बात्सूर्यादेरुत्थितौ बिम्बाविव प्रतिबिम्बाविव तथा रामदेहादुत्थितौ परौ रामदेहावित्यर्थः ॥ ११ ॥

रा० टी०—ग्रहणानन्तरं तत्काव्यं कुशलवाभ्यां गीतमित्याह—पाठ्य इत्यादिभिः । पाठ्ये पाठे गेये गाने च मधुरं मनोहरम् लोके किञ्चित्पाठे एव मनोहरं किञ्चिद्गाने एव मनोहरम् इदं तु उभयत्रापि मनोहरमित्यर्थः । शृङ्गारादिपञ्चभिः रौद्रादिभिः रौद्रबीभत्साद्भुतशान्तैश्चतुर्भिश्च रसैः संयुक्तमेतत्काव्यं त्रिभिः त्रित्वसंख्याविशिष्टैः प्रमाणैः द्रुतमध्यमविलम्बितैरन्वितं यथा स्यात्तथा सप्तभिः सप्तत्वसङ्ख्याविशिष्टैः जातिभिः'सर्वगीतसमाधारो जातिरित्यभिधीयते । खार्जी चैवाथ नैषादी धैवती पञ्चमी तथा ॥ माध्यमी चैव गान्धारी सप्तमी त्वार्षभी मता' इति शाण्डिल्योक्त्या सर्वगीतसमाधारभूतखार्ज्यादिभिः सप्तभिः बद्धं यथा स्यात्तथा तन्त्रीलयसमन्वितं तन्त्रीशब्दो लक्षणया तन्त्रीयुक्तवीणाशब्दपरः लयशब्दस्तालवेणुमृदङ्गादीनां समानकालिकविरामपरः ताभ्यां युक्तं यथा स्यात्तथा गान्धर्वतत्त्वज्ञौ ' गान्धर्वं गीतशासनम्' इति वैजयन्तीकोशाद्गान्धर्वस्य गीतशास्त्रस्य तत्त्वज्ञौ तात्पर्यवेदितारौ अत एव मूर्छनास्थानकोविदौ मूर्छना च स्थानं च मूर्छनास्थाने तयोः कोविदौ नि-

१ तत्त्वज्ञावित्येव युक्तम् ।

पुणौ मूर्छनाशब्देन वीणादिवादनमुच्यते 'वादने मूर्छना प्रोक्ता' इति वैजयन्तीकोशात् स्थानशब्देन मन्द्रमध्यमतार-रूपस्वरत्रयोत्पत्तिस्थानमुच्यते । तदुक्तं शाण्डिल्येन 'यदूर्ध्वं हृदयग्रन्थेः कपोलफलकादधः । प्राणसञ्चारणस्थानं स्थानमित्यभिधीयते ॥ उरः कण्ठः शिरश्चेति तत्पुनस्त्रिविधं भवेत् । मन्द्रं मध्यं च तारं च'इति।'स्थानमूर्छनकोविदौ'इति भट्टसम्मतः पाठः। तत्र मूर्छनाशब्देन 'यत्रैव स्युः स्वराः पूर्णा मूर्छना सेत्युदाहृता' इति प्रामाण्येन मूर्छनाशब्दः स्वरपूर्णस्थानपर इति व्याख्यातम्। भ्रातरौ सोदर्यौ स्वरसम्पन्नौ खर्जादिस्वरविज्ञौ अत एव रूपिणौ मनुष्यरूपधारिणौ गन्धर्वाविव मनुष्यरूपधारिगन्धर्वसदृशौ रूपलक्षणसंपन्नौ नाटकलक्षणविज्ञौ 'रूपं स्वभावे शुक्लादौ सौन्दर्ये नाटकेप्यसौ' इति भास्करः । मधुरस्वरभाषिणौ मनोहरस्वरभाषणशीलौ रामदेहाद्बिम्बादुत्थितौ बिम्बौ प्रतिबिम्बाविव रामदेहरूपबिम्बोत्थितप्रतिबिम्बसदृशावित्यर्थः अत एव अपरौ तथा रामप्रतियोगिकभेदाभाववन्ताविव तत्त्वेन प्रतीयमानावित्यर्थः । तौ कुशलवौ अगायतामिति चतुर्णामेकत्रान्वयः । तथाशब्द इवार्थे ॥ ८–११ ॥

गो० टी०—उत्तरश्लोके अगायतामित्यनुवादात् यथोपदेशमगायतामित्याह—**पाठ्ये**त्यादिश्लोकद्वयेन । पाठ्यं पाठः भावे ण्यत् । केवलोच्चारणविशेषः । तदुक्तं भरतेन 'षडलङ्कारसंयुक्तं कलाकालसमन्वितम् । यत्पठ्यते नाटकादौ तत्पाठ्यमभिधीयते' इति । गेयं गानं भावे यत् तत्रोभयत्र मधुरं श्राव्यं लोके कानिचित् पद्यानि पाठदशायां मधुराणि न गानदशायाम् अपराणि पुनर्गानदशायामेव न पाठदशायाम् इदं तूभयत्रापीत्यर्थः इतः परं त्रीणि क्रियाविशेषणानि त्रिभिः प्रमाणैर्गानध्वनिपरिच्छेदकैः त्र्यश्रचतुरश्रमिश्रसंज्ञकैः द्रुतमध्यविलम्बितैर्वान्वितं विशिष्टम् । सप्तभिर्जातिभिर्बद्धं शुद्धविकृतसंकीर्णादिष्वष्टादशसु जातिषु प्रधानभूताभिः सप्तभिर्बद्धम् । तदुक्तम् शाण्डिल्येन 'सर्वगीतसमाधारो जातिरित्यभिधीयते । षाड्जी चैवाथ नैषादी धैवती पाञ्चमी तथा ॥ माध्यमी चैव गान्धारी सप्तमी त्वार्षभी मता' इति । तन्त्रीलयसमन्वितं तन्त्रीशब्देन तन्त्रीयुक्तवीणा लक्ष्यते लयशब्देन तालवेणुमृदङ्गादीनामेककालविराम उच्यते ताभ्यां समन्वितम् ॥ ८ ॥ पुनः काव्यविशेषमाह 'रसैः शृङ्गारकारुण्यहास्यवीरभयानकैः । रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम्' इति। आदिशब्देन बीभत्साद्भुतशान्ता गृह्यन्ते। रसो नाम स्थायीभावरूपचित्तवृत्त्यभिव्यक्तिः स्थायीभावश्च नवविधः । तदुक्तम् 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायीभावाः प्रकीर्तिताः' इति । तदभिव्यक्तिश्च विभावादिभिः। तदुक्तम् 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः' इति । विभावादिस्वरूपं सङ्ग्रहेणोक्तम्'कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः । व्यक्तः सतैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति । तत्र शृङ्गारो द्विविधः । संभोगो विप्रलम्भश्चेति 'संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः' इत्युक्तेः अस्य शृङ्गारादिसर्वरससंयुक्तत्वं प्रदर्श्यते । तत्र 'रामस्तु सीतया सार्द्धम्' इत्यारभ्य सीतापहरणवृत्तान्तपर्यन्तेन संभोगो दर्शितः । ततः परेण विप्रलम्भः । विकृताचारवाक्याङ्गविकारवेषैर्धूर्तप्रलापैश्च हास्यरसो व्यज्यते। स च शूर्पणखादिवृत्तान्तेन सुगमः । इष्टवियोगादनिष्टसंबन्धाद्वा करुणः । स च दशरथादिवृत्तान्तेन । व्यवसायाऽविषादाऽसंमोहादिभिर्वीरः यथा लक्ष्मणादिवृत्तान्ते । पाटनताडनादिभी रौद्रः । यथा रावणादिवृत्तान्ते । विकृतक्रूरदर्शनादिभिर्भयानकः यथा मारीचवृत्तान्ते। कुत्सितदर्शनादिभिर्बीभत्सः यथा विराधकबन्धादिवृत्तान्ते । विचित्रशिल्पवाक्यादिभिरद्भुतः यथा रामरावणयुद्धादिषु । शान्तरसः श्रमणादिवृत्तान्तादौ।अलं विस्तरेण। अत्र केचित् 'शोकः श्लोकत्वमागतः' इत्युक्त्याऽस्मिन्प्रबन्धे शोकरस एव प्राधान्येनोच्यते अन्ये तदङ्गतयेत्याहुः। अन्ये तु वीर एव प्रधानभूतः पौलस्त्यवध इति काव्यनामकरणात् इत्याहुः । वयं तु शृङ्गार एव प्रधानरसः । 'सीतायाश्चरितं महत्' इत्युक्तेः । तथोक्तम् 'एको रसो भवेदङ्गी वीरशृङ्गारयोर्द्वयोः। अङ्गान्यन्ये रसाः सर्वे तस्य निर्वहणोद्यताः' इति ॥ ९ ॥ अथ कुशलवयोर्गानसामर्थ्यमाह—**तौ** त्वित्यादिश्लोकद्वयेन।अस्यागायतामिति पूर्वेण संबन्धः।गान्धर्वं गानशास्त्रम् । 'गान्धर्वं गानशासनम्' इति वैजयन्ती । तस्य तत्त्वं तात्पर्यार्थः। तज्जानीत इति गान्धर्वतत्त्वज्ञौ। मूर्छना वीणादिवादनम्। 'वादने मूर्छना न ना' इति वैजयन्ती । स्थानानि मन्द्रमध्यताररूपस्वरत्रयोत्पत्तिस्थानानि।यथोक्तं शाण्डिल्येन 'यदूर्ध्वं हृदयग्रन्थेः कपालफलकादधः । प्राणसञ्चरणस्थानं स्थानमित्यभिधीयते ॥ उरः कण्ठश्शिरश्चेति तत्स्वरास्त्रिविधाः स्मृताः' इति । तेषु कोविदौ तद्विषयसमीचीनज्ञानयुक्तौ। एतेन गानशास्त्रज्ञानतदनुगुणवीणादिवादनतदनुगुणोच्चारणनिपुणाविति दर्शितम्। भ्रातरावित्यनेन श्राव्यताहेतुसमस्वरत्वमुक्तम् । स्वरसम्पन्नौ शारीरयुक्तौ अत एव रूपिणौ मनुष्यवेषधारिणौ गन्धर्वाविव स्थितौ रूपलक्षणसंपन्नौ नाटकलक्षणज्ञौ । गत्यर्था ज्ञानार्थाः । 'रूपं स्वभावे शुक्लादौ सौन्दर्ये नाटके पशौ' इति भास्करः । गानकालिकाभिनयप्रकारज्ञावित्यर्थः । मधुरस्वरं यथा भवति तथा भाषितुं शीलमनयोरिति मधुरस्वरभाषिणौ ताच्छील्ये णिनिः केवलभाषणकालेऽपि मधुरस्वरौ किमुत गानकाले इति भावः। उक्तसकलगुणसम्पत्तिमूलं रामपुत्रत्वमाह—**बिम्बा**दिति। रामदेहरूपाद्बिम्बात्तथा उत्थितौ उद्भूतौ बिम्बौ प्रतिबिम्बाविव स्थितौ।यथा प्रतिमानिर्माणार्थं चातुर्येण निर्मिता प्रतिकृतिर्बिम्बः रामदेहाख्यात्तस्मात्तथा उत्थितौ उत्कीर्णौ अपरौ बिम्बाविव स्थितौ 'प्रतिबिम्बे तत्कृतौ च प्रतिकृत्यां च मण्डले । लाञ्छनेऽपि च बिम्बोऽस्त्री' इति भास्करः।एवंभूतौ कुशलवावेतत्काव्यमगायतामिति संबन्धः ॥ १० ॥ ११ ॥

तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् । वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥ १२ ॥
ऋषीणां च द्विजातीनां साधूनां च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुः सुसमाहितौ ॥ १३ ॥
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ । तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ॥ १४ ॥
मध्येसभं समीपस्थाविदं काव्यमगायताम् । तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ॥ १५ ॥
साधु साध्विति तावूचुः परं विस्मयमागताः । ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ॥ १६ ॥

---

१२-१३ ] ति० टी०—ताविति । धर्म्यं धर्मादनपेतम् । वाचोविधेयं विनापि पुस्तकं पाठयोग्यम् ॥ १२ ॥ ऋषीणां द्विजातीनामिति गोबलीवर्दन्यायेन । साधूनां द्विजेतराणामपि यथोपदेशं जगतुः । तत्त्वज्ञौ काव्यस्य गानादेश्च तत्त्वज्ञौ । सुसमाहितौ सुतरां स्थिरचित्तौ ॥ १३ ॥

रा० टी०—तदेव विशदयन्नाह—तावित्यादि सार्द्धश्लोकद्वयेन । सर्वलक्षणलक्षितौ सर्वाणि निखिलानि लक्षणानि सामुद्रिकोक्तसच्चिह्नानि तैर्लक्षितौ युक्तौ अत एव महाभागौ नित्यपरमभाग्यवन्तौ अत एव महात्मानौ पूजितस्वरूपौ अत एव समाहितौ एकाग्रचित्तौ अत एव तत्त्वज्ञौ वेदशास्त्रतात्पर्यवेदितारौ अत एवानिन्दितौ निन्दारहितौ तौ अमृतवदास्वादनीयगानविशिष्टौ राजपुत्रौ तौ कुशीलवौ धर्म्यं धर्मादनपेतम् जनकर्त्तव्यबोधकमित्यर्थः । आख्यानं रामचरितप्रतिपादकम् अत एव उत्तमं सर्वश्रेष्ठं तत् रामायणं काव्यमादिकविवाल्मीकिनिष्पादितं सर्वं वाचोभिधेयं पुस्तकावलोकनाद्यन्तरापि वचनार्हं कृत्वा अभ्यासतः सम्पाद्य ऋषीणां मन्त्रद्रष्टॄणां द्विजातीनां सामान्यब्राह्मणक्षत्रियविशां च साधूनां जात्याद्यभिमानरहितपरमहंसानां च समागमे सम्मेलने यथोपदेशं गुरूपदेशमनतिक्रम्य जगतुः गानं चक्रतुः । क्वचिल्लक्ष्यलक्षणलक्षिताविति पाठः अर्थः स्पष्ट एव । 'तत्त्वौ राममृतपुच्छेषु क्रोडेऽम्लेऽक्षे च कुत्रचित्' इति मेदिनीकोशात्तशब्दोऽमृतपरः । सार्द्धश्लोकद्वयमेकान्वयि १२।१३

गो० टी०—न केवलं तस्याध्ययनं धारणं प्रकाशनं च कृतमित्याह—तावित्यादि । सार्द्धश्लोकद्वयमेकान्वयम् क्रियाभेदात्तच्छब्दावृत्तिः । यद्वा राजपुत्रौ सन्तौ तौ मुनिपुत्रौ मुनिपुत्रवेषधरावित्यर्थः । अनिन्दितौ यथोपदेशं गानेन निन्दानर्हौ यथोपदेशं गुरूपदेशमनतिक्रम्य तत्त्वज्ञौ पाठशुद्धिज्ञौ समाहितौ सावधानौ कुत्राप्यंशे विस्मृतिरहिताविल्यर्थः । महात्मानौ महाबुद्धी महाभागौ एतादृशगुणहेतुभूतमहाभाग्यौ 'भागा भाग्यांशतुल्यांशौ' इति वैजयन्ती । सर्वलक्षणलक्षितौ लक्षितसर्वलक्षणौ । ज्ञातसर्वशब्दलक्षणावित्यर्थः । तौ कुशलवौ कार्त्स्न्येन धर्म्यं धर्मादनपेतमुत्तममाख्यानं पुरावृत्तकथनरूपं तद्रामायणाख्यं सर्वं काव्यं वाचो विधेयमावृत्तिबाहुल्येन वाग्वशवर्ति कृत्वा ऋषीणां च साधूनां द्विजातीनां च समागमे सदसि जगतुः १२।१३

१४ ] ति० टी०—'लक्ष्यलक्षण—' इति पाठे सामुद्रिकवेद्भिर्लक्ष्यं परीक्ष्यं लक्षणं सुलक्षणं तेन लक्षितौ युतौ अत एव महात्मानौ महाभागौ च भागो भाग्यमत्र । 'गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि । राजर्षीणां पुण्यकृतां साधूनां च समागमे ॥ गुरुणैवमनुज्ञातौ प्रकृत्या मधुरस्वरौ' इति क्वचित्पठ्यते तदनन्वयीति स्पष्टमेव । भावितात्मनां शुद्धचित्तानाम् ॥ १४ ॥

रा० टी०—गानस्थलं निर्दिशन्नाह—ताविति । कदाचित्कस्मिंश्चित्समये समेतानामेकत्र समागतानां भावितात्मनां परिशीलितपरमात्मनाम् ऋषीणां समीपस्थौ कुशलवौ मध्येसभं सभामध्ये इदं रामायणं काव्यमगायताम् मध्येसभमित्यस्य स्थाने आसीनानामिति पाठे आसीनानां मध्ये इत्यर्थः ॥ १४ ॥

गो० टी०—अथ तस्य काव्यस्य महाजनपरिगृहीतत्वं दर्शयितुमाह—तावित्यादि । तौ कुशीलवौ कदाचित् रामाश्वमेधकाले भावितात्मनां निश्चितधियां समेतानामश्वमेधे संमिलितानामासीनानां क्रियाकलापावसाने सुखमासीनानामृषीणां समीपस्थौ सन्तौ इदं काव्यमगायताम् ॥ १४ ॥

१५-१६ ] ति० टी०—मध्येसभमित्यव्ययीभावः । समीपस्थौ सहितावित्यर्थः । तद्गानम् ॥ १५ ॥ १६ ॥

रा० टी०—गेयप्रशंसां कुर्वन्नाह—तदिति । तद्गीयमानरामायणं श्रुत्वा परं विस्मयं केन सुकृतेन इदमस्माभिः प्राप्तमित्याश्चर्यमागताः प्राप्ताः अत एव बाष्पपर्याकुलेक्षणाः सर्वे तत्रागतास्ते मुनयः साधुसाध्विति इदमित्यूचुः । हर्षे वीप्सा । अपिशब्द इत्यर्थे ॥ १५ ॥

गो० टी०—सामान्यतः काव्यप्रशंसामाह—तदिति । तत्काव्यं श्रुत्वा परं विस्मयमागताः बाष्पपर्याकुलेक्षणाः सर्वे मुनयस्तौ साधु साध्विति ऊचुः प्रशशंसुरित्यर्थः ॥ १५ ॥

१६] रा० टी०—गेयप्रशंसामुक्त्वा गातृप्रशंसामाह—ते इति । धर्मवत्सलाः धर्माः धर्मस्वरूपाः वत्सलाः वात्सल्यरसवन्तः ते एव ते इति कर्मधारयः । अत एव प्रीतमनसः प्रसन्नचित्ताः ते सर्वे मुनयः गायमानौ अद्भुतगानं कुर्वन्तौ अत एव प्रशस्तव्यौ प्रशंसनीयौ कुशीलवौ प्रशशंसुः 'प्रशस्तव्यावित्यत्र आगमशास्त्रस्यानित्यत्वादिडभावः नलोपश्छान्दसः । धर्मबाहुल्यात् धर्मवतां धर्मत्वेन व्यपदेशः ॥ १६ ॥

---

१ निर्मत्सरा इत्यर्थं इति भूषणटीका । २ द्विजेतरेषामिति युक्तम् । ३ विशदयन्निति भाति । ४ विद्भिरिति युक्तम् ।

प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ । अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ॥ १७ ॥
चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् । प्रविश्य तावुभौ सुष्ठु तथा भावमगायताम् ॥ १८ ॥
सहितौ मधुरं रक्तं संपन्नं स्वरसंपदा । एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महर्षिभिः ॥ १९ ॥
संरक्ततरमत्यर्थं मधुरं तावगायताम् । प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ॥ २० ॥
प्रसन्नो वल्कलं कश्चिद्ददौ ताभ्यां महायशाः । अन्यः कृष्णाजिनमदाद्यज्ञसूत्रं तथापरः ॥ २१ ॥

---

गो० टी०–गातृप्रशंसामाह–त इति । धर्मवत्सलाः निर्मत्सरा इत्यर्थः ते सर्वे मुनयः प्रीतमनसः सन्तः गायमानौ अत एवं प्रशस्तव्यौ प्रशंसितुमर्हौ कुशलवौ प्रशशंसुः ॥ १६ ॥

१७ ] ति० टी०–प्रशस्तव्याविवितीडभावनलोपौ छान्दसौ । अहो आश्चर्यम् ॥ १७ ॥

रा० टी०–प्रशंसास्वरूपमाह–अहो इति । गीतस्य गानस्य माधुर्यं विशेषतः अन्यगानाद्विलक्षणमत एव श्लोकानां च माधुर्यं विशेषतः श्लोकान्तरेभ्यः विलक्षणमित्यहो आश्चर्यम् एतेनैतादृग्गानं कर्तुर्न पूर्वमनुभूतिरिति हेतुर्ध्वनितः । विलक्षणत्वमेवाह–चिरेति । चिरनिर्वृतं बहुकालिकरामव्यापारसंपन्नमेतच्चरितमल्पकालतः प्रत्यक्षमिव दर्शितम् । अद्भुतगानविशिष्टप्रबन्धेन साक्षादिवकृतमित्यर्थः । अपिशब्दादल्पकाललाभः ॥ १७ ॥

गो० टी०–काव्यप्रशंसाप्रकारमाह–अहो इति । गीतस्य गानस्य माधुर्यमहो आश्चर्यं श्लोकानां तु माधुर्यं विशेषतः अहो आश्चर्यं गानतोऽपि श्लोकमाधुर्यं अतिशयितमित्यर्थः। तमेव विशेषमाह–चिरेति । एतत्काव्यप्रतिपाद्यं कथाशरीरं चिरनिर्वृत्तमपि बहुकालान्निष्पन्नमपि प्रत्यक्षमिव प्रत्यक्षतयाऽनुभूयमानमिव दर्शितम् अनेन काव्येन चोदितं पाकविशेषात्सम्यः सर्वार्थं विशदतरमवगमयतीदं काव्यमित्यर्थः ॥ १७ ॥

१८ ] ति० टी०–चिरेति । एतद्रावणवधान्तचरितम् । एवमृषिप्रशंसोत्तरं पुनस्तयोर्गानमाह–भावं काव्याभिप्रायं तत्तद्रसरूपं प्रविश्य तन्मयीभूय सुष्ठु यथा श्रोतॄणां रसाविर्भावो भवति तथागायतामित्यर्थः ॥ १८ ॥

रा० टी०–गानगेयविलक्षणत्वमुक्त्वा गातृविलक्षणत्वं बोधयंस्तत्प्रशंसास्वरूपमाह-प्रविश्येति । सहितौ समलयादिविशिष्टौ तावुभौ कुशलवौ मधुरं माधुर्यविशिष्टं रक्तं श्रोत्रानुरागविषयीभूतं स्वरसम्पदा खर्जादिसम्पन्नं यथा भवति तथा भावं रतिहासादिरूपं सुष्ठु प्रविश्य तत्तन्मयीभूय अगायतां श्रोतृतत्तद्रसनिष्पादजनकीभूतं गानं चक्रतुरित्यर्थः ॥ १८ ॥

गो० टी०–गातृप्रशंसाप्रकारमाह–प्रविश्येति । सहितौ समलयादियुक्तावित्यर्थः तावुभौ कुशीलवौ तदा मुनिजनश्रवणकाले भावं सुष्ठु प्रविश्य रतिहासादिभावो यथा प्रकाशितो भवति तथावगाह्येत्यर्थः स्वरसंपदा षड्जादिस्वरसंपदा संपन्नमत एव मधुरं रमणीयं रक्तं रागयुक्तं च यथा भवति तथा अगायताम् ॥ १८ ॥

१९ ] ति० टी०–सहिताविति । मधुरं पाठतो गानतश्च । रक्तमुच्चैः स्वरसम्पदा षड्जादिस्वरसम्पदा सम्पन्नं यथा भवति तथागायतामिति पूर्वेण सम्बन्धः। एवम् 'अहो गीतस्य' इत्याद्युक्तरीत्या ॥ १९ ॥

रा० टी०–एवमिति । तपःश्लाघ्यैः ज्ञानजनितप्रशंसाविशिष्टैः अतएव महात्मभिः पूजितस्वरूपैर्मुनिभिः एवं प्रशस्यमानौ तौ अमृतवदास्वादनीयगानविशिष्टौ तौ प्रसिद्धौ कुशलवौ अत्यर्थं विलक्षणार्थविशिष्टं मधुरं माधुर्यगुणप्रधानकं रामायणं संरक्ततरं श्रोतॄणामत्यनुरागविषयीभूतं यथा भवति तथा अगायताम 'तश्चौरामृतपुच्छेषु क्रोडेऽम्लेऽक्षे च कुत्रचित्' इति मेदिनीकोशात्तशब्दोऽमृतपरः ॥ १९ ॥

गो० टी०–प्रशंसाजनितोत्साहौ पुनरतिशयेनागायतामित्याह–एवमिति । तपःश्लाघ्यैः श्लाघ्यतपस्कैः अनसूयकैरिति यावत् महात्मभिः महाबुद्धिभिः विशेषज्ञैरिति भावः तादृशैरेवमुक्तरीत्या प्रशस्यमानौ श्लाघ्यमानौ तौ संरक्ततरमतिशयेन समीचीनरागयुक्तमत्यर्थं भृशं मधुरं च यथा भवति तथा तावगायताम् क्रियाभेदात्तच्छब्दावृत्तिः ॥ १९ ॥

२० ] ति० टी०–संरक्ततरमत्युच्चतरं तथाप्यत्यर्थं मधुरम्। ततो रामायणगानश्रवणानन्दपरवशानां मुनीनां चेष्टा आह–प्रीत इति । संस्थितः सभायामिति शेषः ॥ २० ॥ २१ ॥

रा० टी०–प्रीत इति । प्रीतः गानश्रवणजनितप्रीतिविशिष्टः । अत एव संस्थितः उत्थितः किञ्च दानकालयोग्यसम्यक्स्थितिविशिष्टः कश्चिन्मुनिः ताभ्यां कुशलवाभ्यां कलशं जलाहरणपात्रं ददौ प्रसन्नः महायशाः गानाभिज्ञत्वजनितकीर्तिविशिष्टः कश्चिदपरो मुनिः ताभ्यां वल्कलमाच्छादनादियोग्यवृक्षविशेषत्वचं ददौ ॥ २० ॥

गो० टी०–अथ प्रीतिकारितयथोचितपारितोषिकप्रदानमाह–प्रीत इति । संस्थितः उत्थितः ' संस्था स्थितौ व्यवस्थायाम्'इति भास्करः।कलशं जलाहरणपात्रं प्रीत्यतिशयेनोत्थाय ददावित्यर्थः। महायशाः गानशास्त्रविषयकीर्तिमान् गीतितारतम्यज्ञ इत्यर्थः॥ २० ॥

---

१ प्रीतः कश्चिदेतस्मादारभ्य मुनयः सत्यमादिन इत्यन्तो ग्रन्थः प्रक्षिप्तः कपुस्तके ।

कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः । बृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः ॥ २२ ॥
ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः । काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः ॥ २३ ॥
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः । यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथापरः ॥ २४ ॥
औदुम्बरीं बृसीमन्यः स्वस्ति केचित्तदावदन् । आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ॥ २५ ॥
ददुश्चैवं वरान्सर्वे मुनयः सत्यवादिनः । आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् ॥ २६ ॥
परं कवीनामाधारं समाप्तं च यथाक्रमम् । अभिगीतमिदं गीतं सर्वगीतिषु कोविदौ ॥ २७ ॥

---

२१] रा० टी०–अन्य इति। अन्यः मुनिः कृष्णाजिनमदात् । तथाऽपरः यज्ञसूत्रमदात् । कश्चित्कमण्डलुं प्रादात् । अन्यो महामुनिः मौञ्जीं प्रादात् ॥ २१ ॥

गो० टी०–एवं मुनिजनप्रशंसामुक्त्वा तदितरसकलजनप्रशंसामाह–आश्चर्यमित्यादिना । श्लोकत्रयमेकं वाक्यम् । आख्यानं प्रबन्धविशेषः । 'कथा स्वाख्यायिकाऽऽख्यानम्' इति यादवः इतिहास इत्यर्थः । मुनिना वाल्मीकिना संप्रकीर्तितं सम्यक् लक्षणवत्तया प्रकर्षेण विस्तरेण कीर्तितं कथितम् । कवीनां परमाधारं काव्यं काव्यस्य लक्षणमित्युक्तरीत्या कवीनां काव्यनिर्माणमूलमित्यर्थः। यथाक्रमं क्रममनतिक्रम्य समाप्तं मध्येऽविच्छिन्नमित्यर्थः। यथाकृतामिति पाठे यथाकर्तुमारब्धं तथा समाप्तमित्यर्थः । इदमाश्चर्यमाश्चर्यावहमित्यर्थः ॥ २१ ॥

२२ ] ति० टी०–बृसी ऋषीणामासनम् ॥ २२–२४ ॥

रा० टी०–बृसीमिति । तदा तस्मिन्काले अन्यः बृसीम् ऋषियोग्यमासनं प्रादात् । अपरो मुनिः कौपीनं प्रादात् । तदा अपरः हृष्टः मुनिः कुठारं ददौ ॥ २२ ॥

गो० टी०–प्रबन्धं प्रशस्य गातारौ प्रशंसति–अभिगीतमिति । हे सर्वगीतेषु कोविदौ समर्थौ ! युवाभ्यामायुष्यमायुर्वर्द्धकं पुष्टिजनकं सत्यपि आयुषि कार्श्ये तस्याकिञ्चित्करत्वात् पुष्टिकरं सर्वाभिः श्रुतिभिः स्वरारम्भकावयवैर्मनोहरम् । तदुक्तम् ' प्रथमश्रवणाच्छब्दः श्रूयते यः स्वमात्रतः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ' इति । इदं गीतमभिगीतं शोभनं गीतम् अभिः पूजायाम् यद्वा इदं गीतं सर्वगीतेषु अभिगीतामित्यन्वयः ॥ २२ ॥

२३] रा० टी०–काषायमिति। अपरः मुनिः काषायं ब्रह्मचारिधार्यकुसुम्भरक्तं वस्त्रं ददौ । अन्यो मुनिः चीरं खण्डपटं ददौ । अन्यस्तु जटाबन्धनं जटाबन्धनयोग्यं काष्ठरज्जुं पालाशादिमूलनिर्मितरशनां मुदान्वितः सन् ददौ ॥ २३ ॥

गो० टी०–प्रशस्यमानाविति। अस्यादाविति शब्दोऽध्याहार्यः। तत्र यज्ञवाटे रथ्यासु राजमार्गेषु च सर्वत्रेत्थं प्रशस्यमानौ तौ कदाचिद्भरताग्रजो रामो ददर्श भरतमुखेन ददर्शेत्यर्थः ॥२३॥

२४] रा० टी०–यज्ञेति। कश्चिदृषिः यज्ञभाण्डं तथाऽपरः काष्ठभारम् अन्यः औदुम्बरीमुदुम्बरनिर्मितां बृसीं पीठं ददाविति पूर्वेणान्वयः । तदा केचिदगृहीतवस्त्रादिकाः स्वस्ति अवदन् २४

गो० टी०–स्वेति । ततो दर्शनानन्तरं शत्रुनिबर्हणो रामः पूजार्हौ स्वप्रबन्धगातृत्वेन श्लाघार्हौ भ्रातरौ कुशीलवौ तुल्यवयोरूपादिमत्त्वेनाश्चर्यकरौ। स्ववेश्म स्वशालागृहमानीय । नयतिर्द्विकर्मकः । पूजयामास श्लाघयामास ॥ २४ ॥

२५ ] ति० टी०– स्वस्तीत्याद्याशीः ॥ २५ ॥ आश्चर्यमित्यादि मनोहरमित्यन्तमेकं वाक्यम् ॥ २६ ॥

रा० टी०–आयुष्यमिति । तदा तस्मिन्काले मुदा हर्षेण अपरे महर्षयः आयुष्यं प्राहुः एवमनेन प्रकारेण सत्यवादिनः सर्वे अन्येपि मुनयः वरान् स्वस्वयोग्यान्ददुः एतेन तदृषीणां परमानन्दः सूचितः तेनैतत्प्राप्तिरेव परो लाभ इति तेषां निश्चयः सूचितः। अत्र अन्यः कृष्णाजिनमदादित्यादि ददुश्चैवं वरान्सर्वे इत्येतत्पर्यन्ताः पञ्चश्लोकाः भूषणाङ्कितपुस्तकेषु न दृश्यन्ते तत्र हतुर्लेखकप्रमादो बोध्यः सर्वपुस्तकान्तरेष्वेषां प्रसिद्धेः सन्दर्भानुकूलत्वाच्च॥२५॥आश्चर्यमिति। आश्चर्यं वाङ्मनसगोचरातीतवस्तुबोधकत्वेन स्वभावसिद्धमाधुर्यप्रधानत्वेन च सर्वतन्त्रविलक्षणमाख्यानं प्रबन्धरूपमत एव कवीनां सहृदयाभिज्ञानां परमुत्कृष्टमाधारं सहृदयहृदयाभिहारकमित्यर्थः।मुनिना रघुनाथचरितमननशीलवाल्मीकिना संप्रकीर्तितमिदं रामायणं यथाक्रमं क्रममनतिक्रम्य समाप्तं कुशलवकर्तृकसमाप्तिमगमदित्यर्थः ॥२६॥

गो० टी०–अथास्य प्रबन्धस्य प्रबन्धनायकभूतमहापुरुषपरिग्रहमाह–आसीन इत्यादिना। द्वयोरेकान्वयः । प्रभुः स्वामी तदनुरूपतया काञ्चने सौवर्णे दिव्ये स्वर्गाद्दशरथेनानीते सिंहासने आसीनः सचिवैर्मन्त्रिभिर्भ्रातृभिश्च उपोपविष्टः परिवृत इत्यर्थः । "प्रसमुपोदः पादपूरणे" इति द्विरुक्तिः। परं शत्रुं तापयतीति परन्तपः "द्विषत्परयोस्तापेः" इति खच् "खचि ह्रस्वः" इत्युपधाह्रस्वः "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः। अनेन व्यासङ्गरहितत्वं सूचितम् । नियतः अश्वमेधे दीक्षितः स रामः रूपसंपन्नौ भ्रातरौ दृष्ट्वा लक्ष्मणादीनुवाच ॥ २५ ॥ २६ ॥

२७ ] ति० टी०–परमिति । कवीनामाधारं वर्णनीयार्थस्य प्रकारभेदलाभद्वारा । हे सर्वगीतिषु कोविदौ कुशीलवौ, इदं गीतं गायनयोग्यं वस्त्वभिगीतं सुष्ठु गीतं यथाक्रमं समासं समापितं च । 'अविगीतम्' इति पाठेऽनवद्यम् । यथा तथा गीतमित्यर्थः ॥ २७ ॥

रा० टी०–अभीति । सर्वगीतिषु कोविदौ हे सर्वगीताभि-

आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम् । प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ ॥ २८ ॥
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः । स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ ॥ २९ ॥
पूजयामास पूजार्हौ रामः शत्रुनिवर्हणः । आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ॥ ३० ॥
उपोपविष्टैः सचिवैर्भ्रातृभिश्च समन्वितः । दृष्ट्वा तु रूपसंपन्नौ विनीतौ भ्रातरावुभौ ॥ ३१ ॥
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा । श्रूयतामेतदाख्यानमनयोर्देववर्चसोः ॥ ३२ ॥
विचित्रार्थपदं सम्यग्गायकौ समचोदयत् । तौ चापि मधुरं रक्तं स्वचित्तायतनिःस्वनम् ॥ ३३ ॥

---

कुशलवौ आयुष्यमायुर्वर्द्धकं पुष्टिजननं पुष्टिजनकं सर्वश्रुति- सर्वाश्श्रुतयः तात्पर्यवृत्त्या यस्मिन् मनोहरं सहृदयहृदयापकर्षकमिदं गीतं गानयोग्यरामचरितमभिगीतं भवद्भ्यां मनोहरगानविषयीभूतं कृतमित्यर्थः एतेन ऋषीणां परमानन्दो जात इति ध्वनितम् । सर्वगीतिषु इति पाठः भट्टटीकायुक्तपुस्तकेषु दृश्यते अर्थे तु न वैलक्षण्यम् ॥ २७ ॥ * §

२८ ] ति० टी०–आयुष्यमायुर्जनकम् । पुष्टिरभ्युदयः। सर्वश्रुतिमनोहरं सर्वश्रुतीनां मनांस्युपनिषदस्तदर्थहरमित्यनेन मोक्षदं गीतमित्येवं सर्वत्र प्रशस्यमानौ । तत्रायोध्यायाम् ॥२८॥

रा० टी०–प्रशस्यमानाविति । रथ्यासु अल्पवीथिषु राजमार्गेषु च सर्वत्र मुन्याश्रमादिषु प्रशस्यमानौ गायकौ गानकर्तारौ कुशलवौ कदाचित्कस्मिँश्चित्समये भरताग्रजो रामो ददर्श ॥ २८ ॥

२९ ] ति० टी०–रथ्यासु स्वल्पवीथिषु राजमार्गेषु च गायमानौ तौ कदाचिद्भरताग्रजो रामो ददर्शेत्यन्वयः ॥ २९ ॥

रा० टी०–स्ववेश्मेति । ततः कुशलवकर्मकदर्शनानन्तरं शत्रुनिबर्हणः स्वाश्रितारिदोषनिवर्तकः रामः पूजार्हौ पूजायोग्यौ भ्रातरौ कुशीलवौ स्ववेश्म स्वगृहमानीय चकारेण स्वदत्तासने स्थापयित्वा पूजयामास च प्रशशंसैव एवेन कृत्यान्तरव्यवच्छेदः तेन रामस्य प्रेमाधिक्यं सूचितम् । द्वितीयश्चकार एवार्थः ॥ २९ ॥

३०–३२ ] ति० टी०–॥ ३० ॥ 'उपोपविष्टसचिवः' इति पाठे उप समीप उपविष्टाः सचिवा यस्येत्यर्थः । 'उपोपविष्टैः सचिवैः' इति पाठे समीपस्थैर्मन्त्रिभिर्भ्रातृभिश्च समन्वित इत्यर्थः । ' आत्मरूपसंपन्नौ ' इति पाठे आत्मसदृशावित्यर्थः । ' दृष्ट्वा तु रूपसंपन्नौ ' इति प्रचुरः पाठः ॥ ३१ ॥ अनयोः सकाशादेतदाख्यानं श्रूयतामिति लक्ष्मणादीनुवाच ॥ ३२ ॥

रा० टी०–आसीन इति । तदा तस्मिन्काले प्रभुः महाराजाधिराजः अत एव काञ्चने स्वर्णमये दिव्ये प्राकृतविलक्षणे सिंहासने आसीनः अत एव परन्तपः आश्रितारिनिवर्तकः सचिवैर्मन्त्रिभिः भ्रातृभिश्च उपोपविष्टः परिवृतः चकारान्तरेण छत्रचामरादिमहाराजाधिराजोपस्करविशिष्टः नियतः स रामः रूपसम्पन्नौ उभौ तौ कुशलवौ दृष्ट्वा अवलोक्य देववर्चसोः अनयोर्बालयोः संबन्धि विचित्रार्थपदं विलक्षणवाच्यवाचकविशिष्टमाख्यानं सम्यक् श्रूयताम् इदं लक्ष्मणं शत्रुघ्नं भरतं च उवाच तथा तेन प्रकारेण गायकौ समचोदयत् गीयतामिदमिति प्रेरयामास त्रयाणामेकत्रान्वयः तुश्चार्थे ॥ ३०–३२ ॥

गो० टी०–श्रूयतामिति । देववर्चसोः देवतुल्यतेजसोः । रूपसंपत्तिरपि गीतिरस्यैतासामर्घाति भावः । अनयोः कुशीलवयोः संबन्धि विचित्रार्थपदं इदमाख्यानं श्रूयतामित्युपस्कार्यं सम्यग्गायिनौ तावचोदयत् गायनाय प्रेरयामासेत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०–विचित्रार्थपदमिति पूर्वान्वयी । ततो गायकौ गातुं प्रैरयत् । स्वचित्तायतनिःस्वनं स्वस्य श्रोतृचित्तस्य चानुरूप आयतस्तारो निःस्वनो नादो यत्र तथा । स्व बलानुरूपं श्रोतृचित्ताह्लादकं च यथा भवति तावद्वस्वरमिति फलितम् ॥ ३३ ॥

रा० टी०–प्रेरणानन्तरकालिकवृत्तमाह–ताविति । अत्यर्थं गूढतात्पर्यार्थकं विश्रुतार्थं विश्रुतः श्रुतिप्रसिद्धः अर्थो यस्य तन्मधुरं स्वाभाविकमाधुर्यविशिष्टमत एव रक्तं श्रोत्रानुरागविषयीभूतं रामायणं सञ्चितायतनिस्वनं सञ्चितः सम्यक् संपादितः आयतो दीर्घो निस्वनः आलापो यस्मिंस्तत् तन्त्रीलयवत्तन्त्र्युपलक्षिततन्त्रीमृदङ्गतालादीनां समानकालिकविश्रामः अस्ति अस्मिन्निति तन्त्रीलयवत् यथा स्यात्तथा तौ प्रसिद्धौ वीरौ कुशलवौ अगायताम् ' तौ चापि मधुरं रक्तं स्वचित्तायतनिःस्वनम्' इति भट्टपाठः। स्वस्य श्रोतृचित्तस्य च अनुरूप आयतः तारो निःस्वनो नादो यत्रेत्यर्थस्तैर्व्याख्यातः ॥ ३३ ॥

गो० टी०–ताविति । सर्वाणि क्रियाविशेषणानि मधुरं पाठतो गानतश्च मनोहरं रक्तं रागवत् स्वञ्चितः छुतरां पूजितः आयतो दीर्घः निःस्वन आलापो यस्मिन् । तन्त्रीलयवत् तन्त्र्यारोपलयाभ्यां युक्तमत्यर्थं भृशं विश्रुतार्थं विस्पष्टार्थम् ॥ ३३ ॥

---

* शिरोमणिभूषणकाराभ्यां त्रयोदशश्लोकः षट्चरणः स्वीकृतस्तेन तदारभ्य त्रयस्त्रिंशदवधिकास्तट्टीकाङ्का अर्धाधिक्येन विज्ञेयाः ।

§ २१।२२।२३।२४।२५।२६ स्थानेषु पतिता गो०टी० २६।२७।२८।२९।३०।३१ स्थानेषु क्रमतो विज्ञेया ।

१ गीतिरम्यतेति भाति ।

तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् । ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ॥
श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि । ॥ ३४ ॥
इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ ।
ममापि तद्भूतिकरं प्रचक्षते महानुभावं चरितं निबोधत ॥ ३५ ॥

---

३४ ] ति० टी०—तन्त्रीलयवत्तन्त्रीशब्दसदृशम् । विश्रुतार्थं विशेषतः श्रुतमात्रेणार्थबोधजनकं यथा भवति तथातिशयेनागायतामित्यन्वयः । सर्वगात्राणि श्रोतॄणां सर्वगात्राणि ह्लादयद्रोमाञ्चादिप्रादुर्भावेणानन्दानुभावनसमर्थानि कुर्वत् । मनस आह्लादो नाम निद्रायामिव विस्मृतान्यव्यापारता । हृदयानि । हृदयमित्युपनिषन्निर्वचनाद्धृदयं प्रत्यगात्मा । उपाधिभेदाद्बहुवचनम् । तस्य ह्लादो नाम तत्सुखभोगः । श्रोत्रं कर्णशष्कुली तदाश्रयं श्रोत्रेन्द्रियं तस्य सुखम् ॥ ३४ ॥

रा० टी०—ह्लादयदिति । श्रोत्राश्रयसुखं श्रोत्रं कर्णशष्कुली आश्रयो यस्य तच्छ्रोत्राश्रयं श्रोत्रेन्द्रियं तस्य सुखं यस्मात्तत् । सर्वगात्राणि निखिलावयवान् मनांसि हृदयानि हृत् हृदयमयं स्थानं येषां तानि सान्तर्यामिजीवजातानि च ह्लादयत् गेयं गानं जनसंसदि जनाकुलसभायां बभौ शुशुभे जनाकुलसभायामित्युक्त्या तद्गानस्यातिप्रख्यातिर्ध्वनिता तेन तस्यालौकिकचमत्कारकारित्वं व्यक्तम् ॥ ३४ ॥

गो० टी०—ह्लादयदिति । सर्वगात्राणि सर्वावयवान् हृदयानि गात्रान्तरवर्तीनि मनोधिष्ठानानि मनांसि च ह्लादयत् सुखयत् श्रोत्राश्रयसुखं श्रोत्रं कर्णशष्कुली तदाश्रयं श्रोत्रेन्द्रियं तत्सुखं तत्सुखकरं तत्कुशलवकृतं गेयं गानम् भावे यत् । जनसंसदि सभायाम् । जनशब्दो मण्डपव्यावृत्त्यर्थः । बभौ प्रचकाशे अजृम्भतेत्यर्थः ॥ ३४ ॥

३५ ] ति० टी०—अथाख्यानस्य श्रवणे प्रयोजनमुपदिशन्पुनरपि लक्ष्मणादीनत्यादरेण श्रवणार्थं प्रेरयति—इमाविति । तत्तस्मात् महातपस्विनावाश्रमवासात्तपोयुक्तौ स्वरूपतस्त्वाजानुबाहुत्वादिपार्थिवलक्षणान्वितौ मुनिशिष्यत्वाच्च मुनी इमौ प्रबन्धस्य गायकौ । चरितं गेयं काव्यं च महानुभावं शब्दार्थालङ्कारललितसंदर्भत्वादिवैभवेन सार्वभौमविषयत्वेन च महावैभवम् अतो निबोधतादरेण शृणुत । किंच । यतस्तत्काव्यं तच्छ्रवणं च ममापि भूतिकरमिहामुत्राभ्युदयकरं प्रचक्षतेऽनेककल्पजीविनो वृद्धाः पूर्वपूर्वरामायणस्य तैस्तत्फलत्वोक्त्या अस्यापि तत्फलकत्वमिति भाव इति प्राञ्चः । वस्तुतो मम चरितं मत्संबन्धि तच्चरितं मच्चरितार्थप्रतिपादकं तल्लोकोत्तरं काव्यं निबोधत । यतस्तच्छ्रोतॄणां भूतिकरमपि भुक्तिमुक्तिदमपि प्रचक्षते पूर्ववत् । श्रवणमात्रेण सर्वगात्राह्लादायपि शब्दमात्रम् अत एव महानुभावं महाप्रभावम् । अस्य श्लोकस्य लक्ष्मणादीनामेतच्छ्रवणप्रवर्तकार्थकत्वेनैवमेवास्य व्याख्योचितेति द्रष्टव्यम् ॥

रा० टी०—बहुजनसंकुलत्वेन विपुलशब्दप्रभवशङ्कया सावधानीकुर्वन्नाह—इमाविति । महातपस्विनौ गानविषयकपरमज्ञानवन्तौ मुनी मननशीलौ इमौ कुशीलवौ पार्थिवलक्षणान्वितौ स्त इति शेषः । महानुभावं हृदयापकर्षत्वरूपपरमप्रभावविशिष्टं यच्चरितं प्रवक्ष्यते आभ्यां गास्यते तन्ममापि भूतिकरं मत्कर्मकनित्यप्राप्तिसम्पादकमेव अतो निबोधत सावधानतया यूयं शृणुत । पार्थिवलक्षणान्वितावित्यनेन स्वातिप्रीतिविषयत्वं तयोस्सूचितम् । चो हेतौ । आपिशब्दो नित्यार्थकः । भूतिरित्यत्र प्राप्त्यर्थकभूधातोः क्तिः । किञ्च महानुभावं भूतिकरं श्रोतृनित्यप्रभूतिकरमेव मम चरितमाभ्यां प्रवक्ष्यत इत्यर्थः अतो निबोधत अन्यत्समानम् । प्रचक्षते इति भट्टसम्मतः पाठः तत्र महान्तो भूतिकरं प्रचक्षते इत्यर्थः । अन्यत्समानम् । निबोधत इत्यनेनैतेषां मय्यनुरागातिशयः स्यादिति हेतुर्ध्वनितः । तेन तेषु रघुनाथकृपातिशयः सूचितः । एतेनात्मयशो न श्राव्यमित्याशङ्क्य सीताचरितत्वाद्रघुनाथेन श्रुतमिति समाहितमिति भूषणकारोक्तशङ्कासमाधानमापाततो रमणीयम् आत्मयशो न श्राव्यमित्यादिनिषेधानां गर्वनिवारणतात्पर्यकाणां सम्भावितगर्ववत्प्राकृतजनपरत्वेनात्र निषेधशङ्कानवसरत्वात् सीताचरितपरत्वेन समाधानमप्ययुक्तम् तच्चरितस्य रामचरितानतिरेकत्वेन शङ्कायास्तादवस्थ्यात् अत एव ' चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । शृण्वन्रामकथानादम् । यः पिबन्सततं रामचरितामृतसागरम् ' इत्यादौ रघुनाथचरितेनैव सीतादिचरितानामुक्तिः अत एव काव्यं रामायणं कृत्स्नमित्यादौ काव्यं रामायणत्वेन विशेषितम् ' सीतायाश्चरितं महत् ' इति सीताचरितस्य महत्त्वोक्त्या सीताचरितस्य प्राधान्यमिति तु न भ्रमितव्यम् तस्य तत्रत्यमहच्छब्दः काव्यान्वयीति तत्रैव निर्णीतत्वात् अत एव ' रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात्प्रभो ' इत्यादि सङ्गच्छते इति दिक् ॥ ३५ ॥

गो० टी०—उक्तमेवार्थं वृत्तान्तरेण सर्गान्ते संगृह्णाति—इमावित्यादिश्लोकद्वयेन । इमौ मुनिवेषावपि पार्थिवलक्षणान्वितौ कुशीलवावपि गायकावपि महातपस्विनौ महान्तौ तपस्विनौ भवतः तत्तस्मान्ममाऽपि प्रियाविरहक्लेशस्यापि भूतिकरं श्रेयस्करं धारकमित्यर्थः । महाननुभावो यस्य तन्महानुभावं चरितं सीताचरित्रमित्यर्थः । प्रवक्ष्यते आभ्यां व्यक्तं पठिष्यते तं निबोधत तच्छृणुतेत्यर्थः । अत्र पौराणिकाः वक्तारौ महात्मानौ वक्ष्यमाणं च महच्चरितं महानुभावम् अतस्तन्निबोधतेत्याहुः एवं ह्यात्मप्रशंसा स्यात्सा च न युक्ता अयं हि रामो धीरोदात्तः तस्य

ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसंपदा ।
स चापि रामः परिषद्गतः शनैर्बुभूषयासक्तमना बभूव ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।

मनुनिर्मितकोशलजनपदान्तर्वर्त्ययोध्याया वर्णनम् ।

सर्वापूर्वमियं येषामासीत्कृत्स्ना वसुंधरा । प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १ ॥

च 'अविकत्थनः' इति लक्षणम् तस्य च स्वविषयबन्धश्रवणं महानुभावत्वोक्तिश्च न कथमप्युपपन्नं लोके हि क्षुद्रोऽपि कश्चित्स्वविषयप्रबन्धश्रवणे लज्जते अतोन्यथा योजयन्त्याचार्याः नायं प्रबन्धो रामचरित्रपरः किंतु सीताचरित्रपरः 'सीतायाश्चरितं महत्' इति पूर्वमुक्तत्वात् 'श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे' इत्यभियुक्तवचनात् स्त्रीप्रसङ्ग इत्याभाणकश्च तद्विषयस्तु प्रबन्धो रामेण श्राव्य एव विरहिणो हि कान्ताचरित्रगाथाः शृण्वन्ति श्रावयन्ति च अत एव ममापि भूतिकरमित्युक्तम् विरहिणोऽपि मे सत्ताप्रदमित्यर्थः यद्वा 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इत्युक्तरीत्या ममाप्यतिशयावहमित्यर्थः । महानुभावमित्यस्य च प्रणयिन्यसन्निधानदशायामपि धारकमित्यर्थः । यद्वा महानुभावम् 'लघुतरारामस्य गोष्ठीकृता' इत्युक्तरीत्या स्वविषये निरवधिकापराधकारिराक्षसीरक्षणेन स्वस्मादप्यतिशयितवैभवमित्यर्थः । यद्वा 'दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्' इति मयोक्तम् अनया तु न कश्चिन्नापराध्यतीति अतो मत्तोप्युत्कृष्टचरितमित्यर्थः । यद्वा स्वचरणे निगडं बद्ध्वा देवस्त्रीचरणनिगडविच्छेदकारितया मत्तोप्याश्रितरक्षणेऽतिशयितत्वरायुक्तमित्यर्थः । यद्वा पितृत्वप्रयुक्तहितपरतया मयि सापराधविषये कलुषधियि मातृत्वप्रयुक्तवात्सल्येन मामपि क्षमापयत्याश्चरितत्वेन महानुभावमित्यर्थः ॥ ३६ ॥

३६ ] ति० टी०–तत इति । रामवचःप्रेरितौ तौ मार्गविधानसंपदा । गानं द्विविधम् मार्गो देशी चेति तत्र प्राकृतावलम्बि गानं देशी संस्कृतावलम्बि तु गानं मार्गः तयोर्मध्ये मार्गाख्यगानमार्गावलम्बनसामग्र्या अगायताम् । परिषद्गतः सभागतः स रामोऽपि बुभूषया स्वचरितस्य चिरकालं स्थितीच्छया प्रबन्धस्य गीतश्रवणे आसक्तमना बभूव । शनैःपदेनोत्तमपुरुषत्वात्स्वप्रशंसार्थकेऽत्र काव्ये शनैः प्रवृत्तिरिति ध्वन्यते स्वयं श्रवणे चोत्तरोत्तरं श्लोकानामुपादेयत्वबुद्ध्या श्रवणे प्रवृत्तौ तस्य स्थिरत्वं भवतीति तदाशयः । स्वप्रवर्तितकविकृतत्वाच्चैवमिच्छा भगवत इति बोध्यम् । इहामुत्र स्वाभ्युदयेच्छयेति व्याख्यानं त्वयुक्तम् भगवतः स्वाभ्युदयेच्छाया बाधात् एतेन राज्ञां कविकृतस्वकाव्यश्रवणमावश्यकमिति सूचितम् ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०–तत इति । ततः समाधानकरणानन्तरं रामवचःप्रचोदितौ रामप्रेरितौ कुशीलवौ मार्गविधानसंपदा मार्गो देशी चेति गानं द्विविधं तत्र प्राकृतावलम्बिनो देशिसंज्ञा संस्कृतावलम्बिनो मार्गसंज्ञेति सङ्गीतशास्त्रे प्रसिद्धम् । तथा च मार्गस्य संस्कृतावलम्बिगानस्य यद्विधानं सामग्री तस्य सम्पत्तिः परिपूर्णता तया शनैः अगायतामगायेतामेव । परिषद्गतः सभासद्भिरुपविष्टः स रामोऽपि बुभूषया तादृग्गायकभवनेच्छया आसक्तमना बभूव । तुशब्द एवार्थे तेन कृत्यान्तरव्यवच्छेदः तेन चित्तैकाग्र्यं ध्वनितम् किञ्च तुना प्रतिश्लोकगानं प्रशंसां चकारेत्यर्थः ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०–तत इति । ततः श्रोतृप्रोत्साहनानन्तरं रामस्य वचसा प्रचोदितौ ननु चेष्टयेत्यादरातिशयोक्तिः तौ कुशीलवौ मार्गविधानसंपदा देशी मार्गश्चेति द्वौ गानप्रकारौ तत्र मार्गः सार्वत्रिकः देशी क्वाचित्कः तयोर्मध्ये मार्गनिर्वाहसामग्र्या अगायतां स रामोऽपि शनैः परिषद्गतः झटित्युत्थाय गमने परिषदोऽप्युत्थानाद्रसभङ्गो भविष्यतीति मन्दंमन्दं सिंहासनादवतीर्य परिषदं प्राप्तः एकः स्वादु न भुञ्जीतेति न्यायादुन्नतसिंहासनावस्थानेन स्वात्मानमेकाकिनं मन्यमानः सभामध्यगतः बुभूषया अनुबुभूषया श्रोत्रसुखानुभवेच्छयेत्यर्थः यद्वा बुभूषया भवितुमिच्छया कान्ताकथाश्रवणेन स्वसत्तालाभेच्छयेत्यर्थः सक्तमनाः गानश्रवणासक्तचित्तः बभूव ह स्वशिष्योक्तप्रबन्धश्रवणे रामः स्वयमेव सादरं प्रसक्त इति मुनिस्तुष्यति । अत्र श्लोकद्वये वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ ३६ ॥

इति श्रीमद्वालकाण्डे गोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने चतुर्थः सर्गः ॥ ४ ॥

१ ] ति० टी०–एवं सर्गचतुष्टयेनोपोद्घातं कृत्वा वस्तु निर्दिशति–सर्वेति । कृत्स्नेयं वसुन्धरा प्रजापतिं वैवस्वतं मनुमुपादायोपक्रम्य जयशालिनां जयेन शोभावतां नृपाणां सर्वापूर्वमैहिकामुष्मिकसर्वापूर्वसाधनं यथा भवति तथासीत् सर्वापूर्वशब्दो ह्युपादेयपरो नियतनपुंसकलिङ्ग इति केचित् ॥ १ ॥

रा० टी०–सर्गचतुष्टयेन सप्रसङ्गं संक्षिप्तरामायणं वारत्रयं प्रदर्श्य विस्तीर्णरामायणमुपक्रमते–सर्वेत्यादिभिः । प्रजा-

पतिं वैवस्वतमनुमुपादाय आरभ्य जयशालिनां विजययुक्तानां येषां नृपाणामियं कृत्स्ना निखिला वसुन्धरा पृथ्वी सर्वापूर्वं सर्वेषां जनानामपूर्वं फलं यथा भवति तथा आसीत् किञ्च वसुन्धरा सर्वमेवापूर्वं फलं येषां राज्ञामासीत् प्रापयत् । गत्यर्थकासधातुप्रयोगः । किञ्च सर्वमपूर्वं यस्य तमिति प्रजापतिविशेषणम् ॥ १ ॥

गो० टी०—इदं च तपःस्वाध्यायेत्यारभ्य सर्गचतुष्टयं महत्परिग्रहसिद्धये उक्तवैलक्षण्यत्रयप्रतिपादनपरत्वेन प्रबन्धोपोद्घातत्वात् श्रीरामायणान्तर्गतकथाशरीरानुप्रविष्टप्रस्तावनाग्रन्थवत् । ननु रामायणनिर्माणानन्तरभाविनः कथाशरीरस्यास्य कथं तत्पूर्वभाव इति चेन्न अनन्तरभावित्वेऽपि त्रिकालज्ञेन महर्षिणा प्रथमं तन्निर्माणसंभवात् । नन्वात्मप्रशंसापरमिदं सर्गत्रयं कथमृषिः स्वयमेव वक्तुमर्हतीति चेन्न अन्यापरिज्ञातस्यैतस्य वृत्तान्तस्य प्रेक्षावत्प्रवृत्त्यर्थमादाववश्यं वक्तव्यत्वात् । यद्वा सर्गत्रयमिदं केनचित् वाल्मीकिशिष्येण रामायणनिर्वृत्त्यनन्तरं निर्माय वैभवप्रकटनाय सङ्गमितं यथा याज्ञवल्क्यस्मृत्यादौ तथैव तत्र विज्ञानेश्वरेण व्याकृतम् । नन्वेतस्य सर्गत्रयस्य रामायणादित्वे कुशलवाभ्यामेनद्गाने प्रथमं क्रियमाणे तौ रामेणादावेव स्वपुत्राविति परिज्ञातौ स्यातां तथा च तदैव सीतानयनापत्तिः 'बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ । तौ राजपुत्रौ ' इत्यादिना हि रामपुत्रत्वमनयोः सूच्यते तस्मादिदमसङ्गतमिति चेन्न सीतापुत्रत्वादेरत्राकथनात् रामसादृश्यमात्रस्य राजपुत्रान्तरेष्वपि संभवात् । अयं च प्रबन्धो वेदोपबृंहणरूपो वेदान्तार्थमुपबृंहयति । ' प्रायेण पूर्वभागार्थो धर्मशास्त्रेण कथ्यते । इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते ' इति वचनात् । तत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति " श्रुतम् तत्किं जगज्जन्मादिकारणं ब्रह्म विष्णुरुत ब्रह्मरुद्रादिष्वन्यतम इत्यपेक्षायां रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परब्रह्मेत्युच्यते ' उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये'इत्युक्तषाड्विधतात्पर्यलिङ्गसंभवात् । तथाहि उपक्रमे तावत् ' को न्वस्मिन् ' इत्यादिना वेदान्तोदितसकलगुणसंपन्नः किं विष्णुरुतान्यो ब्रह्मादिष्वन्यतम इति वाल्मीकिना पृष्टे 'इक्ष्वाकुवंशप्रभवो रामः'इत्यादिना रामत्वेनावतीर्णो विष्णुरेवेति नारदेनोक्तम्। उपसंहारे च चतुर्मुखः प्राह ' तवाहं पूर्वके भावे पुत्रः परपुरञ्जय। संक्षिप्य च पुरा लोकान्मायया स्वयमेव हि॥ महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः । पद्मे दिव्येर्कसंकाशे नाभ्यामुत्पाद्य मामपि ॥ प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम्' इत्यादिना सर्वजगत्कारणप्रजापतिजनकत्वेन सकलजगत्कारणं ब्रह्म विष्णुरेवेत्युक्तम् । अभ्यासश्च तस्यैव दृश्यते बालकाण्डे ' एतस्मिन्नन्तरे विष्णुरुपजातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः' इति जगत्कारणत्वमुक्तम् । तत उत्तरत्र देवा- ' त्वं गतिः परमा देव सर्वेषां नः परन्तप ' इत्याहुः । तेन परत्वासाधारणं सर्वशरण्यत्वमुक्तम् । तत उत्तरत्र ' ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः । स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ' इति सर्वस्तुत्यत्वमुक्तम् । ततो विश्वामित्रः ' अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् । वसिष्ठश्च महातेजा ये चान्ये तपसि स्थिताः' इति । "वेदाहमेतं पुरुषं महान्तम् । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्युक्तरीत्या महापुरुषत्वं तपोबलं विना तस्य दुर्ज्ञेयत्वं चाह। सीताविवाहे वसिष्ठोपि 'अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ' इति सर्वमूलकारणत्वं प्राचीकशत् । परशुरामोऽपि ' अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा' इति सर्वाधिकत्वं निदर्शितवान्। अयोध्याकाण्डे 'स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः' इति सनातनत्वमुक्तम्। उत्तरत्र 'आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ' इत्याकाशशब्देन स्वयंप्रकाशत्वं व्यापकत्वं चाह । आरण्यकाण्डे मारीचेन ' अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ' इति परिच्छेदातीतमहिमत्वमुक्तम् । किष्किन्धाकाण्डे तारावचनम् 'त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षतजोपमाक्षः ' । उत्तरत्र ' निवासवृक्षः साधूनामापन्नानां परा गतिः । आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः । धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ' इति। अनेन च ज्ञानानन्दादिसमस्तकल्याणगुणाकरत्वमुक्तम्। सुन्दरकाण्डे ' ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा। इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम्' इति सर्वसंहर्तृत्वं द्योतितम् । उत्तरत्र ' किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः । अनन्तमव्यक्तमचिन्त्यरूपं स्वमायया सांप्रतमागतं वा ' द्वितीयो वाकारोऽवधारणार्थः । अनेनानन्तरूपत्वमुक्तम्। युद्धकाण्डे विष्णुरेव कथं जगत्कारणं अन्येषामपि "हिरण्यगर्भस्समवर्तताग्रे यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिना तत्त्वश्रवणादित्याशङ्क्य तेभ्यः सर्वेभ्यः श्रेष्ठत्वप्रतिपादनाद्धिरण्यगर्भशिवेन्द्रादिशब्दाः सद्ब्रह्मात्मशब्दवद्विष्णुपरा एवेत्याशयेनोच्यते । ' व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ' इति । अनेन च परमात्मत्वश्रियःपतित्वादिकमुक्तम् । उत्तरत्र ब्रह्मा ' भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित्' इत्यादि । अनेन तस्य नारायणशब्दवाच्यत्वमुक्तम् । अपू-

१ स्वयमेवेति भाति । २ कश्यप इति भाति ।

वेत्ता च प्रमाणान्तराप्राप्तिः । न हि परतत्त्वस्य विष्णुत्वं प्रमाणान्तरादवगन्तुं शक्यम् । फलं च भगवत्सालोक्यादिकमित्यन्ते सुव्यक्तम् । अर्थवादोपपत्ती च बालकाण्डे दर्शिते । ‘ इमे द्वे धनुषी श्रेष्ठे ’ इत्यादिनार्थवादमुक्त्वा ‘ जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः । अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा’ इत्यादिना ब्रह्मप्रमुखैस्सर्षिगणैर्देवैर्मीमांसापूर्वकं विष्णुरुद्रयोर्मध्ये विष्णोराधिक्यनिर्णयोक्तेरुपपत्तिरुक्ता । नच वाच्यं मेनिरे इति वचनात् ‘ महाशूरतरस्तथा ’ इति वरदानकृतामेदमाधिक्यमिति तथात्वे तस्य रोषानुपपत्तेः ‘ धनू रुद्रस्य संक्रुद्धः ’ इति ह्युक्तम् । किञ्चागस्त्याश्रमे ‘ स तत्र ब्रह्मणः स्थानं विष्णोः स्थानं तथैव च । अग्नेः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः ॥ सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ’ इत्यादिना ब्रह्मादीनामगस्त्योपास्यत्वमुक्त्वा रुद्रस्य तदकथनादपूज्यत्वमुच्यते । नचेमान्यगस्त्यपूजकब्रह्मादिस्थानानीति वाच्यम् असंभवात् । ‘अत्र देवाः सगन्धर्वास्सिद्धाश्च परमर्षयः । अगस्त्यं नियताहारं सततं पर्युपासते ’ इति वचनं ब्रह्मादिव्यतिरिक्तकेवलदेवविषयम् । किञ्च यथा गृहस्थस्य गृहे देवगृहसत्वे गृहस्थस्यैव पूजकत्वं स्वरसतः प्रतीयते एवमेवात्रापि नापलापावकाशः । किञ्च दक्षयज्ञवधे ‘ यस्माद्भागार्थिनो भागः कल्पितो नैव मे सुराः । वराङ्गानि महार्हाणि धनुषा शातयामि वः ’ इति रुद्रस्य यज्ञभागाकल्पनादपूज्यत्वादत्र तस्य स्थानानिर्देशः ॥ ननु यदि विष्णुः परा देवता कथं तर्हि तस्य रामत्वेन जन्मेति चेन्न “ अजायमानो बहुधा विजायते ” इत्युक्तरीत्या लोकानुजिघृक्षाकृतं तदिति चोद्यानवकाशात् । मोक्षप्रदत्वं च परदेवतासाधारणम् । अत्रोच्यते ‘ या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः । अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ’ इति अत्रापरावर्तित्वं पुनरावृत्तिशून्यत्वं मुक्तिरिति यावत् “ न स पुनरावर्तते ” इति श्रुतेः नच रणादपलायनमुच्यत इति वक्तुं शक्यते तस्य स्वतः सिद्धत्वेन तत्फलस्याननुग्राह्यत्वात् तथा च यज्ञादिफलावधिभूतां मुक्तिं प्राप्नुहीत्यर्थः अत एव नृसिंहपुराणे ‘ मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम तस्मात्त्वं मत्प्रसादेन विष्णुलोकमवाप्स्यसि ’ इति । एवमुपक्रमादिषड्विधतात्पर्यलिङ्गैर्वेदान्तवेद्यं परतत्त्वं विष्णुरेवेति श्रीरामायणेनोपबृंह्यते । एवमेवान्ते ब्रह्माप्याह ‘ अस्याः परिषदो मध्ये यद्ब्रवीमि निबोध तत् । एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् ॥ सर्वं विस्तरतो राजन् व्याख्यास्यति न संशयः । आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् ॥ न ह्यन्योर्हति काव्यानां यशोभाग्राघवादृते ’ इति एवं स्थिते यत्केनचिन्नवीनेन जल्पितं व्यञ्जनावृत्त्या शिवपरं रामायणमिति तदपहास्यमेव न ह्यन्योर्हतीति प्रतिषिद्धरुद्रस्य प्रतिपाद्यकोव्यन्तर्भाववचनस्य केवलबालिशप्रलपितत्वात् । यच्च रामेणादित्योपस्थानादिकं कृतं तत्सर्वं विश्वामित्राद्युपासनवन्मनुष्यभावनानुसारेणेति विज्ञेयम् । विशेषतश्च तत्र वक्ष्यामः ।

‘ श्रीविष्णोः प्रथमे काण्डे जगज्जन्महेतुता । द्वितीये स्थितिहेतुत्वं तृतीये मोक्षदायिता ॥ चतुर्थे गुणसंपत्तिः पञ्चमे सर्वहन्तृता । षष्ठे वेदान्तवेद्यत्वं सप्तमे सृष्टहेतुता ॥ एवं विष्णुः परं तत्त्वं रामात्मेति सुनिश्चितम् ॥ श्रीशैलपूर्णार्यतिशेखरेण श्रुतान् पुराष्टादशधा प्रभिन्नान् । रामायणार्थान्क्रमशः करोमि व्यक्ताञ्छठारातिगुरूपदिष्टान् ’ गत एकोर्थः । द्वितीयस्तु । एवंभूतं परतत्वं केन प्राप्यते इत्याकाङ्क्षायां तत्प्राप्त्युपायभूतां शरणागतिम् “ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये ” इति श्रुतिमुपबृंहयन् वाल्मीकिर्ह्यस्मिन् रामायणे उपक्रमप्रभृत्युपसंहारान्तमनेकाधिकारिफलविशेषादिप्रदर्शनमुखेनाखिलफलसाधनतया प्रतिपादयति । तथा हि उपक्रमे तावत् ‘एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः’ इति सर्वशेषी सर्वेश्वरो रक्षापेक्षाप्रतीक्षो रक्षणसमयो लब्ध इति समुद्भूतौज्ज्वल्यो रक्षणोपकरणैः सह सन्नद्धोभ्येत्य तस्थौ तदा ‘ देवगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ’ इति रावणवधरूपफलार्थं ब्रह्मरुद्रादिदेवगणशरणागतिरुक्ता । ततस्त्रिशङ्कुशुनःशेफादिवृत्तान्तेषु विश्वामित्रादिव्यापारविशेषानुदर्यं शरणागतरक्षणं परमो धर्मः समर्थकारुणिकविषया शरणागतिः फलाविनाभूतेति प्रदर्शितम् । ततश्च ‘स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशा राघवं च महाव्रतम् ’ इति पुरुषकारपुरस्करणपुरःसरा शरणागतिः कार्येत्युदीरितम् । ततो भरतः ‘ शेष्ये पुरस्ताच्छालायां यावन्मे न प्रसीदति ’ इति रामाभिषेकफलाय शरणवरणमकरोत् । अत्र रावणवधाय कृतदेवगणप्रपत्तिफलदानाय निर्गमनात् तदानीं रामः स्वप्रतिनिधिभूतपादुकाप्रदानेन तत्सफलं कृत्वा पश्चात् देवगणमनोरथपूरणान्तरमात्मानमभ्यषिञ्चत् अतो न शरणागतिवैफल्यं चोद्यम् । अथ दण्डकारण्यवासिभिर्विरोधिनिरसनाय शरणागतिरनुष्ठिता ‘ ते वयं भवता रक्ष्या भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर ’ इति । अत्र कोसलजनपदवासिनामिव भगवद्विषयवास एव शरणागतिः । तदनन्तरम् ‘ स पित्रा च परित्यक्तः सुरैश्च स महर्षिभिः । त्रींल्लोकान् संपरिक्रम्य तमेव शरणं गतः ॥ स तं निपतितं भूमौ शरण्यः शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ’ इति काकवृत्तान्ते नाग्रतः पतनमेव शरणागतिरित्यदर्शि । तदनु सुग्रीववृत्तान्ते ‘ कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ’ इति शरणागतिरञ्जलिरूपोक्ता । अथ सीतावचनेन ‘ मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता । वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः ॥ विदितः स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ’ इत्यनेनानुकूल्यमेव शरणागतिरित्यबोधि । उपरि ‘ सोहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ’ इति विभीष-

णशरणागत्या विरोधिपरित्यागपूर्वकत्वमुक्तम् । ' ततः सागरवेलायां दर्भानास्तीर्य राघवः । अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ' इति रामशरणागत्या योग्यस्य नायोग्यताऽन्वेष्टव्या अयोग्यस्य च न योग्यतेत्युक्तम् । अशुचिभूतलङ्कानिर्गतमात्र एव हि विभीषणश्शरणमवृणोत् । रामशरणागतेः फलाभावः समर्थकारुणिकाविषयत्वाभावादित्याहुः । उत्तरत्र ' अभियाचाम वैदेहीमेतद्धि मम रोचते । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ' इति त्रिजटावचनात्तदनुमतिमात्रेण हनुमद्भयात् सर्वासां रक्षितत्वकथनादन्यविषयेऽन्येनापि कृता शरणागतिः फलवतीति निदर्शितम् । विभीषणशरणागत्यैव तत्सचिवानां रक्षणात् शरणागतसंबन्धिनोऽपि भगवत्कटाक्षपात्रभूता एवेति निरणायि । एवमन्यत्रापि द्रष्टव्यम् । एवमुपक्रमप्रभृत्योपसंहारात् प्रतिपादिता शरणागतिरेव सर्वफलप्रदा सैव मुक्तेरपि हेतुरित्युक्तम् । विशेषस्तु तत्र प्रकरणे प्रपञ्चयिष्यते । अस्य चोपायस्य प्राप्यं भगवत्प्राप्तिपूर्वकं तत्कैङ्कर्यमेवेति रामायणेन प्रतिपाद्यते । तथा हि उपक्रमे देवजातीयशरणागते रामकैङ्कर्यं प्रधानफलमित्युच्यते अप्सरःप्रभृतिष्ववतीर्य तैस्तदनुवर्तनोपदेशात् रावणवधस्त्वानुषङ्गिकः । लक्ष्मणोऽपि प्रपद्याह ' अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते । भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ' इति तेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यफलमिति व्यञ्जितम् । भरतोऽपि रामकैङ्कर्यायैव तदभिषेकं प्रार्थ्य पादुकाविषयकैङ्कर्यक्रमेण मनीषितमलभत । दण्डकारण्यवासिनां शरणागतेरपि वाचिकादिरूपमेव कैङ्कर्यं फलमित्यवगम्यते । ' ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः' इत्युक्तेः सुग्रीवविभीषणादिप्रवृत्तेरपि मुख्यं फलं कैङ्कर्यमन्यदानुषङ्गिकमिति स्पष्टम् । ' अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं निशिचरपतिमाजौ योजयित्वा श्रमेण । गगनमतिविशालं लङ्घयित्वार्कसूनुर्हरिवरगणमध्ये रामपार्श्वं जगाम ॥ परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च ' इत्यादिना । एवं प्राणार्थिनः काकस्य प्राणप्रदानेन तत्प्रपत्तिः सफला । असत्प्रकृतेरस्य पुनरप्येवं दुरितप्रवृत्तिर्मा भूदिति शिक्षणरूपानुग्रहायैकाक्षिनिरसनेनास्त्रं निवर्तयामास । यथा परशुरामं प्रति प्रत्युक्तमस्त्रं तस्मिन् प्रातिकूल्यान्निवृत्ते तन्मनीषितविरोधिसुकृतेषु प्रायुङ्क्त । यथा च समुद्रं प्रत्युपात्तमस्त्रम् तस्मिन् सानुतापे शरणागते द्विषत्सु आश्रितानां पापकृत्याप्रवेशनन्यायेन तद्विरोध्यसुरेषु प्रयुयुजे रामप्रपत्तिस्त्वाकिंचन्यानन्यगतित्वरूपाधिकाररहितेन कृतत्वादल्पशाल्पशक्तिकविषयत्वाच्च विफलेति ध्येयम् ।'समुद्रं राघवो राजा शरणं गन्तुमर्हति'इति विभीषणोक्तिस्तु स्वप्रपत्तेः फलदर्शनकृता । तस्मादनेन प्रकारेण शरणागतेर्देशकालाधिकारिफलनियमाभावेऽपि विषयनियमोऽस्तीत्युक्तम् । इयं च प्रपत्तिरस्मिन्प्रबन्धे प्रधानतया प्रतिपाद्यते । अत एव श्रीरामायणं दीर्घशरणागतिरित्याभाणकः । तदुपयुक्ततयेतरेषामर्थानां प्रतिपादनम् । तथाहि समर्थकारुणिकसुशीलविषयिणी शरणागतिः फलदायिनी । तत्र रौद्रधनुर्भङ्गपरशुरामजयसालभेदनसमुद्रबन्धनादिभिरुक्तपरत्वप्रतिपादनैश्च सामर्थ्यं सर्वज्ञत्वादिकं चोक्तम् । सीतावियोगकालिकवृत्तान्तविशेषैः परमकारुणिकत्वम् । गुहशबरीसुग्रीवादिभिर्नीरन्ध्रसंश्लेषेण सौशील्यम् । विश्वामित्राध्वरत्राणदण्डकारण्यवासिमुनिजनरक्षणरावणबाधितेन्द्रादिसकलदेवगणपरिपालनैः निजजनपदजनानामात्मसौन्दर्यशीलादिभिः प्रीतिमुत्पाद्य स्वपदप्राप्तिरूपसाक्षादवतारप्रयोजनभूतमोक्षप्रदानैश्च सर्वरक्षकत्वम् । अतः समर्थपरमकारुणिकसुशीलभगवत्प्रपत्तेः सकलफलसाधनत्वेऽपि अधिकारिविशेषानुष्ठितायास्तस्या भगवत्प्राप्तिपूर्वकतत्कैङ्कर्यरूपमोक्ष एव मुख्यं फलम् आनुषङ्गिकं फलान्तरमिति सुस्पष्टम् एवं सर्वत्र द्रष्टव्यम् इयं च प्रपत्तिः पुरुषकारेण विना न फलाय भवतीत्यर्थोऽस्मिन्प्रबन्धे प्रधानतया प्रतिपाद्यते ।'सीतायाश्चरितं महत्' इति सूक्तं तस्याश्च विश्लेषत्रयेण कृपापारतन्त्र्यानन्यार्हत्वरूपपुरुषकारधर्मप्रतिपादनात् । तत्संनिधानेन काकः शिरो लेभे तदभावान्न रावणः । विभीषणोऽपि ' निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ' इति घटकमुखेनैव रामं शरणमवृणुत । रामोऽपि ' आनयैनं हरिश्रेष्ठ' इति घटकमुखेनैव विभीषणं विषयीचकार । एवं सुग्रीवोऽपि रामभक्तहनुमन्मुखेन रामं शरणं ययौ इत्येवं ज्ञातव्यम् । एवंभूतोपायाधिकारिस्वरूपं शेषत्वं पारतन्त्र्यं च तत्र शेषत्वं लक्ष्मणाचारेण प्राचीकशत् ' अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः । कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ॥ कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ' इत्यादिना भरतमुखेन पारतन्त्र्यं प्रकटीकृतम् ' विललाप सभामध्ये जगर्हे च पुरोहितम् । राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ' इत्यादिना ' सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् । नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ' इत्यन्तेन श्रीशत्रुघ्नव्यापारेण भागवतपारतन्त्र्यं प्राचीकशत् ' गच्छता मातुलकुलं भरतेन तदानघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ' इत्यादिना ॥ अस्य चाधिकारिणो ज्ञातव्यमर्थपञ्चकमत्रोच्यते । तथोक्तम् " प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥ वदन्ति सकला वेदाः सेतिहासपुराणकाः । मुनयश्च महात्मानो वेदवेदाङ्गपारगाः ' इति तत्र रामप्रस्तावेन परस्वरूपं लक्ष्मणादिवृत्तान्तेन प्रत्यगात्मस्वरूपं शरणागतिवर्णनेनोपायस्वरूपं विभीषणादिकथया फलस्वरूपं भगवत्कैङ्कर्यरूपं रावणादिवृत्तान्तेन विरोधिस्वरूपं चोक्तमिति ज्ञेयम् ॥ अस्याधिकारिण आकिंचन्यमनन्यगतित्वं चापेक्षितमिति वक्तुं ब्रह्मरुद्रादिदत्तवरस्य रावणस्य वधेन ब्रह्मरुद्रादिदेवतान्तराणां दशरथचरितेन पितुः काकादिवृत्तान्तेन मात्रादेः विभीषणमेघनादादिवृत्तान्तेन भ्रातृपुत्रादेश्चारक्षकत्वोक्तिः ॥ अस्य च भगवज्ज्ञा-

येषां स सगरो नाम सागरो येन खानितः। षष्टिपुत्रसहस्राणि यं यान्तं पर्यवारयन्॥ २ ॥
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम्। महदुत्पन्नमाख्यानं रामायणमिति श्रुतम्॥ ३ ॥

नलाभ आचार्यमूल इति हनुमच्चरितेन दर्शितं तदेव सुन्दरकाण्डे-वक्ष्यामः॥ अनेन चाधिकारिणा 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इत्युक्तरीत्या शरीरपातावधिकालः प्रतीक्षणीय इति सीताध्यवसायेनोच्यते। 'शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः। मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत्' इति श्रुक्तम्। लङ्का नाम शरीरं रावणकुम्भकर्णावहङ्कारममकारौ इन्द्रजिदादयः कामक्रोधादयः विभीषणो विवेकः। तत्र रुद्धा-सीता चेतनः तस्य च भगवज्ज्ञानं हनुमताऽऽचार्येण तादृ-शशरीरध्वंसपूर्वकं तदन्तर्निरुद्धचेतनोद्धरणं भगवतैवेति विस्तरो भविष्यति॥ अस्य च यावच्छरीरं कर्तव्यविषये रामा-दिवद्वर्तितव्यं न रावणादिवदित्युपदेशश्च यथायोगं क्रियते॥ अस्य च वासयोग्यो देशो भगवत्संनिधिमान्देश एवेति कोसल-जनपदस्थजनवृत्तान्तेनोक्तम्॥ अस्य च कालक्षेपोपि रामायणे-नैव द्वयविवरणरूपत्वात्। अत एव रामायणं दीर्घशरणाग-तिरित्यभियुक्तैरुक्तम्। द्वयमर्थानुसंधानेन सः सदैवं वक्तेति च भाष्यकारः। तत्र बालकाण्डेन श्रीमच्छब्दार्थ उक्तः। अयो-ध्याकाण्डेन नारायणशब्दार्थः। कल्याणगुणानामुपवर्णनात्। आरण्यकाण्डेन 'ते तं सोममिवोद्यन्तम्' इत्यादिना दिव्यमङ्ग-लविग्रहवर्णनाच्चरणशब्दार्थः। किष्किन्धाकाण्डसुन्दरकाण्डा-भ्यां शरणशब्दार्थः। युद्धकाण्डेन प्रपद्य इत्यस्यार्थः। उत्तर-काण्डेन मुक्तिफलकीर्तनादुत्तरखण्डार्थः॥ अस्य चाधिकारिणः सदा जप्यं रामायणमेवेति दर्शयितुं गायत्र्यर्थोऽत्र प्रतिपाद्यते। तथाहि बालकाण्डे वेदप्रसिद्धजगत्प्रसूतिहेतुभूतभगवत्स्वरूपव-र्णनात् तत्सवितृशब्दार्थः। अयोध्याकाण्डकिष्किन्धाकाण्डयो-र्गुणगणवर्णनाद्वरेण्यशब्दार्थः। आरण्यकाण्डे तेजोमयशरीरवर्ण-नात् भर्गश्शब्दार्थः। सुन्दरकाण्डे दिव्यमङ्गलविग्रहलक्षणवर्ण-नाद्देवशब्दार्थः। युद्धकाण्डे धीमहिशब्दार्थः। शरणागत्युक्तेः उत्तरकाण्डे मुक्तिफलकीर्तनात्तृतीयपादार्थ इति॥ एतेन चाधि-कारिणा चार्वाकबौद्धादिदर्शनाद्यसच्छास्त्रस्पर्शोऽपि न कार्य इति जाबालिलक्ष्मणवचनतत्प्रत्यादेशादिना निर्णीयते॥ महतामपि व्यसनं भवति अतः संसारे जिहासा कार्येति वैराग्यसंपत्तये नागपाशब्रह्मास्त्रबन्धसीतापहरणराज्यभ्रंशादिना व्यक्तमुक्तं वि-स्तरस्तु तत्रतत्र प्रदर्शयिष्यते दिङ्मात्रमत्र प्रदर्शितम्॥ लोक-व्यवहाराय चतुःषष्टिकलार्थोऽपि संग्रहेणात्र प्रतिपाद्यते 'यदि-हास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इति न्यायात्। तथाहि प्रतिपादितया दिशा वेदार्थो दर्शितः। हनुमद्वचनश्लाघायाम् 'अन-या चित्रया वाचा त्रिस्थानव्यञ्जनस्थया' इत्यादौ शिक्षार्थः। अश्व-मेधादिप्रकरणे कल्पसूत्रार्थः। 'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्' इत्यादौ व्याकरणार्थः। एवमन्यत्सर्वमत्र सूक्ष्म-बुद्ध्या ज्ञातव्यम्॥ एवमेतेऽष्टादशार्था आचार्योपदिष्टाः। तत्र

प्रथमं रावणनिबर्हणफलां गीर्वाणगणशरणागतिं दर्शयितुं पीठि-कामारचयति वाजिमेधपर्यन्तवृत्तान्तेन। अग्निपुरुषोत्थानमा-रभ्य रावणवधपर्यन्तो वृत्तान्तस्तत्फलम् उत्तरकाण्डे स्वाव-तारप्रयोजनं धर्मस्थापनं मुक्तिप्रदानं च वक्तव्यमन्यत्तात्पर्यं त-त्रतत्र अभिधीयते। 'सन्तोऽत्युक्तमनुक्तं च समाधातुमिहार्हथ। नमः शठारिगुरवे नमो वल्मीकजन्मने॥ नमो नारायणायेदं नमो रामाय विष्णवे' इत्थं संक्षेपेण "आचार्यवान् पुरुषो वेद। आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इतिश्रु-त्युक्तरीत्याऽऽचार्यादेव विद्या प्राप्तव्येत्यमुमर्थमभिव्यञ्जयन् स्वेन नारदाद्विदितमर्थं प्राचीकशत्। अथ सर्गत्रयेणाचार्यप्रसादकार्यं सर्ववस्तुसाक्षात्कारस्तद्विषयप्रबन्धनिर्माणचातुर्यं चाभिहितम्। अथ परमकारुणिको भगवान्वाल्मीकिः रामायणाख्यं काव्यमार-भमाणः प्रारिप्सितप्रबन्धस्य निर्विघ्नपरिसमाप्त्यर्थं प्रचयगमनार्थं च 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इत्युक्तरीत्या काव्यमुखत्वेनादौ कर्तव्यं वस्तुनिर्देशं कुर्वन् अर्थाद्विषयप्रयोजने च दर्शयन् कर्तव्यं प्रतिजानानः सत्परिग्रहमर्थयते-सर्वापूर्व-मित्यादिश्लोकचतुष्टयेन। सर्वेति कृत्स्ना सप्तद्वीपात्मिका इयं वसुन्धरा भूमिः जयेन शालन्ते भासन्त इति जयशालिनः तेषां शपयोरभेदेन व्यवहारः। येषां नृपाणां प्रजापतिं मनुम् 'मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः' इति वक्ष्यमाणत्वात्। उपादाय आरभ्य सर्वापूर्वं सर्वेषामितरेषां राज्ञामपूर्वं दुर्लभं यथा भवति तथा आसीत्स्वमासीदित्यर्थः॥ १॥

२-३ ] ति० टी०—किं च येषां वंशे स सगरो नामाभूत् सागर इत्यादिना समुद्रे सागरशब्दप्रवृत्तिस्तदधीनेति सूचितम् षष्टिगुणितानि पुत्रसहस्राणि षष्टिपुत्रसहस्राणि क्वचित्तु 'षष्टिः' इति पृथक्पदपाठः अनेन तदुद्धारार्थं तद्वंश्येन जगत्पवित्रीकरणसमर्था गङ्गा यद्वंशेऽवतारितेति व्यज्यते तेन चातिशयितं तद्वंशमाहात्म्यं सूचितम् तद्वंशस्य गङ्गापरनामकभगवदवतारयोग्यता च तेन सूचिता॥ २॥ तेषामिक्ष्वाकूणां वंशे वंशविषये रामायणमिति नाम्ना प्रसिद्धं महदाख्यानमुत्पन्नमिति योजना इक्ष्वाकपत्ये-ष्विक्ष्वाकुत्वारोपादिक्ष्वाकूणामित्युक्तिः॥ ३॥

रा० टी०—येषामिति। यान्तं भोजनार्थं गच्छन्तं यं षष्टिःपुत्रसहस्राणि पर्यवारयन् सहैवागच्छन् येन सागरः समु-द्रजननयोग्या भूमिः खानितः षष्टिसहस्रसङ्ख्याकपुत्रैरवदारितः सः प्रसिद्धः सगरो नाम नृपो येषामभवदिति शेषः। सगरो नामे-त्यनेन नृपतिलाभः शब्दार्थयोस्तादात्म्यात् किञ्च नामेति प्र-सिद्धार्थकम्। क्वचित् षष्टिरिति व्यस्तः पाठ इति भट्टैरुक्तं स च सूपपन्नः॥ २॥ इक्ष्वाकूणामिति। तेषामिक्ष्वाकूणामिक्ष्वाकु-वंशप्रभवाणां महात्मनां राज्ञां वंशे महत्सर्वपूजनीयमिदं रामा-यणं रामपर्यवसानकमाख्यानमुत्पन्नं प्रकटीभूतमिति श्रुतम्

तदिदं वर्तयिष्यावः सर्वं निखिलमादितः । धर्मकामार्थसहितं श्रोतव्यमनसूयता ॥ ४ ॥
कोशलो नाम मुदितः स्फीतो जनपदो महान् । निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता । मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥

नारदब्रह्मोक्त्या निश्चितम् इक्ष्वाकूणां वंशे रामायणमुत्पन्नमित्यनेन रामरामायणयोस्तादात्म्यं सूचितम् प्रसिद्धं च प्रतिपाद्यप्रतिपादकयोस्तादात्म्यम् ' रामेति द्व्यक्षरं नाम ' इत्यादौ । श्लोकत्रयमेकान्वयि ॥ ३ ॥

गो० टी०–जयशालित्वं कुत्रचिदुदाहृत्य दर्शयति–येषामिति । येषां नृपाणां मध्ये सः प्रसिद्धः सगरः प्रसिद्धिमेवाह सागरः समुद्रः स्वनामाङ्कितः येन सगरेण खानितः षष्ट्या पुत्रसहस्रैरवदारितः नाम प्रसिद्धौ किञ्च यान्तं दण्डयात्रया गच्छन्तं यं षष्टिः पुत्रसहस्राणि पर्यवारयन् परितोऽगच्छन् इक्ष्वाकुप्रभृतिषु विद्यमानेषु सगरमात्रकीर्तनं तेनाखिलाया भूमेः पुनरुद्धृतत्वात् । षष्टिरिति पङ्क्तिसूत्रे निपातितः अत एकवचनस्यापि बहुवचनविशेषणत्वम् ॥ २ ॥ इक्ष्वाकूणामिति । महात्मनां महाप्रभावानाम् इक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् " तद्राजस्य बहुषु तेनैवास्त्रियाम " इति तद्राजप्रत्ययस्य बह्वर्थत्वाल्लुक् । तेषां राज्ञां वंशे वंश्ये रामे विषये रामायणमिति श्रुतं प्रसिद्धं महत् पूजनीयमिदमाख्यानं कथाप्रबन्ध उत्पन्नम् । ब्रह्मणः प्रसादादिति शेषः तत्र निमित्तमात्रमहमिति विनयोक्तिः । अत्र वर्णनीयस्य नायकस्य सर्वा पूर्वमित्यनेन महाभाग्यत्वं नाम गुण उक्तः । येषामित्यादिश्लोकद्वयेन महाकुलीनत्वम् ॥ ३ ॥

४ ] ति० टी०–तदिति । तदिदं बुद्धिस्थम् आदित आदिमारभ्य निखिलमुत्तरकाण्डान्तम् सर्वम् सर्वशब्दोऽवयवकात्स्न्र्ये सर्वावयवकम् वर्णपदच्युतिरहितमिति यावत् । धर्मकामार्थाः सहिता यस्मात्तत् सहिता इत्यत्र केनेत्याकाङ्क्षायां मोक्षेणेति गम्यते तेन पुरुषार्थचतुष्टयसाधनमिति फलितम् वर्तयिष्यावो गास्यावः तदनसूयतासूयामकुर्वता श्रोतव्यम् अनेनासूयाराहित्यमेवैतच्छ्रवणाधिकारिविशेषणमित्युक्तम् सर्वपुरुषार्थसाधनत्वाच्च श्रवणेऽत्यादरः सूचितः ॥ ४ ॥

रा० टी०–तदिति । धर्मकामार्थसहितं धर्मश्च कामश्च अर्थश्च तेन वासनात्यागेन सहितः सहो मोक्षः त्यागार्थकहाधातोः घञर्थे कः । किञ्च समस्तकर्म तदुपलक्षितजन्ममरणादि जहाति हापयति स एव स च ते ते जाता अस्मात् तारकादित्वादितच् धर्मकामार्थमोक्षप्रदमित्यर्थः । किञ्च धर्मकामार्थाः सन्ति अस्मिन्निति हितेन मोक्षेण सहितं तदेव तदिति कर्मधारयः किञ्चार्थशब्देन लौकिकार्थपुरुषार्थौ गृह्येते पुरुषार्थश्च मोक्ष एवेति सर्वत्र प्रसिद्धम् तथा च धर्मश्च कामश्च अर्थौ च तैः सहितं तत्प्रसिद्धमिदं बुद्धिविषयीभूतं सर्वं विस्तीर्णरामायमादितः वर्तयिष्यामि प्रकटयिष्यामि अतः अनसूयया असूयारहितबुद्ध्या निखिलं श्रोतव्यं धर्मकामार्थमोक्षार्थिभिः ग्रहीतव्यम् । अनसूयता इति भट्टसंमतः पाठः ॥ ४ ॥

गो० टी०–ब्रह्मप्रसादादेवोत्पन्नत्वे तव किं कृत्यं तत्राह–तदिति । तद्ब्रह्मप्रसादोत्पन्नमिदं रामायणं वर्तयिष्यामि प्रवर्तयिष्यामि धर्मकामार्थसहितं तत्प्रतिपादकं तत्फलकं वा सर्वं रामायणमादितः तदवतारदेशात्प्रभृति निखिलमन्यूनं यथा भवति तथा अनसूयया असूयाभिन्नया श्रद्धयेत्यर्थः श्रोतव्यं न तु स्वयं लिखितपाठेन निरीक्षितव्यम् ब्रह्मण एवोत्पन्नमिदं मम तु तत्प्रवर्तन एवाधिकारः अतः प्रेक्षावद्भिरत्रासूया न कर्तव्या किंतु भक्त्यैव श्रोतव्यमिति भावः । अत्र तेषां वंश इत्यनेन विषय उक्तः । धर्मकामार्थसहितमित्यनेन प्रयोजनमुक्तम् । अनसूययेत्यनेन अनसूयवोऽधिकारिणः कार्यकारणभावः संबन्ध इत्यादि बोध्यम् । अत्र मोक्षस्यापि प्रयोजनत्वं सिद्धम् 'सर्वपापैः प्रमुच्यते' इत्युक्तत्वात् ॥ ४ ॥

५ ] ति० टी०–कोशल इति । मुदितः राजभिर्धर्मतः परिपालनात् स्फीत उत्तरोत्तरं वृद्धिं प्राप्तः सरयूतीरे तदुपलक्षितदेशे निविष्टः स्थितः जनपदः अस्तीति शेषः ॥ ५ ॥

रा० टी०–प्रतिज्ञातमाह–कोशल इति । मुदितः नित्यानन्दविशिष्टः स्फीतः समृद्धः महान्सर्वोत्कृष्टः सरयूतीरे निविष्टः सरयूभयतीरसमीपवर्ती प्रभूतधनधान्यवान् उद्भूतधनधान्यविशिष्टः कोशलो नाम प्रसिद्धः जनपदो देश अस्तीति शेषः कोशलस्य मुदितत्वोक्त्या तद्देशस्य चेतनत्वं सूचितम् तेन तस्याप्राकृतत्वं ध्वनितम् ॥ ५ ॥

गो० टी०–अथ रामचरित्रं प्रतिज्ञातं वक्तुं तदवतरणयोग्यदेशवैभवं दर्शयति–कोसल इति । मुदितः संतुष्टजनः मञ्चाः क्रोशन्तीतिवल्लक्षणा स्फीतः समृद्धः "स्फायः स्फी निष्ठायाम्" इति स्फीभावः । प्रभूतानि बहूनि च तानि धनधान्यानि च तद्वान् कर्मधारयादपि मत्वर्थीयो दृष्टः यथा ' कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने' इत्यादि प्रभूतधनश्चासौ धान्यवांश्चेति कर्मधारयो वा । अत्र धनधान्यसमृद्धेरुक्तत्वात् स्फीत इति जनसमृद्धिरुच्यते । कोसलो नाम कोसल इति प्रसिद्धः महान् विस्तीर्णः जनपदो देशः ' नीवृज्जनपदो देशविषयौ ' इत्यमरः । सरयूतीरे सरयूनामकनद्या उभयतीरे निविष्टः स्थितः ॥ ५ ॥

६ ] ति० टी०–अयोध्येति । तत्र कोशलजनपदेऽयोध्या नाम लोकविश्रुता नगर्यस्ति या मानवेन्द्रेण मनुना स्वयं निर्मितासीत् पुरी समपुर्यन्तर्गता ॥ ६ ॥

रा० टी०–अयोध्येति । तत्र तस्मिन्कोशलदेशे लोकविश्रुता स्वर्गादिलोकप्रसिद्धा या अयोध्या नाम नगरी स्वयमासी-

आयता दश च द्वे च योजनानि महापुरी । श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥
राजमार्गेण महता सुविभक्तेन शोभिता । मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः । पुरीमावासयामास दिवि[1] देवपतिर्यथा ॥ ९ ॥
कपाटतोरणवतीं[2] सुविभक्तान्तरापणाम् । सर्वयन्त्रायुधवतीमुषितां[3] सर्वशिल्पिभिः ॥ १० ॥

त्स्वेच्छया प्रकटीभूता सा मानवेन्द्रेण मानवस्वामिना मनुना पुरी स्वराजधानी निर्मिता कृता । एतेनायोध्याया रामाभिन्नत्वनित्यत्वचेतनात्वानि व्यञ्जितानि ॥ ६ ॥

**गो० टी०**—तत्रावतारयोग्यनगरं वर्णयति—**अयोध्येति** । श्लोकत्रयमेकं वाक्यम् । अयोध्येति नगरी तत्र कोसले आसीत् अस्ति लकारव्यत्ययः । लोके विश्रुता प्रसिद्धा या पुरी मानवानां मनुष्याणामिन्द्रेण स्वामिना मनुना स्वयं स्वसंकल्पेन निर्मिता नाम ॥ ६ ॥

७-८ ] **ति० टी०**—**आयतेति** । सरयूतीरोपश्लेषेण द्वादशयोजनदीर्घा त्रीणि योजनानीति शेषः विस्तीर्णा तिर्यग्विस्तारवती महापथो बहिर्मार्गः ॥ ७ ॥ **राजेति** । राजमार्गः सर्वपण्यशोभितो राजद्वारात्पुरः प्रवृत्तः मुक्तपुष्पाणि विकसितपुष्पाणि ॥ ८ ॥

**रा० टी०**—प्रकटितायोध्याप्रमाणमाह—**आयतेति** । श्रीमती निखिलैश्वर्यशोभाविशिष्टा सुविभक्ता यथोचितगृहादिविन्यस्ता महापथा तत्तद्गृहगमनोचितप्रशंसनीयमार्गा तयोः कर्मधारयः । किञ्च सुविभक्तेभ्यः यथोचितविन्यस्तगृहेभ्यः महापथो यस्यां सा । दश च द्वे च योजनानि आयता द्वादशयोजनदीर्घा त्रीणि योजनानि विस्तीर्णा तिर्यग्विस्तारयुक्ता ॥ ७ ॥ **राजेति** । महता विपुलदीर्घविस्तारवता सुविभक्तेन असंमिलितेन नित्यशो मुक्तपुष्पावकीर्णेन विमानगतदेवाङ्गनादित्याजितपुष्पविशिष्टेन नित्यशो जलसिक्तेन जलसेकविशिष्टेन राजमार्गेण राजगमनोचिताध्वना शोभिता महापुरी अयोध्या आसीदिति शेषः द्वयोरेकत्रान्वयः ॥ ८ ॥

**गो० टी०**—**आयतेति** । दश च द्वे च योजनानि द्वादश योजनानि अत्यन्तसंयोगे द्वितीया । आयता दीर्घा मण्डलप्रमाणमिदम् महापुरी मूलनगरम् उपनगरसाहित्ये त्वनेकयोजनाऽस्तीति भावः । श्रीमती कान्तिमती त्रीणि योजनानि विस्तीर्णा योजनत्रयवैपुल्यवती सुष्ठु विभक्ताः उभयपार्श्ववृक्षावलीमत्तया क्लृप्ताः महापथाः नानाजनपदगामिमार्गाः यस्यास्सा ॥७॥ **राजमार्गेणेति** । महता आनगरान्तेन सुविभक्तेन ऋजुतया क्लृप्तेन मुक्तपुष्पावकीर्णेन मुक्तैः असूत्रग्रथितैः पुष्पैरवकीर्णेन नित्यशः सर्वकालेऽपि सप्तम्यर्थे शस्प्रत्ययः जलसिक्तेन वर्षाम्बु स्वत एव अन्यदा मनुष्यै राजमार्गेण राजगृहद्वारात्प्रवृत्तेन मार्गेण शोभिता ॥ ८ ॥

९ ] **ति० टी०**—**तां त्विति** । दिवि देवपतिरिन्द्रः पुरीममरावतीं यथावासयामास एवं राजा दशरथस्तां पुरीमावासयामास पूर्वाधिकलोकवसतिमतीं चकार धर्मन्यायबलेन पोषणान्महतो राष्ट्रस्य विशेषेण वर्धनकर्ता ॥ ९ ॥

**रा० टी०**—**तामिति** । महाराष्ट्रविवर्द्धनः राष्ट्राणि देशान् विवर्द्धयतीति राष्ट्रविवर्द्धनः महानेव स इति कर्मधारयः राजा महाराजाधिराजो दशरथोऽपि तां देवलोकादिप्रसिद्धां पुरीमयोध्यां दिवं स्वर्गं देवपतिर्यथा इन्द्र इव आवासयामास तुशब्दोऽप्यर्थे । दिवीति भट्टपाठः ॥ ९ ॥

**गो० टी०**—अथ नगर्या महाराजाधिष्ठितत्वरूपं गुणमाह—**तामिति** । महच्च तद्राष्ट्रं च महाराष्ट्रम् "आन्महतः" इत्यात्वम् तद्विवर्द्धयति धर्मेण पालयतीति महाराष्ट्रविवर्द्धनः कर्तरि ल्युट् महांश्चासौ राष्ट्रविवर्द्धनश्चेति वा पूर्वराजेभ्योऽधिक इत्यर्थः दशरथाख्यो राजा दिवं स्वर्गं अमरावतीं देवपतिर्यथा इन्द्र इव तां पुरीं तु पूर्वनृपवैलक्षण्येन आवासयामास स्थापयामास " हेतुमति च " इति णिच् ॥ ९ ॥

१० ] **ति० टी०**—**कपाटेति** । तोरणं बहिर्द्वारालंकारदारुबन्धः सुविभक्तमन्तरं येषां तादृशा आपणा यस्यां सा सर्वयन्त्रायुधवतीम् प्राकारोपरीति शेषः उषितां कृतवासाम् ॥ १० ॥

**रा० टी०**—तामेव वर्णयति—**कपाटेत्यादि** यावत्सर्गसमाप्ति । कपाटतोरणवतीं प्रशस्तकपाटतोरणसंयुक्ताम् तोरणो बहिर्द्वारप्रदेशालङ्कारदारुबन्धः सुविभक्तान्तरापणां सुविभक्तानि परस्परमसंमिलितानि अन्तराणि मध्यानि येषां ते आपणाः निषद्याः यस्यां सा ताम् सर्वयन्त्रायुधवतीं सर्वाणि लोकप्रसिद्धानि यन्त्राणि शिलाक्षेपणीप्रभृतीनि आयुधानि बाणादयः यथोचितस्थाने सन्ति यस्यां सा ताम् सर्वशिल्पिभिः कृत्स्नचित्रकारप्रभृतिभिः उपेतां युक्ताम् 'आपणस्तु निषद्यायाम्' इत्यमरः। उषितामिति भट्टसम्मतः पाठः ॥ १० ॥

**गो० टी०**—वैलक्षण्यमेव दर्शयन्नयोध्यां वर्णयति सर्गशेषेण—**कपाटेति** । तोरणो बहिर्द्वारालङ्कारदारुबन्धः प्रशस्तकपाटतोरणयुक्ताम् प्रशंसायां मतुप् । सुविभक्तं परस्परासंश्लिष्टमन्तरं मध्यप्रदेशो येषां तादृशा आपणाः निषद्या यस्यां सा ताम् 'आपणस्तु निषद्यायाम्' इत्यमरः । सर्वाणि सर्वविधानि यन्त्राणि शिलाक्षेपणीप्रभृतीनि आयुधानि बाणादयः लोके यानि यानि यन्त्रायुधानि सन्ति तद्वतीमित्यर्थः शिल्पिभिश्चित्रकारप्रभृतिभिरुपेतां युक्ताम् ॥ १० ॥

१ दिवं. रा. गो. पाठः । २ कवाटतो. गो. पाठः । ३ मुपेतां. रा. गो. पाठः ।

सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् । उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् । उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् । वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥
सामन्तराजसंघैश्च बलिकर्मभिरावृताम् । नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥
प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम् । कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥

११ ] ति० टी०—सूतेति । सूताः स्तुतिपाठकाः मागधा वंशावलिकथकाः अट्टाला उपरिगृहाः शतघ्न्यो नाम प्राकारसंरक्षणार्थमयोभारनिर्मिताः प्राकारोपरिस्थापिता आयुधविशेषाः ॥ ११ ॥

रा० टी०—सूतेति । सूतमागधसम्बाधां सूताः पौराणिकाः मागधाः वंशशंसकाः तैः सम्बाधां व्याप्तां श्रीमतीं धनधान्यसमृद्धामतुलप्रभां तुलारहितकान्तिविशिष्टाम् उच्चाट्टालध्वजवतीमुन्नताट्टध्वजविशिष्टां शतघ्नीशतसङ्कुलां शतघ्नीशतैः प्राकारस्थयन्त्रविशेषानन्तैः सङ्कुलां विन्यस्ताम् 'शतघ्नी तु चतुस्ताला लोहकण्टकसञ्चिता' इति यादवः । शतशब्दोऽनन्तवाची ११

गो० टी०—सूतेति । सूताः बन्दिनः ' सूतो ना तक्षिण सारथौ । क्षत्राद्विप्रासुते व्यासशिष्ये पारदबन्दिनोः ' इति भास्करः मागधाः राजप्रबोधकाः ' मागधः स्याद्वाग्मी राजप्रबोधकः' इति यादवः तैः संबाधां निरन्तरां श्रीमतीं धनधान्यसमृद्धिमतीमतुलप्रभां निरुपमकान्तिदृप्तम् आट्टालशब्दौ पर्यायौ ' स्यादट्टः क्षौममस्त्रियाम् ' इत्यमरः मण्डपोपरि निर्मितगृहाणीत्यर्थः उन्नतैरट्टालध्वजैर्युताम् । शतघ्नी प्राकारस्थयन्त्रविशेषः 'शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता' इति यादवः । शतशब्दोऽनन्तवचनः ' शतं सहस्रमयुतं सर्वमानन्त्यवाचकम् ' इत्युक्तेः अनेकशतघ्नीसंवृताम् ॥ ११ ॥

१२ ] ति० टी०—वध्विति । वधूनां नाटकशालासमुदायैः सर्वतो युक्ताम् उद्यानानि क्रीडार्थं पुष्पवाटिकाः सालः प्राकारः, सालवनं वा ॥ १२ ॥

रा० टी०—वध्विति । वधूनाटकसङ्घैः स्त्रीनर्तकसमूहैः संयुक्ता सर्वतः चतुर्दिक्षु पुर्यः वाराणस्यादयो यस्यां सा ताम् तथा च स्मृतिः ' साकेतपश्चिमद्वारि वृन्दावनमदूरतः ' इत्यादि समासान्तविधेरनित्यत्वात्कबभावः उद्यानाम्रवणोपेताम् आम्रवनरूपोद्यानविशिष्टाम् आहिताग्न्यादित्वात्परनिपातः । महतीं समाधिकरहितां सालमेखलां सालः प्राकारः सालवनं वा मेखला आवरणं यस्यास्ताम् ' प्राकारो वरणः सालः ' इत्यमरः ॥ १२ ॥

गो० टी०—वध्विति सर्वतः पुरीमिति "उभसर्वतसोः" इति द्वितीया । सर्वत्र पुरी वधूनां ये नाटकाः नर्तयितारस्तत्सङ्घैः संयुक्तामाम्रवणां युवानां वनमाम्रवणम् " प्रनिरन्तः " इत्यादिना णत्वम् । आहिताग्न्यादित्वात्परनिपातः । आम्रवणरूपोद्यानोपेताम् सालः प्राकारो मेखला मेखलावदावरणभूता यस्यास्ताम् 'प्राकारो वरणः सालः' इत्यमरः महतीमिति सालद्वारा नगरविशेषणम् ॥ १२ ॥

१३ ] ति० टी०—दुर्गेति । जलदुर्गेण गम्भीरागाधा परिखा यस्यां ताम् अत एव दुर्गां मित्रैरपि दुःखगम्याम् अन्यैः शत्रुभिर्दुरासदामशक्यसमीपगमनामपि वारणा गजाः ॥ १३ ॥

रा० टी०—दुर्गेति । दुर्गगम्भीरपरिखां दुर्गा दुर्गमा गम्भीरा अगाधा परिखा यस्यास्ताम् अत एव दुर्गां गमनानर्हामत एव अन्यैः शत्रुभिः दुरासदामशक्यपराभवां वाजिवारणसंपूर्णामश्वहस्तिसमृद्धां गोभिरुष्ट्रैः खरैश्च तथा संपूर्णाम् ॥ १३ ॥

गो० टी०—दुर्गेति । अत्र दुर्गशब्देन विशालतोच्यते विशालागाधपरिखां दुर्गां स्थलदुर्गभूताम् अत एवान्यैः शत्रुभिर्दुरासदां दुराक्रमां वाजिभिर्वारणैश्च संपन्नां समृद्धां गोभिरुष्ट्रैः खरैः खरविशेषैश्च तथा संपन्नामित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—सामन्तेति । समन्ताद्भवै राजसमूहैः बलिः करस्तद्दानरूपं कर्म येषां तादृशैः ॥ १४ ॥

रा० टी०—सामन्तेति । बलिः करनियमनं कर्म येषां तैः बलिकर्मभिः सामन्तराजसङ्घैः समन्ताद्भवाः सामन्ताः ' अव्ययानां भमात्रे टिलोपः' इत्यनेन आतो लोपः ते एव राजानः खण्डमण्डलेश्वरास्तेषां सङ्घाः समूहास्तैरावृतां नानादेशनिवासैः वणिग्भिश्च उपशोभिताम् । चकारेण मिश्रीभूतखण्डमण्डलेश्वरैश्चावृताम् ' भागधेयः करो बलिः ' इत्यमरः ॥ १४ ॥

गो० टी०—सामन्तराजसङ्घैरिति । समन्ताद्भवाः सामन्ताः 'सामन्ता राज्यसंधिस्थाः' इति वैजयन्ती तादृशराजसङ्घैः कीदृशैः बलिकर्मभिः बलिः करः ' भागधेयः करो बलिः ' इत्यमरः । बलिशब्देन बलिप्रदानमुच्यते तत्कर्म येषां तैः नानादेशनिवासैः क्रयविक्रयार्थमागतैः वणिग्भिश्च उपशोभिताम् ॥ १४ ॥

१५ ] ति० टी०—रत्नविकृतै रत्ननिर्मितैः पर्वतसदृशैः प्रासादैः शोभिताम् कूटाख्यैरगारैर्गृहैः स्त्रीणां क्रीडागृहैरिति यावत् कूटाः शालाः अगारं गृहमित्यन्ये ॥ १५ ॥

१ पर्वतैस्पष्टो. रा. गो. पाठः ।

चित्रामष्टापदाकारां वरनारीगणायुताम् । सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् । शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा । नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥

रा० टी०–प्रासादैरिति । रत्नविकृतैः रत्नैर्विकृतैर्विशेषतो रचितैः प्रासादैः राजगृहैः पर्वतैः क्रीडोपयुक्तगिरिभिश्च उपशोभिताम् किञ्च रत्नानां वयः पक्षिणः कृताः निर्मिताः येषु तैरित्यर्थः कूटागारैः वलभीभिश्च संपूर्णामत एव इन्द्रस्य अमरावतीमिव इन्द्ररक्षिततत्पुरीसदृशीत्वेन प्रतीयमानामित्यर्थः । पर्वतैरिव शोभितामिति भट्टसम्मतः पाठः तत्र पर्वतसदृशैः प्रासादैरित्यर्थः ॥ १९ ॥

गो० टी०–प्रासादैरिति । रत्नविकृतैः रत्नैः विकृतैः विशेषेण कृतैः प्रासादैः राजगृहैः पर्वतैः क्रीडापर्वतैः कूटागारैः वलभिभिः 'कूटागारं तु वलभिः' इत्यमरः । संपूर्णाम् अत एव इन्द्रस्येवामरावतीम् इन्द्रपालिताममरावतीमिव स्थितामित्यर्थः ॥ १९ ॥

१६ ] ति० टी०–चित्रामिति । अष्टापदं सुवर्णं तज्जलेन कृत आकारोऽलंकारो यस्या इत्येके घृतफलकाकारामित्यन्ये विमानगृहं सप्तभूमिगृहम् 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति निघण्टुः ॥ १६ ॥

रा० टी०–चित्रामिति । चित्रां नानावर्णविशिष्टाम् अष्टापदाकारां शारिफलाकृतिम् 'अष्टापदं शारिफलम्' इत्यमरः । किञ्च अष्टापदस्य सुवर्णस्याकारः आकृतिर्यस्याः अप्राकृतस्वर्णमयीमित्यर्थः किञ्च अष्टापदस्य सुवर्णस्य आकारः जनग्रहणार्थं प्रतिदिनं राजमार्गे राजकर्तृकप्रक्षेपो यस्यां तां विक्षेपणार्थककृधातोः प्रयोगः । किञ्च अष्टानां व्यापकानां ब्रह्मविष्णुमहेश्वराणामापस्य व्यापकत्वसदृशव्यापकत्वस्य दः दानं यस्याम् आश्रितजनेभ्यः ब्रह्मादिव्यापकत्वादिसदृशव्यापकत्वादिप्रदात्रीमित्यर्थः अष्टशब्दो व्याप्त्यर्थकः अशधातुप्रकृतिककर्तृनिष्ठान्तः न कारः उत्पत्तिर्यस्याः नित्यामित्यर्थः । सा एव सेति कर्मधारयः तां वरनारीगणायुतां वरनारीगणैरायुतां व्याप्तां सर्वरत्नसमाकीर्णाम् अनेकजातीयरत्नसंपूर्णां विमानगृहशोभितां विमानगृहैः सप्तभूमिकवेश्मभिः शोभिताम् 'विमानोऽस्त्री देवयाने सप्तभूमौ च' इति निघण्टुः किञ्च विमानगृहैः अपरिमितागारैः शोभिताम् ॥ १६ ॥

गो० टी०–चित्रामिति । चित्रां नानाराजगृहवतीम् अष्टौ पदानि स्थानानि यस्य तदष्टापदम् "अष्टनः संज्ञायाम्" इति दीर्घः 'अष्टापदं शारिफलम्' इत्यमरः । तदाकारां तत्सदृशसंस्थानामित्यर्थः मध्ये राजगृहं चतुर्दिक्षु राजवीथयः तन्मध्येष्ववकाशाश्चेत्येवंविधसंस्थानामित्यर्थः वरनारीगणैः सुन्दरस्त्रीगणैः युतां युक्ताम् सर्वरत्नैः समाकीर्णां व्याप्ताम् तानि तु 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः । शोणरत्नं रोहितकं पद्मरागोऽरुणोपलः ॥ विद्रुमो ना प्रवालोऽस्त्री वज्रोऽस्त्री हीरकः पुमान् । इन्द्रनीलं महानीलं वैडूर्यं बालवायजम् ॥ कुरुविन्दास्तु कल्माषा रत्नभेदास्तु मौक्तिकम् । माणिक्यं पौष्पकं शङ्खः' इत्यादिनिघण्टुपर्यायोक्तानि । विमानाख्यगृहैः शोभिताम् 'विमानोऽस्त्री देवैयाने सार्वभौमिकसद्मनि' इति भास्करः ॥ १६ ॥

१७ ] ति० टी०–गृहेति । गृहैः पौरकुटुम्बिगृहैर्गाढां निबिडाम् अत एवाविच्छिद्राम् इक्षुकाण्डरससमानस्वादूदकवतीम् ॥ १७ ॥

रा० टी०–गृहेति । गृहगाढां कुटुम्बिगृहनिबिडाममामपरिमितप्रभावाम् विच्छिद्रां दोषरहिताम् ज्योतिश्शास्त्रानुकूलामित्यर्थः त्रयाणां कर्मधारयः 'छिद्रं रन्ध्रे दूषणेपि' इति भास्करः । समभूमौ समा वैषम्यरहिता कान्तिविशिष्टा वा या भूमिः तस्यां निवेशितां प्रकटिताम् शालितण्डुलसम्पूर्णाम् 'शालयः श्वेततण्डुलाः' इति वैजयन्ती इक्षुकाण्डरसोदकामिक्षुकाण्डरससदृशोदकविशिष्टाम् किञ्च उदकसदृशव्ययीक्षुदण्डरसविशिष्टाम् ॥ १७ ॥

गो० टी०–गृहगाढामिति । गृहैः कुटुम्बिगृहैः गाढां निबिडाम् अविच्छिद्रां निर्दूषणाम् 'छिद्रं रन्ध्रे दूषणेऽपि' इति भास्करः । समभूमौ अनिम्नोन्नतप्रदेशे निवेशितां निर्मिताम् । शालयः श्वेततण्डुला व्रीहयः 'शालयः श्वेततण्डुलाः' इति वैजयन्ती । तैषां तण्डुलैः संपूर्णाम् इक्षुकाण्डस्य इक्षुदण्डस्य यो रसस्तत्तुल्यमुदकं यस्यां ताम् १७ ॥

१८ ] ति० टी०–भृशं नादितां पृथिव्यामत्यर्थमत्यन्तम् । अनुत्तमामिति बहुव्रीहिः ॥ १८ ॥

रा० टी०–दुन्दुभीभिरिति । दुन्दुभीभिः भेरीभिः मृदङ्गैः वीणाभिश्च पणवैः मर्दलैः भृशं नादितां पृथिव्यां तथा पृथिव्यामपि अत्यर्थमनुत्तमां ताम् किञ्च पृथिव्याः अ न अन्तः परिच्छेदो यस्याः सा तामपृथिव्यांतां सर्वलोकादूर्ध्वमपि विद्यमानामित्यर्थः अत एव अत्यर्थमनुत्तमामतिश्रेष्ठां दुन्दुभीत्यत्र दीर्घ आर्षः ॥ १८ ॥

गो० टी०–दुन्दुभीभिरिति । दुन्दुभीभिर्भेरीभिः ईकारान्तत्वमार्षम् मृदङ्गैः मृत् अङ्गं येषां तैः पणवैः मर्दलैः तथेति समुच्चये । भृशं नादितां पृथिव्यामत्यर्थमनुत्तमां श्रेष्ठां तां प्रसिद्धाम् ॥ १८ ॥

१ गणैर्यु. गो. रा. पाठः ।

विमानमिव सिद्धानां तपसाधिगतं दिवि । सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९ ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् । शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २० ॥
सिंहव्याघ्रवराहाणां मत्तानां [1]नदतां वने । हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१ ॥
तादृशानां सहस्रैस्तामभिपूर्णां [2]महारथैः । पुरीमावासयामास राजा दशरथस्तदा ॥ २२ ॥
तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैरृषिभिश्च केवलैः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

१९ ] ति० टी०–तपसा प्राप्तं दिवि सिद्धानां विमानमिव पृथिव्यामनुत्तमामिति संबन्धः सुष्ठु निवेशितो वेश्मनामन्तर्बाह्यप्रदेशो यस्यां ताम् ॥ १९ ॥

रा० टी०–विमानमिति । तपसा अधिगतं प्राप्तं दिवि सिद्धानां विमानमिव सकलाभीष्टदातृत्वात्तादृशविमानसदृशीत्वेन प्रतीयमानामित्यर्थः । सुनिवेशितवेश्मान्ताम् सुनिवेशिताः वेश्मान्ताः गृहप्रान्ताः यस्या ताम् नरोत्तमसमावृतां नरोत्तमैः परमविद्वद्भिः समावृताम् अत एव राजसङ्घैरावृतामित्यनेन[3] पौनरुक्त्यम् ॥ १९ ॥

गो० टी०–विमानमिति । सिद्धानां तपःसिद्धानां पुरुषाणां दिवि स्वर्गे तपसाधिगतं लब्धं विमानमिव देवयानसमूहमिव स्थिताम् जातावेकवचनम् सुनिवेशिताः सुष्ठु निर्मिताः वेश्मान्ताः गृहप्रान्ता यस्यां सा सर्वतः सम्यङ्निर्मितगृहामित्यर्थः नरोत्तमैः विद्वद्भिः समावृताम् ॥ १९ ॥

२० ] ति० टी०–ये चेति । विविक्तं स्वसमूहाद्भ्रष्टं सहायरहितम् अपरापरं परे पित्रादयः, अपरे पुत्रादयः, तैर्हीनम् वंशस्यैकतन्तुमित्येके परकीयस्वकीयभिन्नं केवलप्रेक्षकमित्यन्ये तथा शब्दमात्रानुमितसत्तया वेधयोग्यम् प्रच्छन्नमिति यावत् तथा विततं च विरुध्य युद्धं कृत्वा पश्चात्ततं पलायितम् ईदृशान्शक्यवेधानपि ये बाणैर्न विध्यन्ति ये च लघुहस्ताः शीघ्रवेधिनः विशारदा अस्त्रशस्त्रप्रयोगसमर्थाः तेषां सहस्रैः पूर्णामित्युत्तरेण संबन्धः ॥ २० ॥

रा० टी०–ये चेति । लघुहस्ताः शिक्षादिना प्राप्तहस्तलाघवीकाः शीघ्रवेधिन इति यावत् अत एव विशारदाः अस्त्रशस्त्रप्रयोगनिपुणाः अपि ये विविक्तं स्वसङ्घाच्च्युतमपरापरं न परे पित्रादयः अपरे पुत्रादयः यस्य तं स्ववंशतन्तुमित्यर्थः । शब्दवेध्यं शब्दमात्रलक्षणजनितहननयोग्यं प्रच्छन्नमित्यर्थः । विततं विगतः ततः युद्धविस्तारो यस्य नष्टसामर्थ्यादिना भ्रष्टयुद्धकमित्यर्थः तं च न विध्यन्ति ॥ २० ॥

गो० टी०–ये चेति । श्लोकत्रयमेकान्वयम् । लघुहस्ताः शिक्षिताश्चाः 'लघुहस्तः सुहस्तश्च कृतास्त्रः कृतपुङ्खकः' इति वैजयन्ती । विशारदाः समर्थाः उपायज्ञा इति यावत् तथाभूता अपि ये राजानः विविक्तं विजनमसहायमिति यावत् 'विविक्तौ पूतविजनौ' इत्यमरः । अपरापरं अविद्यमानपरापरं परे पित्रादयः अपरे पुत्रादयः तैर्हीनं वंशस्यैकतन्तुमिति यावत् शब्दवेध्यं शब्देन लक्ष्येण वेध्यम् एतेन प्रच्छन्नवेधनमुपलक्ष्यते विततं पलायितं च बाणैश्च न विध्यन्ति न प्रहरन्ति किं पुनर्यन्त्रादिभिरिति भावः ॥ २० ॥

२१ ] ति० टी०–सिंहेति । बाहुबलैरपि मल्लयुद्धैरपि २१

रा० टी०–ये च मत्तानां मदविशिष्टानामत एव वने नदतां नादयुक्तानां सिंहव्याघ्रवराहाणां बलाद्बलप्रयुक्तैः निशितैस्तीक्ष्णैः शस्त्रैः बाहुबलैः शस्त्रादिरहितबाहुभिश्चेत्यर्थः हन्तारः ॥ २१ ॥

गो०टी०–सिंहेति । मत्तानां वने स्वदेशे नर्दतां गर्वेण गर्जतां सिंहव्याघ्रवराहाणां बलान्मनोबलेन बाहुबलैरपि सहकारिभिः निशितैस्तीक्ष्णैः शस्त्रैरायुधैः करणैर्हन्तारः 'शस्त्रमायुधलोहयोः' इत्यमरः ॥ २१ ॥

२२ ] ति० टी०–महारथैः । 'आत्मानं सारथिं चाश्वान्रक्षन्युध्येत यो नरः स महारथसंज्ञः स्यात्' एको दशसहस्रैर्योद्धा च आवासदामास तेषामावासेन तैः पूर्णां चकारेत्यर्थः ॥ २२ ॥

रा० टी०–तादृशानां सहस्रैः महारथैः अभिपूर्णां तां पुरीमयोध्यां राजा महाराजाधिराजः तथा पित्राद्यावासनप्रकारेणावासयामास संस्थापयामास पालयामासेत्यर्थः ॥ २२ ॥

गो० टी० तादृशानामिति । महारथैः 'आत्मानं सारथिं चाश्वान् रक्षन् युद्ध्येत यो नरः । स महारथसंज्ञः स्यात्' इत्युक्तलक्षणैः तादृशानां तेषां सहस्रैः अभिपूर्णां तां तथात्वेन प्रसिद्धां पुरीमावासयामास ॥ २२ ॥

२३ ] ति० टी०–तामिति । अग्निमद्भिराहिताग्निभिर्गुणाः शमदमादयः । वेदानां षडङ्गानां च पारगैः । महर्षिकल्पैर्महर्षिसदृशैः केवलैर्मुख्यैरृषिभिर्मन्त्रद्रष्टृभिश्चावृतां व्याप्ताम् २३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

१ नर्दतां गो. पाठः । २ स्तथा- रा. पाठः । ३ मित्यनेन न पौनरुक्त्यमिति भाति ।

## षष्ठः सर्गः ॥ ६ ॥

अयोध्यां दशरथे शासति तत्कालीनाखिलजनवर्तनकथनम् ।

तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः । दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी । महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥

रा० टी०—तामिति । अग्निमद्भिः अग्निहोत्रिभिः गुणवद्भिः शमदमादिगुणसंपन्नैः वेदषडङ्गपारगैः अधीताध्यापितसाङ्गसर्ववेदैः सहस्रदैः बहुप्रदैः सत्यरतैः मिथ्यासम्बन्धशून्यैः महात्मभिः पूजितस्वरूपैः द्विजोत्तमैः ब्राह्मणैः महर्षिकल्पैः वसिष्ठसदृशैः केवलैः अविद्यासम्बन्धशून्यैः ऋषिभिश्चावृतां तां पुरीमावासयामासेति पूर्वेणान्वयः ॥ २३ ॥

इत्यार्षे श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—तामिति । अग्निमद्भिः आहिताग्निभिः गुणवद्भिः शमदमादिगुणवद्भिः वेदानां षडङ्गानां च पारमन्तमध्ययनेन गच्छन्तीति तथा "अन्तात्यन्ता०" इत्यादिना डप्रत्ययः सहस्रदैः बहुप्रदैः सत्ये सत्यवचने रतैः निरतैः महात्मभिः महामतिभिः केवलैः ऋषिभिरपि महर्षिकल्पैः वसिष्ठादिमहर्षितुल्यैः ईषदसमाप्तौ कल्पप्प्रत्ययः द्विजोत्तमैः आवृतां तामावासयामासेत्यनुपज्यते । अत्र वंशस्थवृत्ते प्रथमचरणे जगणाभावेनोपजातिवृत्तमिति बोध्यम् । आचार्याः प्राहुः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"इतिश्रुतिरनेनोपबृंह्यते । द्विजोत्तमैः "अष्टवर्षं ब्राह्मणमुपनयीत"इत्युक्तरीत्या कृतोपनयनैः वेदषडङ्गपारगैः अधीतसाङ्गसशिरस्कवेदैः अग्निमद्भिरनुष्ठितयज्ञैः सहस्रदैः यथाशक्ति ब्राह्मणसात्कृतद्रव्यैर्महात्मभिः महायत्नैः कृततपस्कैरित्यर्थः । गुणवद्भिः शमदमाद्युपेतः स्यात् "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा" इत्युक्तशमादिमद्भिः सत्यरतैः सत्यस्य सत्यमित्युक्ते ब्रह्मणि भक्तिरूपापन्नज्ञानवद्भिः केवलैः "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्युक्तरीत्यानाविष्कृतस्वरूपैः ऋषिभिः बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरित्युक्तस्वरूपैः महर्षिकल्पैः यत्रर्षयः प्रथमजा ये पुराणा इत्युक्तरीत्या सूरिसदृशैः आवृतां अवतरिष्यति भगवानत्रेति समागम्य संसेवितां तामावासयामास । यद्वा हे केवल परिशुद्धचित्त त्वमपि वासाय गच्छेति कविराह तदुपगतेतिवत् ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

१ ] ति० टी०—तस्यामिति । वेदवित् त्रैवर्णिकमात्रस्यायोऽयं गुणः सर्वसंग्रहः सर्वेषामपरिमितचतुरङ्गबलराष्ट्रदुर्गादीनां संग्राहकः एवं सामादिप्रयोग एवं फलं भविष्यतीत्यादिदीर्घदर्शनशीलः तेजः प्रतापः ॥ १ ॥

रा० टी०—पूर्वसर्गे पुरीं संवर्ण्य राजानं वर्णयन् तद्वासिनो वर्णयति–तस्यामित्यादिभिः । वेदवित् वेदज्ञः सर्वेषां दुर्गादीनां सङ्ग्रहः सङ्ग्राहकः दीर्घदर्शी विलम्बकालभाविफलदर्शनशीलः महातेजाः परमवर्चस्वी अत एव पौरजानपदप्रियः पुरे भवाः पौराः जनपदे देशे भवाः जानपदास्तेषां प्रियः ॥१॥

गो० टी०—एवं भगवदवतारयोग्यदेशो दर्शितः। अथ तद्योग्यं पुरुषं दर्शयति सर्गे षष्ठे । तस्यामित्यादि श्लोकचतुष्टयमेकान्वयम् । दशरथः तस्यां वसन् सन् जगत् अपालयत् । स कीदृशः वेदं वेदार्थं वेत्तीति वेदवित् संगृह्णाति धनप्रदानादिना स्वीकरोतीति संग्रहः पचाद्यच् सर्वेषां शूराणां विदुषां च संग्रहः सर्वसंग्रहः दीर्घदर्शी दीर्घं चिरकालभाविपदार्थं द्रष्टुं शीलमस्यास्तीति तथा ताच्छील्ये णिनिः। महातेजाः महाप्रतापः 'तेजः पराक्रमे प्राणे वर्चस्यर्चिषि रेतसि' इति रत्नमाला । पुरे भवा जनाः पौराः जनपदे भवा जानपदाः ते प्रिया यस्य स तथा ॥ १ ॥

२ ] ति० टी०—अतिरथो दशसहस्रमहारथैर्योद्धा वशी स्वाधीनः ॥ २ ॥

रा०टी०—अतिरथः दशसहस्रमहारथैरसाहाय्येन युद्धकर्ता यज्वा यथाविधि यागकारी इक्ष्वाकूणां धर्मरतः इक्ष्वाकूचितसत्यप्रतिज्ञत्वादिधर्मविशिष्टः नित्यसापेक्षत्वात्समासः वशी स्वतन्त्रः महर्षीन् कल्पयति सामग्रीसम्पादकत्वविघ्नध्वंसकत्वादिना यागादिसमर्थान्करोतीति महर्षिकल्पः राजर्षिः राजा चासौ ऋषिश्चेति कर्मधारयः अत एव त्रिषु कृत्स्नोर्ध्वकृत्स्नमध्यकृत्स्नाधोरूपेषु लोकेषु विश्रुतः ख्यातः ॥ २ ॥

गो टी०—इक्ष्वाकूणामिति । इक्ष्वाकूणां मध्ये अतिरथ बहुभिर्महारथैरेको योद्धा रथी यज्वा विधिनेष्टवान् धर्मेषु तटाकखननारामप्रवर्तनादिषु रतः वशी स्वाधीनसर्वजनः 'त्रिष्वधीने वशो वाञ्छाप्रभुत्वाधीनतासु ना' इति भास्करः । महर्षिकल्पः महर्षितुल्यः राजर्षिः राजरूपऋषिः त्रिषु लोकेषु भूर्भुवःस्वर्लोकेषु विश्रुतः प्रसिद्धः ॥ २ ॥

१ धर्मरतो गो. रा. पाठः ।

बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः । धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥
यथा मनुर्महातेजा लोकस्य परिरक्षिता । तथा दशरथो राजा लोकस्य परिरक्षिता ॥ ४ ॥
तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता । पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥
तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः । नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥
नाल्पसन्निचयः कश्चिदासीत्तस्मिन्पुरोत्तमे । कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् । द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८ ॥

३-४ ] ति० टी०—धनं हिरण्यादि अन्यैः संचयैर्धान्यादिसंचयैः ॥ ३ ॥ ४ ॥

रा० टी०—बलवानिति । बलवान्साङ्गसेनाविशिष्टः निहतामित्रः निहतः अमित्रः शत्रुर्येन मित्रवान् प्रशस्तमित्रविशिष्टः विजितेन्द्रियः वशीकृतान्तर्बहिःकरणः सञ्चेतुं योग्याः सञ्चयास्तैः सञ्चयैः प्राकृतैर्धनैः अन्यैः प्राकृतविलक्षणैर्दिव्यैश्च धनैर्विशिष्टः शक्रवैश्रवणोपमः इन्द्रकुबेरसदृशत्वेन प्रतीयमानः चकारान्तरेण नित्यत्वादिधर्मेण लौकिकोपमानार्हः ॥ ३ ॥ यथेति । राजा महाराजाधिराजो दशरथः तस्यां प्रसिद्धायां पुर्यामयोध्यायां वसन् सन्यथा लोकस्य परिरक्षिता लोकपरिरक्षणार्हः महातेजाः मनुः वैवस्वतः जगदपालयत् तथा जगदपालयत् " अर्हे कृत्यतृचश्च " इति तृच् । श्लोकचतुष्टयमेकान्वयि ॥ ४ ॥

गो० टी०—बलवान् चतुरङ्गसेनायुक्तः अत एव निहताऽमित्रः निहतशात्रवः मित्रवान् प्रशस्तमित्रयुक्तः विजितेन्द्रियः निषिद्धेषु शब्दादिष्वप्रवर्तितेन्द्रियः धनैर्हिरण्यरत्नदिव्याम्बराभरणादिभिः अन्यैः तदपेक्षयान्यैः संग्रहैः[1] संचयैः निधिभिरिति यावत् शक्रवैश्रवणोपमः यथाक्रमं इन्द्रकुबेरोपमः ॥ ३ ॥ यथा मनुः वैवस्वतमनुः लोकस्य परिरक्षिता तथा दशरथो राजा तस्यां वसन् जगद्भूलोकमपालयत्[2] ॥ ४ ॥

५ ] ति० टी०—तेनेति । सत्याभिसन्धः सत्यप्रतिज्ञः धर्मकामार्थैस्त्रिवर्गस्तत्तत्संपादककर्मानुष्ठानप्राधान्येन पालिताऽभवदिति योजना ॥ ५ ॥

रा० टी०—तेनेति । सत्याभिसन्धेन सत्यप्रतिज्ञेन त्रिवर्गम् अप्राकृतधर्मकामार्थमनुतिष्ठता यथाशास्त्रमनुभवता तेन महाराजाधिराजदशरथेन इन्द्रस्यामरावती इव[3] इन्द्राधिष्ठिता अमरावतीसदृशी श्रेष्ठा सा प्रसिद्धा पुरी अयोध्या पालिता यथाशास्त्रं रक्षिता अभवदिति शेषः ॥ ५ ॥

गो० टी०—एवं राजगुणाः उक्ता लोकपालनं चोक्तं संप्रति पुरपरिपालनमाह—तेनेति । सत्ये अभिसन्धा अभिप्रायो यस्य तेन त्रिवर्गं धर्मार्थकामान् अनुतिष्ठता अनुसरता पालिता सत्यादिपुरःसरं त्रिवर्गार्थं पालितेत्यर्थः ॥ ५ ॥

६ ] ति० टी०—धर्मात्मानो धर्मवासनावच्चित्ताः बहुश्रुता इति बहुव्रीहिः ॥ ६ ॥

रा० टी०—तस्मिन्निति । बहुश्रुताः सकलसच्छास्त्रश्रवणसंपन्नाः अत एव स्वैःस्वैर्धनैस्तुष्टाः सन्तोषं प्राप्ताः अत एवालुब्धाः अनुचितद्रव्यादिलोभरहिताः अत एव सत्यवादिनः अत एवधर्मात्मानः धर्मस्वरूपाः अत एव हृष्टाः प्राप्तानन्दाः नराः तस्मिन्प्रसिद्धे पुरवरे अयोध्यानगरे आसन्निति शेषः ॥ ६ ॥

गो० टी०—पालनफलं दर्शयति तस्मिन्नित्यादिना मानवेन्द्रेणधीमतेत्यन्तेन । हृष्टाः वाससौख्येन प्रीताः धर्मात्मानः बहु श्रुतं शास्त्रश्रवणं येषां ते बहुश्रुताः स्वैः स्वैः धनैस्तुष्टाः परधनानभिलाषिण इत्यर्थः वीप्सया स्ववर्णस्वाश्रमोचितधनमात्रपरिग्रहः सूच्यते अलुब्धाः दाने प्राप्ते लोभरहिताः सत्यवादिनः सत्यवचनशीलाः आसन्निति शेषः ॥ ६ ॥

७ ] ति० टी०—नाल्पेति । सतामुत्कृष्टवस्तूनां निचयः सन्निचयः अल्पः सन्निचयो यस्य स नास्ति अभावमुखेन सर्वेषां बहुधनवत्ता सूच्यते योऽप्यगवादिमान् अर्थाभावेऽव्ययीभावे नञ्तत्पुरुषे वा ततो मतुप् अत एवासिद्धार्थोऽसिद्धैहिकामुष्मिकप्रयोजन ईदृशः कुटुम्बी न कश्चिदासीदिति योजना एवमग्रेऽपि ॥ ७ ॥

रा० टी०—नाल्पेति । यः कुटुम्बी पुत्रकलत्रादिविशिष्टः सः अल्पसन्निचयः अल्पः सन्निचयः कोशो यस्य स कश्चित्तस्मिन्पुरोत्तमे नासीत् अगवाश्वधनधान्यवान् गवाश्वधनधान्यरहितः नासीत् असिद्धार्थः पुरुषार्थरहितश्च नासीत् हिशब्दश्चार्थे नञावृत्तिः योग्यतावशात् एवमुत्तरत्रापि सर्वोपि बहुकोशादिमानासीदित्यर्थः ॥ ७ ॥

गो० टी०—नेति । तस्मिन्पुरोत्तमे पुरश्रेष्ठे अल्पसंनिचयः अल्पकोशवान् अगवाश्वधनधान्यवान् असिद्धार्थः धनादिभिरप्राप्तधर्मार्थकामरूपपुरुषार्थः यः कुटुम्बी स कश्चिन्नासीत् 'माता पिता स्नुषे पुत्रौ पुत्री पत्न्यतिथिः स्वयम् दशसंख्यः कुटुम्बीति विष्णुनोक्तं द्विजोत्तम ' ॥ ७ ॥

८ ] ति० टी०—कामी कामैकतत्परः कदर्यः ' आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भ्रा-

१ संग्रहैः रा. गो. पाठः । २ वसञ्जगदपालयत् । रा. गो. पाठः । ३ इन्द्रस्येवा. रा. पाठः ।

सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः । मुदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् । नामृष्टो न नलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १० ॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् । नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥ ११ ॥
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः । कश्चिदासीदयोध्यायां न चावृत्तो न संकरः ॥ १२ ॥

तृन्स कदर्य इति स्मृतः' । 'नृशंसो घातुकः क्रूरः' शक्यमिति सामान्ये नपुंसकम् । अत्र नञावृत्त्या काम्यादिषु संबध्यते । तेनैकगुणवतां समुदितगुणवतां च तत्र सत्ता निषिध्यते ॥ ८॥

रा० टी०—कामीति । कामी कामवशः पुरुषः अयोध्यायां क्वचिद्द्रष्टुं न शक्यम् कदर्यः लोभहेतुकात्मादिपीडकश्च नृशंसः क्रूरश्च पुरुषः अयोध्यायां क्वचिद्द्रष्टुं न शक्यमन्वेषणेनापि न लभ्यते इत्यर्थः अविद्वान् विद्वत्तारहितः न द्रष्टुं शक्यम् नास्तिकः परलोकाभावनिश्चयवान् द्रष्टुं न शक्यम् शक्यमिति सामान्ये नपुंसकम् 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् लोभाद्यः पितरौ भ्रातॄन्स कदर्य इति स्मृतः' 'नृशंसो घातुकः क्रूरः' इत्यमरः ॥ ८ ॥

गो० टी०—कामीति । कामी कामैकपरः पुरुषः अयोध्यायां क्वचित् कोणेऽपि द्रष्टुं न शक्यं शक्यमिति निपातः 'शक्यमरविन्दसुरभिः' इति कालिदासेनापि प्रयुक्तः । कदर्यो वा द्रष्टुं न शक्यम् । आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भ्रातॄन् स कदर्य इति स्मृतः' नृशंसः क्रूरोपि न द्रष्टुं शक्यं 'नृशंसो घातुकः क्रूरः' इत्यमरः । अविद्वान् विद्यारहितः परलोको नास्तीति यो मन्यते स नास्तिकः । "अस्तिनास्तिदिष्टंमतिः" इतिठक् ॥ ८ ॥

९ ] ति० टी०—सर्व इति । सुसंयताः सुष्ठु निगृहीतेन्द्रियाः ॥ ९ ॥

रा० टी०—सर्वे इति । नराः नार्यश्च सर्वे धर्मशीलाः वेदतात्पर्यविषयीभूतधर्मविचारपराः अत एव सुसंयताः अत एव मुदिताः सम्यग्वशीकृतेन्द्रियाः अत एव अमलाः मलसम्बन्धशून्याः अत एव शीलवृत्ताभ्यां स्वभावाचाराभ्यां महर्षय इव महर्षिसदृशाः सन्तीति शेषः सर्वे इत्यत्र "पुमान् स्त्रिया" इत्येकशेषः विभक्तिविपरिणामेनान्वयो वा ॥ ९ ॥

गो० टी०—सर्वमिति । अयोध्यायां सर्वे नराः सर्वा नार्यश्च धर्मशीलत्वादिविशिष्टा भवन्ति सुसंयताः सुष्ठु नियतेन्द्रियाः शीलवृत्ताभ्यामुदिताः उत्पन्नाः सहजशीलवृत्ता इत्यर्थः शीलं सत्स्वभावः वृत्तमाचारः । 'शीलं स्वभावे सद्वृत्ते । वृत्तं पद्ये चरित्रे च' इत्युभयत्राप्यमरः । अमलाः निर्मलमनस्काः ॥ ९ ॥

१० ] ति० टी०—भोगो धर्माविरुद्धः कामभोगः अमृष्टोऽनिर्मलः । 'न नलिप्ताङ्गः' इति पाठः । नलिप्ताङ्ग इति सुप्सुपेति समासः । लेपश्चन्दनादिना तदाह—नासुगन्ध इति ॥ १० ॥

रा० टी०—नाकुण्डलीति । अकुण्डली कुण्डलरहितो न विद्यते एवममुकुटी न अस्रग्वी न अल्पभोगवान्न अमृष्टः अनिर्मलो न न नलिप्ताङ्गः न लिप्तं चन्दनादिलेपयुक्तमङ्गं यस्य स न नशब्देन समासान्नलोपाप्राप्तिः नानुलिप्ताङ्ग इति पाठे अनुलिप्तमङ्गं यस्य स अनुलिप्ताङ्गः न अनुलिप्ताङ्गः नानुलिप्ताङ्गः अत्र पक्षे नकारोऽनुकर्षणीयः अकारो वा छेत्तव्यः असुगन्धिः शोभनः गन्धो यस्य स सुगन्धिः कुङ्कुमकस्तूर्यादिः न सुगन्धिर्यस्य सोपि न नासुगन्ध इति पाठे न सुगन्धः शोभनो गन्धो यस्मिन्स असुगन्धः पुरुषो नेत्यर्थः गन्धस्येत्वे तदेकान्तग्रहणमित्युक्तत्वेत्वविरहः वस्तुतस्तु इकारान्तपाठेपि शोभनो गन्धः स्वाभाविकशरीरामोदो यस्येत्यर्थे न क्षतिः ॥१०॥

गो० टी०—नाकुण्डलीति । अकुण्डली अयोध्यायां न विद्यते एवमुत्तरत्राप्यन्वयः अल्पभोगवान् अल्पसुखवान् 'भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः मृष्टः अभ्यङ्गस्नानशुद्धः नानुलिप्ताङ्गइत्यत्र सुप्सुपेति समासः । चन्दनाद्यननुलिप्ताङ्ग इत्यर्थः । अत्रापि नञनुषज्यते सुगन्धशब्देन कुङ्कुमकस्तूर्यादिकमुच्यते ॥ १० ॥

११ ] ति० टी०—निष्क उरोभूषणम् अनात्मवानजितान्तःकरणः ॥ ११ ॥

रा० टी०—नामृष्टेति । अमृष्टभोजी बलिवैश्वदेवाद्यभावप्रयुक्ताऽशुद्धान्नभोजी नैव दृश्यते अदाता अतिदातृत्वक्रियारहितश्च न अनङ्गदनिष्कधृक् बाहुभूषणोरोभूषणभूषितपुरुषभिन्नश्च न अहस्ताभरणः अङ्गुलीयकादिरहितश्च न अनात्मवान् स्वरूपज्ञानरहितश्च न दृश्यते अपित्रयं वाशब्दश्च चार्थे एको वाशब्द एवार्थे ॥ ११ ॥

गो० टी०—नामृष्टेति । मृष्टं पूर्णम् अन्नाभावप्रयुक्तालपभोजनवानयोध्यायां न दृश्यते एवमुत्तरत्रापि योज्यं दाता प्रकरणादन्नदाता अङ्गदं बाहुभूषणं निष्कमुरोभूषणं । 'साष्टेशते सुवर्णानां हेम्न्युरोभूषणे पले दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥ ते धरतीति अङ्गदनिष्कधृक् । धृगित्येव पाठः हस्ताभरणं कटकाङ्गुलीयकादि अनात्मवान् अजितान्तःकरणः॥११॥

१२ ] ति० टी०—अयज्वा सोमयागरहितः क्षुद्रोऽल्पविभैश्वर्यादिमान् अवृत्तः सदाचाररहितः न संकरः कुण्डगोलकादिः । 'न च निर्वृत्तसंकरः' इति पाठे निर्वृत्तमनुष्ठितं सांकर्यं परक्षेत्रे बीजावापादिरूपं येन स इत्यर्थः संकरशब्दोभावप्रधानः॥१२॥

१ नानुलिप्ताङ्गो. रा. पाठः । २ वाप्यनात्मवान्. रा. पाठः । ३ कश्चिन्नासी. रा. पाठः । ४ नचनिर्वृत्तसंकरः. रा. गो. पाठः ।

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः । दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३ ॥
नास्तिको नानृती वापि न कश्चिदबहुश्रुतः । नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित् ॥ १४ ॥
नाषडङ्गविदत्रास्ति नाव्रतो नासहस्रदः । न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ १५ ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् । द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६ ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः । कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७ ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः । सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥

रा० टी०—नेति । अनाहिताग्निः निरवच्छिन्नाग्निहोत्ररहितः कश्चित् द्विजः अयोध्यायां नासीत अयज्वा सोमयागरहितश्च न क्षुद्रः अल्पविद्यादिकश्च न तस्करश्चोरश्च न निर्वृत्तसङ्करः निर्वृत्तः सम्पादितः सङ्करः परक्षेत्रे बीजाधानादिना साङ्कर्यं येन स च न सङ्कर इति भावप्रधानो निर्देशः. वाशब्दश्चार्थे न चावृत्तो न सङ्कर इति भट्टाभिप्रेतः पाठः तत्रावृत्तः सदाचाररहितो नेत्यर्थः ॥ १२ ॥

गो० टी०—नेति । आहिताग्निः अजस्राग्निहोत्री यज्वापि हि कश्चिद्विच्छिन्नाग्निर्भवति अयज्वा सोमयागरहितः क्षुद्रः अल्पविद्यैश्वर्यवान् तिरस्कारार्ह इति यावत् । निर्वृत्तः अनुष्ठितः सङ्करः परक्षेत्रे बीजावापादिर्येन सः ॥ १२ ॥

१३ ] ति० टी०—स्वेति । दानं नित्यप्राप्तम् यथाशक्ति विधिना परदत्तस्य स्वीकारः प्रतिग्रहस्तत्र संयताः संकुचिताः निषिद्धप्रतिग्रहरहिता इत्यर्थः ॥ १३ ॥

रा० टी०—अयोध्यानित्यनिवासिवृत्तमुक्त्वा नैमित्तिकनिवासिद्विजवृत्तमाह—स्वेत्यादिभिः । नित्यं स्वकर्मनिरताः अत एव विजितेन्द्रियाः अत एव दानाध्ययनशीलाः प्रतिग्रहे च संयताः नियमिताः निषिद्धप्रतिग्रहरहिता इत्यर्थः आसन्निति शेषः ॥ १३ ॥

गो० टी०—स्वकर्मेति । अध्ययनं जपरूपाध्ययनं संयताः संकुचिताः ॥ १३ ॥

१४ ] ति० टी०—नास्तिको नास्ति परलोक इति बुद्धिमान् । अनृत्यसत्यवचनः । ' अनृतः ' इति पाठेऽपि अर्शआद्यचा स एवार्थः । अशक्तः स्वीयैहिकामुष्मिकार्थसाधनासमर्थः ॥ १४ ॥

रा० टी०—नेति । नास्तिकः परलोकाभावविषयकनिश्चयविशिष्टः कश्चिन्न विद्यते अनृतकः अनृतमसत्यं कायति वदतीति किञ्च न ऋतं सत्यं यस्य स च न अबहुश्रुतः बहुश्रुतभिन्नो न असूयकः गुणेषु दोषाविष्कर्ता न अशक्तः सामर्थ्यरहितो न अविद्वान् विद्वत्तारहितश्च न तथाशब्दश्चार्थे। नास्तिको नानृती वापीति भट्टसम्मतः पाठः तत्रानृत इति पाठे अर्शआद्यच् स एवार्थ इति व्याख्यातम् । तत्पाठद्वये नञावृत्तिर्बोध्या ॥ १४ ॥

गो० टी०—नेति । अनृतमसत्यं कायति वक्तीत्यनृतकः कैशब्द इत्यस्मादात्वे " आतोऽनुपसर्गे कः " इति कप्रत्ययः श्रुतं श्रवणं भावे निष्ठा बहुप्रकारशास्त्रश्रवणरहित इत्यर्थः । असूयतीत्यसूयकः । " कण्ड्वादिभ्यो यक् " इति यक् । धातुसंज्ञायां वुञ् अशक्तः ऐहिकामुष्मिकार्थसाधनाशक्तः तदा दशरथराज्यपालनकाले अनेनायं श्लोकोजानपदविषय इति गम्यते तेनात्र न पौनरुक्त्याशङ्का ॥ १४ ॥

१५ ] ति० टी०—नेति । व्रतमेकादश्यादिव्रतम् क्षिप्तचित्त इति उन्मादादिनेति शेषः व्यथित आधिव्याधिपीडितः ॥ १५ ॥

रा० टी०—नेति । अषडङ्गवित् वेदाङ्गशिक्षाकल्पादिवेदितृभिन्नः अत्रायोध्यायां कश्चन नासीत् अव्रत एकादश्यादिव्रतशून्यो न असहस्रदः सहस्रदातृभिन्नः अल्पदाता च नेत्यर्थः। दीनः दुर्बलशरीरो न क्षिप्तचित्तः अनवस्थितमनस्कश्च न व्यथितः व्याधिपीडितश्च न वाशब्दद्वयमपि च चार्थे ॥ १५ ॥

गो० टी०—नेति । षडङ्गानि ' शिक्षा कल्पो व्याकरणं निरुक्तिश्छन्दोविचितिर्ज्योतिषामयनं च ' । अव्रतः चान्द्रायणादिव्रतरहितः असहस्रदः अबहुप्रदः दानाध्ययनेत्यत्र विद्यादानमुक्तम् अत्र हिरण्यादिदानं क्षिप्तचित्तः व्याकुलमनस्कः व्यथितः व्याध्यादिना पीडितः ॥ १५ ॥

१६ ] ति० टी०—कश्चिदिति । नार्यां नाश्रीमतीत्यापूह्यम् । श्रीः शोभा कान्तिः । रूपं गौरत्वादि । राजा दशरथस्तस्मिन्भक्तिः स्नेहस्तदभाववान् नाभूत् ॥ १६ ॥

रा० टी०—कश्चिदिति । कश्चिन्नरः नारी च अश्रीमान् सम्पत्तिरहितः अयोध्यायां द्रष्टुं न शक्यम् अरूपवान् सौन्दर्यविशिष्टभिन्नश्च न राजनि महाराजाधिराजे अभक्तिमांश्च न अपी वौ च चार्थौ ॥ १६ ॥

गो० टी०—कश्चिदिति । अश्रीमान् कान्तिरहितः सौन्दर्यरहितः नारीपक्षे अश्रीमती अरूपवती अभक्तिमती चेत्यूह्यं राजनि दशरथे अभक्तिमान् भक्तिरहितः भक्तिरधिकमान्यविषयस्नेहः ॥ १६ ॥

१७-१८ ] ति०टी०—प्रथमं राजानं स्तुत्वा 'तस्मिन्पुरवरे' इत्यादिभिर्ब्राह्मणप्रशंसा कृता इदानीं क्षत्रियादिसाधारण्येन

१ न नास्तिको नानृतकः. गो०-रा. पाठः । २ तथा. रा. तदा. गो. पाठः ।

क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः। शूद्राः स्वकर्म[१]निरतास्त्रीन्वर्णानुपचारिणः ॥ १९ ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता। यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥
योधानामग्निकल्पानां पेशलानाममर्षिणाम्। संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१ ॥
काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः। वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२ ॥

र्णाः प्रशस्यन्ते—वर्णेष्विति त्रिभिः। अग्र्यचतुर्थेष्वग्र्यो ब्राह्मणः स चतुर्थो येषां तेषु सर्वे वर्णा इति शेषः। 'वदान्यो दानशौण्डः स्यात्' इति विश्वः सर्वत्रासन्निति शेषः ॥ १७ ॥ १८ ॥

रा० टी०—वर्णचतुष्टयसाधारणवृत्तमाह—वर्णेष्वित्यादित्रिभिः श्लोकैः। अग्र्यचतुर्थेषु अग्र्यः ब्राह्मणः चतुर्थो येषां तद्गुणसंविज्ञानो बहुव्रीहिः तेषु वर्णेषु ब्राह्मणादिषूद्भवा जनाः देवतातिथिपूजकाः कृतज्ञाः कृतोपकारविस्मृत्यभाववन्तश्च वदान्याः दाननिपुणाश्च शूराः शौर्यविशिष्टाश्च विक्रमसंयुताः पराक्रमवन्तश्च आसन्निति शेषः 'वदान्यो दानशौण्डः स्यात्' इति विश्वः ॥१७॥

गो० टी०—वर्णेष्विति। अग्रे भवोऽग्र्यः "अग्राद्यत्" इति यत्प्रत्ययः। ब्राह्मणः स चतुर्थो येषां तेषु वर्तमानाः नराः देवतातिथिपूजकाः शूद्राणां देवतापूजा तान्त्रिकमन्त्रेण अतिथिपूजनं हिरण्यादिदानेन कृतज्ञाः उपकारज्ञाः वदान्याः दानशौण्डाः 'वदान्यो दानशौण्डः स्यात्' इति विश्वः। शूराः ब्राह्मणेष्वध्ययनशूरत्वं विक्रमसंयुताः पराक्रमसंयुताः ब्राह्मणानां पराक्रमो वादकथासु आसन्निति शेषः ॥ १७ ॥

१८] रा० टी०—दीर्घेति। दीर्घायुषः धर्मं रघुनाथोपासनं सत्यं च संश्रिताः पुत्रपौत्रैः स्त्रीभिश्च नित्यं सहिताः पुरोत्तमे अयोध्यानगरे सर्वे नराः आसन्निति शेषः ॥ १८ ॥

गो० टी०—दीर्घेति। तस्मिन् पुरोत्तमे सर्वे नराः धर्मं सत्यं च संश्रिताः अत एव हेतोः दीर्घायुषः स्त्रीभिः पुत्रपौत्रैश्च संयुताः आसन् ॥ १८ ॥

१९-२० ] ति० टी०—ब्रह्ममुखं ब्राह्मणप्रधानम् तदाज्ञावर्तीत्यर्थः। शूद्राणां स्वकर्माह—त्रीनिति। उपचारः सेवा ॥ १९ ॥ २० ॥

रा० टी०—क्षत्रमिति। क्षत्रं क्षत्रियकुलं ब्रह्ममुखं ब्राह्मणप्रधानकमासीत् वैश्याश्च क्षत्रमनुव्रताः आसन् शूद्राः त्रीन्ब्रह्मक्षत्रियवैश्यानुपचारिणः सेवका इत्यर्थः अत एव स्वधर्मनिरताः उपचारः सेवा ॥ १९ ॥

गो० टी०—क्षत्रमिति। क्षत्रं क्षत्रियजातिः ब्रह्ममुखं ब्राह्मणप्रधानमासीत् तदाज्ञानुवर्तीति यावत् 'मुखं निःसरणे वक्त्रे द्वार्युपायप्रधानयोः' इति यादवः। वैश्याः क्षत्रमनुव्रताः क्षत्रस्यानुवर्तिनः शूद्रास्त्रीन् वर्णानुपचारिणः त्रयाणां वर्णानामुपचारशीलाः सन्तः स्वधर्मनिरता आसन् ॥ १९ ॥

२० ] रा० टी०—सेति। पुरस्तात्पूर्वं धीमता मेधाविना मानवेन्द्रेण मानवस्वामिना मनुना वैवस्वतेन यथा सा पुरी सुपरिरक्षिता तथा इक्ष्वाकुनाथेन तेन महाराजाधिराजदशरथेन सुपरिरक्षिता आसीदिति शेषः ॥ २० ॥

गो० टी०—एतत्सर्वं दशरथपालनकृतमित्याह—सेति॥२०॥

२१ ] ति० टी०—योधानामिति। शौर्यातिशयादग्नितुल्यानाम्। पेशलानामकुटिलानाम्। अमर्षिणां कृताभिभवासहिष्णूनाम् कृतविद्यानामभ्यस्तास्त्रशस्त्रादिविद्यानाम् योधानां सङ्घैः संपूर्णेति योजना ॥ २१ ॥

रा० टी०—योधानामिति। अग्निकल्पानां तेजसाग्निसदृशानामत एव पेशलानां सुन्दराणाममर्षिणां परचिकीर्षितपराभवासहनशीलानां कृतविद्यानां शिक्षितशस्त्रास्त्रादिविद्यानां योधानां संपूर्णा तैर्व्याप्ता आसीदिति शेषः तत्र दृष्टान्तः केसरिणां सिंहानां संपूर्णा गुहा कन्दरेव ॥ २१ ॥

गो० टी०—योधानामिति। अग्निकल्पानां शौर्यातिशयादग्नितुल्यानां पेशलानामकुटिलानाममर्षिणां पराभिभवासहिष्णूनां कृतविद्यानां शिक्षितशस्त्रास्त्रादिविद्यानां योधानां भटानाम् "पूरणगुण०"इत्यादिना षष्ठी(?)। सा पुरी योधैः संपूर्णा गुहा केसरिभिः सिंहैरिव। तथा दुर्धर्षाभूदित्यर्थः ॥ २१ ॥

२२ ] ति० टी०—काम्बोजविषये काम्बोजदेशे बाह्लीकैस्तद्देशजैः। 'बाह्लीजैः' इति क्वचित्पाठः। वनायुर्देशविशेषः। हरिरिन्द्रस्तस्य हय उच्चैःश्रवास्तद्वदुत्तमैः नदीजैः सिन्धुनदसमीपोद्भवैः ॥ २२ ॥

रा० टी०—काम्बोजेति। काम्बोजविषये काम्बोजनामकदेशे जातैः बाह्लीकैः बाह्लीकदेशोद्भवैश्च वनायुजैः वनायुनामकदेशे जातैश्च नदीजैः सिन्धुनदीसमीपदेशोद्भवैश्च हरिहयोत्तमैः हरिरिन्द्रस्तस्य हय उच्चैःश्रवास्तद्वदुत्तमैः हयोत्तमैः हयश्रेष्ठैः पूर्णा आसीदिति शेषः आवृत्त्या चः सर्वत्रान्वेति रूपवानीरूपवानितिवत् हरिहयोत्तमैः हयोत्तमैरिति प्रयोगः बाह्लीजैरिति क्वचित्पाठ इति भट्टः ॥ २२ ॥

गो० टी०—एवं चतुरङ्गसंपत्तिषु पदातिसंपत्तिमुक्त्वा तुरङ्गसंपत्तिमाह—काम्भोजेति। काम्भोजविषये काम्भोजाख्यदेशे जातैः बाह्लीकैः बाह्लीकदेशभवैः "तत्र भवः" इत्यण्। वनायुजैः वनायुदेशजातैः नदीजैः सिन्धुदेशोद्भवैः हरेरिन्द्रस्य हयो हरिहयः उच्चैश्रवास्तद्वदुत्तमैः हरिहयोत्तमैरश्वश्रेष्ठैः सा पूर्णाऽभवत् ॥ २२ ॥

१ धर्मनिरताः गो. रा. पाठः।

विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि । मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३ ॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा । अञ्जनादपि निष्क्रान्तैर्वामनादपि च द्विपैः ॥ २४ ॥
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा । भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥ २५ ॥
नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः । सा योजने द्वे च भूयः सत्यनामा प्रकाशते ॥
[ यस्यां दशरथो राजावसञ्जगदपालयत् । ] ॥ २६ ॥

२३ ] ति० टी०—हैमवतैर्हिमवत्पर्वतजातैः मातङ्गैर्गजैः २३

रा० टी०—विन्ध्येति । पर्वतोपमैः पर्वताकारैः मदान्वितैः मदविशिष्टैः अत एव मत्तैः उन्मादविशिष्टैः अत एवातिबलैः महाबलवद्भिः विन्ध्यपर्वतजैः विन्ध्यपर्वतजातैः हैमवतैः हिमवत्पर्वतोद्भवैश्च मातङ्गैः गजैः पूर्णा व्याप्ता आसीदिति शेषः २३

गो० टी०—गजसंपत्तिमाह–विन्ध्येत्यादिना । श्लोकद्वयमेकान्वयम् । मत्तैर्विन्ध्यपर्वतजैर्मातङ्गैः हैमवतैः हिमवतिजातैः "तत्र जातः" इति शैषिकोऽण् । मदान्वितैः अतिबलैर्मातङ्गैर्गजैरपि पर्वतोपमैः ॥ २३ ॥

२४ ] ति० टी०—ऐरावतादयो दिग्गजाः ॥ २४ ॥

रा० टी०—ऐरावतेति । ऐरावतकुलीनैः ऐरावतनामकेन्द्रदिग्गजकुलोद्भवैः महापद्मकुलैः महापद्मः पुण्डरीकापरनामकोऽग्निदिग्गजः स एव कुलं येषां तैश्च महापद्मोद्भवैरित्यर्थः वामनात् तदुपलक्षितयमनैर्ऋत्यदिग्गजादपि निष्पन्नैश्च अञ्जनात् तदुपलक्षितवरुणवायुदिग्गजादपि निष्पन्नैश्च अपिना कुबेरेशानदिग्गजान्निष्पन्नैश्च द्विपैः गजैः पूर्णेति पूर्वेणान्वयः तथाशब्दश्चार्थे तथा चामरसिंहः ' ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ' ॥ २४ ॥

गो० टी०—ऐरावतकुलीनैरैरावतकुलोद्भवैः " कुलात्खः " इतिखप्रत्ययः द्विपैश्च महापद्मः पुण्डरीकाख्यो दिग्गजः तस्य कुलं येषां तैः द्विपैश्च अञ्जनाद्वरुणदिग्गजान्निष्पन्नैर्द्विपैरपि वामनाद्यमदिग्गजान्निष्पन्नैः द्विपैरपि सा पूर्णासीत् ॥ २४ ॥

२५ ] ति० टी०—भद्रैरिति । ' भद्रा मन्द्रा मृगाश्चेति विज्ञेयास्त्रिविधा गजाः । क्रमेण हिमवद्विन्ध्यसह्यजाः ' भद्रमन्द्रमृगास्त्रिस्वभावाः संकीर्णा गजाः । भद्रमन्द्रादयो द्विस्वभावाः ॥ २५ ॥

रा० टी०—भद्रैरिति । अचलसन्निभैः पर्वतसदृशैः भद्रैः हिमवत्पर्वतोद्भवजातिविशेषैः मन्द्रैः विन्ध्यपर्वतोद्भवजातिविशेषैश्च मृगैः सह्यपर्वतोद्भवजातिविशेषैश्च भद्रमन्द्रमृगैः परस्परत्रित्वसाङ्कर्यविशिष्टैश्च भद्रमन्द्रैः भद्रमन्द्रनिरूपितद्वित्वसाङ्कर्यविशिष्टैः भद्रमृगैः भद्रमृगनिरूपितद्वित्वसाङ्कर्यविशिष्टैश्च मृगमन्द्रैः मृगमन्द्रनिरूपितद्वित्वसाङ्कर्यविशिष्टैश्च नित्यमत्तैः नागैः हस्तिभिः सा पुरी अयोध्या सदा पूर्णा आसीदिति शेषः सार्द्धश्लोक एकान्वयी आवृत्त्या चशब्दः स्वहीनेष्वप्यन्वेति तल्लक्षणमुक्तं वैजयन्त्याम् अङ्गप्रत्यङ्गभद्रत्वसंक्षिप्तं भद्रलक्षणम् पृथुत्वश्लथता स्थौल्यं सङ्क्षिप्तं मन्द्रलक्षणम् ॥ तनुप्रत्यङ्गदीर्घो यःप्रायो मृगगुणो मतः । भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगोऽपि च ॥ मन्द्रभद्रादयोप्येवमिति सङ्करजातयः ' इति ॥ २५ ॥

गो० टी०—भद्रैरित्यादि । सार्धश्लोक एकान्वयः । भद्रा मन्द्रा मृगाश्चेति गजजातित्रयं ' भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः ' इतिहलायुधः । भद्रमन्द्रो भद्रमृगो मृगमंद्रश्चेति द्विप्रकृतिकाः संकीर्णजातयस्तिस्रः । भद्रमंद्रमृगास्त्रिप्रकृतिकाः संकीर्णगजाः तल्लक्षणमुक्तं वैजयन्त्याम् ' अङ्गप्रत्यङ्गभद्रत्वं संक्षिप्तं भद्रलक्षणम् । तनुप्रत्यङ्गदीर्घश्च प्रायो मन्द्रगुणो मतः । भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगोऽपि च । मृगमन्द्रादयोप्येवमिति संकरजातयः ' इति । एवंभूतैर्नित्यमत्तैरचलसंनिभैः नागैः सा सदा पूर्णाऽभवत् ॥ २५ ॥

२६ ] ति० टी०—नित्येति । द्वियोजने द्वयोर्योजनयोः।अत्यन्तसंयोगे द्वितीया। भूयोऽभ्यधिकं सत्यनामा योद्धुमशक्येत्यन्वर्थनामा । राज्ञो मूलधाम एतावत् ॥ २६ ॥

रा० टी०—सेति । सत्यनामा सत्यं न कैश्चिद्योधितुं शक्या किञ्च अयोभिः विष्णुब्रह्मशिवैः ध्यायते नित्यं स्मर्यते या सेत्यादि तात्त्विकार्थविशिष्टं नाम यस्याः सा अन्वर्थनामेति यावत् अयोध्या पुरी द्वे योजने गुप्तहरेरारभ्यबिल्वहरिपर्यन्तं भूमयः नगरवर्तिदेशान्तरापेक्षया अत्यन्तं नित्यं प्रकाशते यस्यां योजनद्वयपरिच्छिन्नायां राजा महाराजाधिराजो दशरथः आवसन् स्वशिबिरतया नित्यं तिष्ठन्सन् जगदपालयत् । चशब्दान्नित्यलाभः किञ्च सत्यं सत्यपदघटितम् अयोध्यापरपर्यायभूतसत्येति नाम यस्याः सेत्यर्थः उक्तं च कौषीतकीब्राह्मणादौ " अयोध्या सत्यानामत्वेन " ' अकारो वासुदेवः स्याद्यकारस्तु प्रजापतिः उकारो रुद्ररूपस्तु तां ध्यायन्ति मुनीश्वराः ' इति पद्मपुराणम् ॥ २६ ॥

गो० टी०—अतिरथमहारथादिशब्दैः रथसंपत्तिरपि सूचिता एवं चतुरङ्गबलसंपत्त्या न नगरमात्रमप्रधृष्यं किंत्वभितो द्वे योजने दुर्गमं इत्याह–सेति । सा नगरी भूयः नगराद्बहिरपि द्वे योजने द्वयोर्योजनयोः ' अत्यन्तसंयोगे द्वितीया । सत्यनामा यथार्थनामा अयोध्यानामा " डाबुभाभ्यामन्यतरस्याम् " इति डाप् अत्र हेतुमाह–यस्यामिति । योजनत्रयविस्तारवत्यां तस्यां मध्ये योजनद्वयमत्यन्तंयोद्धुमशक्येत्यर्थ इत्यप्याहुः ॥२६॥

१ निष्पन्नै. रा. गो. पाठः । २ रा. गो. पाठेऽधिकम् ।

तां पुरीं स महातेजा राजा दशरथो महान् । शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ २७ ॥
तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षष्ठः सर्गः ॥ ६ ॥

## * सप्तमः सर्गः ।

दशरथस्याग्र्यामात्यानामन्येषां च नीतिवर्तनम् ।

तस्यामात्या गुणैरासन्निक्ष्वाकोः सुमहात्मनः । मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः । शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २ ॥

२७ ] ति० टी०—तामिति । शमिता नाशिता अमित्रा येन । नक्षत्राणि नक्षत्रलोकान् ॥ २७ ॥

रा० टी०—पालनमेव भङ्ग्यन्तरेणाह—तामिति । महान् सर्वोत्कृष्टः अत एव शमितामित्रः दमितशत्रुकः महातेजाः परमवर्चस्को राजा महाराजाधिराजो दशरथः नक्षत्राणि चन्द्रमा इव तां सत्यनामां पुरीं शशास ॥ २७ ॥

गो० टी०—पालनं चाह्लादनपूर्वकमित्याशयेनाह—तामिति।

२८ ] ति० टी०— तामिति । अर्गलं नाम कपाटावष्टम्भकतिर्यक्स्थापितदारुविशेषः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०—पुनरपि भङ्ग्यन्तरेणाह—तामिति । दृढतोरणार्गलां दृढस्तोरणार्गलो बहिर्द्वारवर्तिकपाटनिश्चलतासम्पादकतिर्यक्निबद्धकाष्ठविशेषो यस्याम् विचित्रैर्गृहैरुपशोभिताम् शिवां परमकल्याणप्रदाम् नृपसिंहसंकुलां नृपसिंहैः खण्डमण्डलेश्वरश्रेष्ठैः संकुलां व्याप्ताम् सत्यनामां तां पुरीमयोध्यामेव शक्रसमः महीपतिः महाराजाधिराजः नित्यं शशास पुरीं नित्यं शशासेत्यनेन देशस्य निःशेषोपद्रवराहित्यं सूचितम्। वैशब्दो नित्यार्थे सत्यनामामित्यत्र "डाबुभाभ्या०" इति डाप् ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०—सर्गोक्तमर्थं संक्षेपेण सर्गान्ते पुनर्दर्शयति—तामिति । अर्गलं नाम कवाटनिश्चलत्वाय तिर्यङ्निबद्धो दारुविशेषः 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । शिवां मङ्गलवतीं वंशस्थोपजातिवृत्तम् ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

१ ] ति० टी०—अथ तस्य मन्त्रिसंपदुच्यते—तस्येति । गुणैरमात्यापेक्षितैर्गुणैर्युक्ताः इक्ष्वाकोस्तद्वंशजस्य दशरथस्य । गुणानाह—मन्त्रज्ञा इति । मन्त्रः कार्यविचारः इङ्गितं पराभिप्रायम् । प्रियस्य राज्ञो हिततत्पराः ॥ १ ॥

रा० टी०—मन्त्रिसम्पत्तिमाह—तस्येत्यादिभिः । महात्मनः सर्वपूज्यस्वरूपकस्य गुणैः इक्ष्वाकोस्तु इक्ष्वाकुसदृशस्य तस्य महाराजाधिराजदशरथस्य अमात्याः मन्त्रज्ञाः मन्त्रः कार्याकार्यविचारः तं जानन्तीति इङ्गितज्ञाः पराभिप्रायवेदितारश्च प्रियस्य स्वामिनो हिते नित्यं रताश्चासन् तुशब्द इवार्थे । किंच इक्ष्वाकोरेवामात्यास्तस्य दशरथस्यामात्या आसन्नित्यन्वयः अत्रार्थे तुरेवार्थे अत एव तस्यास्तां तस्य पौर्वका इत्येतद्घटकतच्छब्दाभ्यां दशरथग्रहणं न विरूपम् ॥ १ ॥

गो० टी०—अथोक्तगुणसंपन्नस्य दशरथस्य धर्मानुष्ठानसहायसाधिष्ठसचिवसंपत्तिं दर्शयति सप्तमे—तस्येत्यादिना । महात्मनः महामतेः तस्य इक्ष्वाकोः दशरथस्य तद्वंशजत्वात्तच्छब्दः मन्त्रज्ञाः कार्यविचारज्ञाः इङ्गितं पराभिप्रायः तं मुखविकाशसंकोचव्यङ्ग्यवचनादिभिर्जानन्तीति इङ्गितज्ञाः अमात्याः अमा राज्ञः सर्वराज्यव्यापारेषु सह भवन्तीत्यमात्याः "अव्ययात्यप्" इति त्यप्प्रत्ययः गुणैः वक्ष्यमाणमन्त्रिगुणैः उपेता आसन् ॥ १ ॥

२ ] ति० टी०—अष्टाविति । शुचयोऽसत्यस्वामिद्रोहादिरूपवाङ्मनसाशुचित्वरहिताः नित्यश आत्मप्रयोजनसमयेऽपि राजकृत्येषु तदनुष्ठानेष्वनुरक्तास्तत्पराः ॥ २ ॥

रा० टी०—धर्मशास्त्रोक्तसङ्ख्याका मन्त्रिणः सन्तीति बोधयन्नाह—अष्टाविति । शुचयः स्वामिकार्ये कापट्यसंसर्गरहिता अत एव राजकृत्येषु एव नित्यशोऽनुरक्ताः अत एव यशस्विनः कीर्तिमन्तः वीरस्य तस्य महाराजाधिराजस्यामात्याः अष्टौ

* अस्माभिस्तिलकटीकानुरोधेनेतरयोर्विनिवेशनस्यादृततया यत्र गोविंदराजेन रामायणशिरोमणिकृता च तिलककृद्व्याख्यातानां श्लोकानां पाठो न धृतः, अन्यथा वा विभागोऽङ्गीकृतोऽधिको वा पाठो धृतस्तत्र तत्तदंगीकृतविभागभंगो मा भूदिति तत्तदभिमतसंख्यैव तत्तट्टीकायां प्रदर्शिता । किंतु तिलकटीकाया अधस्तात् तत्रव्याख्यातश्लोकस्य तदेकदेशघटितस्य वा यथासंभवं टीकाद्वयं निवेशितम् ।

१ नृपसिंहसंकुलम् रा. पाठः । २ कोस्तु. गो. पाठ. ।

धृष्टिर्जयन्तो विजयः सुरा[1]ष्ट्रो राष्ट्रवर्धनः । अ[2]कोपो धर्मपालश्च सुमन्त्रश्चाष्ट[3]मोऽर्थवित् ॥ ३ ॥
ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ । वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ४ ॥
सु[4]यज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः । मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः ॥ ५ ॥
एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः । विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ॥ ६ ॥
श्रीमन्तश्च महात्मानः शस्त्र[5]ज्ञा दृढविक्रमाः । कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ ७ ॥

एव बभूवुः 'मन्त्रिणः सप्त वाष्टौ वा प्रकुर्वीत परीक्षितान्' इति मनुः । चशब्दौ एवार्थौ ॥ २॥

गो० टी०–'मन्त्रिणः सप्त वाष्टौ वा प्रकुर्वीत परीक्षितान्' इति मनुनोक्तरीत्याह–**अष्टाविति** । शुचयः सर्वात्मना स्वामिद्रोहचिन्तारहिताः नित्यशः राजकृत्येषु तदनुष्ठानेषु अनुरक्तास्तत्पराः अष्टावमात्या बभूवुः ॥ २ ॥

३ ] ति० टी०–तान्नामत आह–**धृष्टिरित्यादि** ॥ ३ ॥

रा० टी०–तत्तन्नामान्याह–**धृष्टिरिति** । धृष्टिः प्रथमः जयन्तश्च द्वितीयः विजयश्च तृतीयः सिद्धार्थश्च चतुर्थः अर्थसाधकश्च पञ्चमः अशोकश्च षष्ठः मन्त्रपालश्च सप्तमः सुमन्त्रश्च अष्टमोऽभवत् हिश्चार्थः सचान्यत्राप्यन्वेति । सुराष्ट्रो राष्ट्रवर्द्धनः 'अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित्' इति भट्टटीकाङ्कितपुस्तकेषु पाठः तत्र तेषां नामान्तराणि बोध्यानि ॥ ३ ॥

गो० टी०–तेषां नामानि दर्शयति–**धृष्टिरिति** । धृष्टिः प्रथमोऽभवत् जयन्तोद्वितीयोऽभूत् इति क्रमेण योजयित्वा सुमन्त्रोऽष्टमोऽभवदिति योज्यम् ॥ ३ ॥

४ ] ति० टी०–अभिमतौ ऋत्विजौ मुख्यर्त्विजौ । अपरे उक्ताष्टप्रधानमन्त्रिव्यतिरिक्ता इत्येके परे मन्त्रिण इत्युक्त्या वसिष्ठवामदेवयोर्मन्त्रित्वमपि सूच्यत इति तीर्थः । तन्न 'मन्त्रिणश्च तथा' इति पाठे परेषामृत्विक्त्वलाभेऽपि वसिष्ठवामदेवयोर्मन्त्रित्वस्य शब्दमर्यादया व्यङ्गमर्यादया चालाभात् .वस्तुतः 'तथापरे' इत्यस्य ऋत्विज इत्यर्थः मन्त्रिणश्चेत्यस्य वसिष्ठाद्या इति शेषः अमात्या देशादिकार्यनिर्वाहकाः मन्त्रिणो व्यवहारद्रष्टार इति भेदः ॥ ४ ॥

रा० टी०–ऋत्विजो गणयन्नाह–**ऋत्विजावित्यादि** श्लोकद्वयेन । तस्य महाराजाधिराजदशरथस्य अभिमतौ सकलज्ञानविशिष्टौ अत एव ऋषिसत्तमौ सर्वऋषिश्रेष्ठौ वसिष्ठो वामदेवश्चेत्येतौ द्वौ अथ मङ्गलप्रदौ ऋत्विजौ नित्यमास्तामभवताम् तथाशब्दो नित्यार्थकः ॥ ४ ॥

गो० टी०–**ऋत्विजाविति** । वसिष्ठः वामदेवश्च द्वौ ऋषिसत्तमौ ऋत्विजौ पुरोहितौ अभिमतौ प्रधानौ आस्ताम् तथा अभिमताः अपरे मन्त्रिणः ऋत्विजः जाबालिप्रभृतयश्चासन् ४॥

५ ] ति० टी०–परानेवाह–**सुयज्ञ इत्यादि** सुयज्ञ ऋषिविशेषः ॥ ५ ॥

रा० टी०–अथापरे ताभ्यां भिन्नाः मन्त्रिणः वेदमन्त्रद्रष्टारः सुयज्ञः जाबालिश्च काश्यपश्च गौतमश्च दीर्घायुर्मार्कण्डेयश्च द्विजः अनेकद्विजविशिष्टः कात्यायनश्च ऋत्विजोऽभवन्निति शेषः द्विजशब्दस्यावृत्त्या प्रत्येकमन्वये तु नार्शआद्यजन्तत्वकल्पना अपिद्वयं तथातुशब्दौ चार्थौ. अथशब्दो मङ्गलार्थकः श्लोकद्वयमेकान्वयि ॥ ५ ॥

६ ] ति० टी०–'एतैर्ब्रह्मर्षिभिर्नित्यं सहितास्तस्य ऋत्विजः।' इत्यनेन सर्वथा कर्मसाद्गुण्यं दर्शितम् । पौर्वकाः परम्परागता इत्यर्थकममात्यर्त्विजां विशेषणम् । **विद्येति** । विद्यया सह विनीताः विद्याविनयोभयसंपन्ना इत्यर्थः **यथायोगं** वक्ष्यमाणानि विशेषणान्यमात्येषु मन्त्रिषु च योज नीयानि ॥६॥

रा० टी०–**एतैरिति** । तस्य महाराजाधिराजदशरथस्य पौर्वकाः पित्रादयः एतैः प्रसिद्धैः ब्रह्मर्षिभिः वसिष्ठादिभिर्नित्यं ऋत्विजः यागकर्तारः आसन् पौर्वकगुणान्वर्णयन्नाह–**विद्ये**त्यादिभिः विद्याविनीताः प्राप्तसकलविद्यया विनीताः सरलाः किञ्च विद्यासु विनीताः शिक्षिताः अत एव ह्रीमन्तः जनापवादविषयीभूतकर्मवैगुण्याल्लज्जावन्तः अत एव कुशला सर्वसत्कर्मनिपुणाः अत एव नियतेन्द्रियाः नियमितान्तर्बहिरुभयकरणाः ६

गो० टी०–अथ मन्त्रिगुणान् प्रपञ्चयति सर्गशेषेण **विद्येति** । विद्यासु आन्वीक्षिकीप्रभृतिषु विनीताः शिक्षिताः ह्रीमन्तः अकृत्यकरणेषु लज्जावन्तः कुशलाः नीतौ समर्थाः नियतेन्द्रियाः अविहितविषयेभ्यो निवृत्ताः श्रीमन्तः लक्ष्मीसमृद्धाः महात्मानः महाबुद्धयः शास्त्रज्ञाः नीतिशास्त्रज्ञाः दृढविक्रमाः अप्रतिहतपराक्रमाः ॥ ६ ॥

७ ] ति० टी०–शस्त्रज्ञाः शस्त्रप्रतिपादकधनुर्वेदविदः प्रणिहिताः सर्वराजकार्येषु सावधानाः यथावचनकारिणः राज्ञ इति शेषः ॥ ७ ॥

रा० टी०–**श्रीमन्त इति** । श्रीमन्तः लक्ष्मीविशिष्टाः महात्मानः पूज्यस्वरूपाः शस्त्रज्ञाः धनुर्वेदप्रतिपादितशस्त्रविषयकज्ञानवन्तः दृढविक्रमाः अचलपराक्रमविशिष्टाः शास्त्रज्ञा इति पाठे शस्त्रप्रतिपादकशास्त्रनिपुणा इत्यर्थः कीर्तिमन्तः प्रशस्तयशोयुक्ताः प्रणिहिताः निखिलकर्मस्वनवधानतारहिताः किञ्च प्रणः सद्धर्मप्रतिज्ञा अस्ति येषां ते प्राणनः तेषां हितास्तद्धर्मसाधका इत्यर्थः प्रणशब्दस्य प्रतिज्ञावाचकत्वं कोशे प्रसि-

१ सिद्धार्थोह्यर्थ साधकः रा. गो. पाठः । २ अशोको मन्त्रपालश्च. रा. गो. पाठः । ३ ऽभवत् रा. गो. पाठः । ४ इतआरभ्यार्धत्रयं गोविंदराजेन न धृतम्। ५ शास्त्रज्ञाः गो. पाठः ।

तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः । क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ८ ॥
तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा । क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ९ ॥
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः । प्राप्तकालं यथा दण्डं धारयेयुः सुतेष्वपि ॥ १० ॥
कोशसंग्रहणे युक्ता बलस्य च परिग्रहे । अहितं चापि पुरुषं न हिंस्युरविदूषकम् ॥ ११ ॥
वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः । शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ १२ ॥
ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन् । सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १३ ॥

द्वम् यथावचनकारिणः यथावचनं वचनमनतिक्रम्य कुर्वन्ति तच्छीलाः सत्यप्रतिज्ञा इत्यर्थः ॥ ७ ॥

गो॰ टी॰—कीर्तिमन्त इति । प्रणिहिताः राजकृत्येष्वप्रमत्ताः यथावचनकारिणः यथोक्तवन्तस्तथैव कुर्वन्ति नतु 'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यत्' इतिन्यायत इति भावः । तेजःक्षमायशांसि प्राप्ताः "द्वितीयाश्रिता" इत्यादिना समासः । अत्र यशः प्रतापक्षमाजन्या प्रथा कीर्तिमन्त इत्यत्र कीर्तिस्तु मन्त्रज्ञताकृता प्रथा स्मितपूर्वाभिभाषिण इत्यनेन निर्मत्सरत्वमुच्यते । आसन् मन्त्रिण इति श्लोकद्वयशेषः । क्रोधादित्यर्द्धमेकान्वयम् । क्रोधाद्वा कामहेतोरर्थहेतोर्वा अनृतमसत्यं वचो न ब्रूयुः ॥ ६ ॥

८ ] ति॰ टी॰—कामार्थहेतोरिति द्वन्द्वगर्भः कर्मधारयः ८

रा॰ टी॰—तेज इति । तेजःक्षमायशःप्राप्ताः तेजश्च क्षमा च यशश्च तानि प्राप्ताः "द्वितीयाश्रिता॰" इत्यादिना समासः । अत्रत्ययशःशब्दः नित्यप्रवृद्धयशःपरः पूर्वत्र कीर्तिशब्दः प्रतापपरो वा अतो न पौनरुक्त्यम् । स्मितपूर्वाभिभाषिणः स्मितं पूर्वं यस्मिँस्तदभिभाषन्ते तच्छीलाः क्रोधात् क्रोधहेतोः कामार्थहेतोः कामरूपार्थरूपहेतोर्वाऽनृतं सत्यभिन्नं वचो न ब्रूयुः ॥ ८ ॥

९ ] ति॰ टी॰—स्वेषु मित्रेषु परेषु शत्रुषु चारेण करणेन कृतं क्रियमाणमपि वा अपि चिकीर्षितं च तेषां न किंचिदविदितमभूदिति शेषः ॥ ९ ॥

रा॰ टी॰—तेषामिति । तेषां पौर्वकानां स्वेषु आत्मीयेषु परेषु ततो भिन्नेषु च क्रियमाणं वर्तमानकालिकवृत्तं कृतं भूतकालिकवृत्तं च यच्चिकीर्षितं भविष्यत्कालिकवृत्तं तच्च चारेण करणभूतेन अविदितं विदितभिन्नं नास्ति शरैः शातितपत्र इतिवदेकदेशान्वयः वाप्यथाः चार्थे ॥ ९ ॥

गो॰ टी॰— तेषामिति । तेषां मन्त्रिणां स्वेषु स्वराष्ट्रीयवृत्तान्तेषु परेषु परराष्ट्रीयवृत्तान्तेषु च कृतं क्रियमाणं चिकीर्षितं कर्तुमिष्टं करिष्यमाणमिति यावत् यत्किंचिदपि वा वृत्तं चारेण चारमुखेन अविदितं नास्ति सर्वोपि स्वराष्ट्रपरराष्ट्रवृत्तान्तभेदस्तज्ज्ञात इत्यर्थः ॥ ७ ॥

१० ] ति॰ टी॰—सौहृदं विषयविशेषगतदोषान्दोषत्वेनागृह्णंश्चित्तवृत्तिविशेषस्तत्र परीक्षिताः राज्ञेति शेषः । प्राप्तः सापराधत्वलक्षणः कालो यस्य तं धारयेयुः कुर्युरित्यर्थः ॥ १० ॥

रा॰ टी॰—कुशला इति । व्यवहारेषु कुशलाः निपुणा सौहृदेषु परीक्षिताः मित्रवर्गैरिति शेषः पौर्वकाः प्राप्तकालं प्राप्तः कालो यस्य तं दण्डं सुतेषु अपि यथावत् धारयेयुः ॥ १० ॥

गो॰ टी॰—कुशला इति । व्यवहारेषु निश्चितार्थप्रतिपादनेषु कुशलाः समर्थाः सौहृदेषु विषयेषु परीक्षिता राज्ञा बहुधा परीक्षितास्ते मन्त्रिणः सुतेष्वपि प्राप्तकालं प्राप्तसापराधत्वलक्षणकालं दण्डं धारयेयुः प्रवर्तयेयुः ॥ ८ ॥

११ ] ति॰ टी॰—कोशसंग्रहणं चतुरङ्गबलपरिग्रहे हेतुः अहितं स्वहिताचरणरहितं शत्रुमप्यविदूषकमनपराधिनं न हिंस्युः ॥ ११ ॥

रा॰ टी॰—कोशेति । कोशसंग्रहणे कोशस्य अर्थसमूहस्य संग्रहणे अर्जने युक्ताः बलस्य चतुरङ्गसैन्यस्य परिग्रहे परिज्ञाने तत्तद्गुणपरीक्षणे चेत्यर्थः युक्ताः उद्युक्ताः पौर्वकाः अदूषकं दोषरहितमहितमपि पुरुषं न विहिंस्युः पीडयेयुः ॥ ११ ॥

गो॰ टी॰—कोशेति । कोशस्य अर्थनिचयस्य संग्रहणे संपादने बलस्य चतुर्विधसैन्यस्य परिग्रहे अर्थप्रदानेन संरक्षणे च युक्ता अवहिताः सन्तः अहितं शत्रुमपि अदूषकमनपराधिनं न विहिंस्युर्न पीडयेयुः शकिलिङ् ॥ ९ ॥

१२ ] ति॰ टी॰-राजशास्त्रं नीतिशास्त्रम् अनुष्ठिता अनुसारिणः शुचीनामिति स्तेयानृतरहिताः शुचयः विषया देशः ॥ १२ ॥

रा॰ टी॰—वीरा इति । वीराः शूरतावन्तः अत एव नियतोत्साहाः तात्त्विकयुद्धोत्साहविशिष्टाः राजशास्त्रं राजनीतिमनुष्ठिताः तदनुष्ठानवन्तः शुचीनां शुद्धान्तःकरणानां विषयवासिनां देशवासिनां चकारेण पुरवासिनां नित्यं रक्षितारश्चासन्निति शेषः ॥ १२ ॥

गो॰ टी॰—वीराश्चेति । वीराः शत्रुनिवारणक्षमाः नियतोत्साहाः शत्रुजये नित्योत्साहाः राजशास्त्रं नीतिशास्त्रमनुष्ठिताः अनुष्ठितवन्तः अत एव विषयवासिनां स्वराज्यवासिनां शुचीनां साधूनां नित्यं रक्षितारः अशुचीनां तु निहन्तार इति च सिद्धं ते आसन्नित्यनुषज्यते ॥ १० ॥

१३ ] ति॰ टी॰—ब्रह्मेति । 'अभिपूरयन्' इति पाठेऽडभाव आर्षः । सुतीक्ष्णेति । बलाबलमपराधतारतम्यम् पुरुषस्येत्युपलक्षणम् देशादीनां च बलाबलं संप्रेक्ष्येत्यर्थः

१ णाथ रा. पाठः । २ तु ते दण्डं. गो. पाठः । ३ न विहिंस्युरदूषकम् रा. गो. पाठः ।

शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् । नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥ १४ ॥
कश्चिन्न[1] दुष्टस्तत्रासीत्परदाररतिर्नरः[2] । प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत्[3] ॥ १५ ॥
सुवाससः सुवेषाश्च ते च सर्वे शुचिव्रताः[4] । हितार्थाश्च[5] नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १६ ॥
गुरोर्गुणगृहीताश्च[6] प्रख्याताश्च पराक्रमैः[7] । विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयाः[8] ॥ १७ ॥

'देशकालवयःशक्तीः संचिन्त्या दण्डकर्मणि' इति वचनात् । अयं कोशपूरणहेतुः ॥ १३ ॥

रा० टी०–ब्रह्मेति । पुरुषस्यापराधिजनस्य बलाबलमपराधतारतम्यं संप्रेक्ष्य सुविचार्य ब्रह्मक्षत्रं ब्रह्मणो वेदस्य क्षत् अप्रामाण्यप्रतिपादकत्वेन हिंसनं येषां ते नास्तिकास्तेभ्यस्त्रायन्ते वेदाप्रामाण्यवादनिवर्तनपूर्वकवेदप्रामाण्यव्यवस्थापकत्वेन जनान् रक्षतीति ब्रह्मक्षत्रं ब्राह्मणकुलमित्यर्थः तत् अहिंसन्तः अपीडयन्तस्सुतीक्ष्णदण्डाः सन्तस्ते तत्पौर्वकाः कोशं समपूरयन् दानाधिक्यादिना कोशव्ययेऽपि पुनः पुनरपूरयन्नित्यर्थः । अभिपूरयन्निति पाठे अडभाव आर्ष इति भट्टः ॥ १३ ॥

गो० टी०–ब्रह्मेति । ब्रह्म ब्राह्मणान् क्षत्रं क्षत्रियांश्च अहिंसन्तः विनापराधं तत्स्वमनपहरन्तः सत्यप्यपराधे पुरुषस्यापराधिनः बलाबलं अपराधतारतम्यं शक्तितारतम्यं वा संप्रेक्ष्य अपराधगुरुत्वे सुतीक्ष्णदण्डाः अपराधाल्पत्वे मृदुदण्डाश्च शक्तत्वे सुतीक्ष्णदण्डाः अशक्तत्वे मृदुदण्डाश्च कोशं समपूरयन् ॥ ११ ॥

१४ ] ति० टी०–एकबुद्धीनां परस्परमेकबुद्धीनाम् । संप्रजानतां पुरराष्ट्रवृत्तान्तं विचारयताम् तेषां विचारविषये पुरादौ मृषावादित्वगुणविशिष्टः कोऽपि नासीत् ॥ १४॥

रा० टी०–शुचीनामिति । शुचीनां शुद्धानामेकबुद्धीनां मन्त्रिसमानबुद्धीनां संप्रजानतां प्रजापालनविषयकसम्यग्विचारवतां सर्वेषां तत्पौर्वकाणां पुरे राष्ट्रे च क्वचित्कदाचिदपि मृषावादी नरो जनः नासीत् एको वाशब्दोऽप्यर्थे अपरश्चार्थे १४

गो० टी०–अथ मन्त्रिगुणसंपत्तिफलं दर्शयति–शुचीनामित्यादिश्लोकद्वयेन । शुचीनां एकरूपकरणत्रयवतां एकबुद्धीनां एककण्ठानां सर्वेषां मन्त्रिणां संप्रजानतां राज्यतन्त्रं विचारयतां भावलक्षणसप्तम्यर्थे षष्ठी "चानादरे" इत्यत्र योगविभागेन सर्वेषु मन्त्रिषु राज्यतन्त्रं विचारयत्स्वित्यर्थः पुरे वा राष्ट्रे वा क्वचित्कोणेऽपि मृषावादी असत्यवादी नरो नासीत् ॥ १२ ॥

१५ ] ति० टी०–प्रेति । मन्त्रिणां नीत्या सर्वं प्रशान्तं निर्बाधमासीदित्यर्थः ॥ १५ ॥

रा० टी०–कश्चिदिति । तत्र पौर्वकराज्ये दुष्टो धर्मदूषकः अत एव परदाररतिः कश्चिन्नरो नासीत् अत एव राष्ट्रं पुरवरं च सुत् तत्सर्व प्रशान्तं समूलसर्वोपद्रवरहितमेवासीत्॥१५॥

गो० टी०–कश्चिदिति । किंच तत्र पुरराष्ट्रे कश्चिन्नरो दुष्टः कुटिलः परदाररतश्च नासीत् प्रत्युत यद्राष्ट्रं पुरवरं च तत्सर्वं प्रशान्तमेव आसीत् नगरजनपदवासिनः सर्वेऽप्यन्यायाधर्मरहिता एवासन्नित्यर्थः ॥ १३ ॥

१६ ] ति०-टी०–नरेन्द्रस्य हितार्था हितप्रयोजनाः सर्वे-नासन्निति शेषः ॥ १६ ॥

रा० टी०–सुवासस इति । नरेन्द्रस्य पूर्वप्रवृत्तराज्यस्य हितार्थाः हितप्रयोजनकाः सुवाससः शोभनवस्त्राः सुवेषा समीचीनालङ्कारकाश्च सुशीलिनः समीचीनस्वभावास्ते प्रसिद्धाः सर्वे मन्त्रिणश्च नयचक्षुषा नीतिनेत्रेण जाग्रत आसन् इति शेषः। नरेन्द्रस्येत्यत्रैकत्वं जात्यभिप्रायेण ॥ १६ ॥

गो० टी०–पुनस्तान्विशेषयति–सुवासस इत्यादिना सार्द्धश्लोकत्रयेण । सुवाससः शुभ्रवाससः सुवेषाः शोभनालंकाराः सुशीलिनः सुसद्वृत्ताः नरेन्द्रस्य स्वामिनः हितार्थं नयचक्षुषा जाग्रतः जागरूकाः सर्वदा नीतिषु दत्तावधाना इत्यर्थः ॥ १४ ॥

१७ ] ति० टी०–गुरोः संबन्धसामान्ये षष्ठी । गुरुणा स्वस्वाचार्येण राज्ञा च अर्शआद्यजन्तगुणशब्देन गुणवत्तया गृहीता इत्यर्थः । तेन गुर्वनुग्रहप्राप्तसर्वैश्वर्यत्वं च सूचितम् । 'गुणागुणगृहीताः' इति पाठे गुणदोषग्रहीतार इत्यर्थः । बहुव्रीहिः आहिताग्न्यादित्वात्परनिपातो निष्ठान्तस्य विदेशेष्वपि सर्वतो विज्ञातत्वे हेतुः बुद्धिनिश्चया बुद्धिसंपन्नाः ॥ १७ ॥

रा० टी०–गुराविति । गुरौ महात्मनि गुणगृहीताः गुणमात्रदर्शिनः गुरुदोषादर्शका इत्यर्थः। पराक्रमे विषये विदेशेष्वपि प्रख्याताः सर्वतो विज्ञाताः सर्वविषयकज्ञानवन्तः तत्र हेतुः बुद्धिनिश्चयाःबुद्ध्या बुद्धिपूर्वकविचारेण निश्चयः गुरुशास्त्रवाक्यादौ विश्वासो येषां ते मन्त्रिण आसन्निति शेषः। गुरोर्गुणगृहीताश्चेति भट्टसंमतः पाठः तत्र गुरुणा गुणवत्तया गृहीता इत्यर्थः गुरोरिति संबन्धसामान्ये षष्ठी गुण इति अर्शआद्यजन्तः गुणागुणगृहीता इति पाठे गुणदोषग्रहीतार इत्यर्थं इति तैर्व्याख्यातम् ॥ १७ ॥

गो० टी०–गुराविति । गुरौ गुरुषु जात्येकवचनम् गुणगृहीताः गृहीतगुणाः गुणमात्रग्राहिणो दोषमपश्यन्त इत्यर्थः पराक्रमे विषये प्रख्याताः विदेशेषु देशान्तरेष्वपि सर्वतः सर्वत्रातीतानागतविषयेषु बुद्धिनिश्चयात् निश्चयरूपबुद्धेर्हेतोः विज्ञाताः विख्याताः ॥ १५ ॥

१ कश्चिन्न. रा. गो. पाठः । २ रतो गो. पाठः । ३ सत् रा. पाठः । ४ सुशीलिनः रा. गो. पाठः । ५ हितार्थं. गो. पाठः । ६ गुरौ. रा. गो. पाठः । ७ पराक्रमे रा. गो. पाठः । ८ निश्चयात्. गो. पाठः । ९ क्वचिदिति भाति ।

अभितो गुणवन्तश्च न चासन्गुणवर्जिताः । संधिविग्रहतत्त्वज्ञाः प्रकृत्या संपदान्विताः ॥ १८ ॥
मन्त्र[2]संवरणे शक्ताः शक्ताः[3] सूक्ष्मासु बुद्धिषु । नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ॥ १९ ॥
ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः । उपपन्नो गुणोपेतैरन्वशासद्वसुंधराम् ॥ २० ॥
अवेक्षमाणश्चारेण प्रजा धर्मेण रक्षयन्[4] । प्रजानां पालनं [1]कुर्वन्नधर्मं परिवर्जयन् ॥ २१ ॥
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः । स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २२ ॥

---

१८ ] **ति० टी०—अभितो** गुणवन्तः सर्वदेशे सर्वकाले च गुणवन्तः । **संधीति** । संध्यादिविषयकशास्त्रतत्त्वज्ञाः प्रकृत्या त्रिगुणया संपदान्विताः । तत्र सात्त्विक्या संपदा शिष्टपालने, तामस्या संपदा दुष्टनिग्रहकाले, भोगकाले राजस्या संपदा धनधान्यदासीदासशिबिकाश्वगजादिरूपया ॥ १८ ॥

**रा० टी०—अभित इति** । अभितः सर्वकालं गुणवन्तः । किञ्च अभितश्चतुर्दिक्षु ये गुणास्तद्वन्तः आसन् अत एव गुणवर्जिताः न अत एव सन्धिविग्रहतत्त्वज्ञाः सन्धिर्मेलनं विग्रहः कलहः तयोस्तत्त्वं जानन्तीति प्रकृत्या च स्वभावेनैव दुस्त्यजया सम्पदा सम्पत्त्या अन्विता युक्ताः चशब्द इवार्थे ॥ १८ ॥

**गो० टी०—सन्धीति** । सन्धिः सामन्तैः समाधानं विग्रहः तैः कलहः तयोस्तत्त्वं देशकालाद्युचितत्वं तज्जानन्तीति तथा । उक्तं च मनुना 'यदा त्वेवाल्पिका पीडा तदा सन्धिं समाश्रयेत्। अभ्युच्छ्रयी यदात्मानं तदा मन्येत विग्रहम्' इति । प्रकृत्या स्वभावेन संपदा ऐश्वर्येण अन्विताः संपदभावे तन्नापले नान्यथा कुर्युरिति भावः। मन्त्रो राष्ट्रकार्यचिन्ता तस्य संवरणे बहिरप्रकटने शक्ताः संपत्कार्यमिदं सूक्ष्मासु बुद्धिषु सूक्ष्मार्थविशेषविचारेषु श्लक्ष्णाः अपरुषाः सद्यःप्रतिभावन्त इत्यर्थः ॥ १६ ॥

१९ ] **ति० टी०—**संवरणं रक्षणम् । बुद्धिषु विचारेषु १९

**रा० टी०—मन्त्रेति** । मन्त्रसंग्रहणे मन्त्रस्य देशस्वास्थ्यसम्पादकविचारस्य यत्संग्रहणं मन्त्र्यतिरिक्तैर्वाचानुद्घाटनं तत्र शक्ताः संवरणे इति पाठेपि स एवार्थः सूक्ष्मासु दुर्लक्ष्यासु अपि बुद्धिषु विचारेषु श्लक्ष्णाः पारुष्यस्वभावरहिताः नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ते आसन्निति शेषः।शक्ताः सूक्ष्मासु इति पाठकपाठः ॥ १९ ॥

**गो० टी०—नीतिशास्त्रेति** । नीतिशास्त्रविशेषज्ञाः नीत्या शास्त्रविशेषज्ञाः ग्रन्थशासनयोः शास्त्रम् ' इति भास्करः । सततं राज्ञः प्रियवादिनः हितवचनस्यैव राज्ञः प्रियत्वात् आसन्निति पूरणीयम् ॥ १७ ॥

२० ] **ति० टी०—**ईदृशैः प्रागुक्तरूपैरमात्यैश्च चाद्दृत्विक्सन्त्रिभिः अत एव गुणोपेतैरुपपन्न इति योजना ॥ २० ॥

**रा० टी०—ईदृशैरिति** । ईदृशैः विद्याविनीतत्वादिना वर्णितपौर्वकसदृशैः गुणोपेतैः निखिलमन्त्रिगुणयुक्तैः तैः पूर्ववर्णिताष्टभिः अमात्यैः उपपन्नः युक्तः चकारेण ऋत्विग्भिरुपपन्नः अनघः स्वाश्रितावनिवर्तकः राजा महाराजाधिराजो दशरथः वसुन्धरामन्वशासत् ॥ २० ॥

**गो० टी०—ईदृशैरिति** । ईदृशैः उक्तगुणविशिष्टैः गुणोपेतैः उक्तगुणातिरिक्तगुणोपेतैस्तैः अमात्यैः उपपन्नः अनघः व्यसनरहितः । उक्तं मनुना 'दश कामसमुत्थानि तथाष्टौ क्रोधजानि च व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्' इति । व्यसनस्वरूपं चोक्तम् 'मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणे । वाग्दण्डजं च पारुष्यं क्रोधजोपि गणोऽष्टकः' इति । दशरथो राजा वसुन्धरां भूमिम् अन्वशासदिति लुङ् "सर्तिशास्त्यर्तिभ्यश्च" इत्यङ् ॥ १८ ॥

२१ ] **ति० टी०—**चारेण स्वपरदेशवृत्तान्तम् । प्रजा धर्मेण युक्ता यथा भवन्ति तथा पुरुषै रक्षयन् सर्वत्र हेतौ शता ॥२१॥

**रा० टी०—अवेक्षमाण इति** । चारेण चारचक्षुषा अवेक्षमाणः निखिललोकवृत्तान्तं विजानन् धर्मेण धर्माचरणेन प्रजा रञ्जयन् प्रजानुरागमुत्पादयन् प्रजानां पालनं कुर्वन् अधर्मं परिवर्जयन्धर्मविरुद्धप्रवृत्तिं निवारयन् ॥ २१ ॥

**गो० टी०—अवेक्षमाण इति** । श्लोकद्वयमेकान्वयम् । चारेण चक्षुःस्थानीयेन अवेक्षमाणः स्वपरराष्ट्रवृत्तान्तान् पश्यन् जात्येकवचनमिदम् अनेकचारैर्शैयत्ववचनात्। यथाह मनुः 'वने वनचराः कार्याः श्रमणाटविकादयः । परप्रवृत्तिज्ञानार्थं शीघ्राश्चारपरम्पराः ' इति । धर्मेण दण्ड्यदण्डनादिना प्रजा रञ्जयन् आह्लादयन् पालनमनिष्टनिवृत्तिपूर्वकेष्टप्रापणम् अधर्मम् अदण्ड्यदण्डनादि विश्रुतः दानविक्रमादिभिः प्रसिद्धः वदान्यः दानशीलः सत्यसङ्गरः सत्यप्रतिज्ञः ' सङ्गरो ना क्रियाकाले प्रतिज्ञाविपदोर्युधि' इति यादवः । सः पुरुषव्याघ्रः पुरुषश्रेष्ठः तत्र अयोध्यायां वसन्निति शेषः ॥ १९ ॥ २० ॥

२२ ] **ति० टी०—**अतो हेतोर्विश्रुतः सत्यसंगरो रणे सत्यप्रतिज्ञः तत्रायोध्यायाम् ॥ २२ ॥

**रा० टी०—**अत एव त्रिषु लोकेषु विश्रुतः ख्यातः वदान्यः सयुक्तिकवदनशीलः सत्यसङ्गरः कापट्यरहितसंग्रामकर्ता पुरुषव्याघ्रः पुरुषसिंहः स प्रसिद्धो महाराजाधिराजदशरथः तत्र तस्यामयोध्यायां वसन्निति शेषः इमां पृथिवीं शशास पालयामास द्वयोरेकत्रान्वयः ॥ २२ ॥

---

१ इदमर्धं गो० न धृतम् । २ मन्त्रसंग्रहणे. रा० पाठः । ३ श्लक्ष्णा रा० गो० पाठः । ४ रञ्जयन् रा० गो० पाठः ।

नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः। मित्रवान्नतसामन्तः प्रतापहतकण्टकः॥ ॥
स शशास जगद्राजा दिवि[1] देवपतिर्यथा ॥ ॥ २३ ॥
तैर्मन्त्रिभिर्मन्त्रहिते नि[2]विष्टैर्वृतोऽनुरक्तैः कुशलैः समर्थैः ।
स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवो[3]दितोऽर्कः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

तस्यापुत्रत्वादश्वमेधकरणे सुमन्त्रेण सह संवादः, तत्र संमिलितानाममात्यानां समीपेऽश्वमेधप्रश्नः, तत्करणे वसिष्ठादीनामनुमतिः, अश्वमोचनम्, सरयूत्तरतीरे यज्ञभूमिविधानम्, गृहागतराजानं दाराणां पुत्रप्राप्त्यर्थं दीक्षाविषयकः प्रश्नश्च ।

तस्य [4]चैवंप्रभावस्य धर्मज्ञस्य महात्मनः। सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥
चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः। सुतार्थं[5] वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥

२३ ] ति० टी०—अधिगमः प्राप्तिः नताः सामन्ता यस्य कण्टकाः शत्रवः चोराश्च ॥ २३ ॥

रा० टी०—नेति । विशिष्टं तुल्यं वा आत्मनः शत्रुं नाध्यगच्छन्मित्रवान्परस्परैकमत्यापन्नबहुमित्रविशिष्टः अत एव नतसामन्तः नताः सामन्ता राजानो यस्य अतएव प्रतापहतकण्टकः प्रतापेन हताः कण्टकाः कण्टकतुल्याः शत्रवो यस्य स राजा जगच्छशास तत्र दृष्टान्तः देवपतिर्यथेति ॥ २३ ॥

गो० टी०—नाध्यगच्छदिति । विशिष्टमधिकं तुल्यं वा आत्मनः शत्रुं नाध्यगच्छत् न ज्ञातवान् । तत्र हेतुमाह—मित्रवान् नतसामन्तः पादानतसमानसीमाधिपतिकः प्रतापेन हताः कण्टकाः शत्रवो यस्य स तथा 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः' इति यादवः । स इति शेषः। उक्तमर्थं सदृष्टान्तमाह—स इति । अर्द्धमेकम् ॥ २१ ॥

२४ ] ति० टी०—तैरिति । मन्त्रो विचारस्तत्साध्यं हितम् । उभयत्र निविष्टैः कुशलैः सूक्ष्मार्थदर्शननिपुणैः समर्थैस्तत्साधनशक्तैः तेजोमयैः प्रचुरतेजोवद्भिः तेजः पराभिभवसामर्थ्यम् । गोभिः किरणैर्युक्त उदितोऽर्क इव । गवामपि तेजोमयैरित्यत्यन्तस्वार्थिकमयडन्तं विशेषणमित्येके तदपुष्टम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये-आदिकाव्ये बालकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा टी०—उपसंहरन्नाह—तैरिति । मन्त्रहिते मन्त्रस्य कार्याकार्यविषयकविचारजन्यनिश्चयस्य हिते प्राप्तये निविष्टैः स्थापितैः अनुरक्तैः राजविषयकानुरागविशिष्टैः कुशलैः निपुणैः समर्थैः राजकार्यविषयकसामर्थ्यविशिष्टैः तैः पूर्वोक्तमन्त्रिभिर्वृतः सः प्रसिद्धः पार्थिवो महाराजाधिराजदशरथः तेजोमयैर्गोभिः किरणैरुदितः अर्क इव दीप्तिमवाप ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तमः सर्गः ॥ ७ ॥

गो० टी०—सर्गार्थं संग्रहेण दर्शयति—तैरिति । मन्त्रहिते मन्त्रे हिते च नियुक्तैः कुशलैः बुद्धिकुशलैः समर्थैः कार्यकरणसमर्थैः मन्त्रिभिर्वृतः नृपः तेजोमयैः स्वार्थे मयट् गोभिः किरणैर्युक्तः उदितोऽर्कः बालसूर्य इव दीप्तिमवाप त्रिष्टुबुपजातिवृत्तम् ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

१ ] ति०टी०—एवं समग्रगुणस्याप्यपुत्रत्वेनाजितपितृलोकत्वात्पुत्रार्थमश्वमेधप्रस्तावः—तस्येति । तप्यमानस्यतपःकुर्वतः

रा० टी०—महाराजाधिराजदशरथस्य नित्यैश्वर्यादिविशिष्टत्वमुक्त्वा वाङ्मनसगोचरातीतसर्वेश्वरेश्वररघुनाथप्रादुर्भावमुपक्रमते—तस्येत्यादिभिः । एवं वर्णितः प्रभावो यस्य धर्मज्ञस्य सकलधर्मवेदितुः महात्मनः सर्वपूज्यस्वरूपस्य सुतार्थं नित्यस्वपुत्रीभूतरामप्रकटनार्थोद्योगमेव तप्यमानस्य विचारयतः किञ्च तपिनो विचारशीलस्य अत एव अमानस्य प्रश्नादि प्रतिबन्धकीभूतगर्वरहितस्य द्वयोः कर्मधारयः तुशब्द एवार्थे तस्य महाराजाधिराजदशरथस्य वंशकरः स्ववंशप्रवृत्तिहेतुः सुतः नित्यस्वपुत्रः नासीत् वात्सल्यरसप्रभृतये षष्टिसहस्रवर्षपर्यन्तं न प्रादुर्बभूवेत्यर्थः ॥ १ ॥

गो० टी०—एवं धार्मिकत्वेन दशरथस्य भगवदवतारयोग्यत्वमुक्त्वा अथ तदुपयुक्ततदाराधनोपक्रमं दर्शयत्यष्टमे—तस्येति । उत्तरश्लोकवक्ष्यमाणचिन्ता युक्तेति सूचयितुं राज्ञो विशेषणानि तप्यमानस्य तपश्चरतः यद्वा पुत्रोत्पादनानुगुणदृष्टसामग्रीसत्त्वेऽपि पुत्राभावात्परितप्यमानस्य॥१॥

२ ] ति० टी०—चिन्तयानस्य । मुगभावश्छान्दसः तपसाप्यसाध्यपुत्रोत्पत्त्युपायं मार्गमाणस्य[6] । एवं वक्ष्यमाणा२

रा० टी०—चिन्तयानस्येति । एवमुक्तविशेषणविशिष्टस्य महात्मनः सुतार्थं नित्यस्वपुत्रप्रकटनोद्योगं चिन्तयानस्य

१ दिवं. गो० पाठः । २ नियुक्तै गो० पाठः । ३ वोदितार्कः रा० पाठः । ४ त्वेवं रा० गो० पाठः । ५ सुतार्थी. गो० पाठः । ६ मार्गयमाणस्येति भाति ।

स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् । मन्त्रिभिः सह धर्मात्मा सर्वैरपि कृतात्मभिः ॥ ३ ॥
ततोऽब्रवीन्महातेजाः सुमन्त्रं मन्त्रिसत्तमम् । शीघ्रमानय मे सर्वान्गुरूंस्तान्सपुरोहितान् ॥ ४ ॥
ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः । समानयत्स तान्सर्वान्समस्तान्वेदपारगान् ॥ ५ ॥
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् । पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजोत्तमाः ॥ ६ ॥
तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा । इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥
मम लालप्यमानस्य सुतार्थं नास्ति वै सुखम् । तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥
तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा । कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचिन्त्यताम् ॥ ९ ॥

---

विचारयतः तस्य महाराजाधिराजदशरथस्य सुतार्थं वाजिमेधेन तन्नामकयागेन किमर्थमहं न यजामि इष्टदेवं पूजयामि इति बुद्धिरासीत् विनिगमनाविरहात्सुतार्थमित्युभयान्वयि आगमशास्त्रस्यानित्यत्वान्मुगभावः "वर्तमानसामीप्ये" इति भूते लट् ॥२॥

गो० टी०–चिन्तयानस्येति । चिन्तयानस्य पुत्रोत्पत्त्युपायं मार्गमाणस्य मुगभाव आर्षः । एवं वक्ष्यमाणरीत्या न यजामि नायाक्षिषम् ॥ २ ॥

३–४ ] ति० टी०–स इति । यष्टव्यमिति मन्त्रिभिः सह निश्चितां मतिं कृत्वेत्यन्वयः । सुमन्त्रमानयामासेति शेषः ३–४

रा० टी०–स इति । ततो यागनिश्चयानन्तरं बुद्धिमान् परमबुद्धिविशिष्टः धर्मात्मा वेदोक्तकर्मप्रवृत्तिविषयकयत्नवान् महाराजाधिराजो दशरथः कृतात्मभिः सकलकर्मफलीभूतरघुनाथविषयकबुद्धिभिः मन्त्रिभिः सर्वैः सहैव यष्टव्यमिति निश्चितां मतिं कृत्वा 'क्लीबे कृतं युगेपि स्यात्फलपर्याप्तयोरपि' इति भास्करः।तत इति।राजा महाराजाधिराजो दशरथः मन्त्रिसत्तमं मन्त्रिश्रेष्ठं सुमन्त्रं मे सपुरोहितान् मे पुरोहितवसिष्ठसहितान्प्रसिद्धान् सर्वान्गुरूनृषिश्रेष्ठाञ्छीघ्रमानय इदं वचनमब्रवीत् पुरोहितशब्दस्य वृत्तिघटकीभूतत्वेऽपि नित्यसापेक्षत्वात् तत्र मेशब्दान्वयः श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–स इत्यादि । श्लोकद्वयमेकान्वयम् । कृतात्मभिः पर्याप्तबुद्धिभिः 'क्लीबे कृतं युगेऽपि स्यात्फलपर्याप्तयोरपि' इतिभास्करः ॥ ३ ॥ तान् प्रसिद्धान् ॥ ४ ॥

५ ] ति० टी०–तत इति । विक्रमो गमनम् सर्वांस्तान्गुरून् समस्तान्वेदपारगानगुरूंश्च ॥ ५ ॥

रा० टी०–तत इति । ततः राजाज्ञापनानन्तरं त्वरितविक्रमः शीघ्रगमनशीलः सः मन्त्रिसत्तमः सुमन्त्रः वेदपारगान् कृतसमस्तवेदाध्ययनाध्यापनांस्तान् राजबोधितान्समस्तान्संमिलितान् त्वरितं गत्वा समानयत् सादरमानयनमकरोत् ॥५॥

गो० टी०–तत इति । त्वरितं तत्क्षण एव त्वरितविक्रमः त्वरितगमनः समस्तान्संमिलितान्समानयत् राजगृहमिति शेषः॥

६ ] ति० टी०–सुयज्ञादयो विद्यागुरवः वसिष्ठस्यैव पुरोहितत्वेनोपनेतृतयोपनेतुरेवाध्यापकतया गुरुत्वेऽपि स्वसमशिप्याणां स्वतपोव्याक्षेपभिया तैनैवाध्यापने नियोगात्तेषामपि विद्यागुरुत्वमक्षतम्। अन्येऽश्वमेधार्त्विज्यायुपयुक्ताः ॥ ६ ॥

रा० टी०–तानेवाह–सुयज्ञमिति । सुयज्ञं वामदेवं च जाबालिं च काश्यपं च पुरोहितं वशिष्ठं च अन्ये ये द्विजसत्तमास्तांश्च समानयदित्यनुकृष्यते अथशब्दश्चार्थे एकत्र विनापि चं समुच्चयः । येचाप्यन्ये द्विजोत्तमा इति पाठे त्वपिरपि चार्थे॥६॥

गो० टी०–गुरूनेवाह–सुयज्ञमिति । समानयदिति पूर्वेणान्वयः । सुयज्ञादीनां गुरुत्वमार्त्विज्यकरणात् ॥ ६ ॥

७ ] ति० टी०–धर्मेणार्थेन च सहितं श्लक्ष्णं मधुरम् ॥७॥

रा० टी०–तानिति । धर्मात्मा धर्ममनस्कः राजा महाराजाधिराजो दशरथः तदा तस्मिन्काले तानागतानृषीन्पूजयित्वा धर्मार्थसहितम् अत एव श्लक्ष्णमिदं वक्ष्यमाणं वचनमब्रवीत् ॥७॥

गो० टी०–तानिति।अथ गुर्वागमनानन्तरं श्लक्ष्णं मधुरम् ७

८ ] ति० टी०–ममेति । सुतार्थं सुतमुद्दिश्य लालप्यमानस्य पुनः पुनर्भृशं च विलपतो राज्यादिनापि सुखं न भवति । 'तातप्यमानस्य' इति पाठे पुनःपुनर्भृशं च तपः कुर्वत इत्यर्थः । अयमेव पाठो युक्तः । पूर्वं सुतार्थं तप्यमानस्येत्युक्तेः अतस्तदर्थं पुत्रार्थं मतिरध्यवसायः ॥ ८ ॥

रा० टी०–ममेति । पुत्रार्थं पुत्रः मत्सुतः अर्थो यस्य तं रामशब्दं लालप्यमानस्य भृशमभिलपतोऽपि मम सुखं नास्ति तत्प्रकटप्राप्तिं विना सुखं न भवतीत्यर्थः तदर्थं स्वपुत्रप्राकट्यार्थं हयमेधेन यक्ष्यामीति मम मतिरजायतेति शेषः वैशब्दोप्यर्थे॥८॥

गो० टी०–ममेति । लालप्यमानस्य भृशं विलपतः लपेर्यङन्ताच्छानच् ॥ ८ ॥

८ ] ति० टी०–तदिति । शास्त्रप्रोक्तेन कर्मणा विधिना केन प्रकारेणाचरणेनाहं कामं पुत्ररूपं प्राप्स्यामीत्यत्र बुद्धिरुपायविषया विचार्यतां क्रियताम् ॥ ९ ॥

रा० टी०–तदिति । बुद्धिरतः विचाररतांस्त्रायते निश्चितवस्तूपदेशेन रक्षतीति तत्संबोधनं हे वशिष्ठेत्यर्थः तद्वाङ्मनसगोचरातीतं वस्तु यष्टुं प्रत्यक्षतः मेलितुमिच्छामि तच्छास्त्रदृष्टेन वेदबोधितेन कर्मणा अहं कथं किं प्राप्स्यामि वाङ्मनसगोचरातीतं वस्तु प्रत्यक्षतः किं लब्धास्मीत्यर्थः इति कामं नितरां

---

१ ब्रवीदिदं राजा. रा. गो. पाठः । २ सत्तमं. रा. गो. पाठः । ३ चान्ये द्विजसत्तमाः रा. गो. पाठः । ४ वाक्यं श्लक्ष्णमथाब्रवीत्. गो. पाठः । ५ पुत्रार्थं. रा. गो. पाठः । ६ विचार्यताम्. रा. गो. पाठः । ७ नायाक्षं किंवा न यक्ष्यामीति युक्तमितिभाति । ८ लपेरिति युक्तमिति भाति ।

ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् । वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम् ॥ १० ॥
ऊचुश्च परमप्रीताः सर्वे दशरथं वचः । संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११ ॥
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥ १२ ॥
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता । ततस्तुष्टोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ॥ १३ ॥
अमात्यानब्रवीद्राजा हर्षव्याकुललोचनः । संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ॥ १४ ॥
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् । सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १५ ॥

विचार्यताम् । एतेन "न कर्मणा न प्रजया धनेन" इति श्रुत्या कर्मणां तत्प्रापकत्वाभावनिश्चयात् वाङ्मनसगोचरातीतवस्तुनः प्रत्यक्षत्वे सर्वप्रमाणविरुद्धत्वाच्च तत्प्राप्तिर्दुर्घटेति प्रश्नकर्तुराशयो ध्वनितः कथमिति प्रश्ने ॥ ९ ॥

गो० टी०—तदिति । तत्पुत्रेच्छुत्वात् यष्टुं दीक्षितुं शास्त्रदृष्टेन कर्मणा विधिना प्रकारेणेति यावत् कर्मणा क्रियाकलापेनेति वा कामं काम्यमानं यज्ञं कथं प्राप्स्यामि विघ्नभूयस्त्वादिति भावः अत्र निर्विघ्नयागकरणे बुद्धिः उपायःविचार्यताम् ॥ ९ ॥

१० ] ति० टी०—तत इति । प्रतिपूजा स्तुतिः । पार्थिवस्य मुखेरितं साक्षाद्राज्ञा स्वयमेवोक्तम् ॥ १० ॥

रा० टी०—तत इति । ततः गूढराजप्रश्नश्रवणानन्तरं वसिष्ठप्रमुखाः सर्वे ब्राह्मणाः पार्थिवस्य राज्ञः मुखाच्च्युतं तद्गूढं प्रश्नवाक्यं साधु सयुक्तिकमुक्तमिति प्रत्यपूजयन् प्रशशंसुःपार्थिवस्य मुखेरितमिति भट्टसंमतः पाठः ॥ १० ॥

गो० टी०—तत इति । प्रत्यपूजयन् तुष्टुवुः पार्थिवस्य मुखाच्च्युतं साक्षाद्राज्ञोक्तमित्यर्थः । ऊचुरित्यर्द्धमेकं दशरथं वचः ऊचुः ब्रूशासीत्यादिना द्विकर्मकत्वम् ॥ १० ॥

११ ] ति० टी०—संभारा अश्वमेधप्रसिद्धा एकविंशतियूपादिरूपाः संभ्रियन्तां संपाद्यन्ताम् ॥ ११ ॥

रा० टी०—ऊचुरिति । परमप्रीताः राजकृतगूढप्रश्नस्य सत्तरप्रस्फूर्त्या परमहर्षं प्राप्ता एव सर्वे वशिष्ठप्रमुखाः दशरथं वचः सत्तरवचनमूचुःएतेन प्राकृतवाङ्मनसगोचरातीतत्वं तस्य भवन्तस्त्वप्राकृतकरणा इति भवत्करणविषयत्वं तस्य सिद्धमेव एतावत्कालं भवत्करणविषयत्वं तु वात्सल्यरसप्रभूतये "न कर्मणा न प्रजया धनेन" इत्यादीनि प्राकृतजनपराणि तत्रापि काम्यकर्मजनिततल्लाभाभावप्रतिपादकानीति काम्यनिषिद्धवर्जितानि कर्माण्यनुष्ठेयान्येवेत्युत्तरं सूचितम् अतः संभाराः अश्वमेधयागसामग्र्यः ते प्रसिद्धाः संभ्रियन्तां संपाद्यन्ताम् तुरगः तदुपयोग्यश्वश्च विमुच्यतां पूर्वश्चशब्द एवार्थे ॥ ११ ॥

गो० टी०—संभारा इति । ते प्रसिद्धाः संभाराः यज्ञोपकरणानि यूपपात्रादीनि संभ्रियन्तां संपाद्यन्तां तुरगः अश्वमेधीयोऽश्वः ॥ ११ ॥

१२ ] ति० टी०—सरय्वा इति । चौ त्वर्थे । अभिप्रेतान्मनोभिप्रेतगुणयुक्तान् ॥ १२ ॥

रा० टी०—सरय्वा इति । सरय्वा उत्तरे तीरे यज्ञभूमिः यागयोग्यस्थलं विधीयतां यतः हे पार्थिव यस्य ते तव पुत्रार्थमियं धार्मिकी बुद्धिः आगता प्राप्ता स त्वमभिप्रेतान्परमप्रीतिविषयीभूतान्पुत्रान् स्वनित्यसुतान् सर्वथा प्रकटतोऽपि प्राप्स्यसे एव चशब्द एवार्थे अपरः हेत्वर्थे सार्द्धश्लोक एकान्वयी ॥ १२ ॥

गो० टी०—सर्वथेति । एकपुत्रस्यापुत्रप्रायत्वात् 'एष्टव्या बहवः पुत्राः' इति वचनाच्च पुत्रानिति बहुवचनं प्राप्स्यस इति कर्मकर्तर्यात्मनेपदम् । धार्मिकी "धर्मं चरति" इति ठक् धर्माचरणविषयिणीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—धार्मिकी धर्मप्रयोजना । सर्वथा प्राप्स्यस इति प्रतिज्ञानात्संतोषः ॥ १३ ॥

रा० टी०—तत इति । राजा एतद्द्विजभाषितं श्रुत्वा तुष्टः अभवत् ॥ १३ ॥

गो० टी०—तत इति । हर्षेण हर्षाश्रुणा पर्याकुले व्याप्ते ईक्षणे यस्य सः हर्षेण व्याकुलदृष्टिमान् क्रियाभेदाद्राजपदद्वयमिति न विरोधः ॥ १३ ॥

१४ ] ति० टी०—हर्षजनितानन्दाश्रुपरिप्लवनेत्रः ॥ १४ ॥

रा० टी०—ततोऽनन्तरं हर्षपर्याकुलेक्षणः आनन्दाश्रुपूरितनेत्रः राजा मे गुरूणां वचनादिह अस्मिन्काले संभाराः यागसामग्र्यः संभ्रियन्तामिति अमात्यानब्रवीत् । सार्द्धः श्लोक एकान्वयी । हर्षव्याकुललोचन इति भट्टसंमतः पाठः ॥ १४ ॥

गो० टी०—संभारा इति । मे गुरूणामित्यन्वयः इह इदानीं समर्थैः "चतुःशता रक्षन्ति यज्ञस्याघाताय" इत्युक्तरीत्या रक्षणसमर्थैरधिष्ठितः रक्षितः सोपाध्यायः अध्वर्युप्रभृतिऋत्विक्सहितः ॥ १४ ॥

१५ ] ति० टी०—समर्थेति । 'चतुःशता रक्षन्ति' इति श्रुते रक्षणसमर्थैश्चतुःशतराजपुत्रै रक्षितः सोपाध्यायः उपाध्यायपदेन प्रधानर्त्विजः । अश्वस्य मेध्यस्य पदे पदे जुहोतीत्युक्तहोमनिर्वाहाय तत्साहित्यम् ॥ १६ ॥

रा० टी०—समर्थेति । समर्थैः अश्वनिग्रहणादिविषयकसामर्थ्यविशिष्टजनैः अधिष्ठितः सहितः सोपाध्यायः मुख्यऋत्विक्सहितश्चाश्वः विमुच्यताम् अश्वरक्षणपुरुषनियोगे श्रुतिः"चतुःशता रक्षन्ति इति"।उपाध्यायप्रयोजनं"अश्वस्य मेध्यस्य पदे पदे जुहोति" इति श्रुतिबोधितकर्मनिर्वहणम् यज्ञभूमिः यागशाला सरय्वा उत्तरे तीर एव विधीयताम् चशब्द एवार्थे ॥ १६ ॥

१ मुखाच्च्युतम् रा. गो. पाठः । २ प्रीतो गो. पाठः । ३ पर्याकुलेक्षणः रा. गो. पाठः । ४ इदं तु न रुचिरं आर्षमात्मनेपदमितिभावः ।

शान्तयश्चापि वर्धन्तां यथाकल्पं यथाविधि । शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता ॥ १६ ॥
नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे । छिद्रं हि मृगयन्ते स्म विद्वांसो ब्रह्मराक्षसाः ॥ १७ ॥
विधिहीनस्य यज्ञस्य सद्यः कर्ता विनश्यति । तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ॥ १८ ॥
तथा विधानं क्रियतां समर्थाः साधनेष्विति । तथेति चाब्रुवन्सर्वे मन्त्रिणः प्रतिपूजिताः ॥ १९ ॥
पार्थिवेन्द्रस्य तद्वाक्यं यथापूर्वं निशम्य ते । तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ॥ २० ॥

---

गो० टी०—सरय्वा इति । अनेन सरयूदक्षिणतीरे अयोध्येति गम्यते शान्तय विघ्ननिवारकाणि कर्माणि अभिवर्द्धन्तामभिवर्द्धयन्ताम् अन्तर्भावितण्यन्तोऽयं शब्दः । यथाकल्पं यथाक्रमम् ' क्रमस्तु कथ्यते कल्पे ' इति भागुरिः यथाविधि यथाशास्त्रम् ॥ १६ ॥

१६ ] ति० टी०—शान्तयो विघ्ननिवारककर्माणि वर्धन्ताम् छान्दसो णिलोपः । यथाकल्पं यथाक्रमम् 'क्रमस्तु कथ्यते कल्पः ' इति भागुरिः । यथाविधि शास्त्रोक्तविध्यनतिक्रमेण शक्य इति काकुरत्र सर्वेण सर्वगुणयुक्तेनापि राज्ञायं यज्ञः प्राप्तुं शक्यः अपि तु नेत्यर्थः ॥ १६ ॥

रा० टी०—शान्तय इति । शान्तयः अश्वमेधोचितविघ्ननिवारककर्माणि यथाकल्पं क्रममनतिक्रम्य यथाविधि शास्त्रोक्तमनतिक्रम्य अवश्यमभिवर्द्धन्तामभिवर्द्धयन्ताम् अन्तर्भावितण्यर्थः । 'क्रमस्तु कथ्यते कल्पः' इति भागुरिः । विघ्नस्यावश्यंभावित्वेन शान्तिरवश्यं कार्येति बोधयन्नाह—शक्य इति । यदि क्रतुसत्तमे क्रतुश्रेष्ठे अस्मिन्नश्वमेधे कष्टः परमकष्टसंपादकः अपराधो विधिहीनत्वं न भवेत्तर्हि सर्वेणापि महीक्षिता राज्ञा अयं यज्ञः कर्तुं शक्यः।एतेन दुर्निवारापराधभिया एतत्क्रतुकरणे क्षुद्रराजा न प्रवर्तन्ते इति हेतुर्ध्वनितः । सार्द्धश्लोक एकान्वयी चकारोऽवश्यमर्थे॥ १६ ॥

गो० टी०—शक्य इति । अयं यज्ञः अश्वमेधः सर्वेणापि राजमात्रेणापि महीं क्षयतीति महीक्षित् क्षि निवासगत्योरित्यस्मात्क्विप् तेन प्राप्तुं शक्यः कष्टः क्लेशकरः अनर्थकरो वा अपराधः अपचारः यदि न भवेत्प्रमादे सत्यनर्थः सिद्ध एवेति भीत्या क्षुद्रा राजानो न कुर्वन्तीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—तदेवाह—नेति । यद्यत्र यज्ञे कष्टो महाप्रायश्चित्तनाश्योऽपराधो विध्यपराधः क्रियालोपादिरूपो न स्यात्, स्यादप्यन्यः प्राप्यः स त्वत्रातियत्नसाध्यः, अतो न सर्वसुलभः हि यतो यज्ञादिषु मन्त्रक्रियालोपादिना राक्षसत्वं प्राप्ता ब्राह्मणा ब्रह्मराक्षसा विद्वांसो यज्ञतन्त्रज्ञाश्छिद्रमपचारं मृगयन्ते ते चेषदपचारं दृष्ट्वा स्वयं तेषु प्रविश्यापचारधारां संपादयन्ते अतो न सर्वप्राप्यः ॥ १७ ॥

रा० टी०—ननु किं विधिहीनत्वेनेत्यत आह-छिद्रमिति।विद्वांसः यागप्रकारविदः ब्रह्मराक्षसाः अयाज्ययाजनाप्रतिग्राह्यप्रतिग्रहीतृत्वादिना राक्षसत्वं प्राप्ताः ते एव ब्रह्माणो ब्राह्मणाः कर्मधारयः।अत्र यागे क्षुद्रमपराधं मृगयन्ते। एतेन जातापराधयागभागस्य देवानर्हत्वेन ब्रह्मराक्षसा एव गृह्णन्तीत्यन्वेषणे हेतुर्ध्वनितः । 'छिद्रं रन्ध्रापराधयोः' इति वैजयन्ती।ननु किं तेनेत्यात आह विधिहीनस्य यज्ञस्य कर्ता सद्यो विनश्यत्येव हिशब्दएवार्थे॥१७॥

गो० टी०—छिद्रमिति । विद्वांसः अश्वमेधस्वरूपाभिज्ञाः ब्रह्मराक्षसाः अकृतप्रायश्चित्ताप्रतिग्राह्यप्रतिग्रहायाज्ययाजनादिदिपापैः राक्षसत्वं प्राप्ताः ब्राह्मणाः यज्ञस्वरूपतदपराधज्ञत्वात्तत्राऽश्वमेधे छिद्रमपराधं मृगयन्ते अन्वेषयन्ते मृग अन्वेषणे इति धातुः । ' छिद्रं रन्ध्रापराधयोः' इति वैजयन्ती अपराधदर्शने यज्ञमात्मसात्कृत्य नाशयन्तीति भावः किं तत इत्यतआह—निहतस्य चेति ॥ १७ ॥

१८-१९] ति० टी०—किंच विधिहीनस्य यज्ञस्य कर्ता यजमान ऋत्विक्संघश्च सद्यो विनश्यति तत्ततो हेतोर्यथा म एष यज्ञो विधिपूर्वं शास्त्रोक्तप्रकारेण, नतु तदपचारेण, यथा समाप्यते तथा विधानं यत्नः क्रियताम् [७] नन्वेवं चेदशक्यमेतत्तत्राह—यूयं तथा करणेषु समर्थाः शक्ता इति । इत्येवंप्रकारोत्साहनानि राजा चक्र इत्यर्थः । ते प्रतिपूजिता मन्त्रिणस्तथेत्यवदन् । ' प्रत्यपूजयन् ' इति पाठे चेति शेषः ॥ १८ ॥ १९ ॥

रा० टी०—तदिति। तत्तस्माद्धेतोः यथा येन प्रकारेण एष मे क्रतुः विधिपूर्वमपराधशून्यपूर्वकं सत् समाप्यते तथा तेन प्रकारेण विधानं यत्नः क्रियतां भवद्भिः संपाद्यताम् तत्र हेतुमाह—यत इह करणेषु निर्विघ्नयागसमापनकार्येषु भवन्तः समर्थाः ॥ तथेतीति पार्थिवेन्द्रस्य महाराजाधिराजदशरथस्य आज्ञप्तं तत्प्रसिद्धं वाक्यं ते सर्वे मन्त्रिणः यथा यथावत् निशम्य श्रुत्वा तथेति अब्रुवन्प्रत्यपूजयन् उत्कृष्टो भवतां निश्चय इति प्राशंसंश्च। मन्त्रिणः प्रतिपूजिता इति भट्टसंमतः पाठः ॥ १८ ॥ १९ ॥

गो० टी०—फलितमाह—तदिति । विधिपूर्वं अनपराधं यथा भवति तथा यथा समाप्यते तथा विधानं यत्नः क्रियताम् इह करणेषु यज्ञानुष्ठानेषु समर्थाः यूयमिति शेषः यूयं समर्थाः खल्विति स्तुतिः॥ तथेति।ते सर्वे मन्त्रिणः पार्थिवेन्द्रस्य तद्वाक्यं निशम्य यथा आज्ञप्तम् आज्ञापितम् "वा दान्त०" इत्यादिना वैकल्पिक इड्भावो निपातितः तथा कुर्म इत्यब्रुवन् समीचीनो महाराजस्याध्यवसाय इति प्रत्यपूजयंश्च ॥१८॥१९॥

२०-२१ ] ति० टी०—पार्थिवेत्यर्धं पूर्वान्वयि । वर्धयन्त इत्यस्याशीर्भिरिति शेषः ॥ २० ॥ २१ ॥

---

१ कर्तुमयं रा. पाठः । २ तेत्र. रा. गो. पाठः । ३ निहतस्य च गो. पाठः । ४ करणेष्विह रा. गो. पाठः । ५ प्रत्यपूजयन् रा. गो. पाठः । ६ यथाज्ञप्तं. रा. गो. पाठः । ७ व्यर्थ इतिभाति ।

अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् । विसर्जयित्वा तान्विप्रान्सचिवानिदमब्रवीत् ॥ २१ ॥
ऋत्विग्भिरुपसंदिष्टो यथावत्क्रतुराप्यताम् । इत्युक्त्वा नृपशार्दूलः सचिवान्समुपस्थितान् ॥ २२ ॥
विसर्जयित्वा स्वं वेश्म प्रविवेश महामतिः । ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयंगमाः ॥ २३ ॥
उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् । तासां तेनातिकान्तेन वचनेन सुवर्चसाम् ॥
मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये । ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

राजसूतयोः संवादः ।

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् । श्रूयतां तत्पुरावृत्तं पुराणे च मया श्रुतम् ॥ १ ॥

---

**रा० टी०–तथेति** । तथा तेन प्रकारेण धर्मज्ञास्ते सपुरोहितास्त्विजो द्विजाः नृपोत्तमं वर्द्धयन्तः तथेति अब्रुवन् प्रत्यपूजयंश्चेति पूर्वेणान्वयः । ततः प्रोत्साहनानन्तरमनुज्ञाताः राजाज्ञां प्राप्ताः सर्वे सपुरोहितऋत्विजो यथागतमागतमनतिक्रम्य पुनर्जग्मुः ॥ २० ॥

**गो० टी०–तथेति** । वर्द्धयन्तः आशीर्भिरिति शेषः द्विजाः ऋत्विजः भाविन्यां चैत्रपौर्णमास्यां तथैव करिष्याम इत्युक्त्वा जग्मुरित्यर्थः ॥ २० ॥

**रा० टी०–विसर्जयित्वेति** । तान् सपुरोहितऋत्विजो विप्रान् विसर्जयित्वा विसर्ज्य ऋत्विग्भिः उपसंदिष्टोऽयं क्रतुः यथावदाप्यताम् इदं वचनं सचिवान्मन्त्रिणः अब्रवीत् ॥ २१ ॥

**गो० टी०–विसर्जयित्वेति** । क्रतुः क्रतुसंभारः आप्यतां संपाद्यताम् ॥ २१ ॥

२२ ] **ति० टी०**–उपसंदिष्ट इति त्रिपदम् । समित्यस्याप्यतामित्यनेनान्वयः । व्यवहितप्रयोग आर्षः ॥ २२ ॥

**रा० टी०–इत्युक्त्वेति** । महाद्युतिः परमप्रकाशः नृपशार्दूलः राजसिंहः इत्युक्त्वा समुपस्थितान्समागतान्सचिवान् विसर्जयित्वा स्वं वेश्म प्रविवेश ॥ २२ ॥

**गो० टी०–इतीति** । महाद्युतिरिति प्रीत्यातिशयद्योतनम् २२

२३ ] **ति० टी०**–ताः पत्नीर्यज्ञार्हाः ॥ २३ ॥

**रा० टी०–तत इति** । ततः स्ववेश्मप्रवेशानन्तरं स नरेन्द्रः हृदयंगमाः प्रियास्ताः प्रसिद्धाः पत्नीः गत्वा प्राप्य अहं सुतकारणाद्यक्ष्ये अतो यूयं दीक्षां विशत इति उवाच ॥ २३ ॥

**गो० टी०–तत इति** । ताः प्रसिद्धाः कौसल्याद्याः पत्नीः यज्ञार्हाः "पत्युर्नो यज्ञसंयोगे" इति पतिशब्दस्य यज्ञफलभोक्तृत्वरूपयज्ञसंयोगे नकारादेशविधानात् । दीक्षां दीक्षाध्यवसायं विशत गच्छतेत्यर्थः । सुतकारणात् सुतार्थम् 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति पञ्चमी ॥ २३ ॥

२४ ] **ति० टी०**–दीक्षां दीक्षाविषयदृढनिश्चयं विशत कुरुत वर्चः कान्तिः मुखपद्मानीति रूपकम् वसन्तकालावच्छिन्नपद्मोपमा च ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टमः सर्गः ॥ ८ ॥

**रा० टी०–तासामिति** । सुवर्चसा मतितेजस्विनीनां तासां पत्नीनां मुखपद्मानि अतिकान्तेन अतिरमणीयेन तेन पूर्वोक्तेन राजवचनेन हिमात्यये हिमध्वंसे पद्मानीव अशोभन्त ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे अष्टमः सर्गः ॥ ८ ॥

**गो० टी०–तासामिति** । अतिकान्तेन अत्यन्तमिष्टेन सुखपद्मानि सुन्दराणि मुखानीत्यर्थः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

---

१ ] **ति० टी०–एतदिति** । हयमेधं सुतार्थं करिष्यामीति राजवाक्यम् सूतः सुमन्त्रः स हि राज्ञ उभयधर्मा सूतो मन्त्री च पुरावृत्तमितिहासः य इतिहासः पुराणे च । चेन ऋषिकथ्यमानकथासंग्रहः मया श्रुतः स श्रूयताम् ॥ १ ॥

**रा० टी०**–पत्न्याज्ञापनोत्तरकालिकं वृत्तमाह—**एतदित्यादिभिः** । सूतः सुमन्त्रः रहः अन्तःपुरं प्राप्येति शेषः । एतत्पुत्रोद्देश्यकयागारम्भकवचनं श्रुत्वा इदं वक्ष्यमाणं वचनं राजानमब्रवीत् । तदेवाह ऋत्विग्भिर्वसिष्ठादिप्रमुखैरुपदिष्टः यः अयं पुत्रोपायभूतो यागः सः पुरा पूर्वं वृत्तः राजभिः संपादितः मया श्रुतः इतिहासपुराणादिश्रवणद्वारा निश्चितः सुमन्त्रस्य मन्त्रित्वसूतत्वोभयोक्त्या तदुभयधर्माक्रान्तत्वं बोध्यम् । अब्रवीदित्यस्यानन्तरं 'श्रूयतां यत्पुरावृत्तं पुराणे च मया श्रुतम्' इत्यर्द्धश्लोकोपि भट्टसंमतः ॥ १ ॥

**गो० टी०**–अथ भगवदवतारासाधारणकारणं पुत्रेष्टिमुपक्षिपति सर्गत्रयेण—**एतच्छ्रुत्वेत्यादि** । सूतः सारथित्वेन

---

१ महाद्युतिः रा. गो. पाठः । २ हृदयप्रियाः गो. पाठः । ३ इदमर्धं गो. रा. पुस्तकयोर्नदृश्यते ।

ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः । सनत्कुमारो भगवान्पूर्वं कथितवान्कथाम् ॥ २ ॥
ऋषीणां संनिधौ राजंस्तव पुत्रागमं प्रति । काश्यपस्य च पुत्रोऽस्ति विभाण्डक इति श्रुतः ॥ ३ ॥
ऋष्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति । स वने नित्यसंवृद्धो मुनिर्वनचरः सदा ॥ ४ ॥
नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् । द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ॥ ५ ॥
लोकेषु प्रथितं राजन्विप्रैश्च कथितं सदा । तस्यैवं वर्तमानस्य कालः समभिवर्तत ॥ ६ ॥
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् । एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ॥ ७ ॥

मन्त्रित्वेन च स्थितः सुमन्त्रः रहः एकान्ते इदमब्रवीत् । अन्तःपुरमागत्योक्तवानित्यर्थः । अयं अश्वमेधप्रवृत्तिरूपः पुत्रार्थोपायः । ऋत्विग्भिर्वसिष्ठादिभिः उपदिष्टःमया तु पुरावृत्तः इतिहासरूपः यः श्रुतः ॥ १ ॥

२-३] ति० टी०-ऋत्विगिति । ऋत्विग्भिरयमश्वमेधरूपः पुत्रोपाय उपदिष्टः मया त्वितिहासविषयः किंचिद्विशेषविशिष्टः श्रुत इत्यर्थः । तमाह-सनदित्यादिना । कथां सर्वज्ञत्वाद्भविष्यद्विषयाम् ॥ २ ॥ ३ ॥

रा० टी०- स्वश्रुतं विशदयन्नाह-सनत्कुमार इति । हे राजन् । ऋषीणां सन्निधौ समीपे तव पुत्रागमं प्रति पुत्रप्राप्तिसंबन्धिनीं कथां भगवान् त्रैकालिकज्ञानरूपैश्वर्यविशिष्टः सनत्कुमारः पूर्वं कथितवान् ॥ २ ॥

गो० टी०-कथमित्यत्राह-सनत्कुमार इत्यादि । भगवान् भविष्यज्ज्ञानवत्त्वरूपमाहात्म्यवान् । कथां भविष्यद्विषयिणीम् ॥ २ ॥

रा० टी०-तामेवाह-कश्यपस्येति । विभाण्डक इति नाम्ना श्रुतः कश्यपस्य पुत्रोऽस्ति । ऋष्यशृङ्ग इति नाम्ना ख्यातः प्रसिद्धः तस्य विभाण्डकस्यापि पुत्रो भविष्यति । तु शब्दोऽप्यर्थे ॥ ३ ॥

गो० टी०-कश्यपस्येति । ख्यातो भविष्यतीत्यत्र "धातुसंबन्धे प्रत्ययाः" इति भूतभविष्यतोः साधुत्वम् ॥ ३ ॥

४ ] ति० टी०-ख्यातो भविष्यतीति ऋष्यशृङ्ग इति ख्यास्यमानः 'धातुसंबन्धे' इति साधुत्वम् । नित्यसंवृद्धः पित्रा वने नित्यं वर्धित इत्यर्थः । सर्वथा पौरादिव्यवहारानभिज्ञत्वं नित्यपदेन सूचितम् अत एव पितुर्न क्वापि त्वया गन्तव्यमित्याज्ञानुवर्तनाद्वनचरत्वम् ॥ ४ ॥

रा० टी०-स इति । वनचरैः सह वने नित्यं संवृद्धः विप्रेन्द्रो विप्रश्रेष्ठः स मुनिः नित्यं पित्रनुवर्त्तनात् पितृपरिचर्यातः अन्यत्किञ्चिन्न जानाति ॥ ४ ॥

गो० टी०-स इति । अन्यं ग्रामग्रामीणादिकं न जानाति न ज्ञास्यति ॥ ४ ॥

५ ] ति० टी०-नान्यमिति । जानातीति भविष्यति वर्तमानसामीप्यात् । पित्रनुवर्तनात्पित्रा सहवासात् । ब्रह्मचर्यस्य द्वैविध्यम् मेखलाजिनादिधारणरूपं मुख्यं ब्रह्मचर्यम्, दारेषु ऋतुगमनरूपं परं गौणम् तत्प्रकारद्वयमप्यस्य भविष्यति । द्विविधशब्दाद्बहुव्रीहेः ष्यञ् ॥ ५ ॥

रा० टी०-द्वैविध्यमिति । हे राजन् ! ब्रह्मणि वेदे चर्या स्थितिर्यस्य अतएव महात्मनः पूज्यस्वरूपस्य ऋष्यशृङ्गस्य विप्रैः सदा कथितं वर्णितम् । अतएव लोकेषु प्रथितं प्रसिद्धं द्वैविध्यं द्वौ सीतारामौ विशेषेण ध्यायति तस्य भावः । निरन्तरसीतारामध्यानमित्यर्थः । भविष्यति । एतेन तत्पितुरपि सीतारामोपासकत्वं व्यक्तं चो हेतौ ॥ ५ ॥

गो० टी०-द्वैविध्यमिति । द्वैविध्यं द्वैधीभावः श्रीमद्भङ्गतो भङ्ग इत्यर्थः । लोकेषु प्रथितमित्यत्र ब्रह्मचर्यमित्यनुषङ्गः । यद्वा मेखलाजिनदण्डादिना लोकेषु प्रथितं विप्रैः स्मर्तृभिः कथितमृतुगमनलक्षणं च ब्रह्मचर्यस्य द्वैविध्यं भविष्यति । आह-याज्ञवल्क्यः 'षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ॥ ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्' इति ॥ ५ ॥

६-७ ] ति० टी०-लोकेष्वित्यर्धं पूर्वान्वयि । एवं पित्रग्न्यादिसेवया । समभिवर्ततेति भविष्यति लङ्, अडभावश्चार्षः ॥ ६ ॥ ७ ॥

रा० टी०-तस्येति । अग्निं यशस्विनं पितरं च शुश्रूषमाणस्य सेवमानस्य एवं सीतारामध्यानप्रकारेण वर्तमानस्य तस्य ऋष्यशृङ्गस्य कालः विवाहादिहेतुभूतसमयः समभिवर्तत सम्प्राप्स्यति । भविष्यति लङ् । आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ ६ ॥

गो० टी०-तथाविधस्य द्वितीयब्रह्मचर्यस्य प्रसक्तिं दर्शयति-तस्येत्यादिना । तस्य अग्निं यशस्विनं पितरं चाद्गुरुं च शुश्रूषमाणस्य प्रथमे ब्रह्मचर्ये वर्तमानस्येत्यर्थः । कालः कतिपयकालः समभिवर्तत भविष्यदर्थे लङ् । "छन्दसि लुङ्लङ्लिटः" इति सर्वलकारापवादत्वेन लङोपि विधानात् अडभावश्चार्षः ॥ ६ ॥

रा० टी०-एतस्मिन्निति । एतस्मिन् विवाहादिहेतुभूते काले एव प्रतापवान्महाबलश्च रोमपादो राजा अङ्गेषु अङ्गदेशेषु प्रथितः ख्यातो भविष्यति । तुश्चार्थे ॥ ७ ॥

गो० टी०-एतस्मिन्निति । एतस्मिन् काले तस्य ब्रह्मचर्यदशायाम् । अङ्गेषु अङ्गदेशेषु ॥ ७ ॥

१ कश्यपस्येति गो. रा. पाठः । २ विभंडकइति गो. पाठः । ३ ऋश्येति गो. पाठः ।

अङ्गेषु प्रथितो राजा भविष्यति महाबलः । तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ॥ ८ ॥
अनावृष्टिः सुघोरा वै सर्वलोकभयावहा । अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ॥ ९ ॥
ब्राह्मणाञ्छ्रुतसंवृद्धान्समानीय प्रवक्ष्यति । भवन्तः श्रुतकर्माणो लोकचारित्रवेदिनः ॥ १० ॥
समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् । इत्युक्तास्ते ततो राज्ञा सर्वे ब्राह्मणसत्तमाः ॥ ११ ॥
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः । विभाण्डकसुतं राजन्सर्वोपायैरिहानय ॥ १२ ॥
आनाय्य तु महीपाल ऋष्यशृङ्गं सुसत्कृतम् । विभाण्डकसुतं राजन्ब्राह्मणं वेदपारगम् ॥
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ ॥ १३ ॥
तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते । केनोपायेन वै शक्यमिहानेतुं स वीर्यवान् ॥ १४ ॥

८ ] ति० टी०—व्यतिक्रमाद्राजोचितधर्मविलोपनात् । दारुणत्वं बहुकालव्यापित्वात् ॥ ८ ॥

रा० टी०—तस्येति । तस्य राज्ञो व्यतिक्रमाद्विरुद्धधर्माचरणात्सुदारुणा बहुकालिकात्वेन कठिना सुघोरा सर्वतदेशव्यापिनीत्वेन दुःसहा अतएव सर्वभूतभयावहा च अनावृष्टिः वृष्ट्यभावो भविष्यति । वैशब्दश्चार्थे ॥ ८ ॥

गो० टी०—तस्येति । व्यतिक्रमाद्धर्मातिक्रमात् सुदारुणा बहुकालव्यापिनी । सुघोरा तदीयसर्वराष्ट्रव्यापिनी अत एव सर्वभूतभयावहा ॥ ८ ॥

९ ] ति० टी०—घोरत्वं सर्वराष्ट्रव्यापनात्।वृत्तायां जातायाम्॥९

रा० टी०—अनावृष्ट्यामिति । अनावृष्ट्यां वृष्ट्यभावे वृत्तायां प्रवृत्तायां दुःखसमन्वित एव राजा रोमपादः श्रुतवृद्धान् श्रुतेन अनेकलौकिकवैदिकवृत्तश्रवणेन वृद्धान्सम्पन्नान्ब्राह्मणान् चकारेण अन्यानपि बहुश्रुतक्षत्रियादीन्समानीय प्रवक्ष्यति । तुशब्द एवार्थे श्रुतसंवृद्धानिति भट्टसंमतः पाठः ॥ ९ ॥

गो० टी०—अनावृष्ट्यामिति । श्रुतेन वृद्धाः श्रुतवृद्धाः बहुभ्यो बहुधा श्रुतशास्त्रा इत्यर्थः । प्रवक्ष्यति चेत्यन्वयः ॥ ९ ॥

१० ] ति० टी०—श्रुतेन वेदाध्ययनेन संवृद्धान् । श्रुतकर्माणोऽनावृष्टिकरश्रुतमत्कर्माणः यतो भवन्तो लोकव्यवहारज्ञाः

रा० टी०—राजोक्तिमेवाह—भवन्त इति । श्रुतधर्माणः श्रुता धर्मा अनेकलौकिकवैदिकवृत्तानि अतएव लोकचारित्रवेदिनः लोककर्त्तव्यविषयकनिश्चयवन्तः भवन्तः प्रायश्चित्तं मत्कृतपापशोधनं यथा भवेत्तथा नियमं कर्त्तव्यनियमनं समादिशन्तु सम्यग्बोधयन्तु 'प्रायः पापमिति प्रोक्तं चित्तं तच्छोधनं स्मृतम्' इति स्मृतिः ॥ १० ॥

गो० टी०—भवन्त इति । श्रुतधर्माणः "धर्मादनिच् केवलात्" इत्यनिच् । लोकचारित्रवेदिनः लोकाचारज्ञाः अतः अनावृष्टिमूलस्य मत्पापस्य प्रायश्चित्तं यथा भवेत् तादृशं नियममनुष्ठेयधर्ममादिशन्तु ॥ १० ॥

११-१२] ति० टी०—समेति । तस्य मत्पापस्य प्रायश्चित्तं यथा भवति तथा नियममनुष्ठेयांशं समादिशन्त्वित्यन्वयः।उक्ताः पृष्टाः ते च शुद्धब्रह्मचारिणे कन्यादानं प्रायश्चित्तमूचुरित्याह—वक्ष्यन्तीति ॥ १२ ॥

रा० टी०—वक्ष्यन्त इति वेदपारगाः ते पृष्टाः ब्राह्मणाः महीपालं वक्ष्यन्ते कथयिष्यन्ति तत्कथनमेवाह हे राजन् । विभाण्डकसुतं ऋष्यशृङ्गं सर्वोपायैः निःशेषयत्नैरिह आनय । प्रायश्चित्तं यथाभवेदित्यस्यानन्तरम् 'इत्युक्तास्ते ततो राज्ञा सर्वे ब्राह्मणसत्तमाः' इति श्लोकार्द्धमपि भट्टसंमतम् ॥ ११ ॥

गो० टी०—शुद्धब्रह्मचारिणे कन्याप्रदानमेव परमं प्रायश्चित्तमेव वक्ष्यन्तीत्याह—वक्ष्यन्तीत्यादिना । सर्वोपायैः नानाविधोपायैः ॥ ११ ॥

१३ ] ति० टी०—'आनाय्य तु' इति पाठः । महीपाल ऋष्येति प्रकृतिभावः ॥ १३ ॥

रा० टी०—आनयनानन्तरकालिककर्त्तव्यमाह—आनाय्येति । हे महीपाल ऋष्यशृङ्गं सुसत्कृतं यथा भवति तथा आनाय्य स्वपुरं प्राप्यैव सुसमाहितः एकाग्रचित्तस्त्वं शान्तां कन्यां विधिना वेदोक्तविधानेनैव प्रयच्छ तस्मै एव देहीत्यर्थः । तुवैशब्दौ एवार्थौ महीपालेत्यत्र संहिताकार्यविरहः 'ऋत्यक' इति प्रकृतिभावात् । पादान्तस्थत्वेन संहिताया अभावाच्च १२

गो० टी०—आनाय्येति । ऋष्यशृङ्गमित्यत्र "ऋत्यकः" इति प्रकृतिभावः।आनाय्येति आङुपसृष्टाण्णीञ् प्रापण इत्यस्माद्धेतुमण्ण्यन्ताल्ल्यप्।प्रयच्छ देहि ऋष्यशृङ्गायेति शेषः। सुसत्कृतमित्यानयनक्रियाविशेषणम्। सुसमाहितः निर्विचार-इति यावत्१२

१४-१५ ] ति० टी०—राज्ञश्चिन्तामभिनयति—केनेति । वीर्यं जितेन्द्रियत्वं विद्यावृत्ततपोवीर्यं च ॥ १४ ॥ १५ ॥

रा० टी०—तेषामिति । तेषामुपदेष्टृणां वचनं श्रुत्वैव राजा चिन्तां विचारं प्रपत्स्यते प्राप्नोत् तत्स्वरूपमाह—वीर्यवान् तपोजनितपरमबलविशिष्टः सः ऋष्यशृङ्गः इह एवानेतुं केन उपायेन शक्यम् तुवैशब्दौ एवार्थौ शक्यमिति सामान्ये नपुंसकम्

गो० टी०—तेषामिति । चिन्ताप्रकारमाह—केनेति । वीर्यवान् नियतब्रह्मचर्यः ॥ १३ ॥

१ सर्वभूतेति गो. रा. पाठः । २ श्रुतवृद्धाश्चेति गो. रा. पाठः । ३ श्रुतधर्माण इति गो. रा. पाठः । ४ इदमर्धं गो. रा. पुस्तकयोर्नास्ति । ५ वक्ष्यन्ते इति रा. पाठः । ६ विभण्डक इति गो. पाठः । ७ आनाय्यचेति गो. पाठः । ८ ऋश्येति गो. पाठः । ९ इदमर्धं गो. रा. पुस्तकयोर्नास्ति ।

ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् । पुरोहितममात्यांश्च प्रेषयिष्यति सत्कृतान् ॥ १५ ॥
ते तु राज्ञो वचः श्रुत्वा व्यथिता वनताननाः । न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १६ ॥
वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तान्क्षमान् । आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १७ ॥
एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः । आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १८ ॥
ऋष्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति । सनत्कुमारकथितमेतावद्व्याहृतं मया ॥ १९ ॥

रा० टी०—तत इति । ततः विचारानन्तरमात्मवान् प्रशस्तबुद्धिविशिष्टः धर्मविद्राजा मन्त्रिभिः सह विनिश्चित्य आनयनोपायनिश्चयं कृत्वा पुरोहितममात्यांश्च ततः स्वदेशात्प्रेष्यति प्रेषयिष्यति अन्तर्भावितण्यर्थः ॥ १४ ॥

गो० टी०—तत इति । विनिश्चित्य ब्राह्मणं ब्राह्मणा एवानेष्यन्तीति निश्चित्य । ततः तस्माद्देशात् प्रेष्यति प्रेषयिष्यति । भविष्यदर्थे लट् । 'कालसामान्ये लड्वक्तव्यः' इतिवचनात्॥१४॥

१६ ] ति० टी०—ते त्विति । व्यथिता अशक्यार्थनियोगतः खिन्नाः वनतानना नम्रमुखाः अवस्यादेर्लोपः । ऋषेर्विभाण्डकाद्भीता न गच्छेमेत्युक्त्वाशक्यार्थत्वादेतन्नियोगाकरणं क्षन्तव्यमित्यनुनेष्यन्ति ॥ १६ ॥

रा० टी०—ते त्विति । ते पुरोहितादयः राज्ञो वचः श्रुत्वैव ऋषेर्भीताः अतएव व्यथिताः व्यथां प्राप्ताः अतएव विनताननाः अवनतमुखाः ते पुरोहितादयः वयं न गच्छेमेति निश्चित्येति शेषः । तं नृपमनुनेष्यन्ति उपायान्तरकथनेन सन्तोषयिष्यन्ति । तुशब्द एवार्थे । वनतानना इति भट्टसम्मतः पाठः। अवस्यादेर्लोप इति तद्व्याख्या ॥ १६ ॥

गो० टी०—ते त्विति । व्यथिताः खिन्नाः अत एव विनताननाः नम्रमुखाः ऋषेर्विभाण्डकाद्भीता इत्यनन्तरमितिकरणं बोध्यम् । अनुनेष्यन्ति न वयं गन्तुं शक्ताः किंतु तदानयन उपायं विचिन्त्य वक्ष्याम इति सान्त्वयिष्यन्ति ॥१६॥

१७ ] ति० टी०—एवमनुनीयाथ क्षमानुचितान्गणिकाप्रेषणादिरूपानुपायान्विचार्य राजानं वक्ष्यन्ति । यद्यस्मदुक्तं श्रोष्यसि तदा तमानेष्यामः दोषोऽस्माकं शापादिरूपस्तस्य तपोवैकल्यादिरूपो वा सर्वथा न भविष्यति ॥ १७ ॥

रा० टी०—वक्ष्यन्तीति । ते पुरोहितादयः तस्य ऋष्यानयनस्य क्षमान् योग्यांस्तान्वक्ष्यमाणानुपायान् चिन्तयित्वा विचारेण निश्चित्यैव वक्ष्यन्ति राज्ञे निवेदयिष्यन्ति। तदेवाह वयं विप्रमानेष्यामः उपायान्तरेण प्रापयिष्यामः यतः दोषः अपराधो न भविष्यति।एकः चशब्दः एवार्थे। अपरो यतइत्यर्थे१६

गो० टी०—वक्ष्यन्तीति । तत्क्षमान् ऋष्यश्रृङ्गानयनोचितान् उपायांश्चिन्तयित्वा तान् तस्य राज्ञो वक्ष्यन्ति । एतैरुपायैर्वयं विप्रमानेष्यामः । नच दोषो भविष्यति । ऋष्यश्रृङ्गस्य ब्रह्मचर्यवैकल्यदोषश्च न भविष्यति । तत्र भवता न शङ्कनीयं यथा गणिकासंपर्को न भवेत् तथाऽऽनेष्याम इत्यर्थः ऋषिशापदोषो न भविष्यतीति वार्थः । अनावृष्टिदोषो न भविष्यतीति वा । इति वक्ष्यन्तीति पूर्वेणान्वयः ॥ १६ ॥

१८ ] ति० टी०—एवममात्यपुरोहितवचनाद्गणिकाभिस्तद्द्वारा ऋषिसुत आनीतः देव इन्द्रः पर्जन्यमवर्षयत्तद्देशे शान्ता चास्मै प्रदीयते प्रदत्ता वर्तमानसामीप्ये लट् । यद्यपि सनत्कुमारोक्त्यनुवादेन भविष्यन्निर्देश उचितः, तथापि राज्ञः संतोषाधिक्याय स्वप्रोच्यमानकाले वृत्तमेव तदिति बोधयितुं भूतनिर्देशः ॥ १८ ॥

रा० टी०—एवमिति । एवं पुरोहितादिबोधितोपायप्रकारेण गणिकाभिः करणभूतैः अङ्गाधिपेन कर्त्रा ऋषेः सुतः आनीतः आनेष्यति । अतः देवः अवर्षयत् वर्षयिष्यति । अतः अस्मै शान्ता प्रदीयते प्रदास्यति । कालुपात्तभूतादेरविवक्षा । चशब्दो हेत्वर्थे ॥ १७ ॥

गो० टी०—सनत्कुमारोक्तं समाप्य स्वयमाह—एवमिति । यथा आनेष्याम इत्युक्तमेवमानीतः । देवः पर्जन्यश्चावर्षयत् । शान्ता रोमपादकन्या च अस्मै ऋष्यश्रृङ्गाय प्रदीयते प्रादीयत । कालसामान्ये लट् ॥ १७ ॥

१९ ] ति० टी०—ऋष्यश्रृङ्गेति । अङ्गराजमित्रत्वस्य राज्ञि वक्ष्यमाणत्वेन मित्रजामाता स्वस्यापि जामातैवेत्यतो जामातेत्युक्तिः बीजान्तरमप्यग्रे वक्ष्यत एतदुक्तेः । एवं सनत्कुमारकथितं पुत्रोत्पत्त्युपायरूपं वस्तु मया तुभ्यं व्याहृतम् । अग्रे देवः प्रमाणमिति शेषः ॥ १९ ॥

रा० टी०—ऋष्येति । तव जामाता ऋष्यश्रृङ्गः पुत्रानपि विधास्यति त्वया पुत्रान्विशेषेण प्रकटीकार्यं धारयिष्यति । एतावद्वचनं सनत्कुमारकथितं मया व्याहृतं तवाग्रे कथितम् तुशब्दोऽप्यर्थे । विधास्यतीत्यन्तर्भावितणिजर्थः । ऋष्यश्रृङ्गस्य राजाधिराजजामातृत्वोक्तिः रोमपादमित्रत्वमूलिका ॥ १८ ॥

गो० टी०—ऋष्यश्रृङ्ग इति । जामाता रोमपादस्य दशरथस्यापि वा । दशरथस्यौरसी शान्ता दत्ता रोमपादस्य सनत्कुमारकथितमेतावत् । एवमङ्गाधिपेनेत्यादि तु मया व्याहृतमित्यर्थः । यद्वा सर्वं सनत्कुमारवचनमेव । अवर्षयत् वर्षयिष्यति । प्रदीयते प्रदास्यते ॥ १८ ॥

२० ] ति० टी०—अथेति । हृष्टो नियतपुत्रप्राप्त्युपायलाभात्तस्य संनिहितत्वश्रवणाच्च तुष्टः । ये तु पूर्वोत्तरश्लोक आनयनादि सर्वं भाविष्यत्वेनैव व्याचक्षते तेषां कथमानीत इति

१ ततः प्रेष्यतीति गो. रा. पाठः । २ विनतेति गो. रा. पाठ. । ३ ऋश्येति गो. पाठः ।

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत । यथर्ष्य[1]शृङ्गस्त्वानीतो ये[2]नोपायेन सोच्यताम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

सनत्कुमारप्रतिपादितऋष्यशृङ्गकथावर्णनम्, दशरथप्रोत्साहितसूतकृततत्कथाकथनं च ।

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तदा[3] । यथर्ष्य[4]शृङ्गस्त्वानीतो येनोपायेन मन्त्रिभिः ॥
तन्मे[5] निगदितं सर्वं शृणु मे मन्त्रिभिः सह ॥ १
रोमपादमुवाचेदं सहामात्यैः[6] पुरोहितः । उपायो निरपायोऽयमस्माभिरभिचिन्तितः ॥ २ ॥
ऋष्य[7]शृङ्गो वनचरस्तपःस्वाध्याय[8]संयुतः । अनभिज्ञस्तु नारीणां विषयाणां सुखस्य च ॥ ३ ॥
इन्द्रियार्थैरभिमतै[9]र्नरचित्तप्रमाथिभिः । पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४ ॥

राजप्रश्नानुपपत्तिरित्याहुः । सोच्यताम् स उच्यतामित्यर्थः सन्धिरार्षः । यद्वा सा तद्विषया कथोच्यतामित्यर्थः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-आदिकाव्ये बालकाण्डे नवमः सर्गः ॥ ९ ॥

**रा० टी०–अथेति ।** अथ सुमंत्रोक्तिश्रवणानन्तरं हृष्टो दशरथः सुमंत्रं प्रत्यभाषत । भाषणाकारमाह यथा येन प्रकारेण ऋष्यशृङ्गः आनीतः स प्रकारस्त्वया विस्तरेणैवोच्यताम् । तु शब्दएवार्थे । येनोपायेन सोच्यतामिति भट्टसम्मतः पाठः सोच्यतामित्यत्र सन्धिरार्षः अध्याहृतकथाविशेषणं वेति तैर्व्याख्यातम् ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे नवमःसर्गः ॥ ९ ॥

**गो० टी०–अथेति ।** उत्तरशेषः श्लोकः अत्र सर्गविच्छेदो लेखकदोषकृत इति प्रतिभाति ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१ ] **ति० टी०–सुमन्त्र इति ।** चोदितस्तादृशतपस्विनो गणिकाभिरानयनमत्याश्चर्यमिति विस्तरेण कथनाय प्रेरितः । मन्त्रिभिः सह संमन्त्र्य रोमपादेन यथर्ष्यशृङ्ग आनीतो येन चोपायेनानीतस्तन्मया निगदितं सर्वं प्रकारं मे मत्तो मन्त्रिभिः सह शृण्विति योजना ॥ १ ॥

**रा० टी०–सुमन्त्र इति ।** राज्ञा चोदितः प्रेरितः सुमन्त्रः तदा तस्मिन्काले इदं वचः प्रोवाच । वचनप्रकारमाह–यथा येन प्रकारेण ऋष्यशृङ्गः मन्त्रिभिः रोमपादसचिवादिभिः आनीतः रोमपादपुरं प्रापितस्तं प्रकारं सः विशेषप्रश्नकर्ता त्वं मे मत्तः शृणु हेति हर्षे ॥ १ ॥

**गो० टी०–सुमन्त्रइत्यादि ।** मे मत्तः सह ऋष्यशृङ्गः यथा मन्त्रिभिरानीतः तथा शृणु । हेति प्रसिद्धौ ॥ १ ॥

२ ] **ति० टी०–रोमेति ।** सहामात्यःपुरोहितस्तमुवाच । निरपायोऽव्यभिचारिफलः ॥ २ ॥

**रा० टी०–रोमेति ।** सहामात्यः अमात्यसहितः पुरोहितः रोमपादं इदं वचः उवाच । तद्वचनमेवाह–निरपायः अवश्यंभाविफलविशिष्टः अयमुपायः अस्माभिः अभिचिन्तितः विचारितः ॥ २ ॥

**गो० टी०–रोमपादमिति ।** निरपायः अव्यभिचारिफलः ॥ २ ॥

३ ] **ति० टी०–नारीणां** नारीसंबन्धिविषयाणां शब्दादीनां तत्संबन्धिविषयाणां शब्दादीनां तत्संबन्धिसुखस्य चेत्यर्थः॥३॥

**रा० टी०–**आनयनोपायमाह–**ऋष्येति ।** यः तपःस्वाध्यायतत्परः तपःस्वाध्याययोः निरतः वनचरः वनमात्रवासी स ऋष्यशृङ्गः नारीणां स्त्रीणां विषयाणामिन्द्रियग्राह्यरूपरसादीनां च सुखस्य इन्द्रियविषयसंयोगजन्यानन्देतमस्य च अनभिज्ञः अनभिज्ञातास्ति ॥ ३ ॥

**गो० टी०–ऋष्यशृङ्ग इति ।** तपःस्वाध्यायने तपःस्वाध्याययोः "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः । "अन्येषामपि दृश्यते" इति दीर्घः । तेन पुराणेतिहासादिमुखेनापि न स्त्रीस्वरूपं जानातीति भावः । नारीणामनभिज्ञ इति कर्मणि षष्ठी । विषयाणां शब्दस्पर्शरूपरसगन्धानां संबन्धिनः सुखस्य चानभिज्ञश्च भवति ॥ ३ ॥

४ ] **ति० टी०–अभिमतैः ।** प्राणिमात्रस्येति शेषः । इन्द्रियार्थैस्तद्विषयैर्दिव्यगीत्यादिभिः । अध्यवसीयतामस्मदुक्तकरणाय यत्यताम् ॥ ४ ॥

**रा० टी०–अभिमतैः** प्रीतिविषयभूतैः अतएव नर-

१ यथर्ष्येति गो. पाठः । २ विस्तरेण त्वयोच्यतामिति गो. रा. पाठः । ३ तथेति गो. पाठः । ४ यथर्ष्येति गो. पाठः । ५ तृतीयार्धप्रथमचरणं द्वितीयार्धद्वितीयचरणं च गो. रा पु. न स्तः । ६ महामात्यपुरो गो. पाठः । ७ ऋश्येति गो. पाठः । ८ स्वाध्यायने रत इति गो. पाठः; स्वाध्यायतत्पर इति रा. पाठः । ९ नन्दितमिति भानि ।

गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः । प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः ॥ ५ ॥
श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् । पुरोहितो मन्त्रिणश्च तदा चक्रुश्च ते तथा ॥ ६ ॥
वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् । आश्रमस्याविदूरेऽस्मिन्यत्नं कुर्वन्ति दर्शने ॥ ७ ॥
ऋषेः पुत्रस्य धीरस्य नित्यमाश्रमवासिनः । पितुः स नित्यसंतुष्टो नातिचक्राम चाश्रमात् ॥ ८ ॥
न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना । स्त्री वा पुमान्वा यच्चान्यत्सत्त्वं नगरराष्ट्रजम् ॥ ९ ॥
ततः कदाचित्तं देशमाजगाम यदृच्छया । विभाण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥

चित्तप्रमाथिभिः जनहृदयापकर्षकैः इन्द्रियार्थैः इन्द्रियविषयभूतपदार्थैः क्षिप्रं शीघ्रं पुरमानाययिष्यामः इति अध्यवसीयतां निश्चीयताम् । चशब्द इत्यर्थे ॥ ४ ॥

**गो० टी०–इन्द्रियार्थैरिति** । नरचित्तप्रमाथिभिः नरचित्ताकर्षकैः । तमिति शेषः । क्षिप्रं शीघ्रमानाययिष्यामः । अध्यवसीयतां निश्चीयताम् अस्मदुक्तप्रकार इति शेषः ॥ ४ ॥

**५ ] ति० टी०–**तदाह–**गणिका इति** । सत्कृता विचित्राम्बराभरणान्नपानादिभिः ॥ ५ ॥

**रा० टी०–गणिका इति** । रूपवत्यः स्वलंकृताः गणिका वेश्यास्तत्र ऋषिसमीपे गच्छन्तु सत्कृता मुनिना आदृतास्ताः विविधोपायैः प्रलोभ्य इह आनेष्यन्ति ॥ ५ ॥

**गो० टी०–**के इन्द्रियार्थाः कथं तैरानयनं तत्राह–**गणिका इति** । गणिका वेश्याः प्रलोभ्य वञ्चयित्वा सत्कृताः अस्माभिः कृतबहुमानाः ऋष्यशृङ्गेण वा ॥ ५ ॥

**६ ] ति० टी०–श्रुत्वेति** । राजा पुरोहितं तथेति त्वयैव तथा कर्तव्यमिति प्रत्युवाच । अत्यल्पविषयत्वाद्राज्ञ एवं वादः । अथ पुरोहितस्य विप्रत्वाद्गणिकाभिः संवादोऽनुचित इति सोऽपि मन्त्रिणः प्रत्युवाच । मन्त्रिणश्च ते तथा चक्रुः साक्षाद्गणिकाः प्रैरयन् ॥ ६ ॥

**रा० टी०–श्रुत्वेति** । राजा रोमपादः श्रुत्वा स्वमन्त्रिपुरोहितोक्तिं ज्ञात्वैव तथा स्वोक्तप्रकारेण कुरुष्वेति पुरोहितं प्रत्युवाच तदा राजाज्ञापनकाले ते पुरोहितो मन्त्रिणश्च तथा राजाज्ञया स्वोक्तप्रकारेण चक्रुः ऋष्यानयनाय वनप्रवेशं प्रति गणिकाः आज्ञापयामासुरित्यर्थः । चशब्द एवार्थे ॥ ६ ॥

**गो० टी०–श्रुत्वेति** । राजा पुरोहितं तथेति प्रत्युवाच पुरोहितोऽपि मन्त्रिणस्तथेति प्रत्युवाच । ते च मन्त्रिणस्तथा चक्रुः । तेषामेवाधिकारात् वारमुख्याः प्रेषयामासुरित्यर्थः । वारेति अर्द्धमेकं वारशब्देन वारस्त्रिय उच्यन्ते नामैकदेशे नामग्रहणात् ॥ ६ ॥

**७ ] ति० टी०–वारेति** । तन्मन्त्रिवचः । अस्मिन्वने पुण्यजनपदप्रान्तवर्तिनि शृङ्गवेरपुरवने । आश्रमस्य विभाण्डकाश्रमस्याविदूरे निकटे स्थित्वा ऋषिपुत्रस्य धीरत्वादिगुणविशिष्टस्य दर्शने यत्नं कुर्वन्ति स्म चक्रुः ॥ ७ ॥

**रा० टी०–वारमुख्या इति** । वारमुख्याः गणिकाः तद्वनप्रवेशाज्ञापन श्रुत्वैव महद्वनं प्रविविशुः । अस्मिन्मुनिवनत्वेन प्रसिद्धवने आश्रमस्य विभाण्डकमुनिपर्णशालायाः अविदूरे निकटे स्थित्वेति शेषः । धीरस्य अत एव नित्यमाश्रमवासिनः ऋषिपुत्रस्य ऋष्यशृङ्गस्य दर्शने अवलोकने यत्नं प्रयत्नं कुर्वन्ति। एतेन मुनिसमीपगमनं नैतासां साध्यमिति ध्वनितम् तेन मुनेः परमतेजस्वित्वं सूचितम् । सार्धश्लोक एकान्वयी ॥ ७ ॥

**गो० टी०–आश्रमस्येति** । अस्मिन्वने आश्रमस्याविदूरे दर्शने ऋष्यशृङ्गदर्शने यत्नमवधानं कुर्वन्ति अकुर्वन् ऋषिपुत्रस्येत्यादिविशेषणत्रयं यत्नस्य कर्तव्यत्वे हेतुः ॥ ७ ॥

**८ ] ति० टी०–**पितुरुपलालनादिभिर्नित्यसंतुष्टः स आश्रमान्नातिचक्रामाश्रमाद्दूरं न निरगात् ॥ ८ ॥

**रा० टी०–पितुरिति** । पितुः पितृसेवया पितृकृतलालनादिना वा नित्यसंतुष्टः स ऋष्यशृङ्गः आश्रमान्नातिचक्राम ॥

**गो० टी०–**उक्तहेतुं विवृणोति–**पितुरित्यर्धेन** । पितुः सकाशान्नित्यसन्तुष्टो पितृशुश्रूषणैकरत इत्यर्थः ॥ ८ ॥

**९ ] ति० टी०–नेति** । रूपादिकं जन्मप्रभृति दृष्टपूर्वं न भवति यथा तथा व्यवह्रियत इति शेषः । नगरजं सत्वमश्वगजादि । राष्ट्रजं सूकरकुक्कुटादि ॥ ९ ॥

**रा० टी०–नेति** । तेन प्रसिद्धेन तपस्विना ऋष्यशृङ्गेण जन्मप्रभृति जन्मनः आरभ्य नगरराष्ट्रजं नगरराष्ट्रोद्भवं स्त्री पुमाँश्च अन्यत्तद्भिन्नं च नपुंसकमित्यर्थः सत्वं नगरराष्ट्रसंबन्धिप्राणिधर्मश्च वृत्तमिति यावत् । एतत्सर्वं दृष्टपूर्वं न अतो न ज्ञायत इति शेषः । दृष्टपूर्वं नगरराष्ट्रजमेतद्द्वयमावृत्त्या लिङ्गविपरिणामेन च सर्वत्रान्वेति । "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति नपुंसकशेषे समुदायान्वयेनावयवान्वये पर्यवसानं वा बोध्यम् । वाशब्दौ चार्थौ ॥ ९ ॥

**गो० टी०–**हेत्वन्तरमाह–**न तेनेति** । जन्मप्रभृति जन्मारभ्य नगरजमश्वादि राष्ट्रजं कुक्कुटादि ॥ ९ ॥

**१०-११ ] ति० टी०–तत इति** । तं देशं वारस्त्रीसंचारदेशम् । यदृच्छया दैववशात् ॥ १० ॥ ११ ॥

**रा० टी०–तत इति** । ततः स्वाश्रमात्कदाचित्कस्मिँश्चित्समये तं गणिकाधिष्ठितं देशं वनप्रदेशं यदृच्छया परमात्मेच्छया विभाण्डकसुतः ऋष्यशृङ्ग आजगाम तत्र तस्मिन्वनप्रदेशे ता वञ्चनार्थमागताः वराङ्गनाः गणिकाः अपश्यच्च ॥ १० ॥

१ रानयिष्यन्तीति गो. पाठः । २तथेति रा.गो.पाठः।३तदेति गो.रा.पाठः।४ऋषिपुत्रस्येति गो.रा.पाठः ।५ सर्वमिति गो. पाठः ।६ विभण्डक इति गो.पाठः।

ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरम् । ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥
कस्त्वं किं वर्तसे ब्रह्मञ्ज्ञातुमिच्छामहे वयम् । एकस्त्वं विजने दूरे वने चरसि शंस नः ॥ १२ ॥
अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः । हार्दात्तस्य मतिर्जाता आख्यातुं पितरं स्वकम् ॥ १३ ॥
पिता विभाण्डकोऽस्माकं तस्याहं सुत औरसः । ऋष्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥ १४ ॥

गो० टी०—तत इति । यदृच्छया दैववशात् ॥ १० ॥

रा० टी०—ता इति । चित्रवेषाः विचित्रवेषधराः मधुरस्वनैः गायन्त्यः ताः आनयनार्थमागताः सर्वाः प्रमदाः ऋषिपुत्रमुपागम्य संप्राप्य वचनमब्रुवन् ॥ ११ ॥

गो० टी०—ता इति । चित्रवेषाःनानालङ्काराः ॥ ११ ॥

१२ ] ति० टी०—क इति । कस्त्वं किंजातिः कस्य पुत्र इति च किंनामा च किं वर्तसे किंकर्मासि । अपि चैकः संस्त्वं विजने दूरे जनवासरूपग्रामादिभ्यो दूरे वने किमर्थं चरसीति प्रश्नत्रयम् ॥ १२ ॥

रा० टी०—वचनमेवाह । क इति । हे ब्रह्मन् त्वं कः कस्य पुत्रः किन्नामा चासीत्यर्थः । किं वर्तसे किं कर्म वर्तसे प्रवर्तयसि करोषीत्यर्थः अन्तर्भावितणिजर्थः । विजने जनान्तररहिते अत एव घोरे भयङ्करे वने एकस्त्वं किं किमर्थं चरसि इति वयं ज्ञातुमिच्छामहे इच्छामः अतस्त्वं नः अस्मभ्यं शंस । किमित्यावृत्त्या चरसीत्यत्राप्यन्वेति । विजने दूरे इति भट्टसंमतः पाठः तत्र ग्रामादिभ्यो दूरे इत्यर्थः ॥ १२ ॥

गो० टी०—कस्त्वमिति । कस्त्वं किंजातिः कस्य पुत्र इत्यर्थः । किं किमर्थं वर्तसे । इच्छामहे इत्यात्मनेपदमार्षम् । भवान् किंजातिः किंनामधेयः कस्य पुत्रः त्वं घोरेऽस्मिन्वने किमर्थं वर्तसे । किमर्थमेकश्चरसीति योजना ॥ १२ ॥

१३ ] ति० टी०—अदृष्टेति । स्त्रिय इत्यस्य दृष्टा इति शेषः । अनेन हार्दमूलभूता 'चलस्य चेतसो या स्यादुदासीनेषु वस्तुषु । अवारणीया वृत्तिः सा दृष्टिशब्देन कथ्यते ॥ ' इत्युक्तलक्षणा दृष्टिरुक्ता । ततः सर्वांशेऽनुपेक्षात्मकज्ञानरूपः परिचयोऽपि मध्ये ज्ञेयः । अतस्ताभ्यः हार्दाद्दर्शनजस्नेहात् ' दोषानालोकिनी प्रीत्याख्यचित्तवृत्तिर्हार्दम् ' इत्युक्तेः । स्वकं स्वीयम् । अदृष्टरूपाः प्रागदृष्टैवंरूपाः । काम्यरूपाः कमनीयरूपाः । एतद्द्वयं च स्नेहकारणम् ॥ १३ ॥

रा० टी०—अदृष्टेति । तेन ऋष्यशृङ्गेण अदृष्टरूपाः न दृष्टानि रूपाणि यासां ताः काम्यरूपाः सर्वेच्छाविषयीभूतरूपविशिष्टाः परमसुन्दरीरित्यर्थः । वने विद्यमानाः स्त्रियः हार्दाद्वलोकनमात्रेण जातस्नेहात्स्वकं पितरमुपलक्षणेन तत्सृष्टं सर्वमित्यर्थः । आख्यातुं मतिर्जाता । ख्याधातोर्द्विकर्मकत्वात् कर्मद्वयम् ॥ १३ ॥

गो० टी०—अदृष्टेति । यस्मात्कारणात् काम्यरूपाः काम्यमानरूपाः ता स्त्रियो वने तेनादृष्टरूपाः । तस्माद्धार्दात् दर्शनजस्नेहात् स्वकं पितरं पित्रादिकमाख्यातुं मतिर्जाता ॥ १३ ॥

१४ ] ति० टी०—पितेति । नामेत्यन्तमाद्यप्रश्नोत्तरम् । द्वितीयप्रश्नोत्तरमाह—कर्म च मदीयं भुवि प्रसिद्धम् । तपोरूपमित्यर्थः ॥ १४ ॥

रा० टी०—तदाख्यानमेवाह—पितेति । अस्माकं पिता विभाण्डकः विभाण्डकनामा " अस्मदो द्वयोश्च " इत्यनुशासनाद्बहुत्वम् । स्वस्मिन्नौपचारिकपुत्रत्वं वारयन्नाह—ऋष्यशृङ्ग इति । ऋष्यशृङ्गनामकः तस्य विभाण्डकस्याहमौरसः मुख्यः सुतः मे कर्म मत्कर्तृकोच्चारणक्रियानिष्पाद्यं भुवि वैकुण्ठादिभूमौ ख्यातं प्रसिद्धं नाम रामनामेत्यर्थः । ऋष्यशृङ्गनामार्थस्तु ऋष्यस्य मृगजातिविशेषस्य शृङ्गमिव शृङ्गं यस्येत्यर्थः अत्र पौराणिकी प्रसिद्धिः कस्मिंश्चित्सरसि विहरन्तीमुर्वशीमवलोक्य स्खलितं विभाण्डकस्य रेतः जले मृग्या पीतं तज्जातत्वाच्छृङ्गित्वमेतस्येति एतेन कर्मनाम्नोः ख्यातपदं योजयित्वा व्याख्यानं निरस्तम् । ख्यातत्वस्य पितर्यपि तुल्यत्वेन तन्नामकथनवैयर्थ्यापत्तेः । ननु ' संस्कृतायां तु भार्यायां स्वयमुत्पादयेत्तु यम् । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम् ' इत्याद्युक्त्याऽस्मिन्नौरसत्वव्यवहारोऽनुपपन्न इति वाच्यम् । स्वनिरूपितक्षेत्रजादिभिन्नत्वे सति स्वजन्यत्वमौरसत्वमिति स्वीकारेणादोषात् स्मृतिस्त्वेकदेशानुवादिका । दृष्टश्चैकदेशानुवादो 'वाक्ये तु सा विवक्षामपेक्षते ' इत्यादाविति दिक् । केचित्तु पुराणप्रसिद्धमृष्यन्तरमिति वर्णयन्ति।अस्य मृगीसुतत्वेन व्यवहारस्तु मृगनयनीत्वादिना तन्मातुर्मृगीत्वेन व्यवहारात्।अस्मिन्पक्षे ऋष्यशृङ्गार्थस्तु ऋष्याणां मृगाणां शृङ्गाणि विहारशिखराणि यस्य पर्वतशिखरविचरणशील इत्यर्थः। अत्रौरस इत्युक्तिरेव मानम्। अत्रारश्चिबीजं तु हनुमदादीनामौरसत्वव्यवहाराभावापत्तिरिति । कर्मणः प्रसिद्धत्वमात्रोक्तौ ऋषेः स्वौद्धत्यवर्णनं प्रसज्येत तेन तस्य गर्वित्वं प्रसज्येत इति दिक् । स्मृतिनिषिद्धस्य आत्मनामादिग्रहणस्य व्याख्यानयोरदोषकत्वं स्मृतिसिद्धान्तादौ निरुक्तम् । वक्ष्यते चैतत् रघुनाथस्य स्वनामोच्चारणादिप्रघट्टके ॥ १४ ॥

गो० टी०—पितेति । अस्माकमिति मृगाद्यपेक्षया बहुवचनम् । किं तद्वद्द्रौणः पुत्रोसि नेत्याह—औरस इति । पुरा किल महाभूततटाकाख्ये सरसि उपस्पृशतो विभण्डकस्य उर्वशीं दृष्ट्वा रेतोऽस्खलत् । तन्मृगी जलेन सह पीत्वा गर्भिण्यासीत् । तस्यां जातः ऋष्यमृगतुल्यशृङ्गत्वादृष्यशृङ्गाख्योऽभूदिति पौराणिकी कथा । मे ऋष्यशृङ्गेति नामाख्यातम् । मे तपोरूपं कर्म च भुवि वनभुवि ख्यातम् ॥ १४ ॥

१ घोरे इति गो. रा. पाठः । २ ज्ञा(ख्या)तुमिति गो. पाठः । ३ विभंडक इति गो. पाठः । ४ ऋश्येति गो. पाठः ।

इहाश्रमपदोऽस्माकं समीपे शुभदर्शनाः । करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्वकम्॥१५॥
ऋषिपुत्रवचःश्रुत्वा सर्वासां मतिरास वै । तदाश्रमपदं द्रष्टुं जग्मुः सर्वास्ततोऽङ्गनाः ॥ १६ ॥
गतानां तु ततः पूजामृषिपुत्रश्चकार ह । इदमर्घ्यमिदं पाद्यमिदं मूलं फलं च नः ॥ १७ ॥
प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः । ऋषेर्भीताश्च शीघ्रं तु गमनाय मतिं दधुः ॥ १८ ॥
अस्माकमपि मुख्यानि फलानीमानि हे द्विज । गृहाण विप्र भद्रं ते भक्षयस्व च मा चिरम्॥ १९ ॥
ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः । मोदकान्प्रददुस्तस्मै भक्ष्यांश्च विविधाञ्शुभान्॥२० ॥
तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते । अनास्वादितपूर्वाणि वने नित्यनिवासिनाम् ॥२१॥

---

१५ ] ति० टी०—तृतीयप्रश्नोत्तरमाह—इहेति । इह वने आश्रमपदः । आर्षं पुंस्त्वम् । वर्तत इति शेषः । सर्वेषामिति निर्देशो वस्तुमात्राभिप्रायेण।अनेन स्त्रीस्वरूपापरिज्ञानं सूचितम्॥

रा टी०—इहेति । हे शुभदर्शनाः इह अस्मिन्वने समीपे भवन्निकटे एव अश्रमपदः श्रमनिवर्तकस्थानमस्ति अतः अत्रास्मिन्स्वाश्रमे सर्वेषां वः युष्माकं पूजां विधिपूर्वकं करिष्ये एतेन मदाश्रमे भवद्भिर्गन्तव्यमिति बोधितम् । तेन तस्यातिथिपूजने श्रद्धातिशयः सूचितः । अश्रमपद इति पुंस्त्वमार्षम् । सर्वेषामिति पुंलिङ्गत्वेन निर्देशः स्त्रीपरिज्ञानराहित्यमूलकः । वैशब्द एवार्थे ॥ १५ ॥

गो० टी०—इहेति । इह वनसमीपे प्रदेशेऽस्माकमाश्रमपदः पुंस्त्वमार्षम् । अत्र वः पूजां करिष्ये आगन्तव्यमिति भावः । सर्वेषामिति पुंलिङ्गनिर्देशः । स्त्रीस्वरूपाऽपरिज्ञानकृतः ॥ १५ ॥

१६ ] ति० टी०—ऋषीति ।आसेत्यार्षम् । बभूवेत्यर्थः । तद्द्रष्टुं मतिर्बभूवेत्यन्वयः ॥ १६ ॥

रा० टी०—ऋषीति। ऋषिपुत्रवचः श्रुत्वैव आश्रमपदं द्रष्टुं सर्वासां मतिर्निश्चयः आस । अतस्तेन ऋष्यश्रृङ्गेण सह सर्वा गणिकास्तदा तस्मिन्काले आश्रमपदं जग्मुः । वैशब्द एवार्थे चो हेतौ । अस्तेर्भूभावाभाव आर्षः दीप्त्यर्थकासो रूपं वा॥ १६॥

गो० टी०—ऋषीति । द्रष्टुं मतिरास अभूत् अस्तेर्भूभावाभाव आर्षः । तेन सह तदाश्रमपदं जग्मुश्च ॥ १६ ॥

१७ ] ति० टी०—नोऽस्माकम् । भक्ष्यमिति शेषः ॥ १७ ॥

रा० टी०—गतानामिति । ततोऽनन्तरमेव ऋषिपुत्रः गतानां स्वाश्रमे प्राप्तानां स्त्रीजनानां पूजां चकार । ह इति प्रसिद्धौ।पूजनस्वरूपमाह—इदमर्घ्यादिकं नःअस्माकं दत्तं प्रतिगृह्णन्तु इति शेषः । तुशब्द एवार्थे ॥ १७ ॥

गो० टी०—आगतानामिति । आगतानामाश्रमपदम् । आगतानामन्ते इतिकरणं द्रष्टव्यम् ॥ १७ ॥

१८ ] ति० टी०—प्रतीति । समुत्सुका ऋष्यश्रृङ्गस्य तदाश्रमतो नयने । ऋषेर्विभाण्डकात् ॥ १८ ॥

रा० टी०—प्रतीति । समुत्सुकाः परमहर्षविशिष्टाः सर्वा गणिकास्तां मुनिदत्तां पूजां प्रतिगृह्यैव तुना शनैः किञ्चित्संभाष्य ऋषेर्विभाण्डकाद्भीता एव सत्यः गमनायैव शीघ्रेण शीघ्रं मतिं दधुः । द्वितीयस्तुशब्द एवार्थे एतेन तस्मिन्काले ऋषिराश्रमादन्यत्र गत इति ध्वनितम् ॥ १८ ॥

गो० टी०—प्रतिगृह्येति । समुत्सुकाः तत्संलापसाभिलाषाः ताः सर्वास्तां पूजां ऋषिपुत्रदत्तां पूजाम् । प्रतिगृह्य ऋषेर्विभण्डकाद्भीताः सत्यः शीघ्रं गमनाय मतिं दधुः ॥ १८ ॥

१९ ] ति० टी०—मुख्यानि प्रशस्तास्वादवन्ति । प्रतारणार्थं मोदका एवमुच्यन्ते । प्रतिगृहाण । ते भद्रं कल्याणम् । भक्षयस्व च फलानीति शेषः । मा चिरम् ऋषेरागमनात्पूर्वमेव भक्षणीयमित्याशयः ॥ १९ ॥

रा० टी०—अस्माकमपीति । द्विज हे ब्राह्मण इमानि मुख्यानि श्रेष्ठानि अस्माकमपि फलानि प्रतिगृहाण भक्षयस्व च चिरं विलम्बं मा नैव कुरु ते भद्रं भक्षणेन कल्याणं स्यादित्यर्थः वैशब्द एवार्थे छन्दसि परे इत्यनुशासनात्प्रतिशब्दः परत्र प्रयुक्तः॥ १९ ॥

गो० टी०—अस्माकमिति । प्रतिगृहाणेत्यन्वयः । "छन्दसि परेपि" इति प्रतीत्यस्योपसर्गस्य धातोरुपरिष्टात्प्रयोगः । छन्दोवत्पुराणानि भवन्तीतिन्यायात् । मा चिरम् विलम्बं मा कुरु ॥ १९ ॥

२० ] ति० टी०—तत इति । समालिङ्ग्य स्पर्शेनापि वशीकर्तुमालिङ्गनम् । हर्षसमन्विताः । बालब्रह्मचारितो गाढतरालिङ्गनप्राप्त्या स्वकार्यानुकूलस्पर्शप्राप्त्या च ॥ २० ॥

रा० टी०—तत इति । ततः स्वोक्त्यनन्तरं हर्षसमन्विता सर्वास्ता गणिकाः तं मुनिं समालिङ्ग्य तस्मै मुनये विविधाननेकप्रकाराञ्छुभान्रमणीयान् भक्ष्यान् भक्षयितुं योग्यान्मोदकान्प्रददुः चो हेतौ एतेन कार्यसिद्धौ न विलम्ब इति हर्षे हेतुर्ध्वनितः२०

गो० टी०—तत इति । अत्रादौ इत्युक्त्वेत्युपस्कार्यं मोहिजनवत् वशीकारार्थमालिङ्ग्य ॥ २० ॥

२१ ] ति० टी०—तानीति । ताभिः प्रीत्या दत्तानि । तेजस्वी वारवनितास्पर्शेऽप्यूर्ध्वरेतस्त्वाद्ब्रह्मत्वाबाहीनतेजा मन्यते । यो मन्यते स इव व्यवहरतीत्यर्थः । पूर्वमनास्वादितान्यनास्वादितपूर्वाणि । नित्यनिवासिनामिति कर्तरि शेषे षष्ठी॥

---

१ सर्वाश्च तेन ताः इति गो. सर्वाश्च तेन वै इति रा. पाठः । २ आगतानामिति गो. पाठः । ३ इदं फलमिति गो. पाठः ।४ भीतास्त्विति गो. रा. पाठः । ५ शीघ्रं ता इति गो. शीघ्रेण गमनायेति रा. पाठः । ६ प्रति भद्रमिति गो. रा. पाठः ।

आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्य च। गच्छन्ति स्मापदेशात्ता भीतास्तस्य पितुः स्त्रियः२२
गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः। अस्वस्थहृदयश्चासीद्दुःखाच्च परिवर्तते ॥ २३ ॥
ततोऽपरेद्युस्तं देशमाजगाम स वीर्यवान्। विभाण्डकसुतः श्रीमान्मनसाचिन्तयन्मुहुः ॥ २४ ॥
मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलंकृताः। दृष्ट्वैव च ततो विप्रमायान्तं हृष्टमानसाः ॥ २५ ॥
उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः। एह्याश्रमपदं सौम्य अस्माकमिति चाब्रुवन्॥ २६ ॥
चित्राण्यत्र बहूनि स्युर्मूलानि च फलानि च। तत्राप्येष विशेषेण विधिर्हि भविता ध्रुवम्॥ २७ ॥

रा० टी०–तानीति। तेजस्वी मुनिः वने नित्यनिवासिनामनास्वादितपूर्वाणि पूर्वभक्षणकर्मत्वरहितानि तानि मोदकजातानि आस्वाद्य भक्षयित्वा तानि फलान्येव इति मन्यते स्म। चशब्द एवार्थे ॥ २१ ॥

गो० टी०– तानीति। वने नित्यनिवासिनामनास्वादितपूर्वाणि तैः पूर्वमनास्वादितानि फलानीमानीति मन्यते स्म अपूर्वरसत्वात् "पूरणगुण०" इतिसमासप्रतिषेधादेव ज्ञापकात्तृतीयार्थे षष्ठी ॥ २१ ॥

२२ ] ति० टी०–व्रतचर्यां मिथ्यैव किंचिद्व्रतमनुष्ठेयमस्माकमिति निवेद्य ज्ञापयित्वा। तस्मादपदेशाद्व्याजात्। तस्य पितुर्विभाण्डकाद्भीताः स्त्रियो गच्छन्ति स्म गताः ॥२२॥

रा० टी०–आपृच्छ्येति। अपदानामाश्रयरहितानामीशात्स्वामिनः रक्षकादित्यर्थः तस्य मुनेः पितुः भीता एव स्त्रियः व्रतचर्यां गमनहेतुकव्याजरूपव्रतकर्तव्यतां निवेद्य उक्त्वा आपृच्छ्य आज्ञां गृहीत्वा च गच्छन्ति स्वस्थानं यान्ति स्म। तुशब्द एवार्थे ॥ २२ ॥

गो० टी०–आपृच्छयेति। व्रतचर्यां निवेद्य अस्माभिः किंचिद्व्रतमनुष्ठेयमस्तीति व्रतानुष्ठानं निवेद्य तस्मादपदेशाद्व्याजात् तस्य पितुर्भीताः सत्यो गच्छन्ति स्म ॥ २२ ॥

२३ ] ति० टी०–अस्वस्थहृदयोऽप्रसन्नचित्त आसीत्। दुःखात्तादृशचाक्षुषादिविषयसुखविश्लेषजात्। परिवर्तनमेकदेशानवस्थितिः ॥ २३ ॥

रा० टी०–गतास्विति। सर्वासु तासु गणिकासु गतासु काश्यपस्य कश्यपपुत्रविभाण्डकस्य आत्मजो द्विजो ब्राह्मणः ऋष्यश्रृङ्ग अस्वस्थहृदयः चलितचित्तः एवासीत् अत एव दुःखं यथा स्यात्तथा परिवर्तते स्म नैकत्रातिष्ठदित्यर्थः चशब्द एवार्थे दुःखाच्च परिवर्तते इतिभट्टसम्मतः पाठः। एतेन ऋषेस्तन्मनस्कत्वं व्यक्तम् ॥ २३ ॥

गो० टी०–गतास्विति। काश्यपस्य कश्यपपुत्रस्य विभण्डकस्य अस्वस्थहृदयः कर्षितचित्तः दुःखं यथा भवति तथा परिवर्तते स्म संचरति स्म ॥ २३ ॥

२४ ] ति० टी०–तत इति। उक्ताद्धेतोः। मनसाचिन्तयन् तासां दर्शनस्पर्शनगमनादिप्रकारान्स्मरन्नित्यर्थः। तत्र गमनमेतद्वारकमवश्यं भावीति चिन्तयन्नित्यर्थश्च ॥ २४ ॥

रा० टी०–तत इति। स्वलंकृताः शोभनालङ्कारालंकृता अत एव मनोज्ञाः मनोहराः ताः वारमुख्याः गणिकाः यत्र यस्मिन्देशे दृष्टाः ऋषिपुत्रेणावलोकिताः तं देशं वीर्यवांस्तपोबलविशिष्टः स ऋष्यश्रृङ्गः ततः स्वाश्रमात्परेद्युः आजगाम। स वीर्यवानित्येतस्मादुत्तरम् ' विभाण्डकसुतः श्रीमान्मनसा चिन्तयन्मुहुः ' इति श्लोकार्द्धं भट्टसंमतम् ॥ २४ ॥

गो० टी०–तत इति। ततः अस्वस्थचित्तत्वाद्धेतोः॥२४॥

२५ ] ति० टी०–तं कं तत्राह–मनोज्ञा इति ॥ २५ ॥

रा० टी०–दृष्ट्वैवेति। तदा ऋष्यागमनसमये एव आयान्तं तं विप्रम् ऋष्यश्रृङ्गं दृष्ट्वैव सर्वास्ताः गणिकाः ततः स्वासनादुपसृत्य प्रत्युद्गम्य इदं वचः ऊचुः ॥ २५ ॥

गो० टी०–दृष्ट्वेति। स्पष्टम् ॥ २५ ॥

२६ ] ति० टी०–उपसृत्य प्रत्युद्गम्य ॥ २६ ॥

२७ ] ति टी०–चित्राणीति। यत्रैव चित्राणि मूलानि फलानि च भवेयुः। संभावनायां लिङ्। अतस्तत्र गमनं व्यर्थमिति चेत्तत्राप्येष विधिः। विचित्रफलमूलभक्षणविधिर्विशेषेणातोऽप्याधिक्येन भविष्यति ॥ २७ ॥

रा० टी०–तद्वचनमेवाह–एहीति। हे सौम्य अस्माकमपि आश्रमपदमा समन्ताच्छ्रमनिवर्तकं स्थानमेहि आगच्छ तत्र तस्मिन्नस्मदाश्रमपदेपि श्रीमान्सर्वसम्पत्तिसमृद्धः एषः फलादिनिचयविशिष्टः विधिः सत्कारविधानं विशेषेण भविष्यतीति अब्रुवन् चशब्द इत्यर्थे अब्रुवन्नित्यस्यानन्तरं 'चित्राण्यत्र बहूनि स्युर्मूलानि च फलानि च ' इति श्लोकार्द्धं भट्टसंमतम् ॥ २६ ॥

गो० टी०–एहीति। अस्माकमाश्रमपदमेहीति पूर्वेणान्वयः। तत्रापि श्रीमान् समृद्धिमान् एष विधिः सत्कारः स्वदेशत्वाद्विशेषेण भविष्यति इति चाब्रुवन्निति योजना ॥ २६ ॥

२८ ] ति० टी०–श्रुत्वा त्विति। गङ्गायां पूर्वस्थापितां नावमारोप्य प्रवाहेणैवाङ्गदेशं निन्युरिति महाभारते ॥ २८ ॥

रा० टी०–श्रुत्वेति सर्वासां हृदयङ्गमं मनोहरं वचनं श्रुत्वैव गमनाय मतिं निश्चयं चक्रे तदा तद्गमननिश्चयकाले एव तं ऋषिं स्त्रियः निन्युः तुचशब्दौ एवार्थौ अत्र भारतानुरोधात्यनं नावमारोप्य गङ्गाप्रवाहेण बोध्यम् ॥ २७ ॥

गो टी०–श्रुत्वेति। हृदयंगमं मनोज्ञं स्वप्रकरणे " गमेः

१ आपृच्छ्य तु इति गो. रा. पाठः। २ दुःखं स्म इति गो. रा. पाठः। ३ इदमर्धं गो. रा. पुस्तकयोर्न दृश्यते। ४ ह्यस्माकमितीति गो. पाठः अस्माकमिति रा. पाठः। ५ इदमर्धं गो. रा. पुस्तकयोर्न दृश्यते। ६ तत्राप्येष विधिः श्रीमान्विशेषेण भविष्यतीति गो. रा. पाठः।

श्रुत्वा तु वचनं तासां सर्वासां हृदयंगमम् । गमनाय मतिं चक्रे तं च निन्युस्तथा स्त्रियः ॥ २८ ॥
तत्र चानीयमाने तु विप्रे तस्मिन्महात्मनि । ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥ २९ ॥
वर्षेणैवागतं विप्रं तापसं स नराधिपः । प्रत्युद्गम्य मुनिं प्रह्वः शिरसा च महीं गतः ॥ ३० ॥
अर्घ्यं च प्रददौ तस्मै न्यायतः सुसमाहितः । वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशेत् ॥ ३१ ॥
अन्तःपुरं प्रवेश्यास्मै कन्यां दत्त्वा यथाविधि । शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३२ ॥
एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः । ऋष्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे दशमः सर्गः ॥ १० ॥

---

सुप्युपसंख्यानम् ” इति खश् । निन्युः नावमारोप्य गङ्गाप्रवाहेणेति शेषः । तथैव भारते प्रतिपादनात् ॥ २७ ॥

२९ ] ति० टी०–तत्रेति । अङ्गदेशे ॥ २९ ॥

रा० टी०–तत्रेति । तदा आनयनकाले तत्र रोमपादस्वामिकाङ्गदेशे महात्मनि तस्मिन्विप्रे आनीयमाने एव जगत्प्रह्लादयन्नानन्दयन्नेव देवः सहसा त्वरितं ववर्ष तुचशब्दौ एवार्थौ ॥ २८ ॥

गो० टी०–तत्रेति । तत्र अङ्गदेश इत्यर्थः ॥ २८ ॥

३० ] ति० टी०–वर्षेणेति । वर्षेण सहैव विषयं स्वदेशमागतं विप्रं प्रत्युद्गम्य प्रह्वोऽञ्जल्यादिपूर्वं नम्रः । जात इति शेषः । शिरसा महीं गतश्च । साष्टाङ्गनमस्कारं च कृतवानित्यर्थः ॥ ३० ॥

रा० टी०–वर्षेणेति । स प्रसिद्धो नराधिपो रोमपादः वर्षेण वृष्ट्या सहैव विषयं स्वदेशमागतं मुनिं विप्रं प्रत्युद्गम्य प्रत्युद्गमनं कृत्वा प्रह्वः नतिं कुर्वन्नेव शिरसा महींगतः प्राप्तः साष्टाङ्गं प्रणामं कृतवानित्यर्थः चशब्दएवार्थे ॥ २९ ॥

गो० टी०–हर्षेणेति । स्वं विषयं स्वदेशं प्रह्वः विनीतः २९

३१ ] ति० टी०–अर्घ्यं चेति । अर्घ्यादिपूजिताद्विप्रेन्द्रादृष्यशृङ्गात्प्रसादं मयि सापराधेऽपि भवानित्यप्रसन्नोऽस्त्वित्येवं सौमुख्यं वव्रे । किमर्थमित्यत आह–मेति । अतिजुगुप्सितं गणिकाभिः स्वानयनं व्यवहारकाले ज्ञात्वा तं विप्रमृष्यशृङ्गं तत्पितरं विभाण्डकं च मन्युः क्रोध आविशेत् स मा प्रविशत्वित्यर्थमिति भावः ॥ ३१ ॥

रा० टी०–अर्घ्यमिति । सुसमाहितः एकाग्रचित्तो राजा अर्घ्यं पूजार्थमुदकं तस्मै ऋष्यश्टङ्गाय न्यायतो यथाविधि प्रददौ विप्रं ऋष्यश्टङ्गं तत्पितरं च मन्युः प्रलोभ्यानयनजनितः पुत्रवियोगजनितश्च कोपः मा आविशेत् इति हेतोः विप्रेन्द्रात् प्रसादं स्वापराधक्षमापनपूर्वकतत्प्रसन्नतां वव्रे ययाचे चशब्दो हेत्वर्थे विप्रमन्युशब्दौ विनिगमनाविरहेणार्थद्वयबोधकौ ॥३०॥

गो० टी०–अर्घ्यं चेति । अर्घः पूजा तदर्थमुदकमर्घ्यं “ पादार्घाभ्यां च ” इति यत्प्रत्ययः न्यायतः शास्त्रक्रमेण विप्रेन्द्रादृष्यशृङ्गात्प्रसादं गणिकाभिः प्रलोभ्यानयनकृतकोपनिवृत्तिं वव्रे । कथं वव्रे विप्रं त्वां मन्युः क्रोधो मा विशेदिति मा विशत्वित्यर्थः । लकारव्यत्ययः । यद्वा विप्रं विभण्डकं मन्युः पुत्रविश्लेषणकृतः कोपः मा विशेदिति एवं प्रसादनादेव विभण्डको न चुकोप पुत्रप्रसादवरणादेव पिता त्रिलोकस्तुष्यतीति पूर्वमेव मंत्रिभिर्निर्णीतं चेति बोध्यम् । कथमन्यथा उपायं चिन्तयन्तः प्राज्ञाः अपायमपि न चिन्तयेयुः ॥ ३० ॥

३२ ] ति० टी०–अन्तरिति । प्रसन्नत्वादेव तदनुज्ञयान्तःपुरं प्रवेश्य हर्षं वृष्टिजमृषिसंबन्धजं च ॥ ३२ ॥

रा० टी०–अन्त इति । स राजा अन्तःपुरं प्रविश्य ऋषिणा सह अन्तःपुरं गत्वेत्यर्थः । अस्मै ऋष्यश्टङ्गाय शान्तां तन्नामिकां कन्यां शान्तेन मनसा दत्त्वा आहर्षं वृष्टिजनितऋषिसंबन्धजनितत्वेन प्रवृद्धप्रमोदमवाप ॥ ३१ ॥

गो० टी०–अन्तःपुरमिति । प्रविश्य तेन सहेति सिद्धम् । शान्तेन निर्दुःखेन मनसोपलक्षितः प्रसादकार्योपदर्शनात् प्रसन्नत्वं सिद्धम् ॥ ३१ ॥

३३ ] ति० टी०–एवमिति । ननु गणिकास्पर्शतत्स्पृष्टफलभक्षणादिभिरस्य तपोहानौ कथं तद्गमनमात्रेण वृष्टिः न च स्त्रीत्वाद्यज्ञानान्न तपोहानिः ईषद्दोषस्तु तपसैव दग्ध इति वाच्यम् । निर्मलब्रह्मचर्येण विदितनिखिलवेदशास्त्रतत्त्वस्य शास्त्रतः स्त्रीस्वरूपज्ञानस्य ब्रह्मचर्ये तत्परिहारज्ञानस्य च दुर्निवारत्वात्, वने वनचरस्त्रीणामनुभवाच्च । सर्वथाज्ञत्वेऽनुग्रहशक्त्यभावापत्तेश्चेति चेन्न । निर्मलब्रह्मचर्येण ब्रह्मज्ञतया सर्वत्र ब्रह्मदृष्ट्या च दोषलेशस्याप्यस्पर्शात् । प्रारब्धवशात्क्षत्रियस्त्रीसंबन्धं भाविनं तद्द्वारकं जानन्नेव गणिकाभिस्तथा व्यवजह्रे तासां भयानुत्पत्तये अत एव ‘ न तेन ’ इति नवमश्लोके तथा व्यवह्रियत इति शेषः पूरितोऽस्माभिः प्राक् । एतत्सर्वं जानन्पितापि तमनुयाय न शप्तवान् । राजानमित्येवात्र तत्त्वम् । अनेन तत्त्वज्ञस्य सर्वदोषासंबन्धो ध्वनितः । ब्रह्मज्ञे दानसंकल्पमात्रेण फलसिद्धिरित्यादि च सूचितम् । यत्तु क्वचिद्विभाण्डकस्य पुत्रान्वेषणं क्रोधेन ततो मार्गे ऋष्यशृङ्गाय शान्तादानादिवृत्तान्तलाभेन पुनराश्रमं परावृत्यागमनवर्णनं तदपि तत्त्वज्ञत्व एवोपपद्यते । अन्यथा स्वपु-

---

१ तदेति गो. रा. पाठः । २ हर्षेणेति गो. पाठः । ३ विषयमिति गो. रा. पाठः । ४ विशदिति गो. पाठः । ५ प्रविश्येति गो. रा. पाठः । ६ ऋश्येति गो. पाठः ।

## एकादशः सर्गः ।

सनत्कुमारोक्तकथाया एव वर्णनम् ।

भूय एव हि राजेन्द्र शृणु मे वचनं हितम् । यथा स देवप्रवरः कथयामास बुद्धिमान् ॥ १ ॥
इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः । नाम्ना दशरथो राजा श्रीमान्सत्यप्रतिश्रवः॥ २ ॥
अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति । कन्या चास्य महाभागा शान्ता नाम भविष्यति॥ ३ ॥
पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः । तं स राजा दशरथो गमिष्यति महायशाः ॥ ४ ॥
अनपत्योऽस्मि धर्मात्मञ्शान्ताभर्ता मम क्रतुम् । आहरेत त्वयाज्ञप्तः संतानार्थं कुलस्य च ॥ ५ ॥

ऋस्य गणिकाद्वारकब्रह्मचर्यविलोपकृतो रोषोऽस्य तस्य केनाप्युपायेन वारयितुमशक्य इत्यलम् ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे दशमः सर्गः ॥ १० ॥

रा० टी०–एवमिति । एवमुक्तप्रकारेण सर्वकामैः सर्वैरिच्छाविषयीभूतपदार्थैस्तु पूजितः अत्यन्तं सत्कृतः महातेजाः परमतेजस्वी ऋष्यशृङ्गः शान्तया भार्यया सह तत्र रोमपादपुरे संन्यवसत् । सुखपूर्वकं निवासं चकारेत्यर्थः । अत्र महातेजा इत्युक्त्या ऋषेः गणिकास्पर्शजन्यदोषासंसर्गत्वं ध्वनितम् । तेन रामोपासनायाः प्रभावातिशयः सूचितः । अत्रार्थे ' यथा विधिनिषेधौ हि मुक्तं नैवोपसर्पतः। तथा न स्पर्शतो रामोपासकं विधिपूर्वकम् ' इत्यादिवचनं सानुकूलम् ॥ ३२ ॥

इतिश्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०–एवमिति । एवं सर्वकामैः सुपूजितः तत्र रोमपादान्तःपुरे ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने दशमः सर्गः॥ १० ॥

---

१ ] ति० टी०–एवं सनत्कुमारोक्तकथां तत्प्रसङ्गे ऋष्यशृङ्गानयनकथां च सांप्रतिकीमुक्त्वा तदानयनार्थं महाराजेनैव गन्तव्यमिति बोधयितुमनेकयुगवृद्धः सुमन्त्रः पुनरपि तदर्थगर्भां सनत्कुमारोक्तां कथामाह–भूय एवेति। देवप्रवरः सनत्कुमारः। यथेति यदित्यर्थे ॥ १ ॥

रा० टी०–ऋष्यशृङ्गो भवद्भिरवश्यमानेतव्य इति बोधयितु सुमन्त्रः स्वपूर्वश्रुतमाह–भूय इत्यादिभिः । हे राजेन्द्र देवप्रवरः देवश्रेष्ठः स सनत्कुमारः कथायां नानेतिहासवर्णनावसरे एव हितं हितकारकं वचनं यथा येन प्रकारेणाब्रवीत् एवं तेन प्रकारेणैव मे मत्तः शृणु ॥ १ ॥

गो० टी०–एवं दशरथप्रश्नस्योत्तरमुक्त्वा कथाशेषं सुमन्त्रः प्रस्तौति–भूय इत्यादि। देवप्रवरः सनत्कुमारः कथायां कथाप्रसङ्गे एवं वक्ष्यमाणरीत्या यथा उक्तवान् तथा शृणु ॥ १ ॥

२ ] ति० टी०–सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥

रा० टी०–वचनस्वरूपमाह–इक्ष्वाकूणामिति । सुधार्मिकः परमधर्माचरणशीलः इक्ष्वाकूणां कुले जातः प्रकटितश्रीमान्सर्वसंपत्तिविशिष्टः सत्यप्रतिश्रवाः सत्यप्रतिज्ञः राजाः महाराजाधिराजो नाम्ना दशरथः दशरथनामा भविष्यति ॥२॥

गो० टी०–इक्ष्वाकूणामिति । धार्मिको भविष्यतीत्यन्वयः । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥

३ ] ति० टी०–अङ्गेति । अङ्गराजो रोमपादः । तस्य दशरथस्य । अस्य रोमपादस्य ॥ ३ ॥

रा० टी०–अङ्गेति । तस्य प्रसिद्धस्य राज्ञो दशरथस्य रोमपादेन साकं सख्यं भविष्यति अङ्गं स्वपितरं राजयति तद्वत् राजते वा तेन अङ्गराजेन अस्य राज्ञो दशरथस्य शान्तानाम कन्या भविष्यति चकारेण कन्याद्वारा वंशप्ररोहणाय दशरथदत्तशान्ता कन्यात्वेन रोमपादेन गृहीता इति तस्यापि कन्या शान्ता भविष्यति। चकारान्तरं सहार्थे। यत्तु अस्येत्यनेनाङ्गराजपरामर्शः तत्सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वमिति नियमविरोधात् प्रत्यासत्तिन्यायविरोधाच्च 'रोमपाद इति ख्यातस्तस्मै दशरथः सखा । शान्तां स्वकन्यां प्रायच्छद् ऋष्यशृङ्ग उवाह ताम् ' इति भागवतविरोधाच्च हेयम् ॥ ३ ॥

गो० टी०–अङ्गेति । अस्य अङ्गराजस्य ॥ ३ ॥

४ ] ति० टी०–कोऽसावङ्गराज इत्यत्राह–पुत्र इति। अङ्गस्याङ्गनामकस्य । तं रोमपादं गमिष्यति । ऋष्यशृङ्गानयनार्थमिति शेषः । तमित्यस्य प्रतीति शेषः ॥ ४ ॥

रा० टी०–रोमपादः कस्य वंश इत्याकाङ्क्षायामाह–पुत्र इति । अङ्गस्य अङ्गसंज्ञस्य राज्ञः पुत्रः रोमपाद इति श्रुतः ख्यातः। महायशाः दशरथः तं अङ्गराजं रोमपादं गमिष्यत्येव। तुना अङ्गराजेन पूजितश्च भविष्यति । एकस्तुशब्दः एवार्थः॥४॥

गो० टी०–पुत्र इति । अङ्गस्य राज्ञः अङ्गराजस्य ॥४ ॥

५ ] ति० टी०–गमनप्रयोजनमाह–अनपत्य इति । आहरेत निर्वहेत् । चकारेण धर्मार्थं च ॥ ५ ॥

रा० टी०–तत्रागतदशरथोक्तिमाह–अनपत्य इति । हे धर्मात्मन् अनपत्यः अप्रादुर्भूतस्वनित्यपुत्रकः अहमस्मि अतः कुलस्य मम वंशस्य सन्तानार्थं प्ररोहणार्थं त्वया आज्ञप्तः त्वदाज्ञां प्राप्तः शान्ताभर्ता शान्तापतिः ऋष्यशृङ्गः मम क्रतुं मदीप्सितयागमाहरेत् कारयेत् । चो हेतौ ॥ ५ ॥

---

१ कथयामासमब्रवीदिति गो. रा. पाठः । २ राजा दशरथो नामेति गो. पाठः । ३ अंगराजमिति गो. पाठः ।

श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसा च विचिन्त्य च । प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६ ॥
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः । आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७ ॥
तं च राजा दशरथो यशस्कामः कृताञ्जलिः । ऋष्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८ ॥
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः । लभते च स तं कामं द्विजमुख्याद्विशांपतिः॥ ९ ॥
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः । वंशप्रतिष्ठानकराः सर्वभूतेषु विश्रुताः ॥ १० ॥
एवं स देवप्रवरः पूर्वं कथितवान्कथाम् । सनत्कुमारो भगवान्पुरा देवयुगे प्रभुः ॥ ११ ॥

गो० टी०—अनपत्य इति । अहमनपत्योऽस्मि तस्मान्मम कुलस्य सन्तानार्थमविच्छेदार्थं शान्ताभर्ता क्रतुमाहरेत अनुतिष्ठतु इति वक्ष्यतीति शेषः ॥ ९ ॥

६ ] ति० टी०—श्रुत्वेति । अस्य राज्ञो दशरथस्यैतद्वाक्यं श्रुत्वा मनसा च तस्यावश्यकर्तव्यतां विचिन्त्य निश्चित्य पुत्रवन्तं शान्ताभर्तारं प्रदास्यत इत्यन्वयः । पुत्रवन्तमित्यनेन 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति विध्युक्तमग्न्याधानादिकारित्वं सूचितम् । तेनाहिताग्नित्वेनार्त्विज्याधिकारस्तस्योक्तः । शान्तासहितं भर्तारमित्यर्थकेन शान्ताभर्तारमित्यनेन शान्तासाहित्यमपि सूचितम् ॥ ६ ॥

रा० टी०—श्रुत्वेति । राज्ञः दशरथस्य अथ मङ्गलस्वरूपं तत्प्रसिद्धं वाक्यं श्रुत्वा मनसा विचिन्त्य युक्तमेव याचते इति विचार्य चकारेण अतो दास्यामीति निश्चित्य पुत्रवन्तं जातपुत्रकम् । किञ्च पुत्रो दशरथनित्यस्ततो रामः तद्वन्तं तत्परायणमित्यर्थः । शान्ताभर्तारमात्मवान् परमबुद्धिमान् प्रदास्यते । पुत्रवन्तमित्यनेन 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति विधिबोधिताधिकारवत्ता सूचिता । रामपरायणमित्यनेन तत्प्राकट्यस्यावश्यम्भावित्वं ध्वनितम् । शान्ताभर्तारमित्यनेन दाने तत्साहित्यं सूचितम् ॥ ६ ॥

गो० टी०—श्रुत्वेति । स रोमपादः मनसा विचिन्त्य नतु मन्त्रिभिः। पुत्रवन्तं पुत्रप्रदानसमर्थं पुत्रयुक्तं वा ॥ ६ ॥

७ ] ति० टी०—तं यज्ञं पुत्रकामेष्टिरूपम् ॥ ७ ॥

रा० टी०—प्रतीति । तं रोमपादसमर्पितं विप्रं प्रतिगृह्यैव विगतज्वरः एतद्गमनेनावश्यं पुत्रप्राकट्यं भवितेति निश्चयेन विगतो निवृत्तः ज्वरः पुत्रवियोगजनितसन्तापो यस्य स प्रसिद्धो राजा दशरथः प्रहृष्टेन हर्षविशिष्टेन अन्तरात्मना मनसा तमीप्सितं यज्ञमाहरिष्यति ऋषिणा साधयिष्यति । चशब्द एवार्थे ॥ ७ ॥

गो० टी०—प्रतिगृह्येति । आहरिष्यति करिष्यतीत्यर्थः । अन्तरात्मना मनसा उपलक्षितः ॥ ७ ॥

८ ] ति० टी०—वरयिष्यति वरणं करिष्यति । तत्करोतीति णिच् ॥ ८ ॥

रा० टी०—तमिति । यशस्कामः ईश्वरोऽस्य पुत्रोऽस्ति इति इह लोकेपि प्रख्यात्यभिलाषी अत एव कृताञ्जलिः बद्धयुगलकरः जनेश्वरः जननियन्ता धर्मवित्सकलधर्मस्य वेदिता राजा दशरथः तं शान्तापतिं द्विजश्रेष्ठमृष्यशृङ्गं यज्ञार्थं पुत्रेष्टिनिर्वृत्त्यर्थं प्रसवार्थमिष्टिफलीभूतस्वानित्यपुत्रप्राकट्यार्थं स्वर्गार्थं रावणोपद्रुतस्वर्गादिस्वास्थ्यार्थं च वरयिष्यति ऋत्विक्त्वेन स्वीकरिष्यति। तात्स्थ्यात्ताच्छब्द्यम् । चशब्दो हेत्वर्थे । सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०—तस्मिन् यज्ञे तमेव ऋत्विजं करिष्यतीत्याह—तं चेति । श्लोकद्वयमेकवाक्यम्। यष्टुं कामो यस्य स यष्टुकामः " लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि " इति मकारलोपः । एवंभूतो राजा तं वरयिष्यति वरो वरणं तत्करोतीति णिच् । अल्लोपस्य स्थानिवत्वाद्वृद्ध्यभावः ॥ ८ ॥

९ ] ति० टी०—वरणविषयमाह—यज्ञेति । यज्ञः प्रसवकारणम् । प्रसवः स्वर्गकारणमिति बोध्यम् । लभते लप्स्यते । तं कामं प्रार्थितं काम्ययज्ञम् ॥ ९ ॥

रा० टी०—लभत इति । स प्रसिद्धः विशांपतिः राजा दशरथः विप्रमुख्याद् ऋष्यशृङ्गात्तं स्वेप्सितं कामं लभते च प्राप्स्यत्येव । चशब्द एवार्थे ॥ ९ ॥

गो० टी०—किमर्थं यज्ञार्थं पुत्रकामेष्ट्यर्थं तद्द्वारा प्रसवार्थं पुत्रार्थं तद्द्वारा स्वर्गार्थं " नापुत्रस्य लोकोऽस्ति " इतिश्रुतेः । कामं काम्यक्रतुम् ॥ ९ ॥

१० ] ति० टी०—पुत्रा इति । वंशप्रतिष्ठानं वंशाविच्छेदस्तत्कराः ॥ १० ॥

रा० टी०—ईप्सितं प्रकटयन्नाह—पुत्रा इति । अस्य महाराजाधिराजदशरथस्य अमितविक्रमाः अप्रमेयपराक्रमाः अत एव वंशप्रतिष्ठानकराः मनुवंशप्रतिष्ठासंपादकाः अत एव सर्वलोकेषु विश्रुताः ख्याताः चत्वारः पुत्रा भविष्यन्त्येव ॥ १० ॥

गो० टी०—पुत्राश्चेति।अमितविक्रमाः अपरिच्छिन्नपराक्रमाः

११ ] ति० टी०—एवमिति । पूर्वं पूर्वस्मिन्काले । कस्मिन्पूर्वकाले तत्राह—पुरा देवयुगे । एतच्चतुर्युगीप्राक्तनचतुर्युग्याद्ये। सत्ययुग इत्यर्थः ॥ ११ ॥

रा० टी०—एवमिति । हे देव ! देवप्रवरः देवश्रेष्ठः भगवान् सकलविद्याविज्ञाता प्रभुः तत्त्वबोधनसमर्थः सः प्रसिद्धः सनत्कुमारः पुरायुगे सत्ययुगे पूर्वं युगप्रारम्भे एवमनेन प्रकारेण कथामुक्तवान् ॥ ११ ॥

१ मनसा स इति गो.पाठः ।२ यष्टुकाम इति गो. पाठः । ३ जनेश्वर इति गो.पाठः । ४ विप्रमुख्याद्विति गो.रा. पाठः । ५ सर्वलोकेष्विति गो. पाठः

स त्वं पुरुषशार्दूल समानय सुसत्कृतम् । स्वयमेवं महाराज गत्वा सबलवाहनः ॥ १२ ॥
सुमन्त्रस्य वचः श्रुत्वा हृष्टो दशरथोऽभवत् । अनुमान्य वसिष्ठं च सूतवाक्यं निशाम्य च ॥ १३ ॥
[ वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः । ]
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः । वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ॥ १४ ॥
अभिचक्राम तं देशं यत्र वै मुनिपुंगवः । आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ॥ १५ ॥
ऋषिपुत्रं ददर्शाथो दीप्यमानमिवानलम् । ततो राजा यथायोग्यं पूजां चक्रे विशेषतः ॥ १६ ॥
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना । रोमपादेन चाख्यातमृषिपुत्राय धीमते ॥ १७ ॥

---

गो० टी०–एवमिति । पूर्वं पूर्वकाले विभक्तिप्रतिरूपकमव्ययं पुरा पुराणः देवयुगे कृतयुगे यद्वा हे देव पुरा युगे कृतयुग इत्यर्थः ॥ ११ ॥

१२ ] ति० टी०–एतत्कथाकथनस्य विवक्षितमर्थमाह–स इति । स्वयमेवेति । न तु पुरोहितादिद्वारा ॥ १२ ॥

रा० टी०–स त्वमिति । हे पुरुषशार्दूल पुरुषसिंह राजेन्द्र सबलवाहनः राजपरिकरसहितः सः प्रसिद्धस्त्वं स्वयमेव गत्वा सुसत्कृतं तम् ऋष्यश्रृङ्गमानयैव । चशब्द एवार्थे ॥ १२ ॥

गो० टी०–स इति । स त्वं पुत्रार्थी त्वं सुसत्कृतं सुसंस्काराई स्वयमेव नतु पुरोहितादिद्वारा ॥ १२ ॥

१३ ] ति० टी०–अनुमान्य कृतानुमतिकं कृत्वा । अन्यथा मयि पुरोहिते स्थिते यज्ञार्थं कथमन्यानयनमिति तस्य क्रोधः स्यात् । अनुमतौ हेतुः सूतवाक्यं निशाम्येति । श्रावयित्वेत्यर्थः ॥ १३ ॥

रा० टी०–अन्विति । सान्तःपुरः अन्तःपुरसहितः सहामात्यः अमात्यसहितः दशरथः सूतवाक्यं निशम्य श्रुत्वा वसिष्ठमनुमान्य च वसिष्ठसंमतिं लब्ध्वा चेत्यर्थः । यत्र यस्मिन्पुरे स द्विजः ऋष्यश्रृङ्गः तत्रैव प्रययौ एकश्चकार एवार्थे । सान्तःपुर इत्युक्त्या औत्सुक्याधिक्यं सूचितम् । वसिष्ठमनुमान्येत्यनेन राज्ञो मर्यादापालकत्वं व्यक्तम् । वसिष्ठस्य संमतिदानेन त्रिकालज्ञत्वं व्यक्तम् ॥ १३ ॥

गो० टी०–अनुमान्येति । अनुमान्य कृतानुमतिकं कृत्वा अन्यथा मयि स्थिते कथमयमन्यमाह्वयतीति वसिष्ठः कुप्येत् अतः सुमन्त्रोक्तकथोक्तिपूर्वकमनुमान्येत्यर्थः । अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य चेति वचनभंग्या पुनर्वसिष्ठसान्निधौ सा कथा प्रस्ताविता सुमन्त्रमुखेनैवेति गम्यते । अतो वसिष्ठेनानुमतिः कृतेति मन्तव्यं सान्तःपुरतया गमनं जामातृपलालनरीत्या शान्तया सहानयनार्थं । यत्र रोमपादनगरे ॥ १३ ॥

१४ ] ति० टी०–यत्र रोमपादराष्ट्रे ॥ १४ ॥

रा० टी०–वनानीति । वनानि सरितश्च शनैःशनैः व्यतिक्रम्य पारं प्राप्य यत्र मुनिपुङ्गवः ऋष्यश्रृङ्गोऽस्ति तं देशमभिचक्राम । वैशब्दः यथायोग्यावान्तरदेशनिवाससूचकः ॥ १४ ॥

गो० टी०–वनानीति । वनादिविलोकनकुतुकित्वं शनैः शनैरित्यनेन द्योत्यते ॥ १४ ॥

१५–१७] ति० टी०–अभिचक्राम जगाम । तं देशमासाद्य प्राप्य । अथो अनन्तरम् । रोमपादसमीपे द्विजश्रेष्ठं ऋषिपुत्रं ददर्श । ततस्तदागमनानन्तरं राजा रोमपादस्तस्य राज्ञो दशरथस्य यथान्यायं यथाविधि विशेषतः अत्यादरेण पूजां चक्र इत्यन्वयः । आदरे हेतुः सखित्वम् ॥ १५–१७ ॥

रा० टी०–आसाद्येति । तमृष्यधिष्ठितदेशमासाद्य प्राप्य रोमपादसमीपगमनलमिव दीप्यमानं द्विजश्रेष्ठमृषिपुत्रमादौ रोमपाददर्शनात्पूर्वं ददर्श । ददर्शाथो इति भट्टसम्मतः पाठः । आदौ ऋषिपुत्रं ददर्शेत्यनेन तद्दर्शनानन्तरं रोमपादं ददर्शेति ध्वनितम् । तेन तस्य तेजोधिकत्वं व्यक्तम् ॥ १५ ॥

गो० टी०–आसाद्येति । तं देशमासाद्य तमृषिपुत्रमादौ रोमपाददर्शनात्पूर्वं ददर्श । तस्मिन् भक्त्यतिशयद्योतनार्थम् १५

रा० टी०–तत इति । ततः तद्दर्शनानन्तरं राजा रोमपादः सखित्वात्सखित्वरूपहेतोः प्रहृष्टेन अतिहर्षं प्राप्तेन अन्तरात्मना मनसा तस्य प्रसिद्धस्य राज्ञो दशरथस्य वैशब्देन तदन्तःपुरादिपरिकरस्य यथान्यायं यथाक्रमं विशेषतः पूजां चक्रे १६

गो० टी०–तत इति । राजा रोमपादः राज्ञो दशरथस्य १६

रा० टी०–रोमपादेनेति । धीमते परमबुद्धिविशिष्टाय ऋषिपुत्राय ऋषिपुत्रं बोधयितुं सख्यम् आत्मदशरथमैत्रीं संबन्धकं शान्ताजनकत्वेन तच्छ्वशुरत्वं च रोमपादेन आख्यातं वर्णितम् । चकारेण पुत्रीकरणार्थमनपत्याय याचते मह्यं दशरथेन स्वपुत्री शान्ता दत्तेत्यपि वर्णितम् तदा तस्मिन्काले एव तं दशरथं प्रत्यपूजयत् । ऋष्यश्रृङ्ग इति शेषः । ऋषिपुत्रायेत्यत्र चतुर्थी "क्रियार्थोपपदस्य०" इति सूत्रविहिता । 'अनेन मेऽनपत्याय दत्तेयं वरवर्णिनी । याचते पुत्रतुल्यैषा शान्ता प्रियतरात्मजा । सोयं ते श्वशुरो ब्रह्मन् यथैवाहं तथा नृप ' इति पौराणिकी गाथा ॥ १७ ॥

गो० टी०–रोमपादेनेति । संबन्धकं शान्ताया जनकपितृत्वरूपं संबन्धं प्रत्यपूजयत् ऋष्यशृङ्ग इति शेषः ॥ १७ ॥

---

१ तमानयेति गो. रा. पाठः । २ स्वयमेव च राजेन्द्रेति गो. पाठः । ३ इदमर्धं गो. रा. पुस्तकयोर्नदृश्यते । ४ एतदर्धं गो. पुस्तकेऽधिकं दृश्यते । ५ ददर्शाविति गो. रा. पाठः ।

सख्यं संबन्धकं चैव तदा तं प्रत्यपूजयत् । एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ॥ १८ ॥
सप्ताष्टदिवसान्राजा राजानमिदमब्रवीत् । शान्ता तव सुता राजन्सह भर्त्रा विशांपते ॥ १९ ॥
मदीयं नगरं यातु कार्यं हि महदुद्यतम् । तथेति राजा संश्रुत्य गमनं तस्य धीमतः ॥ २० ॥
उवाच वचनं विप्रं गच्छ त्वं सह भार्यया । ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ॥ २१ ॥
स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया । तावन्योन्याञ्जलिं कृत्वा स्नेहात्संश्लिष्य चोरसा २२॥
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् । ततः सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ॥ २३ ॥
पौरेषु[1] प्रेषयामास दूतान्वै शीघ्रगामिनः । क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम् ॥ २४ ॥
धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् । ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ॥ २५ ॥

---

१८-१९ ] ति० टी०–सख्यमिति । सख्यं स्वमैत्री संबन्धकं यौनादिसंबन्धः । ऋषिपुत्राय रोमपादेनाख्यातं कथितम् । तदा तच्छ्रवणानन्तरकाले तं दशरथं प्रत्यपूजयत् ऋष्यशृङ्गः इति शेषः । तेन सह रोमपादेन सह संबन्धश्चायं तादृशो येन दशरथस्यापि जामातृत्वव्यवहारयोग्य ऋष्यशृङ्गः एतदेवाभिप्रेत्योक्तं प्राक्तव जामातेति । क्वचिच्चैवं पठ्यतेऽपि–' अनेन मेऽनपत्याय दत्तेयं वरवर्णिनी । याचते पुत्रतुल्यैषा शान्ता प्रियतरात्मजा ॥ सोऽयं ते श्वशुरो ब्रह्मन्यथैवाहं तथा नृपः ' इति । अत्र याचत इति चतुर्थ्यन्तम् अत एव प्राक्सान्तःपुरस्याङ्गदेशे गमनमुक्तम् कन्यास्नेहाद्धि तासां गमनमिति भाति ॥१८-१९॥

रा० टी०–एवमिति । एवमनेन प्रकारेण सुसत्कृतः सत्कारं प्राप्तः नरर्षभः राजा दशरथः तेन रोमपादेन सह सप्ताष्टदिवसान् पञ्चदशदिनानि उषित्वा राजानं रोमपादमिदं वक्ष्यमाणं वचः अब्रवीत् सप्ताष्टदिवसानित्यत्र द्वितीया "कालाध्वनोः०" इति सूत्रविहिता ॥ १८ ॥

गो० टी०–एवमिति । तेन रोमपादेन । सप्ताष्टेतिलोकवचनपरिपाटी सङ्ख्यानियमापेक्षाकृता ॥ १८ ॥

रा० टी०–तद्वचनमेवाह–शान्तेति । हे राजन् ! मद्विषयकानुरागविशिष्ट विशाम्पते प्रजाधीश भर्त्रा स्वामिना सह तव सुता शान्ता मदीयं नगरं यातु प्राप्नोतु उद्यतम् उत् उत्कृष्टः यतः प्रयत्नो यस्मिंस्तन्महत् उत्कृष्टं यागरूपं वस्तु कार्यम् । अनेन निष्पाद्यं हि अस्ति ॥ १९ ॥

गो० टी०–शान्तेति । उद्यतमुद्युक्तम् ॥ १९ ॥

२० ] ति० टी०–उद्यतमुपक्रान्तम् । संश्रुत्य प्रतिज्ञाय२०

रा० टी०–तथेति । राजा रोमपादः धीमतः तस्य ऋष्यशृङ्गस्य गमनं तथेति संश्रुत्य अयमवश्यं यास्यतीति प्रतिज्ञाय त्वं सह भार्यया गच्छेति वचनं विप्रमुवाच ॥ २० ॥

गो० टी०–तथेति । तस्य ऋष्यशृङ्गस्य गमनं संश्रुत्य प्रतिज्ञाय ॥ २० ॥

२१ ] ति० टी०–प्रतिश्रुत्याकर्ण्य ॥ २१ ॥

रा० टी०–ऋषीति । ऋषिपुत्रः ऋष्यशृंगः तदा तस्मिन्काले प्रतिश्रुत्य रोमपादोक्तिमाकर्ण्य नृपं रोमपादं तथा इत्याह । अत एव नृपेणाभ्यनुज्ञातः स ऋषिपुत्रः भार्यया सह प्रययौ ॥ २१ ॥

गो० टी०–ऋषीति।प्रतिश्रुत्य आकर्ण्य नृपं रोमपादम् २२

२२ ] ति० टी०–स ऋष्यशृङ्गः । तौ रोमपाददशरथौ२२

रा० टी०–ताविति । वीर्यवान् दशरथो रोमपादश्च तौ प्रसिद्धौ द्वौ स्नेहात्प्रेमाधिक्यात् अन्योन्याञ्जलिं कृत्वा परस्परं करेण करं गृहीत्वा उरसा संश्लिष्य च ननन्दतुः परमानन्दं प्रापतुः ॥ २२ ॥

गो० टी०–ताविति । अन्योन्यमञ्जलिमित्यर्थः ॥ २२ ॥

२३-२४ ] ति० टी०–सुहृदं रोमपादम् ॥ २३ ॥ २४ ॥

रा० टी०–तत इति । ततः प्रमोदप्राप्त्यनन्तरं सुहृदं रोमपादमापृच्छ्य तदनुमतिं संगृह्य प्रस्थितः कृतगमनारम्भः रघुनन्दनो रघुवंशवर्द्धनो दशरथः शीघ्रगामिन एव दूतान् पौरेभ्य अयोध्यापुरोद्भवान् बोधयितुं प्रेषयामास। वैशब्दः एवार्थे ॥२३॥

गो० टी०–तत इति । सुहृदं रोमपादम् ॥ २३ ॥

रा० टी०–दूतद्वारा यद्बोधितं तदाह–क्रियतामिति । स्वलंकृतं शोभनालङ्कारविशिष्टं धूपितं सिक्तसंमृष्टं पूर्वं सिक्तं पश्चात्संमृष्टं पूर्वकालैकेत्यनेन समासः। पताकाभिः अलंकृतं क्षिप्रं शीघ्रमेव सर्वं नगरं क्रियताम् ॥ २४ ॥

गो० टी०–क्रियतामिति । सिक्तं च संमृष्टं सिक्तसंमृष्टम् "पूर्वकालः" इत्यादिना समासः ॥ स्वलंकृतं पुष्पकदलीकाण्डादिभिः ॥ २४ ॥

२५ ] ति० टी०–स्वलंकृतत्वप्रकारमाह–धूपितमित्यादि । आदौ सिक्तं तोयैः पश्चात्संमृष्टम् ॥ २६ ॥

रा० टी०–तत इति । ततः दूतोक्तिश्रवणानन्तरमागतमागतप्रायं राजानं श्रुत्वा प्रहृष्टा अतिहर्षं प्राप्तास्ते पौरा यत् यदर्थं राज्ञा प्रेषितं तत्तथा तेन प्रकारेण तदैव प्रतिचक्रुः । चशब्द एवार्थे ॥ २६ ॥

गो० टी०–तत इति । आगतं आगतप्रायं राज्ञा यद्यथाप्रेषितं तत्तथा तदा श्रवणकाल एव चक्रुः ॥ २६ ॥

---

[1] पौरेभ्य इति गो. रा. पाठः ।

तथा चक्रुश्च[1] तत्सर्वं राज्ञा यत्प्रेषितं तदा । ततः स्वलंकृतं राजा नगरं प्रविवेश ह ॥ २६ ॥
शङ्खदुन्दुभिनिर्ह्रादैः[2] पुरस्कृत्वा[3] द्विजर्षभम् । ततः प्रमुदिताः सर्वे दृष्ट्वा[4] वै नागरा द्विजम् ॥ २७ ॥
प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा । यथा[5] दिवि सुरेन्द्रेण सहस्राक्षेण काश्यपम् ॥ २८ ॥
अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा च[6] शास्त्रतः । कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् ॥ २९ ॥
अन्तः[7]पुराणि सर्वाणि शान्तां दृष्ट्वा तथागताम् । सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥ ३० ॥
पूज्यमाना तु[8] ताभिः सा राज्ञा चैव विशेषतः । उवास तत्र सुखिता कंचित्कालं सहद्विजा[9] ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ।

पुत्रप्राप्त्यर्थमश्वमेधकरणे राज्ञोऽनुमतिः ।

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे । वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥

२६ ] ति० टी०–प्रेषितमित्यस्योक्त्वेत्यादिः ॥ २६ ॥

रा० टी०–तत इति । ततः अयोध्योनिकटप्राप्त्यनन्तरं राजा दशरथः स्वलंकृतं नगरं शङ्खादिघोषैः द्विजर्षभमृष्यश्टङ्गं पुरस्कृत्य प्रविवेश । ह इति हर्षे ॥ २६ ॥

गो० टी०–तत इति । द्विजर्षभं पुरस्कृत्य शङ्खदुन्दुभिनिर्घोषैः सह प्रविवेश ॥ २६ ॥

२७ ] ति० टी०–द्विजमृष्यशृङ्गम् ॥ २७ ॥

रा० टी०–तत इति । ततः नगरप्रवेशानन्तरं सर्वे पौराः इन्द्रकर्मणा इन्द्रसाहाय्यकर्त्रा नरेन्द्रेण राज्ञा दशरथेन सत्कृत्य अन्तःपुरं प्रवेश्यमानं तं द्विजमृष्यश्टङ्गं दृष्ट्वा प्रहृष्टाः आसन्निति शेषः । अन्तःपुरमिति उत्तरश्लोकादपकृष्य सम्बध्यते इन्द्रकर्मणा इत्यस्यानन्तरं यथा दिवि सुरेन्द्रेण सहस्राक्षेण काश्यपमिति श्लोकार्धं भट्टसम्मतम् ॥ २७ ॥

गो० टी०–तत इति । नागराः नगरवासिनः नरेन्द्रेण दशरथेन सत्कृत्य नगरालङ्कारादिभिः संमान्य प्रवेश्यमानं तं द्विजं दृष्ट्वा प्रमुदिताः संतुष्टा आसन् इन्द्रस्येव कर्म पराक्रमादिकं यस्य सः इन्द्रकर्मा तेन ॥ २७ ॥

२८ ] ति० टी०–इन्द्रकर्मणेन्द्रसहायार्थं कर्म यस्य तादृशेन राज्ञा सत्कृत्य प्रवेश्यमानं द्विजं दृष्ट्वा देवेन्द्रेण स्वनगरं प्रवेश्यमानं काश्यपं वामनं दृष्ट्वा यथा स्वर्गवासिनो मुदितास्तथात्र नागरा मुदिता इति पूर्वेणान्वयः । इन्द्रकर्मणेत्यनेन राज्ञः समग्रो महिमातिशयो ध्वनितः ॥ २८ ॥

२९ ] ति० टी०–उपवाहनात्स्वसमीपानयनात् ॥ २९ ॥

रा० टी०–अन्तरिति । तदा तस्मिन्काले एनमृष्यश्टङ्गमंतःपुरं प्रवेश्य विधानतः पूजां कृत्वा तस्य ऋषेरुपवाहनात् स्वसमीपप्रापणादात्मानं कृतकृत्यं कृतार्थं मेने । राजेति शेषः २८

गो० टी०–अन्तःपुरमिति । उपवाहनात् आनयनात् २८।

३० ] ति० टी०–तथागमनमेव व्याचष्टे–सह भर्त्रेति । प्रीत्या शान्तायां प्रीत्या । बहुकालविश्लेषोत्तरं मिलितत्वादान-न्दाप्तिरन्तःपुरस्य ॥ ३० ॥

रा० टी०–अन्तरिति । विशालाक्षीमायतनेत्रां भर्त्रा सह तथा तेन प्रकारेण आगतां शान्तां प्रीत्या दृष्ट्वा सर्वाणि अन्तःपुराणि आनन्दमुपागमन् प्रापुः ॥ २९ ॥

गो० टी०–अन्तरिति । भर्त्रा सहागताम् अनेन पूर्वं कन्यात्वदशायामपि कदाचिदागमनं व्यज्यते ॥ २९ ॥

३१ ] ति० टी०–सहद्विजा सपुत्रभर्तृकेति यावत् ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकादशः सर्गः ॥ ११ ॥

रा० टी०–पूज्यमानेति । ताभिः राजपत्नीभिः राज्ञा च विशेषतः पूज्यमानैव सह द्विजा पतिसहिता अतः सुखिता परमसुखं प्राप्ता सा शान्ता तत्रान्तःपुरे कंचित्कालमुवास । सहद्विजा इत्यनेन पितृगृहे स्त्रियाः प्राधान्यं भवतीति व्यवहारः सूचितः ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०–पूज्यमानेति । विशेषतः जनकत्वसंबन्धात् ऋत्विजा ऋष्यश्टङ्गेण पितृगृहत्वात् शान्तायाः प्राधान्यम् ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

१ ] ति० टी०–एवं निश्चितमवगतं पुत्रदातृत्वं यस्य तादृश ऋष्यशृङ्गे आनीते सकलपापक्षयकारितया पूर्वसंकल्पितत्वेन

१ प्रचक्रुरिति गो. पाठः । २ निर्घोषैरिति गो. पाठः । ३ पुरस्कृत्येति गो. रा. पाठः । ४ दृष्ट्वातामिति गो. पाठः । ५ इदमर्धं गो. रा. पुस्तकयोर्न लभ्यते । ६ विधानत इति गो. रा. पाठः । ७ अन्तःपुरस्त्रियः सर्वा इति गो. पाठः । ८ च ताभिरिति गो. पाठः । ९ सहर्त्विजेति गो. पाठः ।

ततः प्रणम्य शिरसा तं विप्रं देववर्णिनम् । यज्ञाय वरयामास संतानार्थं कुलस्य च[1] ॥ २ ॥
तथेति च स राजानमुवाच वसुधाधिपम् । संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३ ॥
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । ततोऽब्रवीन्नृपो वाक्यं ब्राह्मणान्वेदपारगान्[2] ॥ ४ ॥
सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः । सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ॥ ५ ॥
पुरोहितं वसिष्ठं च ये[6] चान्ये द्विजसत्तमाः । ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥ ६ ॥
समानयत्स तान्सर्वान्समस्तान्वेदपारगान् । तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥ ७ ॥
धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् । मम तातप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥ ८ ॥

---

श्वमेधं प्रस्तौति—तत इति । बहुतिथेऽनल्पे काले । गत इति शेषः । सुमनोहरे शास्त्रोक्तदोषरहिते मनोऽभवत्प्रावर्तत ॥ १ ॥

रा० टी०—अश्वमेधोपक्रममाह—तत इत्यादिभिः । ततः ऋष्यशृङ्गस्य पुरप्राप्त्यनन्तरं बहुतिथे अल्पभिन्ने काले गते सतीति शेषः । सुमनोहरे दोषोपद्रवादिराहित्येन सम्मुचितरिथ्यादिप्राप्तत्वेन रमणीये कस्मिंश्चिद्विलक्षणे वसन्ते समनुप्राप्ते सति राज्ञो दशरथस्य मनो यष्टुं यागं कर्तुमभवत् प्रावर्तत ॥१॥

गो० टी०—एवं दशरथः सर्वकामसमृद्धोऽपि पुत्रालाभसंतप्तस्तन्मूलानि पापानि स्वाधिकारानुरूपेणाश्वमेधेन विना न विनश्यन्तीति मन्वानः "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुत्या 'राजा सार्वभौमोऽश्वमेधेन यजेत' इतिस्मृत्या च विहितमश्वमेधं यष्टुं संकल्प्य तदानीमुद्बुद्धसंस्कारेण सुमन्त्रेणोदीरितवचनाज्जामातृपलालनव्याजेन शान्तया सह ऋष्यशृङ्गमानीय प्राप्तकाले पूर्वं संकल्पितमश्वमेधं कर्तुं आरभतेत्याह—ततः काल इत्यादि । ततः ऋष्यशृङ्गानयनानन्तरं बहुतिथे अनल्पे काले गते संख्यासंज्ञा द्वहुशब्दात्पूरणार्थे डटि "बहु पूगगणसंघस्य तिथुक्" इति तिथुगागमः कस्मिंश्चित् मलिम्लुचत्वादिदोषरहिततया विलक्षणे सुमनोहरे पौर्णमास्याः कालत्वेनातिमनोज्ञे वसंते समनुप्राप्ते प्रारब्धे चैत्र्यां पौर्णमास्यामित्यर्थः । राज्ञो दशरथस्य यष्टुं सांग्रहणीमिष्टिं कर्तुं मनः मनोरथः अभूत् चैत्र्यां पौर्णमास्यां प्रातरश्वमेधेन यक्ष्ये इति संकल्प्य 'सांग्रहण्येष्ट्या यजते' इतिस्मरणात् ॥ १ ॥

२–४ ] ति० टी०—तत इति । देववर्णिनं देववर्चसम् । कुलस्य संतानार्थं कुलाविच्छेदरूपप्रयोजनमुद्दिश्य तेन स्वर्गार्थं च । यज्ञाय यज्ञार्थम् । विप्रमृष्यशृङ्गम् ॥ २–४ ॥

रा० टी०—तत इति । ततः यागानुकूलमनस्कत्वानन्तरं देववर्णिनं दिव्यतेजसं तं विप्रं ऋष्यशृङ्गं शिरसा प्रणम्य कुलस्य सन्तानार्थमेव यज्ञाय यज्ञं प्रवर्तयितुं वरयामास ब्रह्मत्वेन स्वीचकार चशब्द एवार्थे ॥ २ ॥

गो० टी०—अथ सांग्रहणीमिष्टिं कर्तुमृत्विग्वरणे प्राप्ते प्रथममृष्यशृङ्गं ब्रह्मत्वेन वृतवानित्याह—ततः प्रसाद्येति । देववर्णिनं देववर्चसम् ॥ २ ॥

रा० टी०—तथेति । स ऋष्यशृङ्गः वसुधाधिपं सार्वभौमं राजानं दशरथं तथा यागानुकूलमिति वक्ष्यमाणं वचः उवाच । वचनमेवाह—सम्भाराः सम्भ्रियन्तामित्यादि अर्थस्तुपूर्ववत् ॥३॥

गो० टी०—तथेति । स च ऋष्यशृङ्गश्च ॥ ३ ॥

रा० टी०—तत इति । ततः ऋष्याज्ञापनान्तरं राजा दशरथो मन्त्रिसत्तमं सुमंत्रं वाक्यमब्रवीत् । वाक्यमेवाह—हे सुमन्त्र ! ब्रह्मवादिनो वेदज्ञान् ऋत्विजः क्षिप्रं शीघ्रमावाहय मत्समीपं प्रापय ॥ ४ ॥

गो० टी०—अथ "अपदातीनृत्विजः समावहन्त्यासुब्रह्मण्यायाः" इति विहितमध्वर्युप्रभृतिवरणमाह—ततो राजेत्यादिना।अस्याः श्रुतेरयमर्थः—तस्यतस्य गृहे गत्वा सोमप्रवाकवृतानध्वर्युब्रह्महोतॄनाग्नीध्रं च हस्त्यश्वादिकमारोप्य राजगृहमानयन्ति राजपुरुषाः । अनन्तरायाममावास्यायां पूर्ववृता एव ते संज्ञानेष्ट्यर्थं पुनर्व्रियन्ते अथ वैशाख्यां पौर्णमास्यां प्राजापत्यर्षभपश्वर्थं पूर्ववत्सोमप्रवाकवृतौ मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यादिकमारोप्यानयंति राजपुरुषाः । अनंतरायाममावास्यायां तथैव वृतमुद्गातारं हस्त्यादिभिरानयन्ति अथागामिनि वसन्ते पञ्चदश्यां हस्त्यादिभिः प्रस्तोतारमानयन्ति त्रैधातवीयार्थं यत्र दीक्षारंभस्तद्दिवसादूर्ध्वं तृतीयादिष्वहस्स्वन्वहमितरानष्टावृत्विजो हस्त्यादिकमारोप्यानयन्ति ब्राह्मणाच्छंसिनमच्छावाकं नेष्टारं प्रतिहर्तारं ग्रावस्तुतं पोतारमुन्नेतारं सुब्रह्मण्यमिति सोमार्थमेवमासुब्रह्मण्याह्वानादपदातीनृत्विज आवहन्तीति एवं क्रमेण कर्तव्यानि ऋत्विग्वरणानि कार्यकरत्वात्संग्रहेण दर्शयति—सुमन्त्रावाहयेति । आवाहय आनय क्रतौ यजन्तीति ऋत्विजः । ब्रह्मवादिनः वेदपाठकान् ॥ ४ ॥

५ ] ति० टी०—आवाहय मत्समीपं प्रापय ॥ ५ ॥

रा० टी०—सुयज्ञमिति । एतदारभ्य हयमेधेन कर्मणेत्येतत्पर्यन्तं श्लोकसार्द्धचतुष्टयं पूर्वमपीत्थं पठितमिति तद्व्याख्यानमेवैतद्व्याख्यानं बोध्यम् ॥ ५—९ ॥

गो० टी०—ऋत्विजः परिगणयति—सुयज्ञमिति ॥ ५ ॥

६–८ ] ति० टी०—तत इत्यादि व्याख्यातप्रायम् ॥६–८॥

गो० टी०—तत इति । त्वरितविक्रमः त्वरितपदन्यासः॥६॥

---

१ प्रसाद्येति गो. पाठः । २ कुलायचेति गो. रा. पाठः । ३ सुसत्कृत इति गो. पाठः । ४ इदमर्धं गो. पुस्तकेनास्ति । ५ ततोराजाब्रवीद्वाक्यं सुमन्त्रं मंत्रिसत्तममिति गो. रा. संमतः पाठः । ६ येचाप्यन्ये द्विजातय इति गो. पाठः । ७ समर्थानिति गो पाठः । ८ लालप्यमानस्येति गो. पाठः ।

पुत्रार्थं हयमेधेन यक्ष्यामीति मतिर्मम । तदहं यष्टुमिच्छामि हयमेधेन कर्मणा ॥ ९ ॥
ऋषिपुत्रप्रभावेण कामान्प्राप्स्यामि चाप्यहम् । ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥ १० ॥
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् । ऋष्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ॥ ११ ॥
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् । सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १२ ॥
सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् । यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १३ ॥
ततः प्रीतोऽभवद्राजा श्रुत्वा तु द्विजभाषितम् । अमात्यानब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १४ ॥
गुरूणां वचनाच्छीघ्रं संभाराः संभ्रियन्तु मे । समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् १५ ॥
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १६ ॥
शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता । नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ॥ १७ ॥
छिद्रं हि मृगयन्त्येते विद्वांसो ब्रह्मराक्षसाः । विधिहीनस्य यज्ञस्य सद्यः कर्ता विनश्यति ॥ १८ ॥
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते । तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १९ ॥
तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् । पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्वत ॥ २० ॥

---

गो०टी०—तानिति । धर्मार्थसहितं धर्मार्थरूपप्रयोजनयुक्तं श्लक्ष्णं मधुरम् ॥ ७ ॥

गो० टी०—ममेति । व्याख्यातम् ॥ ८ ॥

९ ] ति० टी०—पुत्रार्थं हयमेधेन कर्मणा तदाख्येन कर्मणा । अनुष्ठानारम्भाय च पुनरुपन्यासः ॥ ९ ॥

गो० टी०—तदिति। यष्टुमिच्छामि प्रतिबन्धकदुरितशान्त्यर्थं ऋषिपुत्रप्रभावेन ऋष्यश्टङ्गकृतयज्ञप्रभावेन पश्चात्कामान् पुत्रानवाप्स्यामि च ॥ ९ ॥

१०–१२ ] ति० टी०—ऋषिपुत्रो ऋष्यश्टङ्गः ॥१०–१२॥

रा० टी०—ऋषीति । ऋषिपुत्रस्य ऋष्यशृङ्गस्य प्रभावेण रामसाक्षात्कारजनिततेजसा अहं कामान्प्राप्स्याम्येव । अपिना देवकार्यसिद्धिश्च भविष्यति चशब्द एवार्थे । तत इति । ततः राजवाक्यश्रवणानन्तरं पार्थिवस्य राज्ञः मुखाच्च्युतं तत्प्रसिद्धं वाक्यं वसिष्ठप्रमुखाः सर्वे ब्राह्मणाः साधु शोभनमिति प्रत्यपूजयन् ॥ १० ॥

गो० टी०—तत इति । ऋष्यश्टङ्गस्याघागर्भत्वाद्वसिष्ठप्रमुखा इत्युक्तम् ॥ १० ॥

रा० टी०—ऋष्येति । तदा तस्मिन्काले ऋष्यशृङ्गपुरोगा ऋष्यशृङ्गप्रभृतयः नृपतिं राजानं प्रत्यूचुः। तद्वचनमेवाह—सम्भारा इत्यादिभिः ॥ ११–१३ ॥

गो० टी०—ऋष्यश्टङ्गेत्यादि व्याख्यातप्रायम् ॥ ११ ॥

१३–१४ ] ति० टी०—धार्मिकी प्रजासंरक्षणरूपधर्मप्रयोजना ॥ १३ ॥ १४ ॥

गो० टी०—सर्वथेति । सनत्कुमारवचःश्रवणाच्चतुर इत्युक्तम् ॥ १२ ॥

गो० टी०—तत इति । क्रियाभेदान्न राजपदपुनरुक्तिः॥१३॥

रा० टी०—तत इति । द्विजभाषितं श्रुतवान् द्विजभाषितश्रवणविशिष्टो राजा प्रीतोऽभवत् । ततः प्रीतिप्राप्त्यनन्तरं राजा शुभाक्षरं मधुराक्षरविशिष्टमिदं वचनं हर्षेण अमात्यान् अब्रवीत् । व्याख्यातार्था इतःप्रभृति षट् श्लोकाः ॥१४–२०॥

१५–२१] ति० टी०—संभ्रियन्तु संपाद्यन्ताम् । गुरूणामित्यादयो व्याख्यातप्रायाः ॥ १५–२१ ॥

गो० टी०—गुरूणामिति । संभ्रियन्तु संभ्रियन्तां आर्षं परस्मैपदं अत्र संभाराः यज्ञीयाश्वमोचनोपकरणानि " द्वादशारत्नी रशना भवति" इत्युक्त्या द्वादशारत्निपरिमिता मुञ्जाख्यतृणविशेषनिर्मिता रशना " चतुष्टय्य आपो भवन्ति" इत्यनुवाकोक्ताः आतपतिवर्ष्याः कूप्याः स्थावरा वहन्त्यश्चेति चतुर्विधा आप इत्यादीनि "समर्थैः चतुःशता रक्षन्ति" इतिश्रूयमाणै राजपुत्राद्यैः अधिष्ठितः रक्षितः सोपाध्यायः उपाध्यायैश्चतुर्भिः ऋत्विग्भिः सहितः अश्वो विमुच्यतां " चत्वार ऋत्विजः समुक्षन्ति" इत्यारभ्य " शतेन राजपुत्रैः सह अध्वर्युः शतेनाराजभिरुग्रैः सह ब्रह्मा शतेन सूतग्रामणीभिः सह होता शतेन क्षत्रसंग्रहीतृभिः सहोद्गाता" इतिश्रुतेः । संगृहीतं च भट्टभास्करैः'सन्नाहवन्तः क्षितिपालपुत्राःसन्नद्धसूतः शतमस्य तल्प्याः। गोपायितारः शतमेवमुग्राः सन्नाहिनस्तादृशसूनुयुक्ताः ॥ वैश्याः शतं प्रान्तचराः पथि स्युर्वरूथिनस्तैः शतमेव शूद्राः' इति ॥१४॥

गो० टी०—अथ पुण्यनामदेवयजनमध्यवस्यतीत्युक्तरीत्या यागार्हपुण्यस्थलपरिग्रहं दर्शयति—सरय्वा इति । उत्तरं विविक्तमिति तत्परिग्रहः शान्तयः शान्तिकर्माणि अभिवर्द्धन्तां प्रवर्तन्तां यथाकल्पं यथाक्रमं यथाविधि यथाशास्त्रम् ॥ १६ ॥

---

१ तदर्थमिति गो. पाठः । २ शास्त्रदृष्टेनेति गो.पाठः । ३ प्रभावेनेति गो. पाठः । ४ ऋश्येति गो. पाठः । ५ इदमर्धं गो. पुस्तके नास्ति । ६ त्यांश्चाब्रवीदिति गो. पाठः । ७ मृगयन्तेऽत्रेति गो. पाठः । ८ विघ्नितस्येति गो. पाठः ।

ततो द्विजास्ते धर्मज्ञमस्तुवन्पार्थिवर्षभम् । अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २१ ॥
गतानां तेषु विप्रेषु मन्त्रिणस्तान्नराधिपः । विसर्जयित्वा स्वं वेश्म प्रविवेश महामतिः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ।

राजाज्ञयाऽन्यमाण्डलिकानां राज्ञामाह्वानम्, अश्वशालादिकरणे तदनुशासनं च ।

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् । प्रसवार्थं ततो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥
अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च । अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥ २ ॥

**गो० टी०—शक्य इति** । कष्टः क्लेशकरः ॥ १६ ॥

**गो० टी०—छिद्रमिति** । छिद्रं अपराधमित्यर्थः ॥ १७ ॥

**गो० टी०—तदिति** । यथेति छेदः ॥ १८ ॥

**गो० टी०—तथेति** । अकुर्वत सांग्रहणेष्टिप्रभृत्यश्वोविमोचनान्तमकुर्वन्नित्यर्थः ॥ १९ ॥

**रा० टी०—तत इति** । धर्मज्ञं पार्थिवर्षभं राजराजं ते तत्रागताः द्विजाः ततः अतिपुण्यसम्पादकधर्माचरणादस्तुवन् प्राशंसन् ततः प्रशंसाकरणानन्तरमनुज्ञाताः राजाज्ञां प्राप्ताः सर्वे द्विजाः यथागतं पुनर्जग्मुः । स्वस्वाश्रममिति शेषः ॥ २१ ॥

**गो० टी०— ततो द्विजा इति** । अनुज्ञाताः तेनेतिशेषः २०

**२२ ] ति० टी०—गतानामिति** । गतेषु द्विजादिष्वित्यर्थः । सप्तम्यर्थे षष्ठी । विसर्जयित्वा । संवत्सरान्ते यागार्थमिति शेषः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्वादशः सर्गः ॥ १२ ॥

**रा० टी०—गतानामिति** । द्विजातीनां गतानां द्विजातिषु गतेषु सत्सु तानागतान् मन्त्रिणः विसर्जयित्वा संप्रेष्यल्यबभाव आर्षः । महामतिः नराधिपः स्वं वेश्म अन्तःपुरं प्रविवेश सप्तम्यर्थे षष्ठी ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बलकाण्डे द्वादशः सर्गः ॥ १२ ॥

**गो० टी०— गतेष्विति** । स्वं वेश्म अग्निगृहादन्तःपुरमित्यर्थः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

---

**१ ] ति० टी०—अथ ' संवत्सरान्ते दीक्षेत ' इति** सूत्रात्पूर्ववसन्तविसृष्टाश्वस्य पुनः संवत्सरान्ते वसन्ते प्राप्ते दीक्षाप्रवृत्तिरुपदिश्यते—**पुनरिति** । प्रसवरूपफलं हयमेधेन भावयितुम् । गतो वसिष्ठान्तिकमिति शेषः ॥ १ ॥

**रा० टी०—" संवत्सरान्ते दीक्षेत् " इति** सूत्रोक्तविधिना पूर्ववसन्तेऽश्वमेधीयोऽश्वो विसृष्ट इत्युक्तम् । पुनर्वसन्तप्राप्तौ यागप्रवृत्तिरित्याह—**पुनरित्यादिभिः** । यस्मिन्वसन्ते पुनः प्राप्ते सति संवत्सरः पूर्णोऽभवत् । तस्मिन्नश्वोत्सर्जनकालिकवसन्तादुत्तरकालिकवसन्ते प्राप्ते सतीत्यर्थः वीर्यवान् महापराक्रमविशिष्टः राजा दशरथः प्रसवार्थं स्वनित्यपुत्रप्राकट्यार्थं हयमेधेन यष्टुं अश्वमेधयागं कर्तुं गतः वसिष्ठसमीपं प्राप्तः । तुशब्दो यस्मिन्नित्यर्थे तद्बलात्तस्मिन्नित्यध्याह्रियते ॥१॥

**गो० टी०—एवं** प्रथमवसन्ते चैत्रपौर्णमास्यां सांग्रहणेष्टिं विधाय द्वितीयेऽह्नि ब्रह्मौदनमेध्याश्वबन्धनस्नापनप्रोक्षणविमोचनादिकं चत्वार ऋत्विजः समुक्षन्तीत्युक्तरीत्या कृत्वा सावित्रमष्टाकपालं प्रातर्निर्वपतीत्युक्तरीत्या प्रतिदिनं सावित्रादिषु कर्मस्वनुष्ठीयमानेषु संवत्सरे पूर्णे देवयजनं प्रति प्रस्थानं दर्शयति त्रयोदशे—**पुनः प्राप्त इत्यादि** । पुनर्वसन्ते द्वितीयवसन्ते प्राप्ते संवत्सरः पूर्णोऽभवत् अमावास्या प्राप्तेत्यर्थः । अत्र भाविन्यां पौर्णमास्यां प्रसवार्थं हयमेधेन यष्टुं हयमेधाख्यं यज्ञं कर्तुं गतः देवयजनमितिशेषः । प्रथमसंवत्सरान्तिमावास्यायां मुखासंभरणत्रैधातवीयदीक्षणीयादिकं देवयजन एव हि कर्तव्यं यथोक्तं भास्करैः 'संवत्सरस्यास्य तु याऽन्तिमामावास्या विधेयामिह दीक्षणीयाम् । त्रैधातवीयां प्रवदन्ति सप्त दिनानि दीक्षाहुतयस्तथाष्टौ" इति ॥ २ ॥

**२ ] ति० टी०—वसिष्ठं च** । चादरुन्धतीम् । प्रश्रितं विनययुक्तम् ॥ २ ॥

**रा० टी०—अभीति** । वशिष्ठमभिवाद्य नमस्कृत्यैव न्यायतः प्रतिपूज्य च प्रसवार्थं स्वपुत्रप्राकट्यप्रयोजनकं प्रश्रितं प्रणयविशिष्टं वाक्यं द्विजोत्तमं वसिष्ठमब्रवीत् ॥ २ ॥

**गो० टी०—एवमेतत्सर्गप्रतिपाद्यं** देवयजनगमनं संग्रहेणोक्त्वा पुनस्तद्विस्तरेण वक्तुमुपक्रमते सर्गशेषेण । तत्र ब्रह्मौदनमारभ्य यावदश्वमेधसमाप्ति यजमानस्य स्वातन्त्र्यप्रतिषेधेन स्वयं यज्ञोपकरणसंपादनायोगादध्वर्युणैव तस्य सर्वस्य कर्तव्यत्वादध्वर्युत्वेन वृतं वसिष्ठं प्रति प्रार्थयते—**अभिवाद्येत्यादिना** । तदुक्तं भट्टभास्करैः'रशनां जनतः पश्चादध्वर्युः परिवीयते। राज्याय स च राजा स्यायावत् संतिष्ठते क्रतुः'इति । येयं द्वादशारत्नीरशना भवति मौञ्जी भवतीत्यश्वबन्धनरज्जुर्विहिता तस्याः

---

१ गतेष्वथ द्विजाग्र्येष्विति गो. पाठः । २ महाद्युतिरिति गो. पाठः । ३ गत इति गो. रा. पाठः ।

यज्ञो मे क्रियतां ब्रह्मन्यथोक्तं मुनिपुंगव । यथा न विघ्नाः क्रियन्ते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥
भवान्स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् । वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४ ॥
तथेति च स राजानमब्रवीद्द्विजसत्तमः । करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥ ५ ॥
ततोऽब्रवीद्द्विजान्वृद्धान्यज्ञकर्मसु निष्ठितान् । स्थापत्ये निष्ठितांश्चैव वृद्धान्परमधार्मिकान् ॥ ६ ॥
कर्मान्तिकाञ्शिल्पकारान्वर्धकीन्खनकानपि । गणकाञ्शिल्पिनश्चैव तथैव नटनर्तकान् ॥ ७ ॥
तथा शुचीञ्शास्त्रविदः पुरुषान्सुबहुश्रुतान् । यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८ ॥

---

यदाज्यमुच्छिष्यते तस्मिन् रशनान्युनक्तीति यद्ब्रह्मौदनशिष्टाज्येनाभ्यञ्जनं विहितं ततः पश्चादित्यर्थः । अर्द्धत्रयमेकान्वयं वसिष्ठमभिवाद्य च न्यायतः शास्त्रतः प्रतिपूज्य च प्रश्रितं विनययुक्तं वाक्यमब्रवीत् कथं प्रसवार्थं पुत्रार्थमारब्धो मे यज्ञः यथोक्तं शास्त्रोक्तमनतिक्रम्य क्रियताम् ॥ २ ॥

३ ] ति० टी०–यथोक्तं शास्त्रोक्तप्रकारानतिक्रमेण । यज्ञाङ्गेष्वश्वादिषु । यथा ब्रह्मराक्षसादिभिर्विघ्ना न क्रियन्ते तथा विधीयताम् । क्रियतामित्यर्थः ॥ ३ ॥

रा० टी०–तद्वाक्यमेवाह–यज्ञ इति । हे मुनिपुङ्गव विप्र यथोक्तं यथाशास्त्रं मम ईप्सितो यज्ञः क्रियताम् निष्पाद्यताम् यथा येन प्रकारेण यज्ञाङ्गेषु विघ्नो न क्रियते इन्द्राद्यैरिति शेषः तथा विधीयताम् ॥ ३ ॥

गो० टी०–यथेति । यज्ञाङ्गेषु द्रव्यदेवताकर्मादिरूपेषु यथा विघ्नो न क्रियते राक्षसैरिति शेषः तथा क्रियतामित्यर्थः ॥ ३ ॥

४ ] ति० टी०–भवानिति । सुहृदः स्निग्धत्वाव्यभिचारादतिशयप्रतिपत्तये पुनः स्निग्धेति विशेषणम् । मह्यमिति षष्ठ्यर्थे । परमो महानित्यपि स्निग्धपदवत् । विसृष्टपुनःप्राप्तात्वकत्वादुद्यतः । आरब्धो यज्ञसंबन्ध्यङ्गानुष्ठानरूपो भारो भवतैव सर्ववेदशास्त्रज्ञेन वोढव्यो वोढुमर्हः ॥ ४ ॥

रा० टी०–भवानिति । स्निग्धः स्नेहविशिष्टः अत एव सुहृत् मह्यं मम परम उत्कृष्टो गुरुः अत एव महान्सर्वपूज्यो भवानेव अतः यज्ञस्य उद्यतः प्राप्तो भारो भवतैव वोढव्यः चशब्द एवार्थे । अपरौ चकारौ हेत्वर्थे ॥ ४ ॥

गो० टी०–भवानिति । भवान् मह्यं स्निग्धः अविच्छिन्नस्नेहः सुहृत् परमः वामदेवादिभ्य उत्कृष्टः महान् वस्तुतो निरुपमो गुरुः अतः उद्यतः उपक्रान्तः यज्ञस्य भारो भवतैव वोढव्यः चकारेणार्त्विज्यं च कर्तव्यमित्युच्यते ॥ ४ ॥

५ ] ति० टी०–समर्थितं सम्यक्प्रार्थितम् ॥ ५ ॥

रा० टी०–तथेति । भवता यत् एतत्समर्थितं प्रार्थितं तत्सर्वं तथैव करिष्ये एव इति राजानं स द्विजसत्तमो वसिष्ठोऽब्रवीत् चशब्द एवार्थे ॥ ५ ॥

गो० टी०–तथेति । समर्थितं सम्यक्प्रार्थितम् ॥ ५ ॥

६ ] ति० टी०–ततोऽब्रवीदिति । वसिष्ठोऽत्र कर्ता । स्थापत्यं स्थपते रथकारस्य कर्म तत्र निष्ठितान्प्रवीणान् ॥ ६ ॥

रा० टी०–तत इति । ततः यज्ञभारनिर्वहणस्वीकारानन्तरं यज्ञकर्मसु निष्ठितान् यज्ञप्रयोगनिपुणान्वृद्धान्बहुज्ञान्द्विजान् परमधार्मिकान्परमधर्मानुष्ठानकर्तॄन् स्थापत्ये यागविषयकशिल्पकर्मणि निष्ठितान् निपुणान्वृद्धान्बहुद्रष्टॄन् च द्विजानब्रवीत् वसिष्ठ इति शेषः द्विजानितिपुभयान्वयि ॥ ६ ॥

गो० टी०–तत इति सार्द्धश्लोकत्रयमेकान्वयम् । यज्ञकर्मसु यज्ञप्रयोगेषु स्थापत्ये तद्व्यानयनस्वाम्ये निष्ठितान् पूर्वं राज्ञा नियुक्तान् ॥ ६ ॥

७ ] ति० टी०–कर्मान्तिकानासमाप्तिकर्मनिर्वाहकान्भृत्यान् । शिल्पकारान् । शिल्पं चित्रादि । वर्धकींस्तक्षणः । खनकाः कूपवापीनिर्मातारः । गणकाञ्ज्योतिर्विदः । शिल्पिनश्चर्मकाराद्याः । नटाः सूत्रधाराः । नर्तका नृत्यकारिणः ॥ ७ ॥

रा० टी०–कर्मेति । कर्मान्तिकान्कर्मणामन्तिकाः समाप्तिकर्तारः समाप्तिपर्यन्तं कर्मनिर्वाहका भृत्या इत्यर्थः ताञ्छिल्पकरान् इष्ट्यादिनिर्माणकर्तॄन् च वर्द्धकान् यूपादिनिर्माणकर्तॄंस्तक्षणश्च खनकान्यागोपयोगिकुण्डादिखननकर्तॄंश्च गणकान् ज्योतिश्शास्त्रनिपुणान् च शिल्पिनः चित्रादिनिर्मातॄन् च नटनर्तकान्नटा रसाभिनयकर्तारः नर्तकाः भावाभिनयकर्तारः ते च ते चेति द्वन्द्वः तान् च ॥ ७ ॥

गो० टी०–कर्मान्तिकानिति । कर्मणामन्तः समाप्तिः सः एषामस्तीति कर्मान्तिकाः "अत इनिठनौ" इति ठन् भृतकानित्यर्थः । शिल्पकरान् इष्टकादिनिर्मातॄन् वर्द्धकीन् तक्षणः सुकुसुवचमसग्रहयूपादिनिर्मातॄन् खनकान् वापीकूपादिकृतः गणकान् लेखकान् शिल्पिनः चित्रादिकरान् नटाः रसाभिनयकृतः नर्तकाः भावाभिनयकृतः शास्त्रविदः प्रयोगशास्त्रविदः ॥ ७ ॥

८ ] ति० टी०–समीहन्तां कर्म कुर्वन्नित्यब्रवीदिति पूर्वेणान्वयः । यज्ञकर्मेत्यस्य निर्वर्तयितुमिति शेषः ॥ ८ ॥

रा० टी०–शुचीञ्छुद्धान् शास्त्रविदः यागप्रतिपादकशास्त्रेष्वतिनिपुणांश्च सुबहुश्रुतान्पुरुषांश्चाब्रवीदिति पूर्वेणैवान्वयः अत्राव्ययानि चार्थानि तद्धीनेष्वप्याद्दत्याऽन्वेतव्यानि ॥ ८ ॥

गो० टी०–अथाज्ञापनप्रकारमाह अष्टभिः–यज्ञकर्मेत्यादि

---

१ विघ्नेति गो. रा. पाठः । २ विघ्नः क्रियते इति गो. रा. पाठः ।

इष्टका बहुसाहस्री शीघ्रमानीयतामिति । उपकार्याः[1] क्रियन्तां च राज्ञो बहुगुणान्विताः ॥ ९ ॥
ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः । भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ॥ १० ॥
तथा पौरजनस्यापि कर्तव्याश्च सुविस्तराः[2] । आगतानां सुदूराच्च पार्थिवानां पृथक्पृथक् ॥ ११ ॥
वाजिवारणशालाश्च तथा शय्यागृहाणि च । भटानां महदावासा वैदेशिकनिवासिनाम् ॥ १२ ॥
आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः । तथा पौरजनस्यापि[3][4] जनस्य बहुशोभनम् ॥ १३ ॥
दातव्यमन्नं विधिवत्सत्कृत्य न तु लीलया । सर्वे[5] वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १४ ॥
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि । यज्ञकर्मसु[6] ये व्यग्राः पुरुषाः शिल्पिनस्तथा ॥ १५ ॥
तेषामपि विशेषेण पूजा कार्या यथाक्रमम् । ये स्युः संपूजिताः सर्वे वसुभिर्भोजनेन च ॥ १६ ॥

ऋत्विजः प्रत्याह यज्ञकर्मेति समीहन्तां व्याप्रियन्ताम्।शिल्पकरान् प्रत्याह-**इष्टकेति**।जात्येकवचनम्। इत्यब्रवीदिति पूर्वेणान्वयः ८

९ ] **ति० टी०–इष्टका इति** । बहुसाहस्री । बहुसहस्रसंख्येया इत्यर्थः । जातावेकवचनम् । राज्ञो योग्या उपकार्या राजसद्मानि।गुणा अन्नपानाद्युपकरणानि सर्वत्राब्रवीदित्यनुकर्षः९

**रा० टी०–**वसिष्ठोक्तिमेवाह–**यज्ञेति** । भवन्तः सर्वे राजशासनात् राजाज्ञातः यज्ञकर्म समीहन्ताम् यागोपयोगिस्वस्वक्रियानिष्पाद्यं कर्म कुर्वन्तु इत्यर्थः तदेव विशिष्याह बहुसाहस्री बहुसहस्रसंख्या इष्टिका शीघ्रमानीयतामित्याह एकत्वं जात्यभ्युपगमात् ॥ ९ ॥

**गो० टी०–औपकार्या इति** सप्तश्लोकी एकान्वया । औपकार्या राजसदनानि स्वार्थे ष्यञ् ‘ राजसदनमुपकार्योपकारिका ’ इत्यमरः । बहुगुणान्विताः औन्नत्यविशालत्वादिबहुगुणान्विताः ब्राह्मणावसथा इति आर्षो लिङ्गव्यत्ययः ॥ ९ ॥

१०] **ति० टी०–**सुनिष्ठिता महावर्षवातादिनिवारणक्षमाः१०

**रा० टी०–औपकार्या इति** । राज्ञां निवासायेति शेषः बहुगुणान्विताः अनेकविधान्नपानादियुक्ता एव औपकार्या राजसद्मानि क्रियन्ताम् शुभा रमणीयाः भक्ष्या इति बहुभिः भक्ष्यान्नपानैः समुपेताः सुयुक्ताः सुनिष्ठिताः वातवर्षादिभिरभिभवितुमशक्याः शतशो ब्राह्मणावसथाः ब्राह्मणगृहाणि च कर्तव्याः चकारेण तत्र तत्र कूपादिनिर्माणं च क्रियतामित्यर्थः ‘ राजसदनमुपकार्योपकारिका ’ इत्यमरः । प्रज्ञादिभ्यश्चेत्यनेनात्राण् आवसथाश्चेति पुंस्त्वमार्षम् । सार्द्धश्लोक एकान्वयी ॥ १० ॥

**गो० टी०–**कठिनं फलादि भक्ष्यम् । सुनिष्ठिताः वातवर्षादिभिरप्रकम्प्याः ॥ १० ॥

११ ] **ति० टी०–**कर्तव्या इत्यस्यावासा इति शेषः । पार्थिवानामल्पमाण्डलिकानाम् ॥ ११ ॥

**रा० टी०–तथेति** । बहुविस्तराः बहुविस्तारयुक्ताः बहुभक्ष्याः भक्षणीयफलादिपूर्णाः सर्वकामैः ईप्सितनिखिलपदार्थैः उपस्थिताः संयुक्ताः पौरजनस्याप्यावासाः कर्तव्या एव तथाशब्देनात्रापि कूपादिनिर्माणं कार्यमित्यर्थः वैशब्द एवार्थे ॥ ११॥

१२ ] **ति० टी०–**वैदेशिकनिवासिनाम् । वैदेशिकानां स्वदेशनिवासिनां चेत्यर्थः । महदावासा इत्यत्रात्वाभाव आर्षः १२

१३ ] **ति० टी०–**सर्वकामैरुपस्थिताः काम्यमानैः सर्वपदार्थैर्युक्ताः । जनस्येतरक्षुद्रजनस्यापि बहुशोभनं यथा भवति तथावासाः कार्या इत्यर्थः ॥ १३ ॥

**रा० टी०–पौरेति** । बहुशोभनमतिस्वाद्वन्नं सत्कृत्य पौरजानपदस्य जनस्य पौरजानपदजनेभ्यो विधिवद्दातव्यम् अपिशब्दः तत्रागतजनान्तरसंग्राहकः लीलया विलासबुद्ध्या नतु नैव दातव्यम् यथा येन प्रकारेण सर्ववर्णाश्रमाः सुसत्कृताः सन्तः पूजां प्राप्नुवन्ति तथा तेन प्रकारेण कार्यमिति शेषः । षष्ठी सम्बन्धसामान्यविवक्षया ॥ १२ ॥

**गो० टी०–**सर्वकामैः स्रक्चंदनादिभिः उपस्थिताः संयुक्ताः बहु अधिकं विधिवत् यथाविधि सत्कृत्य गन्धादिभिरभ्यर्च्य लीलया अनादरेणेत्यर्थः ॥ ११ ॥

१४–१५ ] **ति० टी०–दातव्यमिति**।सत्कृत्य परलोकप्रयोजनबुद्ध्या शास्त्रोक्तसत्कारपूर्वकं देयमित्यर्थः न तु लीलयोत्सवमात्रबुद्ध्यनादरेण । यथा पूजां प्राप्नुवन्ति पूजां मन्यन्ते तथा सुसत्कृताः । कार्या इत्यर्थः ॥ १४ ॥ १५ ॥

**रा० टी०–न चेति** । कामक्रोधवशात् अपिना विलासात् अवज्ञा अनादरः न प्रयोक्तव्या नैव कर्तव्या ये यज्ञकर्मसु यागोपयोगिक्रियासु व्यग्राः तदेकचित्ताः पुरुषाः शिल्पिनः चित्रादिनिर्मातारश्च तथाशब्दश्चार्थे ॥ १३ ॥

**गो० टी०–**यथा पूजां प्राप्नुवन्ति तथा कर्तव्यमित्यर्थः।कामक्रोधवशात् स्नेहद्वेषवशात् अपिशब्देन लीला समुच्चीयते१२--१३

१६ ] **ति० टी०–तेषामपीति** । अपिस्त्वर्थे । यथाक्रमं ज्येष्ठानुक्रमेण । तत्रोपपत्तिमाह–ये वसुभिर्धनैर्भोजनादिभिश्च पूजिताः सेवकास्तेषां सर्वं कार्यं सुविहितं भवति । किंचिदपि कार्यं न परिहीयते न हीनं भवति । तस्मान्मयि प्रीतियुक्तेन चित्तेन भवन्तस्तथा कुर्वन्तु यथा सर्वे सुहृदस्ते च शिल्प्यादयश्च वस्त्रादिभिः पूजिनाः स्युरिति ॥ १६ ॥

**रा० टी०–तेषामिति** । तेषां यथाक्रमं विशेषेण पूजा

१ औपकार्या इति गो. रा पाठः । २ बहुविस्तरा इति गो. रा. पाठः । ३ इतआरभ्यसार्धश्लोको गो. रा. पुस्तकयोर्न दृश्यते । ४ जानपदस्यापि इति गो. पौरजानपदस्यापीति रा. पुस्तके पाठः । ५ सर्ववर्णा इति गो. रा. पाठः । ६ कर्मणीति गो. पाठः ।

यथा सर्वं सुविहितं न किंचित्परिहीयते । तथा भवन्तः कुर्वन्तु प्रीतिर्युक्तेन चेतसा ॥ १७ ॥
ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन् । यथेष्टं तत्सुविहितं न किंचित्परिहीयते ॥ १८ ॥
यथोक्तं तत्करिष्यामो न किंचित्परिहास्यते । ततः सुमन्त्रमाहूय वसिष्ठो वाक्यमब्रवीत् ॥ १९ ॥
निमन्त्रयस्व नृपतीन्पृथिव्यां ये च धार्मिकाः । ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैव सहस्रशः ॥ २० ॥
समानयस्व सत्कृत्य सर्वदेशेषु मानवान् । मिथिलाधिपतिं शूरं जनकं सत्यवादिनम् ॥ २१ ॥
[निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् । ]
तमानय महाभागं स्वयमेव सुसत्कृतम् । पूर्वं संबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २२ ॥
तथा काशिपतिं स्निग्धं सततं प्रियवादिनम् । सद्वृत्तं देवसंकाशं स्वयमेवानयस्व ह ॥ २३ ॥

कार्या अपिशब्देनातिथ्यभ्यागतादिसंग्रहः वसुभिर्धनैर्भोजनेन च सम्भृतास्ते स्युः चकारान्तरेण सक्तिसंग्रहः । ये स्युः सम्पूजिताः सर्वे इति भट्टसंमतः पाठः ॥ १४ ॥

गो० टी०—विशेषेण अत्यादरेणेत्यर्थः । यथाक्रमं यथावद्धं ते चेत्यत्र चशब्दो भिन्नक्रमः ते भोजनेन वसुभिः धनैश्च संभृतास्तृप्ताश्च स्युः ॥ १४ ॥

१७]रा० टी०—यथेति।यथा येन प्रकारेण सर्वं कृत्यं सुविहितं सुष्ठु साधितं स्यात् किंचित्कृत्यं न परिहीयते विधिना न परित्यज्यते न्यूनतां न प्राप्नोति तथा तेन प्रकारेण प्रीतिस्निग्धेन स्नेहार्द्रेण चेतसोपलक्षिता भवंतः कुर्वन्तु प्रीतियुक्तेनेति भट्टसंमतः पाठः ॥ १६ ॥

गो० टी०—सर्वमपि यथा सुविहितं सुष्ठु अनुष्ठितं स्यात् किंचिदपि न परिहीयते न त्यक्ष्यते प्रीतिस्निग्धेन स्नेहार्द्रेण ॥ १६ ॥

१८]रा० टी०—तत इति। ततः वशिष्ठाज्ञापनश्रवणानन्तरं सर्वे वसिष्ठाज्ञप्ताः समागम्य वशिष्ठमिदं वचनमब्रुवन् । तदुक्तिमेवाह तत्प्रसिद्धं यथा यथावत् उक्तं भवद्वचनं सुविहितं वेदबोधितं अतः किंचिद्भवदुक्तं न परिहीयते विधिना न परित्यज्यते न्यूनतां न प्राप्नोतीत्यर्थः ॥ १६ ॥

गो० टी०—यथोक्तप्रवृत्तिं दर्शयति—तत इति । तत्पूर्वोक्तकार्यजातम् एवमुपकरणनिष्पत्त्यनन्तरं राजाह्वानमाज्ञापयति—तत इत्यादिना ॥ १६ ॥ १७ ॥

१९–२० ] ति० टी०—यथोक्तमिति । यत्त्वयोक्तं तद्यथोक्तं त्वदुक्तानतिक्रमेण सुविहितम् । न किंचित्तत्र लुप्यत इति शेषः। किंचोक्तम् भावे क्तः वचनं यथा कथयिष्यसि तच्च तथैव करिष्यामः । तत्रापि न किंचिद्धीनं भविष्यति । ततो नियोजनानन्तरम् ॥ १९ ॥ २० ॥

रा० टी०—यथेति । तदुक्तं भवदाज्ञापितं तत्कृत्यं यथा यथावत्करिष्यामः यतः किञ्चिदपि कृत्यं परिहीयते विधिना न परित्यज्यते ॥ १७ ॥

रा० टी०—तत इति । ततः अङ्गीकारवचनश्रवणानन्तरं सुमन्त्रमानीय वसिष्ठः वाक्यमब्रवीत् तद्वाक्यमेवाह ये पृथिव्यां धार्मिकाः नृपतयः तान्नृपतीन् निमन्त्रयस्व चकारेणान्यानपि निमन्त्रयस्व ॥ १८ ॥

गो० टी०—निमन्त्रयस्व आहूय ॥ १८ ॥

रा० टी०—[illegible]—ब्राह्मणानित्यादिभिः । सर्वदेशेषु विद्यमानान् सहस्रशो ब्राह्मणादीन्मानवान [illegible]नपि सुसत्कृत्य समानयस्व ॥ १९ ॥

गो० टी०—ब्राह्मणानिति। सर्वदेशेषु स्थितानिति शेषः॥१९

२१ ] ति टी०—मानवाश्चतुर्वर्णातिरिक्ताः संकरादयः॥२१।

रा० टी०—मिथिलेति । शूरं शौर्यविशिष्टं सत्यविक्रमं कापट्यरहितविक्रमविशिष्टं सर्वशास्त्रे सुनिष्ठितम् निपुणं तथा तेन प्रकारेण वेदेषु निष्ठितं महाभागं परमभाग्यवन्तं पूर्वसम्बन्धिनं दशरथनिरूपितनित्यसम्बन्धविशिष्टं तं प्रसिद्धं मिथिलाधिपतिं जनकं सुसत्कृतं यथा भवति तथा स्वयमेव ततो मिथिलातः पूर्वं प्रथममानय इति ज्ञात्वा विचार्याहं ते तुभ्यं ब्रवीमि ज्ञात्वा ब्रवीमीत्यनेन वसिष्ठस्य रघुनाथनित्यपरिकरस्थत्वं व्यक्तम् पूर्वसंबन्धिनमित्यनेन जनकस्यापि तत्त्वं व्यक्तम् ॥ २० ॥ २१ ॥

गो० टी०—मिथिलेति श्लोकद्वयम् । तं प्रसिद्धं स्वयमेव नतु दूतमुखेन पूर्वसंबंधिनं चिरन्तनसुहृदं ततः पूर्वोक्तेभ्यो नृपतिभ्यः ॥ २० ॥ २१ ॥

२२–२३] ति० टी०—तमिति । मिथिलाधिपं स्वयमेव । आनयेति संबन्धः । न तु दूतमात्रप्रेषणेन । कुत एवं विशेषः कुतश्च तदानयनस्य प्रथममुपदेशस्तत्राह—पूर्वं संबन्धिनं पूर्वस्मिन्नेव काले भाविनं संबन्धिनम् । समस्तपाठे मयूरव्यंसकादित्वात्समासः । तं योगबलेन ज्ञात्वा । ततो हेतोर्भाविसंबन्धित्वाद्धेतोः सर्वेभ्यः पूर्वं पूर्वकाले तदानयनं ब्रवीमीत्यर्थः २१

रा० टी०—तथेति ॥ २२ ॥

गो० टी०—तथेति । स्वयमेव गमनहेतवो विशेषणानि २२

रा० टी०—तथेति । केकयराजानमित्यत्र समासान्तविधेरनित्यत्वाट्टजभावः । राजसिंहस्य दशरथस्य ॥ २३ ॥

१ तेचस्युः संभृता इति गो. रा. पाठः । २ स्निग्धेनेति गो. रा. पाठः । ३ यथोक्तमिति गो. रा. पाठः । ४ हीयत इति रा. पाठाः । ५ मानीयेति गो. रा. पाठः । ६ सत्यविक्रममिति गो. रा. पाठः । ७ इत्यर्धमधिकं गो. रा. पुस्तकयोर्दृश्यते ।

तथा केकयराजानं वृद्धं परमधार्मिकम् । श्वशुरं राजसिंहस्य सपुत्रं तमिहानय ॥ २४ ॥
अङ्गेश्वरं महे[1]ष्वासं रोमपादं सुसत्कृतम् । वयस्यं राजसिंहस्य सपुत्रं तमिहानय ॥ २५ ॥
त[3]था कोसलराजानं भानुमन्तं सुसत्कृतम् । मगधाधिपतिं शूरं सर्वशास्त्रविशारदम् ॥ २६ ॥
मागधं परमोदारं सत्कृतं पुरुषर्षभम् । राज्ञः शासनमादाय चोदयस्व नृपर्षभान् ॥
प्राचीनान्सिन्धुसौवीरान्सौराष्ट्रेयांश्च पार्थिवान् ॥ ॥ २७ ॥
दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह । सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ॥२८॥
तानानय यथा क्षिप्रं सानुगान्सहबान्धवान् । एतान्दूतैर्महाभागैरानयस्व नृपाज्ञया ॥ २९ ॥
वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितं तदा । व्यादिशत्पुरुषांस्तत्र राज्ञामानयने शुभान् ॥ ३० ॥
स्वयमेव हि धर्मात्मा प्रयातो मुनिशासनात् । सुमन्त्रस्त्वरितो भूत्वा समानेतुं महामतिः ॥ ३१ ॥
ते च कर्मान्तिकाः सर्वे वसिष्ठाय महर्षये । सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ॥ ३२ ॥
ततः प्रीतो द्विजश्रेष्ठस्तान्सर्वान्मुनिरब्रवीत् । अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ॥ ३३ ॥

२४–२६ ] ति० टी०–केकयराजानमित्यनित्यत्वात्समासान्ताभावः ॥ २४–२६ ॥

गो० टी०–तथेति । केकयराजानमिति समासान्तविधेरनित्यत्वाट्टजभावः ॥ २३ ॥

रा० टी०- अङ्ग इति ॥ २४ ॥

गो० टी०–अङ्गेति । समानय त्वमेवेति शेषः ॥ २४ ॥

२७–२८ ] ति० टी०–सत्कृतं यथा भवति तथा । आनयस्वेति शेषः । प्राचीनान्प्राग्देशवर्तिनः । सौराष्ट्रे भवानित्यर्थे ढगार्षः ॥ २७ ॥ २८ ॥

रा० टी०–प्राचीनानिति । प्राचीनान्प्राग्देशसंभवान् २९

गो० टी०–प्राचीनानिति । प्राचीनान् प्राग्देशवर्तिनः सिन्धुदेशे सौवीरदेशे च भवाः सिन्धुसौवीराः सौराष्ट्रेयान् सुराष्ट्रदेशभवान् दाक्षिणात्यान् दक्षिणदेशभवान् आनयस्व दूतमुखेनेति शेषः ॥ २९ ॥

रा० टी०–सन्तीति । स्निग्धाः स्नेहयुक्ताः ॥ २६ ॥

गो० टी०–सन्तीति । यथाक्षिप्रं शैघ्र्यमनतिक्रम्य ॥२६॥

२९–३० ] ति० टी०–यथा यथायोग्यदूतप्रेषणेन २९।३०

रा० टी०–वशिष्ठेति । तदा वसिष्ठाज्ञापनकाले तत्प्रसिद्धं वसिष्ठवाक्यं श्रुत्वा त्वरितः त्वरां प्राप्तः सुमन्त्रः तत्र वसिष्ठाज्ञापिते राज्ञामानयने शुभान्निपुणान्पुरुषान् व्यादिशत् ॥ २७ ॥

गो० टी०–वसिष्ठेति । शुभान् अन्तरङ्गान् ॥ २७ ॥

३१ ] ति० टी०–स्वयमेवेति । वसिष्ठेन विशिष्योक्तानिति शेषः ॥ ३१ ॥

रा० टी०–सामान्यराजानानेतुं पुरुषान्नियुज्य वसिष्ठोपदिष्टविशेषराजानानेतुं सुमन्त्रः स्वयं जगामेत्याह–स्वयमिति । धर्मात्मा परमधर्मज्ञः सुमन्त्रः मुनिशासनाद्वसिष्ठाज्ञापनात् त्वरितो भूत्वा महीक्षितः वसिष्ठोपदिष्टराजविशेषान् समानेतुं प्रयातः ॥ २८ ॥

गो० टी०–स्वयमिति । महीक्षितः वसिष्ठेन विशिष्योक्तान् ॥ २८ ॥

३२ ] ति० टी०–ते चेति । पूर्वंनियुक्ता इत्यर्थः । 'वसिष्ठाय महर्षये' इति पाठः ॥ ३२ ॥

रा० टी०–ते चेति । पूर्वं वसिष्ठाज्ञापिताः सर्वे कर्मान्तिका आसमाप्तिकर्मनिर्वर्तकाः महर्षये वसिष्ठाय यत् यज्ञे उपकल्पितं संपादितं तत्सर्वं निवेदयन्ति स्म चकारेणान्येऽपि तदाज्ञापिताः संपादितं स्वस्वकार्यं निवेदयन्ति स्म ॥ २९ ॥

गो० टी०–ते चेति । उपलक्षणमेतत् शिल्पकरादीनां यज्ञे यज्ञनिमित्तं यदुपकल्पितं निर्मितं तत्सर्वं निवेदयन्ति स्म अवश्यं शिक्षणीयांशं पुनः शिक्षयति ततः प्रीत इति । अर्धमेकान्वयम् ॥ २९ ॥

३३ ] ति० टी०–अवज्ञयानादरेण । लीलयाश्रद्धया । आवश्यकत्वादेतत्पुनः शिक्षितम् ॥ ३३ ॥

रा० टी०–तत इति । ततः सम्पादितसर्ववस्तुश्रवणात्प्रीतः प्रसन्नो द्विजश्रेष्ठो वसिष्ठः तान् स्वस्वकृत्यनिवेदयितॄन्सर्वान् पुनरब्रवीत् तदुक्तिमेवाह अवज्ञयाऽनादरेण लीलया विलासबुद्ध्या वा कस्यचित् कस्मैचित् नैव दातव्यम् अपिरेवार्थे अवज्ञया दाने दोषमाह अवज्ञया अनादरेण कृतं दानं दातारं हन्यात् अत्र संशयः संदेहो न कार्यः एतेन वसिष्ठस्य वेदमर्यादापालकत्वं ध्वनितम् ॥ ३० ॥

गो० टी०–अवज्ञयेति । लीलया विनोदेन ॥ ३० ॥

१ महाभाममिति गो. रा. पाठः । २ समानय यशस्विनमिति गो. रा. पाठः । ३ इदं श्लोकद्वयं गो. रा. पुस्तकयोर्नास्ति । ४ इदमर्धं गो. रा. पुस्तकयोर्नास्ति । ५ प्रययाविति गो. पाठः । ६ महीक्षित इति गो. रा. पाठः । ७ धीमते इति गो. पाठः । ८ पुनरिति गो. रा. पाठः ।

अवज्ञया कृतं हन्याद्दातारं नात्र संशयः । ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ॥ ३४ ॥
बहूनि रत्नान्यादाय राज्ञो दशरथस्य हे[1] । ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ॥ ३५ ॥
उपयाता नरव्याघ्र राजानस्तव शासनात् । मयापि[2] सत्कृताः सर्वे यथार्हं राजसत्तम[3] ॥ ३६ ॥
यज्ञियं च कृतं सर्वं[4] पुरुषैः सुसमाहितैः । निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकात् ॥ ३७ ॥
सर्वकामैरुपहृतैरुपेतं वै समन्ततः । द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ॥ ३८ ॥
तथा वसिष्ठवचनादृष्य[5]शृङ्गस्य चोभयोः । दिवसे[6] शुभनक्षत्रे निर्यातो जगतीपतिः ॥ ३९ ॥
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः । ऋष्य[7]शृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥ ४० ॥
यज्ञवाटं[8] गताः सर्वे यथाशास्त्रं यथाविधि । श्रीमांश्च सह पत्नीभी राजा दीक्षामुपाविशत्[9]॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

३४ ] ति० टी०—तदेवाह—अवज्ञयेति ॥ ३४ ॥

रा० टी०—तत इति । ततः सुमन्त्रादिगमनानन्तरं कैश्चिदहोरात्रैः कतिपयदिवसैः बहूनि रत्नान्यादाय उपायनं गृहीत्वैव राज्ञो दशरथस्य समीपे महीक्षितः राजान उपयाताः प्राप्ताः॥३१॥

गो० टी०—तत इति । ततः दशरथनिर्गमनानन्तरं रत्नानि श्रेष्ठवस्तूनि मणिमुक्ताप्रवालवस्त्राभरणचन्दनादीनि ॥ ३२ ॥

३५–३६ ] ति० टी०—रत्नान्युत्तमवस्तूनि ॥ ३५ ॥

रा० टी०—तत इति । ततः राजागमनानन्तरं सुप्रीतो अतिप्रसन्नचित्तः वसिष्ठः राजानं दशरथं हे नरव्याघ्र पुरुषसिंह तव शासनात् आज्ञापनात् राजान उपयाताः प्राप्ताः इति अब्रवीत् अकथयत् ॥ ३२ ॥

गो० टी०—तत इति । स्पष्टम्॥ ३२ ॥

रा० टी०—मयेति । हे राजन् सर्वे आगता राजसत्तमा मया ये सत्कृताः चकारेणान्येऽपि यथार्हं समागतास्ते सत्कृता इत्यर्थः सुसमाहितैः सावधानैः पुरुषैर्यज्ञियं यज्ञोपयोगि वस्तु कृतं संपादितं वस्तुजातमित्यर्थः ॥ ३३ ॥

गो० टी०—मयेति । यज्ञमर्हति इति याज्ञियम् "यज्ञर्त्विग्भ्यां घखञौ" इति घः यज्ञाय यत्संपाद्यं तत्सर्वं संपादितमित्यर्थः३३

३७ ] ति० टी०—यज्ञियं यज्ञोपयोगि स्रुक्स्रुवादिसंभाररूपम् । अन्तिकात् । समीपे वर्तमानमित्यर्थः ॥ ३७ ॥

रा० टी०—निरिति । उपहृतैर्जनैरानीतैः सर्वकामैः समन्ततः उपेतं युक्तं यज्ञायतनं यज्ञशालां यष्टुं भवान् निर्यातु हे राजेन्द्र मनसा इव विनिर्मितं शीघ्रं संपादितं अन्तिकादेव द्रष्टुमर्हसि । सार्धश्लोक एकान्वयी एवशब्द इवार्थे वैशब्द एवार्थे३४

गो० टी०—निर्यात्विति । अन्तिकात्समीपे "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारेण पञ्चमी । समीपे उपहृतैः सर्वकामैः सर्वोपकरणैरुपेतम् ॥ ३४ ॥

३८ ] ति० टी०—मनसेवेति । क्षिप्रसिद्धत्वोपकरणसौष्ठवज्ञापनायोत्प्रेक्षेयम् ॥ ३८ ॥

गो० टी०—द्रष्टुमित्यर्थमेकान्वयम् । मनसेवेति क्षिप्रसिद्धत्वे दृष्टान्तः ॥ ३५ ॥

३९ ] ति० टी०—वसिष्ठवचनादित्यत्र वसिष्ठेति लुप्तविभक्तिकं पृथक्पदम् । वसिष्ठस्य ऋष्यशृङ्गस्य च प्रत्येकमुभयोश्च मिलितयोर्वचनात् ॥ ३९ ॥

रा० टी०—तथेति । वसिष्ठस्य ऋष्यशृङ्गस्य च उभयोर्वचनादेव शुभे ज्योतिश्शास्त्रसंमते दिवसनक्षत्रे जगतीपतिः राजा निर्यातः यागशालां प्राप्तः तथाशब्द एवार्थे ॥ ३५ ॥

गो० टी०—तथेति । वसिष्ठेत्यविभक्तिको निर्देशः वसिष्ठस्य ऋष्यशृङ्गस्य चोभयोरित्यर्थः । ऋष्यशृङ्गस्य ब्रह्मत्वेन वृतत्वात्तद्वचनमप्यपेक्षितम् । शुभे दिवसे सोमसौम्यवारादौ शुभे नक्षत्रे रोहिण्यादौ निर्यातः गृहात् यज्ञशालां प्रति इत्यर्थसिद्धम् । अत्राहुः शङ्खदुन्दुभिमृदङ्गवादनैर्मङ्गलैः पटहकाहलादिभिः । स्वस्तिवादमुखरैर्मखक्षितिं ब्राह्मणैश्च सह संप्रपद्यत इति ॥३६॥

४० ] ति० टी०—आरभन्नितिच्छान्दसम् ॥ ४० ॥

४१ ] ति० टी०—यज्ञवाटमित्यर्धं पूर्वान्वयि । शास्त्रं कल्पसूत्रादि विधिस्तदुक्तप्रकारः ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-
आदिकाव्ये बालकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०—तत इति । ततः राजागमनानन्तरं वसिष्ठप्रमुखाः वसिष्ठादयः सर्वे द्विजोत्तमाः तदा राजागमनकाले ऋष्यशृङ्गं पुरस्कृत्यैव यज्ञवाटं यज्ञशालां गताः प्राप्ताः सन्तः यथाशास्त्रं शास्त्रमनतिक्रम्य यथाविधि यथाक्रमं यज्ञकर्म आरभन् आरभन्त ॥ ३६ ॥ ३७ ॥

इतिश्रीमद्रामायणव्याख्याने रामायणशिरोमणौ
बालकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०—तत इति । सार्धश्लोकः । आरभन्निति छान्दसः यज्ञवाटगताः सर्वे यजमानर्त्विगादयः यथाविधि यथाक्रमं यथाशास्त्रं सर्वे यज्ञकर्मारभन् स्वस्वकर्मारभन्तेत्यर्थः ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१ हीति गो. रा. पाठः । २ मया चेति गो. रा. पाठः । ३ सत्तमा इति गो. रा. पाठः । ४ राजन्निति गो. रा. पाठः । ५ ऋश्येति गो. पाठः । ६ शुभे दिवसनक्षत्र इति गो. रा. पाठः । ७ ऋश्यति गो. पाठः । ८ वाटगता इति गो. पाठः । ९ इदमर्धं गो. रा. पुस्तकयोर्न दृश्यते ।

# चतुर्दशः सर्गः ।

दशरथस्य हयमेधस्य वर्णनम्, ऋष्यश्रृङ्गाच्चतुःसुतभवनवरप्राप्तिः ।

अथ संवत्सरे पूर्णे तस्मिन्प्राप्ते तुरङ्गमे । सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥
ऋष्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः । अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २ ॥
कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः । यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३ ॥
प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः । चक्रुश्च विधिवत्सर्वमधिकं कर्म शास्त्रतः ॥ ४ ॥
अभिपूज्य तदा[१] हृष्टाः सर्वे चक्रुर्यथाविधि । प्रातःसवनपूर्वाणि कर्माणि मुनिपुंगवाः ॥ ५ ॥

१ ] ति० टी०—अथेति । अश्वोत्सर्गानन्तरम् । वर्षे पूर्णे तस्मिन्नश्वे सदः प्राप्ते सति कर्म प्रावर्ततेत्यर्थः । अत्र त्रिंशद्दिनात्मकसावनमासपरिच्छिन्नो वत्सरः ॥ १ ॥

रा० टी०—अथेति । अथ तुरङ्गोत्सर्जनानन्तरं पूर्णे संवत्सरे तस्मिन्नुत्सृष्टे तुरङ्गमे प्राप्ते क्रमेण यज्ञशालामागते सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत उपाक्रामत् ॥ १ ॥

गो० टी०—पूर्वसर्गान्ते शालाप्रवेशानन्तरमश्वमेधारम्भः संग्रहेण दर्शितः । तदनुष्ठानं विस्तरेण दर्शयिष्यन् तस्याश्वागमनपूर्वकत्वात्तदनुवादपूर्वकं यज्ञानुष्ठानं दर्शयति चतुर्दशे—अथेत्यादि । अथ अश्वविमोचनानन्तरं तुरङ्गमे प्राप्ते क्रमेण प्राप्ते तस्मिन्संवत्सरे पूर्णे राज्ञो यज्ञः अभ्यवर्तत प्रावर्तत अश्वागमनक्रमस्तु विमुक्तमश्वं स्वैरं चरन्तं राजपुत्रा राजोग्रसूतग्रामणिक्षत्रसंग्रहितारश्चतुःशताः परिपालयन्तो नावर्तयन्तोऽनुचरन्ति ब्रह्माध्वर्युहोतृद्गातारश्चत्वार ऋत्विजस्तं रथकारगृहे समानीय बद्ध्वा तस्य चतुर्षु पदेषु इह धृतिस्वाहेत्याद्याहुतिचतुष्टयं जुह्वति । तथाहुः ‘ रथकारगृहेऽश्वस्य वसतः सायमस्य तु ॥ चतुर्षु पत्सु होतव्याश्चतस्रो धृतयः क्रमात् ’ इति अथैकादशमासादूर्ध्वं तं सदस्याः समानीय आश्वत्थे व्रजे बध्नन्ति तथाह आपस्तम्बः “ ऊर्ध्वमेकादशान्मासादाश्वत्थे व्रजेऽश्वं बध्नीयात् ” इति ततो द्वादशे मासे शालानिर्माणादिसकलसंभारान्संभृत्य फाल्गुनामावास्यायामृत्विग्भिः शालां प्रविश्य प्रतिपदमारभ्याश्वमेधं प्रारभन्ते ॥ १ ॥

२ ] ति० टी०—ऋष्यशृङ्गमिति । अनेन प्रधानार्त्विज्यं ब्रह्मत्वं तस्य गम्यत इति कतकः । अग्रे पुत्रेष्टाविष्टिं तेऽहं करिष्यामीति ऋष्यश्रृङ्गोक्तेः ‘ जुहावाग्नौ च तेजस्वी ’ इति ऋष्यश्रृङ्गं प्रक्रम्य वाल्मीक्युक्तेश्चाध्वर्यवमस्येति युक्तम् ॥ २ ॥

रा० टी०—ऋष्येति । सुमहात्मनः अतिप्रयत्नविशिष्टस्यास्य त्रिलोक्यां प्रसिद्धस्य राज्ञो दशरथस्य महायज्ञेऽश्वमेधे द्विजर्षभाः ब्राह्मणाः ऋष्यश्रृङ्गं पुरस्कृत्य कर्म स्वस्वोचितकृत्यं चक्रुः ऋष्यश्रृङ्गंपुरस्कृत्येत्यनेन तस्य प्रधानऋत्विक्त्वं ध्वनितम् २

गो० टी०—ऋष्यश्रृङ्गमिति । अनेन प्रधानार्त्विज्यं ब्रह्मत्वं तस्येति गम्यते ॥ २ ॥

३ ] ति० टी०—कर्मेति । वेदपारगा अधीतस्य वेदस्य पारं फलवदर्थावबोधं गच्छन्ति प्राप्नुवन्ति ते याजका ऋत्विजः । यथाविधि कल्पसूत्रार्थकश्रुत्यनतिक्रमेण । न्यायोऽत्र तन्निर्वाहिका पूर्वमीमांसा । तं चानतिक्रम्य परिक्रामन्ति शास्त्रोक्तस्वस्वक्रियाक्रमकालमविस्मृत्य प्रवर्तन्ते ॥ ३ ॥

रा० टी०—कर्मेति । वेदपारगाः निखिलवेदतत्वावगन्तारो याजका ऋत्विजः कर्म यागोचितस्वस्वकृत्यं विधिवत्कुर्वन्ति यथाविधि विधिमनतिक्रम्य यथान्यायं मीमांसकोक्तक्रममनतिक्रम्य शास्त्रतः शिक्षयायुक्ताः शिक्षां कुर्वन्त इत्यर्थः ॥ ३ ॥

गो० टी०—प्रतिपदमारभ्य सप्तसु दिनेषु कर्तव्यान् “ त्रीणि त्रीणि वैश्वदेवानि जुहोति ” इति विहितानेक विंशतिहोमान् “ पूर्णाहुतिमुत्तमां जुहोति ” इति विहितं कर्मविशेषं च अभिप्रेत्याह—कर्म कुर्वन्तीति । याजकाः ऋत्विजः वेदपारं तदर्थावबोधः तद्गच्छन्तीति वेदपारगाः कर्म पूर्वोक्तं विधिवत्कुर्वन्ति स्म यथाविधि यथावेदोक्तं यथान्यायं यथामीमांसं शास्त्रतः कल्पसूत्रानुसारेण परिक्रामन्ति प्रचरन्ति नासंस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोतीयादित्याद्युक्तक्रममतिलङ्घ्य ऋत्विजो—न विहरन्तीत्यर्थः ॥ ३ ॥

४ ] ति० टी०—प्रवर्ग्यमारादुपकारकं कर्मविशेषम् । उपसदमिष्टिविशेषम् । अधिकं प्रकृत्युपदिष्टाङ्गातिदेशात्तत्तद्विकृत्यपेक्षितो विशेषोऽधिकं कर्म ॥ ४ ॥

रा० टी०— परिक्रामन्ति प्रवर्तन्ते । प्रवर्ग्यमिति द्विजा ब्राह्मणाः प्रवर्ग्यं अश्वमेधाङ्गभूतकर्मविशेषं उपसदमिष्टिविशेषं च शास्त्रतः मीमांसाद्यनुसारेणैव कृत्वा शास्त्रतः साक्षादुपदिष्टात् अधिकमतिदिष्टं सर्वं कर्म च विधिवच्चक्रुः सम्पादयामासुः तथाशब्दश्चार्थे ॥ ४ ॥

गो० टी०—अथ सोमक्रयानन्तरं सोमराजाप्यायनकर्मविशेषान् दर्शयति—प्रवर्ग्यमिति । द्विजा ऋत्विजः प्रवर्ग्यं “ देवा वै सत्रमासत ” इत्यादिप्रवर्ग्यब्राह्मणोक्तं कर्मविशेषं शास्त्रतः विधिमीमांसाकल्पसूत्रानुसारेण कृत्वा उपसदं इष्टिविशेषं तथैव शास्त्रत एव कृत्वा शास्त्रतः उपदेशशास्त्रात् अधिकमतिदेशतः प्राप्तं सर्वं कर्म च चक्रुः तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति प्राप्ता द्वादशप्रवर्ग्योपसदश्चक्रुरित्यर्थः ॥ ४ ॥

५ ] ति० टी०—अभिपूज्येति । तत्तत्कर्माङ्गदेवता-

१ ततो हृष्टा इति गो. रा. पाठः ।

ऐन्द्रश्च विधिवद्दत्तो राजा चाभिषुतोऽनघः । माध्यंदिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥
तृतीयसवने चैव राज्ञोऽस्य सुमहात्मनः । चक्रुस्ते शास्त्रतो दृष्ट्वा यथा ब्राह्मणपुंगवाः ॥ ७ ॥
आह्वयांचक्रिरे तत्र शक्रादीन्विबुधोत्तमान् । ऋष्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ॥ ८ ॥
गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः । होतारो ददुरावाह्य हविर्भागान्दिवौकसाम् ॥ ९ ॥
न चाहुतमभूत्तत्र स्खलितं वा न किंचन । दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ १० ॥

मिति शेषः । यथा यथाविधि । प्रातःसवनादि कर्मविशेषः ॥५॥

रा० टी०–अभीति । अभिपूज्य तत्तद्देवतापूजनं विधाय ततः पूजनात् हृष्टाः सर्वे मुनिपुङ्गवाः प्रातःसवनपूर्वाणि प्रातःसवनप्रभृतीनि कर्मविशेषाणि यथाविधि चक्रुः ॥ ५ ॥

गो० टी०–अथ सोमप्रयोगं दर्शयति–अभिपूज्येति । बहिष्पवमानादिभिस्तत्तत्कर्मदेवता अभिपूज्य ततः प्रवर्ग्योपसदनावसाने प्रातःसवनपूर्वाणि प्रातःसवनमाध्यन्दिनसवनतृतीयसवनानि कर्माणि चक्रुः ॥ ५ ॥

६ ] ति० टी०–ऐन्द्र इन्द्रदेवताको हविर्भागो दत्तः । राजा सोमलता चाभिषुतो ग्रावभिः संक्षुद्य निःसारितसारः॥६॥

रा० टी०–ऐन्द्र इति । ऐन्द्रः इन्द्रदेवताको हविर्विशेषो विधिवद्दत्तः अनघः पापनिवर्तकः राजा सोमवल्ली अभिष्टुतः मन्त्रैर्यथाविधि प्रशंसितः अभिषुत इत्यपि पाठः अश्ममिरभिहत्य निस्सारितसारोऽभवदित्यर्थः माध्यन्दिनं सवनं च यथाक्रमं प्रावर्तत । अत्रार्थे सूत्रं सोमं राजानं दृषदि निधाय दक्षिणतो ब्रह्मा पश्चादध्वर्युः उत्तरतो होता प्रागुद्गाता स्थित्वा दृषद्भिर्हन्यात्॥६॥

गो० टी०–ऐन्द्र इति । ऐन्द्रः इन्द्रग्रहनिष्ठः सोमांशः स विधिवदिन्द्राय दत्तः अनघः पापनिवर्तकः राजा सोमराजः अभिष्टुतः स्तोत्रशस्त्रैः स्तुतः। यद्वा ऐन्द्रः इन्द्रदेवताको हविर्भागः धानाः करम्भः परिवापः पुरोडाशः पयस्येति प्रातःसवनहवींषि इन्द्राय हरिवते धानाः इन्द्रायपूषण्वते करम्भः सरस्वते परिवापः इन्द्राय पुरोडाशः मित्रावरुणाभ्यां पयस्येति होतव्यानीन्द्रस्येदित्येव । “ अथ कस्मादेतेषां हविषामिन्द्रमेव यजन्ति ” इत्यादिश्रुतेः माध्यन्दिनसायंतनसवनयोः पयस्यावर्जमन्यत्सर्वं समानम् । अभिषुत इति पाठे चतसृषु दिक्षु चतुर्भिः ऋत्विग्भिः पाषाणैरभिहत्य निःसारितसारा सोमलताऽभूदित्यर्थः । तथाहि सूत्रम् “सोमं राजानं दृषदि निधाय दक्षिणतो ब्रह्मा पश्चादध्वर्युरुत्तरतो होता प्रागुद्गाता स्थित्वा दृषद्भिरभिहन्यात् ” इति । अनघः अंशुस्कन्दनरहितः ॥ ६ ॥

७ ] ति० टी०–तृतीयेति । यथेत्यस्य यथाविधीत्यर्थः ७

रा० टी०–तृतीयेति । सुमहात्मनोऽस्य राज्ञो दशरथस्य तृतीयसवनं च ते ब्राह्मणपुङ्गवाः ब्राह्मणश्रेष्ठाः शास्त्रतो दृष्ट्वा ज्ञात्वा तथैव पूर्वोक्तप्रकारेणैव चक्रुः ॥ ७ ॥

गो० टी०–तृतीयेति । तथा शास्त्रप्रकारेण प्रातःसवनपूर्वाणीत्युक्तस्यैवायं प्रपञ्चः ॥ ७ ॥

८ ] ति० टी०–शिक्षाक्षरसमन्वितैः शिक्षाभ्यासकालस्तत्र गृहीतान्यक्षराणि शिक्षाक्षराणि तत्समन्वितैः । स्वरतो वर्णतश्चाहीनैरिति यावत् । ऋष्यशृङ्गादय इत्यत्रादिशब्दः प्रधानवाची ‘ भीष्मादिश्च सुयोधनः ’ इतिवत् ॥ ८ ॥

रा० टी०–आह्वयामिति । शिक्षाणि शिक्षितानि पाठनकाले गुरुणा बोधितानि एव अक्षराणि तैः समन्वितैः यथावत् स्वरवर्णविशिष्टैरित्यर्थः मन्त्रैः ऋष्यशृङ्गादयो विबुधोत्तमान् सुरश्रेष्ठान् शक्रादीन् तत्र यागे आह्वयाञ्चक्रिरे ॥ ८ ॥

९ ] ति० टी०–गीतिभिः सामभिः ॥ ९ ॥

रा० टी०–गीतिभिरिति । गीतिभिः यथोचितगानविशिष्टैर्मधुरैः मधुरस्वरविशिष्टैः स्निग्धैर्मनोरमैः मंत्राह्वानैः आह्वानमन्त्रैर्होतार आवाह्य दिवौकसामर्हतो योग्यान्हविर्भागान्ददुस्तेभ्यः समर्पयामासुः ॥ ९ ॥

१० ] ति० टी०–न चेति । अहुतमन्यथा हुतम् । स्खलितमज्ञानतो न किमपि कर्म त्यक्तम् । ब्रह्मवत् मन्त्रवत् क्षेमयुक्तं क्षेमो विध्यपराधराहित्यम् । यद्वा क्षेमो विघ्नराहित्यम् ॥ १० ॥

रा० टी०–नेति । तत्र तस्मिन्यागे अहुतं यथोक्तहुतविरुद्धं नाभूत् स्खलितं च्युतं च किंचन कर्म नाभूत् तत्र हेतुः सर्वं कर्म ब्रह्मवन्मन्त्रयुक्तं दृश्यते हि यतः क्षेमयुक्तमेव यथा स्यात्तथा चक्रिरे ॥ १० ॥

गो० टी०–न चेति । अहुतं स्खलितमन्यथा हुतं वा किंचन नाभूत् सर्वं होमादिकं ब्रह्मवत् मन्त्रवत् दृश्यते स्म हि यस्मात् क्षेमयुक्तं निर्विघ्नं चक्रिरे अत्रान्नहोमादिकमश्वमेधीयं सूचितम् तेषां बहुत्वेन स्खलित्यादिसंभावनया तत्परिहारस्य वक्तव्यत्वात् । तथाहुर्याज्ञिकाः ‘ पत्नीसंयजनान्तेऽहन्यग्निष्टोमे तु संस्थिते । प्रजापतिसमे गीते वीणागणिकिभिर्नृपे ॥ अस्तंगते सहस्रांशावारुण्याश्वत्थनिर्मिताः । षट्त्रिंशतमथासंदीप्तावन्तोध्वर्यवो वृताः ॥ अप्राकृतैः स्रुवैर्दीर्घदण्डैः खदिरसंभवैः । सर्वां तां रात्रिमन्नानि दशाज्यादीनि जुह्वति ॥ संख्याहुतीस्ताः सकृदेव हुत्वा परार्द्धपर्यन्तमथ क्रमेण । हुत्वाश्वनामप्रभृतीनि रात्रेश्शेषोक्तध्यसंख्याहुतिभिः समाप्यः ’ इति ॥ ८ ॥

१ मिष्टुत- इति गो. रा. पाठः । २ तथेति गो. रा. पाठः । ३ इत आरभ्य पद्यद्वयं गो. पुस्तके नास्ति । ४ वापि इति गो. नापीति रा. पुस्तके पाठः ।

न तेष्वहःसु श्रान्तो वा क्षुधितो वा न दृश्यते । नाविद्वान्ब्राह्मणः कश्चिन्नाशतानुचरस्तथा ॥ ११ ॥
ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते । तापसा भुञ्जते चापि श्रमणाश्चैव भुञ्जते ॥ १२ ॥
वृद्धाश्च व्याधिताश्चैव स्त्रीबालाश्च तथैव च । अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते ॥ १३ ॥
दीयतां दीयतामन्नं वासांसि विविधानि च । इति संचोदितास्तत्र तथा चक्रुरनेकशः ॥ १४ ॥
अन्नकूटाश्च दृश्यन्ते बहवः पर्वतोपमाः । दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १५ ॥
नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा । अन्नपानैः सुविहितास्तस्मिन्यज्ञे महात्मनः ॥ १६ ॥
अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः । अहो तृप्ताः स्म भद्रं ते इति शुश्राव राघवः ॥ १७ ॥

११ ] ति० टी०—नेति । श्रान्तः स्वस्वार्त्विज्याशक्तः । अशतानुचरः शतसेवकरहितः ॥ ११ ॥

रा० टी०—नेति । तेषु अहस्सु भोजनाद्यनर्हयागदिवसेषु श्रान्तः पिपासितः क्षुधितो वा नैव दृश्यते तत्र तस्मिन्यागे अविद्वान् ब्राह्मणो न सर्वे विद्वांस एव समागता इत्यर्थः अशतानुचरः शतसंख्याकानुचररहितश्च न तथाशब्दश्चार्थे एको वाशब्द एवार्थे ॥ ११ ॥

गो० टी०—अथ तत्रान्नदानसमृद्धिं दर्शयत्यष्टभिः—न तेष्वित्यादि । यद्यपि क्रीते सोमे यज्ञान्नं न भोज्यं तथापि सर्वद्रव्यस्य वसिष्ठसात्कृतत्वेन न दोषः तेष्वहस्सु यज्ञियदिनेषु श्रान्तः पिपासितः क्षुधितः बुभुक्षितः न दृश्यते नादृश्यत अशतानुचरः शतशिष्यरहितः ॥ ९ ॥

१२ ] ति० टी०—ब्राह्मणा इति । त्रैवर्णिकोपलक्षणं द्विजत्वात् । नाथवन्तो दासाः । शूद्रा इति यावत् । तापसा अदासाः शैवादिमार्गमाश्रिताः शूद्राः श्रमणा बौद्धसंन्यासिनः । यद्वा श्रमणपदं संन्यास्युपलक्षणम् ॥ १२ ॥

रा० टी०—ब्राह्मणा इति । ब्राह्मणा नित्यं यथेच्छं भुञ्जते नाथवन्तः ब्राह्मणस्वामिकाः क्षत्रियविट्शूद्राश्च यथेच्छं भुञ्जते तापसा ब्रह्मचारिप्रभृतयः भुञ्जते तथा श्रमणाः संन्यासिनोपि भुञ्जते वाशब्देन वर्णाश्रमबहिर्भूतपरिग्रहःतुशब्देन यथेच्छलाभः१२

गो० टी०—ब्राह्मणा इति । नाथवन्तः दासाःशूद्रादय इति यावत् श्रमणाः दिगम्बराः 'श्रमणा वातवसना' इतिनिघण्टुः । यद्वा 'चतुर्थमाश्रमं प्राप्ताः श्रमणा नाम ते स्मृताः' इति स्मृतिः ॥ १० ॥

१३-१४ ] ति० टी०—न तृप्तिरुपलभ्यते । भोज्यसौष्ठवात् । उदरपूर्तावपि रसातिशयलोभेन मानसी तृप्तिर्नोपलभ्यत इत्यर्थः । यद्वा अनिशं भुञ्जानेष्वपि जनेषु यजमानस्य तृप्तिरलंबुद्धिर्नासीदित्यर्थः ॥ १३ ॥ १४ ॥

रा० टी०—वृद्धा इति । वृद्धाः वृद्धतां प्राप्ताः व्याधिता व्याधिग्रस्ताश्च स्त्रीबालाः कन्याश्च चकारेण पुंबालाश्च तथैव भुञ्जते इति पूर्वेणान्वयः। अनिशं निरन्तरं भुज्यमानानां भोज्यमानानां जनानां तृप्तिर्नोपलभ्यते एतेन भोज्यानामतिस्वादुत्वं ध्वनितम् । किञ्च अमानानां गर्वरहितानां भोजनदातॄणामनिशं निरन्तरं भुजि भोजनायां भोजनदाने इत्यर्थः अन्तर्भावितणिजर्थकभुजेर्भावे क्विप् । तृप्तिर्नैव लभ्यते ॥ १३ ॥

गो० टी०—वृद्धा इति । व्याधिताः संजातव्याधयः अनिशं भुञ्जमानानां भुञ्जानेष्वपि यजमानस्य तृप्तिः अलंबुद्धिर्नासीदित्यर्थः । यद्वा रस्यतातिशयात् भुक्त्यनन्तरमपि भोजनेच्छा जायत इत्यर्थः ॥ ११ ॥

रा० टी०—अतृप्तिचिह्नमाह—दीयतामिति । अन्नं विविधानि वासांसि च दीयतां दीयतामित्यनेन प्रकारेण संचोदिताः अधिकारिभिः प्रेरिता अनेकशः जनास्तत्र यागे तथा चक्रुर्ददुरित्यर्थः ॥ १४ ॥

गो० टी०—दीयतामिति । तथा चक्रुः ददुरित्यर्थः ॥१२॥

१५ ] ति० टी०—अन्नेति लुप्तषष्ठीकं पृथक्पदम् । तस्य सिद्धस्येति पक्वस्येत्यर्थकं विशेषणम् । विधिवत्सूदशास्त्रोक्तप्रकारेण सिद्धस्येत्यन्वयः ॥ १५ ॥

रा० टी०—अन्नेति । पर्वतोपमाः पर्वततुल्याः अन्नकूटा आमान्नसमूहाः बहवस्तत्र दृश्यन्ते दिवसे दिवसे विधिवत्सिद्धस्यान्नस्य पर्वतोपमसमूहश्च दृश्यते इत्यध्याहृतम् ॥ १५ ॥

गो० टी०—अन्नेति । विधिवत्पाकविध्युक्तक्रमेण सिद्धस्य पक्वस्य अन्नेति लुप्तषष्ठीविभक्तिकं पदम् अन्नस्य खाद्यभक्ष्यलेह्यचोष्यभेदभिन्नस्य कूटा राशयः ॥ १३ ॥

१६ ] ति० टी०—सुविहिताः सुविहिततृप्तिकाः ॥ १६ ॥

रा० टी०—नानेति । नानादेशादनेकविधदेशादनुप्राप्ताः समागताः पुरुषास्तथा स्त्रीगणाः स्त्रीसमूहाश्च महात्मनो राज्ञः तस्मिन्प्रसिद्धे यज्ञे अन्नपानैः सुविहिताः सुतर्पिता आसन्निति शेषः उपसर्गवशादेतदर्थलाभः किञ्च तृप्तिमत्यन्तं प्राप्ताः प्रास्यर्थकहिधातोः कर्तरि निष्ठा किञ्चान्नपानकर्तृकात्यन्तप्राप्तिकर्मीभूता इत्यर्थः । अस्मिन्पक्षे कर्मणि निष्ठा ॥ १६ ॥

गो० टी०—नानेति । सुविहिताः सुतर्पिताः ॥ १४ ॥

१७ ] ति० टी०—अन्नमिति । स्वादन्नम् । भुक्त्वेति शेषः । प्रशंसाकारमाह—'अहो तृप्ताः स्म भद्रं ते' इति प्र-

१ वापीति गो. रा. पाठः । २ ब्राह्मणस्तत्रेति गो. रा. पाठः । ३ भुंजते तथेति गो. रा. पाठः । ४ स्त्रियो बाला इति गो. पाठः।५ भुज्य इति रा. पाठः

स्वलंकृताश्च पुरुषा ब्राह्मणान्पर्यवेषयन् । उपास[1]न्ते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १८ ॥
कर्मान्तरे तदा विप्रा हेतुवादान्बहूनपि । प्राहुः[2] सुवाग्मिनो धीराः परस्परजिगीषया ॥ १९ ॥
दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः । सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ २० ॥
नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः । सदस्या[3]स्तस्य वै राज्ञो नावादकुशलो[4] द्विजः ॥ २१ ॥
प्राप्ते यूपोच्छ्रये तस्मिन्षड्बैल्वाः खादिरास्तथा । तावन्तो बिल्वसहिताः पर्णिनश्च तथा परे ॥ २२ ॥

शंसां राघवः शुश्रावेत्यन्वयः । यद्वा विधिवत्स्वादु इत्यपि प्रशंसाकारः ॥ १७ ॥

रा० टी०—अन्नमिति । विधिवत् पाकशास्त्रोक्तविधिनिर्मितमतः स्वादु अतिस्वादु अहो विचित्रमन्नमतस्तृप्ताः स्म अतितृप्तिप्राप्ता वयम् अतस्ते तव भद्रं कल्याणमस्तु इति द्विजर्षभा ब्राह्मणाः प्रशंसन्तीति राघवो महाराजाधिराजो दशरथः शुश्राव इतिरुभयान्वयी हिर्हेतौ ॥ १७ ॥

गो० टी०—अन्नमिति । अन्नं विधिवत् उपचारवत् स्वादु च अनेन तृप्ताः स्म । अहो इदं वर्णितुं न शक्यमिति द्विजर्षभाः प्रशंसन्ति प्राशंसन् तद्राघवः शुश्राव न तेष्वहः-स्वित्यारभ्य प्रशंसाप्रकारो न तु कविवाक्यम् । अनेन ब्राह्मणौ वीणागाथिनौ गायत इत्यारभ्य इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेदित्युक्तस्तुतिश्रवणमुक्तम् ॥ १६ ॥

१८ ] ति० टी०—स्वलंकृता इति । अनेन राजकृतो यज्ञपरिचारकसत्कारो ध्वनितः । तान्परिवेषयितॄन् । अन्ये तत्सहायभूताः भोक्तृबाहुल्येन परिवेषणस्यल्पासाध्यत्वात् पाकशालातोऽन्नप्रापकास्तत्सहायाः । अत एव तस्य व्यसाध्यत्वात्पुरुषकर्तृकत्वम् ॥ १८ ॥

रा० टी०—स्वलंकृता इति । स्वलंकृताः शोभनालंकारविशिष्टा एव पुरुषाः ब्राह्मणान्पर्यवेषयन्परिवेषणं चक्रुरित्यर्थः। सुमृष्टमणिकुण्डलाःशोधितमणियुक्तकुण्डलविशिष्टा एव अन्ये परिवेषणकर्तृभ्यो भिन्नाः पुरुषाः तान्परिवेषणकर्तॄनुपासते साहाय्यार्थं तैः सहैव गच्छन्तीत्यर्थः। चशब्दावेवार्थौ ॥ १८ ॥

गो० टी०—स्वलंकृता इति । ब्राह्मणान् ब्राह्मणेभ्यः पर्यवेषयन् भक्ष्यान्नपानादीनिति शेषः । सुमृष्टमणिकुण्डलाः उत्तेजितरत्नकुण्डलाः अन्ये पुरुषाः साहाय्यार्थं तानसेवन्तेत्यर्थः ॥ १६ ॥

१९ ] ति० टी०—कर्मान्तर इति । एकसवनं समाप्य पुनः सवनान्तरारम्भकालागमात्पूर्वस्मिन्नन्तरालकाले । हेतुवादान्हेतूपन्यासपूर्वकान्वादांश्चक्रुः ॥ १९ ॥

रा० टी०—कर्मेति । तदा यागकाले कर्मान्तरे सवनयोर्मध्ये विश्रान्तिकाले इत्यर्थःसुवाग्मिनः सुपटुवचनाः धीराः सावधानाः विप्राः परस्परजिगीषया परस्परं स्वस्वविजयकाङ्क्षया बहून् भिन्नभिन्नशास्त्रप्रतिपादितानपि हेतुवादान् जगत्कारणविषयकविवादान्प्राहुः अपिना यागादिविषयकविवादसंग्रहः॥१९॥

गो० टी०—कर्मान्तर इति । कर्मान्तरे सवनयोरन्तरालकाले धीराः धीमन्तः वाग्मिनः पटुवाचः विप्रा ऋत्विजः परस्परजिगीषया बहून् हेतुवादान् प्राहुः स्म । अनेन ब्रह्मोद्यमुक्तं यथा "किंस्विदासीत्पूर्वचित्तिः" इत्यादि होतृब्रह्मणोः प्रश्नप्रतिवचनानि ॥ १७ ॥

२० ] ति० टी०—संस्तरे यज्ञे । प्रचोदिताः । शास्त्रीयैर्ब्रूहिप्रेष्यादिशब्दैः प्रेरिता इत्यर्थः ॥ २० ॥

रा० टी०—दिवसे इति । तत्र तस्मिन्संस्तरे यज्ञे कुशलाः निपुणाः प्रचोदिताः प्रेष्यब्रूहीत्यादिवैदिकशब्दैः प्रेरितास्ते प्रसिद्धाः द्विजा ब्राह्मणाः यथाशास्त्रं सर्वकर्माणि दिवसे दिवसे चक्रुः 'संस्तरप्रस्तराध्वराः' इत्यमरः ॥ २० ॥

गो० टी०—अथ ऊमोर्व्यकाव्याधिदैवत्यानि "द्विनाराशंसमं प्रातः सवनं द्विनाराशंसनं माध्यंदिनं सवनं सकृन्नाराशंसनं तृतीयसवनम्"इति विहितानि त्रिकालकर्माणि दर्शयति दिवसेदिवस इति । दिवसेदिवसे अश्वमेधाहेषु प्रत्यहं संस्तरे आस्तीर्णबर्हिषि 'संस्तरौ प्रस्तराध्वरौ' इत्यमरः । सर्वकर्माणि ऊमादिदैवत्यकर्माणि यथाशास्त्रं वृद्धैः प्रचोदिताः सन्तः चक्रुः । 'ऊमा ऊर्व्याश्च काव्याश्च पितरः सवनत्रये' नाराशंसनं नाम सकृद्भक्षिताप्यायितासादितचमसम् ॥ १८ ॥

२१ ] ति० टी०—सदस्या विधिदर्शिनः ॥ २१ ॥

रा० टी०—नेति । तस्य प्रसिद्धस्य राज्ञः अत्र यागे सदस्यः द्विजः अषडङ्गविन्नैवासीत् ॥ २१ ॥

गो० टी०—नेति । अत्र यज्ञे अषडङ्गवित्कश्चिन्नासीत् अव्रतश्च कश्चिन्नासीत् अबहुश्रुतश्च कश्चिन्नासीत् तस्य राज्ञः सदस्याः सदसि समवेता द्विजाः अवादकुशला नासन् ॥ १९ ॥

२२ ] ति० टी०—यूपोच्छ्रये यूपोत्क्षेपणप्रेषकाले । तथा खादिराः । तावन्तः षट्संख्याकाः । बिल्वसहिताः एकैकबिल्वयूपसमीपे स्थिताः । परेऽन्ये पर्णिनः पालाशा यूपाः । तेऽपि षडिति तथाशब्दार्थः ॥ २२ ॥

रा० टी०—प्राप्ते इति । तस्मिन्नश्वमेधे यूपोच्छ्रये यूपानां यज्ञस्तम्भानां उच्छ्रय उद्धृत्य स्थापनं तस्मिन्काले इत्यर्थः षट् षट्संख्याकाः बैल्वाः बिल्वविकारयूपाः उद्धृत्य स्थापिता इति शेषः। बिल्वसहिताः बिल्वयूपसमीपवर्तिनस्तावन्तः षट्संख्याकाः खादिराः खादिराः खादिरविकारयूपाश्च उद्धृत्य स्थापितास्तथा षट्संख्याकाः परे बैल्वखादिरसाहित्यरहिताः पर्णिनः पलाश-

१ उपासत इति गो. रा. पाठः । २ प्राहुः स्मेति गो. पाठः । ३ सदस्यस्तस्येति रा. पाठः । ४ नावादकुशला द्विजा इति गो.पाठः ।

श्लेष्मातकमयो[1] दिष्टो देवदारुमयस्तथा । द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ २३ ॥
[2]कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः । शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृता भवन् ॥ २४ ॥
एकविंशतियूपास्ते एकविंशत्यरत्नयः । वासोभिरेकविंशद्भिरेकैकं समलङ्कृताः ॥ २५ ॥

---

विकारयूपाश्च उद्धृत्य स्थापिताः ' पलाशे किंशुकः पर्णो ' इत्यमरः । पूर्वस्तथाशब्दश्चार्थे ॥ २२ ॥

गो० टी०–अथौपवसथ्यदिनकृत्यं पश्वालम्भं वक्तुं यूपोच्छ्रयणप्रकारमाह–प्राप्त इति । श्लोकद्वयमेकान्वयम् । तस्मिन् अश्वमेधे यूपानामुच्छ्रयो यूपोच्छ्रयः उच्छ्रयः उत्क्षेपणमुद्धृत्य स्थापनमिति यावत् ।तत्कालोऽत्र लक्ष्यते'यूपायोच्छ्रीयमाणायानुब्रूहि'इति प्रैषे प्राप्त इत्यर्थः । बिल्वस्य विकारा बैल्वाः "बिल्वादिभ्योऽण् " इत्यण् । बैल्वा यूपाः षट् उच्छ्रिता इति शेषः । खदिरस्य विकाराः खादिराः तथेति समुच्चये खादिरा यूपाश्च तावन्तः षडेव बिल्वसहिता इति खादिराणां बिल्वसमीपवर्तित्वं नतु पर्णिसमीपवर्तित्वमित्युच्यते । षट् खादिरा यथा बिल्वसहिता भवन्ति तथोच्छ्रिता इत्यर्थः । अपरे उक्तेभ्योऽन्ये पर्णिनः पर्णी पलाशः 'पलाशे किंशुकः पर्णी ' इत्यमरः । तत्प्रकृतिकाः पर्णिन इत्युच्यन्ते पर्णिनो यूपाः तथा षट् उच्छ्रिता इत्यर्थः ॥ २० ॥

२३ ] ति० टी०–श्लेष्मातको रज्जुदालस्तन्मय एको यूपोऽश्वमेधे । दिष्टः उपदिष्ट इत्यर्थः । श्लेष्मातकमयोऽग्निष्ठः इति पाठेऽग्निष्ठोऽग्न्यभिमुखः।तथा देवदारुमयोऽप्यस्ति यूपः। स च नैकः नापि षट् । किंतु द्वौ । तौ च व्यस्तबाहुभ्यां प्रसारितभुजाभ्यां तावदायामेन परिग्रहः स्वीकारो ययोस्तौ । एवं चैकविंशतिरश्वमेधे यूपा इत्युक्तम् । ते च तत्सूत्रश्रुत्योः प्रसिद्धा इत्यन्यत्र विस्तरः ॥ २३ ॥

रा० टी०–श्लेष्मातकमय इति । अग्निष्ठः अग्निसंमुखवर्ती श्लेष्मातकमयः रज्जुदालविकारयूपः उद्धृत्य स्थापितः एकत्वस्यात्र विवक्षितत्वादयं यूप एक एव देवदारुमयः देवदारुविकारयूपश्च उद्धृत्य स्थापितः अत्रैकत्वस्याविवक्षया तत्संख्याया अनियमे प्राप्ते तां नियमयन्नाह तत्र तस्मिन्यागे देवदारुमयौ द्वावेव विहितौ । तत्परिमाणमाह बाहुव्यस्तपरिग्रहौ बाहुव्यस्ताभ्यां प्रसारितभुजाभ्यां परिग्रहः परिग्रहणं ययोस्तौ दिष्ट इतिपाठे दिष्ट अश्वमेधे उपदिष्ट इत्यर्थः । एवं संकलनया एकविंशतिर्यूपाः संपन्नाः प्रसिद्धाश्चाश्वमेधीयसूत्रश्रुत्योरिति दिक् ॥ २३ ॥

गो० टी०–श्लेष्मातकमय इति । रज्जुदालविकार एको यूप उच्छ्रितः देवदारुमयस्तथा देवदारुविकारश्च यूप उच्छ्रितः अत्रैकत्वमविवक्षितं द्वयोः श्रुत्या चोदितत्वात् " राज्जुदालमग्निष्ठं मिनोति पौतुद्रवावभितो भवतः " इति श्रुतिः । राज्जुदालः श्लेष्मातकः पौतुद्रवौ देवदारू अयमत्र विन्यासक्रमः राज्जुदालोऽग्निष्ठः अग्नौ तिष्ठतीत्यग्निष्ठः अग्निशब्देनाग्निस्थानवेदिरुच्यते " अर्द्धमन्तर्वेदि मिनुयादर्धं बहिर्वेदि' इति श्रुतेः । सोऽग्निष्ठः प्रथमयूपः "तानग्निष्ठप्रथमान् मन्त्रेण छिनत्तीति" सूत्रात् । तस्य दक्षिणोत्तरपार्श्वयोर्देवदारुयूपौ तेषां त्रयाणां दक्षिणतस्त्रयो बैल्वा उत्तरतस्त्रयः तेषां नवानां दक्षिणतस्त्रयः खादिरा उत्तरतस्त्रयः तेषां पञ्चदशानां दक्षिणतस्त्रयः पालाशाःउत्तरतस्त्रयः प्रथमं पालाशषट्कमन्ते बिल्वषट्कं वा सर्वथा खादिरा एव बिल्वसहिताः न पुनःपालाशाः तमिममर्थं ग्रन्थकारो बिल्वसहिता इत्यसूचयत् । आपस्तम्बश्चासूत्रयत् " राज्जुदालमेकविंशत्यरत्निं संमिनोति पौतुद्रवावभितस्त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतस्त्रयः खादिरा दक्षिणतस्त्रय उत्तरतस्त्रयः पालाशा दक्षिणतस्त्रय उत्तरतः" इति । एवं यूपानामुच्छ्रयणक्रममुक्त्वा तेषामन्तरालप्रदेशविस्तारं दर्शयति–द्वाविति । तत्र यूपेषु द्वौद्वौ बाहुव्यस्तपरिग्रहौ विहितौ कृतौ व्यस्तौ बाहू बाहुव्यस्तौ ताभ्यां परिग्रहः स्पर्शो ययोस्तौ द्वौ द्वौ यूपौ व्यस्तबाहुस्पृश्यौ विहितौ व्याममात्रान्तरप्रदेशावित्यर्थः । तथाह धर्मनिर्णयकारः ' षण्णवत्यङ्गुलं बाहुदण्डमष्टोत्तरं तु वा । यूपान्तरालं तन्मात्रमश्वमेधे महाक्रतौ"इति॥२१॥

२४ ] ति० टी०–काञ्चनालंकृता भवन्नित्यत्र अडभावश्छान्दसः । शास्त्रज्ञैः शास्त्रं शिल्पशास्त्रं शुल्बशास्त्रं च ॥ २४ ॥

रा० टी०–कारिता इति । शास्त्रज्ञैः शास्त्रनिपुणैः यज्ञकोविदैः यागप्रयोगनिपुणैः एते पूर्वोक्ताः सर्वे एकविंशतिर्यूपाः कारिताः यथाशास्त्रं पूर्वं निर्मापितास्ते च तस्य प्रसिद्धस्य यज्ञस्य शोभार्थं काञ्चनालंकृता भवन् आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ २४ ॥

गो० टी०–यूपनिर्माणमाह–कारिता इति । एते सर्वे यूपाः शास्त्रज्ञैः यज्ञशास्त्रज्ञैः यज्ञकोविदैः यज्ञप्रयोगकुशलैः कारिताः काञ्चनैः काञ्चनपट्टैश्चालंकृताः भवन् " बहुलं छन्दस्यमाङ्योगेऽपि" इत्यडभावः । अलंकारोऽपि किंशास्त्रीयः नेत्याह तस्य यज्ञस्य शोभार्थमिति । यज्ञभूमेः शोभार्थमित्यर्थः ॥ २२ ॥

२५ ] ति० टी०–' महोच्छ्रायपरीणाहो यूपोऽन्यः सर्वकाञ्चनः । यज्ञे समभवत्तत्र शोभार्थमुपकल्पितः ' इति क्वचित्पाठः । एकेति । अरत्निर्नाम चतुर्विंशत्यङ्गुलयः ॥ २६ ॥

रा० टी०–एकेति । एकविंशत्यरत्नयः एकविंशत्यरत्निपरिमितोन्नताः एकविंशतियूपाः एकविंशद्भिः एकविंशत्या वासोभिर्वस्त्रैः एकैकं समलंकृताः एकेन वाससा एकः समलंकृतः अपरेणैकेन वाससा अपरः समलंकृतः एवं क्रमेण सर्वे समलंकृता इत्यर्थः । अरत्निश्चतुर्विंशतिरङ्गुलयः "तथाहि एकविंशत्यरत्नीर-

---

१ मयस्त्वेक इति गो. मयोऽग्निष्ठ इति रा. पाठः । २ एतच्छ्लोकद्वयं गो. पुस्तके नास्ति ।

**विन्यस्ता विधिवत्सर्वे शिल्पिभिः सुकृता दृढाः । अष्टास्रयः सर्वं एव श्लक्ष्णरूपसमन्विताः ॥ २६ ॥**
**आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च पूजिताः । सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २७ ॥**
**इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः । चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शिल्पकर्मणि ॥ २८ ॥**
**स चित्यो राजसिंहस्य संचितः कुशलैर्द्विजैः । गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २९ ॥**

श्वमेधस्य" इति श्रुतिः "चतुर्विंशत्यङ्गुलयोऽरत्निः" इति सूत्रम् । एकविंशतीत्यत्र सुलोप आर्षः । एकैकमिति सामान्ये नपुंसकम् । एकविंशद्भिरित्यत्र बहुत्वेकारलोपावार्षौ ॥ २५ ॥

**गो० टी०**–तेषां संख्याप्रमाणे दर्शयति–**एकविंशतीति** । ते यूपाः एकविंशति । "सुपांसुलुक्" इत्यादिना सुलोपः । एकविंशत्यरत्नयश्च एकविंशत्यरत्न्युन्नता इत्यर्थः । "एकविंशत्यरत्निरश्वमेधस्य" इतिश्रुतेः । "चतुर्विंशत्यङ्गुलयोरत्निः" इतिसूत्रम् एकविंशद्भिरितीकारलोपबहुवचने आर्षे । एकैकमिति सामान्ये नपुंसकम् । एको यूप एकेन वाससेति क्रमेण सर्वेपि वासोभिरलंकृता इत्यर्थः ॥ २३ ॥

२६ ] **ति० टी०**–अष्टास्रयः । अस्रिः कोणः । तक्षणविशेषेण श्लक्ष्णस्पर्शवता स्वरूपेण युक्ताः ॥ २६ ॥

**रा० टी०**–**विन्यस्ता इति** । शिल्पशास्त्रक्रियाभिज्ञैः विधिवत् यथाविधि विन्यस्ताः संनिवेशिताः सुकृताः शोभनं कृतं क्रिया येषु ते अत एव दृढाः अदार्ढ्यशङ्कारहिताः अष्टास्रयः अष्टकोणयुक्ताः अत एव श्लक्ष्णरूपसमन्विताः एवं सर्वे एकविंशतिः यूपाः ॥ २६ ॥

**गो० टी०**–यूपस्थापनविशेषमुक्तानुवादपूर्वमाह–**विन्यस्ता इति** । शिल्पिभिः सुकृताः सुष्ठु कृताः अन्यूनातिरिक्ततया कृता दृढाः सुषिरादिदोषरहिताः अष्टाश्रयः अष्टकोटयः 'अिश्रः पाल्यश्रिकोटयः' इत्यमरः । श्लक्ष्णरूपसमन्विताः यूपाभ्यञ्जनेन स्निग्धरूपयुक्ताः सर्वे एव विन्यस्ताः स्थापिताः यद्वा प्राप्ते यूपोच्छ्रय इत्यादिश्लोकत्रयमेकान्वयम् । शास्त्रज्ञैः कारिता बैल्वादयः सर्वे एते काञ्चनालंकृताःभवन्निति यूपनिर्माणमुक्तम् । एकविंशतीत्यनेन संख्याप्रमाणे दर्शिते विन्यस्ता इत्यनेन स्थापनमुच्यते ॥ २४ ॥

२७ ] **ति० टी०**–यथा सप्तर्षयो विराजन्ते । तथा यूपा व्यराजन्तेत्यर्थः ॥ २७ ॥

**रा० टी०**–वासोभिः आच्छादिताः पुष्पैर्गन्धैश्च पूजिताः दीप्तिमन्तः ते प्रसिद्धाः सर्वे दिवि सप्तर्षयो यथा सप्तर्षय इव विराजन्ते शोभन्ते । श्लोकद्वयमेकान्वयि ॥ २७ ॥

**गो० टी०**–यूपान् वर्णयति–**आच्छादिता इति** । दिवि सप्तर्षय इव ते यूपा विराजन्ते स्म । दीप्तिमात्रे दृष्टान्तः । सप्तानां सप्तानां वा ॥ २६ ॥

२८ ] **ति० टी०**–**इष्टका इति** । यथान्यायं यथासूत्रमर्धेष्टकामण्डलेष्टकादयश्च कारिताः । शुल्बवद्भिरिति शेषः । अग्न्याधारभूतो देशः । स ब्राह्मणैरिष्टकाभिश्चितः । बद्ध इत्यर्थः । 'शुल्बकर्मणि' इति पाठे शुल्बसूत्रोक्तकर्मणीत्यर्थः । केचित्तु तत्रेष्टकाबद्धे देशेऽग्निश्चितः स्थापित इत्यर्थ इत्याहुः ॥ २८ ॥

**रा० टी०**–**इष्टका इति** । तत्र प्रसिद्धे शुल्वकर्मणि यज्ञकर्मणि कुशलैः निपुणैः ब्राह्मणैः यथान्यायं यथोक्तं प्रमाणतः शास्त्रोक्तपरिमाणतः इष्टकाः कारिताः अग्निः अग्निस्थापनयोग्यो देशश्च चितो निर्मितः 'शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति वैजयन्ती । क्वचिद्यज्ञकर्मणीति पाठः ॥ २८ ॥

**गो० टी०**–यूपोच्छ्रयपूर्वभाविचयनमाह–**इष्टका इति** । शुल्बकर्मणि यज्ञकर्मणि 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' इति वैजयन्ती । प्रकृते चयनं विवक्षितम् । शुल्बमेकसरा रज्जुः । शुल्बसाध्यं कर्म शुल्बं चयनम् अत एवाह रुद्रदत्तः 'रज्ज्वा विहरणसाधनत्वादेतत्कर्म शुल्बमाचष्ट आचार्यः' इति । तत्र कुशलैर्ब्राह्मणैर्यथान्यायं यथाशास्त्रं प्रमाणतः प्रमाणेन विशिष्टा इष्टकाः कारिताः । अत्र सूत्रम् "पादमात्रोर्ध्वमात्रोणुकमात्रऋजुरेखादक्षिणावृता सव्यावृताश्च्यालिखिताश्च" इति अग्निः अग्न्याधारवेदिः चितः ताभिरिष्टकाभिः कृतचयनः अभूत् ॥ २६ ॥

२९ ] **ति० टी०**–स चित्योऽग्निः सं चितः स्थापितः । कथं संचित इत्यत्राह–गरुडो गरुडसंस्थानः । रुक्मपक्षः । "सहस्रं हिरण्यशल्कैः प्रतिदिशमग्निं प्रोक्षति" इति सूत्राद्रुक्मपक्षत्वमिति केचित् । अत्र पक्षे 'त्रिगुणोऽष्टादशात्मकः' इत्यस्य असामञ्जस्यं मत्वा चितदेशविशेषणानीमानि । स्वर्णेष्टकाभिः पक्षनिर्माणाद्रुक्मपक्षत्वमित्यन्ये । त्रिगुणः प्रस्तारः । तदेवाह–अष्टादशात्मक इति । षट् चितयो भवन्तीति प्रकृतौ उक्तेरिति भावः ॥ २९ ॥

**रा० टी०**–**स चित्य इति** । कुशलैर्द्विजैः राजसिंहस्य निखिलराजशिरोमणेर्दशरथस्य स चित्यः चयननिष्पादितोग्निः संचितः यथाशास्त्रं स्थापितः संचयनप्रकारं बोधयंस्तद्विशेषणान्याह गरुडः गरुडाकृतिः प्रसारितोभयपक्षपुच्छत्वेन अधोवीक्षमाणत्वेन प्राङ्मुखस्थित्या गरुडाकृतित्वं रुक्मपक्षः सुवर्णमयपक्षविशिष्टः तत्वञ्च सुवर्णेष्टकाभिः पक्षयोर्निर्माणात् त्रिगुणः त्रिगुणितप्रस्तारविशिष्टः प्रकृतौ षट्प्रस्तारा अत्राष्टादश प्रस्तारा इत्यर्थः । अत एवाष्टादशात्मकः । वैशब्दः प्रसिद्धिद्योतकः । रुक्मपक्षत्वे सूत्रमपि "सहस्रं हिरण्यशकलैः प्रतिदिशमग्निं चिनोति" इति गरुडाकृतित्वे श्रुतिः "श्येनचितिं चिन्वीत" इति तत्र सुपर्णोसि गरुत्मानिति मन्त्रात् श्येनशब्दो गरुडार्थकः ॥ २९ ॥

१ अष्टाश्रय इति गो. पाठः । २ शुल्वेति गो. रा. पाठः ।

गियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् । उरगाः पक्षिणश्चैव यथाशास्त्रं मचोदिताः ॥ ३० ॥
शामित्रे तु हयस्तत्र तथा जलचराश्च ये । ऋषिभिः[1] सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ ३१ ॥
पशूनां त्रिशतं तत्र यूपेषु नियतं तदा । अश्वरत्नोत्तमं तत्र राज्ञो दशरथस्य[2] ह ॥ ३२ ॥
कौसल्या तं हयं तत्र परिचर्य समन्ततः । कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३३ ॥

गो० टी०–चयनसंस्थानमाह–स चित्य इति । सः चित्यः चयननिर्वर्त्योऽग्निः राजसिंहस्य राजश्रेष्ठस्य अनेन पूर्वमनेकधानुष्ठितक्रतुत्वं सूच्यते। कुशलैः रीतिभेदं विना चयननिर्माणसमर्थैः द्विजैः ब्राह्मणैः ऋत्विग्भिः संचितः सम्यग्यथाशास्त्रं चितः । कथं चित इत्यत्राह–गरुड इति । गरुडः गरुडाकारः पक्षौ पुच्छं च प्रसार्याधो वीक्षमाणः प्राङ्मुखं तिष्ठन् गरुड इव स्थितः । "श्येनचितिं चिन्वीत" इतिश्रुतौ श्येनशब्दो गरुडपर एव "सुपर्णोऽसि गरुत्मान्" इति मन्त्रलिङ्गात् । यद्वा गरुडः गरुडप्रतिकृतिः "जीविकार्थे चापण्ये" इति वासुदेवादिवत्प्रतिकृतौ विहितस्य कनो लुप् । रुक्मपक्षः स्वर्णगर्भपक्षः । "सहस्रं हिरण्यशकलैः प्रतिदिशमग्निं प्रोक्षति" इति सूत्रात् त्रिगुणः त्रिगुणप्रस्तारः प्रकृतौ षट्प्रस्तारात्मकस्य चित्याग्नेरश्वमेधे त्रैगुण्यविधानात् । "षट् चितयो भवन्ति" इतिश्रुतेः । "त्रिस्तावोऽग्निर्भवतीत्यश्वमेधे विज्ञायते" इति सूत्राच्च । अत एवाष्टादशात्मकः अष्टादशप्रस्तारात्मकः । ननु षट्प्रस्तारात्मकस्य चित्यस्य त्रैगुण्यविधानेनैव अष्टादशप्रस्तारात्मकत्वं सिद्धं किं पुनस्तदुपदेशेन।उच्यते। त्रिगुण इत्युक्ते पञ्चदशात्मकत्वं प्रतीयते तैत्तिरीयके "पञ्च चितयो भवन्ति" इति विधानात् । तदिदं वाजसनेयकपक्षावलम्बनं द्योतयितुमष्टादशात्मकत्वोक्तिः एवंभूतश्चित इत्यन्वयः ॥ २७ ॥

३० ] ति० टी०–यथाशास्त्रम् 'इन्द्राय राज्ञे' इत्याद्यनुवाकैः प्रतिपादिताः ॥ ३० ॥

रा० टी०–नियुक्ता इति । तत्तद्दैवतं यथोक्तेन्द्रादिदैवतमुद्दिश्य तत्र तेषु यूपेषु प्रचोदिताः शास्त्रविहिताः पशवः उरगाः सर्पाश्च पक्षिणश्च यथाशास्त्रं यथाशिक्षं नियुक्ता निबद्धाः । एवश्चार्थे ॥३०॥

गो० टी०–अथ पूर्वोक्तेषु यूपेषु पशुनियोजनमाह–नियुक्ता इति । यथाशास्त्रं शास्त्रमनतिक्रम्य प्रचोदिता विहिताः पशव उरगाः पक्षिणश्च तत्तद्दैवतमिन्द्रादिदेवतामुद्दिश्य तत्र यूपेषु नियुक्ता बद्धाः । यूपेष्वित्यारोकाणामुपलक्षणम् "यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति । आरोकेष्वारण्यान् धारयन्ति" इतिश्रुतेः । अत्राशक्यानामुरगादीनां नियोजनं पञ्जरद्वारा एते च पशवस्तत्तद्देवताश्च "इन्द्राय राज्ञे सूकरः" इत्याद्यनुवाकेषु प्रतिपाद्यन्ते २८

३१ ] ति० टी०–शामित्रे मारणविशसनादिकर्मणि ॥३१॥

रा० टी०–शामित्र इति । तत्र तस्मिन्शामित्रे विहिताहिंसाविशसनादिकर्मणि हयोऽश्वः शास्त्रतः शास्त्रोक्तत्वेनैवानयनयोग्या ये जलचराः कूर्मादयस्ते सर्वे आनीता एव सन्तीति शेषः । तदा तस्मिन् काले एव एतत्सर्वमानीतहयादि शास्त्रतः शास्त्रविधानत एव ऋत्विग्भिः नियुक्तं यूपेषु निबद्धम् । तुचतथाशब्दा एवार्थकाः । शास्त्रत इत्युभयान्वयि ॥ ३१ ॥

गो० टी०–तत्र "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इतिश्रुतेरारण्यान्पशून् पर्यग्निकृतानुत्सृज्य ग्राम्याणां पशूनां शामित्रे नियोजनमाह–शामित्रे त्विति । तुशब्देनारण्येभ्यो वैलक्षण्यमुच्यते हयः अश्वमेधीयः ये जलचराः कूर्मादयः ते च तदन्यत्सर्वं च ग्राम्यपशुजातं तत्र यज्ञे तदा विशसनकाले ऋत्विग्भिः शामित्रे विशसनकर्मणि शास्त्रतो नियुक्तम् ॥ २९ ॥

३२ ] ति० टी०–नियतं बद्धम् । अश्वरत्नेषूत्तमं श्रेष्ठम् । नियतमित्यनुकर्षः ॥ ३२ ॥

रा० टी०–नियोजितपशुसंख्यामाह–पशूनामिति । तदा तस्मिन्काले तत्र तेषु यूपेषु पशूनां त्रिशतं नियतं बद्धम् । राज्ञः राजराजस्य दशरथस्य अश्वरत्नोत्तमं च तत्र नियतं बद्धम्।अश्वरत्नोत्तरमित्यपि क्वचित्पठ्यते अत्र त्रिशतमित्युक्तिः प्रधानपश्वपेक्षया अत एव पञ्चशतैकोनविंशतिप्रतिपादकभास्करग्रन्थेन न विरोधः ॥ ३२ ॥

गो० टी०–यूपनियुक्तानां पशूनां संख्यामाह–पशूनामिति। तत्र यूपेषु पशूनां त्रिशतं नियतं बद्धं तदा राज्ञो दशरथस्य अश्वरत्नोत्तममश्वश्रेष्ठोत्तमं च नियतं त्रिशतामिति प्रधानापेक्षया अधिकानामपि श्रवणात् । तथाह भास्करः 'अश्वमेधपशुसंख्या तु पञ्चशतमेकोनविंशतिश्च' इति । अश्वरत्नोत्तर इति पाठे रत्नोत्तरो रत्नप्रधानोऽश्व इति परनिपातेन योजना । तथाह भास्करः 'सौवर्णान् महिषी मणीन् दशशतानस्यावयत्यावहाद्वावाता वयते मणीन् दशशतान् प्रत्यग्वहाद्राजतान् । प्रत्यक्छ्रोणिसहस्रमेव परिवृक्त्यस्यावयेन्मौक्तिकान् सख्यः शङ्खमणीनथैषु समुपग्रथ्नन्त्यविस्रस्तयः' इति । आवयति ऊतान्करोति ॥ ३० ॥

३३ ] ति० टी०–कौसल्येति । परिचर्य प्रोक्षणादिना संस्कृत्य । त्रिभिः कृपाणैरसिभिरेनमश्वं विशशासास्य विशसनं कृतवती । "महिष्यश्वास्यासिना कल्पयन्ति" इति सूत्रात् ॥३३॥

रा० टी०–कौशल्येति । कौशल्या महिषी तत्र शामित्रकर्माणि तं नियतमेनं हयं समन्ततः परिचर्य प्रोक्षणादिना संस्कृत्य परमया मुदा परमहर्षेण त्रिभिः कृपाणैः असिभिः विशशास कौशल्येति पत्न्यन्तरस्याप्युपलक्षकम् । तथाच सूत्रम् "महिष्यश्वास्यासिना कल्पयन्ति" इति ॥ ३३ ॥

१ ऋत्विग्भिरिति गो. रा. पाठः । २ रथस्य चेति गो. रा. पाठः ।

पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा । अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३४ ॥
होताध्वर्युस्तथोद्गाता हयेन समयोजयन् । महिष्या परिवृत्त्यार्थे वावातामपरां तथा ॥ ३५ ॥
पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः । ऋत्विक्परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३६ ॥

गो० टी०—मृताश्वोपचारमाह—कौसल्येति । कौसल्या महिषी तत्र शामित्रप्रदेशे तं मृतं हयं समन्ततः परिचर्य प्रदक्षिणाप्रदक्षिणं संचार्य अत्र सूत्रम् “ दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रग्रथ्य दक्षिणानूरूनाघ्नाना इदं मध्विदं मध्विति जपन्त्यः स्त्रियो महिष्यश्चाश्वतूवरगोमृगाणां परिक्रम्य सव्यानुद्ग्रथ्य दक्षिणान् प्रग्रथ्य सव्यांनरूनाघ्नाना सकथीरवधून्वन्त्यस्त्वप्रदक्षिणं परिक्रम्य प्रदक्षिणमन्त्रतो यथापुरस्तान्नवकृत्वः संपादयन्ति ” इति कृपाणैस्त्रिसृभिः सौवर्णीभिः सूचीभिः एनं परमया मुदा निरवधिकश्रद्धया विशशास असिपथान् कल्पयामास कौसल्येति इतरासामुपलक्षणम् । सौवर्णीभिः सूचीभिः “ पत्नयोऽश्वस्यापि पथान् कल्पयन्ति प्राक्क्रोडात् प्रत्यश्चीभिः” इति सूत्रात् क्रोडं वक्षः ॥ ३१ ॥

३४ ] ति० टी०—पतत्रिणेति । पुराश्वानां पक्षाः सन्तीति प्रसिद्धयैवं वादः । पतत्रिणा गरुडवेगेनेत्यर्थं इत्यन्ये । सुस्थितेन स्थिरेण चेतसोपलक्षिता सती कौसल्या धर्मेच्छयैकां रजनीमश्वेन सहावसत् ॥ ३४ ॥

रा० टी०—पत्न्याः कर्तव्यान्तरमाह—पतत्रिणेति । तदा विशसनानन्तरकाले सुस्थितेन चेतसा युक्ता कौशल्या पतत्रिणा पक्षविशिष्टेनाश्वेन सार्द्धं धर्मकाम्यया एकां रजनीमवसत् पतत्रिणा गरुडसदृशवेगविशिष्टेनेति केचित् ‘ पतत्रीपक्षितुरगौ ’ इत्यमरः ॥ ३४ ॥

गो० टी०—महिष्याः कर्तव्यान्तरमाह—पतत्रिणेति । तदा विशसनोत्तरकाले कौसल्या धर्मकाम्यया धर्मसिद्धीच्छया काम्यजन्तादकारप्रत्यये टाप् । सुस्थितेन सुस्थिरेण चेतसा उपलक्षिता सती शवस्पर्शकुत्साराहिता सतीत्यर्थः । पतत्रिणा अश्वेन सार्द्धा मेकां रजनीमवसत् । अत्र सूत्रम् ‘अम्बे अम्बाल्यम्बिके ’ इति जपन्ती महिष्यश्वमुपसंगम्य “ गणानां त्वा गणपतिं हवामहे ” इत्यभिमन्त्र्य “उत्सक्थ्योर्गुदं धेहि” इति प्रजनने प्रजननं संनिधायोपविशाति “सुभगे कांपलिवासिनि” इति क्षौमेन वाससाध्वर्युर्महिषीमश्वं च प्रच्छाद्य “ वृषावां रेतोधा रेतो दधातु ” इति जपत्याग्नीध्र एतां रात्रिमृत्विजो यजमानं जागरयन्तीति ३२

३५ ] ति० टी०—अथ होत्रादयो महिष्या कृताभिषेकया परिवृत्त्या राज्ञो भोगाद्बहिष्कृतया दास्या च सह वावातां राज्ञो वल्लभां भुजिष्यामश्वेन समयोजयन्निति संबन्ध इति केचित् । अपरे तु वावाताशब्दो राज्ञो मध्यमजातीयद्वितीयभार्यावाची । तदुक्तमैतरेयब्राह्मणभाष्ये तृतीयपञ्चिकास्थद्वाविंशतिखण्डस्थवावातेतिप्रतीकव्याख्यानावसरे—‘राज्ञां हि त्रिविधाः स्त्रियः, उत्तममध्यमाधमजातीयाः । तासां मध्य उत्तमजातेः क्षत्रियाया महिषीति नाम, मध्यमजातेर्वैश्याया वावातेति, अधमजातेः शूद्रायाः परिवृत्तिरिति’ । अत एवाश्वलायनसूत्रे दशमाध्यायेऽष्टमखण्डस्थवावातेतिप्रतीकं गृहीत्वा द्वितीया भार्येति व्याख्यातं नारायणवृत्तिकृता ॥ ३५ ॥

रा० टी०—रात्रिवासोत्तरकालिकं होत्रादिकृत्यमाह—होतेति । होत्रादयस्त्रयः तथाशब्देन ब्रह्मा च महिष्या कृताभिषेकया परिवृत्त्या उपेक्षितया च सहितां वावातां भोगिनीम् अपरां पालाकलीं च हयेन अश्वेन समयोजयन् अश्वाङ्गसंयोजनरूपविधिं कारयामासुरित्यर्थः। तथाशब्दश्चार्थे।एतेन“महिषीं ब्रह्मणे ददाति वावातां होत्रे परिवृत्तिमुद्गात्रे पालाकलीमध्वर्यवे ” इति सूत्राण्युपन्यस्य पत्नीदानपरत्वेन व्याख्यानं प्रत्युक्तम् दानस्यात्रानुक्तेः अध्याहारे गौरवाच्च। हस्तेन समयोजयन्निति पाठे तु हयहस्तेनेत्यर्थः पशूनामग्रिमपादयोर्हस्तत्वात् अत एव हयेन समयोजयन्निति पाठेन न विरोधः ‘ कृताभिषेका महिषी परिवृत्तिरुपेक्षिता । वावाता भोगिनी पात्रप्रदा पालाकली मता ’ इति वैजयन्ती ॥ ३५ ॥

गो० टी०—तादात्विकदक्षिणामाह—होतेति । तथेत्यनुक्तसमुच्चयार्थः।ब्रह्मा चेत्यर्थः । एते ब्रह्मादयश्चत्वारः प्रधाना ऋत्विजो महिषीपरिवृत्तिभ्यां सह वावातामपरां पालाकलीं च राज्ञो दक्षिणार्थं परिगृह्य हस्तेन समयोजयन् रमणवद्धस्तेनागृह्णन्नित्यर्थः । अत्र श्रुतिः “अम्बे अम्बाल्यम्बिके”इति “पत्नीमुदानयति”इत्यादि उदानयति हस्तेन गृह्णातीत्यर्थ इति भास्करः । सूत्रं च “महिषीं ब्रह्मणे ददाति वावातां होत्रे परिवृत्तिमुद्गात्रे पालाकलीमध्वर्यवे ” इति । पश्चात्प्रतिनिधिद्रव्यदानेन निवर्त्येरन् ‘कृताभिषेका महिषी परिवृत्तिरुपेक्षिता । वावाता भोगिनी पात्रप्रदा पालाकली मता’ इति वैजयन्ती ॥ ३३ ॥

३६ ] ति० टी०—वपां चन्द्राख्यं मेदः । चन्द्रं नाम मेदोऽस्ति । ‘तदुद्धरति नास्य वपा विद्यते ’ इति सूत्रात् । परमेण श्रौतप्रयोगचातुर्येण संपन्नो युक्तः ॥ ३६ ॥

रा० टी०—पतत्रिण इति । नियतेन्द्रियः यतचित्तः परमसंपन्नः श्रौतप्रयोगादिनिपुणः ऋत्विक् तस्य विधिना हिंसितस्य पतत्रिणोऽश्वस्य वपां चन्द्रापरनामकं मेदः उद्धृत्य निस्सार्य शास्त्रतः यथाशास्त्रं श्रपयामास पपाच ॥ ३६ ॥

गो० टी०—पतत्रिण इति । तस्य पतत्रिणः अश्वस्य ‘पतत्री पक्षितुरगौ ’ इत्यमरः । वपां वपास्थानीयां तेजनीम् । “ नाश्वस्य वपा विद्यते ” इतिसूत्रात् “ नान्येषां पशूनां तेजन्या अवद्यन्त्यवद्यन्त्यश्वस्य ” इतिश्रुतेश्च उद्धृत्य आदाय नियतेन्द्रियः एकाग्रः परमसंपन्नः परमेण प्रयोगचातुर्येण संपन्न

१ हस्तेनेति गो. पाठः । २ वृत्त्या चेति गो. रा. पाठः ।

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः । यथाकालं यथान्यायं निर्णुदन्पापमात्मनः ॥ ३७ ॥
हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः । अग्नौ प्रास्यन्ति विधिवत्समस्ताः[1] षोडशर्त्विजः ॥३८॥
प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः । अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३९ ॥
त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः । चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥ ४० ॥
उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् । कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ४१ ॥

---

कश्चिद् अध्वर्युः शास्त्रतः श्रपयामास पपाच । श्रा पाके शास्त्रं च स्वयमेव वक्ष्यति प्लक्षेति ॥ ३४ ॥

३७ ] ति० टी०—नराधिपो दशरथः ॥ ३७ ॥

रा० टी०—वपाहोमं व्यञ्जयन्नाह—धूमेति । नराधिपो दशरथः वपायाः धूमगन्धं यथाकालं विहितकालमनतिक्रम्यैव यथान्यायं यथाविधि आत्मनः पापं प्रकटपुत्रवियोगहेतुत्वेन प्रतीयमानविघ्नविशेषं निर्णुदन् दूरीकुर्वन् जिघ्रति स्म। तु शब्द एवार्थे ॥ ३७ ॥

गो० टी०—अथ वपाहोमं सूचयन्नाह—धूमेति । नराधिपः दशरथः यथाकालं होमकालमनतिक्रम्य यथान्यायं यथाशास्त्रमात्मनः पापं निर्णुदन् निवर्तयन् सन् वपाया धूमगन्धं जिघ्रति स्म ॥ ३६ ॥

३८ ] ति० टी०—हयस्येति । सर्वाणि ब्राह्मणा इत्यत्र गुरोरपि लघूच्चारणतया लघुकार्यकरत्वस्य च्छन्दःशास्त्र उक्तत्वान्न च्छन्दोभङ्गः ॥ ३८ ॥

रा० टी०—वपाहवनकृत्यं बोधयित्वाङ्गहवनमाह—हयस्येति । हयस्य यानि अङ्गानि तानि सर्वाणि समस्ताः संमिलिताः षोडशर्त्विजः ब्राह्मणाः अग्नौ विधियत्प्रास्यन्ति ॥ ३८ ॥

गो० टी०—वपाहोममुक्त्वा अङ्गहोममाह—हयस्येति । ब्राह्मणा इत्यत्र गुर्वक्षरमार्षम् । सर्वाणीत्यनेन सर्वस्य हुतत्वेन शेषभक्षणं नास्तीत्युक्तम् । अङ्गहोमफलं श्रूयते “अङ्गे अङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति” इति यजमानस्य सर्वं पापं निवर्तत इत्यर्थः ॥ ३६ ॥

३९ ] ति० टी०—प्लक्षेति । अन्येषामश्वमेधातिरिक्तयज्ञानां पाशुकं हविः प्लक्षशाखासु निधायावदीयते । अश्वमेधे प्रधानस्य पशोरश्वस्य हविर्भागो वैतसे कटे निधायावदातव्य इष्यते ॥ ३९ ॥

रा० टी०—अवदाने शाखानियममाह—प्लक्षेति । अन्येषामश्वमेधभिन्नानां यज्ञानां हविः देवतोद्देश्यकपशुविशेषः प्लक्षशाखासु क्रियते धृत्वा अवदीयते अश्वमेधस्य यज्ञस्य भागः, देवतोद्देश्यकपशुविशेषः वैतसे वेतसशाखावस्तुनि क्रियते धृत्वा अवदीयते इष्यते । इत्याचार्यैर्वाञ्छ्यत इत्यर्थः। अत्रार्थे श्रुतिः “प्लक्षशाखायामन्येषां पशूनामवद्यन्ति वैतसशाखायामश्वस्य” इति । एतेन वैतसे कटे इत्यर्थो निर्मूलः ॥ ३९ ॥

गो० टी०—पूर्वं शास्त्रतः श्रपयामासेत्युक्तं तदवदानमाह—प्लक्षेति । अन्येषां यज्ञानां संबन्धि हविर्वपा प्लक्षशाखासु क्रियते अवदीयते अश्वमेधस्य यज्ञस्य भागः हविर्भागः वैतसः वैतसे कटे अवदातव्यो भवति शैषिकोण् । अत्र यज्ञशब्देन पशवो लक्ष्यन्ते तथा च श्रुतिः “प्लक्षशाखायामन्येषां पशूनामवद्यन्ति वेतसशाखायामश्वस्य” इति । अत्र वेतसशाखाशब्दो वैतसकटपरः यद्वा वेतसस्य शाखा वैतसी वैतस्यां संस्कृतो वैतसः “यस्येति च” इतीकारलोपः । वैतसकटस्तु पश्वासादनार्थः “वैतसः कटो भवति अप्सु योनिर्वा अश्वः अप्सुजो वेतसः स्व एवैनं योनौ प्रतिष्ठापयति” इतिश्रुतेः । “वैतसकटेऽश्वं प्राञ्चमासादयति” इति सूत्राच्च अतो वैतसकटे वपावदानमिति व्याख्यानं चिन्त्यम् ३७

४० ] ति० टी०—त्र्यह इति । “अश्वमेधस्य त्रीणि सवनीयान्यहानि” इति कल्पसूत्रेण तन्मूलब्राह्मणैश्चाश्वमेधस्त्र्यहःसंख्यातं उक्तः । सवनीयाह्नां प्राधान्यात् । तानि त्र्यहोरात्राणि गणयति । चतुष्टोमशब्देनाग्निष्टोमः ॥ ४० ॥

रा० टी०—अश्वमेधसाधकदिनसंख्यामाह—त्र्यह इति । कल्पसूत्रेण ब्राह्मणैस्तत्कारणभूतब्राह्मणवाक्यैश्च अश्वमेधः त्र्यह संख्यातः । अत्राहःशब्देन यथोक्ताहःसाध्यसवनानि उच्यन्ते । एवं च त्रीणि यथोक्ताहस्साध्यसवनानि यस्मिन् “अच्प्रत्यन्ववo” इत्यत्राजिति योगविभागादच् । तान्यहान्येव पृथक्कृत्याह तस्य सवनत्रयात्मकयागस्य प्रथममहः तत्साध्यसवनं चतुष्टोमं परिकल्पितं कथितम् द्वितीयमहस्साध्यसवनमुक्थ्यं संख्यातं कथितम् । उत्तरं तृतीयमतिरात्रं तथा संख्यातम् ॥ ४० ॥

गो० टी०—अत्र सवनीयदिनानि कतीत्याकाङ्क्षायामाह—त्र्यह इति। “अश्वमेधस्य त्रीणि सवनीयान्यहानि” इतिकल्पसूत्रेण ब्राह्मणैस्तन्मूलभूतब्राह्मणवाक्यैश्च अश्वमेधः त्र्यहः संख्यातः अश्वमेधस्यानेकाहसाध्यत्वेऽपि सवनीयाह्नानां प्राधान्यात्त्र्यहः त्रीणि अहानि यस्य स त्र्यहः “अच्प्रत्यन्ववo” इत्यत्र योगविभागादच्। इदमर्द्धमेकं वाक्यम् । तान्यहानि परिगणयति—चतुष्टोममिति । त्रिवृत्पञ्चदशः सप्तदश एकविंश इति स्तोमचतुष्टययुक्तत्वादग्निष्टोमश्चतुष्टोम इत्युच्यते । तदनुष्ठानयुक्तत्वात्तद्व्यपदेशः “एकविंशोक्थ्ययुक्तत्वादुक्थ्यम्” इतिज्योतिष्टोमस्य द्वितीया संस्था तद्युक्तं द्वितीयमहः सर्वस्तोमोऽतिरात्रः तद्युक्तमुत्तरमहः द्वितीयादुत्तरं तृतीयमह इत्यर्थः ॥ ३८ ॥

४१ ] ति० टी०—उत्तरं तृतीयशास्त्रदर्शनाद्विहिता बहवः प्रधानाः क्रतवस्तत्र कारिताः ॥ ४१ ॥

---

१ समन्त्रा इति गो. पाठः।

ज्योतिष्टोमायुषी चैनमतिरात्रौ च निर्मितौ[1] । अभिजिद्विश्वजिच्चैवमाप्तोर्यामौ[2] महाक्रतुः ॥ ४२ ॥
प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः । अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥४३॥
उद्गात्रे तु[3] तथोदीचीं दक्षिणैषा विनिर्मिता । अश्वमेधे[4] महायज्ञे स्वयंभूविहिते पुरा ॥ ४४ ॥
क्रतुं समाप्य तु तदा[5] न्यायतः पुरुषर्षभः । ऋत्विग्भ्यो हि ददौ राजा धरां तां कुलवर्धनः[6] ॥४५॥
एवं[7] दत्त्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दनः । ऋत्विजस्त्वब्रुवन्सर्वे[8] राजानं गतकिल्बिषम् ॥४६॥
भवानेव महीं कृत्स्नामेको रक्षितुमर्हति । न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ॥४७॥

---

रा० टी०–यागान्तराण्यपि कृतवानिति वर्णयन्नाह–कारिता इति । तत्र अश्वमेधसंमाप्त्युत्तरकाले शास्त्रदर्शनात् शास्त्रावलोकनमाश्रित्य विहिताः कर्तव्यत्वेन बोधिता बहवः अन्येपि यज्ञाः कारिता महाराजेन संपादिताः ॥ ४१ ॥

गो० टी०–एवमश्वमेधस्य त्र्यहत्वेन त्रयाणां कर्तव्यत्वेपि प्रकृतेऽश्वमेधे शाखान्तरदर्शनात् विहिता अन्येपि बहवः क्रतवो राज्ञा कारिता इत्याह–कारिता इत्यर्धेन ॥ ३९ ॥

४२ ] ति० टी०–तानाह–ज्योतिरित्यादि । आयुरायुष्टोमः । अतिरात्राविति द्विवचनादतिरात्रस्य द्विःप्रयोगः । तथा आप्तोर्यामाविति । महाक्रतुरिति जातावेकवचनम् । एते महाक्रतव इत्यर्थः ॥ ४२ ॥

रा० टी०–तानेव गणयन्नाह–ज्योतिष्टोमेति । ज्योतिष्टोमायुषी अग्निष्टोमायुष्टोमौ प्रथमद्वितीयौ अतिरात्राविति द्विवचनान्तेनातिरात्रद्वयलाभः तृतीयचतुर्थौ चेत्यर्थः । निर्मितौ विधिना संपादितौ पञ्चमोऽभिजिच्च षष्ठो विश्वजिच्च आप्तोर्यामौ सप्तमाष्टमौ च महाक्रतुः एते महाक्रतव इत्यर्थः ॥ ४२ ॥

गो० टी०–के ते क्रतव इत्यपेक्षायामाह–ज्योतिष्टोमेति । अतिरात्राविति द्विवचनेन तस्यावृत्तिरुच्यते विनिर्मितौ अनुष्ठितौ अन्यत्रापि विभक्तिविपरिणामेनायं शब्द अनुषज्यताम् । उक्तदिनत्रयादुत्तरेष्वहस्सु ज्योतिष्टोमादयः षट् क्रतवः कारिता इत्यर्थः । शाखान्तरे ज्योतिष्टोमादीनामपि विहितत्वेन षोडशीग्रहणवत्तेषामप्यनुष्ठाने महानभ्युदय इति मन्वानेन राज्ञा तेऽपि कारिता इत्यर्थः । अत्र चयनयूपोच्छ्रयपशुनियोजनवपाहोमचतुष्टोमसवनानि क्रमेण वक्तव्यानीति तत्क्रमेण श्लोकाः पठितव्याः । व्युत्क्रमपाठो लेखकप्रमादकृतः ऋषिरेव वा क्रममविवक्षन् प्रणिनाय ॥ ४० ॥

४३ ] ति० टी०–प्राचीमिति ॥ ४३ ॥

रा० टी०–दक्षिणाप्रकारमाह–प्राचीमित्यादिभिः । पुरा पूर्वं स्वयंभूविहिते ब्रह्मणा प्रकटीकृते महायज्ञे यागश्रेष्ठे हयमेधेऽश्वमेधे स्वकुलवर्द्धनो राजा प्राचीं दिशं होत्रे ददौ प्रतीचीं पश्चिमां च दिशं अध्वर्यवे ददौ दक्षिणां दिशं ब्रह्मणे ददौ उदीचीमुत्तरां च दिशमुद्गात्रे तथा ददौ एषा सर्वदिग्दानरूपा दक्षिणा विनिर्मिता सूत्रे उक्ता द्वयोरेकत्रान्वयः । तथा च सूत्रम् 'प्रतिदिशं ददाति प्राची दिक् होतुः दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः' इति । यागस्य पूर्वं ब्रह्मनिष्पाद्यत्वे श्रुतिः " प्रजापतिरश्वमेधमसृजत " इति ॥ ४३ ॥ ४४ ॥

गो० टी०–अथ दक्षिणादानमाह–प्राचीमिति । द्वयमेकं स्वकुलस्य इक्ष्वाकुकुलस्य वर्द्धनः बहुदक्षिणादानं ह्युचितमिक्ष्वाकुकुलस्येति भावः ॥ ४१ ॥

४४ ] ति० टी०–विनिर्मिता कल्पेषु विहिता । स्वयंभूविहिते । "प्रजापतिरश्वमेधमसृजत" इति श्रुतेः ॥ ४४ ॥

गो० टी०–एतावद्दक्षिणादाने किं प्रमाणं तत्राह–उद्गात्र इति । एषा दक्षिणा विनिर्मिता विहिता " प्रतिदिशं दक्षिणां ददाति प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः " इत्यादिसूत्रेणेति शेषः । स्वयंभुविहिते ब्रह्मनिर्मिते " प्रजापतिरश्वमेधमसृजत " इतिश्रुतेः ॥ ४२ ॥

४५–४६ ] ति० टी०–क्रतुमिति । धरां चतुर्दिगवच्छिन्नाम् ॥ ४५–४६ ॥

रा० टी०–दानानन्तरकालिकब्राह्मणोक्तिमाह (?)–क्रतुमिति । यदा कुलवर्द्धनः पुरुषर्षभः पुरुषश्रेष्ठो राजा न्यायतः यथा विधि क्रतुं समाप्य ऋत्विग्भ्यस्तां पूर्वोक्तां धरां पृथ्वीं हर्षतो ददौ । तुशब्द एवार्थे हिर्हर्षद्योतकः ॥ ४५ ॥

रा० टी०–तदैव सर्वे ऋत्विजः गतकल्मषं स्वाश्रितकल्मषनिवर्तकं राजानं सर्वे ऋत्विजोऽब्रुवन् । सार्धश्लोक एकान्वयी । तदुक्तिमेवाह श्लोकत्रयेण एकः अखण्डमण्डलेश्वरो भवानेव कृत्स्नां महीं रक्षितुमर्हति । तुशब्दस्तदार्थे ॥ ४६ ॥

गो० टी०–क्रतुमित्यादि । श्लोकद्वयमेकान्वयम् । न्यायतः शास्त्रतः हि यस्माद्राजा ददौ तस्मादृत्विजोऽब्रुवन्नित्यन्वयः । यद्यपि महापृथिवी न देयेति इदं निषिद्धं तथाप्यत्र प्रदेशविशेष एव दत्त इति ज्ञेयम् । प्रतिषेधवदत्र विधेरपि दर्शनात् केसरिदानवद्विकल्पो वा ॥ ४३ ॥ ४४ ॥

४७ ] ति० टी०–भवानिति । भोगैकप्रयोजनत्वाद्भूमेस्तयास्माकं न किंचित्प्रयोजनम्, नापि चोरादिभ्यो रक्षणे वयं शक्ताः ॥ ४७ ॥

रा० टी०–नेति । हे भूमिप भूम्याऽस्माकं न कार्यं न प्रयोजनम् हि यतः पालने वयं न शक्तास्तत्रापि हेतुः हि यतः स्वाध्यायकरणे वेदाध्यापनादौ वयं नित्यं रताः ॥ ४७ ॥

---

१ विनिर्मिताविति गो. पाठः । २ आप्तोर्याम इति गो. पाठः । ३ उद्गात्रे वै इति गो. रा. पाठः । ४ हयमेध इति गो. रा. पाठः । ५ तथेति गो. पाठः । ६ क्रतुवर्धन इति गो. पाठः । ७ इदमर्धं गो. रा. पुस्तकयोर्नास्ति । ८ ऋत्विजश्चेति गो. पाठः ।

रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप । निष्क्रयं किंचिदेवेह प्रयच्छतु भवानिति ॥ ४८ ॥
मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् । तत्प्रयच्छ नृपश्रेष्ठ[1] धरण्या न प्रयोजनम् ॥ ४९ ॥
एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः । गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ॥ ५० ॥
दशकोटिं[2] सुवर्णस्य रजतस्य चतुर्गुणम् । ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु ॥ ५१ ॥
ऋष्यशृङ्गाय[3] मुनये वसिष्ठाय च धीमते । ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः ॥ ५२ ॥
सुप्रीतमनसः सर्वे प्रत्यूचुर्मुदिता भृशम् । ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः ॥ ५३ ॥
जाम्बूनदं कोटिसंख्यं ब्राह्मणेभ्यो ददौ तदा । दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् ॥ ५४ ॥

---

४८ ] ति० टी०–तत्र हेतुमाह–रता इति । स्वाध्यायो वेदाध्ययनम् । तेन दण्डादावस्माकमधिकारोऽपि नेति ध्वनितम् । भूमिपेत्यनेन तवैवैषा योग्येति त्वमेव निष्क्रयेण पुनरिमां गृहाणेति सूचितम्। तदाह–निष्क्रयमिति। मूल्यमित्यर्थः। ननु भुवो मूल्यं दातुमशक्यम् । अतः किंचिदेवेति ॥ ४८ ॥

रा० टी०–निष्क्रयमिति। इति अतः इह अस्मिन्नेव समये किंचित् यथाकामं निष्क्रयं दत्तपृथ्वीमूल्यं भवान् प्रयच्छतु। तदेवाह मणिरत्नं मणिश्रेष्ठं सुवर्णं च गावश्च यत् अन्यत्समुद्यतं अस्मदर्थमुपस्थापितं च ॥ ४८ ॥

गो० टी०–न भूम्येति सार्द्धश्लोक एकान्वयी । अशक्तौ हेतुः–रता इति । स्वाध्यायकरणे स्वाध्यायाध्ययने ॥ ४६ ॥

गो० टी०–कथं दत्तस्य पुनरपहारस्तत्राह–निष्क्रयमिति। निष्क्रयं मूल्यम्। कृत्स्नपृथिव्या मूल्यं कुतो लभ्यते तत्राह–किंचिदिति । यथोपपन्नमित्यर्थः ॥ ४६ ॥

४९ ] ति० टी०–किंचित्पदार्थानाह—मणिरत्नमनर्घ्यरत्नम् । तस्यापि राजार्हत्वादाह–सुवर्णमिति । यद्वा समुद्यतमुपस्थितम् । यत्किंचिदेव भवच्छक्यमित्यर्थः ॥ ४९ ॥

५० ] ति० टी०–शतसहस्राणि । दशलक्षमिति यावत् ॥५०

रा० टी०–तदेवोपसंहरन्नाह–तदिति । हे नृपश्रेष्ठ तदस्मयाचितं प्रयच्छ देहि धरण्या पृथिव्या न प्रयोजनं नास्मत्कार्यसिद्धिः एतेन तत्रस्थब्राह्मणानां संतोषातिशयः सूचितः। एवमनेन प्रकारेण वेदपारगैर्ब्राह्मणैरुक्तोऽनरपतिः न नरपतिः राजा यस्य चक्रवर्तीत्यर्थः । नृपो दशरथः ॥ ४९ ॥ गवां दश दशगुणितानि शतसहस्राणि दशलक्षगवीरित्यर्थः । सुवर्णस्य सुवर्णमुद्रायाः दशकोटीः । रजतस्य रजतमुद्रायाः चतुर्गुणं चत्वारिंशत्कोटिमित्यर्थः तेभ्यः ऋत्विग्भ्यो ददौ ॥ ५० ॥

गो० टी०–किंचिदित्यस्य प्रपञ्चः–मणीति । मणिरत्नं मणिश्रेष्ठं समुद्यतं समुपस्थितम् । एवमिति । नरपतिरेवमुक्तः सन् दशशतसहस्राणि दशलक्षमिति यावत् ददौ ॥ ४७ ॥

५१ ] ति० टी०–सुवर्णं षोडशमाषकम् । चतुर्गुणं चत्वारिंशत्कोटिम् । ततः सर्वे ऋत्विजः सहिता दक्षिणाप्राप्तं सर्वं वसु धनमङ्गीकृत्य विभागाय ऋष्यशृङ्गवसिष्ठाभ्यां प्रददुस्तस्य पुरो न्यस्तवन्तः ॥ ५१ ॥

रा० टी०–ऋत्विज इति। ततः राजदत्तदक्षिणास्वीकारानन्तरमेव सहिताः मिलिताः सर्वे ऋत्विजः मुनये राममननशीलाय धीमते प्रशस्तबुद्धियुक्ताय ऋष्यशृङ्गाय वसिष्ठाय च वसु सर्वं प्राप्तं धनं प्रददुः तयोरग्रे स्थापयामासुः। तुशब्द एवार्थे॥५१॥

गो० टी०–दशेति। अर्द्धमेकं वाक्यम् । नृप इत्यस्य पूर्वश्लोकस्थस्यात्रान्वयः। चतुर्गुणं चतुर्दशकोटीरित्यर्थः । अत्र रजतानि प्रतिनिधित्वेन दत्तानि नतु दक्षिणात्वेन अतः " तस्माद्रजतं हिरण्यमदक्षिण्यम् " इतिश्रुत्या न विरोधः ॥ ४८ ॥

गो० टी०–ऋत्विज इति। सर्वे ऋत्विजः सहिताः सन्त वसु दक्षिणाप्राप्तं धनमंशीकृत्य दानाय ऋष्यशृङ्गाय वसिष्ठाय च ददुः ॥ ४९ ॥

५२ ] ति० टी०–तदाह–ऋष्येति। प्रविभागं कृत्वा । वसिष्ठादिद्वारा विभज्य गृहीत्वेत्यर्थः ॥ ५२ ॥

रा० टी०–तत इति । ततः द्रव्यस्थापनानन्तरं सर्वे द्विजोत्तमाः ब्राह्मणा मुनयो न्यायतः यथाशास्त्रं प्रविभागं कृत्वा ऋष्यशृङ्गवसिष्ठाभ्यांकारयित्वा भृशं सुप्रीतमनसः सन्तः प्रत्यूचुः कृत्वेत्यत्र अन्तर्भावितणिजर्थः ॥ ५२ ॥

गो० टी०–तत इति। न्यायतः शास्त्रतः यावदध्वर्यवे ददाति तदर्द्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थं नेत्रे एतेनेतरेषां दानमुक्तं भवतीत्युक्तक्रमेण ततः ऋष्यशृङ्गवसिष्ठमुखेन विभागं कृत्वा प्रीतमनसः प्रत्यूचुः । प्रीतमनस इति विशेषणेन सर्वे वयं प्रीताः स्म इति प्रतिवचनप्रकारोऽवगम्यते ॥ ५० ॥

५३ ] ति० टी०–सुप्रीतेति । संतुष्टाः सन्तोऽत्यन्तं मुदिताः स्मेत्यूचुः । राजानमिति शेषः । प्रसर्पकेभ्योऽभ्यागतेभ्यः ॥ ५३ ॥

रा० टी०–तत इति । ततः ऋत्विग्दक्षिणादानानन्तरं तदा तत्प्रसादकाले सुसमाहितः एकाग्रचित्तो राजा प्रसर्पकेभ्यो यज्ञदर्शनार्थमागतेभ्यो ब्राह्मणेभ्यः कोटिसंख्यं जाम्बूनदं जम्बूनदीसंभवं हिरण्यं सुवर्णं ददौ विभज्य यथाकामं समर्पयामास । तुशब्देन अन्येभ्योऽपि यथाकामं ददौ । कोटिशब्दोऽनन्तवाची ॥ ५३ ॥

५४ ] ति० टी०–जाम्बूनदं जम्बूनदीप्रभवं सुवर्णम् । कोटिशब्दोऽनन्तवाची। अथ सर्वदक्षिणादानानन्तरं याचमानाय दरिद्राय कस्मैचिद्दातव्यवस्त्वन्तराभावाद्धस्ताभरणमेव ददौ ५४

---

१ नरश्रेष्ठेति गो. पाठः । २ दशकोटीरिति गो. रा. पाठः । ३ ऋश्यश्रेति गो. पाठः ।

कस्मैचिद्याचमानाय ददौ राघवनन्दनः । ततः प्रीतेषु विधिवद्द्विजेषु द्विजवत्सलः ॥ ५५ ॥
प्रणाममकरोत्तेषां हर्षव्याकुलितेन्द्रियः । तस्याशिषोऽथ विविधा ब्राह्मणैः समुदाहृताः ॥५६॥
उदारस्य नृवीरस्य धरण्यां पतितस्य च । ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ॥ ५७ ॥
पापापहं स्वर्नयनं दुस्तरं पार्थिवर्षभैः । ततोऽब्रवीदृष्यशृङ्गं राजा दशरथस्तदा ॥ ५८ ॥
कुलस्य वर्धनं तत्तु कर्तुमर्हसि सुव्रत । तथेति च स राजानमुवाच द्विजसत्तमः ॥
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥ ॥ ५९ ॥
[5]स तस्य वाक्यं मधुरं निशम्य प्रणम्य तस्मै प्रयतो नृपेन्द्रः ।
जगाम हर्षं परमं महात्मा तमृष्यशृङ्गं पुनरप्युवाच ॥ ॥ ६० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

रा० टी०—दरिद्रायेति । अथ सर्वसंतोषप्रापणानन्तरम् उत्तमं हस्ताभरणं याचमानाय कस्मैचिद्द्विजाय राघवनन्दनः रघुकुलवर्धनो दशरथो ददौ ॥ ५४ ॥

गो० टी०—तत इति । प्रसर्पकेभ्यः यज्ञदर्शनार्थमागतेभ्यः " यावन्तो वै सदस्यास्ते सर्वे दक्षिण्या" इति श्रुतेः । जाम्बूनदं जम्बूनदीप्रभवमिति हिरण्यविशेषणम् ॥ ५१ ॥

गो० टी०—दरिद्रायेति । हस्ताभरणं याचमानाय कस्मैचित् दरिद्राय तदेव ददावित्यर्थः ॥ ५२ ॥

५५ ] ति० टी०—ततः । तेन हस्ताभरणदानेनेत्यर्थः ॥५५॥

रा० टी०—तत इति । ततः हस्ताभरणदानानन्तरं द्विजेषु विधिवत्प्रीतेषु प्रसादितेषु द्विजवत्सलो हर्षपर्याकुलेक्षणो राजा तेषां द्विजानां प्रणाममकरोत् ॥ ५५ ॥

गो० टी०—तत इति । ततः यथेष्टदक्षिणादानेनेत्यर्थः ५३

५६–५७ ] ति० टी०—विविधा आशिषः 'आब्रह्मन्नायुष्मन्त' इत्याद्याः ॥ ५६–५७ ॥

रा० टी०—तस्येति । उदारस्य अदेयवस्त्वभाववतः धरण्यां प्रणतस्य विप्रोद्देश्यकसाष्टाङ्गप्रणामं कुर्वतः नृवीरस्य वीरपुरुषस्य तस्य प्रसिद्धस्य राज्ञः विविधा अनेकप्रकारा अथाशिषः परममङ्गलाशीर्वादाः ब्राह्मणैः समुदाहृताः सम्यगुच्चारिताः अशोभन्तेति शेषः ॥ ५६ ॥

गो० टी०—तस्येति । तस्य तस्मै ॥ ५४ ॥

रा० टी०—तत इति । अनुत्तमं न उत्तमं यस्मात् सर्वोत्तममित्यर्थः । पापापहं स्वनित्यपुत्रवियोगहेतुभूतविघ्नध्वंसकम् स्वर्नयनं प्राकृतजनानां स्वर्गप्रापकम् पार्थिवर्षभैः खण्डमण्डलेश्वरश्रेष्ठैर्दुस्तरं दुष्प्रापं यज्ञं प्राप्य राजा ततः ब्राह्मणाशीर्वादश्रवणात् प्रीतमनाः अतिप्रसन्नचित्तो बभूवेति शेषः५७

गो० टी०—तत इति । पापं पुत्रोत्पत्तिप्रतिबन्धकदुरितमपहन्तीति पापापहम् । "अपे क्लेशतमसोः" इति हन्तेर्डप्रत्ययः । तमःपर्यायोऽत्र पापशब्दः । स्वर्नयनं पुत्रप्रापणद्वारा स्वर्गप्रापकम् इतरैः पार्थिवर्षभैः दुष्करं न विद्यते उत्तममस्मादित्यनुत्तमं सर्वोत्तमं यज्ञमश्वमेधं प्राप्य प्रीतमनाः बभूवेति शेषः ॥ ५५ ॥

५८ ] ति० टी०—स्वर्नयनं स्वर्गप्रापकम् । दुस्तरं प्राकृतै राजभिरप्राप्तसमाप्तिकम् ॥ ५८ ॥

रा० टी०—अश्वमेधसमाप्त्युत्तरकालिकं वृत्तमाह—तत इति । तदा साङ्गाश्वमेधसमाप्त्यनन्तरकाले ततः सुमन्त्रवचनस्मरणात् राजा दशरथः ऋष्यशृङ्गमब्रवीत् । तद्वचनमेवाह हे सुव्रत शोभनो व्रतः संकल्पो यस्मात् ईप्सितपूर्तिसंपादकेत्यर्थः । कुलस्य वर्द्धनं यत् तत्कर्म कर्तुं त्वमर्हस्येव । तुशब्द एवार्थे ॥ ५८ ॥

५९ ] ति० टी०—कुलस्य वर्धनं तादृशं कर्म ॥ ५९ ॥

रा० टी०—तथेति । द्विजसत्तमो द्विजश्रेष्ठः स प्रसिद्धः ऋष्यशृङ्ग हे राजन् तथा तत्कर्माहं करिष्यामि येन कर्मणा कुलोद्वहाः चत्वारस्ते सुताः भविष्यन्ति इति राजानमुवाच । चशब्दो येनेत्यर्थे ॥ ५९ ॥

गो० टी०—एवं पुत्रोत्पत्तिप्रतिबन्धकसकलदुरितनिवारणक्षमे भगवदङ्गभूतब्रह्मादिदेवताराधनरूपेऽश्वमेधे निर्वृत्ते साक्षाद्भगवदाराधनं पुत्रप्राप्तिकारणं क्रतुं सुमन्त्रोक्तं मनसि निधाय ऋष्यशृङ्गमर्थयते—तत इति । कुलस्य वर्द्धनं पुत्रोत्पत्तिहेतुभूतं कर्मेत्यर्थः । त्वं तु कर्तुमर्हसीत्यन्ते इतिरध्याहार्यः ॥ ५६ ॥

गो० टी०—तथेति । पुत्रीयं कर्म करिष्ये सुताश्च भविष्यन्तीत्युवाचेत्यन्वयः ॥ ५७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

६० ] ति० टी०—पुनरप्युवाच । पुत्रजनककर्मणे पुनरपि प्रेरयामासेत्यर्थः । यद्यपि पुत्रकामेष्ट्यैव पुत्रावाप्तिः संभवति, तथापि तपोरतस्य वैश्यस्य श्रावणस्य वधे तद्वियोगातुरतपोरततन्मातापितृमरणेन च ब्रह्मवधसमपापोत्पत्त्या तत्प्रायश्चित्तत्वेनाश्वमेधानुष्ठानं बोध्यम् ॥ ६० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

१ नृपतिरिति गो. पाठः । २ पर्याकुलेक्षण इति गो. रा. पाठः । ३ विधिवदिति गो. पाठः । ४ ऋश्येति गो. पाठः । ५ इदं पद्यं गो. पुस्तके नास्ति ।

## पञ्चदशः सर्गः ।

ऋष्यशृङ्गेण दशरथस्य पुत्रेष्टिविधानम् । देवैः रावणवधार्थं ब्रह्मप्रार्थना । ब्रह्मणा दशरथगृहेऽवतीर्य रावणं जहीति विष्णुप्रार्थना । विष्णुना रावणवधप्रतिज्ञानम् ।

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् । लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १ ॥
इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् । अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २ ॥
ततः प्राक्रमदिष्टिं तां पुत्रीयां पुत्रकारणात् । जुहावाग्नौ च तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४ ॥
ताः समेत्य यथान्यायं तस्मिन्सदसि देवताः । अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं ततः ॥ ५ ॥

रा० टी०—स इति । महात्मा स प्रसिद्धो नृपेन्द्रो राजराजो दशरथः तस्य ऋष्यशृङ्गस्य मधुरं वाक्यं निशम्य श्रुत्वा परममतुलं हर्षं जगाम प्राप । तस्मै तमनुकूलयितुं प्रणम्य नमस्कृत्य प्रयत मत्पुत्रप्राकट्यार्थं प्रयत्नं कुरु इति तमृष्यशृङ्गं पुनःपुनरुवाच । उरित्यर्थे ( ? ) अपिः पुनरर्थे ॥ ६० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

१ ] ति० टी०—मेधावीति । मेधाव्यशेषवेदशाखाधारणयोग्यबुद्धिमान् । वेदज्ञः स्वरूपतोऽर्थतश्च वेदतत्त्ववित्स ऋष्यशृङ्गः प्रतिश्रुतार्थनिर्वाहाय किं कर्तव्यमिति निश्चेतुं किंचित्कालं ध्यात्वा समाधिं कृत्वेदमुत्तरमिदमिहोत्तरानुष्ठेयकृत्यमिति निश्चित्य पश्चाल्लब्धसंज्ञः समाध्युत्थितस्तं नृपमब्रवीत् ॥ १ ॥

रा० टी०—मेधावीति । ततः राजवचनश्रवणानन्तरमेव मेधावी परमबुद्धिमान् वेदज्ञः निखिलवेदशब्दार्थतत्त्वज्ञाता अत एव लब्धसंज्ञः लब्धा विचारेण प्राप्ता संज्ञा रघुनाथसम्यग्ज्ञानं येन अत एव ततः सकलयागविस्तारकर्ता स ऋष्यशृङ्गः उत्तरं रामप्राकट्यहेतुभूतकरिष्यमाणकृत्यं किंचित्कालं ध्यात्वा विचार्य इदं वचनं नृपमब्रवीत् तुशब्द एवार्थे ॥१॥

गो० टी०—अथ दशरथाराधनव्याजेन साधुलोकरक्षणाय भूमाववतितीर्षुर्भगवानानुषङ्गिकदुष्कृद्विनाशाय देवैरभ्यर्थ्यते पञ्चदशे-मेधावीत्यादि । ततः प्रतिज्ञानन्तरं मेधावी मेधा धारणक्षमा धीः तद्वान् " अस्मायामेधास्रजो विनिः " इति विनिप्रत्ययः । वेदज्ञः अथर्वणवेदज्ञः स ऋष्यशृङ्गः किंचिद्ध्यात्वा किं कर्म कर्तुमत्रोचितमिति क्षणं विचिन्त्य मेधावितया ततः तदुत्तरक्षण एव लब्धसंज्ञः प्राप्तस्मृतिः सन् तं नृपमिदमुत्तरमब्रवीत् । द्विकर्मको ब्रुविः ॥ १ ॥

२ ] ति० टी०—किमब्रवीत्तदाह—इष्टिमिति । पुत्रीयां पुत्रप्राप्तिकारणभूताम् । पुत्रकारणात्पुत्रप्राप्तिहेतोः । अथर्ववेदप्रोक्तैर्मन्त्रैर्विधानतः कल्पसूत्रतः सिद्धां नियतफलत्वेन प्रसिद्धामिष्टिं करिष्यामि । इत्युक्त्वेति शेषः ॥ २ ॥

रा० टी०—तदुक्तिमेवाह—इष्टिमिति । तं पुत्रकारणान्नित्यपुत्रप्रकटनार्थं पुत्रीयां पुत्रप्राकट्यहेतुभूतां अथर्वशिरसि अथर्ववेदे प्रोक्तैः पुत्रेष्टिसाधकत्वेन निर्णीतैर्मन्त्रैः सिद्धां निष्पाद्यामिष्टिं विधानतः यथाविधि अहं करिष्यामि ॥ २ ॥

गो० टी०—इष्टिमिति । पुत्रीयां पुत्रोत्पत्तिनिमित्तभूताम् " पुत्राच्छ च" इति छप्रत्ययः । इष्टिं यागविशेषं ते पुत्रकारणात् पुत्रनिमित्तं ' निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् ' इति पञ्चमी । करिष्यामीत्युक्तवान् । मन्त्रदृष्टेन वेदावगतेन कर्मणाग्नौ जुहाव च शास्त्रदृष्टक्रमेण एकामाहुतिमकरोदित्यर्थः ॥ २ ॥ ३ ॥

३ ] ति० टी०—तत इति । मन्त्रदृष्टेन मन्त्रपूर्वकतया कल्पसूत्रे दृष्टेन ॥ ३ ॥

रा० टी०—तत इति । ततः इष्टिं करिष्यामीत्युक्त्यनन्तरं पुत्रकारणात् पुत्रीयामिष्टिं प्रारब्धवान् तेजस्वी ऋष्यशृङ्गः अत एव मन्त्रदृष्टेन वेदबोधितेन कर्मणा विधिनैव जुहाव । ततः प्राक्रमदिष्टिं तामित्यपि क्वचित्पठ्यते ॥ ३ ॥

४ ] ति० टी०—तत इति । तत्रेत्यर्थः ॥ ४ ॥

रा० टी०—ततःस्वांशभूतसत्यलोकादिस्थब्रह्मादिद्वारा जगत्सृष्ट्यादिविस्तारकर्तारः साकेतस्थब्रह्मविष्णुमहेश्वराः सगन्धर्वाः गन्धर्वसहिता देवाश्च सिद्धा सिद्धगणाश्च परमर्षयश्च भागप्रतिग्रहार्थं यथाविधि समवेताः प्रकटीभूय यागे स्थिताः । वैशब्दश्चार्थे स च हीनेपि अन्वेति इमे सर्वे साकेतस्था एवेत्यत्र बीजं त्वां नियोक्ष्यामहे इत्यादौ वक्ष्यामः ॥ ४ ॥

गो० टी०—एतच्छेषं ततो वै यजमानस्येत्यादिना वक्ष्यति मध्ये भगवदवतरणस्य निमित्तान्तरं देवताभ्यर्थनं दर्शयति—तत इत्यादिना । ततः तत्राश्वमेधे देवादयः यथाविधि यथाक्रमं भागप्रतिग्रहार्थं स्वस्वहविर्भागस्वीकारार्थं समवेताः संमिलिताः यज्ञसदसीति शेषः । अनुक्तसमुच्चयार्थेन चकारेण ब्रह्मापि समुच्चीयते ॥ ४ ॥

५-६ ] ति० टी०—ता इति । समेत्य । अन्तर्धानशक्त्येतरानवलोकामिति शेषः ॥ ५ ॥ ६ ॥

रा० टी०—ता इति । तस्मिन्प्रसिद्धे सदसि यागसभायां ता आगता देवताः यथान्यायं समेत्य ब्रह्मसमीपं प्राप्य लोककर्तारं स्वांशभूतसत्यलोकस्थब्रह्मद्वारा लोकानां कर्तारं किंच लोक्यते लोको दृष्टिः तत्कर्तारं यज्ञद्रष्टृत्वेनाहूतं साकेतस्थब्रह्माणमित्यर्थः । महत्सर्वप्रशंसनीयं वचनमब्रुवन् ॥ ५ ॥

१ प्रारब्धवानिष्टिमिति गो. रा. पाठः । २ जुहाव चाग्नाविति गो. पाठः । ३ भागेति गो. रा. पाठः । ४ महदिति गो. रा. पाठः ।

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः । सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६ ॥
त्वया तस्मै वरो दत्तः प्रीतेन भगवंस्तदा । मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७ ॥
उद्वेजयति लोकांस्त्रीनुच्छ्रितान्द्वेष्टि दुर्मतिः । शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८ ॥
ऋषीन्यक्षान्सगन्धर्वान्ब्राह्मणानसुरांस्तदा । अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९ ॥
नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः । चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १० ॥
तन्महन्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् । वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११ ॥
एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् । हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ॥ १२ ॥

गो० टी०–ता इति । ताः देवताः तस्मिन् प्रकृते सदसि अश्वमेधसदसि यथान्यायं यथाक्रमं समेत्य लोककर्तारं स्वस्वामिनं ब्रह्माणं महत् फलद्वारा गुरुतरं वचनमब्रुवन् ॥ ५ ॥

रा० टी०–तदाकारमाह–भगवन्निति । हे भगवन् त्वत्प्रसादेन त्वत्कृपया प्राप्तं यद्वीर्यं साकेताधीशातिरिक्तसर्वावध्यत्वं तस्माद्वीर्यात् नोऽस्माकं विहारास्पदीभूताः ये सर्वेलोकास्तान् रावणो नाम राक्षसो बाधते तं रघुनाथेच्छया साकेतादवतीर्णे रावणं शासितुं स्वांशभूतदेवादिद्वारा साक्षाद्वा न शक्नुमः । एतेन साकेतपुरवासिनां यथाकामं सर्वत्र गमनमिति व्यज्यते । यथा च साकेताद्रावणावतारः तथा तज्जन्मप्रतिपादकेषु ग्रन्थे वक्ष्यामः ॥ ६ ॥

गो० टी०–भगवन्निति । त्वत्प्रसादेन जनिताद्वीर्यादित्यन्वयः ॥ ६ ॥

७ ] ति० टी०–कुतस्तस्य युष्मद्बाधनक्षमवीर्यलाभ इत्यत आह—त्वयेति । मानयन्तः । सर्वदेवतावध्यत्वरूपत्वद्दत्तवरं परिपालयन्त इत्यर्थः ॥ ७ ॥

रा० टी०–तदेव विशदयन्नाह–त्वयेति । हे भगवन् प्रीतेन त्वया पुरा पूर्वं अस्मै वरो दत्तः अतस्तं वरं नित्यंमानयन्तो वयं तस्य क्षमामहे । तस्येति संबन्धसामान्ये षष्ठी । अपराधमिति शेषो वा चो हेतौ ॥ ७ ॥

गो० टी०–को मत्प्रसादः कथं भवतां तत्प्रतीकाराशक्तिस्तत्राहुः–त्वयेति । वरः अस्माभिरवध्यत्वरूपः तं वरं मानयन्तः पूजयन्तः सर्वं पीडनम् ॥ ७ ॥

८ ] ति० टी०–उच्छ्रितान्संपत्त्यादिभिरधिकान् । त्रिदशराजानमिति समासान्तोऽनित्यत्वान्न कृतः । प्रधर्षयितुमिच्छतीत्युक्तेरेतदुत्तरकालमिन्द्रजित्कृत इन्द्रबन्ध इति ज्ञायते ॥ ८ ॥

रा० टी०–उद्वेजयतीति । उच्छ्रितान्समृद्धान् त्रीन् लोकान् दुर्मतिः द्वेष्टि अत एव उद्वेजयति चालयति त्रिदशराजानमस्मदंशभूतं शक्रमपि प्रधर्षयितुं पराभावयितुमिच्छति । समासान्तविधेरनित्यत्वाट्टजभावः ॥ ८ ॥

गो० टी०–बाधनमेवोपपादयन्ति–उद्वेजयतीत्यादिना । उद्वेजयति भीषयते उच्छ्रितान् उन्नतान् लोकपालान् त्रिदशराजानं समासान्तस्य अनित्यत्वाट्टजभावः । प्रधर्षयितुं तिरस्कर्तुं स्थानात्प्रच्यावयितुमित्यर्थः ॥ ८ ॥

९ ] ति० टी०–असुरान् राहुप्रमुखान् ॥ ९ ॥

रा० टी०–ऋषीनिति । दुर्मेधा दुष्टस्वभावः अत एव वरदानेन मोहितः रावणः ऋष्यादीनतिक्रामतितिः बाधते । तथाशब्दश्चार्थे ॥ ९ ॥

गो० टी०–ऋषीनिति । असुरान् राहुप्रभृतीन् अतिक्रामति पीडयतीति यावत् ॥ ९ ॥

१० [ ति० टी०–प्रतपति । प्रतापयतीत्यर्थः । क्रौर्यातिशयद्योतकमेतज्जातीयं न वाति नाधिकं वाति । चञ्चलोर्मिमालास्वभावोऽपि न कम्पत इति विरोधालंकारः ॥ १० ॥

रा० टी०–नैनमिति । एनं रावणं सूर्यो न प्रतपति न संतापयति एतद्भिया एतत्संचारादिसमये मन्दकिरणो भवतीत्यर्थः । पार्श्वेऽस्य समीपे मारुतो वायुर्न वाति शनैर्वातीत्यर्थः । चलोर्मिमाली स्वाभाविकचञ्चलतरङ्गसमूहविशिष्टोऽपि समुद्रस्तं दृष्ट्वा न कम्पते स्थिरतरङ्गो भवतीत्यर्थः ॥ १० ॥

गो० टी०–नैनमिति । एनं रावणं प्रति न प्रतपति मन्दकिरणो भवति क्रीडापर्वतसंचारादिदशायामिति भावः । पार्श्वे अस्येति शेषः । न वाति पुष्पवाटिकादिषु पुष्पपतनादिभयादिति भावः । चलोर्मिमाली सदा चञ्चलस्वभावतरङ्गपङ्क्तिमान् न कम्पते गर्वितोयमुल्लङ्घतीति शोषणभयादिति भावः ॥ १० ॥

११ [ ति० टी०–तत्तस्मात्कारणात् । तस्मादुक्तगुणविशिष्टात् ॥ ११ ॥

रा० टी०–तदिति । घोरदर्शनाद्राक्षसात्प्राप्तरक्षःस्वभावाद्रावणाद्यन्महद्भयमस्मदंशानां भीतिः तदस्माकमेव भयं तस्माद्धेतोः हे भगवन् तस्य रावणस्य वधार्थमुपायं यत्नं कर्तुं त्वमर्हसि योग्योसीत्यर्थः ॥ ११ ॥

गो० टी०–तदिति । भयादिति भावः भयमुत्पन्नमिति शेषः । कर्तुं चिन्तयितुम् ॥ ११ ॥

१२ ] ति० टी०–एवमिति । भगवान्ब्रह्मेति शेषः । हन्तेत्यनुकम्पायाम् ॥ १२ ॥

रा० टी०–एवमिति । सर्वैः सुरैरेवमनेन प्रकारेण उक्तो

१ पुरेति गो. रा. पाठः । २ असुरान्ब्राह्मणांस्तथेति गो. असुरांस्तथेति रा. पाठः ।

तेन गन्धर्वयक्षाणां देवतानां च रक्षसाम् । अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३ ॥
नाकीर्तयदवज्ञानात्तद्रक्षो मानुषांस्तदा । तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४ ॥
एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् । देवा महर्षयः सर्वे प्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥
एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६ ॥

---

ब्रह्मा ततो देवोक्त्यनन्तरं चिन्तयित्वा पूर्ववृत्तमनुस्मृत्य अब्रवीत् । तद्वचनमेवाह दुरात्मनः प्राप्तरक्षस्स्वभावेन दुष्टमनसस्तस्य रावणस्य अयं वक्ष्यमाणः वधोपायो विहितः परमात्मनैव विनिर्मितः। हन्त इति हर्षे ॥ १२ ॥

गो० टी०—एवमिति । उक्तः ब्रह्मेति शेषः । चिन्तयित्वा उपायमिति शेषः । हन्तेत्युपायस्मरणजहर्षे ॥ १२ ॥

ति० टी०—तेनेति । तत्तथास्त्वित्युक्तमिति योजना ॥ १३ ॥

रा० टी०—उपायं वक्तुमुपक्रमते—तेनेति । गन्धर्वयक्षाणां देवदानवरक्षसां[1] च अवध्यः अहमस्मि स्यामिति वाक् तेन रावणेन उक्ता प्रार्थिता तत् तदा तथा इति मया उक्तम् चकारेणान्येभ्योपि स्वज्ञानविषयीभूतेभ्योऽभयं प्रार्थितं तदपि तथेति मया उक्तम् ॥ १३ ॥

गो० टी०—अयंशब्दार्थमाह—तेनेति । तत्तथोक्तमित्यन्वयः॥

१४–१५ ] ति० टी०—नेति । तदा वरणसमये । मृत्युर्मृत्युजनकः ॥ १४ ॥ १५ ॥

रा० टी०—नाकीर्तयदिति । अवात् ईश्वरस्यापि रक्षकात् रामात् प्राप्तं यज्ज्ञानं नियोगः आज्ञा इतःप्रभृति प्राप्तरक्षःशरीरे मां न ज्ञास्यसीति संकुचितबोधो वा इतःप्रभृति मदतिरिक्तमेव ज्ञास्यसीति वा तस्मात्तद्रक्षो रावणस्तदा वरयाचनसमये मानुषान्परमात्मा नराकृतिरित्यागमगम्यं साकेताधीशं नित्यद्विभुजं नाकीर्तयत् तस्माद्धेतोः स मानुषात् नराकृतिपरमात्मनो रामात् वध्यः अन्यः तस्मात् भिन्नः अस्य मृत्युर्विघातको न विद्यते बहुत्वमादरार्थम् तेन साकेताधीशरघुनाथस्य विष्ण्वादिवैलक्षण्यमीश्वरेश्वरत्वं च व्यक्तम् । एतेन नाकीर्तयदवज्ञानादित्यस्य अवज्ञानात् अनादरात् मानुषान्नाकीर्तयदित्यर्थः प्रत्युक्तः दशरथमनुषादीनां देवसाहाय्यकर्तृत्वस्य प्रसिद्धत्वान्मानुषानादरस्यासंभवात् । किंच रावणस्य सुराद्यवध्यत्वे वरदानमेव कारणं वा रावणबलवत्त्वं वा उभयं वा । न प्रथमं तात्कालिकमानुषैरेव तस्य वध्यत्वे सिद्धे तद्वधार्थं परमात्मप्रार्थना व्यर्था स्यात् न द्वितीयं वाल्यादिभिः कृततत्पराभवस्यासंभवापत्तेः अत एव न तृतीयम् किंच विष्ण्ववध्यत्वं स्वस्य रावणेन प्रार्थितं वा न वा । न प्रथमं त्वन्मते रामस्यापि विष्ण्वभिन्नत्वेन तेनाप्यवध्यत्वापत्तेः । नान्त्यं मानुषानादरोक्तेर्निष्प्रयोजनत्वापत्तेरित्यतोऽस्मदुक्त एवार्थो ग्रन्थकृदभिमतः। अत एव विष्णुप्रहृतचक्रेण न रावणमृतिः वक्ष्यति च चक्रव्रणवत्त्वं रावणस्येति इति दिक् । रघुनाथाज्ञया रावणावतारे प्रमाणम् 'प्रतापी राघवसखो भ्रात्रा वै सह रावणः' इत्यादि ॥ १४ ॥

गो० टी०—नाकीर्तयदिति । तदा अवध्यत्ववरणावसरे । अवज्ञानादवमानात् मानुषान्मानुषेण मृत्युः मारकः॥१४॥

रा० टी०—एतदिति । तदा तस्मिन्काले ब्रह्मणा समुदीरितं सम्यक् कथितं प्रियं सर्वहितमेतत् वाक्यं ते तत्रागताः सर्वे महर्षयः सर्वे देवाश्च[2] श्रुत्वा प्रहृष्टा अभवन् ॥ १५ ॥

गो० टी०—एतदिति । प्रहृष्टाः यथाकथंचिद्वधोपायसंभावनयेति भावः ॥ १५ ॥

१६ ] ति० टी०—एतस्मिन्नन्तरे सर्वदेवतासंतोषकाले । विष्णुः सदा भूभारोद्धारादिकर्ता ॥ १६ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे देवब्रह्मसंवादानन्तरकाले महाद्युतिः समाधिकरहितप्रकाशविशिष्टः शङ्खचक्रगदापाणि शङ्खचक्रगदादिभिः पाति लोकमिति शङ्खचक्रगदापो विष्णुस्तेन अण्यते प्रार्थनावचनमुच्चार्यते असौ सः। किंच शङ्खचक्रसहिता गदा यस्य स शङ्खचक्रगदो विष्णुस्तेनासमंतात्पाण्यते स्तूयते इति पाणिः किंच शङ्खादयो रेखारूपेण पाणावस्य सः पीतवासाः पीतवस्त्रधारी जगत्पतिः सर्वलोकस्वामी अविष्णुः अस्य वासुदेवस्य विष्णुर्व्यापकः विष्णोर्विष्णुरित्यर्थः। किंच विष्णुः ब्रह्मविष्णुमहेशव्यापकः राम इत्यर्थः । किंच आसमन्तादेति सर्वं व्याप्नोतीति एः विष्णुः तस्य विष्णुर्व्यापकः अन्तर अन्तः बन्धकः प्रापक इत्यर्थः । र रकाराक्षरो यस्य स राम इत्यर्थः । किंच अन्तःप्रापकः रः रकाराक्षरो यस्य स अन्तरः आसमन्तादेति सर्वं व्याप्नोति एर्विष्णुः तस्य विष्णुर्व्यापकः स एव स इति कर्मधारयः उपयातः प्राप्तः अन्तर इत्यादिपक्षद्वये एतस्मिन्देवब्रह्मसंवादानन्तरकाले इत्यर्थो बोध्य अस्मिन् प्रकरणे विष्णुशब्दः ब्रह्मादित्रिदेवव्यापकपर एव न तु चतुर्भुजे रूढः अत एव ततो नारायणो विष्णुरिति वक्ष्यमाणपद्ये न नारायणपदवैयर्थ्यम् अन्यथा द्वयोस्तत्रैव रूढत्वेनान्यतरवैयर्थ्यं दुर्निवारं स्यात् अत एव प्रभोः प्रभुरिति वक्ष्यमाणं सानुकूलम् ॥ १६ ॥

गो० टी०—अथ परमकारुणिको भगवान् 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ' इत्युक्तरीत्या धर्मसंस्थापनादित्रयकृते स्वाराधकदशरथमनोरथपरिपूरणाय चावतितीर्षुराजगामेत्याह—एतस्मिन्निति । एतस्मिन्नन्तरे रक्षापेक्षासमये अनेन चिरमस्यावसरप्रतीक्षत्वं गम्यते 'सर्वज्ञोपि हि देवेशः सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते ' इति शुकवः । विष्णुः सर्वान्तर्यामितया व्याप्य वर्तमानः भोगादप्यासेचनमेव

---

[1] देवदानवरक्षसामिति गो॰ रा॰ पाठः । [2] सर्वे महर्षयो देवा इति गो॰ रा॰ पाठः ।

वैनतेयं समारुह्य भास्करस्तोयदं यथा । तप्तहाटककेयूरो वन्द्यमानः सुरोत्तमैः ॥ १७ ॥
ब्रह्मणा च समागत्य तत्र तस्थौ समाहितः । तमब्रुवन्सुराः सर्वे समभिष्टूय संनताः ॥ १८ ॥
त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया । राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभो ॥ १९ ॥
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः । अस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ २० ॥
विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् । तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ॥ २१ ॥

---

वरमिति स्थित इत्यर्थः । त्वं मेऽहं म इत्यादि (?) महाद्युतिः रक्षणावकाशलाभसमुदितहर्षप्रकर्षकृतकान्तिविशेषयुक्तः अनेनेतःपूर्वं संसारिजनदुर्दशावलोकनेन दूयमानमानसत्वमुक्तम् । "स एकाकी न रमते" इतिश्रुतेः।शङ्खचक्रगदापाणिः आश्रितानां रक्षणापेक्षायां रक्षणोपकरणग्रहणाय विलम्बो माभूदिति सर्वदा तैरुपेतः । 'पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः' इत्यभियुक्तोक्तम् । पीतवासाः आश्रितरक्षणत्वरया बद्धकक्षः जगत्पतिः उक्तसकलविशेषहेतुभूतस्वस्वामिभावसंबन्धवान् उपयातः वैकुण्ठात् दशरथयज्ञवाटमाजगाम ॥१६॥

१७ ] ति० टी०–वैनतेयो गरुडः । केयूरं बाहुभूषणम् ॥ १७॥

१८ ] ति० टी०–ब्रह्मणा चेति । वन्द्यमान इत्युक्तं व्यज्यते । समागत्येति । स ब्रह्मभिर्देवैर्मिलित्वा समाहितो देवकार्यतत्परः । समभिष्टूय सम्यक्स्तुत्वा । संनताः प्रणताः ॥ १८ ॥

रा० टी०–ब्रह्मणेति । समाहितः ब्रह्मादिष्वपि स्वतेजसा परिपूर्णो रघुनाथस्तत्र यागे तस्थौ तं रामं ब्रह्मणा सह संनता एव सर्वे सुराः समागम्य रघुनाथसमीपं प्राप्य समभिष्टूय सम्यक् स्तुत्वाऽब्रुवन् प्रार्थयाञ्चक्रुः ।समाहित इत्यत्र वृद्ध्यर्थकहिधातोर्निष्ठा । चशब्द एवार्थे ॥ १७ ॥

गो० टी०–ब्रह्मणेति । तत्र सदसि ब्रह्मणा समागम्य समाहितः करिष्यमाणरक्षणकृत्ये एकाग्रः तस्थौ तमाश्रितरक्षणसंनद्धं सर्वे सुराः ब्रह्मादयः पितामहपुरोगमानित्युपसंहारात् । समभिष्टूय सम्यक् स्तुत्वा संनताः सम्यङ्नताः प्रणताः सन्तः अब्रुवन् ॥ १७ ॥

१९ ] ति० टी०–त्वामिति । अस्मद्दुःखहरणस्य त्वदेकसाध्यत्वादवतर्तुं नियोक्ष्यामहे । तदेवाह–राज्ञ इत्यादिना ॥१९॥

२० ] ति० टी०–धर्मज्ञस्येत्यादिराजविशेषणानि । ह्रीश्रीत्यादि राजपत्नीविशेषणं चावतारयोग्यताध्वननाय ॥ २० ॥

रा० टी०–प्रार्थनाकारमाह–त्वामिति । हे अविष्णो विष्णुविष्णो किंच हे विष्णो ब्रह्मादित्रिदेवव्यापक विभो सर्वसामर्थ्यविशिष्ट लोकानां जनानां हितकाम्यया त्वां नियोक्ष्यामहे । नियोजनमेवाह श्लोकद्वयेन अयोध्याधिपतेः प्रकटीभूतायोध्यास्वामिनः धर्मज्ञस्य सकलधर्मवेदितुः अत एव वदान्यस्य धर्मोपदेशकर्तुः अत एव महर्षिसमतेजसो राज्ञः महाराजाधिराजस्य तस्य प्रकटीभूतस्य दशरथस्य ह्रीश्रीकीर्त्युपमासु तिसृषु भार्यासु चतुर्विधं चतुरः अर्थधर्मकाममोक्षान् विशेषेण ददाति दानार्थं गृह्णाति तमात्मानं कृत्वा प्रकटय्य पुत्रत्वं स्वनिष्ठदशरथनिरूपितनित्यसुतत्वं आगच्छ लोकान्बोधय किंच आत्मानं साक्षात्स्वांशद्वारा च चतुर्विधं भरतादिसहितं कृत्वा प्रकटय्येत्यर्थः । अत्र प्रार्थयामहे इति वक्तव्ये नियोक्ष्यामहे इत्युक्त्या साकेतरघुनाथविहारस्थत्वं तेषां सूचितं तेन साकेताधीशोद्देश्यकोयं याग इति ध्वनितम् तेन यागकारककर्तृभिः यागागतदेवादीनां च साकेतस्थत्वं ध्वनितम् ॥ १८ ॥ १९ ॥

गो० टी०–त्वामिति । अर्द्धमेकं वाक्यम् । हे विष्णो लोकानां हितकाम्यया हितेच्छया त्वां नियोक्ष्यामहे उत्साहयिष्यामहे ' योगः संनहनोपायध्यानसंगतियुक्तिषु ' इत्यमरः । स्मारये त्वां न शिक्षये इतिवत् । केवलं त्वां प्रोत्साहयिष्यामः । स्वयमेव स्वकीयरक्षणे प्रवृत्तत्वादिति भावः । यदि नियोजनमेवार्थः स्यात् तदा पूर्वश्लोकोक्तमभिष्टूय संनता इत्येतद्विरुध्येत किंच नियोजनमत्र प्रार्थनमेव एवमुत्तरत्र भगीरथवचने हरस्तत्र नियुज्यतामिति वक्ष्यति ॥ १८ ॥

गो० टी०–किं नियोज्यमित्यत्राह द्वाभ्याम्–राज्ञ इत्यादि। पितृभावयोग्यत्वपराणि विशेषणानि । तस्येति यजमानो हस्तेन निर्दिश्यते ह्रीश्रीकीर्तयो दक्षकन्याः ता उपमा यासां तास्तथा चातुर्विध्यविधानं रावणरावणिलवणगन्धर्वविनाशाय॥१९॥२०॥

२१ ] ति० टी०–आत्मानं सोपकरणमात्मानम् । ' अन्येषुः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत् । तदन्येद्युः सुमित्रायामनन्तात्मा च लक्ष्मणः । सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये ' इति पाद्मोक्तेः । अत्रात्मानमित्युक्त्या शङ्खचक्रानन्तानामपि भगवद्रूपता सूचिता । हुंकारेण भवानिव पाञ्चजन्यः शब्दमात्रेण सकलभुवनक्षोभकत्वाद्विष्णुतुल्य एवेति बोध्यम् । चतुर्विधमिति । चातुर्विध्यविधानं रावणेन्द्रजिल्लवणगन्धर्ववधादीनां प्रत्येकं देवकार्यरूपाणां सद्भावात् ॥ २१ ॥

रा० टी०–तत्रेति । हे विष्णो रः रेफस्य वाच्यो विष्णुः ब्रह्मादिष्वपि परिपूर्णो राम इत्यर्थः तत्संबोधनं किंच हे विष्णो ब्रह्मादित्रिदेवव्यापक मानुषो नराकृतिर्नित्यद्विभुजः परमात्मा त्वं तत्र तासु भार्यासु भूत्वा साक्षात् स्वांशद्वारा च प्रकटीभूय प्रवृद्धं लोककण्टकं दैवतैः देवतानां इमे अधीशाः दैवताः ब्रह्मविष्णुमहेश्वराः दैवतानि देवाः ते च तानि चेत्येकशेषः तैरवध्यं रावणं समरे त्वं जहि ॥ २० ॥

---

१ इदं पद्यं गो. रा. पुस्तकयोर्न दृश्यते । २ तस्येति गो. रा. पाठः ।

अवध्यं दैवतैर्विष्णो समरे जहि रावणम् । स हि देवान्सगन्धर्वान्सिद्धांश्च ऋषिसत्तमान् ॥ २२ ॥
राक्षसो रावणो मूर्खो वीर्योद्रेकेण बाधते । ऋषयश्च ततस्तेन गन्धर्वाप्सरसस्तथा ॥ २३ ॥
क्रीडन्तो नन्दनवने रौद्रेण विनिपातिताः । वधार्थं वयमायातास्तस्य वै मुनिभिः सह ॥ २४ ॥
सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः । त्वं गतिः परमा देव सर्वेषां नः परंतप ॥ २५ ॥
वधाय देवशत्रूणां नृणां लोके मनः कुरु । एवं स्तुतस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ॥ २६ ॥
पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः । अब्रवीत्त्रिदशान्सर्वान्समेतान्धर्मसंहितान् ॥ २७ ॥
भयं त्यजत भद्रं वो हितार्थं युधि रावणम् । सपुत्रपौत्रं सामात्यं समन्त्रिज्ञातिबान्धवम् ॥ २८ ॥
हत्वा क्रूरं दुराधर्षं देवर्षीणां भयावहम् । दशवर्षसहस्राणि दशवर्षशतानि च ॥ २९ ॥
वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् । एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ॥ ३० ॥

---

गो० टी०—मम पुत्रभावेन भवतां किं प्रयोजनं तत्राहुः—तत्रेति । तत्र दशरथभार्यासु प्रवृद्धं वरबलभुजबलैरभिवृद्धम् । मानुषभावः किमर्थं भजनीयस्तत्राह—अवध्यं दैवतैरिति । "कृत्यानां कर्तरि वा" इति पक्षे तृतीया ॥ २१ ॥

२२—२३ ] ति० टी०—कुतो ममैव नियोगस्तत्राह—अवध्यमिति ॥ २२ ॥ २३ ॥

रा० टी०—स इति । राक्षसः रघुनाथेच्छया प्राप्तरक्षःस्वभावः अत एव मूर्खः कार्याकार्यविचाररहितः स प्रसिद्धो रावणः वीर्योत्सेकेन वीर्यहेतुकगर्वविशिष्टेनैव देवादीन्बाधते हिशब्द एवार्थे २१

गो० टी०—स किमर्थं हन्तव्यस्तत्राह—स हीति । वीर्योत्सेकेन वीर्यकृतगर्वेण ॥ २२ ॥

रा० टी०—ऋषय इति । ततः प्राप्तरक्षस्स्वभावत्वात् ऋषयः नन्दनवने क्रीडन्तो गन्धर्वाप्सरसश्च रौद्रेण भयंकरेण तेन रावणेनैव किल प्रसिद्धौ हिंसिताः तुशब्दश्चार्थे तथाशब्द एवार्थे २२

गो० टी०—ऋषय इति । ततः वीर्योत्सेकात् । क्रूरेण तेन रावणेन ऋषयो हिंसिताः । क्रीडन्तः क्रीडन्त्यः लिङ्गविपर्यय आर्षः । मिथुनतया चरतां हिंसनात् क्रूरेणेत्युक्तम् । किलेत्यैतिह्ये ॥ २३ ॥

२४—२५ ] ति० टी०—रौद्रेण कृत्याकृत्यविचारशून्येन । वधार्थं वधप्रार्थनार्थम् ॥ २४ ॥ २५ ॥

रा० टी०—वधार्थमिति । तस्य रावणस्य वधार्थं वधरूपप्रयोजनमुद्दिश्य वयं मुनिभिः सह सिद्धगन्धर्वयक्षाश्च आयाताः संमिलिताः ततो वै तस्मादेव हेतोः शरणं रक्षकं त्वां गताः प्राप्ताः ॥ २३ ॥

गो० टी०—वधार्थमिति । तस्य वधार्थं वयं मुनिभिः सहायाताः त्वत्समीपमिति शेषः । सिद्धादयश्चायाताः ततः रावणवधार्थं त्वां शरणमुपायं गताः ॥ २४ ॥

रा० टी०—त्वमिति । हे देव नित्यं क्रीडाविशिष्ट हे परंतप आश्रितशत्रुसूदन सर्वेषां नोऽस्माकं परमा उत्कृष्टा गतिः अतः नृणां लोके विद्यमानानां देवशत्रूणां वधाय त्वं मनःकुरु ॥

गो० टी०—रुद्रादिषु विद्यमानेष्वहमेव किमर्थमर्थ्य इत्यत्राह—त्वमिति । हे देव त्वं नः परमा गतिः उपायः नान्ये । परान् शत्रून् तापयतीति परंतपः "द्विषत्परयोस्तापेः" इति खच् । अनेन शत्रुवधसामर्थ्यमुक्तम् । मनः कुरु अवतरितुमिति शेषः । देवशत्रूणामिति बहुवचनेन रावणरावणिलवणगन्धर्वादीनामपि वधोऽर्थितः । अनेनाभिप्रायेण पूर्वं कृत्वात्मानं चतुर्विधमित्युक्तम् ॥ २५ ॥

२६ ] ति० टी०—वधायेति । नृणां लोक इत्यस्यावतरितुमिति शेषः ॥ २६ ॥

रा० टी०—एवमिति । देवेशः देवे नित्यं क्रीडने ईशः समर्थः त्रिदशा ब्रह्मादयः पुङ्गवा नासि प्रोता वृषभा इव यस्य सोऽविष्णुः विष्णुर्व्यापकः अत एव सर्वलोकनमस्कृतो रघुनाथः पितामहपुरोगान् ब्रह्मप्रभृतीन् धर्मसंहितान् रामोपासनरूपधर्मं प्राप्तान् समेतान् मिलितान् सर्वान् त्रिदशानब्रवीत् । धर्मसंहितमितिपाठ इति भट्टाः ॥ २६ ॥

गो० टी०—एवमित्यादि । सार्धश्लोक एकान्वयः । पितामहपुरोगान् ब्रह्मप्रधानान् धर्मसंहितान् शरणागतिरूपधर्मसंयुतान् ॥ २६ ॥

२७—२८ ] ति० टी०—धर्मसंहितान् धर्मसहितानित्यर्थः । 'धर्मसंहितम्' इति वा पाठः ॥ २७ ॥ २८ ॥

रा० टी०—तद्वचनमेवाह—भयमित्यादि सार्धश्लोकद्वयेन । भयं त्यजत वो युष्माकं भद्रं कल्याणं भवितेति शेषः । कल्याणहेतुमाह देवर्षीणां भयावहं भयप्रदं दुरात्मानं दुर्व्यसनं क्रूरं क्रूरकर्माणं सपुत्रपौत्रं पुत्रपौत्रसहितं सामात्यं अमात्यसहितं समन्त्रिज्ञातिबान्धवं मन्त्रिज्ञातिबान्धवसहितं रावणं वो हितार्थं युधि हत्वा क्रूरकर्महेतुभूतशरीरं संत्यज्य दशवर्षसहस्राणि दशगुणितत्रिसहस्रवर्षाणि त्रिंशत्सहस्रवर्षाणीत्यर्थः दशवर्षशतानि दशगुणितत्रिशतवर्षाणि च त्रिसहस्रवर्षाणीत्यर्थः । संकलनया त्रयस्त्रिंशत्सहस्रवर्षाणि इमां पृथिवीं पालयन्साक्षाद्वक्ष्यन्मानुषे लोके मनुष्यदृष्टिपथे वत्स्यामि अत्र यद्वक्तव्यं

---

१ वीर्योत्सेकेनेति गो. रा. पाठः । २ ऋषयास्त्विति गो. रा. पाठः । ३ क्रूरेणेति गो. पाठः । ४ किल हिंसिता इति गो. रा. पाठः । ५ एवमुक्तइति गो. पाठः । ६ दुरात्मानमिति गो. रा. पाठः ।

मानुष्ये चिन्तयामास जन्मभूमिमथात्मनः। ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ॥ ३१ ॥
पितरं रोचयामास तदा दशरथं नृपम्। ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ॥
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ॥ ३२ ॥

तमुद्धतं रावणमुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम्।
विरावणं साधु तपस्विकण्टकं तपस्विनामुद्धर तं भयावहम् ॥ ॥ ३३ ॥

तत् दशवर्षसहस्राणि दशवर्षशतानि च रामोराज्यमुपासित्वेत्यत्र प्रथमसर्गे उक्तम्। सार्धं श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०–भयमित्यादि। सार्द्धश्लोकद्वयमेकान्वयम्। भयं त्यजत वः युष्माकं भद्रमस्तु यस्मादहं सर्वेषां हितार्थं रावणं हत्वा धर्मसंस्थापनाय दशवर्षसहस्राणि वत्स्यामीति योजना। शङ्खचक्रगदापाणिरुपयात इति हि पूर्वमुक्तम् ॥ २७ ॥ २८ ॥

२९–३० ] ति० टी०–हत्वेति। हत्वा वत्स्यामीति योजना ॥ २९ ॥ ३० ॥

रा० टी०–एवमिति। आत्मवान् आत्मानो नियम्यत्वेन सन्ति अस्येति आत्मवान् विष्णुः ब्रह्मादित्रिदेवव्यापकः एवमनेन प्रकारेण देवानां देवेभ्यो वरं दत्वा मानुषे लोके प्रकटीभूतामथ सकलमङ्गलरूपामात्मनो जन्मभूमिमयोध्यां चिन्तयामास सस्मार ॥ २८ ॥

गो० टी०–एवमिति। आत्मवान् सर्वात्मशेषी। मानुषे मनुष्येषु जात्येकवचनम्। चिन्तयामास यथा देवैराज्ञप्तं तथेति शेषः। जन्मभूमिं जन्मस्थानम् ॥ २९ ॥

३१ ] ति० टी०–मानुष्य इति। मनुष्यलोके यथा देवैराज्ञप्तं तथात्मनो जन्मभूमिं चिन्तयामास योग्यत्वेन विचारयामास। ततो विचारानन्तरम् ॥ ३१ ॥

रा० टी०–तत इति। ततः देवप्रार्थितस्वीकाराद्धेतोः तदा अयोध्यास्मृत्यनन्तरकाले पद्मपलाशाक्षः पद्मपत्रायतनेत्रो रामः चतुर्विधं साक्षात्स्वांशद्वारा च चतुर्मूर्तिमात्मानं कृत्वा पितृमन्तं प्रापय्य नृपं राजराजं पितरं नित्यपितरं दशरथं रोचयामास प्रकाशयामास विनापि प्रत्ययमित्यनेन नित्यमदलोपः ॥ २९ ॥

गो० टी०–तत इति। ततः चिन्तानन्तरं पद्मपलाशाक्षः दशरथगुणस्मरणकृतनयनविकासोक्तिः। यद्वा पद्मपलाशाक्षः सर्वैः स्पृहणीयनयनयुगलः तथा च सर्वस्पृहणीयः स्वयमन्यं स्पृहयामास। यद्वा तस्य "यथाकप्यासं पुण्डरीकमेवमक्षिणी" इत्युक्तरीत्या परत्वचिह्नपुण्डरीकाक्षत्वयुक्तः। एवं च सर्वस्मात्परोऽपि जन्मरोचयामास यथा जनिमतो जन्महानिरभिलषिता तथा जनिरहितस्यापि जनिरभिलषितेत्यर्थः। दुर्लभं ह्यभिलषितं भवति कृत्वात्मानं चतुर्विधं जन्माभिलाषेऽपि दशरथगुणातिरेकेण चतुर्विधशरीरपरिग्रहमभिलषितवान्। आत्मानं स्वशरीरं चतुर्विधं पायसविभागक्रमेण पितरं "पिता पुत्रेण पितृमान् योनियोनौ" इत्युक्तरीत्या सर्वपिता स्वपुत्रं कंचित्पितरमभिलाष रोचयामास ऐच्छत् तदा रक्षणोद्योगसमये दशरथं नृपं गुणैर्दशरथोपममित्युक्तरीत्या जनित्वार्जितैः स्वाभाविकैश्च गुणैः स्वसदृशं देवोक्तं दशरथमेव स्वजन्मभूमित्वेन निश्चितवानित्यर्थः ॥ ३० ॥

३२ ] ति० टी०–रोचयामासैच्छत्। स्तुतिभिस्तुष्टुवुः ३२॥

रा० टी०–तत इति। ततः प्रार्थितस्वीकारानन्तरं सरुद्राः ब्रह्मरुद्रविष्णुसहिताः साप्सरोगणा अप्सरोगणसहिताः देवर्षिगन्धर्वा दिव्यरूपाभिः दिव्यं प्राकृतविलक्षणं रूपमस्ति वर्णनीयत्वेन यासु ताभिः गुणबोधनवाक्यैः मधुसूदनं तुष्टुवुः। मधुसूदनशब्दार्थस्तु मधुं दैत्यं नारायणद्वारा सूदयति हिंसयतीति मधुसूदनः। यद्वा मधौ चैत्रे सुः प्रादुर्भावो यस्य स मधुसूः ईश्वरात्कर्षेणानिति पालयतीति उदनः मधुसूश्चासौ उदनश्च मधुसूदनः। यद्वा उना शंभुना उच्यते अहर्निशमुच्यते इति ऊत् रामतारकमन्त्रः तेनानिति संसारमृत्युवारणेन शरणागतान् पालयतीति ऊदनः मधुसूश्चासौ ऊदनश्च मधुसूदनस्तम् ॥ ३० ॥

गो० टी०–तत इति। ततः भगवदिच्छानन्तरं सरुद्रा इत्यनुवादात् पूर्वं रुद्रोपि शरणागत इति सिद्धम्। दिव्यरूपाभिः दिव्यात्मस्वरूपविषयिणीभिः स्तुतिभिः स्तुतिरूपप्रबन्धैः तुष्टुवुः श्लाघयामासुः। मधुसूदनमिति मधुवदयमपि निरसनीय इत्याशयेनोक्तम् ॥ ३१ ॥

३३ ] ति० टी०–स्तुत्वा च यदूचुस्तदाह–तमिति। रावणमुद्धर समूलमुन्मूलय विरावणं विशेषेण त्रिलोकीक्रन्दनं तपस्विनां भयावहमित्यन्वयः। रावणस्मरणेनातिभीतचित्तानां देवानामुक्तौ तमित्यस्य पुनरुक्तिर्न दोषाय। अत्रेन्द्रादिदेवानां सपितामहानां नियोजकत्वं विभोश्च नियोज्यत्वं न दोषो लीलात्वादित्यन्यत्र विस्तरः ॥ ३३ ॥

रा० टी०–स्तुत्यनन्तरं पुनः प्रार्थितं तदाह–तमिति। उद्धतं प्रसिद्धमुग्रतेजसमुत्कटप्रतापं प्रवृद्धदर्पं प्रभूतगर्वविशिष्टं त्रिदशेश्वरद्विषमिन्द्रद्रोहिणं अत एव विरावणं सर्वसज्जनदुःखप्रदं तपस्विकण्टकं तपस्विनां परमात्मविचारशीलानां कण्टकं शत्रुं विचारविघातकमित्यर्थः। तपस्विनां व्रतपरायणानां भयावहं भयप्रदं तं रावणं साधु यथा स्यात्तथा उद्धर विनाशय 'क्षुद्रे शत्रौ च कण्टकम्' इति वैजयन्ती ॥ ३१ ॥

१ मानुष इति गो. रा. पाठः।

तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥　　　　॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

विष्णुसुराणां रावणविषयकः संवादः, ब्रह्मणः सकाशाद्रावणवरप्राप्तिनिवेदनम्, विष्ण्वन्तर्धानानन्तरं दशरथयज्ञभूमावग्नितः प्रादुर्भूतप्राजापत्यनरेण दशरथाय पायसदानम्, दशरथस्य भाविपुत्रप्राप्त्यर्थं पायसस्य स्वदारान्प्रति यथाक्रमं विभागश्च ।

**ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः । जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १ ॥**

**गो० टी०—**उक्तमर्थं सर्गान्ते पुनः संगृह्णाति—तमिति । उद्धतं जन्मत एवोद्धतं तं प्रसिद्धम् उग्रतेजसमुग्रप्रतापं वरदानेन प्रवृद्धदर्पम् । लोकान् विरावयतीति विरावणं सर्वलोकानामाक्रन्दयितारं तपस्विनां कण्टकं शत्रुम् 'क्षुद्रे शत्रौ च कण्टकः' इति वैजयन्ती । अत एव तपस्विनां भयावहं तं रावणं साधु निःशेषमुद्धर उन्मूलय ॥ ३२ ॥

३४ ] **ति० टी०—**तमिति । तं हत्वेवेत्यन्वयः । सबान्धवमित्यनेन लवणादिवधसूचनम् । हे सुरेन्द्र उपेन्द्र । गुप्तम् अर्थात्त्वयेति शेषः । गतदोषकल्मषं दोषा रागादयस्तद्रूपकल्मषहीनं स्वर्लोकं वैकुण्ठाख्यम् । गतज्वरः स्वभावतो निवृत्ताशेषतापः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

**रा० टी०—तमेवेति ।** सबलं ससैन्यं सबान्धवं राक्षसधर्मैकत्वेन बन्धुतां प्राप्तं विरावणं सर्वसज्जनदुःखप्रदमुग्रपौरुषमतिबलवन्तं तं रावणं हत्वैव हे सुरेन्द्र सुष्ठु रा दानं येषां तेषामिन्द्रः तत्संबोधनं दानिश्रेष्ठेत्यर्थः । गतदोषकल्मषं गतं नित्यं निवृत्तं दोषकल्मषं रागद्वेषादिरूपं मलं यस्मात् गुप्तं वाङ्मनसगोचरातीतं स्वःपरलोके गोलोके लोक्यते दृश्यते इति स्वर्लोकं साकेतं गतज्वरः निवर्तितसुरसंतापस्त्वमागच्छ प्राप्नुहि अत्र । गच्छेति वक्तव्ये आगच्छेत्युक्त्या तेषां देवानां साकेतनिवासित्वं व्यक्तम् ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

**गो० टी०—तमेवेति ।** एवकारेण विभीषणव्यवच्छेदः स्वर्लोकं वैकुण्ठम् । क्वचित्स्वलोकमिति पाठः । चिरं चिरकालस्थायी अनेन ब्रह्मलोकादिव्यावृत्तिः सुरेन्द्रेति संबोधनं गुप्तमस्मदादिभिः दुरधिगमम् 'अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः' इतिमहाभारतोक्तेः । गतदोषकल्मषं दोषा रागद्वेषादयः गतानि तद्रूपकल्मषाणि यस्मात्तत्तथा अनेनेन्द्रलोकादिव्यावृत्तिः । गतज्वरः आश्रितसंरक्षणेन गतव्यथः अनेन पुनःप्राप्तिपर्यन्तं संसारिविषये कदैते निस्तरिष्यन्तीति चिन्ताकुलत्वमुक्तम् । आगच्छेत्यनेन वैकुण्ठादवतीर्णत्वं गम्यते । अत्र स्वर्लोकपदस्येन्द्रलोकपरत्वे गुप्तत्वगतदोषकल्मषत्वादिविरोधः । अन्तरिक्षादुपरितनलोकमात्रस्य स्वर्गपदवाच्यत्वात् । अत एव हि क्वचिद्ब्रह्मलोकादावपि स्वर्गपदप्रयोगः । ब्रह्मलोकं प्रयास्यतीत्यत्रापि ब्रह्मणा स्वस्य लोकमप्राकृतस्थानं परमपदमिति व्याख्यातम् । स्वलोकमिति सम्यक् पाठः । सुरेन्द्रः विष्वक्सेनः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

१ ] **ति० टी०—तत इति ।** नियुक्तः प्रार्थितः यद्वाज्ञप्त इत्यर्थः । अत एव जानन्नपि वधोपायमज्ञ इव तेषामविनीतत्वलज्जापरिहाराय तान्पप्रच्छेत्यर्थः । जानन् वधोपायमिति शेषः ॥ १ ॥

**रा० टी०—तत इति ।** ततः देवस्तवनानन्तरं सुरसत्तमैः सुरश्रेष्ठैः साकेतस्थैरित्यर्थः । नियुक्तः प्रार्थितः नारायणो विष्णुः नारायणश्च आः ब्रह्मा च उः शिवश्च नारायणावस्तेषां विष्णुर्व्यापको रघुनाथः जानन् वधोपायं विज्ञातापि एवं वक्ष्यमाणप्रकारेण श्लक्ष्णं मनोहरं वचनमब्रवीत् । अत एव पर्यायीभूतोच्चरितविष्णुनारायणान्यतरस्य न वैयर्थ्यम् पूर्वोत्तरग्रन्थश्चाविरुद्धः ॥ १ ॥

**गो० टी०—**एवं मनुष्यलोके दशरथपुत्रत्वेनावतीर्य रावणवधः कर्तव्य इत्युक्तं तत्र किं मया उपेन्द्रादिवत् स्वस्वरूपेण स्थातव्यम् उत प्रकारान्तरेणेति भगवान् बहुमानार्थं पृच्छति—**तत इत्यादि ।** न रिष्यन्ति न नश्यन्तीति नराः नित्यवस्तूनि "अन्येभ्योऽपि दृश्यते" इति डप्रत्ययः । सुप्सुपेति नगनैकादिवत् समासः । नराणां समूहो नारम् "तस्य समूहः" इत्यण् नारमयनं वासस्थानं यस्यासौ नारायणः । "पूर्वपदात्संज्ञायामगः" इति णत्वम् सर्वान्तर्यामीत्यर्थः । यद्वा नाराणामयनं नारायणः इध्मव्रश्चनः पलाशशातन इत्यादिवल्ल्युडन्तस्यापि पुल्लिङ्गत्वम् एवं सर्वस्मात् परोपि सुरसत्तमैः नियुक्त इत्याश्रितपारतन्त्र्यमुच्यते । तादृशो विष्णुः जानन्नपि उत्तरनिश्चयज्ञोऽपि सन्मानार्थं श्लक्ष्णं मधुरं वचनमब्रवीत् ॥ १ ॥

उपायः को वधे तस्य राक्षसाधिपतेः सुराः। यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २ ॥
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम्। मानुषं रूपमास्थाय रावणं जहि संयुगे ॥ ३ ॥
स हि तेपे तपस्तीव्रं दीर्घकालमरिंदमः। येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः ॥ ४ ॥
संतुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः। नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५ ॥
अवज्ञाताः पुरा तेन वरदाने हि मानवाः। एवं पितामहात्तस्माद्वरदानेन गर्वितः ॥ ६ ॥
उत्सादयति लोकांस्त्रीन्स्त्रियश्चाप्युपकर्षति। तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परंतप ॥ ७ ॥
इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान्। पितरं रोचयामास तदा दशरथं नृपम् ॥ ८ ॥
स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युतिः। अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९ ॥

---

२-३ ] ति० टी०—उपाय इति। यमुपायमास्थाय तमहं निहन्यां स तस्य वध उपायः क इत्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—उपाय इति। हे सुराः तस्य राक्षसाधिपतेः रावणस्य वधे उपायः कः यमुपायं आस्थाय संपाद्य ऋषिकण्टकं तं रावणमहं हन्याम् ॥ २ ॥

गो० टी०—उपाय इति। आस्थाय स्वीकृत्य यमुपायमास्थाय तं निहन्यां स उपायः क इत्यन्वयः ॥ २ ॥

रा० टी०—एवमिति। एवमनेन प्रकारेण उक्ताः रघुनाथेन पृष्टाः सर्वे सुराः अव्ययं प्राकृतदेशकालवस्तुपरिच्छेदशून्यं विष्णुं ब्रह्मादित्रिदेवव्यापकं रामं प्रत्यूचुः। तदुक्तिमेवाह-मानुषीमिति। मानुषीं नित्यद्विभुजनराकृतिं स्वविग्रहं आस्थाय प्रकटायोध्यायां प्रकटय्य संयुगे संग्रामे रावणं जहि॥३॥

गो० टी०—एवमिति। मानुषीं न तु दैवीम् ॥ ३ ॥

४ ] ति० टी०—स हीति। लोकपूर्वजः सर्वलोकसमष्टित्वात् "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतेश्च। यद्वा ब्रह्मा चतुर्मुखः लोकपूर्वजत्वं च हिरण्यगर्भतादात्म्याध्यासेन ॥ ४ ॥

रा० टी०—रावणस्यान्यावध्यत्वे हेतुमाह—स इति सार्धश्लोकद्वयेन। हे अरिन्दम आश्रितारिनिवर्तक स रावणःदीर्घकालं तीव्रं तपस्तेपे हि प्रसिद्धमेतत् येन तपसा लोककृत्साक्षात् स्वांशद्वारा च लोककर्ता अतएव लोकपूर्वजः लोके सत्यलोके पूर्वजः स्वांशद्वारा पूर्वं प्रादुर्भूतो ब्रह्मा तुष्टोऽभवत्॥४॥

गो० टी०—तत्र हेतुमाह—सहीति। लोककृत्त्वे हेतुर्लोकपूर्वज इति। लोकशब्दोऽत्र देवादिजनपरः ॥ ४ ॥

५-६ ] ति० टी०—संतुष्ट इतिं। मानुषभिन्नेभ्यः प्राणिमात्रेभ्यो भयं न भवेदिति वरं ददावित्यन्वयः ॥ ५ ॥ ६ ॥

रा० टी०—संतुष्ट इति। संतुष्टः तत्तीव्रतपसा संतोषं प्राप्तः प्रभुः समर्थः साकेतस्थो ब्रह्मा तस्मै संकेतादवतीर्णाय राक्षसाय रघुनाथेच्छया प्राप्तरक्षस्स्वभावाय रावणाय वरं प्रददौ। वरमेवाह—मानुषात् नराकृतिपरमात्मनोऽन्यत्र भूतेभ्यः तत्स्मृतिविषयेभ्यः नानाविधेभ्यः प्राकृतमनुष्यादिभ्यः देवादिभ्यः ब्रह्मादिभ्यश्च भयं न भवेदिति शेषः ॥ ५ ॥

गो० टी०—संतुष्टइति। मानुषादन्यत्र मानुषं विना नानाविधेभ्यो भूतेभ्यो भयं नेति वरं प्रददावित्यन्वयः ॥ ५ ॥

रा० टी०—ननु नराकृतिपरमात्मनोऽपि भयाभावः कुतो न याचितः इत्यत आह—अवेति। हे अव अस्मद्रक्षक पुरा पौर्वकालिके वरदाने वरदापने वरयाचनसमय इत्यर्थः।ते अवाङ्मनसगोचराः मानवाः मनुवंशत्वेन प्रसिद्धाः नराकृतिनित्यद्विभुजपरमात्मानो भवन्तो नैव ज्ञाताः हिशब्द एवार्थे। वरदानेन मानवा इति पाठे तेन रावणेन मानवा न ज्ञाता इत्यर्थः। अन्तर्भावितणिजर्थकोऽत्र दाधातुः ॥ ६ ॥

गो० टी०—अभयं कुतो न दत्तं मानुषेभ्य इत्यत्राह—अवज्ञाता इति ॥ ६ ॥

७-८ ] ति० टी०—दृष्टो निश्चितः ॥ ७ ॥ ८ ॥

रा० टी०—एवमिति। एवमनेन प्रकारेण तस्मात्पितामहाद्ब्रह्मणः वरं प्राप्यैव दर्पितः प्राप्तगर्वः सः त्रीन् लोकानुत्सादयति पीडयति स्त्रियश्चापकर्षति हरति। उपसंहरन्नाह—तस्मादिति। हे परंतप तस्मादुक्तहेतोः तस्य रावणस्य वधः मानुषेभ्यः मनुवंशविशेषाद्भवतः दृष्टः ज्ञातः बहुत्वमादरार्थम् एतेन प्रकटीभूय तद्वधं कुरु इति प्रार्थना सूचिता ॥ ७ ॥

गो० टी०—एवमिति। दर्पितः संजातदर्पः ॥ ७ ॥

रा० टी०—इतीति। आत्मवान् आत्मानो नियम्याः सन्ति अस्येति विष्णुः ब्रह्मादित्रिदेवव्यापको रामः इति अनेन प्रकारेण सुराणामेतद्वचनं श्रुत्वा नृपं राजराजं पितरं नित्यपितरं दशरथं रोचयामास ॥ ८ ॥

गो० टी०—प्रकृतमुपसंहरति—तस्मादिति। इतीति पितरमिति। मनुष्यरूपेणावतरितुमिति शेषः ॥ ८ ॥

९ ] ति० टी०—स चापीति। दशरथोऽपीत्यर्थः। तस्मिन्काले भगवदवतितीर्षाकाले। पुत्रियामिति ह्रस्वश्छान्दसः॥९॥

रा० टी०—स इति। अपुत्रः पुत्रप्राकट्यरहितः महाद्युतिः पूर्वतोऽप्यतिदीप्तिमान् अरिसूदनः शत्रुनाशनः पुत्रेप्सुः पुत्रप्राकट्यकामः स प्रसिद्धो दशरथः पुत्रियां पुत्रप्राकट्यहेतुभूतामिष्टिं तस्मिन्काले अयजदकरोत् ॥ ९ ॥

---

१ मानुषीं तनुमिति गो. रा. पाठः। २ वरं प्राप्येति गो. रा. पाठः। ३ त्यववकर्षतीति गो. त्यपकर्षतीति रा. पाठः। ४ नृपं दशरथं प्रभुमिति गो. रा. पाठः।

स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् । अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ १० ॥
ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११ ॥
कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् । स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२ ॥
शुभलक्षणसंपन्नं दिव्याभरणभूषितम् । शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३ ॥
दिवाकरसमाकारं दीप्तानलशिखोपमम् । तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १४ ॥
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् । प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १५ ॥

---

गो० टी०—स चापीति । तस्मिन् काले भगवदवतितीर्षाकाले पुत्रियामित्यत्र ह्रस्व आर्षः ॥ ९ ॥

१० ] ति० टी०—स इति । निश्चयमवतारविषयम् आमन्त्र्य साधयामीत्युक्त्वेत्यर्थः । अन्तर्धानं गत इति तस्मादेव समाजादिति शेषः ॥ १० ॥

रा० टी०—स इति । विष्णुः ब्रह्मादित्रिदेवव्यापकः स रघुनाथः निश्चयं स्वप्रादुर्भावदार्ढ्यं कृत्वा पितामहं साकेतस्थब्रह्माणमामन्त्र्यसंभाष्य च महर्षिभिः कृतसाक्षात्कारपरमात्मभिः ऋष्यशृङ्गादिभिः देवैः साकेतस्थब्रह्मादिभिश्च पूज्यमानः सन्नन्तर्धानं अन्तःवृन्दावनमहावैकुण्ठमहाशंभुलोकचित्रकूटमध्ये धीयते रघुनाथेन नित्यं पाल्यते यत् तत् अप्रकटसाकेतपुरं गतः प्राप्तः । किंच अन्तर्धानं सर्वाप्रत्यक्षतां गतः अप्रकटायोध्यायां स्थित इत्यर्थः । चकार आवृत्त्यान्यत्राप्यन्वेति ॥ १० ॥

गो० टी०—स इति । निश्चयं मनुष्यभूत एव वावतरिष्यामीति निश्चयमामन्त्र्य साधयामीत्युक्त्वा ॥ १० ॥

११ ] ति० टी०—तत इति । अन्तर्धानानन्तरमित्यर्थः । अन्तर्धाय भगवानेव स्वतेजःसंभृतपायसमादाय हुताग्नेः सकाशात्प्रादुर्भवति स्म । नह्यन्यस्य भगवत्तेजोधारणे शक्तिरस्ति । तदेवाह—महद्भूतमिति । ' एको विष्णुर्महद्भूतम् ' इत्युक्तेः । अतुलप्रभं विद्युदादिवदृष्टिप्रतिघातकतेजोवत् । भूतं प्राणी ॥११॥

रा० टी०—रघुनाथोपदिष्टब्रह्मणा रघुनाथप्रादुर्भावसूचकं तेजोमयपायसंप्रेषितमिति वर्णयन्नाह—तत इत्यादि पञ्चभिः श्लोकैः । ततः रघुनाथोपदिष्टब्रह्मप्रेरणातः यजमानस्य पावकात्प्रादुर्भूतमतुलप्रभम् अतुला तोलयितुमशक्या प्रभा यस्य अत एव महत् सर्वपूज्यं अत एव भूतं चिन्तनीयं महावीर्यं अघटितघटनापटीयो देहबलविशिष्टं महाबलं तादृशेन्द्रियबलविशिष्टम् । वैशब्दो हेत्वर्थे ॥ ११ ॥

गो० टी०—अथ पुत्रकामेष्टिफलं भगवतश्चतुर्धावतारं सूचयन् प्रजापतिप्रेरितपुरुषेण पायसप्रदानं दर्शयति—ततो वा इति । श्लोकपञ्चकमेकान्वयम् । ततः विष्णोरन्तर्धानानन्तरम् । यजमानस्येति वर्तमाननिर्देशेन द्रव्यत्यागकाल एव प्रादुर्भावः सूचितः । पावकात् आहवनीयात् भूतं पुरुषविशेषः ॥ ११ ॥

१२ ] ति० टी०—कृष्णं कृष्णवर्णम् । स्निग्धाश्चिक्कणा हर्यक्षस्य सिंहस्येव तनुजा लोमानि श्मश्रुप्रवरा मूर्धजाः केशाश्च यस्य तत् । मुखस्थरोमाणि श्मश्रुप्रवरो मुखस्थं व्याप्तं रोम१२

रा० टी०—कृष्णं कृष्णवर्णं रक्ताम्बरधरं अरुणवस्त्रयुक्तं रक्ताक्षं अरुणनेत्रं दुन्दुभिस्वनं दुन्दुभिसदृशगम्भीरनादविशिष्टं स्निग्धाः दर्शनमात्रेण स्नेहोत्पादकाः हर्यक्षस्य सिंहस्येव तनुजाः लोमसमूहाश्च श्मनि मुखे श्रयते इति श्मश्रु च प्रवराः दीर्घाः मूर्धजाः केशाश्च यस्य तत् ॥ १२ ॥

गो० टी०—स्निग्धाः चिक्कणाः हर्यक्षस्येव तनुजाः लोमानि श्मश्रुप्रवरा मूर्द्धजाः केशाश्च यस्य तत्तथा समुत्सेधः उन्नतिः दृप्तशार्दूलविक्रमं तद्वद्भयंकरम् ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—समुत्सेध उच्छ्रायः । दृप्तशार्दूलवद्विक्रमः पादविन्यासो यस्य तत् ॥ १३ ॥

रा० टी०—शुभेति । शुभलक्षणसंपन्नं सामुद्रिकोक्तसल्लक्षणसंयुक्तं दिव्याभरणभूषितं प्राकृतविलक्षणभूषणभूषितम् शैलस्य पर्वतस्य शृङ्गवत्समुत्सेधमुन्नतं दृप्तो यः शार्दूलो व्याघ्रस्तद्विक्रम इव विक्रमः पादन्यासो यस्य तत् ॥ १३ ॥

१४ ] ति० टी०—दिवाकरेति । तद्वत्प्रभामण्डलव्याप्तम् । तैक्ष्ण्ये दृष्टान्तो दीप्तानलेत्यादि । तप्तेति । राजतो रजतविकारः अन्तपरिच्छदः पिधानपात्रं यस्यास्ताम् ॥ १४ ॥

रा० टी०—दिवाकरेति । दिवाकरसमाकारं दिवाकरस्य सूर्यस्य समः तुल्य आकार आकृतिर्यस्य तेजोविशेषेण अलक्ष्यमाणावयवविभागक इत्यर्थः । सएव दीप्तानलशिखोपमं तप्तजाम्बूनदमयीं तप्तं सद्यः प्रतप्तमिव यज्जाम्बूनदं सुवर्णं तन्मयीम् राजतो रजतविकारोऽन्तः उपरिभागवर्ती परिच्छद आच्छादनं यस्यास्ताम् ॥ १४ ॥

गो० टी०—प्रभामण्डलवत्तया दिवाकरसमाकारं तैक्ष्ण्यातिशयेन दीप्तानलशिखोपमं तप्तजाम्बूनदमयीं द्रुतकनकमयीं राजतः रजतविकारः अन्ते उपरि परिच्छदः पिधानपात्रं यस्यास्ताम् ॥ १४ ॥

१५ ] ति० टी०—पात्रीति । लिङ्गसामान्यादुत्प्रेक्षते पत्नीमिवेति । प्रगृह्येति । स्वयं दोर्भ्यां प्रगृह्य प्रादुर्भूतमित्यन्वयः । मायामयीमिव । इवशब्द एवार्थे भगवतो मायैवेत्यर्थः ॥ १५ ॥

रा० टी०—दिव्येति । दिव्यपायससंपूर्णां प्राकृतविलक्षणपायसपूरिताम् प्रियां प्रीतिविषयीभूतां पत्नीमिव पत्नीसदृशीं

---

१ कृष्णरक्ताम्बरधरमिति गो० पाठः ।

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् । प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ १६ ॥
ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः । भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १७ ॥
अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् । राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ १८ ॥
इदं तु नृपशार्दूल पायसं देवनिर्मितम् । प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ १९ ॥
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै । तासु त्वं लप्स्यसे पुत्रान्यदर्थं यजसे नृप ॥ २० ॥
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् । पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २१ ॥
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् । मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २२ ॥

विपुलां बृहतीं हस्तमात्रेण ग्रहीतुमशक्यामित्यर्थः । मायामयीं अद्भुतत्वेन मायारचितामिव सत्यामित्यर्थः ॥ १५ ॥

गो० टी०—पात्र्याः स्त्रीलिङ्गत्वेन पत्नीसाम्यम्¹ मायामयीमिव असंभावितत्वेनाश्चर्यावहामित्यर्थः । स्वयं प्रगृह्य प्रादुर्भूतमित्यन्वयः । विपुलतरत्वेन हस्तमात्रेण ग्रहीतुमशक्यत्वात् बाहुभ्यामित्युक्तम् ॥ १५ ॥

१६ ] ति० टी०—दशरथं समवेक्ष्येत्यन्वयः । प्राजापत्यं प्रजापतिना प्रेषितं प्रजापतेः प्रजापालकाद्विष्णोः संभूतम् तद्रूपमित्यर्थः ॥ १६ ॥

रा० टी०—पात्रीं दोर्भ्यां स्वयं प्रगृह्य समवेक्ष्य नृपं दर्शयित्वा नृपं दशरथमिदं वाक्यमब्रवीत् । तद्वाक्यमेवाह—हे नृप प्राजापत्यं प्रजापतिप्रेषितमिह भवत्समीपे अभ्यागतं प्राप्तं नरं पुरुषविशेषं मां विद्धि जानीहि ॥ १६ ॥

गो० टी०—समवेक्ष्येति । दशरथं समवेक्ष्येदमब्रवीत् कथमिहागतं मां प्राजापत्यं प्रजापते रागतम् "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति प्राग्दीव्यतीयो ण्यप्रत्ययः नरं विद्धि ॥१६॥

१७ ] ति० टी०—ततः परं प्राजापत्यं मां विद्धीति तदुक्त्यनन्तरम् पूर्वं कृत्यात इव भीत एव तद्वचनश्रवणोत्तरं निर्भय उवाचेत्यर्थः ॥ १७ ॥

रा० टी०—अत इति । तदा नरवचनश्रवणानन्तरकाले कृताञ्जलिर्बद्धयुगलकरो राजा अतः तदुक्तिश्रवणाद्धेतोः परं तृप्तिकरं वचः प्रत्युवाच सम्यगूचे । तदेवाह—ते तवागतमागमनं सु अस्मत्प्रेरकमस्तु आज्ञापयेत्यर्थः । प्रेरणार्थक सुधातोर्निष्पन्नं सु इति हे भगवन् अघटितघटनापटीयस्ते तव अहं किं करवाणि ॥ १७ ॥

गो० टी०—ततः परमिति । ततःपरं तदनन्तरमिति यावत् । प्राजापत्यं च मां विद्धीत्युक्त्यनन्तरमित्यर्थः । तदा तदैव ॥ १७ ॥

१८ ] ति० टी०—देवानर्चयता हयमेधेनेति शेषः ॥ १८ ॥

रा० टी०—अथो इति । अथो महाराजवचनानन्तरं प्राजापत्यो नरः इदं वक्ष्यमाणं वाक्यं पुनः अब्रवीत् । तदेवाह—हे राजन् देवान् नित्यं क्रीडापरान् साकेतनिवासिनः अर्चयता पूजनं कारयता त्वया इदं स्वाभिलषितसूचकं वचः प्राप्तम् ॥ १८ ॥

गो० टी०—अथो इति । अथो अथेति पर्यायौ अर्चयता अश्वमेधपुत्रकामेष्टिभ्यामिति शेषः ॥ १८ ॥

१९ ] ति० टी०—देवनिर्मितं देवेन प्रजापतिना निर्मितं धन्यं प्रशस्तम् ॥ १९ ॥

रा० टी०—इदमिति । देवनिर्मितं देवैः साकेतनिवासिसुरैः निर्मितं रचितं प्रजाकरं पुत्रप्राकट्यनिमित्तं धन्यं धनहेतुम् अरोगस्य भाव आरोग्यं तस्य वर्द्धनम् इदं पायसं हे नरशार्दूल पुरुषश्रेष्ठ त्वं गृहाण । तुना एतदभिवादय ॥ १९ ॥

गो० टी०—इदंशब्दार्थमाह—इदं त्विति । देवनिर्मितं देवेन विष्णुना निर्मितं धन्यं धनकरं स्वर्गादित्वाद्यत् ॥ १९ ॥

२० ] ति० टी०—भार्याणाम् । संबन्धसामान्ये षष्ठी । भार्याभ्य इत्यर्थः । आनुरूप्यं महिषीत्ववयशःशीलगुणादिना॥२०॥

रा० टी०—पायसग्रहणानन्तरं यत्कर्तव्यं तदाह—भार्याणामिति । अश्नीत यूयं भक्षयत इत्युक्त्वा अनुरूपाणां दिव्यपायसभक्षणयोग्यानां समानकुलोद्भवानामेवेत्यर्थः । भार्याणां प्रयच्छ भार्याणामिति संबन्धसामान्ये षष्ठी तासु पायसभक्षिकासु पुत्रान् त्वं लप्स्यसे एव यदर्थं यत्प्राकट्यार्थं यजसे । वैशब्द एवार्थे ॥ २० ॥

गो० टी०—भार्याणामिति । अनुरूपाणां सवर्णानामित्यर्थः । चतुर्थ्यर्थे षष्ठी ॥ २० ॥

२१ ] ति० टी०—हिरण्मयीं हिरण्यविकाराम् ॥ २१ ॥

रा० टी०—तथेति । प्रीतः सर्वप्रीतिविषयीभूतो नृपतिः देवान्नसंपूर्णां दिव्यपायसपूरितां देवदत्तां साकेतनिवासिप्राजापत्यनरदत्तां हिरण्मयीं तां विपुलां पात्रीं तथेत्युक्त्वा प्रतिगृह्य शिरसाऽभिवाद्य च अद्भुतं प्राकृतविलक्षणं प्रियदर्शनं मनोहररूपं भूतं प्राप्तं तत् प्राजापत्यनररूपं तेजश्च शिरसाभिवाद्य परमया मुदा युक्तः सन् अभिप्रदक्षिणं चकार । द्वयोरेकत्रान्वयः ॥ २१ ॥

गो० टी०—तथेति । देवान्नं देवनिर्मितान्नं देवदत्तां देवप्रेरिताम् ॥ २१ ॥

२२ ] ति० टी०—मुदेति । अभिप्रदक्षिणं पुनःपुनः प्रदक्षिणम् ॥ २२ ॥

गो० टी०—अभिवाद्येति । अभितः प्रदक्षिणमभिप्रदक्षिणम् ॥ २२ ॥

१ नरशार्दूलेति गो० पाठः ।

ततो दशरथः प्राप्य पायसं देवनिर्मितम् । बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २३ ॥
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् । संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २४ ॥
हर्षरश्मिभिरुद्द्योतं तस्यान्तःपुरमाबभौ । शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ २५ ॥
सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् । पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ २६ ॥
कौसल्यायै नरपतिः पायसार्धं ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥ २७ ॥
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥ २८ ॥

---

२३ ] ति० टी०—वित्तं धनम् ॥ २३ ॥

रा० टी०—तत इति । देवनिर्मितं पायसं ततः प्राजापत्यनराद्दशरथः प्राप्य वित्तं प्राप्याऽधन इव परमप्रीतो बभूव ॥२३॥

गो० टी०—तत इति । प्राप्य लब्ध्वा ॥ २३ ॥

२४ ] ति० टी०—अद्भुतप्रख्यमद्भुताकारं संवर्तयित्वा समाप्य कर्म पायसदानरूपं तत्रैवाग्निकुण्ड एव ॥ २४ ॥

रा० टी०—तत इति । अद्भुतप्रख्यं अद्भुताकारविशिष्टं ततः पावकात् भूतं प्राप्तं परमभास्वरं तत् प्राजापत्यनररूपतेजः तत् पुत्रेष्टिरूपं कर्म संवर्तयित्वा संसाध्य फलं प्रापय्येत्यर्थः तत्रैव पावके एवान्तरधीयत ॥ २४ ॥

गो० टी०—तत इति । अद्भुतप्रख्यमद्भुताकारं संवर्तयित्वा समाप्य तत्कर्म पायसप्रदानरूपं कर्म तत्र अग्नौ ॥ २४ ॥

२५-२६ ] ति० टी०—हर्षरश्मिभिर्हर्षोद्भूतमुखकान्तिभिरुद्योतं द्योतमानमन्तःपुरं तद्वर्ति स्त्रीजातं शारदचन्द्रस्यांशुभिर्नभ इवेत्यन्वयः ॥ २५ ॥ २६ ॥

रा० टी०—हर्षरश्मिभिरिति । तस्य राज्ञः हर्षरश्मिभिः हर्षवर्धिताङ्गकान्तिभिरुद्योतमतिप्रकाशितम् अन्तःपुरम् अभिरामस्य परमानन्ददातुः पूर्णस्येत्यर्थः शारदस्य शरत्संबन्धिनः चन्द्रस्य अंशुभिः उद्द्योतं नभ इव आबभौ ॥ २५ ॥

गो टी०—हर्षेति । हर्षरश्मिभिः हर्षकृतकान्तिभिः । उद्योतमुद्भूतप्रकाशमन्तःपुरमन्तःपुरस्त्रियः शारदस्य शरदि भवस्य अभिरामस्य निष्कलङ्कस्य अयं हर्षः पायसप्रदानकृतः ॥ २६ ॥

रा० टी०—स इति । स राजाऽन्तःपुरं प्रविश्य कौशल्यामिदं वक्ष्यमाणमब्रवीत् तदेवाह आत्मनः पुत्रीयं पुत्रप्राकट्यहेतुभूतमिदं पायसं प्रतिगृहीष्व तुशब्देन नमस्कारादिकं कुर्वित्यर्थः एवोऽनुक्तसमुच्चयार्थः तेन अन्या राज्ञीः अपि यथोचितमब्रवीदित्यर्थः ॥ २६ ॥

गो० टी०—स इति । पुत्रीयं पुत्रोत्पत्तिनिमित्तम् ॥ २६ ॥

२७ ] ति० टी०—कौसल्याया इति । अर्धशब्दोऽत्र समप्रविभागवाची अर्धादर्धं तुरीयांशमित्यर्थः ॥ २७ ॥

रा० टी०—कौशल्यायै इति । तदा पायसप्राप्तिकाले नरपतिः अमृतोपमं पायसार्धं पायासस्यार्धमंशम् महाभागमिति वक्ष्यमाणरामविशेषणात् ज्येष्ठपत्नीत्वाच्च कंचिदधिकमंशं पुत्रार्थकारणात् कौशल्यायै ददौ ततोऽनुचिन्त्य अप्रकटितसाकेते एकः सुमित्रापुत्रः कौसल्यापुत्रानुयायी द्वितीयः सुमित्रापुत्रः केकयीपुत्रानुयायीति विचार्यैव अर्धात् कौशल्याभागतोऽर्धं कंचिन्न्यूनमंशं नराधिपः सुमित्रायै ददौ कौशल्यया दापयामासेत्यर्थः अन्तर्भावितणिजर्थः कौशल्याभागादवशिष्टभागं अर्धं कृत्वा सुमित्रायै ददावित्यर्थस्तु न युक्तः अत्रावशिष्टपदाभावात् उत्तरत्रावशिष्टपदस्य विद्यमानत्वाच्च युक्तितो रामानुयायित्वानुपपत्तेश्च ततोवशिष्टार्धम् अवशिष्टमर्धं कौशल्याभागतः कंचिन्न्यूनांशं कैकेय्यै महीपतिः ददौ दापयामासेत्यर्थः । पुनरेव पुनरपि एवोऽप्यर्थे अवशिष्टार्धं अवशिष्टस्य दत्तकैकयीभागस्यार्धमंशं सुमित्रायै प्रददौ कैकेय्या प्रदापयामासेत्यर्थः । अयं भावः पायसेऽष्टौ अंशाः कृताः तत्र पञ्चांशान् कौशल्यायै दत्तवान् कौशल्याभागतः सार्द्धमेकमंशं सुमित्रायै दापयामास कौशल्याभागत उर्वरितत्रीनंशान् कैकेय्यै दापयामास कैकेयीभागात् सार्धमेकमंशं सुमित्रायै दापयामासेति सार्धत्रीन्स्वांशानेकीकृत्य कौशल्या बुभुजे तदेव रामप्रादुर्भावे निमित्तीभूतम् सार्धमेकं स्वांशमेकीकृत्य कैकयी बुभुजे तदेव भरतप्रादुर्भावे निमित्तीभूतम् कौशल्यादत्तं सार्धमंशमेकीकृत्य सुमित्रा पूर्वं बुभुजे तदेव लक्ष्मणप्रादुर्भावे निमित्तीभूतम् ततः कैकेयीदत्तं सार्धमंशं बुभुजे तदेव शत्रुघ्नप्रादुर्भावे निमित्तीभूतम् भरतलक्ष्मणप्रादुर्भावनिमित्तीभूतपायसयोः समत्वेऽपि रामोद्देश्यकभागांशप्रभावाल्लक्ष्मणेऽधिकप्रभावप्रतीतिः अनुचिन्त्येत्युक्तेर्महाराजाधिराजदशरथस्य सर्वज्ञत्वं सूचितम् । तदेव उपसंहरन्नाह—एवमनेन प्रकारेण भार्याणां पायसं पृथक्पृथक् विभज्य राजा ददौ कौशल्यायै इत्यारभ्य श्लोकत्रयमेकान्वयि अपिशब्दः एवार्थे चशब्दौ अनन्तरार्थकौ ॥ २७-२९ ॥

गो० टी०—अथ राज्ञः पत्नीभ्यो विभज्य पायसप्रदानमाह त्रिभिः—कौसल्याया इत्यादि । पायसस्यार्धं पायसार्धम् अर्धशब्दोत्र समांशवचनः 'अर्धं समेंशके' इत्यमरः ददौ-ज्येष्ठपत्नीत्वादिति भावः अर्धात् पृथक्कृत्य अर्धं सुमित्रायै द्वितीयमहिष्यै ददौ चतुर्थांशमित्यर्थः अवशिष्टस्य पायसस्यार्धमवशिष्टार्धम् अष्टमांशमित्यर्थः कैकेय्यै तृतीयमहिष्यै ददौ पुत्रार्थकारणात् पुत्ररूपप्रयोजननिमित्तात् इदं त्रिष्वपि दानेष्वन्वेति ॥ २७ ॥

२८ ] ति० टी०—अवशिष्टार्धमवशिष्टस्य चतुर्थांशस्यार्धम् अष्टमांशमित्यर्थः पुनरवशिष्टार्धमष्टमांशम् ॥ २८ ॥

अनुचिन्त्य सुमित्रायै पुनरेव महामतिः[1] । एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥२९॥
ताश्चैवं[2] पायसं प्राप्य नरेन्द्रस्योत्तमास्त्रियः । संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३० ॥
ततस्तु ताः प्राश्य तमुत्तमस्त्रियो[3] महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसोऽचिरेण[4] गर्भान्प्रतिपेदिरे तदा ॥ ॥ ३१ ॥

गो० टी०—प्रददाविति । अनुचिन्त्य कैकेय्यपेक्षया सुमित्रायाः अधिकांशभाक्त्वं भवेदिति विचार्येत्यर्थः तस्यापि हि कैकेय्या दाने कैकेयीसुमित्रयोः समांशता स्यात् तन्न युक्तम् अन्यथा ज्येष्ठाकनिष्ठावैषम्यं न स्यात् कैकेयी हि कनिष्ठा ‘ न तेम्बा मध्यमा तात गर्हितव्या कथंचन ’ इत्यत्रेतरपत्न्यपेक्षया मध्यमात्वमुक्तम् । वल्लभायामपि कैकेय्यां संभोगविषये पक्षपातः नतु धर्म्यसंविभागे अतो बहुमानाय ज्यैष्ठ्यक्रमात् भागतारतम्यं कृतम् अत एव संमानं मेनिर इति वक्ष्यति ततोनेन भागेन रामो विष्णोरर्धांशः लक्ष्मणः पादांशः भरतशत्रुघ्नौ पादस्यार्द्धांशौ नन्वेवं सति कथमुत्तरत्र भरतः साक्षाद्विष्णोश्चतुर्भागः लक्ष्मणशत्रुघ्नौ विष्णोरर्द्धसमन्वितावित्युच्यते सत्यं साक्षाद्विष्णोश्चतुर्भाग इत्यत्र साक्षाद्विष्णोः विष्णोरर्धस्य रामांशस्य चतुर्थो भाग इत्यर्थः यद्वा चतुर्थस्य भागश्चतुर्भागः अष्टमांश इत्यर्थः अर्धसमन्वितावित्यत्राप्यर्धशब्द एकदेशवाची ‘ भित्तं शकलखण्डे वा पुंस्यर्धोर्धं समेंऽशके ’ इत्येकदेशेऽपि पुंलिङ्गार्धशब्दस्यानुशासनात् अत्र प्राशनादिक्रमवशात् भरतस्य लक्ष्मणशत्रुघ्नाभ्यां ज्यैष्ठ्यम् ननु लक्ष्मणस्य भरतात् ज्यैष्ठ्यमंशाधिक्यात् प्रथमप्राशनाच्च अत एव वक्ष्यति ‘ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः । अभ्यवादयत प्रीतो भरतो नाम चाब्रवीत्’ इति मैवं कैकेय्या एव प्रथमप्राशनं सुमित्राया द्वितीयांशग्रहणविलम्बेन प्राशनविलम्बात् उत्पत्तिक्रमे तथोक्तेः न संख्ये भरतानुज इत्युक्तत्वात् अभिवादनं तु सीतायामेवान्वेति लक्ष्मणमासाद्य आलिङ्ग्येत्यर्थः रामानुजत्वव्यवहार आसक्त्याधिक्यात् एवं सति क्वचित् भरतस्य लक्ष्मणानुजत्वोक्तिः बहुव्रीहिसमासेन समाधेया भरतानुज इति लक्ष्मणस्याभिधानात् सर्वप्राशनानन्तरमेव सुमित्रया भुक्तमिति पुराणान्तरविरोधः कल्पभेदेन परिहार्यः रामादिमूर्तयश्च पायसपरिणामाः नतु शुक्रशोणितपरिणामाः तत्प्राशनानन्तरंगर्भ धारणवचनात् ‘ न तस्य प्राकृता मूर्तिः ’ ‘ न भूतसंघसंस्थानो देहोऽस्य परमात्मनः ’ इत्यादिस्मरणात् पायसं च भगवतः षाड्गुण्यविग्रह एव तद्वृद्धिश्च नान्नपानादिकृता किंत्विच्छाकृतेत्यादिकं सर्वमवसेयम् ॥ २८ ॥

२९ ] ति० टी०—अनुचिन्त्येति । कैकेय्यपेक्षया ज्येष्ठत्वं कौसल्यापेक्षया कनिष्ठत्वं च सुमित्राया विचार्य पादोनांशार्धदानम् तस्यै कनिष्ठत्वाच्च कैकेय्यै अष्टमांशदानम् वल्लभायां संभोगकर्मणि पक्षपातः, न धर्म्यविभागकर्मणि । एवं च भरतशत्रुघ्नौ पादस्यार्धमर्धमित्याहुः । अपरे तु रामभरतौ प्रत्येकं त्र्यंशौ लक्ष्मणशत्रुघ्नौ चाष्टमांशौ तथाहि—कौसल्यायै दत्तार्धस्यार्धादर्धं चतुर्थांशरूपं सुमित्रायै दत्तवान् कौसल्यया दापितवानित्यर्थः एवं कैकेय्यै कौसल्यादत्तार्धावशिष्टमर्धं ददौ ततः कौसल्यादत्तावशिष्टस्य कैकेय्यै दत्तस्य यदर्धं तदर्धं विचार्य पुनरपि सुमित्रायै ददौ तया दापयामासेत्यर्थः अत्रार्धपदावृत्तिर्बोध्या तदुक्तं कालिदासेन—‘स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् । द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ अर्चिता तस्य कौसल्या प्रिया केकयवंशजा । अतः संभाविताः ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः । चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि ’ इति । अर्धार्धभागाभ्यामित्यस्य स्वस्वलब्धांशसंबन्ध्यर्धार्धभागाभ्यामित्यर्थः पृथगिति विभज्येति शेषः कतकस्याप्येवं रीतिरेव संमतेत्याहुः । क्वचित्तु—‘इत्युक्त्वा प्रददौ तस्यै हविषोऽर्धं नराधिपः । स्वयमेव समं कृत्वा भागं भागवतां वरः ॥ अर्धादर्धं ददौ चापि कैकेय्यै स नराधिपः । चतुर्भागं द्विधा कृत्वा सुमित्रायै ददौ तदा ॥’ इति दृश्यमानः पाठः स त्वसांप्रदायिक एव तत्तद्दत्तभागजन्यस्य तत्तत्पुत्रैकवाक्यतौचित्येन । अपरे तु व्याख्यैवात्र ज्यायसी पाठान्तरे व्याख्यान्तरे च लक्ष्मणरामयोरेव भरतशत्रुघ्नयोरेवैकवाक्यतायां बीजालाभः उक्तं च पाद्मे—‘युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशवशात्स्वतः ’ इतीति दिक् ॥ २९ ॥

गो० टी०—उपसंहरति—एवमिति ॥ २९ ॥

३० ] ति० टी०—ताश्चेति । प्राप्य प्रहर्षेणोदितं विकसितं चेतो यासां ताः स्त्रियो नरेन्द्रस्य संमानमपक्षपातेन यथोचितव्यवहारं मेनिर इत्यन्वयः ॥ ३० ॥

रा० टी०—ता इति । नरेन्द्रस्य राजाधिराजस्य ताः रामादिप्रादुर्भावकर्त्र्यः उत्तमाः सर्वाः कौसल्यादयः स्त्रियः एवं रामादिप्रादुर्भावहेतुभूतं पायसं प्राप्यैव प्रहर्षोदितचेतसः प्रहर्षितचित्ताः सत्यः संमानं राजकृतपरमसत्कृतिं मेनिरे चशब्द एवार्थे ॥३०॥

गो० टी०—ता इति । संमानं राजकृतपायसप्रदानक्रमरूप बहुमानं मेनिरे अनुमेनिरे प्रहर्षोदितचेतसः उदितप्रहर्षमनसः तारतम्येन दानं पौर्वापर्यं च ज्येष्ठानुक्रमकृतत्वेन सर्वासां संमतमेवमासीदिति भावः ॥ ३० ॥

३१ ] ति० टी०—तत इति । महीपतेः स्त्रिय इत्यन्वयः । उत्तमपायसम् उत्तमत्वं च तस्य विष्णुतेजःसंभृत-

१ महीपतिरिति गो. पाठः । २ तास्त्वेतदिति गो. पाठः । ३ तदुत्तमेति गो. तदुत्तमाः स्त्रिय इति रा. पाठः । ४ तेजसश्चिरेणेति गो. पाठः ।

ततस्तु राजा प्रतिवीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः ।
बभूव हृष्टस्त्रिदिवे यथा हरिः सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

भगवतो ब्रह्मणो देवैः सह संवादः ।

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः । उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥ १ ॥
सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः । विष्णोः सहायान्बलिनः सृजध्वं कामरूपिणः ॥२॥
मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे । नयज्ञान्बुद्धिसंपन्नान्विष्णुतुल्यपराक्रमान् ॥ ३ ॥

---

त्वात् । हुताशनादित्यसमानतेजसः इति गर्भाणां स्त्रीणां च तन्त्रेण विशेषणम् ॥ ३१ ॥

**रा० टी०–तत इति ।** तदा पायसप्राप्त्यनन्तरकाले एव ततः पायसमाहात्म्यश्रवणात् हुताशनादित्यसमानतेजसः महीपतेरुत्तमाः स्त्रियः पृथक् यथोचितविभक्तं तत् राजदत्तमुत्तमं पायसं प्राश्य अचिरेण अदीर्घकालेन गर्भान्गर्भगतत्वेन प्रतीयमानान्स्वस्वनित्यपुत्रान् प्रतिपेदिरे प्रकटतः प्राप्तप्रायान् मेनिरे तुशब्द एवार्थे ॥ ३१ ॥

**गो० टी०–**वक्तव्येऽपि यज्ञवृत्तान्तशेषे प्रसङ्गात् सौकर्याय नगरप्रवेशानन्तरभाविकथाशेषं संग्रहेण दर्शयति–**तत इति ।** तत्पायसमित्यन्वयः हुताशनादित्यशब्दौ तत्तेजःपरौ ॥ ३१ ॥

**३२ ] ति० टी०–**प्रतिलब्धमानसः प्रतिलब्धशब्दः प्रतिलब्धस्वास्थ्यपरः तादृशं मानसं यस्येत्यर्थः यद्वा पूर्णमनोरथ इत्यर्थः यथाशब्दश्चार्थे त्रिदिवे हरिरिन्द्रश्च हृष्ट इत्यर्थः । सुरेन्द्रेत्यादि राजविशेषणम् भगवदंशगर्भसंभवेन तैः पूजितो मनसा स्तुतः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षोडशः सर्गः ॥ १६ ॥

**रा० टी०–तत इति ।** ततो गर्भधारणानन्तरमेव सुरेन्द्र इन्द्रः सिद्धर्षीणां गणाश्च तैरभिपूजितः प्रकटीभूतरघुनाथपितृत्वात् नित्यं सेवितः राजा महाराजाधिराजदशरथः प्ररूढगर्भाः प्रादुर्भावप्राप्तरामादितेजस्काः अत एव प्रतिलब्धमानसाः प्राप्तमनोरथाः ताः साकेतात्प्रादुर्भूताः स्त्रियः वीक्ष्य त्रिदिवे हरिरिन्द्रो यथा इव हृष्टोऽत्यन्तहर्षं प्राप्तो बभूव तुशब्द एवार्थे ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षोडशः सर्गः ॥ १६ ॥

**गो० टी०–तत इति ।** प्रतिलब्धमानसः स्वस्थचित्तः ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

**१ ] ति० टी०–पुत्रत्वमिति ।** गते गन्तुमुपक्रान्ते ॥१॥

**रा० टी०–पुत्रत्वमिति ।** अविष्णौ विष्णुव्यापके रामे महात्मनः सर्वपूज्यस्वरूपस्य तस्य प्रसिद्धस्य राज्ञो दशरथस्य पुत्रत्वं प्रकटपुत्रधर्मं गते प्राप्ते सत्येव भगवान् नियोजनसमर्थः स्वयंभूः साकेतस्थब्रह्मा सर्वाः देवता इदं वक्ष्यमाणं वचः उवाच ॥ १ ॥

**गो० टी०–**विष्णोरन्तर्धानानन्तरं कार्यद्वयं प्रवृत्तं पायसहस्तस्याग्निपुरुषस्योत्थानं देवान् प्रति ब्रह्मनियोगश्च तत्र वाचः क्रमवर्तित्वेन प्रथमोपस्थितमग्निपुरुषोत्थानं तत्प्रसक्तं च सर्वमुक्त्वा अथ ब्रह्मनियोगतत्फले दर्शयति सप्तदशे–**पुत्रत्वमित्यादि ।** गते गन्तुं प्रवृत्ते भगवान् भाविकार्यज्ञः ॥ १ ॥

**२ ] ति० टी०–**सहायान्सहायकरणसमर्थान् । ननु कदाचिद्भगवान्प्रतिज्ञायापि नावतरेदत उक्तम्–**सत्यसंधस्येति ।** सत्यप्रतिज्ञस्येत्यर्थः ॥ २ ॥

**रा० टी०–**तद्वचनमेवाह–**सत्येति ।** सत्यसन्धस्य सत्यप्रतिज्ञस्य वीरस्य समाधिकरहितवीरत्वविशिष्टस्य नोऽस्माकं सर्वेषां हितैषिणः विष्णोः ब्रह्मादित्रिदेवव्यापकस्य रामस्य सहायान् प्राकट्यावस्थायां तेन सह यन्ति गच्छन्तीति तान् बलिनः अतिबलवतः कामरूपिणः ईप्सितरूपधारणसमर्थान् सृजध्वं स्वान् स्वांशान् प्रकटयध्वमित्यर्थः ॥ २ ॥

**गो० टी०–सत्येति ।** सह अप्राधान्येन अयन्त इति सहायाः किंकराः तान् कामरूपिणः कपटराक्षसयुद्धक्षमशरीरिणः ॥ २ ॥

**३ ] ति० टी०–**मायाविदोऽसुरादिमायासंहारसमर्थदेवमायाशक्तिमतः जवे वेगविषये ॥ ३ ॥

**रा० टी०–**तदेव विशदयन्नाह–**मायेत्यादिचतुर्भिः ।** मायाविदः राक्षसादिनिर्मितदम्भवेदितॄन् शूरान् युद्धोत्साहविशिष्टान् जवे वायुवेगसमाँश्च नयज्ञान् नीतिविज्ञान् बुद्धिसंपन्नान् परमबुद्धिमतः विष्णुतुल्यपराक्रमान् ॥ ३ ॥

**गो० टी०–**उक्तसहायान् विशेषयति त्रिभिः–**मायेत्यादि ।** माया आश्चर्यशक्तिः तद्विदः जवे वेगे विषये नयज्ञा नीतिज्ञान् असंहार्यान् 'परैरिति शेषः उपायज्ञान् अनागतविधानज्ञान् यद्वा नयज्ञान् युक्तिशालिनः उपायज्ञान् सामाद्युपायज्ञान् सिंह-

---

१ मानसा इति रा० पाठः इति भाति । २ अविष्णौ इति रा० पाठः ।

असंहार्याननुपायज्ञान्दिव्यसंहननान्वितान् । सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४ ॥
अप्सरःसु च मुख्यासु गन्धर्वीणां तनूषु च । यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च ॥ ५ ॥
किन्नरीणां च गात्रेषु वानरीणां तनूषु च । सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥
पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः । जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७ ॥
ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् । जनयामासुरेवं ते पुत्रान्वानररूपिणः ॥ ८ ॥
ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः । चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः ॥ ९ ॥
वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमात्मजम् । सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १० ॥

संहननान्वितान् सिंहतुल्यसंस्थानैर्युक्तान् सर्वास्त्राणां यो गुणः शक्तिस्तेन संपन्नान् अमृतं प्राश्नन्तीत्यमृतप्राशनाः कर्तरि ल्युट् पीतामृतानिव मृत्युरहितानित्यर्थः हरिरूपेण वानररूपेणोपलक्षितान् प्रायिकाभिप्रायमिदं तुल्यपराक्रमान् आत्मसदृशपराक्रमान् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

४] ति० टी०–असंहार्यानिति । परैरिति शेषः । संहननं शरीरम् सर्वास्त्रगुणसंपन्नान्सर्वास्त्रनिवारणसामर्थ्यरूपगुणयुक्तान् यद्वा प्रयोगोपसंहारादयस्तद्गुणाः । अमृतप्राशना देवाः ॥ ४ ॥

रा० टी०–असंहार्यानिति । असंहार्यान् शत्रुभिर्विनाशयितुमशक्यान् उपायज्ञान् शमादियत्नाभिज्ञान् सिंहसंहननान्वितान् सिंहसदृशावयवविशिष्टान् सर्वास्त्रगुणसंपन्नान् सर्वैरस्त्रगुणैः प्रयोगोपसंहारादिभिर्युक्तान् अमृतप्राशनान् देवान् एव इवशब्द एवार्थे ॥ ४ ॥

५ ] ति० टी०–गन्धर्व्यो गन्धर्वपत्न्यः ॥ ५ ॥

रा० टी०–अप्सरस्स्विति । मुख्यासु अप्सरस्सु गन्धर्वीणां तनूषु च यक्षपन्नगकन्यासु च ऋक्षविद्याधरीषु च ॥ ५ ॥

६ ] ति० टी०–वानरीणां तनूषु वानरीशरीरसदृशशरीरासु अप्सरःप्रभृतिष्वित्यर्थः हरिरूपेणेति ' तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं तु कुलस्य तव वानराः ' इति रावणविषये नन्दिकेश्वरशापादेवमुक्तम् । तुल्यपराक्रमान् स्वस्वतुल्यपराक्रमानित्यर्थः ॥ ६ ॥

रा० टी०–किन्नरीणामिति । किन्नरीणां गात्रेषु च वानरीणां तनूषु च हरिरूपेण उपलक्षितान् तुल्यपराक्रमान् स्वस्वपितृसदृशानित्यर्थः किंच तुल्यपरान् तुल्यबलविशिष्टशत्रून् अपि आक्रमन्ते पराभावयन्तीति ते तान् । किंच स्वस्वप्रादुर्भावककुलेन तुल्यः पराक्रमो येषां तान् पुत्रान् तत्तत्पुत्रत्वेन प्रतीयमानान् सृजध्वं प्रकटयध्वम् ॥ ६ ॥

७ ] ति० टी०–ननु त्वयापि स्वांशः स्रष्टव्य इति चेत्तत्राह–पूर्वमेवेति । पूर्वयुग इत्यर्थः । तदुत्पत्तिप्रकारमाह–जृम्भमाणस्येति सहसा तत्क्षणे ॥ ७ ॥

रा० टी०–पूर्वमिति । ऋक्षपुङ्गवः ऋक्षश्रेष्ठः जाम्बवान् मया सृष्टः प्रादुर्भावितः प्रादुर्भावप्रकारमाह–जृम्भमाणस्य मम वक्त्रात्सहसा शीघ्रम् अजायत प्रादुरभवत् ॥ ७ ॥

गो० टी०–देवत्वाविशेषात् भवतापि पुत्रोत्पादनं कार्यमिति मा वोचध्वमित्याह–पूर्वमिति । सृष्टः भाविरामसहायबुद्ध्येति शेषः । सृष्टिप्रकारमाह–जृम्भमाणस्येति । स इति शेषः । अत्र पार्वतीशापेन स्वक्षेत्रे पुत्रोत्पादनासंभवादप्सरःप्रभृतयः क्षेत्रत्वेनोक्ताः गुणवत्पुत्रलाभाय मुख्यास्वित्युक्तम् अयोनिजत्वेन सद्यः प्रवृद्धत्वसिद्धये तनुष्वित्युक्तम् नन्दिकेश्वरशापानुसारेण हरिरूपेणेत्युक्तम् वक्ष्यति हि दिग्विजये रावणं प्रति नन्दी ' तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ' इति ॥ ७ ॥

८–९ ] ति० टी०–एवं वक्ष्यमाणप्रकारेण ॥ ८ ॥ ९ ॥

रा० टी०–त इति । भगवता साकेतनिवासिब्रह्मणा तथा तेन प्रकारेण उक्ताः ते साकेतनिवासिसुराः तत् ब्रह्मोक्तं शासनं शिक्षां प्रतिश्रुत्याङ्गीकृत्य एवं वक्ष्यमाणप्रकारेण वानररूपिणः पुत्रान् तत्तत्पुत्रत्वेन प्रतीयमानान् जनयामासुः प्रादुर्भावयांचक्रुः ८

गो० टी०–ते तथेति । प्रतिश्रुत्य अङ्गीकृत्य एवं वक्ष्यमाणरीत्या ॥ ८ ॥

रा० टी०–ऋषय इति । ऋष्यादयः वनचारिणः वीरान्सुतान् ससृजुः ॥ ९ ॥

गो० टी०–ऋषय इति । वनचारिणः वानरान् ॥ ९ ॥

१० ] ति० टी०–वानरेन्द्रमिति । ननु राघवसहायार्थं तत्तत्स्वावतारकरणप्रेरणाद्वालिनोऽवतारस्य तदसहायत्वात्किमर्थोऽयमवतार इति चेत् दुन्दुभ्यादिवधार्थं तदवतारस्यावश्यकत्वात् पुत्रद्वारा तस्यापि राघवसहायत्वाच्च दुन्दुभ्यादिवधेनापि तत्साहाय्यकरणाच्च अस्यापि भगवदवतारात्पूर्वमुत्पत्तिर्ज्ञेया । तपनः सूर्यः ॥ १० ॥ ११ ॥ १२ ॥

रा० टी०–तदेव विशदयन्नाह–वानरेन्द्रमिति । महेन्द्राभं महेन्द्रः पर्वतविशेषः शक्रो वा तदाभं वानरेन्द्रं वालिनमिन्द्रो जनयामास तपतां वरः परमतेजस्वी तपनः सूर्यः सुग्रीवं जनयामास न च विष्णोः सहायान् सृजध्वमिति ब्रह्मोक्त्या तदसहायभूतस्य वालिनः सर्जनं विरुद्धं निरर्थकं चेति वाच्यम् । साक्षात्तस्य तत्सहचारित्वाभावेपि सुग्रीवविपत्तिसंपादनद्वारा सर्वेवानरतत्सहचारित्वसंपादनहेतुत्वेन पुत्रादिद्वारा च एतस्यापि तत्सहचारित्वाक्षतेः ॥ १० ॥

१ सिंहसंहननेति गो. रा. पाठः । २ ऋक्षी इति गो. पाठः ।

बृहस्पतिस्त्वजनयत्तारं नाम महाकपिम्[1] । सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ॥ ११ ॥
धनदस्य सुतः श्रीमान्वानरो गन्धमादनः । विश्वकर्मा त्वजनयन्नलं नाम महाकपिम्[1] ॥ १२ ॥
पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः । तेजसा यशसा वीर्यादत्यरिच्यत वीर्यवान् ॥ १३ ॥
रूपद्रविणसंपन्नावश्विनौ रूपसंमतौ । मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४ ॥
वरुणो जनयामास सुषेणं नाम वानरम्[2] । शरभं जनयामास पर्जन्यस्तु महाबलः[3] ॥ १५ ॥
मारुतस्यौरसः[4] श्रीमान्हनूमान्नाम वानरः । वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १६ ॥
सर्ववानरमुख्येषु बुद्धिमान्बलवानपि । ते सृष्टा बहुसाहस्रा दशग्रीववधोद्यताः[5] ॥ १७ ॥

गो० टी०—वानरेन्द्रमिति । महेन्द्राभं महेन्द्रपर्वताभं ननु वालिनः कथं रामसहायार्थत्वं रामवध्यत्वात्, उच्यते अङ्गदोत्पादनद्वारा तस्य साहाय्यकरणात् किंच यदि वाली नोत्पद्येत तदा सर्वेषां वानराणां सहायत्वं न स्यात् सति च वालिनि सुग्रीवविरोधिनि सुग्रीवमैत्र्या वानरसहायसिद्धिः वालिमैत्र्यां तु रावणः क्षणादेव सीतां दद्यात् अतः सुग्रीवसख्यनिमित्तत्वाद्वालिनो रामसहायत्वमिति तपनः सूर्यः ॥ १० ॥

रा० टी०—बृहस्पतिरिति । बृहस्पतिस्तु सर्ववानरमुख्यानां बुद्धिमन्तमत एव अनुत्तमं सर्वोत्कृष्टं तारं नाम महाकपिमजनयत् प्रादुरभावयत् ॥ ११ ॥

गो० टी०—बृहस्पतिरिति । सर्ववानरमुख्यानामिति निर्धारणे षष्ठी बृहस्पतिपुत्रत्वादनुत्तमं बुद्धिमन्तम् ॥ ११ ॥

रा० टी०—धनदस्येति । श्रीमान्परमैश्वर्यविशिष्टः गन्धमादनो गन्धमादनाख्यो वानरः धनदस्य कुबेरस्य सुतः प्रादुर्भूदिति शेषः विश्वकर्मा तु नलं नाम महाहरिं महाकपिमजनयत् ॥ १२ ॥

गो० टी०—धनदस्येति । कुबेरपुत्रत्वात् श्रीमानित्युक्तं महाहरिं सर्वकार्यनिर्माणदक्षम् ॥ १२ ॥

१३ ] ति० टी०—पावकस्याग्नेः अत्यरिच्यत ततोऽधिकोऽभवदित्यर्थः ॥ १३ ॥

रा० टी०—पावकस्येति । श्रीमान् नित्यश्रीविशिष्टः अग्निसदृशी प्रभा यस्य सः पावकस्य सुतो नीलः तेज आदिभ्यः अत्यरिच्यत विलक्षणं बभावित्यर्थः ॥ १३ ॥

गो० टी०—पावकस्येति । अत्यरिच्यत अतिशयितोऽभूत् ॥ १३ ॥

१४ ] ति० टी०—रूपेति । रूपलक्षणेन द्रविणेन युक्तौ रूपसंमतौ रूपवत्त्वेन सर्वलोकसंमतावित्यर्थः ॥ १४ ॥

रा० टी०—रूपेति । रूपद्रविणसंपन्नौ अश्विनौ रूपसंमतौ रूपयति प्रतिष्ठां प्रापयतीति रूपोऽर्थः रूपं सौन्दर्यं च तयोरेकशेषः ताभ्यां संमतौ युक्तौ एवं मैन्दं द्विविदं च स्वयमेव जनयामासतुः । एवेन मात्रादिव्यवच्छेदः तेन मानसत्वं तयोर्व्यक्तम् । एकश्च एवार्थकः ॥ १४ ॥

गो० टी०—रूपेति । रूपमेव द्रविणं धनं तेन संपन्नौ अत एव रूपसंमतौ रूपेण प्रख्यातौ स्वयमित्यनेन मानसत्वं द्योत्यते ॥ १४ ॥

१५ ] ति० टी०—पर्जन्यस्तदभिमानिनी देवता धर्मपुत्रोऽपरः सुषेण इति युद्धकाण्डे वक्ष्यति अत्र तु वरुणपुत्र उक्तः १५

रा० टी०—वरुण इति । सुषेणं नाम वानरं वरुणो जनयामास । पर्जन्यः तदभिमानिदेवस्तु शरभं जनयामास ॥ १५ ॥

गो० टी०—वरुण इति । पर्जन्यो वर्षाभिमानिदेवता॥१५॥

१६ ] ति० टी०—वज्रसंहननं वज्रवदभेद्यं शरीरं तेनोपेतो युक्तः ॥ १६ ॥

रा० टी०—मारुतस्येति । श्रीमानित्यैश्वर्यविशिष्टः वज्रसंहननोपेतः वज्रमपि स्पर्शमात्रेण संहन्ति इति वज्रसंहननो देहः तेनोपेतः नित्यं युक्तः जवे वेगे वैनतेयः समो यस्य सः सर्ववानरमुख्येषु बुद्धिमानतिशयबुद्धिविशिष्टः बलवानतिशयबलविशिष्टश्च अपिश्चार्थे हनूमान्नाम वानरो मारुतस्य पवनस्यौरसः पुत्रोऽभवदिति शेषः । यथा चास्यौरसत्वं तथा ऋष्यशृङ्गस्य विभाण्डकौरसवर्णनावसरे निरूपितम् ॥ १६ ॥

गो० टी०—मारुतस्येति । वज्रसंहननोपेतः वज्रवदभेद्यशरीरयुक्तः ॥ १६ ॥

१७ ] ति० टी०—दशग्रीववधोद्यता इत्यस्य ये भविष्यन्तीति शेषः ॥ १७ ॥

रा० टी०—त इति । अप्रमेयं बलं येषां ते वीराः शौर्यविशिष्टाः विक्रान्ताः विशिष्टाः क्रान्ताः पादविक्षेपा येषां ते कामरूपिणः ईप्सितरूपधारणसमर्थाः दशग्रीववधे रताः दशग्रीवोपलक्षितरावणादिराक्षसहनने उद्युक्ताः बहुसाहस्राः अनेकसहस्रसंख्यातास्ते प्रसिद्धा वानराः सृष्टाः ॥ १७ ॥

गो० टी०—रुद्रो ब्रह्मणा नियुक्तोऽपि रक्षःपक्षपातित्वान्न कंचन सृष्टवान् एवं प्रधानवानरसृष्टिमुक्त्वा क्षुद्रवानरसृष्टिं संग्रहेणाह—ते इति । रता आसक्ताः ॥ १७ ॥

१ महा हरिमिति गो. रा. पाठः । २ वानरानिति गो. पाठः । ३ महाबलमिति गो. पाठः । ४ मारुतस्यात्मज इति गो. पाठः । ५ वधे रता इति गो. रा. पाठः ।

अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः । ते [1]गजाचलसंकाशा वपुष्मन्तो महाबलाः ॥ १८ ॥
ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे । यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥ १९ ॥
अजायत [2]समं तेन तस्य तस्य [3]पृथक्पृथक् । [4]गोलाङ्गूलेषु चोत्पन्नाः किंचिदु[5]न्नतविक्रमाः ॥ २० ॥
[6]ऋक्षीषु च तथा जाता वानराः [7]किन्नरीषु च । देवा महर्षिगन्धर्वा[8]स्तार्क्ष्ययक्षा यशस्विनः ॥ २१ ॥
नागाः किंपुरुषाश्चैव सिद्धविद्याधरोरगाः । बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ॥ २२ ॥
चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः । वानरान्सुमहाकायान्सर्वान्वै वनचारिणः ॥ २३ ॥
अप्सरःसु च मुख्यासु तथा विद्याधरीषु च । नागकन्यासु च तदा गन्धर्वीणां तनूषु च ॥
कामरूपबलोपेता यथाकामविचारिणः । ॥ २४ ॥
सिंहशार्दूलसदृशा दर्पेण च बलेन च । शिलाप्रहरणाः सर्वे सर्वे [9]पर्वतयोधिनः ॥ २५ ॥

१८ ] ति० टी०–गजाचलसंकाशा गजसदृशाः पर्वतसदृशाश्चेत्यर्थः ॥ १८ ॥

रा० टी०–मेर्विति । मेरुमन्दरसंकाशाः मेरुमन्दरवद्भासमानाः तत्र हेतुः वपुष्मन्तः अतिबृहच्छरीरयुक्ताः महाबलाः अतिशयबलविशीष्टाः ऋक्षवानरगोपुच्छाः क्षिप्रं त्वरितमेव अभिजज्ञिरे प्रादुर्बभूवुः तत्र ऋक्षाः भल्लूका गोपुच्छाः गोपुच्छसदृशपुच्छविशिष्टवानरजातिविशेषः । ते गजाचलसंकाशा इति भट्टसंमतः पाठः ॥ १८ ॥

गो० टी०–एवं वानरसृष्टिमुक्त्वा ऋक्षादिसृष्टिं प्राधान्येनाह–मेर्विति । वपुष्मन्तः दृढवपुष्काः अत एव मेरुमन्दरसंकाशाः। ऋक्षा भल्लूकाः गोपुच्छाः गोलाङ्गूलाः अभिजज्ञिरे जाताः क्षिप्रमित्यनेन मानससृष्टिरुच्यते ॥ १८ ॥

१९ ] ति० टी०–गोपुच्छा वानरविशेषाः क्षिप्रमेव तत्तद्योनौ देवानां रत्यव्यवहितोत्तरकालमेव । रूपं वर्णः वेषः संस्थानविशेषः ॥ १९ ॥

रा० टी०–यस्येति । यस्य यस्य देवस्य यद्रूपं सौदर्न्यं यो यो वेषः अवयवसन्निवेशः यो यश्च पराक्रमो बलं तेन तेन रूपादिना समः तुल्यः तस्य तस्य सुतः पृथक् परस्परं विलक्षणोऽजायत तस्य तस्येत्येतदनुरोधेन यस्येत्यादय आवर्तन्ते ॥१९॥

गो० टी०–यस्येति । रूपं सौन्दर्यं वेषः संस्थानविशेषः तस्य तस्य देवस्य तेन रूपादिना समः सुतः पृथक् अन्योन्यविलक्षणः अजायत मुखमात्रे वानराकारत्वेऽपि संस्थानादौ सर्वे पितृतुल्या एवासन्नित्यर्थः ॥ १९ ॥

२० ] ति० टी०–तस्य तत्पुत्रस्य । तेन तदीयरूपवेषादिकं पृथक्पृथगसांकर्येणाजायत। किंचिदुन्नतविक्रमा देवावस्थातोऽपि किंचिदधिकपराक्रमा इत्यर्थः ॥ २० ॥

रा० टी०–तेषामुत्पत्तिक्षेत्राणि बोधयन्नाह–गोलाङ्गूलेष्विति । संमतविक्रमाः सम्यक् पूजनीयपराक्रमा एव केचित् गोलाङ्गूलेषु तज्जातिषु उत्पन्नाः तथा तादृशपराक्रमविशिष्टाः केचिद्वानरा ऋक्षेषु च किन्नरेषु च उत्पन्नाः । प्रादुर्भूताः ऋक्षीषु च किन्नरीषु चेति भट्टसंमतः पाठः॥ २० ॥

गो० टी०–विजातीयास्वपि वानरोत्पत्तिमाह–गोलाङ्गूलीष्विति । संमतविक्रमाः प्रसिद्धविक्रमाः केचिद्वानरा गोलाङ्गूलीषूत्पन्ना केचिद्वानराः ऋक्षीषूत्पन्नाः केचिद्वानराः किंनरीषु चोत्पन्ना इति योजना ॥ २० ॥

२१ ] ति० टी०–ऋक्षीषु ऋक्षशरीरासु चस्त्वर्थे किन्नरीषु त्वित्यर्थः । एवमग्रेऽपि । तार्क्ष्यास्तार्क्ष्यवंशजाः ॥ २१ ॥ २२ ।

रा० टी०–एतदेव विशदयन्नाह–देवा इत्यादिभिरेकादशभिः श्लोकैः॥ २१ ॥ २२ ॥

गो० टी०–उत्पादकक्षेत्रवैविध्यमाह–देवा इत्यादि। श्लोकत्रयमेकान्वयम् । तार्क्ष्याः गरुडादयः नागा दिग्गजाः उरगाः वासुक्यादयः तत्र विष्ण्ववतारकाले ॥ २१ ॥ २२ ॥ २३ ॥

२२ ] ति० टी०–नागाः सर्पाः ॥ २२ ॥

२३–२५ ] ति० टी०–चारणा देवबन्दिनः वनचारिणो वनवासिन इत्येकत्र परत्र वनस्थफलभक्षकानित्यर्थः ॥२३–२५॥

रा० टी०–चारणा इति । वनचारिणः प्रमोदवनविहारिणः कामरूपबलोपेताश्चारणाः वनचारिणो यथाकामं विचारिणः यथेच्छं सर्वत्र विचरणशीलान् वानरान् ससृजुः एतेनैतेषां रघुनाथनित्यपरिकरस्थत्वं व्यक्तम् ॥ २३ ॥ २४ ॥ सृष्टानां प्रभावमाह–सिंहेत्यादिभिः । सर्वास्त्रकोविदा इत्यनेन प्रादुर्भावपौर्वकालिकवस्तुस्मृतिध्वंसाभावः सूचितः ॥ २५ ॥

गो० टी०–तेषां प्रभावमाह पञ्चभिः–कामेति । सर्वत्र सर्वे इत्यनुषञ्जनीयं सर्वे कामरूपबलोपेता अभवन्नित्येवं योजनीयं सर्वास्त्रकोविदाः देवांशत्वेन स्वयं प्रतिभातास्त्रप्रहारपरिहारोपायाः नत्वस्त्रप्रयोक्तारः शिलाप्रहरणा इत्युक्तेः । विचालयेयुरित्यादिषु "शकि लिङ्ग च" इतिलिङ्ग कम्पने चलिरिति मित्वेऽपि ह्रस्वाभावश्छान्दसः । आप्लवेयुः संतरेयुः प्रव्रजतः वेगेन गच्छतः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

१ मेरुमन्दरसंकाशा इति गो. रा. पाठः । २ समस्तेनेति गो. रा. पाठः । ३ पृथक्सुत इति गो. रा. पाठः । ४ गोलांगूलीषु इति गो. पाठः । ५ संमतविक्रमा इति गो. रा. पाठः । ६ ऋक्षेष्विति रा. पाठः । ७ किन्नरेष्विति रा. पाठः । ८ ताक्ष्या यक्षा इति गो. पाठः । ९ पादपयोधिनः इति गो. पाठः ।

नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः । विचालयेयुः शैलेन्द्रान्भेदयेयुः स्थिरान्द्रुमान् ॥२६॥
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् । दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवान्[1] ॥ २७ ॥
नभस्तलं विशेयुश्च गृह्णीयुरपि तोयदान् । गृह्णीयुरपि मातङ्गान्मत्तान्प्रव्रजतो वने ॥ २८ ॥
नर्दमानांश्च[2] नादेन पातयेयुर्विहङ्गमान् । ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ॥ २९ ॥
शतं शतसहस्राणि यूथपानां महात्मनाम् । ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ॥ ३० ॥
बभूवुर्यूथपश्रेष्ठान्[3]वीरांश्चाजनयन्हरीन् । अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः ॥ ३१ ॥
अन्ये नानाविधाञ्छैलान्काननानि च भेजिरे । सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ॥ ३२ ॥
भ्रातरावुपतस्थुस्ते सर्वे[4] च हरियूथपाः । नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥ ३३ ॥
ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः । विचरन्तोऽर्दयन्सर्वान्[5]सिंहव्याघ्रमहोरगान् ॥ ३४ ॥

२६ ] ति० टी०—सर्वास्त्रकोविदा इति स्वयंप्रतिभातसर्वास्त्रपरिहारोपाया इत्यर्थः । शिलाप्रहरणा इत्याद्युक्तेस्तेषामस्त्रप्रयोक्तृत्वाभावात् । विचालयेयुरित्यादौ शक्यार्थे लिङ् विचालनशक्ता इत्यर्थः ॥ २६ ॥

रा० टी०—विचालयेयुरिति। "शकिलिङ् च"इति शक्यार्थे लिङ् तत्तच्चालनादिसामर्थ्यविशिष्टा इत्यर्थः । कम्पनेचलिरिति मित्त्वेपि सर्वेषां मितां वैकल्पिकत्वाच्चालयेयुरिति दूरप्रक्षेपार्थकत्वे तु न शङ्कावसरः ॥ २६ ॥

२७ ] ति० टी०—आप्लवेयुः संतरेयुः ॥ २७ ॥

रा० टी०—दारयेयुरिति । पद्भ्यां क्षितिं दारयेयुः महार्णवं समुद्रमाप्लवेयुः उत्तरेयुः नभस्तलं विशेयुः । तोयदानपि गृह्णीयुश्च ॥ २७ ॥

२८ ] ति० टी०—प्रव्रजतः स्वच्छन्दगतीन् ॥ २८ ॥

रा० टी०—गृह्णीयुरिति । वने प्रव्रजतो मत्तानपि मातङ्गान् गृह्णीयुः नादेन नर्दमानान् विहङ्गमांश्च पातयेयुः ॥२८॥

२९ ] ति० टी०—नादेनेत्यस्य पातयेयुरित्यनेनान्वयः २९

रा० टी०—सर्ववानराणामसंख्येयत्वात् यूथपसंख्या बोधयन्नाह—ईदृशानामिति । वातरंहसां पवनसदृशवेगवतां यूथपानां यूथस्वामिनां महात्मनामतिप्रयत्नवतामीदृशानामुक्तसुग्रीवादिसदृशानां प्रसूतप्रादुर्भूतानां हरीणां वानराणां शतसहस्राणि लक्षाणीत्यर्थः शतं कोटिरित्यर्थः बभूवुरिति हरीणां प्रधानेषु मुख्येषु यूथेषु ये हरियूथपाः सुग्रीवादयो बभूवुस्तेऽपि यूथपश्रेष्ठान् वीरान् हरीन् अजनयन् चशब्दोऽप्यर्थे ॥ २९ ॥ ३० ॥

गो० टी०—अन्येषामपरिच्छेद्यत्वाद्यूथपसंख्यानमाह—ईदृशानामिति । शतं शतसहस्राणि शतलक्षाणीत्यर्थः ॥ २९ ॥

३० ] ति० टी०—शतसहस्राणि कोटिरित्यर्थः ॥ ३० ॥

गो० टी०—प्रधानप्रधानानाह—त इति । ते प्रागुक्ताः सुग्रीवादिसुषेणान्ता यूथपाः प्रधानेषु हरीणां यूथेषु समूहेषु यूथपश्रेष्ठा बभूवुः वीरान् हरीनजनयंश्च ॥ २९ ॥

३१–३२ ] ति० टी०—ते प्रागुक्ता हरीणां प्रधानेषु यूथेषु मध्ये हरियूथपा बभूवुः यूथपश्रेष्ठान्वीरांश्च हरीनजनयन्नित्यर्थः । ऋक्षवतः पर्वतविशेषस्य प्रस्थान्सानूनुपतस्थुरासेवन्ते स्म ॥ ३१ ॥ ३२ ॥

रा० टी०—अन्ये इति । अन्ये प्राकृतविलक्षणाः सहस्रशो वानराः ऋक्षवतः पर्वतविशेषस्य प्रस्थान् शिखराणि उपतस्थुः स्थिता बभूवुः । अन्ये ततो विलक्षणाः नानाविधान् अनेकप्रकारान् शैलान् पर्वतान् काननानि वनानि च भेजिरे सिषेविरे ॥ ३१ ॥

गो० टी०—तेषां स्थानमाह—अन्य इति । ऋक्षवतः पर्वतविशेषस्य प्रस्थान् सानूनि ॥ ३१ ॥

३३ ] ति० टी०—भ्रातरौ सुग्रीववालिनौ । सर्वे च सर्वेऽप्युपतस्थुः । केचित्साक्षात्केचिन्नलादिद्वारेत्याह—नलमित्यादि ॥ ३३ ॥

रा० टी०—सूर्यपुत्रमिति । सर्वे ते हरियूथपाः वानरश्रेष्ठा सूर्यपुत्रं सुग्रीवं शक्रपुत्रं वालिनं च भ्रातरौ एव उपतस्थुः सिषेविरे अत एव नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् वालिसुग्रीवान्तरङ्गानुपतस्थुः वालिसुग्रीवप्रसन्नार्थं सेवयामासुरित्यर्थः । चोहेतौ अपरश्चशब्द एवार्थे ॥ ३२ ॥

गो० टी०—राजयुवराजमन्त्रिणो दर्शयति—सूर्येत्यादिसार्धश्लोकेन । सुग्रीवं युवराजं वालिनं राजानं नलादीन्मन्त्रिणः ॥ ३२ ॥

३४ ] ति० टी०—अर्दयन् आर्दयन्नित्यर्थः अडभाव आर्षः ३४

रा० टी०—ते इति । तार्क्ष्यबलसंपन्नाः गरुडतुल्यवेगवन्तः युद्धविशारदाः युद्धनिपुणाः विचरन्तो वनादिषु विहरन्तस्ते सर्वे वानराः दर्पात् दर्पमालक्ष्य सिंहव्याघ्रमहोरगान् अर्दयन् आर्दयन् तत्तद्गर्वं दूरीचक्रुरित्यर्थः ॥ ३३ ॥

गो० टी०—तेषां दुःशासनत्वमाह—त इति । तार्क्ष्यो गरुडः ॥ ३३ ॥

१ महार्णवमिति गो. पाठः । २ गर्दमानाश्चेति गो.रा.पाठः । ३ श्रेष्ठा इति गो. पाठः । ४ सर्वे एव हरीश्वराः इति गो. रा. पाठः । ५ दर्पादिति गो.रा.पाठः

महाबलो महाबाहुर्वाली विपुलविक्रमः । जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३५ ॥
तैरियं पृथिवी शूरैः सपर्वतवनार्णवा । कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३६ ॥
तैर्मेघवृन्दाचलकूटसंनिभैर्महाबलैर्वानरयूथपाधिपैः ।
बभूव भूर्भीमशरीररूपैः समावृता रामसहायहेतोः ॥ ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥

३५ ] ति० टी०—वाली जुगोपेत्यन्वयः । देवराजावतारत्वादिति भावः ॥ ३५ ॥

रा० टी०—तानिति । महान्तौ दीर्घौ बाहू यस्य सः विपुलविक्रमः महापराक्रमविशिष्टः वाली भुजवीर्येण तान् पूर्वोक्तान् सर्वान् निखिलान् ऋक्षगोपुच्छवानरान् जुगोप ररक्ष चकारेण यथोचितं तैः स्वं सेवयामास ॥ ३४ ॥

गो० टी०—सर्वेषां शासितारमाह—तांश्चेति ॥ ३४ ॥

३६ ] ति० टी०—विविधसंस्थानैर्नानाप्रकारसंनिवेशैः । नानाव्यञ्जनलक्षणैः परस्परभेदव्यञ्जकतत्तल्लक्षणयुतैः ॥ ३६ ॥

रा० टी०—तैरिति । शूरैः युद्धोत्साहविशिष्टैः विविधसंस्थानैः विलक्षणावयवविशिष्टैः नानाव्यञ्जनलक्षणैः परस्परं भेदबोधकलक्षणविशिष्टैः तैर्वानरैः सपर्वतवनार्णवा पर्वतवनार्णवसहिता इयं प्रसिद्धा पृथिवी कीर्णा व्याप्ता ॥ ३५ ॥

गो० टी०—साहाय्यसंपत्तिपौष्कल्यं दर्शयति—तैरिति । अर्णवः अर्णववद्द्वीपं विविधसंस्थानैः स्थूलसूक्ष्महस्वदीर्घादिविविधदेहसंस्थानवद्भिः नानाव्यञ्जनलक्षणैः नानात्वाभिव्यञ्जकासाधारणधर्मवद्भिः ॥ ३५ ॥

३७] ति० टी०—अचलकूटः पर्वतशृङ्गम् । यूथपाधिपैः यूथपानामधिपैरित्यर्थः भीमशरीररूपैर्भयजनकशरीराकृतिभिः॥३७॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥

रा० टी०—उक्तमर्थमुपसंहरन्नाह—तैरिति । मेघवृन्दाचलकूटकल्पैः मेघवृन्दं मेघसमूहः अचलकूटः पर्वतशृङ्गं तत्कल्पैस्तत्सदृशैरित्यर्थः । महाबलैः अतिपराक्रमविशिष्टैः भीमशरीररूपैः भयोत्पादकशरीररूपविशिष्टैः वानरयूथपैः रामसहायहेतोः रामेण सह अयः गमनं तदर्थं तत्सेवार्थमित्यर्थः । समावृता व्याप्ता भूः भूमिर्बभूव नचास्मिन्सर्गे 'धनदस्य सुतः श्रीमान् वानरो गन्धमादनः। वरुणो जनयामास सुषेणं नाम वानरम्॥ शरभं जनयामास पर्जन्यस्तु महाबलम्' इत्युक्तम्। युद्धकाण्डे तु रावणं प्रति शार्दूलवचनम् 'सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । पुत्रा वैवस्वतस्याथ पञ्च कालान्तकोपमाः ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः ' इति परस्परं विरुद्धमिति वाच्यम् शार्दूलवचनस्य भ्रान्तिप्रयुक्तत्वेनादोषात् अभ्रान्तप्रयुक्तविरुद्धवचनयोरेव दोषावहत्वात् प्रसिद्धा च शार्दूलभ्रान्तिः 'रुधिरासक्तसर्वाङ्गो विह्वलश्चलितेन्द्रियः' इति तत्रत्योक्तेः किञ्च धर्मस्य अतिधर्मवतः वरुणस्येत्यर्थः सुषेणद्वयस्वीकारो वा ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥

गो० टी०—उक्तमेवार्थं पुनः सर्गान्ते संगृह्य दर्शयति—तैरिति । भीमशरीररूपैः भयंकरशरीरवेषैः रामसहायहेतोः रामसाहाय्यार्थं भावप्रधानो निर्देशः ॥३६॥ नन्वस्मिन्सर्गे 'धनदस्य सुतः श्रीमान् वानरो गन्धमादनः । वरुणो जनयामास सुषेणं नाम वानरम् ॥ शरभं जनयामास पर्जन्यस्तु महाबलम्' इत्युच्यते । युद्धकाण्डे तु रावणं प्रति शार्दूलवाक्ये 'सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । पुत्रा वैवस्वतस्याथ पञ्च कालान्तकोपमाः ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः' इति । कथमिदं संगच्छते उच्यते अत्र वाल्मीकिनोक्तमेव तथ्यम् 'न ते वागनृता काव्ये काचिदत्र भविष्यति' इति ब्रह्मवरप्रसादात् शार्दूलस्तु भ्रान्त्योक्तवान् 'रुधिरासिक्तसर्वाङ्गो विह्वलश्चलितेन्द्रियः' इति तत्रैवोक्तेः अत्रेदं शङ्क्यते ऋष्यशृङ्गेण पुत्रेष्ट्युपक्रमानन्तरं देवादिसंमेलनं ततो विष्णोरवतितीर्षा 'पुत्रत्वं तु गते विष्णौ वानरोत्पत्तिः' इत्युक्तं तद्विरुध्यते वालिसुग्रीवयो रावणदिग्विजयकालिकत्वात् वक्ष्यत्युत्तरकाण्डे 'अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः' इत्यारभ्य 'ततः कदाचित्किष्किन्धां नगरीं वालिपालिताम् । गत्वाऽऽह्वयति युद्धाय वालिनं हेममालिनम्' इत्यादिना तथा च कार्तवीर्यार्जुनकालिको वाली कथं रामसमवयस्कः स्यात् किंच 'भगवन्राक्षसः क्रूरो यदाप्रभृति मेदिनीम् । पर्यटत् किं तदा लोकाः शून्या आसन् द्विजोत्तम ॥ राजा वा राजमात्रो वा किं तदा नात्र कश्चन । धर्षणां येन न प्राप्तो रावणो राक्षसेश्वरः' इति दिग्विजयवृत्तान्ते रामेण पृष्टे अगस्त्येनार्जुनवालिभ्यां परिभव उच्यमानोऽर्जुनवालिनोरेककालत्वमवगमयति । अपिच मयो रावणाय मन्दोदरीप्रदानकाले 'द्वौ सुतौ तु मम त्वस्यां भार्यायां संबभूवतुः । मायावी प्रथमस्तावत् दुन्दुभिस्तदनन्तरः' इत्युक्तवान् । तत्र दुन्दुभिर्यौवनमदाद्वरदानाच्च मत्तो वालिना हत इत्युच्यते अतो वालिनो रावणदिग्विजयकालिकत्वं व्यज्यते सुग्रीवश्च वालिभयात् परिभ्रमन् दुन्दुभिकलेवरप्रक्षेपकृतमतङ्गशापानन्तरमृश्यमूके प्रत्यतिष्ठत् अतः सुग्रीवस्यापि वालितुल्यकालत्वं गम्यते एवं मैन्दद्विविदादयोपि चिरकालस्थायिनोऽवगम्यन्ते वक्ष्यति रावणं प्रति शार्दूलः 'मैन्दश्च

१ तांश्चसर्वानिति गो. रा. पाठः । २कल्पैरिति गो. रा. पाठः । ३ यूथपैश्चेति रा. यूथपालैरिति गो. पाठः ।

## अष्टादशः सर्गः ।

क्रत्वनुष्ठानाद्द्वादशे मासि श्रीरामावतारो लक्ष्मणादीनां चोत्पत्तिः । दिव्ययोध्यायां चोत्सवः, सर्वेषां संस्करणं, विश्वामित्रागमनं च ।

**निर्वृत्ते[1] तु क्रतौ तस्मिन्हयमेधे महात्मनः । प्रतिगृह्यामरा भागान्प्रतिजग्मुर्यथागतम् ॥ १ ॥**

**समाप्तदीक्षानियमः पत्नीगणसमन्वितः । प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २ ॥**

द्विविदश्चोभौ ताभ्यां नास्ति समो युधि । ब्रह्मणा समनुज्ञातावमृतप्राशनावुभौ ' इति । तेन तयोरमृतमथनकालवर्तित्वं प्रतीयते । सारणवाक्ये च 'एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः । तदा दैवासुरे युद्धे साहाय्यार्थं दिवौकसाम् ' इति क्रोधनस्य देवासुरयुद्धे व्यापारकथनात् चिरन्तनत्वं तत्प्रायपठितानामन्येषामपि वालिसुग्रीवमन्त्रिप्रभृतीनां सिद्धं चिरकालत्वम् । एवमन्यत्रापि वानरयूथपानामतिचिरस्थायित्वं व्यञ्जनावृत्त्यावगम्यते अतः कथमेषां रामावतारकालिकत्वमत्रोच्यते इति अत्रास्मद्गुरुचरणाः यद्यपि पूर्वसर्गान्ते विष्णोर्गर्भप्रवेशमुक्त्वा पुत्रत्वं तु गते विष्णावित्यारभ्य ब्रह्मानुशासनं कथितं तथापि उवाच देवताः सर्वाः स्वयंभूर्भगवानिदमित्यादिना सामान्येन देवता उद्दिश्य ब्रह्मा संदिष्टवान् ' ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् । जनयामासुरेवं ते पुत्रान्वानररूपिणः ' इति सामान्येन देवैर्वानरसृष्टिश्चोक्ता । अथ ब्रह्मणो जाम्बवत्सृष्टिवत् पूर्वसिद्धामिन्द्रादिभ्यो वाल्यादिसृष्टिमनुवदति ' वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम् ' इत्यादिना । अत एव हि वालिनं जनयामासेत्युक्तम् नतु तदा जनयामासेति अन्यत्र तु ' बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ' इति तत्कालवाची तत्रशब्दः प्रयुक्तः इन्द्रादयः खल्वेवममन्यन्त ब्रह्मनियोगानन्तरं किमपूर्वसर्गेण पूर्वमन्यार्थमुत्पन्ना एव साहाय्यं करिष्यन्तीति यैस्तु पूर्वं पुत्रा नोत्पादितास्ते पुनस्तदा जनयामासुः अत एव ' एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः । तदा दैवासुरे युद्धे सहायार्थं दिवौकसाम् ' इत्यादिना क्रोधनादीनामन्यार्थं सृष्टिरुच्यते तस्मान्न कोऽपि विरोध इत्याहुः । यद्वा रामावतारकाल एव वाल्यादिजन्म वालिजयश्च नार्जुनजयाव्यवहितोत्तरकालिकः ततःशब्दस्यानन्तर्यमात्रपरत्वात् अत एव ततः कदाचिदित्युक्तम् अगस्त्येनार्जुनवालिविजययोर्युगपत्कथनं रावणजयत्वेन कृष्णः कंसशिशुपालौ जघानेतिवत् । दुन्दुभिश्च वरदानेन सदा युवा मत्तश्च ततश्च तस्य बहुकालानन्तरमपि वालिना युद्धं संभवत्येव एवमन्यदप्यूह्यम् । सर्वथोपक्रमावगतः क्रमो न बाधितव्यः दैवासुरे युद्धे साहाय्यार्थमित्यत्रापि साहाय्यसमर्थ इत्यर्थो बोध्यः । अमृतप्राशिनौ अमृतप्राशितुल्यावित्यर्थः यद्वा अयं ब्रह्मानुशासनप्रकारः प्राचीन एव प्रसङ्गादय कविनोपवर्ण्यते पुत्रत्वं तु गते विष्णौ गन्तुं व्यवसित इत्यर्थः व्यवसायश्च विष्णोर्ब्रह्मणा विविक्ते प्रार्थनात् अत एव पूर्वसर्गे, हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ' इत्युक्तम् । अत एवास्य वृत्तान्तं सनत्कुमारो विदित्वा सुमन्त्रायोवाचेति बोध्यम् ।

ब्रह्मप्रार्थनं च रावणस्य मानुषादन्यत्र भयं नास्ति त्वं ऋष्यशृङ्गेण यक्ष्यमाणस्य दशरथस्य पुत्रो भवेति अत एव कृतसंकततया विष्णुरुपयात इत्युक्तम् यद्वा ततो देवाः सगंधर्वा इत्यादिकात् पूर्वसर्गात्प्रभृति ब्रह्मलोकवृत्तान्तः तस्मिन्सदसि ब्रह्मसदसीत्यर्थः! अत एव स्वलोकमागच्छेत्युक्तं नतु गच्छेति तथा चैवं संगतिः पुत्रकामेष्टिपर्यन्तमुक्त्वा तत्राग्निपुरुषाविर्भावोपोद्घातत्वेन चिरंतनवृत्तान्तमुपक्षिपति ततो देवा इत्यादि तत इति प्रस्तावान्तरारम्भार्थः । अथ 'पितरं रोचयामास तदा दशरथं नृपम्' इत्यन्ते विष्णुवृत्तान्तेऽभिहिते पुत्रत्वं तु गते अभ्युपगते इति पुत्रत्वाङ्गीकारानन्तरं देवांशवानरोत्पत्तेर्वक्तव्यत्वेऽपि तं वृत्तान्तं तत्रावस्थाप्य ' स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् । अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः' इत्यादिना विष्णुवृत्तान्तमेवानुक्रम्य गर्भप्रवेशपर्यन्तमुक्त्वा प्रागवस्थापितं देववृत्तान्तमेव पुत्रत्वं तु गत इत्यादिना पुनः प्रतिपादयति एतावद्वृत्तान्तकालस्य देवमानेनाल्पत्वेऽपि मनुष्यमानेन बहुवर्षा गताः रेवतीवरप्रार्थनावत् अतो भागग्रहार्थं समवेत्य ब्रह्मसदसि गत्वा कार्यं विज्ञाप्य ततोऽश्वमेधभागान् गृहीत्वा गता देवा इति सर्वं समञ्जसम् ॥३६॥

इति श्रीगो० बालकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०—प्रासङ्गिकदेवतावतारमुक्त्वा प्रकृतः प्रधानावतार उच्यत—**निर्वृत्त इत्यादि** । निर्वृत्ते समाप्ते ' पुत्रोत्पत्तिं विचिन्तयन् ' इत्यन्तो वृत्तानुवादः । हयमेध इत्यस्य पुत्रेष्टियुत इति शेषः ॥ १ ॥

**रा० टी०**—सर्वेश्वरेश्वररघुनाथप्राकट्यमुपक्रममाण आह—**निर्वृत्त** इत्यादिभिः । महात्मनः सर्वपूज्यस्य दशरथस्य तस्मिन्प्रसिद्धे हयमेधे क्रतौ निवृत्ते सिद्धे समाप्ते सतीत्यर्थः तुना पुत्रेष्टौ समाप्तायां सत्यां सुराः स्वर्गादिसाकेतोभयनिवास्यङ्गाङ्गिदेवाः भागान् स्वस्वसंप्रदानकांशान्प्रतिगृह्य यथागतं आगतक्रममनतिक्रम्य प्रतिजग्मुः स्वस्वस्थानं प्रापुः ॥ १ ॥

**गो० टी०**—श्रीरामावतारघट्टः ' कोसलो नाम मुदितः स्फीतो जनपदो महान्' इत्यारभ्य भगवतोऽवतारनिमित्तान्युक्तानि अथावतारं दर्शयत्यष्टादशे—**निर्वृत्ते त्वित्यादि** । अत्र पुत्रोत्पत्तिं विचिन्तयन् इत्येवमन्तो ग्रन्थः 'हुताशनादित्यसमानतेजसश्चिरेण गर्भान् प्रतिपेदिरे तदा ' इत्येतच्छेषोऽनूद्यते । निर्वृत्ते समाप्ते हयमेधे पुत्रेष्टिसहित इति शेषः ॥ १ ॥

२ ] ति० टी०—प्रविवेश प्रवेशाभिमुखो बभूव ॥ २ ॥

**रा० टी०**—**समाप्तेति** । समाप्तो दीक्षानियमो यस्य सः

१ निवृत्त इति रा० पाठ इति भाति परं स न हृद्यः, तिलकगोविन्दयोरैक्यात् ' सिद्धे ' इत्यर्थस्याननुगुण्याच्च ।

यथार्हं पूजितास्तेन राज्ञा च पृथिवीश्वराः । मुदिताः प्रययुर्देशान्प्रणम्य मुनिपुङ्गवम् ॥ ३ ॥
श्रीमतां गच्छतां तेषां स्वगृहाणि पुरात्ततः । बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४ ॥
गतेषु पृथिवीशेषु राजा दशरथः पुनः । प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान ॥ ५ ॥
शान्तया प्रययौ सार्धमृष्यशृङ्गः सुपूजितः । अनुगम्यमानो राज्ञा च सानुयात्रेण धीमता ॥ ६ ॥
एवं विसृज्य तान्सर्वान्राजा संपूर्णमानसः । उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७ ॥
ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः । ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८ ॥
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु । ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ ९ ॥
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् । कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम् ॥ १० ॥
विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकुनन्दनम् । लोहिताक्षं महाबाहुं रक्तोष्ठं दुन्दुभिस्वनम् ॥ ११ ॥

---

पत्नीगणसमन्वितः पत्नीनां गणैः समन्वितो युक्त सभृत्यबलवाहनः भृत्यबलवाहनसहितः राजा पुरीं प्रविवेश ॥ २ ॥

गो० टी०—समाप्तेति । दीक्षार्थो नियमो दीक्षानियमः प्रविवेश प्रवेष्टुमुपचक्रमे आदिकर्मद्योतकः प्रशब्दः ॥ २ ॥

३ ] ति० टी०—मुनिपुङ्गवं वसिष्ठम् ऋष्यशृङ्गं च ॥ ३ ॥

रा० टी०—यथार्हमिति । तेन कृतयागेन राज्ञा राजराजदशरथेन यथार्हं यथायोग्यं पूजिताः प्राप्तसत्काराः अत एव मुदिताः प्रमोदं प्राप्ताः पृथिवीश्वराः राजानः मुनिपुङ्गवं वशिष्ठऋष्यशृङ्गवामदेवान् एकवचनं जात्यभिप्रायेण वैशब्देनान्यानपि प्रणम्य देशान् स्वान् स्वान् विषयान् प्रययुः ॥ ३ ॥

गो० टी०—यथेति । मुनिपुङ्गवं वसिष्ठम् ॥ ३ ॥

४ ] ति० टी०—शुभ्राणि दशरथदत्तवस्त्राभरणादिनात्युज्ज्वलानि अतएव प्रहृष्टानि ॥ ४ ॥

रा० टी०—श्रीमतामिति । ततः तस्मात् पुरात् अयोध्यातः स्वपुराणि गच्छतां तेषां श्रीमतां परमैश्वर्ययुक्तानां राज्ञां शुभ्राणि स्वच्छानि प्रहृष्टानि प्राप्तप्रमोदानि बलानि सैन्यानि चकाशिरे ॥ ४ ॥

गो० टी०—श्रीमतामिति । शुभ्राणि दशरथदत्तवस्त्रादिभिः ॥ ४ ॥

५ ] ति० टी०—द्विजोत्तमान्वसिष्ठादीन् ॥ ५ ॥

रा० टी०—गतेष्विति । पृथिवीशेषु राजसु गतेषु श्रीमान्राजा दशरथः द्विजोत्तमान्ब्राह्मणान्पुरस्कृत्याग्रे कृत्वा पुरीं पुनः प्रविवेश पुनः प्रवेशोक्त्या पूर्वं पुरीं प्रविश्य राजप्रस्थापनार्थं बहिर्निर्गत इति ध्वनितम् ॥ ५ ॥

गो० टी०—गतेष्विति । द्विजोत्तमान् वसिष्ठादीन् ॥ ५ ॥

६ ] ति० टी०—सानुयात्रेण सभृत्येन राज्ञा दशरथेनानुगम्यमान ऋष्यशृङ्गः प्रययौ स्वस्थानमिति शेषः ॥ ६ ॥

रा० टी०—शान्तयेति । अथ पुरप्रवेशानन्तरं धीमता परमबुद्धिविशिष्टेन सानुयात्रेण भृत्यवर्गसहितेन राज्ञा दशरथेन शान्तया सार्धं सुपूजितः प्राप्तातिसत्कारः अन्वीयमानः अनुगम्यमानश्च ऋष्यशृङ्गः प्रययौ स्वं स्थानं प्राप ॥ ६ ॥

गो० टी०—शान्तयेति । अथ नगरप्रवेशानन्तरं सानुयात्रेण सभृत्येन राज्ञा रोमपादेन अन्वीयमानः अनुगम्यमानः ॥ ६ ॥

७ ] ति० टी०—सर्वान्वसिष्ठादीनपि तत्र पुरे ॥ ७ ॥

रा० टी०—एवमिति । एवमुक्तप्रकारेण तान्सर्वान्पूर्वोक्तान्विसृज्य संपूर्णमानसः प्राप्तमनोरथः अत एव सुखितः प्राप्तसुखः राजा पुत्रोत्पत्तिं स्वनित्यपुत्रप्रादुर्भावं विचिन्तयन् सन् तत्रायोध्यानगरे उवास ॥ ७ ॥

गो० टी०—एवमिति । एवमृष्यशृङ्गवत् तान् द्विजोत्तमान् संपूर्णमानसः संपूर्णमनोरथः । तत इत्यर्धमेकम् ॥ ७ ॥

८-११ ] ति० टी०—ऋतूनामिति प्रथमार्थे षष्ठी । समत्ययुः समतीताः । नावमिके नवम्यां तिथौ स्वार्थे ठक् ॥ ८ ॥ अदितिदैवत्ये पुनर्वसौ पञ्चसु रविभौमशनिगुरुशुक्रेषूच्चसंस्थेषु मेषमकरतुलाकर्कमीनस्थेषु सचन्द्रगुरौ कर्कटे लग्ने स्थिते सति ॥ ९ ॥ प्रोद्यमाने तत्र लग्ने उदयं गच्छति सतीत्यर्थः । सर्वलोकनमस्कृतम् अस्य सर्वलोकरूपश्चासौ नमस्कृतश्च तमित्यप्यर्थः । तेनादौ प्रादुर्भावसमये मात्रा विराड्रूपस्य दर्शनम्, ततस्तद्रूपदर्शनविस्मयात्तया नमस्कृतः सन्मायया बालभावं दधाविति सूचितम् ॥ १० ॥ विष्णोः शङ्खचक्रानन्तविशिष्टस्य विष्णोरित्यर्थः । अर्धम् किंचिन्न्यूनमर्धमित्यर्थः । शङ्खचक्रादेरभावादिति भावः ॥ ११ ॥

रा० टी०—तत इति । ततः तस्मिन्यज्ञे पुत्रेष्टियागे समाप्ते सति ऋतूनां षट् षड्ऋतवः समत्ययुः व्यतीता अभवन् । ततस्तेषु षट्सु ऋतुषु मध्ये द्वादशे चैत्रे मासे नावमिके नवम एव नावमिकस्तस्मिन्तिथौ विनयादित्वात्स्वार्थिकष्ठक् तिथिर्द्वयोरित्यनुशासनात्तिथिशब्दस्य पुंस्त्वम् ऋतूनामित्यत्र षष्ठी राहोश्शिर इतिवद्बोध्या चैत्रशब्दार्थस्तु चित्रया युक्ता पौर्णमासी चैत्री "नक्षत्रेण युक्तः कालः" इत्यण् सास्त्यस्मिन्निति चैत्रः "सास्मिन्पौर्णमासीति" इत्यण् ॥ ८ ॥ नक्षत्र इति । अदितिदैवत्ये

---

१ तदेति गो. पाठः । २ ऋद्ध्येति गो. पाठः । ३ अन्वीयमान इति गो. रा. पाठः । ४ ऐक्ष्वाकवर्धनमिति गो. ऐक्ष्वाककुलवर्धनमिति रा. पाठः । ५ इदमर्धं गो. रा. पुस्तकयोर्नास्ति ।

अदितिः देवताऽस्य "दित्यदित्या" इति ण्यः तस्मिन्नक्षत्रे पुनर्वसुसंज्ञके इत्यर्थः ॥ ९ ॥ पञ्चसु ग्रहेषु रविमङ्गलगुरुशुक्रशनिषु स्वोच्चसंस्थेषु मेषमकरकर्कमीनतुलास्थेषु 'अजवृषभमृगाङ्गनाकुलीराझषवणिजौ च दिवाकरादितुङ्गाः' इत्युच्चलक्षणं वराहमिहिरेणोक्तम्।कर्कटे कर्कलग्ने वाक्पतौ बृहस्पतौ इन्दुना सह प्रोद्यमाने उदयं प्राप्ते लग्ने सति जगन्नाथं ब्रह्मविष्णुमहेश्वरद्वारा सर्वलोक नियन्तारमत एव सर्वलोकनमस्कृतं निखिलं ब्रह्माण्डवर्तिजविश्वरादिनमस्कारकर्मीभूतं दिव्यलक्षणसंयुतं दिव्यानि सामुद्रिकादिशास्त्रसूचितप्राकृतविलक्षणानि लक्षणानि तैः संयुतं च ॥ १० ॥ विष्णोः जगन्नियन्तुः चतुर्भुजस्य अर्धम् अवतारग्रहणद्वारा तद्यशःप्रख्यापकत्वेन प्रवृद्धवामनादिरूपनियामकत्वेन च वर्धकम् अत एव सूर्यस्यापि भवेत्सूर्यः इत्यादिना न विरोधः महाभागं महान् इतरभागापेक्षयाधिकः भागः प्रादुर्भावनिमित्तीभूतपायसरूपांऽशो यस्य स तं किंच महान् भागो भाग्यं यस्मात्स तं किंच महतीं लोकदर्शनयोग्यां भां दीप्तिं गच्छति प्राप्नोतीति स तं किंच महान्तो ब्रह्मादयो भागाः प्राप्तप्रकाशाः यस्मात्स तं किंच महा सर्वपूज्या या आभा तां गच्छति प्राप्नोतीति स तं किंच महतीमाभां परमप्रकाशमागमयति आश्रितान्प्रापयति स तं किंच महती आभा यस्य स महाभः स अगो मणिपर्वतो विहाराधारत्वेन यस्य स तं किंच महानां सर्वपूज्यानां ब्रह्मादीनां कर्तृभूतानामाभागः अतिशयसेवा यस्मिन्स तम् ऐक्ष्वाककुलवर्द्धनम् ऐक्ष्वाकः इक्ष्वाकुकुलप्रादुर्भूतः दशरथस्तस्य कुलं वर्धयतीति स तं रामं सर्वाभिरामदातारं कौशल्याजनयत् प्रादुरभावयत् विष्णोरर्धमित्यनेन यो हि विष्णोर्वर्धकः स तत्तुल्यानामन्येषां च वर्धक इति किंवक्तव्यमिति काव्यार्थापत्तिरलङ्कारो ध्वनितः तेन रघुनाथस्याऽघटितघटनापटीयस्त्वं व्यक्तम् । सर्वाभिरामदातारमित्यनेन राम एव सर्वहितत्वमिति परिसङ्ख्यालङ्कारो ध्वनितः तेन यः सर्वहितः सस्वाश्रितहित इति किंवक्तव्यमिति काव्यार्थापत्तिरलङ्कारो ध्वनितः तेन रघुनाथस्य परमदयालुतातिशयः सूचितः तेन सर्वाधीशत्वं व्यक्तम् एतेन विष्णोरर्धं विष्णुमयस्य पायसस्यार्धं अर्धांशपरिणामभूतमिति भूषणोक्तार्थः आपाततो रमणीयः वाक्यार्थस्य लाक्षणिकत्वापत्तेः सर्वेश्वरेश्वरस्य लीलार्थं स्वयंप्रादुर्भूतस्य ब्रह्मादिप्रार्थितस्य सर्वोत्पत्त्यादिकारणीभूतेच्छावतः उपादानासंभवाच्च ईश्वरेश्वराणां सोपादानकत्वेऽनवस्थापत्तेश्च कार्यत्वापत्त्याऽनित्यत्वापत्तेश्च यत्तु भट्टाः विष्णोः शङ्खचक्रानन्तविशिष्टस्य अर्धं किंचिन्न्यूनं शङ्खचक्रादेरभावादिति भावः तदपि न शोभनम् तादृशेर्थे विष्णुशब्दस्य सङ्केताभावात् । एतदभिप्रायेणैव इममर्थमनध वस्तुतस्त्वित्यादिना पाठकैरर्थान्तरं वर्णितम् यत्त्वत्र पाठकाः "प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम्" इत्यादिश्रुतिभ्यो 'गिरामस्म्येकमक्षरम्' इत्यादिस्मृतिभ्यश्च वाच्यवाचकयोरभेदाच्चात्र विष्णुशब्देन प्रणव उच्यते तस्यार्धं अर्धमात्रा तदात्मकं राममित्यर्थः । तथाचाथर्वणश्रुतिः "अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः । उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः । प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः । अर्धमात्रात्मको रामः सच्चिदानन्दविग्रहः" इति । तदपि न सम्यक् वाक्यार्थस्य लाक्षणिकत्वापत्तेः नहि शक्यार्थे- नेष्टसिद्धौ लक्षणां कश्चिदभ्युपैति । किंच यत्प्रणवावयवभूतस्य मात्रार्धस्य रामपरत्वं न तत् प्रणवस्येश्वरवाचकत्वं यस्य चाखण्डप्रणवस्येश्वरवाचकत्वं न तदवयवीभूतस्य मात्रार्धस्य रामपरत्वमिति लक्षणास्वीकारेऽपि तदभीष्टार्थस्य दुरुपपादत्वात् । एतेन विष्णोश्चतुर्भुजस्य अर्धं द्विभुजमित्यर्थं वदन्तोऽपि प्रत्युक्ताः लाक्षणिकत्वापत्तेस्तुल्यत्वात् चतुर्भुजमात्रे विष्णुशब्दस्य संकेताभावाच्च अत एव भूमदक्षयज्ञादिप्रादुर्भूतानामष्टभुजादीनां विष्णुत्वेन व्यवहारः संगच्छते तावन्मात्रार्थकत्वे द्विभुजत्वं महाभागमित्यपहाय विष्णोरर्धमित्युक्त्या तदभिप्रेतार्थस्य ऋष्यभिप्रायविरुद्धत्वाच्च अर्धशब्दस्य वर्धकपरत्वं न दृष्टमिति तु न भ्रमितव्यम् अर्धयति वर्धयतीति अर्धं इतिव्युत्पत्त्या यौगिकस्वीकारेण वर्धकपरत्वस्य सर्वतन्त्रसिद्धत्वात् अत एव बृहदारण्यके पञ्चमेऽध्याये नवमब्राह्मणे "कतमोध्यर्ध" इतिप्रश्ने "योऽयं पवत" इत्युत्तरम् । "कथमध्यर्ध" इतिप्रश्ने "यदस्मिन्निदं सर्वमध्यार्ध्नोत्" इत्यादिश्रुतौ अर्धशब्दस्य वर्धकपरत्वमिति दिक् । अत्राधिकव्याख्यानदर्शनकाङ्क्षिभिर्विष्णुना सदृशो वीर्ये इत्यत्र द्रष्टव्यम् ॥ ११ ॥

गो० टी०—अथ भगवतः प्रादुर्भावं दर्शयति त्रिभिः—ततश्चेत्यादि । ततः अश्वमेधसमाप्त्यपेक्षया पायसोपयोगाद्वा स च वैशाखादौ भवेत् द्वादशे "तस्यपूरणे डट्" इतिडटा चैत्री पौर्णमास्यस्मिन्निति चैत्रः "सास्मिन् पौर्णमासीति" संज्ञायामण् चकारो वारसमुच्चयार्थः । नावमिके नवम्यां विनयादित्वात्स्वार्थे ठक् । 'तिथयोर्द्वयोः' इति तिथिशब्दस्य पुँल्लिङ्गस्यापि संभवात् क्लीबभावः । अदितिर्देवता यस्य तददितिदैवतं तस्मात् देवतान्तात्तादर्थ्ये यक् छान्दसः । नक्षत्रे पुनर्वस्वोरित्यर्थः । "पुनर्वसूनक्षत्रमदितिर्देवता" इतिश्रुतेः । पंचसु ग्रहेषु स्वोच्चसंस्थेषु सूर्यगुरुशुक्राङ्गारकशनिषु स्वोच्चस्थानस्थितेषु सत्सु उच्चस्थानलक्षणमुक्तं वराहमिहिरेण 'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः' इति । कर्कटे कर्कटाख्ये लग्ने राश्युदये 'राशीनामुदयो लग्नम्' इत्यमरः वाक्पतौ बृहस्पतौ इन्दुना सह प्रोद्यमाने उदयति सति आर्षमात्मनेपदम् । अत्र प्रोद्यमान इत्युक्तत्वात्पुनर्वसुनक्षत्रस्य कर्कटराशित्वाच्च तत्रेन्दुः स्थित इत्यवगम्यते कर्कटकस्तु गुरोरुच्चस्थानम् । इन्दुना वर्तमानो गुरुस्तत्र वर्तत इति गुरुरुच्चस्थः चैत्रमासे सूर्यस्य मेषप्रवेशात् सूर्योप्युच्चगत एव बुधः सदा रविसंनिहितो न तदोच्चस्थानस्थः चन्द्रश्च कर्कटगो नोच्चस्थः तथाच परिशेषान् मन्दाङ्गारकशुक्रास्तुलामकरमीनसंस्था इति पञ्चानामुच्चस्थत्वं नामकीर्तनं विना पञ्चोच्चस्थत्वकीर्तनं तत्फलविशेषप्रतिपादनाय यथाहुः 'एकग्रहोच्चजातस्य सर्वारिष्टविनाशनम् । द्विग्रहोच्चे तु सामन्तस्त्रिग्रहोच्चे महीपतिः । चतुर्ग्रहोच्चे सम्राट् स्यात् पञ्चोच्चे लोकनायकः' इति । प्रत्येकोच्चफलं चाहुः 'सूर्ये स्वोच्चगते

**कौसल्या शुशुभे तेन पुत्रेणामिततेजसा । यथा वरेण देवानामदितिर्वज्रपाणिना ॥ १२ ॥**

जातः सेनापत्यमवाप्नुयात् । भौमे स्वोच्चगते जातो वने राजा भविष्यति ॥ गुरौ स्वोच्चगते जातो धनी राज्याधिपो भवेत् । शुक्रे स्वोच्चगते जातो राज्यश्रियमवाप्नुयात् । शनौ स्वोच्चगते जातो राजाधिपसमो भवेत्' इति । गुरुचन्द्रयोगफलमुक्तं मिहिरेण 'दृढसौहृदो विनीतः स्वबन्धुसंमानकृद्धनेशश्च । शशिगुर्वोर्गुणशीलः सुरद्विजेभ्यो रतो भवेत्पुरुषः' इति । रविबुधयोगफलं च तेनैवोक्तम् 'वेदान्तवित्स्थिरधनो रविज्ञयोः प्रायशो यशोर्थी स्यात् । आर्यक्षितिपतिदयितः सतां च बलरूपविद्यावान् । चैत्रमासजन्मफलम् 'चैत्रे मधुरभाषी स्यादहंकारसुखान्वितः । नवमीजन्मफलम् 'दीर्घवैरी भुवि ख्यातो वश्यः शूरश्च पण्डितः'। निर्भयः सर्वभूतेभ्यो नवम्यां जायते नरः । पुनर्वसुनक्षत्रफलम् 'सहिष्णुर्गूढवृत्तिश्च श्लेष्मलो नाट्यकोविदः । अगृध्नुरल्पसंतुष्टः शीघ्रगोऽदितिधिष्ण्यजः । चतुर्थपादजन्मफलम् 'कान्ताप्रियवपुः श्लक्ष्णः सज्जनः प्रियदर्शनः । लक्ष्मीवान् प्रियवादी च आदित्यान्ते प्रजायते। उच्चस्थेन बृहस्पतिना समं चन्द्रस्य स्थितिः कर्कटक इति पुनर्वसुचतुर्थपादत्वं सिद्धम् । चैत्रपुनर्वसू शुक्लपक्ष एवेति सिद्धम् । कर्कटकलग्नजन्मफलम् । कर्कटे लग्नके चन्द्रयुक्ते दृष्टे च भोगवान् । गुरुणा वीक्षिते युक्ते धनाढ्यो बहुभोगवान्' तानिमान् फलविशेषान् सूचयितुं मासतिथ्यादिकीर्तनम् । तथैवाह जगन्नाथमित्यादिना । जगन्नाथमित्यनेन पञ्चोच्चे लोकनायक इत्युक्तं फलं दर्शितम् । लग्नस्य गुरुयोगफलमाह–सर्वलोकनमस्कृतमिति । यथा होराप्रदीपे 'कविः सुगीतः प्रियदर्शनः सुखी दाता च भोक्ता नृपपूजितः शुचिः । देवद्विजाराधनतत्परोऽथ भवेन्नरो देवगुरौ तनुस्थिते' रामं पश्चाद्रामाख्यं यद्वा रामं श्यामवर्णम् अथो रामौ सावित्रावित्यत्राथ श्यामाविति व्याख्यानात् । अनेन कर्कटे कन्यांशे जात इति व्यज्यते । कन्याया बुधांशत्वात् बुधस्य च श्यामत्वात् शुक्रांशत्वाद्वा यथाह मिहिरः 'रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरश्च वक्रः । दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः' इति । सर्वलक्षणसंयुतं सर्वलक्षणैः सामुद्रिकोक्तैः पूर्णमिदं लग्नचन्द्रफलम् 'पूर्णे शीतकरे लग्ने तेजस्वी नित्यगर्वितः' इति होराशास्त्रात् विष्णोरर्धं विष्णुमयस्य पायसस्यार्धांशपरिणामभूतं पुत्रं पुंनाम्नो नरकात्त्रायत इति पुत्रः तं पुनस्तं विशेषयति ऐक्ष्वाकवर्धनमिति ऐक्ष्वाकस्य दशरथस्य वर्द्धनम् अनेन लग्नस्य सौम्यग्रहयोगफलं दर्शितम् । यथा नरश्चिरायुर्नृपपूजितः सुखी लग्नं भवेत्सौम्ययुतं यथा तथा । लग्ने तथा स्वामिनिरीक्षिते धनी कुशाग्रबुद्धिः कुलकीर्तिवर्धनः ॥' महाभागं महाभाग्ययुक्तम् अनेन लग्नचन्द्रकृतोऽपि दोषो गुरुयोगात्परिहियते इति सूच्यते । यथाहुः होराप्रदीपे 'जन्मकालिकलग्नांशे चन्द्रः केन्द्रगतो यदि । जातस्य विनयो वित्तं ज्ञानं बुद्धिश्च नैपुणम् ॥ हीनं पणफरस्थेऽस्मिन्मध्यान्येतानि तस्य च । आपोक्लिमस्थचन्द्रश्चेदुत्कृष्टानि भवन्ति हि ॥ स्वांशेऽधिमित्रस्य नवांशके वा चन्द्रे तु वाचस्पतिना च दृष्टे । एवंविधे शीतकरे च रात्रौ शुक्रेण दृष्टे धनवान् सुखी स्यात्॥' एवं केमद्रुमयोगोऽपि नास्तीत्युच्यते। केमद्रुमो नाम चन्द्रलग्नस्योभयपार्श्वे ग्रहाभावः । नह्यत्र मिथुने सिंहे वा कश्चिद्ग्रहोस्ति तथाह गार्ग्यः 'व्ययार्थोभयगश्चन्द्राद्विना भानुं न चेद्ग्रहः । योगः केमद्रुमो नाम जातः स्यादत्र गर्हितः ॥ सन्तानबन्धुजनवस्त्रसुहृद्विहीनो दारिद्र्यदैन्यगददुःखमलैरुपेतः । प्रेष्यः खलः सकललोकविरुद्धवृत्तिः केमद्रुमे भवति पार्थिववंशजोपि ॥' एतत्सर्वमात्मानुभावेनपरिहियत इत्युच्यते महाभागशब्देन यथाह मणिबन्धः 'लग्नात्केन्द्रगते चन्द्रे ग्रहैरेकादिभिर्युते । केमद्रुमफलं न स्यात्केचित्केन्द्रनवांशके ॥' एवं दोषान्तरपरिहारोऽपि यथा 'अष्टमेशे कलत्रस्थे व्ययेशे वा कलत्रगे ॥ मङ्गले वा कलत्रस्थे भार्यानाशं प्रकुर्वते इति ॥ ८ ॥ ९ ॥ १० ॥

१२ ] ति० टी०–देवानां वरेण देवश्रेष्ठेन ॥ १२ ॥

**रा० टी०–कौशल्येति ।** अमिततेजसा इयत्तारहिततेजोविशिष्टेन तेन प्रादुर्भूतेन पुत्रेण दशरथकौशल्यानिरूपितनित्यपुत्रत्वविशिष्टेन कौशल्या आशुशुभे अप्रमेयशोभां प्राप तत्र दृष्टान्तः वज्रपाणिना वज्रहस्तेन देवानां वरेण इन्द्रेण अदितिस्तन्माता यथा ईश्वरप्रकाशिनि परमात्मनि रामे इन्द्राद्युपमेयत्वं दुर्लक्ष्यतद्वस्तुबोधनाय इषुवत्सविता गच्छतीत्यादिवद्बोध्यम् ॥ १२ ॥

**गो० टी०–कौसल्येति ।** रामावतारो न केवलं यज्ञकृतः किंतु कौसल्यातपःकृत इत्याह । कौसल्या तेन शुशुभे कुतः पुत्रेण पुत्रत्वेनावतीर्णेन पुत्रत्वेनावतीर्य स्वमनोरथपूरणादिति भावः । अमिततेजसा "स उ श्रेयान् भवति जायमान" इत्युक्तरीत्या जन्मलब्धनिरवधिकतेजसा यथा अदितिः वज्रपाणिना परत्वचिह्नभूतरेखामयवज्रयुक्तपाणितलेन देवानां वरेण उपेन्द्रेण शुशुभे तथा यथापूर्वजन्मन्यदितिरनुष्ठितव्रतविशेषैर्विष्णुं पुत्रं लब्धवती तथेयमपीत्यर्थः । यद्वा अमिततेजसा जगत्प्रकाशकादित्यस्य कुलस्यापि प्रकाशकेन सूर्यस्यापि भवेत्सूर्य इतिवत् । 'ततोऽखिलजगत्पद्मबोधायाच्युतभानुना । देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना' इत्युक्ताच्युतभानोरप्यतिशयिततेजसा देवानां वरेण इन्द्रेण वज्रपाणिनेत्युभयविशेषणम् । वज्रहस्तेन वज्ररेखायुक्तहस्तेन च अनेनैव साधारणधर्मेणोपमानोपमेयभावः । यद्वा लौकिकानामिन्द्रे श्रेष्ठत्वबुद्ध्या तदनुसारेणोपमा इषुवद्गच्छति सवितेतिवत् । यद्वा दृष्टिदोषपरिहाराय हीनोपमापि क्रियते । यद्वा अयं श्लोकः पूर्वशेषतथा मात्ररिष्टभङ्गेन तदतिशयावहत्वद्योतनाय तथाहि मातृकारकश्चन्द्रः स च वर्धिष्णुर्गुरुणा युक्तो मातरमभिवर्धयति ॥ ११ ॥

भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः । साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥१३॥
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ । वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ॥ १४ ॥
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः । सार्पे जातौ तु सौमित्री कुलीरेऽभ्युदिते रवौ ॥ १५ ॥
राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् । गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ १६ ॥

१३ ] ति० टी०—चतुर्भागः चतुर्न्यूनो भागश्चतुर्भागः पायसार्धस्य चतुर्थांशन्यूनो भागः अतएव साक्षाद्विष्णोः समुदितो युक्तः अस्य पाञ्चजन्यावतारतया स्वधारकस्य विष्णोः साक्षाद्विष्णुत्वमुक्तम् अनेन पाञ्चजन्यस्यापि विष्णुत्वमेवेति सूचितम् तदीयसर्वगुणवत्तासूचनेनास्यापि रामतुल्यत्वं रामपायसांशसमपायसांशजन्यत्वं च सूचितम् ॥ १३ ॥

रा० टी०—भरत इति । सत्यपराक्रमः सत्यायोध्याराजधान्यस्येति सत्यः रामः तस्येव पराक्रमो यस्य तस्मादेव पराक्रमो यस्येति वा स एव पराक्रमो यस्येति वा रघुनाथाज्ञाकारीत्यर्थः किंच सत्यः कापट्यरहितः पराक्रमो यस्य सः साक्षाद्विष्णोर्वैकुण्ठेशस्य चतुर्भागः चत्वारो भागा यस्मिन् सर्वांश इत्यर्थः अत एव विष्णोस्तदवस्थापन्नस्य सर्वैर्गुणैः समुदितः यदि च विष्णोरित्यत्र षष्ठी राहोः शिर इतिवत्तर्हि सर्वैर्गुणैः समुदितः चतुर्भागः साक्षाद्विष्णुरेवेत्यर्थः विष्णोरित्युभयान्वयि अत्रार्थे प्रमाणम् 'वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः । शत्रुघ्नस्तु स्वयं भूमा रामसेवार्थमागतः' इति नारदपञ्चरात्रवचनम् निरूपितश्चैतत्प्रथमसर्गे विरोधोद्धारप्रकरणे इदं त्वयि न वक्तव्यं शत्रुघ्ने भरतेऽपि वेत्युत्तरकाण्डघटकश्लोकव्याख्यावसरे भरते न वक्तव्यमिति निषेधतात्पर्यवर्णनेन निरूपयिष्यामश्चोत्तरकाण्डे विशेषतः भरतो नामेति प्रसिद्धो केकय्यां जज्ञे प्रादुर्बभूव ॥ १३ ॥

गो० टी०—अथ पायसोपयोगक्रमेण कौसल्यानन्तरकैकेयीप्रसवमाह—भरत इति । साक्षाद्विष्णोः प्रत्यक्षविष्णोः रामस्य चतुर्भागश्चतुर्थांशः रामस्य विष्ण्वर्धत्वात् तस्य चतुर्थांशः विष्णोरष्टमांश इत्यर्थः । यद्वा साक्षाद्विष्णोर्वैकुण्ठवासिनश्चतुर्थांशश्चतुर्थस्यांशः अष्टमभाग इत्यर्थः । यद्वा साक्षात्प्रत्यक्षभूत इति सौलभ्यमुच्यते । यद्वा साक्षादव्यवधानेन जज्ञे रामादनन्तरं जज्ञ इत्यर्थः । सर्वैः रामसंबन्धितयोक्तैः गुणैः समुदितः युक्तः ॥ १२ ॥

१४ ] ति० टी०—विष्णोरर्धेति । विष्णो रामस्य । अर्धशब्दोऽत्र भागवाची न समांशवाची तेन पायसाष्टमांशौ लक्ष्मणशत्रुघ्नाविति बोध्यम् ॥ १४ ॥

रा० टी०—अथेति । अथ भरतप्रादुर्भावानन्तरं सर्वास्त्रकुशलौ निखिलास्त्राणां विज्ञातारौ विष्णोर्नारायणस्यार्धौ वर्धको यो रामस्तत्र समन्वितौ तदनुयायिनावित्यर्थः वीरौ विना गरुडेन ईरो गतिर्ययोस्तौ गरुडगामिभूमक्षीराब्धीशौ लक्ष्मणशत्रुघ्नौ सुतौ सुमित्राऽजनयत् एतेन शत्रुघ्नस्य भरतानुयायित्वं रामाज्ञयैवेति ध्वनितम् ॥ १४ ॥

गो० टी०—अथेति । अथ भरतजननानन्तरं द्विवचनेन यमलत्वमुच्यते अर्धसमन्वितौ समन्वितार्धौ परनिपातः अर्धशब्दोंऽशमात्रवाची समन्वितचतुर्थभागाष्टमभागरूपौ 'भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः अन्यथा पायसप्रदानक्रमविरोधः समन्वितशब्देन युगपदुपयुक्तत्वमुच्यते॥१३॥

१५ ] ति० टी०—सार्पे आश्लेषा कुलीरः कर्कटः अभ्युदित इत्यस्य उच्चस्थ इत्यर्थः । सौमित्री इति द्विवचनेन तयोर्यमजत्वं सूच्यते ॥ १५ ॥

रा० टी०—भरतादीनां जन्मनक्षत्रादि बोधयन् आह—पुष्ये इति । प्रसन्नधीर्भरतः पुष्ये पुष्यनक्षत्रयुक्ते तिथौ मीनलग्ने भरतो जातः प्रादुर्भूतः सौमित्री सुमित्राया नित्यसुतौ लक्ष्मणशत्रुघ्नौ तु सार्पे आश्लेषानक्षत्रयुक्ते तिथौ कुलीरे कर्कटे लग्ने रवौ अभ्युदिते प्रवृद्धे मध्याह्नकाले इत्यर्थः सौमित्री जातौ प्रादुर्भूतौ पुष्ये सार्पे इत्यत्र "नक्षत्रेण युक्तः कालः" इत्यण् "लुबविशेषे" इतिलुप् सौमित्रीत्यत्र बाह्वादित्वादिञ् ॥ १६ ॥

गो० टी०—त्रयाणां जन्मकालमाह—पुष्य इति । पुष्ये पुष्ययुक्ते तिथौ "नक्षत्रेण युक्तः कालः" इति विहितस्याण्प्रत्ययस्य लुबविशेष इति लुप् । मीनस्य गुरुक्षेत्रत्वात्तज्जन्मफलमाह—प्रसन्नधीरिति । सार्पे सर्पदेवताके नक्षत्रे "आश्लेषा नक्षत्रं सर्पा देवता" इति श्रुतिः । सुमित्रायाः पुत्रौ सौमित्री बाह्वादित्वादिञ् कुलीरे कर्कटके रवौ अभ्युदिते भरतजननस्योदयात्पूर्वत्वज्ञापनायात्रोदित इत्युक्तम् अन्यथा चैत्रकर्कटकस्य मध्याह्नकालिकत्वेन विरोधात् । यद्वा उदिते प्रवृद्धे मध्याह्नकाल इत्यर्थः । पञ्चोच्चत्वं गुरुचन्द्रयोग इत्यादि सर्वत्रसमानं रामस्य पुनर्वसुनक्षत्रं तिथिर्नवमी भरतस्य पुष्यनक्षत्रं दशमी सौमित्र्योश्च दशमी आश्लेषा तारेति विशेषः ॥ १५ ॥

१६ ] ति० टी०—राज्ञ इति । पृथग्गुणवन्तः प्रत्येकमनन्यसाधारणगुणवन्तः अनुरूपा ज्येष्ठकनिष्ठत्वादियोग्यव्यवहारवन्तः रुच्या कान्त्या प्रोष्ठपदा इति पूर्वाभाद्रपदोत्तराभाद्रपदयोर्नाम तयोश्च प्रत्येकं द्वे द्वे तारे इति ज्योतिःशास्त्रप्रसिद्धम् । तैत्तिरीयश्रुतिरपि "चत्वार एकमभिकर्म देवाः प्रोष्ठपदास इति यान्वदन्ति" इति । तदुपमा इत्यर्थः ॥ १६ ॥

रा० टी०—चतुर्णां प्रादुर्भावमुपसंहरन्नाह—राज्ञ इति । महात्मानः ईश्वरादिपूजनीयस्वरूपाः अत एव पृथग्ज्ञानविषयेभ्यो विलक्षणाः अत एव गुणवन्तः प्राकृतविलक्षणदिव्यगुण-

१ केकय्यामिति रा. पाठः । २ सर्वास्त्र कुशलौ वीराविति गो. रा. पाठः ।

जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खात्पतत् ॥ १७ ॥
उत्सवश्च महानासीदयोध्यायां जनाकुलः । रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ॥ १८ ॥
गायनैश्च विराविण्यो वादनैश्च तथापरैः । विरेजुर्विपुलास्तत्र सर्वरत्नसमन्विताः ॥ १९ ॥
प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् । ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥२०॥
अतीत्यैकादशाहं तु नामकर्म तथाकरोत् । ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ २१ ॥
सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा । वसिष्ठः परमप्रीतो नामानि कुरुते[3] तदा ॥ २२ ॥

विशिष्टाः सुरूपाः शोभनानि रूपाणि येषां ते किंच शोभनो रूपो वेदेषु निरूपणं येषां ते रुच्या कान्त्या परमशोभया युक्ताः ये चत्वारो राज्ञः पुत्रा जज्ञिरे ते प्रोष्ठपदोपमाः प्रोष्ठो गौस्तस्य पदे खुरौ उपमा येषांते द्वौ द्वौ मिलित्वा स्थिता बभुवुरित्यर्थः ॥ १६ ॥

गो० टी०—राज्ञ इति । एकत्वेऽपि पृथग्वर्तमानाः एकस्य चतुर्धावस्थाने उपमानमाह—प्रोष्ठेति । प्रोष्ठो गौः तस्येव पादा यासां ताः प्रोष्ठपदाः " सुप्रात " इत्यादिसूत्रे अच्प्रत्ययान्तो निपातितः रुच्या कान्त्या प्रोष्ठपदोपमाः राज्ञोऽनुरूपाश्चत्वारः पुत्रा जज्ञिरे यज्ञफलं निर्वृत्तमिति भावः पृथग्गुणवन्त इति वा प्रत्येकमनन्यसाधारणगुणवन्त इत्यर्थः । रामस्य सामान्यधर्मरुचिः लक्ष्मणस्य शेषत्वज्ञानं भरतस्य भगवत्पारतन्त्र्यधीः शत्रुघ्नस्य भागवतपारतन्त्र्यमिति परस्परविलक्षणगुणवन्त इत्यर्थः ॥ १६ ॥

१७-१८ ] ति० टी०—जगुरिति । रामाद्युत्पत्तिकाल इति शेषः । पतदित्यत्राडभावश्छान्दसः ॥ १७ ॥ १८ ॥

रा० टी०—प्रादुर्भावकालिकसर्वहर्षं बोधयन् तत्तत्कृत्यमाह—जगुरिति । गन्धर्वपतयो जगुः अप्सरोगणाश्च ननृतुः दवदुन्दुभयः नेदुः खादाकाशात्पुष्पवृष्टिश्च च्युता एतेन अचेतनानामपि तस्मिन्काले चेतनत्वं व्यक्तम् तेन तात्कालिकहर्षस्य पराकाष्ठा बोधिता खात्पतदितिभट्टसंमतः पाठः तत्राडभावश्छान्दस इति तैरुक्तम् ॥ १७ ॥

गो० टी०—जननकालिकशुभनिमित्तानि दर्शयति—जगुरिति । कलमव्यक्तमधुरं यथा भवति तथा जगुः खात् आकाशात् ॥ १६

रा० टी०—उत्सव इति । जनाकुलः जनैराकुलो व्याप्तः महानतिशय एव उत्सवोऽयोध्यायामासीत् चशब्द एवार्थे अर्धं पृथगन्वयि रथ्या इति नटनर्तकसंकुलाः नटादिव्याप्ताः अत एव जनसंबाधाः जनानां संबाधाः परस्परमङ्गसंमर्दो यासु ॥ १८ ॥

गो० टी०—अथ जातकर्मोत्सवमाह—उत्सवश्चेति । अयोध्यायामित्यनेन प्रतिगृहमुत्सवोऽभूदित्युच्यते जनाकुलः आकुलजनः इदमर्धमेकम् ॥ १७ ॥

१९ ] ति० टी०—गायनैर्गायकैः वादनैर्वादकैः विराविण्यः सशब्दाः रथ्या इति विशेष्यम् सर्वरत्नसमन्विता नटाद्युद्देशेन क्षिप्तै रत्नैर्युक्ताः ॥ १९ ॥

रा० टी०—विपुलाः विस्तीर्णाः सर्वरत्नसमन्विताः जनग्रहणार्थं प्रक्षिप्तसकलरत्नसंपूर्णाः गायकैर्गानकर्तृभिः वादकैर्वादनकर्तृभिश्च परैः वेदपाठकर्तृभिश्च विराविण्यः शब्दवत्यः सत्य एव रथ्या मार्गास्तत्र महोत्सवसमये विरेजुः शुशुभिरे सार्धश्लोक एकान्वयी चकारान्तरेण राजद्वारादिसंग्रहः तथाशब्द एवार्थे ॥ १९ ॥

गो० टी०—रथ्याश्चेति । गायनैः गायकैः वादनैः वाद्यशिल्पैः अपरैः सूतमागधबन्दिभिश्च विराविण्यः शब्दवत्यः रथ्या आसन् ॥ १८ ॥

२० ] ति० टी०—प्रदेयान्पारितोषिकान् सूताः पौराणिकाः मागधा वंशावलीकीर्तकाः बन्दिनः स्तुतिपाठकाः संबन्धसामान्ये षष्ठी सूतादिसंबन्धि यद्देयं पारितोषिकं तत्तेभ्यो ददावित्यन्वयः ॥ २० ॥

रा० टी०—प्रदेयानिति । राजा दशरथः सूतमागधबन्दिनां प्रदेयान् प्रदातुं योग्यान्पदार्थान्ददौ तत्र सूताः पौराणिकाः मागधाः वंशप्रशंसाकर्तारः बन्दिनः स्तुतिपाठकाः संबन्धसामान्ये षष्ठी ब्राह्मणेभ्यः वित्तं धनं सहस्रशो गोधनानि च ददौ ॥ २० ॥

गो० टी०—अथ दानसमृद्धिमाह—प्रदेयानिति । प्रदेयान् पारितोषिकान् सूतमागधबन्दिनामिति शेषे षष्ठी सूताः पौराणिकाः मागधाः वंशावलिकीर्तकाः बन्दिनः स्तुतिपाठकाः सूतादीनां प्रदेयान् ददावित्यन्वयः गोधनानि गोरूपधनानि सहस्रशः सहस्राणि ॥ १९ ॥

२१-२२] ति० टी०—अतीत्येति । एकादशाहशब्दः सूतकान्तोपलक्षणम् अन्यथा ' क्षत्रियस्य द्वादशाहं सूतकम् ' इति स्मृतिविरोधः स्यात् तथा च रामजन्मतस्त्रयोदशे दिने नामकरणमकरोदित्यर्थः अस्य निरुक्तिः पूर्वं दर्शिता । ' श्रियः कमलवासिन्या रमणोऽयं यतो हरिः । तस्माच्छ्रीराम इत्यस्य नाम सिद्धं पुरातनम् ॥ सहस्रनामसदृशं स्मरणान्मुक्तिदं नृणाम् ' । इति पाद्म उक्तम् ॥ २१ ॥ नामानि कुरुते नामकरणमकारयदि-

१ खाच्च्युतेति गो. रा. पाठः । २ इदमर्धं गो. पुस्तके नास्ति । ३ कृतवांस्तदेति गो. पाठः ।

ब्राह्मणान्भोजयामास पौरजानपदानपि । अददद्ब्राह्मणानां च रत्नौघममलं बहु ॥ २३ ॥
तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् । तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ २४ ॥
बभूव भूयो भूतानां स्वयम्भूरिव संमतः । सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥ २५ ॥
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः । तेषामपि महातेजा रामः सत्यपराक्रमः ॥ २६ ॥
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः । गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ॥ २७ ॥

त्यर्थः । वर्तमानसामीप्ये लट् अन्तर्भावितण्यर्थता च यत्तु कतकेन राज्ञो नामकरणादावनधिकार इत्युक्तम् अकरोदित्यत्र च पुरोहितद्वारेति शेषपूरणं कृतम् तत्र मानं चिन्त्यम् ॥२३॥

रा० टी०—अतीत्यैति । एकादश अहानि यस्मिन् दिनसमूहे स तं किंच एकश्च एकश्च एकौ तौ च दश एकादशतेषां संख्यापूरकं एकादशं तदेव अहः द्वादशदिनानीत्यर्थः अतीत्य अतिक्रम्य त्रयोदशे दिने इत्यर्थः नामकर्म अकरोत् तदेव विस्पष्टयति महात्मानं ईश्वरादिपूजनीयस्वरूपं ज्येष्ठं कौसल्यातः पूर्वं प्रादुर्भूतं रामं नाम अकरोत् प्रादुरभावयत् केकयीतः प्रादुर्भूतं भरतं नाम च अकरोत् सौमित्रिं सुमित्रातः प्रादुर्भूतं ज्येष्ठमित्यर्थः लक्ष्मणं नाम च अकरोत् अपरं तत्कनिष्ठं सौमित्रिं शत्रुघ्नं नाम च अकरोत् राजेति शेषः किंच अकरोत् वशिष्ठो राज्ञा अकारयदित्यर्थः अन्तर्भावितणिजर्थः । तदा राजकर्तृकरामादिनामकरणसमये परमप्रीतो वशिष्ठः नामानि तथा इति कुरुते योग्यानीमानि नामानीत्यवददित्यर्थः। एकादशाहमित्यत्र प्रथमपक्षे अच्प्रत्ययन्ववेत्यत्र अजिति योगविभागादच् तुशब्दः एकस्तथाशब्दश्च चार्थे सचाप्यत्या च हीनेप्यन्वेति । अत एव क्षत्रियस्य द्वादशाहं सूतकं त्रयोदशे राज्ञो नामकरणमित्यादिस्मृतयः सानुकूलाः राजेतिशेषादेव द्वादशेऽहनि जातस्य पिता नाम कुर्यादित्यादिस्मृत्या न विरोधः क्षत्रियस्य नामकरणेऽनधिकार इत्युक्तौ तु मूलं मृग्यम् कुरुते तथा इति पाठे तु तथाशब्दस्तदार्थकः द्वयोरेकत्रान्वयः ॥ २१ ॥ २२॥

गो० टी०—अतीत्येति । अर्धमेकम् लक्ष्मणजन्मदिनापेक्षया एकादशाहत्वं रामजन्मदिनापेक्षया द्वादशदिनं तत् तदत्यये प्रथमसूतकेनैव निवृत्तेन सर्वसूतकनिवृत्तेर्द्वादशाहे नामकरणवचनमुपपन्नमेव अन्यथा " क्षत्रियस्य द्वादशाहं सूतकम् " इतिश्रुतिः । ' त्रयोदशे राज्ञां नामकरणम् ' इति स्मृतिश्च विरुध्येत नामकर्म नामकरणं तथा जातकर्मवदित्युत्सवातिशयोऽतिदिश्यते ॥२०॥ कस्य किंनामाकरोदित्यत्राह—ज्येष्ठमिति । रामं रामनामानं रमन्ते सर्वे जनाः गुणैरस्मिन्निति व्युत्पत्त्येति भावः महात्मानं महास्वभावं निरवधिकगुणमिति यावत् अनेन रामपदप्रवृत्तिनिमित्तमुक्तम् राजा ज्येष्ठपुत्रं रामनामानमकरोत् कैकयीसुतं भरतनामानमकरोत् भरत इति राज्यस्य भरणादिति सहस्रानीकोकरीत्या राजनि मृते रामे च वनं गते अराजकराज्यभरणादिति भावः एवं सौमित्रिं सुमित्रापुत्रं लक्ष्मण इति नामयुक्तमकरोत् रामकैङ्कर्यलक्षणसंपद्युक्तत्वाल्लक्ष्मणः । लक्ष्म्या अच " इति पामादिपाठादिकारस्याकारः मत्वर्थीयो नः । अत एव लक्ष्मणो लक्ष्मिसंपन्न इति वक्ष्यति अपरं सौमित्रिं शत्रुघ्नं शत्रुघ्ननामानमकरोत् शत्रून् हन्तीति शत्रुघ्नः ॥ २१ ॥ ननु क्षत्रियस्य नामकरणेऽनधिकारात् पुरोहितकर्तृकत्वस्मरणात् कथं दशरथस्य नामकर्मकर्तृत्वमित्याशङ्क्य पुरोहितद्वारा कर्तृत्वमित्यभिप्रेत्याह—वसिष्ठ इति । तदा द्वादशेऽह्नि अत एवाकारयदिति वक्ष्यति ॥ २२ ॥

२३ ] ति० टी०—ब्राह्मणान्भोजयामासेति । राजाज्ञयेति शेषः बहु बहुमानपूर्वकमित्यर्थः ॥ २३ ॥

रा० टी०—ब्राह्मणानिति । पौरजानपदान् पुरदेशप्रभवान्ब्राह्मणान्भोजयामास अमितमपरिमितं बहुप्रकारं रत्नौघं रत्नसमूहं ब्राह्मणानामददात् चकारेण वस्त्रालङ्कारादिसंग्रहः संबन्धसामान्यविवक्षया षष्ठी ॥ २३ ॥

गो० टी०—नामादिनान्दीकरणमिति नियमात् नामकर्मणि नान्दीकरणमाह—ब्राह्मणानिति । पौरेत्यादिब्राह्मणविशेषणं राज्ञेति शेषः ब्राह्मणानामिति संबन्धसामान्ये षष्ठी अमितमसंख्येयं बहु बहुप्रकारम् ॥ २३ ॥

२४] ति० टी०—जन्मक्रियादीनि तदाद्युपनयनान्तानीत्यर्थः अकारयत् वसिष्ठो राज्ञेति शेषः । केतुर्विरुदध्वजः स यथान्नदानादिकीर्तिं ख्यापयत्येवमिक्ष्वाकुकुलवैभवप्रकाशकः रतिः प्रीतिः२४

रा० टी०—तदेवोपसंहरन्नाह—तेषामित्यर्धेन । तेषां रामादीनां जन्मक्रियादीनि जातकर्मप्रभृतीनि सर्वकर्माणि उपनयनान्तनिखिलकर्तव्यानि अकारयत् वशिष्ठ इति शेषः तेषामिति तेषां चतुर्णां मध्ये श्रेष्ठः पितः रतिकरः पितृप्रमोदवर्धकः केतुरिव ध्वजसदृशप्रकाशकः रामो भूयो भूतानां राजवर्धितजनानां स्वयंभूरिव स्वयंभूसदृशः संमतः पूजितो बभूव॥२४॥

गो० टी०—उक्तानुवादपूर्वकमितरसंस्कारकरणं दर्शयति तेषामित्यर्धम् आदिशब्देनान्नप्राशनचौलोपनयनादीनि गृह्यन्ते ॥ २४ ॥ उक्तं रामस्य महात्मत्वमुपपादयति—तेषामिति तेषां सुतानां मध्ये वयसा ज्येष्ठः केतुरिव ध्वजइव निजकुलप्रकाशकः पितुर्भूयो रतिकरः संतोषकरः भूतानां स्वयम्भूरिव संमतः नित्यप्रेमास्पदं बभूव ॥ २५ ॥

२५–२७ ] ति० टी०—स्वयम्भूर्हिरण्यगर्भः स इव सर्वशक्तिमत्वेन संमतः ॥ २५ ॥ ज्ञानोपसंपन्नाः तत्त्वज्ञानयुक्ता इति

१ अमितमिति गो. रा. पाठः । २ ज्ञानोपपन्नाश्चेति गो. रा. पाठः । ३ सुधांशुरिवेति गो. पाठः ।

धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः । बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ २८ ॥
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः । सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ २९ ॥
लक्ष्मणो लक्ष्मिसंपन्नो बहिः प्राण इवापरः । न च तेन विना निद्रां लभते पुरुषोत्तमः ॥ ३० ॥

---

केचित् गुणैः साधारणैः क्षत्रासाधारणैश्च सद्गुणैरित्यर्थः तेषामिति निर्धारणे षष्ठी रामः सर्वसद्गुण इति शेषः ॥ २६ ॥ इष्टः सर्वस्येत्यादि । गुणकथने पौनरुक्त्यं दार्ढ्याय । रथचर्यासु रणोचितरथप्रचारेषु ॥ २७ ॥

रा० टी०–सर्वे इति । ज्ञानोपपन्नाः सर्वविषयकनित्यज्ञानवन्तोपि सर्वे चत्वारो भ्रातरः वेदविदः गुरूपदेशात्प्राप्तसकलवेदाः बभूवुरितिशेषः अत एव सर्वे शूराः अत एव सर्वे पौरहिते रताः अत एव सव गुणैर्निखिलक्षात्रधर्मैः समुदिताः संप्रकाशिताः बभूवुः गुरूपदेशात्प्राप्तवेदा इत्यनेन गुरूपदेशादेव वेदोऽवगन्तव्य इति लोकोपदेशः सूचितः चशब्दोऽप्यर्थे सर्वे ज्ञानोपसंपन्नाः इति भट्टसंमतः तत्राक्षरस्वारस्यादपिशब्दोध्याहियते ॥२५॥ सिंहावलोकनन्यायेन रामं वर्णयन्नाह–तेषामिति । महातेजाः समाधिकरहिततेजोविशिष्टः सत्यपराक्रमः कापट्यसंसर्गरहितपराक्रमविशिष्टः सुधांशुः शरत्पूर्णचन्द्र इव सर्वस्य लोकस्य इष्टः ईप्सितः अपिशब्देन त्रयाणामपि ईप्सितः निर्मलः आश्रितमलनिवर्तनहेतुः किंच निर्गतो यो मः परिमाणं तद्धाति गृह्णाति इयत्तारहितप्रभावविशिष्ट इत्यर्थः । गजस्कन्धे गजस्कन्धारोहे अश्वपृष्ठे अश्वपृष्ठारोहे च रथचर्यासु रथसंचारेषु च संमतः सर्वजनप्रशंसास्पदीभूतः धनुर्वेदे अस्त्रशस्त्रादिज्ञाने निरतः परिनिष्ठितः पितुः शुश्रूषणे पित्रादिसेवायां रतः नितरां प्रवृत्तः तेषां चतर्णां मध्ये राम आसीदिति शेषः द्वयोरेकत्रान्वयः ॥ २६ ॥ २७ ॥

गो० टी०–उपनीतानां तेषां वेदाध्ययनादिकमाह–सर्वे इति । वेदविदः अधीतवेदाः विद्लृ लाभे इत्यस्मात् क्विप् शूरा इत्यनेनाधीतधनुर्वेदत्वमुच्यते लोकहिते रता इत्यनेन धनुर्वेदाभ्यासकार्यपरत्वं वेदार्थज्ञानसिद्धिमाह–ज्ञानेति । ज्ञानकार्यगुणसंपत्तिमाह–समुदिता गुणैरिति । गुणैर्दयादिभिः आसन्निति शेषः ॥ २६ ॥ अथ प्रत्येकमसाधारणान् गुणान्वक्तुमादौ रामगुणानाह–तेषामिति । अपिशब्देनान्येषां रघुवंश्यानामपि मध्य इत्यर्थः । महातेजा महाप्रतापः सत्यपराक्रमः अमोघवीर्यः निर्मलश्शशाङ्क इव सर्वलोकस्य इष्टः सर्वदा दर्शनीयः अभवदिति शेषः ॥२७॥ गज इति । अत्र राम इत्यनुषज्यते गजस्कन्धे स्थित्वा तत्प्रेरणे संमतः राम इव गजस्कन्धारोहणादौ न कोपि समर्थ इति गजसादिभिः श्लाघित इत्यर्थः एवमुत्तरत्रापि योज्यम् ॥ २८ ॥

२८ ] ति० टी०–लक्ष्मिवर्धन इति ह्रस्व आर्षः ॥ २८ ॥

रा० टी०–रामाचरणमुक्त्वा लक्ष्मणाचरणमाह–बाल्यादिति । लक्ष्मिवर्धनः आश्रितसंपत्तिवर्धकः लक्ष्मणः लोकरामस्य लोकाभिरामस्य ज्येष्ठस्य पूर्वं प्रादुर्भूतस्य भ्रातुः नित्यभ्रातृत्वविशिष्टस्य रामस्य बाल्यात्प्रभृति नित्यशः सुस्निग्धः अतिप्रीतिविशिष्ट आसीदिति शेषः । लक्ष्मवर्धन इत्यत्र ह्रस्व आर्षः २८

गो० टी०–अथ लक्ष्मणगुणविशेषानाह–बाल्यादित्यादिभिश्चतुर्भिः । लक्ष्मीं वर्द्धयतीति लक्ष्मिवर्द्धनः "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः कैङ्कर्यसंपद्वर्द्धकः लक्ष्मणः रामस्य बाल्यात्प्रभृति बाल्यमारभ्य प्रभृतियोगेपि पञ्चमी प्रयुज्यते सुस्निग्धः सुतरां स्निग्धः अङ्कुरात् प्रभृति परिमलेनैवोत्पन्नस्तुलसीकाण्ड इव जन्मनः प्रभृति निरवधिकभक्तिसंपन्नः । यद्वा सुस्निग्धः रामपर्यङ्केण स्वपर्यङ्कायोजने बाल्येऽपि न निद्रातीत्यर्थः अनेन स्वरूपप्रयुक्तत्वं दास्यस्योक्तम् । अथ गुणकृतत्वमाह–लोकरामस्य लोकान् रमयतीति लोकरामः ण्यन्तात्कर्मण्यण् गुणैर्दास्यमुपागत इत्यन्यत्रोक्तम् तस्य भ्रातुः ज्येष्ठस्येत्यनेन जन्मकृतदास्यमुक्तं नित्यशः नित्यं सुस्निग्ध इत्यन्वयः ॥ २९ ॥

२९ ] ति० टी०–रामस्य सुस्निग्ध इति प्राक्तनेनान्वयः स्वशरीरादपि तस्य स्वात्मभूतस्य रामस्य प्रियकरः ॥ २९ ॥

रा० टी०–सर्वेति । तस्य रामस्य बहिःस्थितः अपरः द्वितीयः प्राण इव प्राणसदृशः लक्ष्मिसंपन्नः नित्यं सर्वसंपत्तिविशिष्टः लक्ष्मणः तस्य रामस्य शरीरतोऽपिना मनआदिभिः सर्वप्रियकरः निखिलप्रियकारक आसीदिति शेषः । बहिः प्राणइवापर इत्यभूतोपमालङ्कारेण लक्ष्मणसदृशो रामस्य प्रियः लक्ष्मण एवेत्यनन्वयालङ्कारो ध्वनितः तेन रामप्रसादाकाङ्क्षिभिर्लक्ष्मणोऽवश्यमाश्रयणीय इति वस्तु व्यक्तम् ॥ २९ ॥

गो टी०–सर्वेति । शरीरत इत्युपलक्षणं त्रिविधकरणैरपि रामस्य सर्वप्रियकरः यद्वा स्वशरीरादपि रामस्य प्रियकरः स्वशरीरमुपेक्ष्यापि प्रियकर इत्यर्थः यद्वा शरीरतो बहिः स्थितः अपरः प्राण इव स्थितः यद्वा शरीरतः रामशरीरस्य सार्वविभक्तिकस्तसिरित्युक्तेः । लक्ष्मणस्य दक्षिणबाहुत्वाद्रामसर्वावयवानां सर्वप्रियकर इत्यर्थः । 'रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः' इति वक्ष्यमाणत्वात् अस्मिन् पक्षे अपिशब्देन रामस्य स्वविषयप्रियकरत्वं समुच्चीयते लक्ष्मिसंपन्न इत्यनेन लक्ष्मणशब्दार्थ उक्तः ॥ ३० ॥

३० ] ति० टी०–रामस्यापरो बहिःसंचरन्प्राण इव लक्ष्मणः प्रियः तदेवाह–न चेति ॥ ३० ॥

रा० टी०–रामस्य लक्ष्मणविषयकप्रीतिं वर्णयन्नाह–नेति । पुरुषोत्तमः समाधिकरहितपुरुषत्वविशिष्टो रामः तेन लक्ष्मणेन विना निद्रां नैव लभते चशब्द एवार्थे उपनीतं कौशल्याद्युपहृतं मृष्टमन्नं तं लक्ष्मणं विना नैवाभाति हिशब्द एवार्थे ॥ ३० ॥

गो० टी०–रामस्य लक्ष्मणेऽनुरागं दर्शयति–न चेति । तेन विना "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इति तृतीया निद्रां न लभते प्राणं विना कथं निद्रां लभेतेत्यर्थः । किंच

मृगमन्नमुपानीतमश्नाति नहि तं विना । यदा हि हयमारूढो मृगयां याति राघवः ।। ३१ ।।
अथैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् । भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।। ३२ ।।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः । स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ।। ३३ ।।
बभूव परमप्रीतो देवैरिव पितामहः । ते यदा ज्ञानसंपन्नाः सर्वे समुदिता गुणैः ।। ३४ ।।
ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः । तेषामेवंप्रभावाणां सर्वेषां दीप्ततेजसाम् ।। ३५ ।।
पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा । ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।। ३६ ।।

---

कौसल्ययानीतं मृष्टान्नं तं विना नाश्नाति दक्षिणबाहुं विना कथमश्नातीति भावः पुरुषोत्तमः प्रेमशालिविषये सर्वात्मना विश्लेषासह इत्यर्थः क्षणेऽपि ते यद्विरहोऽतिदुःसह इति ह्युक्तम् ॥ ३१ ॥

३१ ] ति० टी०—मृगयाम् आखेटमुद्दिश्येत्यर्थः ॥ ३१ ॥

रा० टी०—लक्ष्मणाचरणमाह—यदेति । राघवो रामः यदा यस्मिन्काले हयमश्वमारूढः मृगयामाखेटं याति तदा एनं रामं परिपालयन् सर्वतो रक्षन् सधनुः धनुस्सहितः लक्ष्मणः पृष्ठतोऽभ्येति समीपतो गच्छति ॥ ३१ ॥

गो० टी०—यदा हीति । राघवो रामः यदा हयमारूढः सन् मृगयामाखेटमुद्दिश्य याति तदा तदानीमेव एनं रामं सधनुः सन् पालयन् अस्थाने भयशङ्कितया पृष्ठतः वेगवद्धयसमीप एवाभ्येति हिः प्रसिद्धौ ॥ ३२ ॥

३२ ] ति० टी०—परिपालयन् रामशरीरामिति शेषः । अनेन लक्ष्मणस्य भक्त्यतिशय उक्तः हि यतः शत्रुघ्नो लक्ष्मणावरजः अतो रामावरजस्य भरतस्य प्रिय इति शेषः रामलक्ष्मणाविव भरतशत्रुघ्नौ परस्परप्रियावित्यर्थः ॥ ३२ ॥

रा० टी०—भरतशत्रुघ्नयोः परस्परं प्रीतिं वर्णयन्नाह—भरतस्येति । लक्ष्मणावरजः लक्ष्मणानुजभ्राता शत्रुघ्नः भरतस्य प्राणैश्च प्राणैरपि नित्यं प्रियतरः अतिप्रीतिकारी आसीत् तस्य शत्रुघ्नस्यापि तथा प्राणैरपि आप्रियः प्रियतरः स भरतः नित्यमेवासीत् हिशब्द एवार्थे ॥ ३२ ॥

गो० टी०—अथ भरतशत्रुघ्नयोः परस्परानुरागं दर्शयति—भरतस्यापीति । हि यस्मात् स शत्रुघ्नो लक्ष्मणावरजस्तस्मात्तत्तुल्यप्रकृतिकत्वात् भरतस्यापि प्राणैः प्राणेभ्योऽपि प्रियतर आसीत्तस्य शत्रुघ्नस्य च भरतः तथा प्रिय आसीत् ॥ ३३ ॥

३३ ] ति० टी०—तस्य शत्रुघ्नस्य स भरत इति शेषः । तथा तस्य भरतस्य शत्रुघ्नः प्रिय आसीत् ॥ ३३ ॥

रा० टी०—महाराजाधिराजदशरथस्य मोदं वर्णयन्नाह—स इति त्रिभिः । महाभागैः प्रशंसनीयातिशयभाग्यविशिष्टैः प्रियैः सर्वप्रीतिविषयभूतैः चतुर्भिः पुत्रैः करणभूतैः स दशरथः देवैः पितामहो ब्रह्मा इव परमप्रीतः परमानन्दविशिष्टो बभूव ॥ ३३ ॥

गो० टी०—दशरथस्य स्वाराधकस्य मनोरथपरिपूरणमेतदवतारस्य प्रथमप्रयोजनं तन्निर्वृत्तिमाह—स चतुर्भिरिति । देवैश्चतुर्भिर्दिक्पालैः ॥ ३४ ॥

३४ ] ति० टी०—देवैश्चतुर्भिर्दिक्पालैः यद्वा वसुरुद्रादित्यविश्वेदेवैस्ते सर्वे रामादयो गुणैः समुदिता युक्ता आसन्निति शेषः ॥ ३४ ॥

३५ ] ति० टी०—एवंप्रभावाणां प्रागुक्तप्रभाववताम् लाभेनेति शेषः । पिता हृष्ट इत्यन्वयः ॥ ३६ ॥

रा० टी०—ते इति । ह्रीमन्तः लोकापवादाल्लज्जावन्तः अत एव कीर्तिमन्तः परममर्यादापालकास्ते इति यशोविशिष्टाः सर्वज्ञाः निखिलविषयकनित्यज्ञानवन्तः अत एव दीर्घदर्शिनः अनागतातीतद्रष्टारः ते अवाङ्मनसगोचरा रामादयः यदा ज्ञानसंपन्नाः ज्ञानसंभवकावस्थाविशिष्टाः तदा गुणैः नित्यराजधर्मैः समुदिताः संप्रकाशिताः बभूवुरिति शेषः ज्ञानसंपन्नशब्दः ज्ञानं संपन्नं भवति यस्यां सावस्थास्ति एषामिति अर्श-आद्यजन्तः ॥ ३४ ॥

रा० टी०—तेषामिति । दीप्ततेजसामेवंप्रभावाणामुक्तप्रकारेण प्रभावविशिष्टानां सर्वेषां रामादीनां पिता नित्यपितृत्वविशिष्टो दशरथः लोकाधिपो लोकनियन्ता ब्रह्मा यथा इव हृष्टो बभूवेति शेषः ॥ ३५ ॥

गो० टी०—पूर्वं लाभकृतप्रीतिरुक्ता । अथ तेषां ज्ञानादिसंपत्तिकृतप्रीतिविशेषमाह—त इति । श्लोकद्वयमेकान्वयम् । यदा यस्मिन्वयसि ज्ञानं शास्त्रज्ञानं ह्रीमन्तः प्रमादात्प्राप्ताकृत्यचिन्तासु लज्जावन्तः कीर्तिमन्तः ज्ञानकृतप्रथावन्तः सर्वज्ञाः सकललौकिकप्रज्ञावन्तः दीर्घदर्शिनः नित्यभाविज्ञानवन्तः आसन्निति शेषः । तदा तेषां पिता हृष्टो बभूव ॥ ३५ ॥ ३६ ॥

३६ ] ति० टी०—वैदिकाध्ययने वेदसंबन्ध्यध्ययने ॥ ३६ ॥

रा० टी०—ते इति । वैदिकाध्ययने वेदसंबन्धिसाङ्गमन्दार्थतदुपबृंहणभूतस्मृतीतिहासादीनां पठने रताः पितृशुश्रूषणरताः पित्रुपलक्षितगुर्वादिसेवानिरताश्च धनुर्वेदे अस्त्रशस्त्रादिज्ञाने निष्ठिता निपुणाश्च अपिना मात्रादिलालिताः मनुजव्याघ्राः पुरुषसिंहाः ते रामादयः आसन्निति शेषः । एतेन परममर्यादापालकत्वं तेषां व्यक्तम् ॥ ३६ ॥

---

१ तदैनमिति गो. रा. पाठः ।

पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः । अथ राजा दशरथस्तेषां दारक्रियां प्रति ॥ ३७ ॥
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः । तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ ३८ ॥
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः । स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ॥ ३९ ॥
शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् । तच्छ्रुत्वा वचनं तस्य राज्ञो वेश्म प्रदुद्रुवुः ॥ ४० ॥
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः । ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ॥ ४१ ॥
प्राप्तमावेदयामासुर्नृपायेक्ष्वाकवे तदा । तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ॥ ४२ ॥

गो० टी०—पितृप्रीतिं दृष्ट्वा पुनरपि विद्यारतास्ते आसन्नित्याह—ते चापीति । ते चापि पितृपलालिता अपि वैदिकानां वेदसंबन्धिनां स्मृतीतिहासपुराणन्यायादीनामध्ययने रता निरताः ॥ ३७ ॥

३७ ] ति० टी०—दारक्रिया विवाहः । ' कुमारस्य विशालाक्षं पाण्डुतां मुखमाददं । कपोलतलसंलीनपाणिः पद्मासनस्थितः ' इत्यादियोगवासिष्ठोक्तरीत्या संसारासारत्वदर्शनेन जातानां मुखपाण्डुतादीनां कामकृतत्वसंभावनया विवाहक्रियाचिन्तनमिति बोध्यम् ॥ ३७ ॥

रा० टी०—तेषां समावर्तनकालमालक्ष्य राजचिन्तनं वर्णयन्नाह—अथेति । सोपाध्यायः उपाध्यायवशिष्ठवामदेवसहितः सबान्धवः रोमपादादिसहितः धर्मात्मा धर्ममनाः राजा महाराजाधिराजदशरथः अथ मङ्गलरूपां तेषां दारक्रियां दारप्राप्तिविषयिणीं क्रियां विवाहं प्रति चिन्तयामास विचारयामास ॥ ३७ ॥

गो० टी०—अथैषां समावर्तनोचितकालप्राप्तिं दर्शयति—अथेति । दारविषयिणी क्रिया दारक्रिया विवाह इत्यर्थः । चिन्तयामास तुल्यशीलवयोवृत्ताभिजनलक्षणकन्यान्वेषणं कृतवान् अयमर्थो धर्मात्मेत्यनेनावगम्यते ॥ ३८ ॥

३८–३९ ] ति० टी०—सोपाध्यायः सपुरोहितः ३८॥३९

रा० टी०—तस्येति । मन्त्रिमध्ये चिन्तयमानस्य तेषां विवाहं विचारयतः महात्मनः परमोदारचित्तस्य तस्य दशरथस्य द्वारमिति शेषः । महातेजाः परमतेजस्वी महामुनिः मुनिश्रेष्ठः विश्वामित्रः अभ्यागच्छत् ॥ ३८ ॥

गो० टी०—इयता प्रबन्धेन भगवदवतारो दर्शितः । अथ भगवदवतारप्रयोजनानि साधुपरित्राणदुष्कृद्विनाशनधर्मसंस्थापनानि दर्शयत्याशास्त्रसमाप्तेः । तत्र साधुपरित्राणं प्रधानं कर्षकस्य सस्यवृद्धिरिव दुष्कृद्विनाशस्त्वानुषङ्गिकः सस्यप्रतिबन्धकतृणोन्मूलनवत् । अतो दुष्कृद्विनाशनान्तरीयकं साधुपरित्राणं वक्तुमुपक्रमते विश्वामित्रवृत्तान्तेन अर्थाद्धर्मसंस्थापनमपि सिध्यतीति बोध्यम् । तस्येति । चिन्तयमानस्य चिन्तयमाने स्वयं तत्कार्यसमर्थोऽपि रामवैभवप्रकटनाय तदागमनमिति सूचयति महातेजा इति ॥ ३९ ॥

रा० टी०—स इति । राज्ञः दशरथस्य दर्शनाकाङ्क्षी स विश्वामित्रः द्वाराध्यक्षान् द्वारपालकान् उवाच । तद्वचनमाह—कौशिकं कुशिकगोत्रोत्पन्नं गाधिनन्दनं गाधिपुत्रमिह प्राप्तं मां यूयं शीघ्रमाख्यात कथयत । ह इति हर्षार्थे ॥ ३९ ॥

गो० टी०—स इति । कौशिकं कुशिकगोत्रजम् ॥ ४० ॥

४० ] ति० टी०—कौशिकः कुशिकगोत्रापत्यम् । विलम्बे शापत्रासाद्द्वाराध्यक्षा राजवेश्म त्वरया प्रविविशुः तदागमननिवेदनायेति शेषः ॥ ४० ॥

रा० टी०—तदिति । तस्य विश्वामित्रस्य तत् शीघ्रमाख्यात इति वचनं श्रुत्वा तेन विश्वामित्रोक्तेन वाक्येन चोदिताः प्रेरिताः अत एव संभ्रान्तमनसः अत्यादरयुक्तमनोयुक्ताः सर्वे द्वारपालाः राज्ञो वेश्म प्रदुद्रुवुः शीघ्रं जग्मुः । प्रदुद्रुवुरित्यनेन तेषां हर्षातिशयो ध्वनितः तेन विश्वामित्रस्य राजपरमप्रीतिविषयत्वं व्यक्तम् ' संभ्रमस्त्वरयमिच्छन्ति भयमुद्वेगमादरम् ' इत्यनुशासनम् । त्रासाद्राजवेश्मेतिपाठः क्वचित् त्रासाद्राजभयादित्यर्थः ॥ ४० ॥

गो० टी०—तदिति । तेन वाक्येन चोदितास्तच्छ्रुत्वा वेश्म प्रति प्रदुद्रुवुः ॥ ४१ ॥

४१ ] ति० टी०—संभ्रान्तमनसः क्षुभितचित्ताः । तेन तदीयेन विश्वामित्रसंबन्धिना ॥ ४१ ॥

रा० टी०—त इति । तदा विश्वामित्राज्ञापनकाले ते द्वारपालाः राजभवनं गत्वा प्राप्तमृषिं विश्वामित्रं तथा विश्वामित्रोक्तप्रकारेण इक्ष्वाकवे इक्ष्वाकुवंशप्रभवाय नृपाय दशरथाय आवेदयामासुः ॥ ४१ ॥

गो० टी०—त इति । ऐक्ष्वाकवे इक्ष्वाकुवंश्याय क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वम् । अभ्यागतविलम्बासहिष्णव इति भावः ॥ ४२ ॥

४२ ] ति० टी०—इक्ष्वाकवे तद्वंशजत्वात्ताच्छब्द्यम् । समाहित एकाग्रचित्तः ॥ ४२ ॥

रा० टी०—तेषामिति । तेषां द्वारपालानां तत् विश्वामित्रप्राप्तिबोधकं वचनं श्रुत्वा सपुरोधाः वशिष्ठसहितः समाहितः एकाग्रचित्तः संहृष्टः परमानन्दं प्राप्तः दशरथः ब्रह्माणं बृहस्पतिं चतुर्मुखं वा वासव इन्द्र इव प्रत्युज्जगाम । श्रुतिश्च 'बृहस्पतिर्दे-

१ गाधिनन्दनमिति गो. रा. पाठः ।

प्रत्युज्जगाम संहृष्टो ब्रह्माणमिव वासवः । से दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ ४३ ॥
प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् । स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ॥ ४४ ॥
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् । पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ ४५ ॥
कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः । अपि ते संनताः सर्वे सामन्तरिपवो जिताः ॥ ४६ ॥
दैवं च मानुषं चैव कर्म ते साध्वनुष्ठितम् । वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ॥ ४७ ॥
ऋषींश्च तान्यथान्यायं महाभाग उवाच ह । ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ॥ ४८ ॥

वानां ब्रह्मा" इति । संहृष्ट इत्यनेन सदा महात्मजनदर्शनाकाङ्क्षीति ध्वनितम् ॥ ४२॥

गो० टी०–तेषामिति । सपुरोधाः पुरोहितसहितः ब्रह्माणं चतुर्मुखम् ॥ ४३ ॥

४३ ] ति० टी०–ब्रह्माणं बृहस्पतिम् "बृहस्पतिर्देवानां ब्रह्म" इति श्रुतेः । संशितव्रतं तीक्ष्णनियमम् ॥ ४३ ॥

रा० टी०–तमिति । ततः प्रत्युद्गमनानन्तरं दीप्त्या तपोजनितपरमप्रकाशेन ज्वलितं प्रकाशितं संशितव्रतमत्युग्रनियमकर्तारं तापसं तं विश्वामित्रं दृष्ट्वा प्रहृष्टवदनो राजा अर्घ्यमुपहारयत् अददात् रामो राज्यमचीकरदितिवत् णिच्प्रयोगः आगमशास्त्रस्यानित्यत्वादडविरहः ॥ ४३ ॥

गो० टी०–तमिति । ज्वलितम् अकर्मकत्वात् " गत्यर्थाकर्मक–" इति कर्तरि क्तः । संशितव्रतं तीक्ष्णनियमम् अर्घ्यं पूजार्थोदकम् उपहारयत् वसिष्ठेनेति शेषः। अडभाव आर्षः॥४४॥

४४ ] ति० टी०–उपहारयदिति । वसिष्ठेनेति शेषः। अडभाव आर्षः । राज्ञोऽर्घ्यं राजप्रेरणया वसिष्ठानीतम् ॥४४॥

रा० टी०–स इति । शास्त्रदृष्टेन विधिबोधितेनैव कर्मणा राज्ञः अर्घ्यं राजसमर्पितार्घोदकं चकारेण पाद्याचमनीयादीन् प्रतिगृह्य स्वीकृत्य स विश्वामित्रः अव्ययं विनाशरहितं नित्यमपि कुशलं नराधिपं पर्यपृच्छत् चकारान्तरमप्यर्थकम् नित्यमपि कुशलं पर्यपृच्छदित्यनेन विश्वामित्रस्य प्रेमाधिक्यं सूचितम् ॥ ४४ ॥

गो० टी०–स इति । शास्त्रदृष्टेन कर्मणा समार्पितमिति शेषः । कुशलमपूर्वार्थप्राप्तिम् अव्ययं तस्याक्षयम् ॥ ४५ ॥

४५ ] ति० टी०–कुशलपदमनामयोपलक्षणम् 'क्षत्रबन्धुमनामयम्' इति स्मृतेः । अव्ययं वृद्धिम् ॥ ४५ ॥

रा० टी०–तदेव विशदयन्नाह–पुरे इति द्वाभ्याम्। सुधार्मिकः परमधर्मविशिष्टः कौशिकः विश्वामित्रः राज्ञः दशरथस्य पुरे कोशे च जनपदे देशे च बान्धवेषु च सुहृत्सु च कुशलं पर्यपृच्छत् ॥ ४५ ॥

गो० टी०–पुर इति । कुशलमनुपद्रवम् ॥ ४६ ॥

४६ ] ति० टी०–पुनर्विशिष्य पृच्छति–कुशलमिति । विशेषप्रकारमाह–अपि त इति । अपिः प्रश्ने एवमग्रेऽपि । सामन्ताः संनता नम्रा अपि रिपवो जिताः ॥ ४६ ॥

रा० टी०–अपीति । ते तव रिपवः सामन्ताः खण्डमण्डलेश्वराः जिताः त्वया पराजिताः सन्तः सन्नताः त्वां शरणं प्राप्ताः अपि किं दैवं देवोद्देश्यकयागादिकं मानुषमतिथ्यभ्यागतोद्देश्यकभोजनादिकं च कर्म ते तव साध्वनुष्ठितं संपादितं च । किंचापी किमर्थकौ ॥ ४६ ॥

गो० टी०–अपीति । दैवं यज्ञादिकं मानुषमतिथिसत्कारादिकम् ॥ ४७ ॥

४७ ] ति० टी०–अपि दैवं कर्म होमदेवतार्चनादिकम् मानुषं कर्म सामभेदादिकम् । राज्ञः प्रेरितार्घ्यदातृत्वेन प्रथमतो राज्ञेऽनामयादि पृष्ट्वा ततो वसिष्ठेन समागम्यालिङ्गनादि कृत्वा कुशलमित्यस्य पप्रच्छेति शेषः । अनेन राजपुरोहितत्वकृतः पूर्वस्पर्धयैवदपमानो वसिष्ठस्य विश्वामित्रकृतः सूचितः । 'वसिष्ठश्च समागम्य प्रहसन्मुनिपुङ्गवः । यथार्हं पूजयित्वैनं पप्रच्छ कुशलं तदा ' इति क्वचित्पाठः तत्र पूर्वं मां स्पर्धमानोऽपि मद्राजसंनिधावागत इति हासः ॥ ४७ ॥

रा० टी०–वसिष्ठमिति । मुनिपुङ्गवो मुनिश्रेष्ठो विश्वामित्रः वसिष्ठं महाभागान् अति भाग्यवतः तान् तत्र प्राप्तान् ऋषीन् वामदेवप्रभृतींश्च यथान्यायं यथोचितं समागम्य समालिङ्ग्य चकारेण यथोचितं प्रणामादिकं च कृत्वा कुशलमुवाच कुशलप्रश्नं कृतवान् इत्यर्थः । हेति हर्षद्योतकम् ॥ ४७ ॥

गो० टी०–वसिष्ठं चेति । समागम्य समीपं गत्वा ऋषीन् वामदेवादीन् यथान्यायं यथाक्रमम् ॥ ४८ ॥

४८ ] ति० टी०–ऋषींन्वामदेवादीन्यथान्यायं संगत्य कुशलं चोवाच । अत्र वामदेवादिभिः स्वस्थानस्थैरेव समागम्य स्वकार्यसिद्धये तान्गृहीत्वैव ते स्वयं च राजसदनं विविशुरित्यन्वयः ॥ ४८ ॥

रा० टी०–त इति । यथार्हतो यथायोग्यं पूजिताः परस्परं सत्कृताः अत एव हृष्टमनसः प्रमुदितान्तःकरणास्ते सर्वे वसिष्ठविश्वामित्रप्रभृतयः तस्य राज्ञो निवेशनं सभां विविशुः तत्र निषेदुश्च ॥ ४८ ॥

गो० टी०–त इति । निवेशनं सभां पूजिताः विश्वामित्रेणेति शेषः । यथार्हतः यथान्यायं प्रथमार्थे तसिः ॥ ४९ ॥

१ तमिति गो. रा. पाठः । २ सामन्ता इति गो. रा. पाठः । ३ महाभागानिति गो. रा. पाठः

विविशुः पूजितास्तेन निषेदुश्च यथार्हतः । अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ ४९ ॥
उवाच परमोदारो हृष्टस्तमभिपूजयन् । यथामृतस्य संप्राप्तिर्यथा वर्षमनूदके ॥ ५० ॥
यथा सदृशदारेषु पुत्रजन्माप्रजस्य[1] वै । प्रनष्टस्य यथा लाभो यथा हर्षो महोदयः[2] ॥ ५१ ॥
तथैवागमनं मन्ये स्वागतं ते महामुने । कं[3] च ते परमं कामं करोमि किमु हर्षितः ॥ ५२ ॥
पात्रभूतोऽसि मे ब्रह्मन्दिष्ट्या प्राप्तोऽसि मानद[4] । अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५३ ॥
यस्माद्विप्रेन्द्रमद्राक्षं सुप्रभाता निशा मम । पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ॥ ५४ ॥
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया । तदद्भुतमभूद्विप्र पवित्रं परमं मम ॥ ५५ ॥

---

४९ ] ति० टी० पूजिता इत्यस्य राज्ञेति शेषः ॥ ४९ ॥

रा० टी०—सभाप्रवेशनानन्तरं राजकर्तृकसत्कृतिवचनं वर्णयन्नाह—अथेत्यादि आसर्गसमाप्ति । अथ सभास्थित्यनन्तरं हृष्टमना दृष्टान्यतिसत्कारादिना हर्षितानि सर्वेषां मनांसि येन परमोदारः दातृशिरोमणिः अत एव हृष्टः हर्षं प्राप्तः राजा महाराजो दशरथः तमागतं महामुनिं विश्वामित्रमभिपूजयन् उवाच ॥ ४९ ॥

गो० टी०—अथेति । हृष्टः पुलकितः “ हृषेर्लोमसु ” इतीड्भावः। परमोदारः परमदाता अभिपूजयन् स्तुवन् ॥ ५० ॥

५० ] ति० टी०—परमोदारः परमदाता हृष्टः पुलकितः। अनूदके इत्यार्षं दीर्घत्वम् ॥ ५० ॥

रा० टी०—तदुक्तिमाह—यथेति । अमृतस्य सुधायाः संप्राप्तिः यथा प्रशस्यते अनूदके दुर्योगादुदकहीने श्रावणादौ वर्षं वृष्टिं यथा सदृशदारेषु समानकुलशीलादिविशिष्टाङ्गनासु पुत्रजन्म यथा । अनूदके इत्यत्र दीर्घः “ अन्येषामपि ” इतिविहितः ॥ ५० ॥

गो० टी०—यथेत्यादि । श्लोकद्वयमेकान्वयम् । अमृतस्य सुधायाः अनूदके अनुदके “अन्येषामपि दृश्यत” इति दीर्घः अप्रजस्य अपुत्रस्य प्रनष्टस्य निध्यादेः महः पुत्रविवाहाद्युत्सवः ‘ महा उद्धव उत्सवः’ इत्यमरः । तस्योदये स्वागतमचिन्तितोपनतं ते आगमनं तथा मन्ये ॥ ५१ ॥ ५२ ॥

५१–५२ ] ति० टी०—सदृशदारेषु जातिवयोरूपगुणतुल्येषु । प्रनष्टस्य निध्यादेरिति शेषः । महः पुत्रजन्माद्युत्सवस्तस्मादुदयो यस्य स हर्षो यथा तथा त आगमनं मन्ये । अत्र स्वकार्यहर्षसादृश्यस्यागमन उक्त्या तवागमनजहर्षस्यानिर्वाच्यत्वं व्यज्यते स्वागतं त इति भिन्नं वाक्यम् च परं कं कामं किमु केन प्रकारेण करोमि कुर्यामित्यर्थः वर्तमानसामीप्ये लट् ॥ ५१ ॥ ५२ ॥

रा० टी०—प्रनष्टस्येति । प्रनष्टस्य तिरोहितस्य मण्यादेर्लाभो यथा महोदये पुत्रविवाहाद्युत्सवे हर्षो यथा ‘ मह उद्धव उत्सवः ’ इत्यमरः । तथा ते तवागमनं प्राप्तिमहं मन्ये अतः हे मुने स्वागतमतिशोभनमागमनमेतत् । एवो हेत्वर्थे ॥ ५१ ॥

रा० टी०—किमिति । ते तव परममावश्यकं किं किं कार्यमस्तीति शेषः । तत्तत् हर्षितः सन्नहं करोमि कर्तास्मि एव उपतद्धितर्कयामि । चशब्द एवार्थे। हे ब्रह्मन् पात्रभूतोऽसि सर्वप्रकारसेवायोग्यस्त्वमसि अतः मे दिष्ट्या भाग्येन धार्मिकस्त्वं प्राप्तोसि । कं च ते परमं कामम् इति पूर्वार्धे प्राप्तोऽसि मानद इत्युत्तरार्धे च क्वचित्पाठः अर्थः स्पष्ट एव ॥ ५२ ॥

गो० टी०—कं चेति । काममभीष्टं किमु केन प्रकारेण करोमि करवाणि पात्रभूतः दानयोग्यः दिष्ट्या शुभादृष्टवशेन दृष्ट्येत्यानन्दद्योतकमव्ययमित्यप्याहुः ॥ ५३ ॥

५३ ] ति० टी०—पात्रभूतः सर्वसेवायोग्यः । दिष्ट्या शुभादृष्टेन । सुजीवितम् अद्यैव तत्फललाभादिति भावः ॥ ५३ ॥

रा० टी०—अद्येति । अद्य भवत्कर्मकदर्शनसमये मे मम जन्म सफलं मे जीवितं जीवनं च सुजीवितं तत्र हेतुमाह यस्माद्विप्रेन्द्रं विप्रश्रेष्ठं भवन्तमद्राक्षम् अत एव मम निशा मत्संबन्धिनीयं व्यतीता रात्रिः सुप्रभाता सुष्ठु शुभकार्योत्पादिका पूर्वमङ्गलविशिष्टः प्रभातो यस्याः सा ॥ ५३ ॥

गो० टी०—अद्येत्यर्धमेकम् ॥ ५४ ॥

५४ ] ति० टी०—पूर्वमिति। राजर्षिशब्दसाधकेन तपसा पूर्वमतिशयितकान्तिमान् ॥ ५४ ॥

रा० टी०—पूर्वमिति । द्योतितप्रभस्त्वं पूर्वं राजर्षिशब्देन बोधितः अनु पश्चात् तपसा ब्रह्मर्षित्वं प्राप्तः अतः मया बहुधा बहुप्रकारेण त्वं पूज्योऽसि ॥ ५४ ॥

गो० टी०—पूर्वमिति । राजर्षिशब्दनोपलक्षितः राजर्षिशब्दवाच्य इत्यर्थः अनु पश्चात् तपसा द्योतितप्रभः सन् ब्रह्मर्षित्वं प्राप्तोऽसि अतः बहुधा राजर्षित्वेन ब्रह्मर्षित्वेन च पूज्योऽसि ॥ ५५ ॥

५५ ] ति० टी०—अनु पश्चाद्ब्रह्मर्षित्वसाधकेन तपसा ब्रह्मर्षित्वं प्राप्तोऽतो मया बहुधा बहुप्रकारेण राजर्षिब्रह्मर्षिप्रकारेण पूज्योऽसीत्यन्वयः । तदिति । परमं पवित्रमिदं त्वदागमनं यन्मम पुरोऽभूत्तदद्भुतमत्याश्चर्यमित्यर्थः ॥ ५५ ॥

रा० टी०—तदिति । हे विप्र हे प्रभो तत्तस्माद्धेतोः अद्भुतमिदं भवद्दर्शनं मम परमं पवित्रमतिपवित्रतोत्पादकं तत्र

---

१ प्रशस्यते इति रा. पाठः । २ महोदये इति गो. रा. पाठः । ३ किंचेति रा. पाठः । ४ धार्मिक इति गो. रा. पाठः ।

शुभक्षेत्रगतश्चाहं तव संदर्शनात्प्रभो । ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ॥ ५६ ॥
इच्छाम्यनुगृहीतोऽहं त्वदर्थं परिवृद्धये । कार्यस्य न विमर्शं च गन्तुमर्हसि सुव्रत ॥ ५७ ॥
कर्ता चाहमशेषेण दैवतं हि भवान्मम । मम चायमनुप्राप्तो महानभ्युदयो द्विज ॥
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो द्विजै ॥ ॥ ५८ ॥

इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिः परमं जगाम हर्षम् ॥ ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

---

हेतुः यतः तव संदर्शनात् अहं शुभक्षेत्रगतः शुभानि यानि क्षेत्राणि तानि सर्वाणि गतः प्राप्तः सर्वशुभक्षेत्रयात्राफलं प्राप्तोऽहमित्यर्थः चो हेतौ ॥ ५६ ॥

**गो० टी०—तदिति** । हे ब्रह्मन् तदिदमागमनं मम परमं पवित्रं परममद्भुतं च हे प्रभो तव संदर्शनादहं शुभक्षेत्रगतः पुण्यक्षेत्रगतः त्वद्दर्शनादिदं मत्क्षेत्रं तीर्थभूतं जातमित्यर्थः ॥५६॥

५६ ] **ति० टी०—**हे प्रभो तव संदर्शनाच्छुभक्षेत्रं सकलपापाभावविशिष्टसकलशुभसाधनपुण्यवद्देहं गतः प्राप्तवान् । तेन सफलजन्मता निष्पापता च ध्वनिता । 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते' इति भगवद्गीतोक्तेः । **ब्रूहीति** । तुभ्यमिति षष्ठ्यर्थे चतुर्थी । ते यत्कार्यं प्रति यत्कार्यार्थमागमनं तन्मया प्रार्थितः सन्ब्रूहि कथय ॥ ५६ ॥

**रा० टी०—ब्रूहीति** । यद्यस्मात् मया तुभ्यं प्रार्थितं तवावश्यकं किं किं कार्यमस्ति तत्तदहं कर्तास्मीत्येवं प्रार्थना कृता तस्मादागमनं प्रति भवदागमने यत्कार्यं प्रयोजनं तत्त्वं ब्रूहि त्वदर्थपरिवृद्धये भवत्प्रयोजनवृद्धिं कर्तुमनुगृहीतः त्वदनुग्रहपात्रीभूतोहमिच्छामि " क्रियार्थोपपदस्य " इति चतुर्थी ॥ ५६ ॥

**गो० टी०—ब्रूहीति** । तुभ्यमिति तृतीयार्थे चतुर्थी । आगमनं प्रति त्वया यत्कार्यं यत्फलं प्रार्थितं तद्ब्रूहि अहं त्वयाऽनुगृहीतः सन् त्वदर्थपरिवृद्धये इच्छामि त्वदर्थपरिवृद्धिं कर्तुमिच्छामीत्यर्थः । " रुच्यर्थानां प्रीयमाणः" इति चतुर्थी ॥५७॥

५७ ] **ति० टी०—**स्वाभिमतकार्ययोगेनानुगृहीतोऽहं त्वत्प्रयोजनपरिवृद्धिं निष्पत्तिं कर्तुमिच्छामि । विमर्शं करिष्यति न वेति संदेहम् ॥ ५७ ॥

**रा० टी०—कार्यस्येति** । हे सुव्रत कार्यस्य विमर्शं सेत्स्यति नवेति संशयं गन्तुं प्राप्तुं त्वं नैवार्हसि तत्र हेतुः यतः अहमशेषेण कर्ता भवत्कार्यं निःशेषतः साधयितास्मीत्यर्थः तत्र हेतुः यतो भवान् मम दैवतं इष्टदेवः । हिचौ हेत्वर्थौ ॥ ५७ ॥

**गो० टी०—कार्यस्येति** । कार्यस्य विमर्शं कार्यविषयं संशयम् ॥ ५८ ॥

५८ ] **ति० टी०—**तत्र हेतुमाह—**दैवतं हीति** । इतश्च न संदेह इत्याह—**मम चेति** । तवागमनजः कृत्स्नो धर्मो मम महानभ्युदयः प्राप्तः । हर्षातिशयाद्द्विजेति पुनरुक्तिर्न दोषाय॥५८॥

**रा० टी०—ममेति** । हे द्विज तवागमनजः त्वदागमनजन्यः मम चकारेणास्मदीयानां महानेवाभ्युदयः अभ्युदये हेतुः अनुत्तमः सर्वोत्तम एव कृत्स्नः संपूर्णोऽयं धर्मः पुण्यमनुप्राप्तः चकारावेवार्थकौ ॥ ५८ ॥

**गो० टी०—ममेति** । अयं त्वदागमनरूपः ॥ ५९ ॥

५९ ] **ति० टी०—इतीति** । यतो हृदयसुखमत एव श्रुतिसुखम् आत्मवता स्वाधीनेन विनीतं विनययुक्तम् प्रथितैर्गुणैस्त्रिशङ्कुस्वर्गारोहणादिभिर्यशो यस्य गुणैः शमदमादिभिः परमऋषिः "ऋत्यकः" इति प्रकृतिभावः ॥ ५९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये
आदिकाव्ये बालकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

**रा० टी०—इतीति** । आत्मवता परमबुद्धिमता उक्तं हृदयसुखं ईप्सितसिद्धिसूचकत्वादन्तःकरणसुखकारकम् अत एव श्रुतिसुखं विनीतम् उच्चारयितुर्नम्रताबोधकमितीदं वाक्यं निशम्य श्रुत्वा धर्मैर्विशिष्टः अत एव प्रथितगुणयशाः प्रथितं विस्तृतं गुणसंबन्धि यशो यस्य परमऋषिः ऋषिश्रेष्ठो विश्वामित्रः परमतुलं हर्षं जगाम प्राप ॥ ५९ ॥

इति श्रीमद्रामायणबालकाण्डे व्याख्याने रामायणशिरोमणौ अष्टादशः सर्गः ॥ १८ ॥

**गो० टी०—इतीति** । हृदयसुखमर्थसौष्ठवाद्धृदयसुखकरं श्रुतिसुखं शब्दमार्दवाच्छ्रुतिसुखम् आत्मवता बुद्धिमता विनीतं विनयवद्यथा भवति तथा उक्तं वाक्यं निशम्य प्रथितगुणयशाः पृथुतरगुणविषयकीर्तिः न केवलं कीर्तिमात्रं गुणैर्विशिष्टः परमऋषिरित्यत्र " ऋत्यकः " इति प्रकृतिभावः पुष्पिताग्रा वृत्तम् ॥ ६० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

१ काममिति रा. पाठः । २ कौशिकेति गो. पाठः । ३ ममेति गो. रा. पाठः ।

## एकोनविंशः सर्गः ।

विश्वामित्रदशरथयोः संवादः, विश्वामित्रकृतविघ्नकरमारीचसुबाह्वोर्वर्णनम्, तन्निवारणाय रामं देहीति याचनम्, ऋषिकृतरामप्रतापवर्णनं च।

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् । हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सदृशं राजशार्दूल तवैव[1] भुवि नान्यतः । महावंशे[2]प्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥
यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् । कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः[3] ॥ ३ ॥
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ । तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥
व्रते तु[4] बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ । मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ ५ ॥
तौ मांसरुधिरौघेण वेदिं[6] तामभ्यवर्षताम् । अवधूते तथाभूते तस्मिन्नियमनिश्चये ॥ ६ ॥

१ ] ति० टी०–तदिति । अद्भुतविस्तरं दैवतं हि भवान्ममेत्याद्युक्तिरूपमाश्चर्यप्रपञ्चम् ॥ १ ॥

रा० टी०–राजा वचनश्रवणानन्तरं विश्वामित्रोक्तिं वर्णयन्नाह–तदित्यादिभिः । अद्भुतत्वसमानाधिकरणविस्तरत्वविशिष्टमित्यर्थः राजसिंहस्य महाराजाधिराजदशरथस्य तत्प्रसिद्धं वाक्यं श्रुत्वा हृष्टं रोम यस्य हृष्टरोमा महातेजाः परमतेजस्वी विश्वामित्रोऽभ्यभाषत ॥ १ ॥

गो० टी०–अथ विश्वामित्राभ्यर्थनमेकोनविंशे–तच्छ्रुत्वेत्यादि । अद्भुतस्य विस्तरो यस्मिन् तदद्भुतविस्तरं हृष्टरोमा पुलकितरोमा ॥ १ ॥

२ ] ति० टी०–एतत्तवैव सदृशं नान्यतो नान्यस्य तत्र हेतुगर्भं विशेषणम्–महावंशेत्यादि वसिष्ठव्यपदेशिनो वसिष्ठनियोगवर्तिनः ॥ २ ॥

रा० टी०–तद्भाषणाकारमाह–सदृशमिति । हे राजशार्दूल तवैतद्वचः भुवि पृथिव्यां महाकुलप्रसूतस्य प्रशस्तकुलप्रादुर्भूतस्य वशिष्ठव्यपदेशिनः वशिष्ठकृतोपदेशविशिष्टस्य तव सदृशं त्वदनुरूपं न अन्यथा अननुरूपं न ॥ २ ॥

गो० टी०–सदृशमिति । नान्यथा न मिथ्योच्यत इत्यर्थः वसिष्ठेन व्यपदेशः कीर्तिः उपदेशो वा तृतीयेति योगविभागात्समासः सोऽस्यास्तीति तथा ॥ २ ॥

३ ] ति० टी०–यत्त्विति । तस्य तत्प्रतिपाद्यस्य कार्यस्य निश्चयं कर्तव्यत्वनिश्चयं सर्वथा करिष्यामीत्यङ्गीकारं कुरुष्व कृत्वा च सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥ ३ ॥

रा० टी०–यदिति । हे राजशार्दूल राजश्रेष्ठ वाक्यं वक्तव्यं वाचा ज्ञाप्यं कार्यं यन्मे हृद्गतं तस्य कार्यस्य निश्चयमवश्यमहं करिष्यामीत्यध्यवसायं कुरुष्व तस्मात्सत्यप्रतिश्रवः सत्यप्रतिज्ञस्त्वं भव ॥ ३ ॥

गो० टी०–यत्त्विति । मे हृद्गतं यत्कार्यं वाक्यं वक्तव्यं तस्य निश्चयं करणाध्यवसायं कुरुष्व सत्यप्रतिश्रवाः सत्यप्रतिज्ञः ॥ ३ ॥

४ ] ति० टी०–अहमिति । सिद्ध्यर्थं यागार्थं नियमं दीक्षामातिष्ठ आस्थितोऽस्मि तस्य यज्ञस्य ॥ ४ ॥

रा० टी०–कार्यं बोधयन्नाह–अहमिति । हे पुरुषर्षभ सिद्ध्यर्थं स्वाभीष्टसिद्धये अहं नियमं यागदीक्षामातिष्ठे तस्य नियमस्य विघ्नकरौ कामरूपिणौ द्वौ राक्षसौ स्तः तुशब्दस्तदनुयायिराक्षससंग्रहार्थः विध्यर्थमिति भट्टपाठः ॥ ४ ॥

गो० टी०–हृद्गतं कार्यमाह–अहमित्यादिना । सिद्ध्यर्थं फलार्थं नियमं यज्ञदीक्षामातिष्ठे आस्थितोऽस्मि तस्येति । तस्य नियमस्य विघ्नकरौ कामरूपिणौ द्वौ राक्षसौ स्त इति शेषः ॥ ४ ॥

५ ] ति० टी०–व्रते त्विति । बहुशश्चीर्णे समाप्तिकल्पे समाप्त्यां समाप्तिसमये ॥ ५ ॥

रा० टी०–विघ्नकरणप्रकारमाह–व्रते इति सार्धश्लोकद्वयेन । व्रते यागनिश्चये बहुशश्चीर्णे प्रवृत्ते सति समाप्त्यां तु यागसमाप्तिकाले वा वीर्यवन्तौ अतिशयपराक्रमविशिष्टौ सुशिक्षितौ अतिशिक्षाविशिष्टौ तौ तस्करप्रायौ इमौ प्रसिद्धौ मारीचः सुबाहुश्च राक्षसौ तां यागसंबन्धिनीं वेदीं मांसरुधिरौघेण मांसरुधिरसमूहेन अभ्यवर्षताम् चकारान्तरं मूत्रादिसंग्राहकम् ॥ ५ ॥

गो० टी०–व्रत इति । व्रते दीक्षारूपे चीर्णे अनुष्ठिते विघ्नकरणप्रकारमाह–मारीच इति । समांसरुधिरौघेण मांसयुक्तरक्तप्रवाहेण तां वेदिं यज्ञवेदिमभ्यवर्षतामभ्यषिञ्चताम् ॥५॥

६ ] ति० टी०–नियमनिश्चये व्रतसंकल्पे अवधूते नाशिते तस्मिंस्तत्संकल्पविषये यज्ञे च तथाभूते नाशिते सति ॥ ६ ॥

रा० टी०–अवधूते इति । तस्मिन्यागे अवधूते राक्षसाभ्यां विनाशिते सति अत एव नियमनिश्चये व्रतसंकल्पे तथाभूते विनाशिते सति कृतः श्रमो येन श्रममात्रफलक इत्यर्थः अत एव निरुत्साहः उत्साहरहितोऽहं तस्मात् देशादपाक्रमे इहागतोऽस्मि ॥ ६ ॥

गो० टी०–अवधूत इति । तथाभूते बहुशश्चीर्णे नियमनिश्चये व्रतसंकल्पे अवधूते विघ्निते अपाक्रमे आगतोऽस्मि ॥६॥

१ तवैतदिति गो. रा. पाठः । २ कुलेति गो. रा.पाठः । ३ श्रवा इति गो. पाठः । ४ मे इति गो.पाठः । ५ स मांसेति गो. पाठः । ६ वेदीमिति रा. पाठः ।

कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे । न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ॥ ७ ॥
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते । स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ॥ ८ ॥
काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसि । शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ ९ ॥
राक्षसा ये विकर्तारस्तेषामपि विनाशने । श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ॥ १० ॥

७ ] ति० टी०—कृतश्रमः कृततथाप्रयासः अत एव निरुत्साहः तस्माद्देशादपाक्रमे निर्गतोऽस्मि । ननु भवद्भिः शापेनैव कुतस्तौ न नाशितौ तत्राह—न चेति । क्रोधमुत्स्रष्टुं शप्तुम् ॥ ७ ॥

रा० टी०—ननु समर्थैर्भवद्भिः शापेन कुतो न प्रध्वंसितावित्यत आह—न चेति । हे पार्थिव क्रोधं क्रोधहेतुकं शापमुत्स्रष्टुं दातुं बुद्धिर्न भवति । तत्र हेतुः सा प्रसिद्धा चर्या तपश्चरणं तथाभूता शापदानानर्हा अतः तत्र मारीचसुबाह्वोः शापो न मुच्यते अमुच्यत "वर्तमानसामीप्ये" इति सूत्रविहितोऽत्र लट् । किंच क्रोधमुत्स्रष्टुं कर्तुं बुद्धिर्न भवति तत्र हेतुः सा चर्या तथाभूता क्रोधानर्हा अत एव शापस्तत्र न मुच्यते शापहेतुभूतस्य क्रोधस्याभावात्ताभ्यां शापो न दत्तः अन्यत्समानम् । हिर्हेतौ ॥ ७ ॥

गो० टी०—तर्हि कुतो न तौ शप्तौ तत्राह—न चेति । तत्र हेतुमाह—तथेति । सा चर्या यज्ञाचारः तथाभूता हि शापानर्हकाला हि अतः तत्र मारीचसुबाह्वोः शापो न मुच्यते ॥ ७ ॥

८ ] ति० टी०—तत्र हेतुमाह—तथाभूतेति । शापादिप्रद्रष्ट्यनर्हेत्यर्थः । अतः स्वपुत्रमित्यादि ॥ ८ ॥

रा० टी०—ननु कथं तयोः शान्तिरित्यत आह—स्वपुत्रमिति । हे राजशार्दूल सत्यपराक्रमं कापट्यसंसर्गरहितपराक्रमविशिष्टं काकपक्षधरं बालानां कपोलसमीपवर्तिशिखा काकपक्षः तं धरति स तं शूरं शौर्यविशिष्टं ज्येष्ठं स्वपुत्रं रामं मे मह्यं दातुमर्हसि त्वं योग्योऽसि एतेनानेनैव तच्छान्तिर्भविष्यतीति ध्वनितम् ॥ ८ ॥

गो० टी०—तत्र मया किं कर्तव्यं तत्राह—स्वपुत्रमिति । काकपक्षः बालस्य शिखा काकपक्षधरमपीत्यर्थः ॥ ८ ॥

९ ] ति० टी०—बालानां कपोलसमीपशिखा काकपक्षः । नन्वनेन बालेन किं करिष्यसीत्यत्राह—शक्त इत्यादि । मया पितृस्थानीयेनेति शेषः । दिव्यं तेजो वैष्णवं तेन युक्त इति शेषः ॥ ९ ॥

रा० टी०—नन्वयं बालत्वात् तच्छान्तिं कथं विधास्यतीत्यत आह—शक्त इति । दिव्येन प्राकृतविलक्षणेन स्वेन स्वकीयेन तेजसा विशिष्टः मयापि गुप्तः तत्तेजःस्मारकत्वेन रक्षितः एषः रामः ये विकर्तारो विघ्नकर्तारो राक्षसाः तेषां विनाशने शक्तः समर्थ एव । एतेन यदि सर्वराक्षसविनाशने समर्थस्तर्हि एतयोर्विनाशने समर्थ इति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥ ९ ॥

गो० टी०—बालोऽयं कथं तौ नाशयिष्यति तत्राह—शक्त इति । मया कर्त्रा तेजसा करणेन विकर्तारः विघ्नकर्तारः तेषां न केवलं तयोरिति भावः ॥ ९ ॥

१० ] ति० टी०—विकर्तारो विघ्नकर्तारस्तेषां विनाशनेऽपि शक्तः किं पुनर्मद्यज्ञरक्षणे मारीचसुबाहुसेनाभिप्रायेण तेषामिति बहुवचनम् राज्ञो दानप्ररोचनायाह—श्रेयश्चेति । बहुरूपमस्त्रदानविवाहादिरूपम् किंच मुखपाण्डुत्वादिनिवर्तकं बहुरूपं विपुलतरं परमार्थरूपं च श्रेय आत्मस्वरूपं प्रदास्यामि वसिष्ठद्वारा दापयिष्यामि बोधयिष्यामीत्यर्थः रामस्य शुद्धमुक्तस्वभावत्वेऽपि लोकानां तत्त्वबोधनमेव रामबोधनस्य फलम् । सनत्कुमारशापवशात्तिरोहितस्य ज्ञानस्य प्रादुर्भूतिश्च फलमिति बोध्यम् । तदुक्तमादित्यपुराणे—'विज्ञानमेतदखिलं विश्वाकारमबुद्धयः । पश्यन्ति ज्ञानिनस्त्वेकमात्मरूपमिदं जगत् ॥ दुर्विज्ञेयं वसिष्ठेन रामाय कथितं पुरा ।' इति स्कन्दं प्रति शिवोक्तेः । योगवासिष्ठे स्फुटतरमेतत् । मुख्यश्रेयश्च विष्णुपुराणे द्वितीयांशे-'तन्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज । तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ॥' इति राजप्रश्ने पुत्रस्वर्गादीनामपेक्षिकश्रेयस्त्वेऽपि न परमार्थरूपं श्रेयस्त्वमित्युक्त्वा 'एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥ परं ज्ञानमयो सद्भिर्नामजात्यादिभिर्विभुः । न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते ॥ तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थोऽसौ' इति जडभरतोक्त्यात्मस्वरूपमेव परमार्थश्रेयस्त्वेन दर्शितम् । तत्रैव 'आत्मा ध्येयः सदा भूप योगयुक्तैस्तथापरम् । श्रेयस्तस्यैव संयोगः श्रेयो यः परमात्मना ॥' इत्युक्तं प्रघट्टकान्तरे तथा जीवपरमात्मनोर्यः संयोग उपाधिनिर्गमरूपः स परं श्रेय इति तदर्थः । 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति प्रघट्टकान्तरोक्तेः 'परमात्मात्मनोर्योगः परमार्थ इतीर्यते' इति तेनैवोक्तत्वाच्चेत्यलम् ॥ १० ॥

रा० टी०—तत्रापि यशो भविष्यतीति बोधयन्नाह—श्रेय इति । अस्मै रामाय बहुरूपमनेकविधं श्रेयः कल्याणसाधनं प्रदास्यामि येन कल्याणसाधनेन त्रयाणां लोकानां ख्यातिं ग-

१ शूरमिति गो. रा. पाठः ।

त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति । न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ॥ ११ ॥
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् । वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ॥ १२ ॥
रामस्य राजशार्दूल न पर्याप्तौ महात्मनः । न च पुत्रगतं स्नेहं कर्तुमर्हसि पार्थिव ॥ १३ ॥
अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ । अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ॥ १४ ॥

मिप्यत्येव अत्र अस्मिन्विषये संशयः नैव कार्यः एतेनास्य विवाहं कारयिष्यामीति सूचितम् चार्पा एवार्थौ ॥ १० ॥

गो० टी०–श्रेयश्चेति । बहुरूपं बहुविधम् कीदृक्श्रेयस्तत्राह–त्रयाणामिति । लोकानां मध्ये ख्यातिं विश्वामित्राध्वरत्राता अहल्याशापमोक्षदः हरधनुर्भञ्जकः इत्येवंरूपां कीर्तिम् ॥ १० ॥

११ ] ति० टी०–त्रयाणाम् त्रिष्वित्यर्थः येन मदत्तास्त्रादिना आसाद्य युद्ध इति शेषः ॥ ११ ॥

रा० टी०–न चेति । तौ मारीचसुबाहू राममासाद्य प्राप्य स्थातुं कथंचनापि न शक्तौ भविष्यत इति शेषः नन्वितो योद्धारो नीयन्तां किं रामेणेत्यत आह–राघवात् रामात् अन्यो भिन्नः पुमान् तौ मारीचसुबाहू हन्तुं नैवोत्सहते च शब्दोऽप्यर्थे अपर एवार्थे ॥ ११ ॥

गो० टी०–कथं बालस्तन्निरसने प्रभविष्यति तत्राह–न चेति । अहमेव तदर्थं यास्यामीत्यत्राह–न च ताविति॥११॥

१२ ] ति० टी०–न चेति । तत्र हेतुमाह–वीर्येत्यादि । रामस्तर्हि कथं हन्यादित्यत्राह–कालेति ॥ १२ ॥

रा० टी०–ननु तयोरतिबलवत्त्वात् कथं बालेन पराभूतिरित्यत आह–वीर्येति । हे राजशार्दूल वीर्योत्सिक्तौ अतिवीर्यहेतुकगर्वविशिष्टौ अत एव पापौ पापाचारौ अत एव कालपाशवशं गतौ तौ मारीचसुबाहू रामस्य रणाजिरे रामरणभूमौ पर्याप्तौ योद्धुं परिपूर्णौ नैव भविष्यतः हिशब्द एवार्थे ॥ १२ ॥

गो० टी०–तथापि महावीर्यौ तौ कथं जेतुं शक्यावित्याशङ्क्य पापवशेनासन्नकालौ न रामस्य पर्याप्तावित्याह–वीर्येति । उत्सिक्तौ गर्वितौ कालः यमः स एव पाशः तद्वशं गतौ ॥ १२ ॥

१३ ] ति० टी०–रामस्य रामवीर्यस्य । पुत्रगतं पुत्रविषयं राम इति शेषः । नायं तव पुत्रः किं तर्हि दिव्यमेतत्तेज इति तात्पर्यम् ॥ १३ ॥

रा० टी०–न चेति । हे पार्थिव पुत्रकृतं पुत्रविषयकं स्नेहं तद्दानप्रतिबन्धकीभूतप्रेमाणं कर्तुं नैवार्हसि अनेन नैव तयोः शान्तिर्भविष्यतीत्येतद्गमनं निरर्थकमित्यपि संशयो न कार्य इति बोधयन्नाह–तौ राक्षसौ अनेन हतौ निहतप्रायौ इति ते तवाग्रे अहं प्रतिजानामि इति विद्धि जानीहि इति शब्दावध्याहृतौ ॥ १३ ॥

गो० टी०–न चेति । पुत्रकृतम् पुत्रत्वकृतं हताविति भूतप्रत्ययेन वधस्य सुकरत्वं सूचितम् ॥ १३ ॥

१४ ] ति० टी०–तत्र हेतुमाह–अहमिति । हताविति भूतप्रत्ययेन वधस्य सुकरत्वं ध्वन्यते । रामं निरतिशयवैभवविष्णुतेजोंऽशावताररूपम् ॥ १४ ॥

रा० टी०–नन्वनेन तौ राक्षसौ निहतप्रायौ इति भवद्भिः कथं निश्चितमित्यत आह–अहमिति । महात्मानं महः सर्वपूजनीयः आत्मा स्वरूपं यस्य किंच महानां सर्वपूज्यानामात्मानं नियन्तारम् किंच महान् साक्षात्स्वप्रकाशब्रह्मद्वारा ब्रह्मादीनां च सर्वत्र परिपूर्णः आत्मा स्वरूपं यस्य तं सत्यपराक्रमं सत्यः कापट्यरहितः पराक्रमो यस्य स तं रामं सहृदयाभिरामदातारमहं वेद्मि स्वकार्यवशादेष एवं वदतीति भ्रमं निवारयन्नाह–महातेजाः परमतेजस्वी वशिष्ठश्च वेत्ति एवं तपसि परमविचारे इह स्थिताः निरताः येऽन्ये महात्मानः वामदेवप्रभृतयः तेऽपि विदन्ति हिशब्दोऽप्यर्थे एतेन यो ब्रह्मादिनियन्ता तस्य ब्रह्मादिसृष्टिजनितराक्षसादिकर्मकं हननं न किंचित् श्रमावहमिति स्वनिश्चये हेतुर्ध्वनितः नच " यस्यामतं तस्य मतं मतं यस्य न वेद सः " इत्यादिश्रुत्या परमात्मा मम विज्ञात इति वदतामज्ञानवत्ता प्रतिपादनात् परमप्रमाणभूतेन ज्ञानिना विश्वामित्रेण राममहं वेद्मीति कथमुक्तमिति वाच्यम् तच्छ्रुतीनां परमात्मैश्वर्यादिसाकल्यज्ञानविषयत्वनिषेधतात्पर्यकत्वात् अत एव " यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । वेदाहमेतं पुरुषं महान्तम् " इत्यादिश्रुतयः सानुकूलाः इति दिक् ॥ १४ ॥

गो० टी०–रामस्य परब्रह्मत्वं सूचयन्नाह–अहमिति । अहं बहुगुरूपासनेन लब्धज्ञानः यद्वा योगबलसाक्षात्कृतपरावरतत्त्वयाथात्म्यः भवाँस्तु केवलकर्मठः अहं जटावल्कलधारी त्वं तु क्रोधभराक्रान्तः अहं सात्त्विकप्रकृतिः त्वं तु राजसः अहं ' गर्भभूतास्तपोधनाः ' इत्युक्तरीत्या रामस्य गर्भभूतः त्वं तु रामे गर्भत्वाभिमानी योगक्रमज्ञानवानहं त्वं तु भोगक्रमज्ञः अहं मोक्षकामेष्टिकृत् त्वं तु पुत्रकामेष्टिकृत् अहं धर्ममोक्षपरः त्वं तु अर्थकामपरः एतत्सर्वं प्रसिद्धपरामर्शिनाहमित्यनेन सर्वनामशब्देनोच्यते ननु ' सो अङ्ग वेद यदि वा न किलेति वेदः संदेग्ध्यनर्घविदमात्मनि रङ्गनाथम् ' ' विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरम् ' इत्युक्तरीत्या अपरिच्छिन्नं वस्तु कथं त्वया ज्ञातमित्यत्राह–महात्मानमपरिच्छिन्नमहिमतया वेद्मीत्यर्थः तथा च श्रुतिः " वेदाहमेतं पुरुषं महान्तम् " इति श्रुतौ एतमिति सौलभ्यमुच्यते पुरुषमिति पराक्रमः तदुभयमप्याह–रामं सत्यपराक्रममिति परत्वसौलभ्ये हि राजच्छत्रचामरवदसाधा-

१ पर्याप्तौ न रणाजिरे इति रा. पाठः ।

वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः । यदि ते धर्मलाभं तु यशश्च परमं भुवि ॥ १५ ॥
स्थिरमिच्छसि राजेन्द्र रामं मे दातुमर्हसि । यद्यभ्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ॥ १६ ॥
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय । अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ॥ १७ ॥
दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् । नात्येति कालो यज्ञस्य यथायं मम राघव ॥ १८ ॥

रणे । यद्वा 'तेजसां हि न वयः समीक्ष्यते' इति बाल्येऽपि निरवधिकवैभवम् । यद्वा महात्मानं सत्यस्य सत्यमितिवदात्मनो जीवस्याप्यात्मानम् "य आत्मनि तिष्ठन्" इत्यादिश्रुतेः । यद्वा आत्मा देहः 'आत्मा जीवे धृतौ देहे' इत्यमरः । अप्राकृतदिव्यमङ्गलविग्रहमित्यर्थः 'न तस्य प्राकृता मूर्तिः' इतिस्मृतेः । यद्वा महात्मानं महास्वभावम् 'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इति वक्ष्यमाणत्वात् । यद्वा रामं महात्मानमवतारकृतमहास्वभावयुक्तम् "स उ श्रेयान् भवति जायमानः" इति श्रुतेः । सत्यपराक्रमं सदैकरूपपराक्रमम् 'नाविजित्य निवर्तते' इति वक्ष्यते यद्वा सत्यपराक्रमं परमार्थपराक्रमं यद्वा सत्यात्परानाक्रमतीति तथा गच्छानुजानामीति बहुवारं प्रकृतिसंबन्धकृतप्रातिकूल्यनिवर्तने यत्नं कृत्वा तथाप्यननुकूलत्वे तान् हन्तीत्यर्थः । यद्वा अयत्नकालेऽपि शत्रुभयंकरः सुखसुप्तः परंतपः इति वक्ष्यति । संस्थानविशेषौज्वल्यदर्शनेन शत्रुहृदयविदारक इति भावः । नाहं कार्यवशेन वदामीत्याह—वसिष्ठोऽपीति । आप्ततमो हि भवतः कुलाचार्यो वसिष्ठः अपिशब्दो विरोधे अस्मद्विरोध्यपीत्यर्थः । यद्वा समुच्चये महातेजाः सरस्वतीवल्लभपुत्रः योगसिद्धज्ञानः यद्वा यद्वाक्येनाहं ब्रह्मऋषिरभवं सोऽपीत्यर्थः । यद्वा "सत्यं वद धर्मं चर" इति *तव उपदिश्य स्वयमनुष्ठाता । ननु 'यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयात्' इति तव मम च विवादे अस्य त्वयि पक्षपातः स्यादित्यत्राह—ये चेति । राजद्वारसंबन्धरहिततया पक्षपातशून्याः "तस्य धीराः परिजानन्ति योनिम्" इति अवताररहस्यवेदिनः ये चेमे पुलस्त्योऽगस्त्य इति प्रसिद्धाचार्यपदनिर्वाहकाः यद्वा 'गर्भस्थऋषिर्वामदेवः प्रतिपेदे', 'सप्तकल्पस्थितो मुनिः' इत्यादिनोत्तरोत्तरं ब्रह्मविदग्रेसरा वामदेवमार्कण्डेयादयः तिष्ठन्त्येते तव प्रियकराः । केवलपरमैकान्तिनो विजानन्तीत्याह—तपसि स्थिताः कायिकव्यापारादीन् विना सदा तपःस्थिताः तानेकैकशो रहसि पृष्ट्वा तैरनुमतं चेत् रामं मे देहीति भावः । तपसि स्थिताः कायक्लेशसहाः यद्वा ज्ञानयोगनिष्ठाः तप आलोचने तस्मात् 'न्यासमेषां तपसामतिरिक्तमाहुः' इत्युक्तन्यासनिष्ठा वा ॥ १४ ॥

१५ ] ति० टी०—स्वज्ञाने संवादमाह—वसिष्ठोऽपीत्यादि । तेऽपि एवं विदुरिति शेषः त इति त्वमित्यर्थे धर्मलाभं परमं यशश्च यदि स्थिरमिच्छसीत्यन्वयः तेन रामदानं तवापि फलदमित्याशयः ॥ १९ ॥

रा० टी०—इदानीं रामदाने किंचिच्चेष्टादिना राज्ञो वैमनस्यमालक्ष्याह—यदीति । हे राजेन्द्र महाराजाधिराज ते तव धर्मलाभं अपूर्वधर्मप्राप्तिं स्थितं स्थिरं परममत्युत्कृष्टं भुवि यशश्च यदीच्छसि तर्हि मे मह्यं रामं दातुमेव अर्हसि त्वं योग्योऽसि एतेन यदि रामं न दास्यसि तर्हि ते यशःप्रभृतीनां वृद्धिर्न भविष्यत्यतोऽवश्यं दातव्यो राम इति बोधितम् एकश्चशब्द एवार्थे ॥ १९ ॥

गो० टी०—यदीति । धर्मलाभं धर्मवृद्धिं स्थितं स्थिरम् १९

१६ ] ति० टी०—मे मह्यम् । किंच मन्त्रिणां संमतेऽपि दातुमर्हसीत्याह—यदीत्यादि । अभ्यनुज्ञां रामदानविषयकानुमतिम् ॥ १६ ॥

रा० टी०—यदीति । हे काकुत्स्थ दशरथ वसिष्ठप्रमुखाः सर्वे तव मन्त्रिणः यदि अभ्यनुज्ञामनुमतिं ददते ततस्तर्हि मे मदर्थं रामं विसर्जय प्रेषय ॥ १६ ॥

गो० टी०—यदि हीति । विसर्जय प्रेषय ॥ १६ ॥

१७ ] ति० टी०—ततस्तदा । अभिप्रेतं ममेष्टम् तव चासंसक्तमतीतबाल्यत्वान्मातापितृसक्तिरहितम् ईश्वरत्वात्काप्यनासक्तमिति व्यङ्ग्यम् ॥ १७ ॥

रा० टी०—अभिप्रेतमिति । यज्ञस्य दशरात्रमेवावशिष्टमिति शेषः । अतः अभिप्रेतमस्मदिच्छाविषयीभूतमसंसक्तं प्राप्तपौगण्डावस्थाकत्वेन भ्रात्रादिविषयकात्यन्तासक्तियोग्यतारहितम् किंच सर्वविलक्षणत्वेन सर्वत्रामिलितं राजीवलोचनमात्मजं पुत्रं रामं दातुमर्हसि हिरेवार्थे ॥ १७ ॥

गो० टी०—अभिप्रेतमिति । अभिप्रेतमभीष्टमात्मजं यज्ञस्य यज्ञाय दशरात्रं देहि असंसक्तमविलम्बितमिति क्रियाविशेषणम् ॥ १७ ॥

१८ ] ति० टी०—नापि नातिचिरविप्रयोगस्ते पुत्रेणेत्याह—दशेति । यज्ञसंबन्धि दशरात्रात्मकः काल एव राममपेक्षत इति शेषः । हे राघव ममायं यज्ञस्य कालो यथा यथोक्तं कालं नात्येति नातिक्रामति ततोऽधिको विलम्बो न भवतीत्यर्थः ॥ १८ ॥

रा० टी०—नेति । हे राघव रघुकुलोद्भव दशरथ यथा येन दानप्रकारेण अयं मम यज्ञस्य कालः नात्येति नातिक्रामति तथा तेन प्रकारेण कुरुष्व शीघ्रं रामं देहीत्यर्थः ततस्ते तव भद्रं कल्याणमतोऽतिशोके मनो मा कृथाः राघव इति संबोधनेन रघुकुलोद्भवत्वेनापि दानाद्विरामस्तवानुचित इति सूचितम् ॥ १८ ॥

१ चेति गो० रा० पाठः । २ स्थितमिति गो० रा० पाठः । ३ यदि ह्यनुज्ञामिति गो० पाठः । ४ राघवं मे विसर्जयेति गो० रा० पाठः । *त्वामिति पुस्तकम् ।

तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः। इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ॥ १९ ॥
विरराम महातेजा विश्वामित्रो महामतिः। स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम्॥ २० ॥
शोकेन महताविष्टश्चचाल च मुमोह च। लब्धसंज्ञस्ततोत्थाय व्यषीदत भयान्वितः ॥ २१ ॥
इति हृदयमनोविदारणं मुनिवचनं तदतीव शुश्रुवान्।
नरपतिरभवन्महान्महात्मा व्यथितमनाः प्रचचाल चासनात् ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः।

बालोऽयं रामोऽतो नेतुं नार्हसीति दशरथस्य विश्वामित्रं प्रति विज्ञप्तिः, दुष्टरावणादीनां बलकथनम्, दशरथस्य रामं मा नयेति सर्वथा निषेधमुखेन प्रवृत्तिः, विश्वामित्रस्य क्रोधप्राप्तिश्च।

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम्। मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥
ऊनषोडशवर्षो मे रामो राजीवलोचनः। न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥

गो० टी०–नात्येतीति। ममायं यज्ञस्य कालो यथा नात्येति तथा कुरुष्वेत्यन्वयः ॥ १८ ॥

१९–२० ] ति० टी०–तथेति। अत्रापि पूर्वश्लोकान्त्यार्धमावृत्त्या संबध्यते। हे राघव ममायं यज्ञस्य कालो नात्येति नातिपतेत्तथा कुरुष्वेत्यन्वयः। धर्मार्थसहितम् अर्थो रामस्यास्त्रादिलाभरूपः ॥ १९ ॥ २० ॥

रा० टी०–इतीति। धर्मात्मा वेदबोधितकर्मप्रवर्तनाविषयकयत्नवान् महातेजाः महामुनिः अतितपश्चर्यावत्त्वेन सर्वमुनिश्रेष्ठो विश्वामित्रः धर्मार्थसहितमितीदं वचः एवमनेन प्रकारेण उक्त्वा विरराम निवृत्तो ॥ १९ ॥

गो० टी०–इतीति। धर्मार्थसहितं धर्मार्थपरम् ॥ १९ ॥

रा० टी०–स इति। राजेन्द्रो महाराजाधिराजः स प्रसिद्धो दशरथः शुभं मङ्गलप्रदं तद्विश्वामित्रवचो निशम्य श्रुत्वा तीव्रं दुःसहं शोकमभ्यागमत्प्राप। भयान्वितः पुत्रदानाभावे तच्छापहेतुकभीतिविशिष्टः सन् व्यषीदत च विनापि चं समुच्चयः। 'शोकेन महता विष्टश्चचाल च मुमोह च' इत्यपि पाठान्तरम् २०

गो० टी०–स इति। शोकं दुःखं व्यषीदत दुःखितोऽभूत् विषण्णमुखोऽभूदित्यर्थः ॥ २० ॥

२१ ] ति० टी०–चलनं कम्पः। ततोत्थायेतिच्छान्दसम् व्यषीदतेत्यप्येवम्। भयान्वितो रक्षोनिमित्तपुत्रवियोगभयान्वितः ॥ २१ ॥

२२ ] ति० टी०–इतीति। अतीवात्यर्थं हृदयस्य हृदयपुण्डरीकवर्त्यात्मनो मनसोऽन्तःकरणस्य च विदारणं पीडाजनकम् शुश्रुवाञ्छुश्राव। महान्नरपतिः सार्वभौम इति यावत् महात्मा महाबुद्धिः व्यथितमना मूर्च्छितचित्तः अभवदत्रस्थातुमशक्त आसनात्प्रचचाल च निःसंज्ञः पपातेत्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–इतीति। *सहृदयमनोविदारणं हृदयसहितमनश्चालकं तन्मुनिवचनमतीव अत्यन्तं शुश्रुवान् महान् सर्वपूज्यो महात्मा अतिधैर्यविशिष्टो नरपतिः राजा व्यथितमना अभवत् आसनात्प्रचचाल च मूर्च्छितोऽभवदित्यर्थः एतेन राजनिष्ठप्रीतेरतिशयो ध्वनितः ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो० टी०–इतीति। हृदयं मनोऽधिष्ठानम् अतीव अत्यर्थं व्यथितमनाः महान् कुलेन महान् विचचाल मुमूर्च्छेत्यर्थः महदिति पाठे महदत्यर्थं व्यथितमनाः अतीव विदारणमिति संबन्धः। वृत्तमुपजातिभेदः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

१ ] ति० टी०– तदिति। निःसंज्ञ इव निष्प्राण इव रामे प्राकृतत्वबुद्ध्या राक्षसेभ्यो भयसंभावनया दानप्रतिज्ञया च व्याकुलत्वान्मूर्च्छित इत्यर्थः। ततः संज्ञावान्गतमूर्च्छ इदं वक्ष्यमाणमब्रवीत् ॥ १ ॥

रा० टी०–तदिति। विश्वामित्रस्य तत् प्रसिद्धं भाषितं श्रुत्वा मुहूर्तं निस्संज्ञः संज्ञानरहित एव राजशार्दूलः राजश्रेष्ठः। दशरथः संज्ञावान् प्राप्तपुनःसंज्ञानः सन् इदं वक्ष्यमाणं वचनमब्रवीत् इवशब्द एवार्थे ॥ १ ॥

गो० टी०–कौशिकवचनश्रवणाद्दशरथविषादो विंशे–तच्छ्रुत्वेत्यादि। निःसंज्ञ इव चेतनारहित इव मूर्च्छित इत्यर्थः १

२ ] ति० टी०–ऊनेति। किंचिदूनानि षोडशवर्षाणि यस्य सः इदं च युद्धायोग्यत्वं प्रतिपादितम् षोडशवर्षः क्षत्रियकुमार एव कवचधरो युद्धार्ह इति शास्त्रादिति कतककृतः।

१ मुनिरिति गो.रा.पाठः।२ शोकमभ्यागमत्तीव्रं व्यषीदत भयान्वितःइति गो.रा.पाठः।३इदमर्धं गो.रा. पुस्तकयोर्न दृश्यते। *सहृदयेति रा.पाठ इति भाति।

अन्ये तु ऊनषोडशवर्षशब्दस्य द्वादशवर्ष इत्यर्थः। कौशिकयागरक्षणार्थमागतस्य रामस्य वयोविशेषमुद्दिश्य 'बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः' इत्यरण्यकाण्डे रावणं प्रति मारीचोक्तेरित्याहुः। अरण्ये 'बालः षोडशवर्षोऽयम्' इत्येव पाठो रावणस्य भयातिशयार्थं वा मारीचस्यात्युक्तिः सेति कतकाशयः॥ २॥

रा० टी०–तद्वचनमेवाह-ऊनेत्यादिभिः। राजीवलोचनः कमलायतनयनः मे रामः ऊनषोडशवर्षः ऊनः अभावप्रतियोगी षोडशः षोडशानां सङ्ख्यापूरको वर्षो यस्य पञ्चदशवार्षिक इत्यर्थः। किंच ऊनयति स्वाधिकवयस्कमपि न्यूनयति स एव स इति कर्मधारयः। किंच ऊनयति स्वतपसा सर्वान् न्यूनीकरोतीत्यूनो विश्वामित्रः तत्संबोधनम् अत्रान्तिमपक्षद्वये षोडशशब्दः प्रारम्भविषयीभूतषोडशसङ्ख्यापूरकवर्षपरः अपूर्णषोडशवर्षक इत्यर्थः अतः अस्य बालस्य राक्षसैः सह युद्धयोग्यतां न पश्यामि अत्र ऊनषोडशवर्षो मे इत्युक्त्या विश्वामित्रसहगमनसमये रामस्य षोडशो वर्षः प्रविष्ट इति फलितं तस्मिन्नेव वर्षे रामसीताविवाहस्य प्रसिद्धत्वेन षोडशवार्षिकस्य रामस्य विवाह इति सिद्धम्।'समा द्वादश तत्राहं राघवस्य निवेशने' इति रावणं प्रति वक्ष्यमाणसीतावचनाद्विवाहानन्तरं द्वादशवर्षपर्यन्तं राघवनिकेते सीतानिवासः ततो वनप्रस्थानमिति वनगमनसमयेऽष्टाविंशतिवर्षको राम इति निष्पन्नम्। एतदनुरोधेन 'दश सप्त च वर्षाणि जातस्य तव पुत्रक' इतिकौशल्योक्तिपदघटकीभूतदशशब्दस्यैकशेषेण विंशतिरर्थः चशब्दस्य चन्द्रवाचकत्वेनैकत्वलाभः तथाच दश सप्त च युक्तान्येव वर्षाणीत्यष्टाविंशतिलाभः 'चश्चण्डीशे पुमानुक्तः कच्छपे चन्द्रचौरयोः' इति मेदिनी 'मम भर्ता महातेजा वयसा पञ्चविंशकः' इत्यपि न विरुद्धम्। पञ्चविंशयुक्ताः काश्चयो यस्येति तदर्थात् कशब्दस्य वह्निवाचकत्वेन त्रित्वलाभः कशब्दस्य वह्निवाचकत्वं तु 'कः प्रजापतिरुद्दिष्टः कोऽर्कवाय्वनलेष्विति' कोशादवगन्तव्यम् 'ऊनद्वादशवर्षोयमकृतास्त्रश्च राघवः' इति मारीचपदघटकद्विशब्देनैकशेषात् षड्लाभस्तेनोनषोडशवार्षिक इत्यर्थः संपन्नः। अत एव ऊनषोडशवर्षोयमिति भट्टोक्तपाठान्तरेण न विरोधः किंच 'मम भर्ता महातेजा वयसा पञ्चविंशकः' इतिश्रुतानुरोधात् 'ऊनषोडशवर्षो मे' इत्येतद्घटकीभूतोनशब्देन पादोनं गृह्यते तेन तस्मिन्समये रामस्य द्वादशवार्षिकत्वं फलितम् ततस्त्रयोदशे वर्षे विवाहः अत एव मारीचवचनं सानुकूलम्। एवं चोक्तदिशा वनप्रवेशसमये रामस्य पञ्चविंशतिवार्षिकत्वं सिद्धम् दशसप्तच वर्षाणीत्यत्र सप्तशब्दस्यैवैकशेषेण चतुर्दशलाभ इति न विरोधः उपनयनादिप्रभृतिवर्षव्यवस्थापनया भूषणादिव्याख्यानं तु चिन्त्यमेव लोके अप्रसिद्धेः क्वचिज्जन्मप्रभृतिवर्षपरिगणनम् क्वचिदुपनयनात् परिगणनमित्यत्र विनिगमनाविरहाच्चेति दिक्। न चेह कस्मान्न भवति एकश्च एकश्च द्वावित्यर्थः। द्वौ च द्वौ च चत्वार इत्यर्थ इति प्रश्ने "सङ्ख्याया अर्थासंप्रत्ययात् अन्यपदार्थत्वाच्च नैकशेषः" इति सरूपसूत्रस्थभाष्यं विरुध्येतेति वाच्यम्। यत्तावदुच्यते "सङ्ख्याया अर्थासंप्रत्ययात्" इति। अर्थासंप्रत्ययेऽपि हि सति एकशेषो भवति तद्यथा गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ न चोच्यते वृद्धयुवानाविति भवति चैकशेषः यदप्युच्यते अन्यपदार्थत्वाच्चेति अन्यपदार्थेऽप्येकशेषो भवति तद्यथा "विंशतिश्च विंशतिश्च विंशती चत्वारिंशदित्यर्थः" इति भाष्येण हेतोर्बाधितत्वात् नहि हेतोर्बाधितत्वे साध्यसिद्धिः क्वचिद्दृष्टा अत एव ह्रदो वह्निमान् धूमादित्यादावनुमितिर्नोत्पद्यते धूमादेर्बाधितत्वात् नहि विंशती एकौ इत्यनयोर्वैलक्षण्यमुपलभ्यते 'एकादिदशान्तसङ्ख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः' इति शेखरग्रन्थस्तु प्रचुरतरप्रयोगदर्शनाभावमूलकः अत एव एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानादित्यादौ न क्लेशकल्पनेति दिक्॥ २॥

गो० टी०–'यज्ञविघ्नकरं हन्याम्' इत्युक्तरीत्या निजयज्ञविघ्ननिवर्तकोऽयं भविष्यतीति मत्वा आगत्य प्रार्थयमाने विश्वामित्रे वत्सलो दशरथः प्रेमान्धतया कलुषितहृदयः अहं वेद्मीति तदुक्तमपि मनस्यकुर्वन् रामस्य बाल्यमेव पुरस्कुर्वन्नाह–ऊनेति। ऊनाः असंपूर्णाः षोडशवर्षा यस्य स तथोक्तः द्वादशवर्ष इति यावत् 'बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः' इति विशिष्य वक्ष्यमाणत्वात्। परिपूर्णषोडशवर्षो हि युद्धक्षमो भवति द्वादशवर्षो बालः कथं युद्धाय प्रभवतीति भावः। एवं वयःस्वरूपे विचार्यमाणे नास्य युद्धयोग्यतेत्युक्तम्। राक्षसैस्तु सुतरां नेत्याह–राजीवलोचन इति पद्मतुल्यनयनः पद्मं हि रात्रौ मुकुलीभवति तत्तुल्यतोक्तौ रात्रौ निद्रालसो रामो रात्रिंचरैः कथं योद्धुं शक्नोतीति भावः। मे रामः सदा मदुत्सङ्गपरिवर्तितया मद्विरहासहिष्णुरित्यर्थः यद्वा पुत्रकामेन षष्टिवर्षसहस्राणि लालप्यमानस्यातिक्लेशेनोत्पन्नो रामः 'रामो रतिकरः पितुः' इति रतिकरः सर्वस्वभूतः अस्य काकपक्षधरत्वादिविशेषयुतो विद्याभ्यासादपि क्रीडनकस्वीकारकुतूहलीति हस्तेन निर्दिशति युद्धयोग्यतां न पश्यामि किंतु क्रीडनकस्वीकारयोग्यतामेव पश्यामीत्यर्थः। युद्धयोग्यतां राक्षसशब्दश्रवणमात्रेणैव बिभ्यतां कथं युद्धयोग्यता सह राक्षसैः मनुष्येणापि युद्धव्यापारमजानतः कथं राक्षसैर्युद्धम् एकेनापि राक्षसेन न योग्यता कुतो बहुभिः अत्र शङ्क्यते अत्र दशरथेन पित्रा ऊनषोडशवर्ष इत्युक्तम् ऊनत्वं च मासेन मासत्रयेण षण्मासैर्वा स्यात् नत्वेकवर्षद्विवर्षादिभिः तस्मिन्नेव वर्षे सीताविवाहः तदनु द्वादशवर्षाण्ययोध्यावासः 'समा द्वादश तत्राहं राघवस्य निवेशने। भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी॥' इति सीतया वक्ष्यमाणत्वात् तथा च वनप्रवेशकाले रामस्याष्टाविंशतिवर्षाणीति प्रतिभाति। तदनुपपन्नं 'मम भर्ता महातेजा वयसा पञ्चविंशकः। अष्टादश हि वर्षाणि मम जन्मनि गण्यते' इति सीतावचनात् कौसल्यया च वनप्रवेशसमये प्रोच्यते 'दश सप्त च वर्षाणि जातस्य तव पुत्रक। आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम्' इति तस्मादष्टाविंशतेः पञ्चविंशतेः सप्तदशानां च कथमविरोध इति। अत्र केचित्। कौसल्यावाक्ये जातस्येति द्वि-

इयमक्षौहिणी सेना यस्याहं पतिरीश्वरः । अनया सहितो गत्वा योद्धाहं तैर्निशाचरैः ॥ ३ ॥
इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः । योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥
अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि । यावत्प्राणान्धरिष्यामि तावद्योत्स्ये निशाचरैः॥ ५ ॥
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता । अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ ६ ॥

---

तीयं जन्मोच्यते क्षत्रियस्यापि द्विजत्वात् द्वितीयं जन्म च उपनयनं तच्च वृद्धेन दशरथेन काम्यपक्षमाश्रित्य गर्भाष्टम एव कृतं तथा च द्वितीयजन्मापेक्षया सप्तदशत्वम् उपनयनात्पूर्वं सप्तवर्षाणीति वयसा पञ्चविंशक इति सीतावचनमप्युपपन्नम् ऊनषोडशवर्ष इत्यत्र पादोनत्वं द्वादशवर्ष इत्यन्यत्रोक्तत्वात् अतः सर्वथा वनप्रवेशकाले पञ्चविंशतिवर्ष एव राम इत्याहुः । अन्ये बहुक्लेशं सहमाना एवं व्याचख्युः अष्टाविंशतिवर्ष एव वनप्रवेशे रामः ऊनषोडशवर्ष इति यत्किंचिन्मासोनषोडशवर्षवयस्क इत्यर्थः 'बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम्' इति दशरथवचने बाल्ययौवनसंधौ बाल इति व्यवहर्तुं शक्यत्वात् 'बाल आषोडशाद्वर्षात्पौगण्डश्चेति कीर्त्यते' इति वचनात् 'बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः । अजातव्यञ्जनः श्रीमान् पद्मपत्रनिभेक्षणः' इति मारीचवचनं तु युद्धभीरुतयां भ्रान्तिकृतं रावणविभीषिकयोक्तं वा अत एव स्वयं वायव्यास्त्रभग्नोप्यकृतास्त्र इत्याह अजातव्यञ्जनत्वं च निरुदरा कन्येतिवदल्पश्मश्रुत्वम् 'एकवस्त्रधरो धन्वी शिखी कनकमालया' इत्यपि दृढपरिहितोत्तरीयतया सन्नद्धत्वमाह वयसा पंचविंशक इति तु पञ्चविंशतुल्यत्वमाह इवार्थे कनो विधानात् । तेन नित्ययौवनत्वं ज्ञापयति देवा हि सदा पञ्चविंशतिवार्षिका इत्युच्यन्ते कौसल्यावाक्यमपि गर्भैकादशेषु राजन्यमिति विहितोपनयनापेक्षया तस्मान्न किंचिदनुपपन्नमिति वस्तुतो वयसा पञ्चविंशक इति सीतायाः शापभीतायाः सन्यासिनं प्रति वचनमेव यथार्थं दश सप्त च वर्षाणीति कौसल्यावाक्ये तु चकारेण सप्तवर्षाणि समुच्चीयन्ते तेन जन्मापेक्षयैव पञ्चविंशतित्वसिद्धिः । ननु विवाहानन्तरमेव संभोगः श्रूयते 'रामस्तु सीतया सार्द्धं विजहार बहूनृतून्' इति । स कथं द्वादशवर्षस्य बालस्य संभवति संभवत्येव सौकुमार्यातिशयेन प्रौढशरीरतया अत एव हि देव्याश्च षड्वर्षे एव यौवनारम्भः 'अष्टादश हि वर्षाणि मम जन्मनि गण्यते' इति वनप्रवेशेऽष्टादशत्वं विवाहकाले सीतायाः षड्वर्षत्वमवगमयतीति सर्वं सुस्थम्॥ २॥

३-४ ] ति० टी०—इयमिति। 'एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥' इति । यस्याहमिति संधिरार्षः । पतिः पालकः ईश्वरः स्वामी योद्धेत्यस्य अस्मीति शेषः ॥ ३ ॥ ४ ॥

रा० टी०—इयमिति । यस्य यस्याः सेनायाः अहं पतिः पालकः ईश्वरो नियन्ता सा इयमक्षौहिणी सेना अस्तीति शेषः अनया सेनया सहितः युक्तोऽहं गत्वा तैर्भवद्यज्ञविघ्नकारकैर्निशाचरैः सह योद्धा युद्धं कर्तास्मीति शेषः एतेन रामगमनस्य न प्रयोजनमिति ध्वनितम् तेन रामो भवता न नेतव्य इति राजप्रार्थना सूचिता । यस्येति 'सामान्ये नपुंसकम्' अत एव संहितायां नार्षकल्पना अक्षौहिणीस्वरूपं तु 'एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः।त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः॥चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी ॥ अनीकिनीदशगुणं प्राहुरक्षौहिणीं बुधाः' इति भारतादिपर्वणोऽवगन्तव्यम् ॥ ३ ॥

गो० टी०—तर्हि तव प्रतिज्ञा व्यर्था स्यात्तत्राह—इयमिति। अक्षो रथावयवः तस्य ऊहः तद्योगादिनिः । "ऋन्नेभ्यो ङीप्" इति ङीपि "पूर्वपदात्संज्ञायाम्" इति णत्वम् । 'अक्षादूहिन्याम्' इति वृद्धिः अक्षौहिणीस्वरूपमुक्तमादिपर्वणि 'एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ चमूस्तु पृतनास्तिस्रस्ताश्च तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः' इति । यस्याहं पतिरिति संधिरार्षः पतिः पालयिता पातेर्डतिः ईश्वरः नियन्ता योद्धा योत्स्ये लुट् तैर्यज्ञविघ्नकरैः ॥ ३ ॥

रा० टी०—इमे इति । शूराः शौर्यविशिष्टाः विक्रान्ताः पराक्रमवन्तः अस्त्रविशारदाः अस्त्रोपलक्षितास्त्रशस्त्रनिपुणाः इमे भवन्निकटे स्थिता मे भृत्या एव रक्षोगणैः योद्धुं योग्याः सुकुमारत्वात् न राम इत्यर्थः अतो रामं नेतुं त्वं नार्हसि चशब्द एवार्थे ॥ ४ ॥

गो० टी०—इम इति । विक्रान्ताः अक्षतविक्रमाः ॥ ४ ॥

५ ] ति० टी०—गोप्ता यज्ञस्येति शेषः । प्राणान्धरिष्यामि जीविष्यामीत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०—अहमिति । यावत्कालं प्राणान्धरिष्यामि तावत्कालं धनुष्पाणिरहमेव गोप्ता ते यज्ञस्य स्यामिति शेषः कथं गोप्तासीत्यत आह समरमूर्धनि निशाचरैः विघ्नकारकराक्षसैः सह योत्स्ये यदा यदा राक्षसभीतिः भवन्तं प्राप्स्यति तदा तदा तत्र गत्वा निशाचरान्हत्वा यज्ञं रक्षितास्मीत्यर्थः ॥ ५ ॥

बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् । न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७ ॥
न चासौ रक्षसां योग्यः कूटयुद्धा हि राक्षसाः । विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ॥ ८ ॥
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि । यदि वा राघवं ब्रह्मन्नेतुमिच्छसि सुव्रत ॥ ९ ॥
चतुरङ्गसमायुक्तं मया सह च तं नय । षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ॥ १० ॥
कृच्छ्रेणोत्पादितश्चायं न रामं नेतुमर्हसि । चतुर्णामात्मजानां हि प्रीतिः परमिका मम ॥ ११ ॥
ज्येष्ठे धर्मप्रधाने च न रामं नेतुमर्हसि । किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ॥ १२ ॥

गो० टी०–अहमिति । गोप्ता यज्ञस्येति शेषः सेनानां वा॥६॥

रा० टी०–निर्विघ्नेति । सुरक्षिता मयात्यन्तं पालिता अत एव निर्विघ्ना सा भवत्कर्तृका व्रतचर्या भविष्यति अतः तत्र भवद्यागनिकटे अहं गमिष्यामि अतः रामं नेतुं नार्हसि ॥६॥

गो० टी०–निर्विघ्नेति । अहं गमिष्यामि तेन सुरक्षिता भविष्यतीति योजना ॥ ६ ॥

७ ] ति० टी०–रामगमनेऽनुपपत्तिमाह–बाल इत्यादि । ऊनषोडशवर्षत्वादेव बालत्वव्यवहारः स्नेहातिशयेन च तेनैवाकृतविद्यत्वव्यवहारः अन्यथा 'सर्वे वेदविदः शूराः', 'सर्वे ज्ञानोपसंपन्नाः' इति पूर्वोक्त्या विरोधः स्यात् ॥ ७ ॥

रा० टी०–रामगमनायोग्यत्वं विशदयन्नाह–बाल इत्यादिभिः । बालः ऊनषोडशवार्षिकः अत एव अकृतविद्यः न कृता गुरूपदेशप्राप्त्या प्रकटिता विद्या येन अतएव न अस्त्रविद्यासंयुक्तः अस्त्रोपलक्षितगुरूपदिष्टास्त्रशस्त्रादिज्ञानविशिष्टो न अत एव न युद्धविशारदः गुरूपदिष्टयुद्धनैपुण्यविशिष्टश्च न अत एव बलाबलं न वेत्ति गणयति । हिश्चत्रयं च हेतौ एतेन रामनयनमयुक्तमिति ध्वनितम् अत एव 'सर्वे वेदविदः शूराः', 'सर्वे ज्ञानोपसम्पन्नाः' इति पूर्वोक्तो न विरोधः ॥ ७ ॥

गो० टी०–बाल इति । बालः ऊनषोडशवर्षः अत एव अकृतविद्यः अशिक्षितधनुर्विद्यः बलाबलं शत्रूणामिति शेषः । "येषां च विरोधः शाश्वतिकः" इति एकवद्भावः ॥ ७ ॥

८ ] ति० टी०–न चेति । रक्षसामित्यस्य रण इति शेषः। कूटं कपटम्। रामनयने बाधकमप्याह–विप्रेत्यादि ॥८॥

रा० टी०–ननु शिक्षयित्वा यागशालां नेष्यामि इत्यत आह–नचेति । असौ रामः रक्षसां योग्यो न च राक्षसैर्योद्धुं नैवार्हतीत्यर्थः तत्र हेतुः हि यतः राक्षसाः कूटयुद्धाः कपटयुद्धकर्तारः रामो न नेतव्य इत्यत्र हेत्वन्तरमाह–हे मुनिशार्दूल मुनिश्रेष्ठ रामेण विप्रयुक्तो विश्लिष्टः अहं जीवितुं मुहूर्तमपि नोत्सहे न समर्थोऽस्मि तस्माद्रामं नेतुं त्वं नार्हसि एतेन स्वगमनेच्छाऽपि रामेण सहैवेति सूचितम् सार्धश्लोक एकान्वयी चशब्द एवार्थे ॥ ८ ॥

गो० टी०–नचेति । रक्षसां युद्ध इति शेषः कूटयुद्धाः कपटयुद्धाः इदमर्धम् ॥ ८ ॥

गो० टी०–तिष्ठतु रामस्वभावः मत्स्वभावश्चैवमित्याह–विप्रयुक्त इति । विप्रयुक्तः विश्लिष्टः ॥ ९ ॥

९ ] ति० टी०–उक्तानुपपत्तिपरिहारायाह–यदि वेति ९

रा० टी०–तदेव स्पष्टमाह–यदीति । हे ब्रह्मन् हे सुव्रत यदि राघवं रामं नेतुमिच्छस्येव तर्हि चतुरङ्गसमायुक्तं साङ्गसेनायुक्तं मया च सहितं रामं नय स्वाश्रमं प्रापय वाशब्द एवार्थे ॥ ९ ॥

गो० टी०–यदीति । चत्वारि अङ्गानि चतुरङ्गानि "दिक्संख्ये संज्ञायाम्" इति समासः ॥ १० ॥

१० ] ति० टी०–इतोऽपि रामनयनमयुक्तमित्याह–षष्टिरिति । अतीतानीति शेषः ॥ १० ॥

रा० टी०–रामविश्लेषासहिष्णुत्वे कारणं बोधयन्नाह–षष्टिरिति । हे कौशिक ! जातस्य इह प्रादुर्भूतस्य मम वर्षसहस्राणि षष्टिर्व्यतीतानि अनन्तरं दुःखेन दुःखसाध्ययत्नेन अयं राम उत्पादितः प्रादुर्भावितस्तस्माद्रामं नेतुं त्वं नार्हसि चोऽनन्तरार्थे कृच्छ्रेणोत्पादित इति भट्टसंमतः पाठः ॥१०॥

गो० टी०–षष्टिरिति । वर्षसहस्राणि अतीतानीति शेषः । तदनन्तरं दुःखेन उपवासदीक्षादिक्लेशेन उत्पादितः ॥ ११ ॥

११ ति० टी०–कृच्छ्रेण दुःखेन क्वचित् 'दुःखेन' इत्येव पाठः । यज्ञदीक्षादिलक्षणेन । परमिकातिशयिता स्वार्थे कः । चतुर्णामिति निर्धारणे षष्ठी । तेषां मध्येऽस्मिन्मम प्रीतिराधिक्येत्यर्थः ॥ ११ ॥

रा० टी०–चतुर्णामिति । चतुर्णामात्मजानां मध्ये ज्येष्ठे इति शेषः । मे मम प्रीतिः परमिका अत्यधिका अतः ज्येष्ठं प्रथमं प्रादुर्भूतं धर्मप्रधानं धर्मरक्षकं रामं नेतुं त्वं नैवार्हसि चशब्द एवार्थे हिशब्दो हेत्वर्थे । 'ज्येष्ठे धर्मप्रधाने च' इति भट्टसंमतः पाठः ॥ ११ ॥

गो० टी०–चतुर्णामिति । चतुर्णां पुत्राणां मध्ये रामे परमिका प्रीतिः स्वार्थे कप्रत्ययः "प्रत्ययस्थात्" इतीत् यस्माज्ज्येष्ठत्वादेश्च न नेतुमर्हसीति योजना ॥ १२ ॥

१२ ] ति० टी०–प्रीत्याधिक्ये कारणमाह–ज्येष्ठ इति । अनेन राज्ययोग्यता ध्वनिता । धर्मप्रधाने त्रिषु पुरुषार्थेषु धर्माधीनप्रवृत्तिके राक्षसैर्युद्धे हि पाक्षिकनाशसंभावनया राज्यविच्छेद एव भवेत् धर्मेण प्रजापालनं च नान्यतो निर्वहेत् अतो रामो नेतुमयोग्यः । अथ रामनयनस्य सर्वथायोग्यत्वं प्रति-

१ इदमर्धं रामायणशिरोमणौ नास्ति । २ च सहितमिति गो. रा. पाठः । ३ दुःखेनेति गो. रा. पाठः । ४ ज्येष्ठं धर्मप्रधानमिति गो. रा. पाठः ।

कथंप्रमाणाः के चैतान्रक्षन्ति मुनिपुङ्गव । कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ १३ ॥
मामकैर्वा बलैर्ब्रह्मन्मया वा कूटयोधिनाम् । सर्वं मे शंस भगवन्कथं तेषां मया रणे ॥ १४ ॥
स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः । तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५ ॥
पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः । स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ १६ ॥
महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः । श्रूयते चै महाराज रावणो राक्षसाधिपः ॥ १७ ॥
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः । यदा न खलु यज्ञस्य विघ्नकर्ता महाबलः ॥ १८ ॥
तेन संचोदितौ तौ तु राक्षसौ चै महाबलौ । मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १९ ॥
इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा । नहि शक्तोऽस्मि सङ्ग्रामे स्थातुं तस्य दुरात्मनः ॥२०॥

पादयितुं रक्षःस्वरूपं पृच्छति—किंवीर्या इति । के च ते किंनामानः ॥ १२ ॥

रा० टी०—वस्तुतस्तु धर्मयुद्धकर्तृभिरस्माभिः कपटयुद्धकर्तारो राक्षसाः निवारयितुमशक्या इति तत्रास्मद्गमनं निरर्थकमिति मनसि निश्चित्य तदेव मुनिवचनेन द्रढयितुं योद्धव्यस्वरूपं पृच्छति—किंवीर्या इत्यादिभिः । हे मुनिपुङ्गव । ते भवयज्ञविघ्नकर्तारो राक्षसाः किंवीर्याः कीदृक्वीर्यविशिष्टा इत्यर्थः । कस्य पुत्राश्च ते के च किंनामान इत्यर्थः कथंप्रमाणाः कीदृक्प्रमाणविशिष्टाश्च एतान् राक्षसान् के रक्षन्ति च ॥ १२ ॥

गो० टी०—अथ सर्वथा रामनयनमयुक्तमिति वक्तुं योद्धव्यस्वरूपं पृच्छति—किमिति । के च किंनामधेयाः कथंप्रमाणाः कीदृशाकारा इत्यर्थः । के रक्षन्ति के तेषां प्रधाना इत्यर्थः ॥ १३ ॥

१३ ] ति० टी०—कथंप्रमाणाः कीदृक्शरीरप्रमाणाः रक्षन्ति स्वामित्वेनेति शेषः । प्रतिकर्तव्यं प्रतिविधेयम् । संहारः कथं कर्तव्य इत्यर्थः ॥ १३ ॥

रा० टी०—कथमिति । हे ब्रह्मन् कूटयोधिनां तेषां रक्षसां रामेण वा मामकैः बलैः सैन्यैर्वा मया वा कथं प्रतिकर्तव्यं शान्तिर्विधेया इत्यर्थः वार्थश्चकारः ॥ १३ ॥

गो० टी०—कथं चेति । प्रतिकर्तव्यं प्रतिविधेयम् ॥ १४ ॥

१४ ] ति० टी०—मया रण इत्यत्र प्रतिकर्तव्यमित्यनुषङ्गः १४

रा० टी०—सर्वमिति । हे भगवन् वीर्योत्सिक्ताः ये राक्षसाः तेषां दुष्टभावानां निषिद्धविचारशीलानां रणे मया कथं केन प्रकारेण स्थातव्यम् इति सर्वं मे मह्यं शंस कथय एतेन तस्य युद्धोत्साहराहित्यं सूचितं तेन तस्य वात्सल्यरसमग्नत्वं व्यक्तम् तेन वीररसाद्वात्सल्यरसस्याधिक्यं सूचितम् १४

गो० टी०—सर्वमिति । तेषां रणे कथं मया स्थातव्यमिति व्यूहप्रकारप्रश्नः ॥ १५ ॥

१५–१६ ] ति० टी०—स्थातव्यमिति । दुष्टभावानां तेषां संबन्धिनि रणे कथं स्थातव्यमिति च शंसेति संबन्धः तत्र हेतुः वीर्येत्यादि ॥ १५ ॥ १६ ॥

रा० टी०—तस्येति । तस्य राज्ञः तत्प्रसिद्धं वचनं श्रुत्वा विश्वामित्रः अभ्यभाषत तदुक्तिमेवाह पौलस्त्यवंशप्रभवः रावणो नाम राक्षसोऽस्तीति शेषः ॥ १५ ॥

गो० टी०—तस्येति ॥ १६ ॥

रा० टी०—स इति । महाबलः महासैन्यस्वामी महावीर्यः महापराक्रमः अत एव बहुभिः राक्षसैर्वृतः ब्रह्मणा दत्तः वरः यस्मै स रावणः त्रैलोक्यं भृशं बाधते एतेन त्रैलोक्यान्तःपातित्वात्स्वयज्ञस्यापि विघ्नकर्ता रावण इति ध्वनितम् ॥ १६ ॥

गो० टी०—पौलस्त्येति राक्षसोस्तीति शेषः ॥ १७ ॥

गो० टी०—किंवीर्या इत्यस्योत्तरमाह—स इति ॥ १८ ॥

१७ ] ति० टी०—प्रसिद्धश्चायं रावण इत्याह—श्रूयत इत्यादि ॥ १७ ॥

रा० टी०—श्रूयते इति । महावीर्यः साक्षादौरसः विश्रवसः मुनेः हि यतः पुत्रः अत एव वैश्रवणभ्राता यः रावणो नाम राक्षसः श्रूयते स महाबलः महासेनावान् यदा यज्ञस्य साक्षान्नैव विघ्नकर्ता तदैव तेनैव रावणेन संचोदितौ महाबलौ तौ प्रसिद्धौ मारीचः सुबाहुश्च राक्षसौ एव यज्ञविघ्नं करिष्यतः कुरुतः खलुशब्दः साक्षादर्थे वैतुचशब्दाः एवार्थकाः सार्धश्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—प्रसिद्धश्चायमित्याह—श्रूयत इति ॥ १९ ॥

१८ ] ति० टी०—यतो महाबलस्ततो यदानादरात्स्वयं यज्ञस्य विघ्नकर्ता न खल्वनादरात्स्वयं विघ्नाय नागच्छति तदा१८

गो० टी०—यदेति । अर्धत्रयमेकान्वयम् । यदा यज्ञस्य स्वयं न विघ्नकर्ता अलक्ष्यत्वादिनेति शेषः ॥ २० ॥

१९ ] ति० टी०—तेन रावणेन प्रेरितौ मारीचसुबाहू यज्ञविघ्नं करिष्यत इति संबन्धः ॥ १९ ॥

२० ] ति० टी०—अथ रावणनाम श्रुत्वा स्वयमेव निष्टत्प्रतीकारप्रत्याशो राजाह—इत्युक्त इति ॥ २० ॥

रा० टी०—इतीति । तेन प्रसिद्धेन मुनिना रामनयनयत्नशीलेन विश्वामित्रेण इति अनेन प्रकारेण उक्तः राजा महाराजाधिराजस्तदा तस्मिन्काले एव मुनिमुवाच तदुक्तिमाह—दुरा-

१ हि महावीर्य इति गो. रा. पाठः । २ नाम राक्षस इति रा. पाठः । ३ वै इति गो. रा. पाठः ।

स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके। मम चैवाल्पभाग्यस्य दैवतं हि भवान्गुरुः ॥ २१ ॥
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः। न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २२ ॥
स तु वीर्यवतां वीर्यमादत्ते युधि रावणः। तेन चाहं न शक्तोऽस्मि संयोद्धुं तस्य वा बलैः॥ २३ ॥
सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः। कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ॥ २४ ॥
बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम्। अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ॥ २५ ॥
यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम्। मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ २६ ॥

त्मनः दुष्टस्वभावस्य दुर्ज्ञेयप्रयत्नस्य वा तस्य राक्षसस्य संग्रामे स्थातुं नैव शक्तः अस्मि। एतेन वीररसस्य वात्सल्यरसविरोधित्वं सूचितम् तेन तत्सदृशवात्सल्यरसवान्स एवेत्यनन्वयालङ्कारः सूचितः ॥ १९ ॥

गो० टी०—इतीति। तस्य रावणस्य ॥ २१ ॥

२१-२२ ] ति० टी०—अल्पभाग्यस्य त्वन्नियोगाकरणादिति शेषः प्रसादयितुमाह—दैवतमित्यादि ॥ २१ ॥ २२ ॥

रा० टी०—स इति। हे धर्मज्ञ अल्पभाग्यस्य अल्पात् अल्पकालतः प्राप्तं भाग्यं प्रगटपुत्रप्राप्तिरूपं यस्य तस्य मम दैवतं देवता गुरुश्च यतो भवान् अतः सः प्रसिद्धस्त्वं मम पुत्रके प्रसादं कुरुष्वैव हिर्हेतौ ॥ २० ॥

गो० टी०—स इति। अल्पभाग्यस्येति त्वन्नियोगाकरणेनेति शेषः। प्रसादकरणे हेतुः दैवतमिति ॥ २२ ॥

रा० टी०—स्वाशक्तत्वे हेतुमाह—देवेति। युधि युद्धे रावणं सोढुं यदि देवादयो न शक्तास्तर्हि मानवा न शक्ताः इति किं वक्तव्यम् पुनरिति यच्चर्थे एतेन काव्यार्थापत्त्यलङ्कारेण सामान्याभावे विशेषाभावस्य निश्चितत्वेन यदि सर्वे न शक्तास्तर्हि अहं न शक्त इति किंवक्तव्यमिति काव्यार्थापत्त्यलङ्कारो ध्वनितः तेन ब्रह्मणा दत्तवर इति विश्वामित्रसामान्योक्त्या सर्वावध्यत्वं रावणस्येति राज्ञा निश्चितमिति वस्तु व्यक्तम् ॥२१॥

गो० टी०—देवेति। रावणसंग्रामवैमुख्यं न दोषाय सर्वाशक्यत्वादित्याशयः ॥ २३ ॥

२३ ] ति० टी०—स त्विति। वीर्यमादत्ते नाशयतीत्यर्थः अतस्तत्संग्रामाद्वैमुख्यमपि न दोषायेति भावः तस्य बलैर्मारीचादिभिः ॥ २३ ॥

रा० टी०—तदेव विशदयन्नाह—स इति। हे मुनिश्रेष्ठ हे ब्रह्मन् राक्षसः प्राप्तराक्षसस्वभावः स प्रसिद्धो रावणः युधि वीर्यवतां वीर्यमादत्ते गृह्णाति एव अतस्तेन रावणेन तस्य बलैः सैन्यैर्वा संयोद्धुं ममात्मजैः स्वभावजनितैः अयोद्धव्ययोधनादिक्षात्रधर्मैरुपलक्षितोऽहमेकाकी वा सबलः ससैन्यो वा अहं कथमपि न शक्तोस्मि एतेन स्वगमनानर्हत्वं सूचितम्। अतः अमरप्रख्यं देवविशेषवत्प्रतीयमानं सङ्ग्रामाणामकोविदं गुरूपदिष्टसंग्रामविषयकज्ञानाभाववन्तम् अत एव बालमतनयमतमयोध्याविशेषशोभावलोकनार्थं मत्ससततगमनं नयति प्रापयति तम् अत एव पुत्रकमित्यनेन न गतार्थता पुत्रकमनुकम्पितसुतं नैव दास्यामि सार्धश्लोकद्वयमेकान्वयि चशब्दो हेत्वर्थे हिशब्द एवार्थे सतिवितिभट्टपाठः सबल इत्यत्रापि अहमित्यनुकृष्यते एतेन मारीचसुबाहुपराभवं श्रुत्वा रावणो ध्रुवं तत्रागन्तेति तस्याप्यस्मदादिकर्तृकवधे ब्रह्मानादरः स्यादिति राज्ञो विचारः सूचितः तेन तस्य मर्यादापालकत्वं सूचितम् ॥ २२ ॥ २३ ॥

गो० टी०—स हीति। अर्थत्रयम्। वीर्यमादत्ते स्वीकरोति नाशयतीत्यर्थः तस्य बलैः मारीचादिभिः ॥ २४ ॥

२४ ] ति० टी०—हे मुनिश्रेष्ठ सबलः ससैन्यः मम पुत्रैः सहितो वा भवानपि तेन योद्धुं न शक्त इत्यनुषङ्गः अस्तु वा कथंचिद्भवतस्तथा सामर्थ्यम् पुत्रं तु सर्वथा न दास्यामीत्याह—कथमपीत्यादि। अमरप्रख्यममरतुल्यरूपमेव न त्वमरमिति तात्पर्यम् नैव दास्यामीत्यन्वयः ॥ २४ ॥

गो० टी०—कथमिति। कथमिति प्रश्ने राक्षसान् प्रतीति शेषः ॥ २५ ॥

२५-२६ ] ति० टी०—अतिदुःखितोक्तित्वात्तस्य पुत्रकशब्दयोः पौनरुक्त्यं न दोषः पुत्रकमित्यनुकम्पायां कन् अदाने हेत्वन्तरमप्याह—अथेत्यादि। यतः सुन्दोपसुन्दपुत्रौ कालोपमौ यमतुल्यौ मारीचसुबाहू दैत्यकुलजसुन्दोपसुन्दाभ्यां यक्षकन्यायां जातत्वेनागस्त्यशापेन चातिक्रूरतमौ राक्षसत्वं प्राप्तौ यतस्तौ यज्ञविघ्नकरौ अतः सुतं नैव दास्यामीत्यन्वयः ॥२५॥२६॥

रा० टी०—तदेवोपसंहरन्नाह—अथेति। युद्धे कालोपमौ कालसदृशौ सुन्दोपसुन्दयोः सुतौ तौ मारीचसुबाहू यतस्ते यज्ञविघ्नकरौ अतः ते तुभ्यं सुतमहं नैव दास्यामि। अथशब्दो हेत्वर्थे। एतेन 'विवाहश्च विवादश्च समयोरेव शस्यते' इति न्यायादतिकठोराङ्गकातिक्रूरचेष्टितराक्षसाभ्यां साकमतिकोमलाङ्गसकारणक्रूरतासंसर्गशून्यमत्सुतस्य युद्धमन्याय्यमिति राज्ञो विचारः सूचितः ॥ २४ ॥

गो० टी०—अथेति। अथ शत्रुस्वरूपज्ञानानन्तरं सुन्दोपसुन्दयोः सुतौ मारीचसुबाहू सुन्दपुत्रः मारीचः। उपसुन्दपुत्रः सुबाहुः। पुत्रकम् अनुकम्पायां कन् अतो न दास्यामीत्युपस्कार्यम् ॥ २६ ॥

रा० टी०—ताविति। दैत्यकुलोद्भवौ अत एव वीर्यवन्तौ

१ राक्षस इति गो. रा. पाठः। २ संयोक्तुमिति रा. पाठः। ३ दास्याम्यहं सुतमिति गो. रा. पाठः। ४ इत्यस्मात्पूर्वं तौ हि यक्षस्य कन्यायां जातौ दैत्यकुलोद्भवौ गो. रा. अधिकम्।

तयोरन्यतरं योद्धुं यास्यामि ससुहृद्गणः । अन्यथा त्वनुनेष्यामि भवन्तं सहबान्धवः ॥ २७ ॥

इति नरपतिजल्पनाद्द्विजेन्द्रं कुशिकसुतं सुमहान्विवेश मन्युः ।
सुहुत इव मखेऽग्निराज्यसिक्तः समभवदुज्ज्वलितो महर्षिवह्निः ॥ ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे विंशः सर्गः ॥ २० ॥

---

## एकविंशः सर्गः ।

विश्वामित्रदशरथसंवादः, दशरथस्य वसिष्ठकृतोपदेशश्च ।

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् । समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥
पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि । राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २ ॥

---

सुशिक्षितौ शोभनशिक्षायुक्तौ तौ प्रसिद्धौ यक्षस्य कन्यायां जातौ चकारेणागस्त्यशापेन राक्षसत्वं प्राप्तौ यौ मारीचः सुबाहुश्च तयोः संबन्धिनमन्यतरमन्यो भिन्नः तरः पराभूतिकारी च स एव स इति कर्मधारयस्तं संभावितभवदरिमित्यर्थः योद्धुं ससुहृद्गणः सुहृद्गणसहितः अहं यास्यामि एतेन मारीचसुबाहू योद्धुं न यास्यामीति व्यञ्जितम् राक्षसत्वं प्राप्तावित्यनेन ब्रह्मप्राप्तवररावणसंबन्धः सूचितस्तेन तत्र गमनाभावे हेतुर्व्यक्तः यक्षस्य कन्यायां जातावित्यनेन तयोर्यक्षत्वं फलितम् । तेन यक्षा न हन्तव्या ' इति ध्रुवं प्रति मनूक्तेः स्मरणं राज्ञो जातमिति ध्वनितम् । तेनापि तयोर्हनने मन्वनादरः स्यादिति गमनाभावे हेतुर्बोधितः अन्यथा ताभ्यां युद्धमन्तरापि अस्मदादिगमनस्यावश्यकत्वे सहबान्धवः बान्धवसहितः अहं भवन्तमनुनेष्याम्येव भवद्भिः सह गमिष्याम्येवेत्यर्थः ॥ २६ ॥ २६ ॥

गो० टी०–मारीच इति । स्पष्टम् ॥ २७ ॥

२७ ] ति० टी०–अन्यथा भवता ममानयने अनुनेष्यामि रामागमनायेति शेषः ॥ २७ ॥

२८ ] ति० टी०–इतीति । सुहुतः प्रथमं शुष्कसमिद्भिर्हुतः पश्चादाज्यसिक्तोऽग्निरिवेति योजना । उज्ज्वलितो रोषज्वालाख्यचित्तवृत्तियुक्तः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे विंशः सर्गः ॥ २० ॥

रा० टी०–इतीति । द्विजेन्द्रं द्विजश्रेष्ठं कुशिकसुतं विश्वामित्रमित्यनेन प्रकारेण नरपतिजल्पनात् राजभाषणात् सुमहानतिप्रवृद्धः मन्युः कोपः विवेश अतः समिद्भिः सुहुत आज्यसिक्तः अत एव उज्ज्वलितः प्रदीप्तो वह्निरिव महर्षिवह्निः समभवत् वह्निरित्यध्याहृतम् ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे विंशः सर्गः ॥ २० ॥

गो० टी०–उत्तरसर्गार्थमन्ते संगृह्णाति–इतीति । जल्पनादसंगतोक्तेः कोपाविष्टत्वे दृष्टान्तमाह–सुहुत इति । आदौ समिद्भिः[1] सुहुतः तत आज्यसिक्तो वह्निरिव महर्षिवह्निर्महर्षिश्रेष्ठः उज्ज्वलितः समभवत् संजातज्वालो बभूव मुनिपक्षे क्रोधवृद्धिः । पुष्पिताग्रावृत्तम् ' अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ' इतिलक्षणात् ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

१ ] ति० टी०–तदिति । स्नेहेन पुत्रस्नेहेन पर्याकुलानि गद्गदान्यक्षराणि यस्मिंस्तत्तस्य वचनं श्रुत्वेत्यन्वयः ॥ १ ॥

रा० टी०–राजवचनश्रवणानन्तरकालिकं वृत्तमाह–तदिति । स्नेहपर्याकुलाक्षरम् परमप्रीतिहेतुकसंकलिताक्षरविशिष्टं तस्य दशरथस्य तद्रामगमनाभावप्रतिपादकं वचनं श्रुत्वा समन्युः क्रोधविशिष्टः कौशिकः महीपतिं दशरथं प्रत्युवाच ॥ १ ॥

गो० टी०–एवं रामप्रेषणवृत्तान्तव्याकुलं राजानं वसिष्ठः प्रतिबोधयति एकविंशे–तच्छ्रुत्वेति । स्नेहेन पुत्रस्नेहेन पर्याकुलानि स्खलन्ति अक्षराणि यस्मिन् ॥ १ ॥

२ ] ति० टी०–अयं विपर्ययः प्रतिज्ञाहानिरूपो राघवाणामयुक्तः यतोऽयमस्य कुलस्य विपर्ययो नाशः विपर्ययपदावृत्तिर्बोध्या ॥ २ ॥

रा० टी०–तदुक्तिमाह–पूर्वमित्यादिभिः । पूर्वमर्थं याचितं प्रतिश्रुत्य दास्यामीति प्रतिज्ञाय प्रतिज्ञां हातुं त्यक्तुं त्वमिच्छसि अयं प्रतिज्ञात्यागः राघवाणां कुलस्य राघवकुलोद्भवस्य अयुक्तः अनुचितः तत्र हेतुः यतः प्रतिज्ञात्यागादस्य तव विपर्ययः मिथ्यावादित्वं स्यात् एतेन सत्यवादिकुलेऽयं मिथ्यावादी उत्पन्नः इति तवाकीर्तिर्भवितेति सूचितम् तेन ' संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ' इत्यादिन्यायेनातिदुःखं भवितेति बोधितम् ॥ २ ॥

गो० टी०–पूर्वमिति । अर्थं प्रार्थितार्थमयं विपर्ययः प्रतिज्ञाहानिः राघवाणामस्य कुलस्यायुक्तः ॥ २ ॥

---

१ समिद्भिरिति गो. रा. पाठः ।

यदीदं ते क्षमं राजन्गमिष्यामि यथागतम् । मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सुहृद्वृतः ॥ ३ ॥
तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः । चचाल वसुधा कृत्स्ना देवानां च भयं महत् ॥ ४ ॥
त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषिः । नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५ ॥
इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः । धृतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६ ॥
त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः । स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७ ॥
प्रतिश्रुत्य करिष्येति उक्तं वाक्यमकुर्वतः । इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८ ॥
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः । गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९ ॥

---

३ ] ति० टी०—यदीदं प्रतिज्ञाहानिरूपं क्षमं युक्तम् । इदं तत्फलं च यदि क्षमं सह्यं तदा यथागतं गमिष्यामि मिथ्यावादी त्वं सुहृद्वृतः सुखी भवेति विपरीतलक्षणयोक्तिः ॥ ३ ॥

रा० टी०—यदीति । हे राजन् ! यदीदमकीर्त्तिजनितं दुःखं ते तव क्षमं सह्यं तर्हि यथागतमागतमनतिक्रम्य गमिष्यामि राममगृहीत्वैव स्वाश्रमं यास्यामीत्यर्थः हे काकुत्स्थ ! मिथ्याप्रतिज्ञः सबान्धवः बान्धवसहितः सुखी भव एतेन सत्यप्रतिज्ञत्वत्यागे ते दुःखमेव भविष्यतीति ध्वनितम् तेन रामं देहीति बोधितम् ॥ ३ ॥

गो० टी०—यदीदमिति । इदं प्रतिज्ञातान्यथाकरणं सुखी भवेति व्यङ्ग्योक्तिः ॥ ३ ॥

४ ] ति० टी०—धीमत इत्यत्र रोषं दृष्ट्वेति शेषः । जगदन्यथाकरणसमर्थोऽयमद्य क्रुद्धः किं करिष्यतीति देवानां भयम् ॥ ४ ॥

रा० टी०—तस्येति । रोषपरीतस्य क्रोधयुक्तस्य धीमतः धैर्यविशिष्टस्य विश्वामित्रस्य कृत्स्ना निखिला वसुधा पृथिवी चचाल चकम्पे अतएव सुरान्भयं विवेश एतेन विश्वामित्रस्य प्रभावातिशयः सूचितः तेनास्मन्मित्रीभूतदशरथोपरि कोपेऽस्मदुपरि अपि विश्वामित्रकोपो भविष्यतीति देवभये हेतुः सूचितः। चशब्दो हेत्वर्थे पृथिव्याः कम्पनं पृथिव्यभिमानिदेवभियेति बोध्यम् धीमतइत्यनेन राज्ञे भयदानार्थमेव कोपवत्ताप्रतीतिः नतु वास्तवः कोप इति ध्वनितम् ॥ ४ ॥

गो० टी०—तस्येति । रोषपरीतस्येति षष्ठी सप्तम्यर्थे भयं पूर्वं कोपेनान्यथाकृतजगदयमद्य किं करिष्यतीति भयम्॥४॥

५ ] ति० टी०—त्रस्तरूपमतिशयेन त्रस्तम् जगत्त्रैलोक्यम्॥५

रा० टी०—त्रस्तेति । महान् ईश्वरेश्वरपूज्यः ऋषिः सर्वज्ञः सुव्रतः ईश्वरेश्वररामोपदेशरूपव्रतविशिष्टः धीरः निश्चलचित्तः स वसिष्ठः सर्वं जगत् त्रस्तरूपं विज्ञाय वाक्यमब्रवीत् ॥ ५ ॥

गो० टी०—त्रस्तेति । त्रस्तरूपमतिशयेन त्रस्तं प्रशंसायां रूपप् धीरः धीमान् ॥ ५ ॥

६ ] ति० टी०—साक्षाद्धर्म इव इवशब्द एवार्थे दृढारोपं रूपकमिदम् ॥ ६ ॥

रा० टी०—तद्वाक्यमेवाह—इक्ष्वाकूणामित्यादिभिः । इक्ष्वाकूणां कुले जातः प्रादुर्भूतः अतएव अपरः सर्वश्रेष्ठः साक्षात् प्रत्यक्षो धर्म इव धृतिमान् धैर्यविशिष्टः अतएव सुव्रतः अत्यक्तव्यसंकल्पविशिष्टः सत्यप्रतिज्ञ इत्यर्थः अतएव श्रीमान् सर्वसंपत्तिविशिष्टः त्वं धर्मं नित्यसत्यप्रतिज्ञत्वरूपं स्वस्वभावं हातुं त्यक्तुं नार्हसि योग्योसि धर्माधिक्यं बोधयितुं तत्तया निर्देशः ॥ ६ ॥

गो० टी०—इक्ष्वाकूणामिति । त्वमिति शेषः ॥ ६ ॥

७ ] ति० टी०—स्वधर्मं सत्यप्रतिज्ञत्वम् ॥ ७ ॥

रा० टी०—निषेधमुखेन धर्मः स्वीकर्त्तव्य इत्युक्त्वा एव तदत्र विधिमुखेनाह—त्रिष्विति । त्रिषु ऊर्ध्वाधोमध्येषु लोकेषु धर्मात्मा इति विख्यातः राघवः रघुकुलप्रादुर्भूतः स्वधर्मं नित्यसत्यप्रतिज्ञत्वरूपं स्वस्वभावं प्रतिपद्यस्व संस्मर अतः अधर्मं नित्यसत्यप्रतिज्ञत्वरूपस्वस्वभावविरोधिस्वभावं वोढुमङ्गीकर्त्तुं नार्हसि ॥ ७ ॥

गो० टी०—त्रिष्विति । धर्मात्मा इतीत्यत्र वाक्ये संहिताऽनित्या स्वधर्मं प्रतिश्रुतनिर्वाहरूपम् ॥ ७ ॥

८ ] ति० टी०—इष्टमश्वमेधान्तयागः आपूर्तं वापीकूपादिनिर्माणम् तद्वधस्तत्फलनाशः भूयाद्भवेत् भविष्यतीति यावत् करिष्ये इति प्रतिश्रुत्य प्रतिज्ञाय संधिरार्षः उक्तं वाक्यमकुर्वतोऽननुतिष्ठतः ॥ ८ ॥

रा० टी०—संश्रुत्येति । हे राघव ! रघुकुलप्रादुर्भूत दशरथ ! एवं करिष्यामीति संश्रुत्य प्रतिज्ञाय अकुर्वाणस्य प्रतिज्ञातार्थमकुर्वतस्तव इष्टापूर्त्तवधः इष्टमश्वमेधपर्यन्तयागः आपूर्त्तं वापीकूपतडागादिनिर्माणं तयोर्वधः निष्फलत्वं भूयात्स्यात् तस्मान्निष्फलत्वभयाद्रामं विसर्जय प्रेषय प्रतिश्रुत्य करिष्येति 'उक्तं वाक्यमकुर्वतः' इतिभट्टसंमतः पाठः। करिष्येति सन्धिरार्ष इति तैरुक्तम् ॥ ८ ॥

गो० टी०—संश्रुत्येति । एवं करिष्यामीति संश्रुत्य तथाऽकुर्वाणस्येत्यर्थः । इष्टमश्वमेधान्तो यागः पूर्तं वाप्यादिनिर्माणं तदुक्तं 'वापीकूपतडागादिप्रतिष्ठासेतुबन्धनम्। अन्नप्रदानमारामः पूर्तमित्यभिधीयते ' इति । तयोर्वधः निष्फलत्वम् ॥ ८ ॥

९ ] ति० टी०— कृतास्त्रं शिक्षितास्त्रम् । शक्ष्यन्ति सहि-

---

१ सबान्धव इति गो. रा. पाठः । २ विवेश च भयं सुरान् इति गो. रा. पाठः । ३ संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव इति गो. रा. पाठः ।

एष विग्रहवान्धर्म एष वीर्यवतां वरः । एष विद्याधिको लोके तपसश्च परायणम् ॥ १० ॥
एषोऽस्त्रान्विविधान्वेत्ति त्रैलोक्ये सचराचरे । नैनमन्यः पुमान्वेत्ति न च वेत्स्यन्ति केचन ॥ ११ ॥
न देवा नर्षयः केचिन्नामरा न च राक्षसाः । गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ १२ ॥
सर्वास्त्राणि कृशाश्वस्य पुत्राः परमधार्मिकाः । कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३ ॥
तेऽपि पुत्राः कृशाश्वस्य प्रजापतिसुतासुताः । नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४ ॥
जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे । [२]ते सूतेऽस्त्राणि शस्त्राणि शतं परमभास्वरम् ॥ १५ ॥

ष्यन्ते प्रधर्षयितुमिति शेषो वा अग्निना रक्षितममृतमिवेत्युपमा अनेन पुत्रविपत्तिभीत्यपनयः ॥ ९ ॥

रा० टी०—रामदानावश्यकत्वमुक्त्वा रामो राक्षसान् जेतेति बोधयन्नाह—कृतास्त्रमिति । कृतास्त्रं शिक्षितास्त्रोपलक्षितास्त्रशस्त्रमकृतास्त्रं वा कुशिकपुत्रेण विश्वामित्रेण गुप्तं रक्षितमेनं रामं स्ववशीकर्तुमिति शेषः राक्षसाः न शक्ष्यन्ति तत्र दृष्टान्तः ज्वलनेनाग्निचक्रेण गुप्तममृतं यथा अमृतस्य अग्निचक्ररक्षितत्वं भारते व्यक्तम् कृतास्त्रमकृतास्त्रं वेत्यनेन रामस्य नित्यकृतास्त्रत्वं ध्वनितम् ॥ ९ ॥

गो० टी०—कृतेति । कृतास्त्रं शिक्षितास्त्रं न शक्ष्यन्ति धर्षितुमिति शेषः ज्वलनेन अग्निचक्रेण अमृतमग्निचक्रेण सुरक्षितामिति भारते व्यक्तम् ॥ ९ ॥

१० ] ति० टी०—न केवलं विश्वामित्रकृतसंरक्षणेनैव रामस्य दुर्धर्षत्वम्, किंतु स्वतोऽपीत्याह रामविश्वामित्रयोः श्लिष्टवर्णनेन—एष इति । एष रामो विश्वामित्रश्च रामपक्षे विद्याधिकः सहजज्ञानशक्तिः तपसो मननादेः परायणं प्राप्यः विश्वामित्रपक्षे तपस आश्रयः ॥ १० ॥

रा० टी०—विश्वामित्रकोपाभासनिवृत्तये तन्माहात्म्यं बोधयन्नाह—एष इत्यादिभिः । एषः विश्वामित्रः विग्रहवान् शरीरधारी धर्मः एषः वीर्यवतां वरः श्रेष्ठः एषः विद्याधिकः तपसः परायणं च एतेन सर्वऋषिभ्यः अयं विशेषऋषिरिति व्यतिरेकालङ्कारो व्यक्तः ॥ १० ॥

गो० टी०—राज्ञो भयनिवृत्तये विश्वामित्रमाहात्म्यमाह—एष इति । परायणं परमस्थानम् एतत्सदृशः कोपि तपस्वी नास्तीत्यर्थः ॥ १० ॥

११–१२ ] ति० टी०—रामपक्षेऽन्यः पुमान अविद्यावृतः पुमानित्यर्थः विश्वामित्रपक्ष एनमस्त्रगणम् ॥ ११ ॥ १२ ॥

रा० टी०—एष इति । सचराचरे चराचरसहिते त्रैलोक्ये विविधानस्त्रान् एषः विश्वामित्रो वेत्ति अन्यः मदतिरिक्तः पुमान् एवं वर्णितगुणविशिष्टं न वेत्ति अतएव न केचन वेत्स्यन्ति आगमशास्त्रस्यानित्यत्वादिडभावः चो हेतौ अस्त्रानिति लिङ्गव्यत्यय आर्षः । किंच एनं विश्वामित्रज्ञानविषयीभूतास्त्रशस्त्रसमूहमन्यो विश्वामित्रभिन्नः पुमान् न वेत्ति अन्यत्समानम् ॥ ११ ॥

गो० टी०—एष इति । अस्त्रानिति पुंल्लिङ्गत्वमार्षं सचराचर इत्यनेन सामस्त्यं गम्यते एनमेतदवगतमस्त्रसमूहम् ॥ ११ ॥

रा० टी०—वेदनकर्तृत्वाभाववतः विशिष्य बोधयन्नाह—नेति । देवादयोन विदन्तीत्यर्थः नर्षयइति पाठान्तरम् ॥ १२ ॥

गो० टी०—केचनेत्युक्तं प्रपञ्चयति—न देवा इति ॥ १२ ॥

१३ ] ति० टी०—ननु देवाद्यनवगतसर्वास्त्रप्राप्तिर्मुनेः कथमित्यत आह—सर्वेति । कृशाश्वः प्रजापतिष्वेकः । ' परमधार्मिकाः' इति पाठे परमधार्मिकप्रतिष्ठावन्तः इत्यर्थः एतेनापि दुर्लभत्वं ध्वनितम् । दत्ताः शिवेनेति शेषः प्रशासति प्रशास्ति स्मेत्यर्थः शबार्षः ॥ १३ ॥

रा० टी०—विश्वामित्रस्य देवाद्यवेद्यशस्त्रादिवेदितृत्वे कारणं बोधयन्नाह—सर्वास्त्राणीति । सर्वास्त्राणि परमधार्मिकाः अधर्मसंसर्गशून्याः कृशाश्वस्य प्रजापतेः पुत्राः पुत्रत्वं प्राप्तास्ते सर्वे यदायं विश्वामित्रो राज्यं प्रशासति तदा कौशिकाय विश्वामित्राय पुरा पूर्वं प्रथममित्यर्थः दत्ताः शिवेनेति शेषः प्रथमं विश्वामित्राय दत्ता इत्यनेन तत्काले तद्देवाद्यविद्यमानत्वं ध्वनितम् तेन ऋषेः परममहत्वं व्यक्तम् । गणकार्यस्यानित्यत्वात् शपो लुगभावः ॥ १३ ॥

गो० टी०—सर्वाविदितं कथमयं वेत्तीत्यत्राह—सर्वेति । कृशाश्वः प्रजापतिष्वेकः परमधार्मिकाः परमधर्मनिष्ठाः पापिनमस्पृशन्त इत्यर्थः । दत्ताः कृशाश्वेन प्रशासति प्रशास्ति अयमिति शेषः ॥ १३ ॥

१४ ] ति० टी०—अस्त्राणां मातृप्राशस्त्यमप्याह—तेऽपीति प्रजापतिसुते दक्षकन्ये तयोः सुताः नैकरूपा अनेकरूपाः ॥ १४ ॥

रा० टी०—ऋषिमहत्त्वद्योतनाय तदस्त्राणां महत्वं द्योतयन्नाह—तेऽपीति । नैकरूपाः विलक्षणानेकरूपविशिष्टाः महावीर्याः परमपराक्रमवन्तः दीप्तिमन्तः अतिप्रकाशविशिष्टाः अतएव जयावहाः विजयप्रापकाः प्रजापतिसुतासुताः प्रजापतेर्दक्षस्य ये सुते कन्ये तयोः सुताः प्रादुर्भूताः शस्त्रास्त्रसमूहाः कृशाश्वस्य प्रजापतेः पुत्राः आसन्निति शेषः अपिर्हेतौ ॥ १४ ॥

गो० टी०—पितृप्राशस्त्यमुक्त्वा मातृप्राशस्त्यमाह—तेऽपीति । प्रजापतिः दक्षः तस्य सुतयोः कन्ययोः सुताः ॥ १४ ॥

१५ ] ति० टी०—ते सूते सुवाते इत्यर्थः शस्त्राणि परविशसनकर्तृणि ॥ १५ ॥

रा० टी०—अस्त्रसङ्ख्यां तन्मातृनाम च बोधयन्नाह—जयेति । सुमध्यमे दक्षकन्ये जया सुप्रभा च परमभास्वरमतिप्र-

१ नासुरा इति गो. रा. पाठः । २ सुवाते इति गो. रा. पाठः ।

पञ्चाशतं सुताँल्लेभे जया लब्धवरा वरान्। वधायासुरसैन्यानामप्रमेयानरूपिणः ॥ १६ ॥
सुप्रभाजनयच्चापि पुत्रान्पञ्चाशतं पुनः। संहारान्नाम दुर्धर्षान्दुराक्रामान्बलीयसः ॥ १७ ॥
तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः। अपूर्वाणां च जनने शक्तो भूयश्च धर्मवित् ॥ १८ ॥
तेनास्य मुनिमुख्यस्य धर्मज्ञस्य महात्मनः। न किंचिदस्त्यविदितं भूतं भव्यं च राघव ॥ १९ ॥
एवंवीर्यो महातेजा विश्वामित्रो महायशाः। न रामगमने राजन्संशयं गन्तुमर्हसि ॥ २० ॥
तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः। तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २१ ॥

इति मुनिवचनात्प्रसन्नचित्तो रघुवृषभश्च मुमोद पार्थिवाग्र्यः।
गमनमभिरुरोच राघवस्य प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्ड एकविंशः सर्गः ॥ २१ ॥

काशविशिष्टशतमस्त्राणि शस्त्राणि च सुवाते वर्तमानसामीप्ये इति भूते लट् परमभास्वरमित्येकवचनं शतापेक्षया ॥ १९ ॥

गो॰ टी॰—के प्रजापतिसुते तत्राह—जया चेति। सुवाते असुवातां शस्त्राणि विशसनकर्तॄणि परमभास्वरमिति शताभिप्रायेणैकवचनम् ॥ १९ ॥

१६ ] ति॰ टी॰—वरान्श्रेष्ठान्। अप्रमेयान्गुणेयत्तयाऽपरिच्छेद्यान् अरूपिणोऽदृश्यमानरूपान् ॥ १६ ॥

रा॰ टी॰—विभज्य तत्तत्सुतान्प्रदर्शयन्नाह—पञ्चाशतमिति द्वाभ्याम्। असुरसैन्यानां वधाय वरान् श्रेष्ठानमेयानपरिमेयप्रभावान् कामरूपिणः अभीप्सितरूपधारणसमर्थान् पञ्चाशतं सुतान् जयानाम दक्षकन्या पुरा पूर्वं लेभे 'अप्रमेयानरूपिणः' इतिभट्टसंमतः पाठः ॥ १६ ॥

गो॰ टी॰—का कत्यसूयतेत्यत्राह—पञ्चाशतमिति। अमेयान् अपरिच्छेद्यवैभवान् ॥ १६ ॥

१७ ] ति॰ टी॰—संहारानन्वर्थसंहारनामकान् दुर्धर्षान्परैः सोढुमशक्यान् दुराक्रामान् दीर्घआर्षः दुराक्रमानमोघान् ॥ १७ ॥

रा॰ टी॰—सुप्रभेति। दुर्धर्षानतिप्रगल्भान्दुराक्रमान् शत्रुभिः पराभवितुमशक्यान्बलीयसः अतिबलविशिष्टान् संहारान्नाम पञ्चाशतं सुतान् पुनः अनन्तरमेव सुप्रभापि दक्षसुता अजनयत। अपिशब्द एवार्थे संहारानिति अन्वर्थसंज्ञया असुरसंहारार्थमेतेषामपि जन्मेति ध्वनितम् ॥ १७ ॥

गो॰ टी॰—सुप्रभेति। संहारान् अन्वर्थसंहारसंज्ञान् दुर्द्धर्षान् परैरभिभवितुमशक्यान् दुराक्रामान् अमोघानित्यर्थः१७

१८ ] ति॰ टी॰—अपूर्वाणाम्। अस्त्रविद्याविशेषाणामिति शेषः॥ १८ ॥ १९ ॥ २० ॥

रा॰ टी॰—तानिति। धर्मविदेषः कुशिकात्मजः विश्वामित्रः तानि शतमस्त्राणि यथावद्वेत्ति एव चकारेण अन्यान्यपि दिव्यान्यस्त्राणि वेत्ति अपूर्वाणां विलक्षणास्त्राणां जनने उत्पादने भूयोत्यन्तं शक्तः समर्थश्च ॥ १८ ॥

गो॰ टी॰—तानीति। यथावत् कात्स्न्येंन अपूर्वाणामस्त्राणां सः विदितसकलास्त्रः ॥ १८ ॥

रा॰ टी॰—तत्प्रभाववर्णनमुपसंहरन्नाह—तेनेति। हे राघव ! मुनिमुख्यस्य सर्वज्ञस्य अतएव महात्मनः सर्वपूज्यस्वरूपस्यास्य विश्वामित्रस्य तेन हेतुना भूतं *भूतकालकं भव्यं *भविष्यत्कालकं च किंचिदविदितं नैव अपिरेवार्थे क्रियाविशेषणं वा ॥ १९ ॥

रा॰ टी॰—एवमिति। हे राजन्। महायशाः महातेजाः विश्वामित्रः यतः एवंवीर्यः वर्णितप्रभावविशिष्टः ततः रामगमने रामप्रेषणे संशयं गन्तुं प्राप्तुं त्वं नार्हसि ॥ २० ॥

गो॰ टी॰—एवमिति। श्लोकद्वयं स्पष्टम् ॥ १९ ॥ २० ॥

२१ ] ति॰टी॰—वस्तुतो रक्षोनिग्रहे शक्तोऽपि विश्वामित्रस्त्वत्पुत्रानुग्रहायैव तं च याचत इत्याह—तेषामिति। हितमतिरहस्यानन्यदुर्लभानेकविद्याप्रदानादिरूपम् ॥ २१ ॥

रा॰ टी॰—इदानीं त्वदनुग्रहार्थमेव एतदागमनमिति बोधयन्नाह—तेषामिति। कुशिकात्मजः विश्वामित्रः यद्यपि तेषां राक्षसानां निग्रहणे स्वयं शक्तः समर्थस्तथापि तव पुत्रहितार्थाय त्वामुपेत्य प्राप्य अभियाचते चशब्दो यद्यपीत्यर्थे पुत्रहितार्थायेत्युक्त्या सकलां स्वविद्यामस्मै समर्पयितेति ध्वनितम् ॥ २१ ॥

२२ ] ति॰ टी॰—मुमोदेति परस्मैपदमार्षम् चस्त्वर्थे प्रसन्नचित्त इत्युत्तरं योज्यः राघवस्य रामस्य कुशिकात्मजायः रामं दातुं बुद्ध्या अचिन्तयादिति शेषः॥ २२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय
आदिकाव्ये बालकाण्ड एकविंशः सर्गः ॥ २१ ॥

रा॰ टी॰—इतीति। इत्यनेन प्रकारेण मुनिवचनाद्वसिष्ठोक्त्या प्रसन्नचित्तः अतएव भास्वरः अतिप्रभाविशिष्टः प्रथितयशा अतियशस्वी रघुवृषभः रघुकुलश्रेष्ठः मुमोद मुमुदे अतएव

१ नामवरान्पुरेति गो. रा. पाठः। २ अमेयान्कामरूपिण इति गो. रा. पाठः। ३ सुतानिति गो. रा. पाठः। ४ अयं श्लोको गोवि. न धृतः ५ सर्वज्ञस्येति गो. रा. पाठः। ६। भास्वर इति रा. भास्वराङ्ग इति गो. पाठः। * कालिकमिति भाति।

## द्वाविंशः सर्गः ।

वसिष्ठोपदेशाद्रामदाने दशरथस्योद्युक्तत्वम्, स्वस्त्ययनपूर्वकं रामलक्ष्मणयोर्निष्क्रमणम्, विश्वामित्रात्तयोर्बलातिबलाप्राप्तिश्च ।

तथा वसिष्ठे ब्रुवति राजा दशरथः स्वयम् । प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥
कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च । पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथस्तदा । ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३ ॥
ततो वायुः सुखस्पर्शो नीरजस्को ववौ तदा । विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ॥ ४ ॥
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः । शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५ ॥
विश्वामित्रो ययावग्रे ततो रामो महायशाः । काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६ ॥
कलापिनौ धनुष्पाणी शोभयानौ दिशो दश । विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ ॥ ७ ॥

---

कुशिकात्मजाय कुशिकात्मजं प्रसादयितुं राघवस्य रामस्य गमनं बुद्ध्या अभिरुरोच स्वीचकार ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ एकविंशः सर्गः ॥ २१ ॥

**गो० टी०—इतीति** । भास्वराङ्गः भासनशीलः प्रसन्नमुखइति यावत् । मुमोद मुमुदे व्यत्ययात्परस्मैपदम् राघवस्य गमनमभिरुरोच राघवं कुशिकात्मजाय दातुं बुद्ध्याऽचिन्तयदिति उपस्कार्यं पूर्ववत्पुष्पिताग्रावृत्तम् ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

१ ] **ति० टी०—तथेति** । सलक्ष्मणं राममाजुहाव तयोरविनाभाववशानादिति शेषः ॥ १ ॥

**रा० टी०—तथेति** । तथा तेन प्रकारेण वसिष्ठे ब्रुवति सति प्रहृष्टवदनः प्रसन्नमुखः राजा दशरथः सलक्ष्मणं लक्ष्मणसहितं रामं सुतमाजुहाव एतेन गुरुवाक्ये राज्ञः श्रद्धातिशयः सूचितः ॥ १ ॥

**गो० टी०—**अथ प्रसन्नहृदयेन राज्ञा रामविसर्जनं द्वाविंशे—**तथेत्यादि** । सलक्ष्मणं राममिति तयोरविनाभावज्ञानादिति भावः ॥ १ ॥

२–३ ] **ति० टी०—**कृतस्वस्त्ययनं कृतमङ्गलाचरणम् मङ्गलैर्मङ्गलसूचकैर्मन्त्रैः किं च तत्त्वज्ञानप्रतिपादकवाक्यैः अभिमन्त्रितम् बोधितमित्यर्थः तद्बोधनं च योगवासिष्ठे प्रसिद्धम् राजापि तद्वाक्यश्रवणेन सुप्रीतमनाः सन्रामं ददौ ॥ २ ॥ ३ ॥

**रा० टी०—कृतेति** । मात्रा तज्जनन्या दशरथेन पित्रा च कृतस्वस्त्ययनं कृतमाङ्गलिकद्रव्यभोजनालङ्कारादिसमर्पणम् वसिष्ठेन पुरोधसा पुरोहितेन मङ्गलैर्मङ्गलजनकवेदवाक्यैरभिमन्त्रितम् ॥ २ ॥ प्रियं परमप्रीतिविषयीभूतं पुत्रं मूर्ध्नि उपाघ्राय स राजा दशरथः सुप्रीतेनान्तरात्मना मनसा कुशिकपुत्राय विश्वामित्राय ददौ द्वयोरेकत्रान्वयः ॥ ३ ॥

**गो० टी०—**कृतेत्यादिश्लोकद्वयमेकान्वयम् । पित्रा दशरथेन स्वेनेति शेषः कृतस्वस्त्ययनं कृतमङ्गलानुष्ठानं मङ्गलैर्मङ्गलसूक्तैः "स्वस्तिनोमिमीताम्" इत्यादिभिः ॥ २ ॥ ३ ॥

४ ] **ति० टी०—**यात्रायां शकुनमाह—**तत इति** । ववावित्यस्य पृष्ठत इति शेषः विश्वामित्रगतं तत्संबद्धम् राजीवं पद्मम् ॥ ४ ॥

**रा० टी०—**मङ्गलसूचकं शकुनमाह—**तत इति** त्रिभिः । तदा गमनसमये राजीवलोचनं विश्वामित्रसहितं रामं दृष्ट्वा ततः सर्वत्र परिपूर्णः सुखस्पर्शः सुखप्रदस्पर्शविशिष्टः विरजस्कः रजोरहितो वायुर्ववौ ॥ ४ ॥

**गो० टी०—**अथ यात्रायां शुभनिमित्तसंपत्तिं दर्शयति—**तत इत्यादि** । गतमनुगतम् ॥ ४ ॥

५ ] **ति० टी०—**प्रयाते प्रयाणोन्मुखे स्वप्रयोजनोपक्रमाद्देवानां दुन्दुभिस्वनसहिता पुष्पवृष्टिः, शङ्खादिघोषस्तु स्वनगरजः ॥ ५ ॥

**रा० टी०—पुष्पेति** । महात्मनि मुनौ रामे च प्रयाते सति देवदुन्दुभिनिस्वनैः सह महती पुष्पवृष्टिः शङ्खदुन्दुभिनिर्घोषः शङ्खादिनिस्वनश्चासीत् तुशब्दश्चार्थे ॥ ५ ॥

**गो० टी०—पुष्पेति** । प्रयाते प्रयातुमुपक्रान्ते देवदुन्दुभिनिस्वनश्च अवतारप्रयोजनोपक्रमत्वात् शङ्खदुन्दुभिनिर्घोषो दशरथीयः ॥ ५ ॥

६ ] **ति० टी०—**धन्वी धनुर्विद्याकृतश्रमः ॥ ६ ॥

**रा० टी०—**गमनप्रकारं वर्णयन्नाह—**विश्वामित्र इत्यादिभिः** । अग्रे विश्वामित्रो ययौ ततस्तत्पश्चान्महायशाः सर्वत्र परिपूर्णकीर्तिः काकपक्षधरः धन्वी धनुर्धारी रामश्च ययौ । सौमित्रिर्लक्ष्मणस्तं राममन्वगात् अन्वगच्छत् ॥ ६ ॥

**गो० टी०—विश्वामित्र इति** । धन्वी धनुष्मान् शीघ्रादित्वादिनिः ॥ ६ ॥

७ ] **ति० टी०—**कलापिनौ सतूणीरौ शोभयानौ प्रकाशयन्तौ स्वतेजसा शुगभाव आर्षः त्रिशीर्षाविव पन्नगौ

---

१ सुतमिति गो. रा. पाठः । २प्रियमिति गो. रा. पाठः । ३ विरजस्क इति गो. रा. पाठः ।

अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ । अनुयातौ श्रिया दीप्तौ शोभयन्तावनिन्दितौ ॥ ८ ॥
तदा कुशिकपुत्रं तु धनुष्पाणी स्वलंकृतौ । बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ ९ ॥
कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ । अनुयातौ श्रिया दीप्तौ शोभयेतामनिन्दितौ ॥ १० ॥
स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी । अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ॥ ११ ॥
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत । गृहाण वत्स सलिलं माभूत्कालस्य पर्ययः ॥ १२ ॥

स्कन्धस्थितधनुषा पृष्ठबद्धतूणीरेण मस्तकेन च त्रिशीर्षत्वम् यद्वा प्रत्येकं तूणीरद्वयधारणात्रिशीर्षत्वम् धनुषः पाणावुक्तत्वात् अत्रेदं तूणीरादि वैष्णवं गरुडेन दत्तं रामाय ताटकासुबाहुवधाय मारीचस्य समुद्रे पातनाय च, नहि प्राकृतशस्त्रसाध्यमेतत् । तदुक्तं पाद्मे 'पक्षी तार्क्ष्यः समागम्य त्रीणि चास्त्राणि कार्मुकम् । सर्वभूतैरदृश्यः सन्दत्त्वा ताभ्यां पुनर्ययौ ॥' इति अस्त्राणि शस्त्राणि खड्गचर्मतूणीररूपाणि ॥ ७ ॥

रा० टी०–तदेव विशदयन्नाह–कलापिनावित्यादिभिः । कलापिनौ तूणीरधरौ धनुष्पाणी धनुर्युक्तपाणिविशिष्टौ दशदिशः शोभयानौ प्रकाशयन्तौ त्रिशीर्षौ पन्नगौ इव शिरस्त्रयविशिष्टपन्नगसदृशौ अक्षुद्रौ दर्शनमात्रेण क्षुद्रतानिवर्तकौ पितामहमश्विनाविव अनुजग्मतुः त्रिशीर्षत्वं च स्कन्धद्वयस्थिततूणीरद्वयेन शिरसा च पञ्चशीर्षाविवोरगाविति पाठे तत्वंतु उन्नतस्कन्धद्वयेन शिरसा चेति बोध्यम् सार्द्धश्लोक एकान्वयी आगमशास्त्रस्यानित्यत्वान्मुगभावः 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः ॥ ७ ॥

गो० टी०–कलापिनावित्यादिसार्धश्लोक एकान्वयः कलापिनौ तूणीरधारिणौ 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । शोभयानौ प्रकाशयन्तौ आनेमुगभावश्छान्दसः विश्वस्य मित्रं विश्वामित्रः "मित्रे चर्षौ" इतिविश्वशब्दस्य दीर्घः श्रुतिश्च "तस्यौविश्वं मित्रमासीद्यदिदं किंच तस्माद्विश्वामित्र इत्याचक्षत" इति । प्रत्येकं तूणीरद्वयधारणाच्छिरोभ्यां च त्रिशीर्षाविवेत्युपमानं धनुस्तूणीरशरधरत्वाद्वा अक्षुद्रौ अनल्परूपवीर्यादिवैभवौ ॥ ७ ॥

८–१० ] ति० टी०–अक्षुद्रावनल्परूपवीर्यादिमन्तौ शोभयन्तौ विश्वामित्रमिति शेषः ॥ ८ ॥ बद्धं गोधाचर्मकृतमङ्गुलित्राणं ययोस्तौ गोधा हस्तत्राणमिति कश्चित् अङ्गुलित्राणस्य पौनरुक्त्यापत्तेस्तच्चिन्त्यम् ॥ ९ ॥ शोभयेतामित्यडभावश्छान्दसः ॥ १० ॥

रा० टी०–इदानीं ताभ्यां मुनेः परमा शोभा जातेति बोधयन्नाह–तदेतिसार्धश्लोकद्वयेन । तदागमनकाले धनुष्पाणी धनुर्युक्तपाणिविशिष्टौ स्वलङ्कृतौ अप्राकृतालङ्कारविशिष्टौ बद्धं गोधाङ्गुलित्राणं गोधाचर्मनिर्मिताङ्गुलित्राणं याभ्याम्, खड्गवन्तौ खड्गविशिष्टौ महाद्युती परमप्रकाशविशिष्टौ चारुवपुषौ अतिसुन्दरशरीरौ अनुयातौ विश्वामित्रानुगन्तारौ श्रिया परस्परशरीरकान्त्या दीप्तौ प्रकाशितौ अनिन्दितौ निन्दाकर्तृत्वाभावात्रन्तौ पावकी कुमराविव पावकप्रादुर्भूतस्कन्धविशाखसदृशौ कुमारौ भ्रातरौ रामलक्ष्मणौ अचिन्त्यं चिन्तयितुमशक्यं स्थाणुं देवमिव देवशम्भुसदृशं कुशिकपुत्रं विश्वामित्रं शोभयेताम् अशोभयेताम् अड्विरहः आगमशास्त्रस्यानित्यत्वात् ॥ ८ ॥ ९ ॥ १० ॥

गो० टी०–तदेत्यादिसार्द्धश्लोकद्वयमेकान्वयम् । बद्धं गोधाचर्मकृताङ्गुलित्राणं ययोस्तौ तथा गोधा हस्तत्राणमित्येके द्युतिः सामान्यशोभा श्रीः विशेषशोभा शोभयेतां व्यत्ययेन लङर्थे लोट् विश्वामित्रमनुयातौ रामलक्ष्मणौ स्थाणुमनुयातौ कुमाराविवाशोभेतामित्यर्थः । स्थाणुं रुद्रं पावकी पावकात्प्रादुर्भूतौ स्कन्दविशाखौ 'ततोभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः । स्कन्दो विशाखः शाकश्च नैगमेषश्च पृष्ठतः' इति भारतोक्तेः । अचिन्त्यम् अचिन्त्यवैभवम् ॥ ८ ॥ ९ ॥

११ ] ति० टी०–स्थाणुं रुद्रम् । पावकी स्कन्दविशाखौ अध्यर्धयोजनमर्धाधिकयोजनम्, षट्क्रोशमिति यावत् ॥ ११ ॥

रा० टी०–अध्यर्द्धेति । विश्वामित्रः सरय्वा दक्षिणे तटे अध्यर्धयोजनं सार्द्धयोजनं गत्वा रामेति मधुरां वाणीमभ्यभाषत ॥ ११ ॥

गो० टी०–अध्यर्द्धेति । अधिकमर्द्धं यस्मिन् तदध्यर्द्धं अध्यर्द्धं च तत् योजनं च अध्यर्द्धयोजनं सार्द्धं योजनमिति यावत् । तावद्दूरगमनेन बालयोः क्षुत्तृट्पीडा मा भूदिति तन्निवर्तकविद्याद्वयोपदेशायाह्वयते–रामेति । मधुरां भक्तिपूर्वकोच्चारणाद्रामनाम्नः श्रवणानन्दकरत्वाच्च ॥ १० ॥

१२ ] ति० टी०–तावद्दूरगमनेन बालकयोः क्षुत्तृट्पीडाप्रादुर्भावस्यावश्यकत्वान्महर्षिर्विनाप्यन्नं परमतृप्तये दिव्ये विद्ये उपदेष्टुमाह–वत्स रामेत्यादि । सलिलं गृहाण शुद्धाचमनं कुरु कालस्यान्नभोजनकालस्य पर्ययोऽतिक्रमः ॥ १२ ॥

रा० टी०–तद्भाषणमेवाह–गृहाणेति । हे वत्स ! सलिलं त्वं गृहाण आचमनं कुर्वित्यर्थः तत्र हेतुः कालविपर्ययः अवश्यकर्त्तव्यकालातिक्रमः माभूत् तथा अनन्तरं मन्त्रग्रामं बलां बलाख्यामतिबलामतिबलाख्यां विद्यां गृहाण तथाशब्द आनन्तर्ये ॥ १२ ॥

गो० टी०– गृहाणेति । सलिलं गृहाण शुद्धाचमनं कुर्वित्यर्थः विपर्ययोऽतिक्रमः विलम्ब इति यावत् मन्त्रग्रामं मन्त्रसमष्टिरूपमिदं बलातिबलयोः प्रत्येकं विशेषणम् ॥ ११ ॥

१ इदमर्धं रा. गो. पुस्तकयोर्नास्ति ।

मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा । न श्रमो न ज्वँरो वा ते न रूपस्य विपर्ययः ॥ १३ ॥
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः । न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन ॥ १४ ॥
त्रिषु लोकेषु वा राम नँ भवेत्सदृशस्तव । बँलामतिबलां चैव पठतस्तात राघव ॥ १५ ॥
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये । नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १६ ॥
एतद्विद्याद्वये लब्धे नँ भवेत्सदृशस्तव । बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १७ ॥
क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलां चैव पठतस्तात राघव ॥ १८ ॥
[ गृँहाण सर्वलोकस्य गुप्तये रघुनन्दन ]
विद्याद्वयमधीयाने यशश्चाथ भवेद्भुवि । पितामहसुते ह्येते विद्ये तेजःसमन्विते ॥ १९ ॥

१३ ] ति० टी०—मन्त्रग्रामं बलाविद्यासंज्ञकं मन्त्रसमूहम् तथातिबलासंज्ञकं च । अन्ये तु—प्रागुक्तदिव्यास्त्रशतरूपं मन्त्रसमूहं तथा प्रकृतोपयोगिन्यौ बलातिबलाख्ये च विद्ये इत्यर्थः परन्त्वत्र बलातिबलयोरेव दानम् अन्येषां तु दानमग्रे भविष्यतीत्याहुः । गृहाण त्वमित्युपलक्षणं लक्ष्मणस्यापि क्षुत्पिपासाक्षान्तिरूपफलस्योभयोरपि दर्शनादपेक्षणाच्च श्रमो बहुदूरगमनादौ तन्मूलको ज्वरोऽपि न विपर्ययोऽन्यथाभावः तद्विद्याजपेन भविष्यतीति शेषः ॥ १३ ॥

रा० टी०—बलाऽतिबलाविद्याप्रभावं वर्णयन्नाह—न श्रम इत्यादिभिः । तवानघ तवानां सपीपं प्राप्तानां न अघं यस्मात्तत्संबोधनं हे तवानघ आश्रितपापनिवर्तक राम ! अते विद्ययोः प्राप्तौ सत्यां श्रमो न भ्रमश्च न रूपस्य विपर्ययश्च न नैर्ऋताः राक्षसाः सुप्तं प्रमत्तमनवधानं वा न धर्षयिष्यन्ति पराभवितुं प्रगल्भा भविष्यन्ति लडुपात्तकालाविवक्षा "कर्तुरीप्सततमम्" इत्यादाविव एको वाशब्दश्चार्थे ॥ १३ ॥

गो० टी०—तद्ग्रहणफलमाह—न श्रम इत्यादि । विपर्ययः अन्यथाभावः भविष्यतीति शेषः सुप्तं त्वामिति शेषः ॥ १२ ॥

१४ ] ति० टी०—प्रमत्तमकृताचमनादिकम्, धर्षणमभिभवः अस्तीति वर्तमानसामीप्ये भविष्यति लट् सर्वत्र तद्विद्यालाभो हेतुः ॥ १४ ॥

रा० टी०—न बाह्वोरिति । बाह्वोः विद्याधारिजनभुजयोर्वीर्ये सदृशः त्रिषु लोकेषु पृथिव्यां त्रिलोकीस्थाने कश्चन जातो नास्ति न च भविष्यति अभवदित्यस्याप्युपलक्षणमेतत् । श्लोकद्वयमेकान्वयि वाशब्दश्चार्थे ॥ १४ ॥

गो० टी—न बाह्वोरिति । बलामतिबलां च पठतस्तवेति शेषः अस्ति स्यादित्यर्थः । त्रिष्वित्यत्र सर्वगुणैः निःसीमत्वमुच्यते ॥ १३ ॥

१५ ] ति० टी०—न केवलं पृथिव्यामेवेत्याह—त्रिष्वित्यादि ॥ १५ ॥

रा० टी०—तदेव विशदयन्नाह—बलामिति । हे राघव ! हे अनघ ! यद्यपि लोके प्राकृताप्राकृतजनेषु सौभाग्ये तव समो नास्ति न च भविता दाक्षिण्ये सामर्थ्यातिशये च समो न ज्ञाने ज्ञापने समो न बुद्धिनिश्चये बुद्धिजन्ये निश्चये समो न ॥१५॥

१६ ] ति० टी०—ज्ञानं तत्त्वज्ञानम् बुद्धिनिश्चय ऐहिकविषयः वादिनं प्रतिवक्तव्ये उत्तर इत्यर्थः ॥ १६ ॥

रा० टी०—प्रतिवक्तव्ये उत्तरे समो न तथापि ते तव बलामतिबलां च लब्धे मदुपदेशादपि प्राप्ते एतद्विद्याद्वये तः अमृतहेतुभूतस्त्वं पथि मार्गे पठ एतेन स्वमर्यादापालकत्वं स्मरेति प्रार्थना सूचिता । तेन ऋषेः परमधार्मिकत्वं व्यक्तम् । कथमनयोरेतादृशः प्रभाव इत्यत आह यतः बला अतिबला च विद्ये सर्वज्ञानस्य मातरौ हेतू एवोऽनुक्तसमुच्चयार्थस्तेन सकलातिशयैश्वर्यहेतुत्वसङ्ग्रहः 'एतद्विद्याद्वये लब्धे न भवेत्सदृशस्तव' इति भट्टपाठः ॥ १६ ॥

गो० टी०—नेति । सौभाग्ये सौन्दर्ये दाक्षिण्ये सामर्थ्ये बुद्धिनिश्चये बुद्ध्या कार्यनिश्चये समः भवतीति शेषः ॥ १४ ॥

१७–१८ ] ति० टी०—तव सदृशो न केनापि गुणेनेति शेषः सर्वज्ञानस्य मातराविति अप्रतिभामूलक्षुधादिनिवृत्तिसामर्थ्यवत्त्वात्सर्वज्ञानजनके इत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०—पथि पाठस्य फलमाह—क्षुदिति । हे राघव नरोत्तमराम पथि बलामतिबलां च पठतः पुरुषस्य ते प्रसिद्धे क्षुत्पिपासे नैव भविष्येते अत्र प्रकरणे प्रातिभासिकोऽर्थो न युज्यते "आनन्दरूपममृतं यद्विभाति" 'यो वेत्ति भौतिकं देहं रामस्य परमात्मनः । स सर्वस्माद्बहिः कार्यः श्रौतस्मार्तविधानतः' इत्यादिश्रुतिस्मृतिभिः प्रतिषिद्धभौतिकत्वस्यापत्तेः १७

गो० टी०—सामान्येनोपसंहरति—एतदिति । ते समः नास्ति न भविता चेत्यर्थः मातरौ कारणभूते ॥ १५ ॥

गो० टी०—क्षुदिति । ते भविष्येते भविष्यतः ॥ १६ ॥

१९ ] ति० टी०—विद्याद्वयमधीयाने त्वयीति शेषः 'यशश्चाप्यतुलं भुवि' इति पाठे भविष्यतीत्यपि शेषः । तयोर्विद्ययोस्तादृशसामर्थ्ये कारणमाह—पितामहेत्यादि । तन्निर्मितत्वात्तत्सुते ॥ १९ ॥

१ श्रमोनेति गो. रा. पाठः । २ भविष्यति तवानघेति रा. पाठः । ३ इदमर्धं गो. पुस्तके नास्ति । ४ पथीति रा. पाठः । ५ भविता नास्ति ते सम इति गो. रा. पाठः । ६ पथीति गो. रा. पाठः । ७ इदमधिकं गो. रा. पुस्तकयोः ।

प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि पार्थिव । कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः ॥ २० ॥
तपसा संभृते चैते बहुरूपे भविष्यतः । ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ॥ २१ ॥
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः । विद्यासमुदितो रामः शुशुभे भीमविक्रमः ॥ २२ ॥
सहस्ररश्मिर्भगवाञ्शरदीव दिवाकरः । गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजः॥२३॥
ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥

दशरथनृपसूनुसत्तमाभ्यां तृणशयनेऽनुचिते तदोषिताभ्याम् ।
कुशिकसुतवचोनुलालिताभ्यां सुखमिव सा विबभौ विभावरी च ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

रा० टी०–विद्याग्रहणे लोकोपकृतिरस्तीत्याह–गृहाणेति । हे रघुनन्दन सर्वलोकस्य गुप्तये रक्षायै विद्याद्वयं गृहाण तत्र हेतुः यतः त्वयि विद्याद्वयमधीयाने सति भुवि सर्वलोके अतुलं यशः चकारेण प्रतापश्च भविष्यत्येव अपिरेवार्थे सर्वलोकस्य गुप्तये इत्यनेन स्वतःसिद्धनित्यसकलपरमकल्याणगुणकस्य सर्वेश्वरेश्वरस्य सर्वविद्यानियन्तुर्विद्यया न प्रयोजनमिति ध्वनितम् ॥ १८ ॥

रा० टी०–सिंहावलोकनन्यायेन विद्ययोः सर्वविद्याहेतुत्वे कारणं वदन्नाह–पितामहेति । हे काकुत्स्थ ! हे धार्मिक ! तेजस्समन्विते परमतेजोविशिष्टे एते द्वे विद्ये पितामहसुते ब्रह्मणः पूर्वं प्रादुर्भूते अतः सदृशः अनयोर्विद्ययोर्योग्यस्त्वमतस्तव तुभ्यं दातुं समर्पयितुं मे मनोऽस्तीति शेषः हिर्हेतौ ॥१९॥

गो० टी०–विद्येति । अधीयाने त्वयि भवेदिति शेषः तेजःसमन्विते प्रभावसमन्विते ॥ १७ ॥

२० ] ति० टी०–प्रदातुं मम बुद्धिरिति शेषः सदृशः तद्दानयोग्य इत्यर्थः एते एतद्विद्याप्रदानयोग्याः बह्विति लुप्तविभक्तिकम् बहव इत्यर्थः विपुला इति यावत् ॥ २० ॥

रा० टी०–काममिति । एते विद्याद्वयकार्यत्वेनोक्ता बहुगुणाः वीरे त्वयि कामं यद्यपि सन्ति अत्र संशयो न तथापि तपसा संभृते मया तपोबलेन अर्जिते एते द्वे विद्ये बहुरूपे त्वदुपदेशाद्विस्तृते भविष्यतः अतः इमे विद्ये त्वया ग्रहीतव्ये इत्यर्थः चकारो यद्यपीत्यर्थे ॥ २० ॥

गो० टी०–प्रदातुमिति । तव प्रदातुं त्वमेव सदृशो नान्य इति योजना ॥ १८ ॥

गो० टी०–एतदुपपादयति–काममिति । एते पूर्वोक्ताः सौभाग्यादयः कामं प्रकामं त्वयि सन्ति यद्यपि तथापि तपसा संभृते लब्धे एते विद्ये त्वदुपदेशात् बहुरूपे लोके बहुधा विस्तृते भविष्यतः ॥ १९ ॥

२१ ] ति० टी०–तपसा मदीयेन संभृते पूर्णे बहुरूपे शास्त्रोक्तफलादप्यधिकफलप्रदे यद्वा तपसा सर्वतपःप्राप्यत्वेन तपोरूपेण भवता संभृते धृते इत्यर्थः जलं स्पृष्ट्वाचम्य ॥२१॥

रा० टी०–विश्वामित्राज्ञापनानन्तरकालिकं रामवृत्तमाह–तत इति । ततः विश्वामित्राज्ञापनानन्तरं प्रहृष्टवदनः प्रसन्नमुखः शुचिः सर्वपवित्रत्वहेतुः रामः जलं स्पृष्ट्वा आचम्येत्यर्थः भावितात्मनः भावितः परिशीलितः आत्मा ईश्वरनियन्ता येन तस्मात् महर्षेस्ते बलाऽतिबले विद्ये जग्राह ॥ २१ ॥

गो० टी०–तत इति । जलं स्पृष्ट्वा आचम्येत्यर्थः भावितात्मनः ध्यातात्मस्वरूपात् ॥ २० ॥

२२ ] ति० टी०–विद्यासमुदितो विद्यासंबद्धः ततो विक्रमवानपि विद्यासंबन्धादधिकविक्रम इत्यर्थः ॥ २२ ॥

रा० टी०–विद्येति । विद्यासमुदितो विश्वामित्रोपदिष्टविद्यासंयुक्तः अतएव भूरिविक्रमः विद्याप्रभावं प्रकटयितुं प्रकटीकृतस्वीयबहुप्रतापः रामः शरदि शरत्काले सहस्ररश्मिर्भगवान् दिवाकर इव शुशुभे ॥ २२ ॥

गो० टी०–विद्येति । विद्यासमुदितः समुदितविद्यः लब्धविद्य इति यावत् ॥ २१ ॥

२३ ] ति० टी०–सहस्रेत्यादि पूर्वान्वयि । कुशिकात्मजो विश्वामित्रः । गुरुकार्याणि गुरुविषयाणि कार्याणि पूर्वोत्थायी पश्चात्संनिवेशीत्यादीनि तानि सर्वाणि वियुज्य उपदिश्येत्यर्थः सप्तम्यन्तपाठे गुरुकार्याणि पादोपसंग्रहणादीनि कुशिकात्मजे नियुज्य कृत्वेत्यर्थः । सरय्वां तत्तीरे ॥ २३ ॥

रा० टी०–गुर्विति । गुरुकार्याणि गुरौ विधेयानि सर्वाणि पादपीडनादीनि कुशिकात्मजे विश्वामित्रे नियुज्य तां रजनीं तत्र सरय्वां सरयूतीरे त्रयः रामप्रभृतयः सुसुखं यथास्यात्तथा ऊषुः ॥ २३ ॥

गो० टी०–गुर्विति । गुरुकार्याणि गुरौ कर्तव्यानि पादसंवाहनादीनि कुशिकात्मजे नियुज्य कृत्वा त्रयः स्वयं तौ चेति त्रयः तत्र सरय्वां सरयूतीरे सुसुखमूषुः यद्वा एतदर्धस्य पूर्वेणाऽन्वयः कुशिकात्मजे गुरुकार्याणि नियुज्य विद्यासमुदितो रामः शुशुभ इति ॥ २२ ॥

२४ ] ति० टी०–दशरथेत्यादि षष्ठ्यर्थे चतुर्थ्यः । तृणाश-

---

१ धार्मिकेति गो. रा. पाठः । २ भूरिविक्रम इति गो. रा. पाठः । ३ कुशिकात्मजे इति गो. रा. पाठः । ४ सुसुखं गो. रा. पाठः ॥

# त्रयोविंशः सर्गः ।

विश्वामित्रस्य रामलक्ष्मणाभ्यां संवादः, कामाश्रमकथनम्, नानाविधकथालाभश्च ।

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः । अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १ ॥
कौसल्या सुप्रजा राम पूर्वा संध्या प्रवर्तते । उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २ ॥

उचितशयनोषितयोरपि रात्रेः सुखव्युष्टत्वे हेतुः कुशिकसुतवचोनुलालितत्वं विबभौ व्युष्टेति यावत् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०—तत्कालस्यापि शोभनत्वं वर्णयन्नाह—दशरथेति । अनुचिते गुरुशुश्रूषणमर्यादापालकानां परमोचिते तृणशयने उषिताभ्यां कुशिकसुतवचोनुलालिताभ्यां दशरथप्रसूनुसत्तमाभ्यां रामलक्ष्मणाभ्यां सुखं यथास्यात्तथैव सा विभावरी रात्रिरपि तदा शयनकाले बभौ शुशुभे इव शब्द एवार्थे ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०—दशरथेति । चतुर्थ्यर्थे "बहुलं छन्दसि" इति षष्ठ्यर्थे चतुर्थी दशरथपुत्रयोर्विभावरी सुखमिव विबभौ प्रभातेत्यर्थः इवशब्दो वाक्यालंकारे अत्र रामाय विद्यादानं लक्ष्मणस्याप्युपलक्षणं पश्चाद्रामो वा लक्ष्मणायोपदिदेशेति पूर्ववत्पुष्पिताग्रावृत्तम् ॥ २३ ॥

इति श्रीगोविंदराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

१ ] ति० टी०—प्रभातायामिति । पर्णसंस्तरे मृदुपर्णादिपरिकल्पिते शयनीये । पूर्वश्लोके तृणशयन इत्युपलक्षणं बोध्यम् ॥ १ ॥

रा० टी०—रात्रिव्यतीतानन्तरकालिकं वृत्तमाह—प्रभातायामिति । शर्वर्यां रात्रौ प्रभातायां प्रभातत्वं प्राप्तायां महामुनिः विश्वामित्रः पर्णसंस्तरे तृणमिश्रपर्णकल्पितासने शयानं काकुत्स्थमभ्यभाषत संस्तरस्य तृणपर्णोभयनिर्मितत्वेन तृणशयने इति पूर्वोक्त्या न विरोधः ॥ १ ॥

गो० टी०—अथैषामङ्गदेशप्राप्तिं पूर्ववृत्तकथनव्याजेन व्यञ्जयति त्रयोविंशे—प्रभातायामित्यादि । पर्णसंस्तरे पर्णमयास्तरणे पूर्वसर्गान्ते तृणशयनस्योक्तत्वादत्र तृणमिश्रपर्णशयन इति बोध्यम् ॥ १ ॥

२ ] ति० टी०—कौसल्येति । हे राम त्वया पुत्रेण कौसल्या सुपुत्रा शोभनपुत्रवती अतस्तादृशस्य सुपुत्रस्य तवास्मिन्समये निद्रानुचिता यतः पूर्वा संध्या प्रवर्तते प्रातःसंध्या प्रवर्तते अत उत्तिष्ठ दैवं देवताध्यानम् आह्निकं शौचादिक्रिया ॥ २ ॥

रा० टी०—तद्भाषणमेवाह—कौशल्येति । कौशल्यासुप्रजराम कौशल्यायाः सुप्रजास्तु प्रादुर्भूतः स एव राम इति कर्मधारयः तत्संबोधनम् हे नरशार्दूल पुरुषश्रेष्ठ ! पूर्वा सन्ध्या प्रातःसंध्या प्रवर्तते अतः त्वमुत्तिष्ठ दैवं देवसंबन्धि आह्निकमहःसन्ध्यानिर्वर्त्यं स्वशक्तिस्मरणादि त्वया कर्तव्यम् ॥ २ ॥

गो० टी०—उभयप्रबोधनार्थमागतो विश्वामित्रो रामस्य 'स मया बोधितः श्रीमान् सुखसुप्तः परंतपः' इत्युक्तरीत्या निद्राकालिकश्रियमवलोक्य तदासक्तः सन् स्वागमनकार्यं विस्मृत्य इमं प्रसूतवती कौसल्या किं वा तपस्तप्तवतीति विस्मयते । कौसल्या सुप्रजाः बोधनकाले विस्मितमुखो मुनिरासीत् शोभना प्रजा पुत्रो यस्याः सा सुप्रजाः "नित्यमसिच् प्रजामेधयोः" इत्यसिच् त्वज्जननी कौसल्या सुपुत्रा यद्वा स्वगतवचनम् एतज्जननी कौसल्या सुप्रजाः 'कौसल्या शुशुभे तेन पुत्रेणामिततेजसा'। इतिवत् । यद्वा कौसल्यायाः सुप्रजा इति संबोधनं कर्मधारयेऽप्यार्षोऽसिच् "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इतिदीर्घः "सुपां सुलुक्" इत्यादिना पूर्वसवर्णदीर्घो वा परशुरामव्यावृत्त्यर्थं विशेषणम् । कौसल्यादशरथयोरुभयोरपि तपःफलत्वेनावतीर्णत्वेऽपि कथं कौसल्या सुप्रजा इत्युक्तिः । उच्यते ' माता पुत्रस्य भूयांसि कर्माण्यारभते' इत्युक्तरीत्या "मातृदेवो भव । पितृदेवो भव" इतिवन्मातृप्राधान्योक्तेः 'पितुः शतगुणं माता'इतिस्मृतेश्च । यद्वा कौसल्यादशरथयोर्महदन्तरमस्ति दशरथो हि 'अहं वेद्मि महात्मानम्' इति परत्वेन निवेद्यमानेऽपि तदकिंचित्कृत्य दुःखेनोत्पादितश्रायं न रामं नेतुमर्हसीति रामे केवलं पुत्रत्वं मन्वानो वसिष्ठसंधुक्षितहृदयो रामं प्रेषितवान् कौसल्या तु केवलवात्सल्यपराऽपि द्रुतं सादरं प्रेषितवती तदिदं तारतम्यमवलोक्य मुदितहृदयो मुनिराह—कौसल्या सुप्रजा इति । मातृवाक्यं पितृवाक्यं च पालनीयमित्यमुं धर्मं लोके प्रवर्तयितुं स्वयं तदनुष्ठातृत्वेन सुप्रजा इत्युक्तम् । अथ क्रमेण गुणान्तरावगाहाभिस्तीर्ये प्रबोधयति रामेत्यादि रामेत्यनेन स्वापकालिकसौन्दर्यमुच्यते पूर्वा सन्ध्या प्रवर्तते पूर्वा संध्या दिवाकरमिव रामदिवाकरं त्वां कौसल्या जनितवतीति भावः । यद्वा मातृवत्पूर्वसंध्यामप्युपलालयेति । यद्वा पूर्वा सन्ध्या प्रवर्तते आदित्यस्येव भवतोऽयं विरोधिनिरसनारम्भसमय इति । यद्वा पूर्वा संध्या प्रवर्तते अज्ञानान्धकारो गतः भगवत्साक्षात्कारो मे जातः अद्य मे सुप्रभातमिति । यद्वा जगतः सर्वस्य भगवदवतारात्सत्वोद्रेककालो जातः अद्य मे सफलं जन्म सुप्रभाता च मे निशा।

१ काकुत्स्थं शयानमिति गो. रा. पाठः ।

तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ । स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३ ॥
कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् । अभिवाद्यातिसंहृष्टौ गमनायाभितस्थतुः ॥ ४ ॥
तौ प्रयान्तौ महावीर्यौ दिव्यां त्रिपथगां नदीम् । ददृशाते ततस्तः सरय्वाः संगमे शुभे ॥ ५ ॥
तत्राश्रमपदं पुण्यमृषीणां भावितात्मनाम् । बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६ ॥
तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् । ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७ ॥
कस्यायमाश्रमः पुण्यः को न्वस्मिन्वसते पुमान् । भगवञ्छ्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥
तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुंगवः । अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९ ॥

---

यदुक्तिद्राब्जपत्राक्षं विष्णाद्रक्ष्याम्यहं मुखम्' उत्तिष्ठ निद्राश्रीरवलोकिता प्रबोधश्रियमप्यवलोकितुमिच्छामि नरशार्दूल नरश्रेष्ठ नरश्रेष्ठतया भवता भवतापि सन्ध्योपास्या 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इत्युक्तेः । उत्तिष्ठ नरशार्दूल आश्रितविरोधिनिरसनशीलस्य किं निद्रावकाशोऽप्यस्ति नरशार्दूल मखज्ञनिर्वाहक । उत्थानप्रयोजनमाह—कर्तव्यं दैवमाह्निकं देवेन सर्वेश्वरेण विहितं नित्यकर्म कर्तव्यम् यद्वा देवशब्दो भवदर्थकः भवदीयमाह्निकं भवदाज्ञारूपं कर्म मया कर्तव्यं तत्स्वीकुर्वित्यर्थः । यद्वा दैवं देवाराधनभूतमाह्निकमह्ना निर्वर्त्यमेकसुत्यात्मकं कर्म यज्ञात्मकं कर्तव्यमित्यर्थः ॥ २ ॥

३ ] ति० टी०—स्नात्वा कृतोदकौ कृतार्घ्यदानौ इदं तावत्पर्यन्तकर्तव्यक्रियामात्रोपलक्षणम् । परमं जपं सावित्रीम् ॥३॥

रा० टी०—तस्येति । तस्य प्रसिद्धस्य ऋषेः विश्वामित्रस्य परमोदारं वचो वचनं श्रुत्वा स्नात्वा कृतोदकौ कृतमुदकमुदकसंबन्ध्यर्घप्रदानादिकं याभ्यां तौ वीरौ नरोत्तमौ रामलक्ष्मणौ परमं सर्वश्रेष्ठं जपं जपनीयं गायत्र्यादि जेपतुः ॥ ३ ॥

गो० टी०—तस्येति । परमोदारं परमगम्भीरमित्यर्थः कृतोदकौ कृतार्घ्यप्रक्षेपौ यद्वा कृतदेवर्षितर्पणौ जप्यत इति जपः गायत्रीमिति यावत् । तस्या एव परमत्वात् 'न सावित्र्याः परं जप्यम्' इति वचनात् ॥ ३ ॥

४ ] ति० टी०—अभितस्थतुः संमुखौ स्थितावित्यर्थः ॥४॥

रा० टी०—कृताह्निकाविति । कृताह्निकौ संपादितपूर्वसंध्याकर्माणौ महावीर्यौ समातिशयरहितवीर्यविशिष्टौ अभिसंहृष्टौ नित्यानन्दविशिष्टौ रामलक्ष्मणौ तपोधनं विश्वामित्रमभिवाद्य प्रणम्य गमनाय गमनं कर्तुमुपतस्थतुः गुरोराज्ञां प्राप्य जग्मतुरित्यर्थः ॥ ४ ॥

गो० टी०—कृतेति । अह्नि भवमाह्निकम् "कालाट्ठञ्" कृतप्रातःकृत्यावित्यर्थः सन्ध्योपासनब्रह्मयज्ञसमिदाधानादि प्रातःकृत्यानि अभितस्थतुः अभिमुखं स्थितौ ॥ ४ ॥

५ ] ति० टी०—प्रयान्तौ गच्छन्तौ ॥ ५ ॥

रा० टी०—ताविति । तदा तस्मिन्काले प्रयातौ तस्मात्स्थानाद्गुरुणा सह प्रचलितौ महावीर्यौ रामलक्ष्मणौ तत्र प्रसिद्धे शुभे सकलमङ्गलमूले सरय्वाः संगमे सरयूगङ्गासंगमप्रदेशसमीपे दिव्यां प्राकृतविलक्षणां त्रिपथगां नदीं ददृशाते ॥५॥

गो० टी०—ताविति । ततस्तस्माद्देशात् प्रयातौ तत्र प्रसिद्धे सरय्वाः संगमे त्रिपथगां गङ्गानदीं ददृशाते ॥ ५ ॥

६ ] ति० टी०—तत्र गङ्गासरयूसंगमप्रदेशे तप्यतां तपतां यक्छान्दसः ऋषीणामाश्रमपदं ददृशाते इत्यनुकर्षः ॥ ६ ॥

रा० टी०—तत्रेति । बहुवर्षसहस्राणि परमं तपस्तप्यतां तपतामत एव उग्रतेजसामृषीणामाश्रमपदं श्रमनिवर्तकस्थानं तत्र गङ्गासरयूसंगमसमीपे ददृशाते इत्यनुकृष्यते संज्ञापूर्वकविधेरनित्यत्वान्न परस्मैपदम् ॥ ६ ॥

गो० टी०—तत्रेति । तत्र गङ्गासरय्वोः संगमे ददृशाते इत्यनुषज्यते तप्यतां तपतां कर्तरि यक्छान्दसः ॥ ६ ॥

७ ] ति टी०—तं परमरमणीयम् ॥ ७ ॥

रा० टी०—तमिति । पुण्यं तमाश्रमं स्थानं दृष्ट्वा परमप्रीतौ राघवौ रामलक्ष्मणौ महात्मानं तं विश्वामित्रमिदं वक्ष्यमाणं वचः ऊचतुः ॥ ७ ॥

गो० टी०—तमिति । स्पष्टम् ॥ ७ ॥

८ ] ति० टी०—वसते वसति तङ् छान्दसः ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—कस्येति । हे भगवन् पुण्यः निर्मलः अयमाश्रमः कस्य अस्मिन्नाश्रमे कः पुमान्वसते वसति इति श्रोतुमावामिच्छावः तत्र हेतुः नौ आवयोः परं कौतूहलमाश्चर्यं भातीति शेषः । हुरित्यर्थे हिर्हेतौ ॥ ८ ॥

गो० टी०—कस्येति । वसते वसति ॥ ८ ॥

९ ] ति० टी०—प्रहस्य बालकवचनश्रवणजसंतोषाद्धासः सर्वज्ञोऽप्येवं नाटयतीति वा यस्य पूर्वो यस्य पूर्वकालाधिष्ठेयोऽभूत्स श्रूयतामित्यन्वयः ॥ ९ ॥

रा० टी०—तयोरिति । तयोः रामलक्ष्मणयोः तत्प्रश्नरूपं वचनं श्रुत्वा प्रहस्य मुनिपुंगवो विश्वामित्रः अब्रवीत् तद्वचनमेवाह—हे राम ! यस्यायं पूर्वं आश्रमः सः श्रूयताम् ॥ ९ ॥

गो० टी०—तयोरिति । प्रश्नमाधुर्यात् प्रहासः यद्वा मान्मथभावनटनात् यस्यायमाश्रमः स श्रूयतामिति योजना रामेति संबोधनं प्राधान्यात् ॥ ९ ॥

---

१ प्रयाताविति गो. रा. पाठः । २ उग्रतेजसामिति गो. रा. पाठः ।

कन्दर्पो मूर्तिमानासीत्काम इत्युच्यते बुधैः । तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ १० ॥
कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् । धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११ ॥
[1]अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन । व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥ १२ ॥
तत्र गात्रं हतं तस्य निर्दग्धस्य महात्मनः । अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह ॥ १३ ॥
अनङ्ग इति विख्यातस्तदाप्रभृति राघव । स चाङ्गविषयः श्रीमान्यत्राङ्गं स मुमोच ह ॥ १४ ॥
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा । शिष्या धर्मपरा वीर तेषां पापं न विद्यते ॥ १५ ॥

१० ] ति० टी०—मूर्तिमाञ्छरीरधरः सम्यग्घितं समाहितचित्तं स्थाणुं रुद्रम् ॥ १० ॥

११ ] ति० टी०—कृतोद्वाहं समाधेः कृतव्युत्थानं कामोचितविलासदेशं गच्छन्तं देवेशं दुर्मेधाः कामो धर्षयामास चित्तविकारोत्पादनेनाभिभूतवान् ततो महात्मना रुद्रेण ज्ञातापराधेन हुंकृतः चक्षुषावध्यातो दृष्टश्चेत्युत्तरेणान्वयः ॥ ११ ॥

रा० टी०—कन्दर्प इति । बुधैः यः काम इत्युच्यते स कन्दर्पः मूर्तिमानासीत् यद्वा यः कामः कन्दर्पः परमसुखहेतुगर्वविशिष्टो मूर्तिमानासीदिति बुधैरुच्यते सः दुर्मेधा इहाश्रमे तपस्यन्तं तप आचरन्तं समरुद्गणं तपःकुर्वत्पार्वतीविवाहप्रार्थनामनस्कमरुद्गणसहितं कृतोद्वाहं कृतः उदि नराकृतिद्विभुजपरमात्मरघुनाथविचारे वाहः प्रयत्नो येन अत एव देवेशं ब्रह्मादित्रिदेवनियन्तारमप्रकटितमवन्तं गच्छन्तं स्वाश्रितेभ्यो बोधयन्तमत एव नियमेन समाहितं नियमपूर्वकसम्यक्स्थितिविशिष्टं स्थाणुं महेश्वरं धर्षयामास चित्तविकारोत्पादनद्वारा धर्षणं चकार ततो महात्मना महेश्वरेण स हुंकृतः द्वयोरेकत्रान्वयः चकारस्तत इत्यर्थे । किंच दर्पशब्दो दृप्तार्थकः कमिति सुखार्थकं स्थाणुविशेषणम् अन्यत्समानम् हुंकृतश्च महात्मना इत्येतदग्रे 'अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन' इत्यर्धश्लोको भट्टसंमतः । उत्शब्दस्य परमात्मवाचकत्वमुपनिषत्सु प्रसिद्धम् तदर्थस्तु उद्यते तात्पर्यवृत्त्या वेदैः प्रतिपाद्यते असाविति प्रयत्नार्थकवाहधातोर्भावे घञ् । गमो बोधनार्थकत्वं तु गमिरबोधने इत्यादिव्याख्याने स्पष्टम् ॥ १० ॥ ११ ॥

गो० टी०—कन्दर्प इत्यर्धम् । यः काम इत्युच्यते स कन्दर्पः पुरा मूर्तिमानासीत् ॥ १० ॥

गो० टी०—तपस्यन्तमिति सार्धश्लोकः । तपस्यन्तं तपश्चरन्तम् "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । इहाश्रमे तपस्यन्तं नियमेन अविच्छेदेन समाहितं समाधिमन्तं कृतोद्वाहं कृतपार्वतीपरिणयं गच्छन्तं शुश्रूषणार्थं पार्वतीमामुवन्तं देवेशं स्थाणुं रुद्रं दुर्मेधाः कामो धर्षयामास कृतोद्वाहमिति क्रियाविशेषणम् यदा अयं कृतोद्वाहो भवति तदा तं पार्वत्यां साभिलाषचित्तमकरोदित्यर्थः समरुद्गणमित्यपि क्रियाविशेषणं तदनुमतिपूर्वकमित्यर्थः महात्मना हुंकृतश्चासीत् ॥ ११ ॥

१२ ] ति० टी०—व्यशीर्यन्त विशीर्णानि सर्वगात्राणि सर्वेऽवयवाः ॥ १२ ॥

रा० टी०—अथेति । हे रघुनन्दन अथ हुंकारानन्तरं रुद्रेण चक्षुषा दग्धः काम इति शेषः अत एव दुर्मतेः कामस्य स्वात्स्वकीयाच्छरीरादवयवसमूहात्सर्वगात्राणि व्यशीर्यन्त गात्रशब्दोऽवयवपरः किंच शरे शिवतपोनिवृत्तये ईरः कम्पनानुकूलो व्यापारः तस्माद्धेतोः रुद्रेण दग्धः शेषं पूर्ववत् ॥ १२ ॥

गो० टी०—अवदग्धस्येति । व्यशीर्यन्त विशीर्णानि शॄ हिंसायां कर्तरि श्यन् ॥ १२ ॥

१३ ] ति० टी०—तत्र प्रसिद्धतरेऽस्मिन्नाश्रमे हतं नष्टम् । हशब्दः प्रसिद्धौ ॥ १३ ॥

रा० टी०—तत्रेति । तत्र तदा महात्मना महेश्वरेण निर्दग्धस्य तस्य कामस्य गात्रं हतं विनष्टं निर्दग्धम् । ह अनेन प्रकारेण देवेश्वरेण क्रोधात्कामः अशरीरः शरीररहितः कृतः ॥ १३ ॥

गो० टी०—तस्येति । तत्र तदा महात्मना निर्दग्धस्य शरीरं हतमतः कामोऽशरीरः कृतः ॥ १३ ॥

१४ ] ति० टी०—ततो भयात्पलायमानो यत्र देशे स कामोऽङ्गं मुमोच सोऽङ्गविषयोऽङ्गदेश इति विख्यात इति शेषः ॥ १४ ॥

रा० टी०—अनङ्गेति । हे राघव तदाप्रभृति कामदेहपातादारभ्य कामः अनङ्ग इति विख्यातः अनङ्ग इति नाम्ना प्रसिद्धः स कामः यत्राङ्गं मुमोच स श्रीमान् संपत्तिविशिष्ट अङ्गविषयः अङ्गदेश इतिविख्यातः हशब्दः इतिविख्यात इत्यनुकर्षणार्थः ॥ १४ ॥

गो० टी०—अनङ्गइति । कामस्तदाप्रभृति अनङ्ग इति विख्यातः सोऽङ्गविषयःअङ्गदेशश्च विख्यातः तत्र हेतुमाह—यत्रेति । यस्मात्कारणादत्र कामोऽङ्गं मुमोच तस्मादयं देशोऽङ्ग इत्युच्यत इत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—तस्य स्थाणोः इमे मुनय इदानीमिह तपस्यन्तः तस्य रुद्रस्य पुरा पूर्वकालसन्तानपरंपरया शिष्याः अत एव धर्मपराः अत एव तेषां पापं न विद्यते ॥ १५ ॥

रा० टी०—तस्येति । हे वीर तस्य महेश्वरस्य पुण्यः पुण्यजनकः अयमाश्रमः पुरा पूर्वकालतो विद्यमानाः इमे मुनयः तस्य महेश्वरस्य शिष्याः अत एव धर्मपराःअत एव तेषां मुनीनां पापं न विद्यते ॥ १५ ॥

१ अवदग्धस्य रौद्रेणेति गो. अथ दग्धस्तु रुद्रेणेति रा. पाठः ।

इहाद्य रजनीं राम वसेम शुभदर्शन । पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥
अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् । इह वासः परोऽस्माकं सुखं वत्स्यामहे निशाम्॥ १७ ॥
स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम । तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ॥ १७ ॥
विज्ञाय परमप्रीता मुनयो हर्षमागमन् । अर्घ्यं पाद्यं तथातिथ्यं निवेद्य कुशिकात्मजे ॥ १९ ॥
रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् । सत्कारं समनुप्राप्य कथाभिरभिरञ्जयन् ॥ २० ॥
यथार्हमजपन्सन्ध्यामृषयस्ते समाहिताः । तत्र वासिभिरानीता मुनिभिः सुव्रतैः सह ॥ २१ ॥

गो० टी०—तस्येति । तस्य कामस्य स्थाणोर्वा अयमाश्रमः इमे मुनयः तस्य पुरा पूर्वकालमारभ्य सन्तानपरंपरया शिष्याः अत एव धर्मपराः अत एव च तेषां पापं न विद्यते पूर्वं रुद्रशिष्या अपि संप्रति तच्छिष्यत्वकृतपापं न विद्यते इत्यर्थः एतेन प्रश्नद्वयस्याप्युत्तरमुक्तम् । हिमवति तपस्यन्तं कामोऽधर्षयदित्युक्तिः पुराणान्तरे कल्पान्तरमपेक्ष्य ॥ १९ ॥

१६ ] ति० टी०—सरितोर्गङ्गासरय्वोः ॥ १६ ॥

रा० टी०—इहेति । हे शुभदर्शन हे राम पुण्ययोः सरितोः सरयूगङ्गयोर्मध्ये इह शिवाश्रमे अद्य रजनीं वयं वत्स्यामः श्वस्तरिष्यामहे तरिष्यामः गङ्गामिति शेषः अनद्यतनत्वस्याविवक्षायां लृट्प्रयोगः ॥ १६ ॥

गो० टी०—इहेति । इह अङ्गविषये तरिष्यामहे गङ्गामिति शेषः ॥ १६ ॥

१७ ] ति० टी०—स्नानादिना शुचयो भूत्वा पुण्यमाश्रममभिगच्छामहे व्यत्ययात्तङ् हे इति पृथक्पदं वा परो युक्ततरः ॥ १७ ॥

रा० टी०—स्नानादिकं कृत्वा निवासार्थमाश्रमो गन्तव्य इत्याह—अभीति । शुचयः कृतस्नानादिक्रियाः सर्वे वयं पुण्यमाश्रममभिगच्छामहे अभिगच्छामः इहाश्रमेऽस्माकं वासः परः अत्युत्कृष्टः अतः हे नरोत्तम स्नाताः कृतजप्याः हुतहव्याश्च वयं निशां सुखमेव वत्स्यामहे वत्स्याम । अभिगच्छामहे इत्यत्र वर्तमानसामीप्ये भविष्यति काले लट् ॥ १७ ॥

गो० टी०—अभीति । स्नाताः अत एव शुचयो भूत्वा पुण्यमाश्रममभिगच्छामहे व्यत्ययात्तङ् ॥ १७ ॥

१८ ] ति० टी०—स्नाता इत्यादीनि तदाश्रमस्थमुनिविशेषणानि तेषां संवदतां तेषु संवदत्सु तानदृष्ट्वापि तपोमहिमजातदीर्घत्ववताऽत एव विप्रकृष्टार्थग्राहिणा चक्षुषा रामाद्यागमनं विज्ञायेत्युत्तरेणान्वयः ॥ १८ ॥

रा० टी०—विश्वामित्रदर्शनेन तेषां हर्षो जात इत्याह—तेषामिति । तत्र संवदतां तेषां विश्वामित्रादीनां तपोदीर्घेण चक्षुषा तपःप्राप्तविप्रकृष्टवस्तुदर्शननेत्रेण विज्ञाय परमप्रीताः रामादिविषयकपरमप्रीतिविशिष्टा मुनयो हर्षं परमानन्दमागमन् प्रापुः संवदतामित्यत्र षष्ठी कर्मणः शेषत्वविवक्षया ॥ १८ ॥

गो० टी०—तेषामिति । तेषां संवदतां तेषु संवदत्सु तपसा दीर्घेण विप्रकृष्टार्थग्रहणसमर्थेन चक्षुषा ज्ञानेन विज्ञाय दृष्ट्वा तेषामागमनं ताटकादिनिरासनिमित्तं तपोजन्यज्ञानेन विदित्वेत्यर्थः । हर्षं हर्षपुलकम् ॥ १८ ॥

१९ ] ति० टी०—आतिथ्यमतिथ्यर्हं भोजनादि ॥ १९ ॥

रा० टी०—ततो रामादीनां समीपे प्राप्ता ऋषीणां कृत्यमाह—अर्घ्यमिति । कुशिकात्मजे विश्वामित्रे अर्घ्यादिकं निवेद्य पश्चात् रामलक्ष्मणयोः अतिथिक्रियामकुर्वन् ॥ १९ ॥

गो० टी०—अर्घ्यमिति । अर्घ्यं पूजार्थमुदकं पाद्यं पादार्थं मुदकम् "पादार्घाभ्यां च" इति यत् प्रत्ययः । आतिथ्यमाचमनीयपूर्वकं भोज्यप्रदानम् अतिथिक्रियामतिथिपूजाम् ॥ १९ ॥

२० ] ति० टी०—पश्चाद्भगवतोऽपि मनुष्यरूपधारित्वेन विश्वामित्रे गुरुत्वनादनेन चादौ विश्वामित्रेऽर्घ्यादि दत्त्वा पश्चाद्रामे ददुः अभ्यरञ्जयन् अडभाव आर्षः तदाश्रमस्थानृषीनिति शेषः यद्वा सत्कारं समनुप्राप्य तं प्रापय्य विश्वामित्रादींस्तदाश्रमस्था ऋषयोऽभ्यरञ्जयन्नित्यर्थः ॥ २० ॥

रा० टी०—सत्कारमिति । समाहिताः एकाग्रचित्तास्ते परस्परसंमिलिताः मुनयो विश्वामित्रस्तत्रत्याश्च कृतसत्कारं परस्परकृतसत्कृतिं समनुप्राप्य सम्यग् लब्ध्वा कथाभिः रामस्वभावादिवर्णनैः अभिरञ्जयन् परस्परमनुरागमुदपादयन् आगमशास्त्रस्यानित्यत्वादड्विरहः अनन्तरं ते सर्वे मुनयः यथार्हं यथायोग्यं संध्यामजपन् संध्यासंबन्धिजपादिकमकुर्वन् उपलक्षणविधया रामलक्ष्मणयोरपि सांध्यप्रवृत्तिर्बोध्या ॥ २० ॥

गो० टी०—सत्कारमिति । सत्कारं कुशलप्रश्नादिकं विश्वामित्रात्समनुप्राप्य अभिरञ्जयन् अभ्यरञ्जयन् अतिथिभूतानिति शेषः क्रमेण सायं संध्यागमे सति ते तद्वासिनो विश्वामित्रादयश्च छत्रिन्यायेन ऋषय इत्युक्तम् समाहिताः अनन्यपराः संध्यामहोरात्रयोः सन्धिम् अत्यन्तसंयोगे द्वितीया यथार्हं यथायोग्यं यथाशक्तीति यावत् 'सहस्रपरमां देवीं शतमध्यां दशावराम्' इति वचनात् अजपन् गायत्रीमिति शेषः॥२०॥

२१ ] ति० टी०—अजपन्नदीतीरे ते विश्वामित्राद्या ऋषयश्च तद्वासिभिर्मुनिभिः सह स्वसाहित्येनानीताः संवेशनाय स्वाश्रमं प्रापिताः ॥ २१ ॥

रा० टी०—तत्रेति । तदा तस्मिन्काले तत्र वासिभिः

१ वत्स्याम इति रा. पाठः ।

न्यवसत्स सुखं तत्र कामाश्रमपदे तथा । कथाभिरभिरामाभिरभिरामौ नृपात्मजौ ॥
रमयामास धर्मात्मा कौशिको मुनिपुंगवः ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ।

विश्वामित्रकृतसरयूवर्णनम्, ताटकावृत्तनिवेदनम्, तद्वधसूचनं च ।

ततः प्रभाते विमले कृताह्निकमरिन्दमौ । विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥
ते च[1] सर्वे महात्मानो मुनयः संशितव्रताः । उपस्थाप्य शुभां नावं[2] विश्वामित्रमथाब्रुवन् ॥ २ ॥
आरोहतु भवान्नावं राजपुत्रपुरस्कृतः । अरिष्टं गच्छ पन्थानं मा भूत्कालस्य पर्ययः[3] ॥ ३ ॥
विश्वामित्रस्तथेत्युक्त्वा तानृषीन्प्रतिपूज्य[4] च । ततार सहितस्ताभ्यां सरितं सागरंगमाम् ॥ ४ ॥

सुव्रतैः शोभनव्रतशीलैः मुनिभिः आनीताः विश्वामित्रादयः तत्र तस्मिन् कामाश्रमपदे सुसुखं यथा स्यात्तथा सह न्यवसन् ॥२१॥

गो॰ टी॰–तत्रेति । आनीताः निद्रायै स्वाश्रमं प्रापिताः कामाश्रमपदे कामदाहात्कामाश्रमनामकस्य पदे स्थाने ॥ २१ ॥

२२ ] ति॰ टी॰–कामाश्रमपदे सर्वकामपरिपूरके भर्गाश्रमे ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा॰ टी॰–कथाभिरिति । धर्मात्मा धर्मशीलः मुनिपुंगवः कौशिको विश्वामित्रः अभिरामौ परमानन्ददातारौ नृपात्मजौ रामलक्ष्मणौ अभिरामाभिः कथाभिः पुण्यश्लोकचरितप्रतिपादकप्रबन्धैः रमयामास ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ त्रयोविंशः सर्गः ॥ २३ ॥

गो॰ टी॰–कथाभिरिति । कथाभिः तदाश्रमवैभवपराभिः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

१ ] ति॰ टी॰–तत इति । नद्या गङ्गायाः ॥

रा॰ टी॰–निवासानन्तरकालिकं वृत्तमाह–... इति । प्रभाते प्रातःकाले विमले समूलमलनिवर्तकगङ्गाजले कृतमाह्निकं येन तं विश्वामित्रं पुरस्कृत्य अरिंदमौ रामलक्ष्मणौ ततः महेश्वराश्रमात् नद्याः गङ्गायाः तीरमुपागतौ प्राप्तौ पूर्वमाश्रमसमीपघट्टे स्नानादिक्रियाः निर्वर्त्य तरणार्थं तरणघट्टे समायाता इत्यर्थः ॥ १ ॥

गो॰ टी॰–एवं कामाश्रमपदं रामचरणनलिनविन्यासेन कृतार्थीकृत्य ताटकावनमपि निष्कल्मषीकर्तुं रामं प्रापयति मुनिश्चतुर्विंशे–तत इत्यादि । विमले सूर्योदये इत्यर्थः । नद्याः गङ्गायाः ॥ १ ॥

२ ] ति॰ टी॰–उपस्थाप्यानाय्य ॥ २ ॥

रा॰ टी॰–ते इति । अथानन्तरमेव महात्मानः पूजनीयस्वरूपाः संशितव्रताः ते उग्राश्रमनिवासिनः सर्वे मुनयः शुभां दृढां नावमुपस्थाप्य तत्संमुखं प्रापय्य विश्वामित्रमब्रुवन् तुशब्द एवार्थे ॥ २ ॥

गो॰ टी॰–ते चेति । उपस्थाप्य आनाय्य ॥ २ ॥

३ ] ति॰ टी॰–राजपुत्रपुरस्कृत इति तृतीयातत्पुरुषः तीर्त्वेति शेषः अरिष्टं शुभं यथा भवति तथा रिषेर्हिंसार्थत्वात् ॥ ३ ॥

रा॰ टी॰–तदुक्तिमाह–आरोहत्विति । राजपुत्रपुरस्कृतः राजपुत्राग्रेसरः भवान् शुभां नावमारोहतु अरिष्टं निर्विघ्नं यथा भवति तथा पन्थानं त्वं गच्छ कालविपर्ययः कालविलम्बो माभूत् ॥ ३ ॥

गो॰ टी॰–आरोहत्विति । राजपुत्राभ्यां पुरस्कृतः पूजितः । ताटकावधाभिप्रायेणाहुः–अरिष्टमिति । अरिष्टं शुभं यथा भवति तथा 'अरिष्टं पापशुभयोः' इति हलायुधः कालविपर्ययः कालविलम्ब इति यावत् ॥ ३ ॥

४ ] ति॰ टी॰–ततार तर्तुमुपक्रान्तः सरितं गङ्गाम् सागरं गच्छति जलपूर्णत्वरूपस्वरूपं प्रापयति ताम् अन्तर्भावितण्यर्थः अगस्त्यशोषितस्य समुद्रस्य गङ्गया पूरणं कृतमिति प्रसिद्धेः ॥ ४ ॥

रा॰ टी॰–विश्वामित्र इति । ताभ्यां रामलक्ष्मणाभ्यां सहितो विश्वामित्रः तथा इत्युक्त्वा तान् ऋषीन् अभिपूज्य सत्कृत्य च सागरंगमां सरितं गङ्गां ततार तरितुमारेभे ॥ ४ ॥

गो॰ टी॰–विश्वामित्र इति । ततार तरितुं प्रवृत्तः सरितं गङ्गां सागरं गच्छतीति सागरंगमां खश्प्रकरणे "गमेः सुप्युपसंख्यानम्" इति खश् ॥ ४ ॥

१ ते तु सर्वे इति रा. पाठः । २ शुभां नावमिति गो. रा. पाठः । ३ कालविपर्यय इति गो. रा. पाठः । ४ नभिपूज्येति गो. रा. पाठः ।

तत्र शुश्राव वै शब्दं तोयसंरम्भवर्धितम् । मध्यमागम्य तोयस्य तस्य शब्दस्य निश्चयम् ॥ ५ ॥
ज्ञातुकामो महातेजाः सह रामः कनीयसा । अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुंगवम् ॥ ६ ॥
वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः । राघवस्य वचः श्रुत्वा कौतूहलसमन्वितम् ॥ ७ ॥
कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् । कैलासपर्वते राम मनसा निर्मितं परम् ॥ ८ ॥
ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः । तस्मात्सुस्राव सरसः सायोध्यामुपगूहते ॥ ९ ॥
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता । तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते ॥ १० ॥

५ ] ति० टी०—तोयसंरम्भण परस्परं तरङ्गसंघट्टक्षोभेण वर्धितमतिप्रवृद्धम् । निश्चयं सहज औपाधिको वेत्येतदन्यतरनिश्चयम् ॥ ५ ॥

रा० टी०—तत इति । अतिसंरम्भवर्धितमतिसंरम्भेण परस्परसंघट्टजनितक्षोभेण वार्धितं तोयस्य शब्दं मध्ये आगम्य कनीयसा लक्ष्मणेन सह महातेजा रामः शुश्राव ततः श्रवणानन्तरमेव तस्य शब्दस्य निश्चयमेतत्कारणकोयं शब्द इति ज्ञातुकामो मुनिपुंगवमृषिश्रेष्ठमथ पप्रच्छ मङ्गलप्रश्नं चकार श्लोकद्वयमेकान्वयि वैशब्द एवार्थे ॥ ५ ॥ ६ ॥

गो० टी०—तत इति । अतिसंरम्भेण तरङ्गपरस्परसंघट्टजक्षोभेण वर्धितमतिप्रवृद्धम् ॥ ५ ॥

६ ] ति० टी०—ज्ञातुकाम इत्यस्य जात इति शेषः ॥ ६ ॥

गो० टी०—अथेति । भिद्यमानस्य परस्परं मिलितस्य वारिणः तुमुलः निबिडोऽय ध्वनिः किं वारिसंभेदकृतः उतान्यकृतः इति प्रश्नः ॥ ६ ॥

७ ] ति० टी०—भिद्यमानस्य परस्परसंघट्टमानस्य ॥ ७ ॥

रा० टी०—तत्प्रश्नमेवाह—वारिण इति । भिद्यमानस्य वारिणः अयं तुमुलः ध्वनिः किं किन्निमित्तक इत्यर्थः किमिति सामान्ये नपुंसकम् राघवस्येति कौतूहलसमन्वितं राघवस्य वचो वचनं धर्मात्मा विश्वामित्रः श्रुत्वा तस्य शब्दस्य निश्चयं निश्चयकारणं कथयामास ॥ ७ ॥

गो० टी०—राघवस्येति । निश्चयं कारणनिश्चयम् ॥ ७ ॥

८ ] ति० टी०—निश्चयं निश्चयजनकहेतुम् ॥ ८ ॥

रा० टी०—तत्कथनमेवाह—कैलासेति । हे नरशार्दूल हे राम । कैलासपर्वते ब्रह्मणा मनसा सरो निर्मितं तेन हेतुना इदं सरः मानसमित्युच्यते ॥ ८ ॥

गो० टी०—अस्य ध्वनेः कारणं वारिसंभेद एवेति वक्ष्यन्कस्या वारिण इति प्रक्ष्यतीति मत्वा सरय्वा इति वक्तुं सरय्वैभवमाह—कैलासेति । कैलासपर्वते कुबेरभवने ब्रह्मणा मनसा निर्मितं सरोऽस्ति तेन मनसा निर्मितत्वेन इदं सरः मानसमित्युच्यते ॥ ८ ॥

९ ] ति० टी०—तेन मनोनिर्मितत्वेन तस्मात्सरसो या सुस्राव सेत्यन्वयः ॥ ९ ॥

रा० टी०—तस्मादिति । ब्रह्मसरश्च्युता ब्रह्म ब्रह्मावयवस्तन्नेत्रं तच्च सरस्तस्माच्च्युता अत एव पुण्या परमपवित्रा सरःप्रवृत्ता सरसि ब्रह्मणा मनसा निर्मितसरोवरे प्रवृत्त प्रवर्तनं स्थितिरिति यावत् यस्याः सा अत एव सरयूः एतन्नाम्ना प्रसिद्धा तस्मान्मानससरसः सुस्राव सा सरयूः अयोध्यामुपगूहते तामालिङ्ग्य वहतीत्यर्थः । पूर्वं परमात्मनेत्रात्संभूतानन्तरं ब्रह्मणा स्वमानससरसि स्थापिता अनन्तरं तस्मात्सरसः पृथिव्यां समागतेति सरसि याति प्राप्नोति सरसो याति निर्गच्छति वेति सरयूरिति व्युत्पत्त्या सरयूशब्दवाच्यत्वं तस्याः। स्पष्टं चेदं पद्मपुराणादौ। ब्रह्मशब्देन ब्रह्मावयवग्रहणं तु पटावयवस्य रक्तत्वे पटो रक्त इत्यादिव्यवहारवदवगन्तव्यम्॥९॥

गो० टी०—तस्मादिति । उपगूहते आवृत्य प्रवहते अयोध्यायाः पश्चिमभागमारभ्य उत्तरदिग्भागेन पूर्वभागमागत्याङ्गदेशे गङ्गया सह युज्यते सरयूः तयोः नद्योः संभेदे स्थाण्वाश्रमः तस्मात् सरयूयुक्तगङ्गातरणदशायां सरयूजलमुन्नतात् भागीरथ्यां पततीति तस्य ध्वनिरिति ज्ञेयम् सरयूशब्दं निर्वक्ति—सर इति । सरसो यौतीति सरयूः ( पाठान्तरं सरसो यातीति सरयूः ) सकारस्य शकन्ध्वादित्वात्पररूपम् "ऊङुतः" इति स्त्रीप्रत्यय ऊकारः । कस्मात्सरसः प्रवृत्तेत्यत आह—ब्रह्मसरश्च्युतेति ॥ ९ ॥

१० ] ति० टी०—सरसो यौति प्रवर्तत इति सरयूः सरःप्रवृत्तेति तद्योगनिर्वचनम् पुण्यत्वे हेतुर्ब्रह्मसरश्च्युतत्वम् तस्या अयम् सन्धिरार्षः या जाह्नवीमभिवर्तते तया सह संगच्छते तस्या अयं शब्द इत्यर्थः ॥ १० ॥

रा० टी०—तस्येति । तस्य सरय्वाः वारिसंक्षोभजः अतुलः तोलयितुमशक्यः अयं शब्दः जाह्नवीमभिवर्तते तच्छब्देन सह प्रवर्धते इत्यर्थः । अतः हे राम नियतः एकाग्रचित्तस्त्वं प्रणामं कुरु तस्येति सामान्ये नपुंसकम् ॥ १० ॥

गो० टी०—तस्येति । या गङ्गामभिवर्तते गङ्गया संयुज्यते अयमतुलः शब्दः तस्याः वारिसंक्षोभजः सन्धिरार्षः नियतः नियतमनस्कः सन् ताभ्यां नदीभ्यां प्रणामं कुरु कोऽयं ध्वनिरिति रामेण पृष्टे सरयूवारिसंघट्टज इति वक्तव्ये तदुत्पत्तिकथनं नन्तव्यत्वाय ॥ १० ॥

१ तत इति गो. रा. पाठः । २ अतिसंरभेति गो. रा. पाठः । ३ एतस्मादारभ्य चरणद्वयं गो. नास्ति । ४ समन्वित इति गो. पाठः । ५ सर- इति गो. रा. पाठः ।

वारिसंक्षोभजो राम प्रणामं नियतः कुरु । ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ ॥ ११ ॥
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ । स वनं घोरसंकाशं दृष्ट्वा नरवरात्मजः ॥ १२ ॥
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगवम् । अहो वनमिदं दुर्गं झिल्लिकागणसंयुतम् ॥ १३ ॥
भैरवैः श्वापदैः [3]कीर्णं शकुन्तैर्दारुणारवैः । नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवस्वनैः ॥ १४ ॥
सिंहव्याघ्रवराहैश्च वारणैश्चापि शोभितम् । धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ॥ १५ ॥
संकीर्णं बदरीभिश्च किं न्विदं दारुणं वनम् । तमुवाच महातेजा विश्वामित्रो महामुनिः ॥ १६ ॥
श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् । एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ॥ १७ ॥
मलदाश्च करूषाश्च देवनिर्माणनिर्मितौ । पुरा वृत्रवधे राम मलेन समभिप्लुतम् ॥ १८ ॥

---

११ ] ति० टी०—ताभ्यां सरयूगङ्गाभ्याम् ॥ ११ ॥

रा० टी०—ताभ्यामिति । अतिधार्मिकौ उभौ द्वौ तौ रामलक्ष्मणौ ताभ्यां गङ्गासरयूभ्यां प्रणामं कृत्वैव दक्षिणतीरमासाद्य प्राप्य लघुविक्रमौ शीघ्रपादविक्षेपौ सन्तौ जग्मतुः विश्वामित्रेण सह चक्रमतुः तुशब्द एवार्थे ॥ ११ ॥

गो० टी०— ताभ्यामिति । तीरं दक्षिणमिति नदीसंभेदे रात्रिमुषित्वा प्रातर्दक्षिणाभिमुखा गङ्गां तेरुः ततो गङ्गादक्षिणतीरे ताटकावनमिति ज्ञेयम् ॥ ११ ॥

१२ ] ति० टी०—विक्रमः पादविक्षेपः घोरसंकाशं भयंकरदर्शनम् ॥ १२ ॥

रा० टी०—स इति । ऐक्ष्वाकः इक्ष्वाकुकुलोद्भवः नरवरात्मजः राजपुत्रः स रामः घोरसंकाशं घोररूपमत एव अविप्रहतं संचाररहितत्वेन अक्षुण्णं वनं दृष्ट्वा मुनिपुंगवं विश्वामित्रं पप्रच्छ ॥ १२ ॥

गो० टी०—स इति । संकाशत इति संकाशः घोरसंकाशं घोररूपमिति यावत् अविप्रहतमक्षुण्णं जनसंचाररहितमित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—अविप्रहतं सार्थगमागमाभावादक्षुण्णम् झिल्लिका कीटविशेषः ॥ १३ ॥

रा० टी०—तत्प्रश्नमेव वर्णयन्नाह—अहो इत्यादिभिः । झिल्लिकागणनादितं झिल्लिकानामन्तरिक्षस्थकीटविशेषाणां गणैः समूहैः नादितं भैरवैः भयंकरैः श्वापदैः कुटिलमृगैः पूर्णं दारुणैः कुटिलशब्दैः शकुन्तैः भाससंज्ञकजन्तुविशेषैः 'शकुन्तौ भासपक्षिणौ' इत्यमरः पूर्णमत एव दुर्गमनवगाह्यमिदं वनमहो आश्चर्यम् ॥ १३ ॥

गो० टी०—अहो इत्यादिश्लोकत्रयम् । झिल्लिका भूतलायन्तरितकीटविशेषः भैरवः भयंकरैः श्वापदैः क्रूरमृगैः शकुन्तैः भासैः 'शकुन्तौ भासपक्षिणौ' इत्यमरः शकुनैः पक्षिभिःवाश्यद्भिः कुत्सितं शब्दायमानैः धवः अश्वकर्णः ककुभः मरुतिन्दुकः पाटलः इदं वनमेतादृशम् अहो इदं वनं दारुणं किं नु किंनामकमित्यन्वयः ॥ १३ ॥ १४ ॥ १५ ॥

१४ ] ति० टी०—भैरवैर्भयंकरैः । श्वापदानि दुष्टमृगाः दारुणारवैर्दारुणशब्दैः शकुन्तैर्भासैः शकुनैः सर्वपक्षिभिः भैरवस्वनैर्वाश्यद्भिरतिभैरवं शब्दं कुर्वद्भिः ॥ १४ ॥

रा० टी०—नानेति । भैरवैः स्वनैः वास्यद्भिः नानाप्रकारैः अनेकजात्याकृतिविशिष्टैः शकुनैः पक्षिभिः सिंहादिभिश्चोपशोभितम् ॥ १४ ॥

१५ ] ति० टी०—शोभितं युक्तम् । धवादयो वृक्षविशेषाः१६

रा० टी०—धवेति । धवाश्वकर्णककुभैर्धवैः अश्वकर्णैः ककुभैश्च बिल्वकिंशुकैः पाटलैः बदरीभिश्च संकीर्णमेतद्दारुणं वनं किम् किंनामकं किंस्वामिकं चेत्यर्थः तुश्चार्थे ॥ १५ ॥

१६ ] ति० टी०—किं नु कुतो नु ॥ १६ ॥

रा० टी०—तमिति । महातेजा महामुनिः विश्वामित्रः तं प्रश्नकर्तारं राममुवाच । तद्वचनमेवाह—हे वत्स हे काकुत्स्थ ! यस्य एतद्दारुणं वनं स श्रूयताम् ॥ १६ ॥

गो० टी०—तमिति । एतद्दारुणं वनं यस्य प्राणिनः स श्रूयतामिति योजना ॥ १६ ॥

१७ ] ति० टी०—यस्य प्राणिनः स श्रूयतामित्यन्वयः । स्फीतौ समृद्धौ ॥ १७ ॥

रा० टी०—एताविति । हे नरोत्तम । स्फीतौ स्वच्छौ देवनिर्माणनिर्मितौ देवानां निर्माणं प्रयत्नस्तेन निर्मितौ एतौ प्रसिद्धौ मलदाः करूषाश्च जनपदौ पूर्वमेवास्ताम् मलदकरूषशब्दयोर्बहुत्वं दारशब्दादेरिव स्वभावसिद्धम् ॥ १७ ॥

गो० टी०—एताविति । स्फीतौ प्रवृद्धधनधान्यौ मलदाश्च करूशाश्च मलदकरूशनामधेयौ अवयवबहुत्वाद्बहुवचनं मत्स्याः पाञ्चाला इतिवत् देवनिर्माणेन देवनिर्माणतुल्यनिर्माणेन निर्मितौ देवलोकसमसंस्थानावित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—मलदाः करूषा इति बहुवचनं शब्दस्वभावकृतम् । देवनिर्माणेन देवयत्नेन निर्मितौ मलेनाशुच्याचारेण ॥ १८ ॥

रा० टी०—पुरेति । हे राम ! वृत्रवधे जाते पुरा पूर्वं मलेन पापेन क्षुधा च समभिप्लुतं व्याप्तं सहस्राक्षमिन्द्रं ब्रह्म-

१ भिल्लिकेति रा. पाठः । २ नादितमिति गो. रा. पाठः । ३ पूर्णमिति गो. रा. पाठः । ४ दारुणैस्तैरिति रा. दारुणारुतैरिति गो. पाठः । ५ किंशुकैरिति गो. रा. पाठः । ६ किन्वेतादिति गो. किं त्वेतादिति रा. पाठः ।

क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् । तमिन्द्रं मलिनं देवा ऋषयश्च तपोधनाः ॥ १९ ॥
कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् । इह भूम्यां मलं दत्त्वा देवाः कारूषमेव च ॥ २० ॥
शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे । निर्मलो निष्करूषश्च शुद्ध इन्द्रो यथाभवत् ॥ २१ ॥
ततो देशस्य सुप्रीतो वरं प्रादादनुत्तमम् । इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ॥ २२ ॥
मलदाश्च करूषाश्च ममाङ्गमलधारिणौ । साधुसाध्विति तं देवाः पाकशासनमब्रुवन् ॥ २३ ॥
देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता । एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम ॥ २४ ॥
मलदाश्च करूषाश्च मुदिता धनधान्यतः । कस्यचित्त्वथ कालस्य यक्षिणी कामरूपिणी ॥ २५ ॥

हत्या समाविशत् । पूर्वं ब्रह्महत्याचिह्नं मलं क्षुधा च इन्द्रं प्राप पश्चात् स्वयं ब्रह्महत्या प्रत्यक्षतोऽदृश्यतेत्यर्थः ॥ १८ ॥

गो० टी०—मलदकरूशसंज्ञानिमित्तमाह—पुरेत्यादि । वृत्रवधे कृते सति मलेन अशुचित्वेन क्षुधा बुभुक्षया च समभिप्लुतं व्याप्तमिन्द्रं ब्रह्महत्या समाविशत् ब्रह्महत्यावशेन मलक्षुधाविन्द्रस्याभूतामित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—क्षुधा बुभुक्षया समभिप्लुतमित्यनुकृष्यते ब्रह्महत्या वृत्रस्य ब्रह्मसन्तानत्वात् देवा वस्वादयः ॥ १९ ॥

रा० टी०—तमिति । देवास्तपोधना ऋषयश्च अस्य इन्द्रस्य मलं तदुपलक्षितकरूषं च स्नापयन् निवर्तयितुं कलशैः प्रार्थितगङ्गाजलविशिष्टघटैः तं मलादिमन्तमिन्द्रं स्नापयामासुः । इहास्यां भूम्यां महेन्द्रस्य शरीरजं मलं कारूष्यं क्षुधं च दत्त्वा महेन्द्रस्य मलं मलिनतां कारूष्यं च प्रमोचयन् प्रामोचयन् पूर्वक्लातेर्निवर्तनमर्थः । "लक्षणहेत्वोः क्रियायाः" इति शता व्यत्ययेनैकत्वम् ततोनन्तरं हर्षं प्रपेदिरे प्रापुः द्वयोरेकत्रान्वयः 'तमिन्द्रं मलिनं देवा' इति भट्टसंमतः पाठः दत्त्वा देवा इति च कारूष्यशब्दः स्वार्थष्यञन्तः ॥ १९ ॥ २० ॥

गो० टी०—तमिति । स्नापयन् गङ्गादितीर्थेषु स्नापयन् पुनर्मन्त्रपूतैः कलशैः कलशोदकैः स्नापयामासुः तेन स्नापनेनास्येन्द्रस्य मलं चकारात् कारूशं प्रमोचयन् प्रामोचयन् ॥ १९ ॥

२० ] ति० टी०—कलशैर्गङ्गाजलपूर्णघटैः प्रमोचयन्प्रामोचयन् कारूषं क्षुत् दत्त्वा त्यक्त्वेत्यर्थः ॥ २० ॥

गो० टी०—इहेति । करूशमेव कारूशं स्थानप्रमाणात् क्षुधमित्यर्थः ॥ २० ॥

२१ ] ति० टी०—शरीरजमिति पूर्वान्वयि । प्रपेदिरे देवा इति शेषः ॥ २१ ॥

रा० टी०—निर्मल इति । निर्मलः निवृत्तमलिनताकः निष्करूषः निर्गतक्षुत्कः अत एव शुचिः ब्रह्महत्यादोषरहितश्च इन्द्रो यदाऽभवत्तदा सुप्रीतः प्रसन्नचित्तः प्रभुः समर्थः इन्द्रः देशस्य अनुत्तमं परमोत्कृष्टं वरं ददौ देशस्यैकत्वं जात्यभिप्रायेण ॥ २१ ॥

गो० टी०—निर्मल इति । शुचिः ब्रह्महत्यातः पूतः ॥ २१ ॥

२२ ] ति० टी०—ततः तदेत्यर्थः ॥ २२ ॥

रा० टी०—तद्वरप्रदानमेवाह—इमाविति । ममाङ्गमलधारिणौ इमौ जनपदौ स्फीतौ प्रवृद्धौ सन्तौ लोके मलदाः करूषाश्चेति ख्यातिं गमिष्यत एव चशब्द एवार्थे ॥ २२ ॥

गो० टी०—वरमेवाह—इमाविति । मलं द्यति खण्डयतीति मलदः "अन्येभ्योऽपि दृश्यते" इति खच् । करूशमस्यास्तीति करूशः अङ्गमलधारिणौ करूशस्याप्युपलक्षणमिदम् एतौ ममाङ्गमलकरूशधारणान्मलदाः करूशाश्चेति ख्यातिं गमिष्यत इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०—तस्मान्ममाङ्गमलधारिणौ तस्मात्ख्यातिं गमिष्यत इति पूर्वेणान्वयः ॥ २३ ॥

रा० टी०—साध्विति । धीमता शक्रेण इन्द्रेण कृतां तां प्रसिद्धां देशस्य पूजां वरप्रदानेन सत्कृतिं दृष्ट्वा ज्ञात्वा देवास्तं पाकशासनमिन्द्रं साधुसाध्वित्यब्रुवन् हर्षे वीप्सा देवा इति ऋषीणामप्युपलक्षकम् ॥ २३ ॥

गो० टी०—साध्विति । स्पष्टम् ॥ २३ ॥

२४ ] ति० टी०—शक्रेण कृतां देशस्य पूजां दृष्ट्वा पाकशासनं साध्वित्यब्रुवन्निति पूर्वेणान्वयः ॥ २४ ॥

रा० टी०—एताविति । हे अरिंदम आश्रितारिनिवर्तक राम । स्फीतौ मलदाः करूषाश्चैतौ जनपदौ ततः प्रभृति दीर्घकालं धनधान्यतो मुदिता आसन्निति शेषः एकश्चकारः ततःप्रभृतीत्यर्थे ॥ २४ ॥

गो० टी०—एताविति । अत इत्यादावध्याहार्यम् ॥ २४ ॥

२५ ] ति० टी०—कस्यचित्कियतः कालस्य अपगमे इति शेषः ॥ २५ ॥

रा० टी०—कस्यचिदिति । अथ इन्द्रवरप्रदानानन्तरं कस्यचित्कालस्यापगमे सतीति शेषः । कामरूपिणी ईप्सितरूपधारणसमर्था नागसहस्रस्य सहस्रसंख्यातगजस्य बलं धारयन्ती धीमतः सुन्दस्य भार्या यक्षी यक्षजाता शक्रपराक्रमः मारीचो राक्षसः यस्याः पुत्रः सा ताटका नाम अभूत् ते तुभ्यं भद्रं कल्याणमेव तदेव अस्मभ्यमपि भद्रं भवतु इति शेषः ।

१ स्नापयन्निति गो. रा. पाठः । २ दत्त्वा कारूष्यमिति रा. पाठः । ३ कारूशमिति गो. पाठः । ४ शुचिरिन्द्रो यदेति गो. रा. पाठः । ५ ददाविति गो. रा. पाठः । ६ प्रभुरिति गो. रा. पाठः । ७ यक्षी वै इति गो. रा. पाठः ।

बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् । ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः॥ २६ ॥
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः । वृत्तबाहुर्महाशीर्षो विपुलास्यतनुर्महान् ॥ २७ ॥
राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः । इमौ जनपदौ नित्यं विनाशयति राघव ॥ २८ ॥
मलदांश्च करूषांश्च ताटका दुष्टचारिणी । सेयं पन्थानमावृत्य वसत्यत्यर्धयोजने ॥ २९ ॥
अत एव च गन्तव्यं ताटकाया वनं यतः । स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ॥ ३० ॥
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः । नहि कश्चिदिमं देशं शक्तो ह्यागन्तुमीदृशम्॥ ३१ ॥
यक्षिण्या घोरया राम उत्सादितमसह्यया । एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् ॥
यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते । ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

तस्याः भीतिस्ते माभूदित्यर्थः श्लोकद्वयमेकान्वयि वैशब्द एवार्थे हिः प्रसिद्धार्थः ॥ २९ ॥ २६ ॥

गो० टी०—एवं पालनीयत्वाय देशस्य पुण्यत्वमुक्त्वा तस्य दारुणत्वहेतुमाह—कस्यचिदिति अर्धत्रयम् । कस्मिंश्चित्काले गते सति तदा जन्मकाल एव नागसहस्रस्य गजसहस्रस्य बलं धारयन्ती ताटका नाम यक्षी अभूत् ते तुभ्यं भद्रमस्तु ताटकातो भयं माभूदित्यर्थः ॥ २६ ॥

२६–२८ ] ति० टी०—भद्रं त इति विश्वामित्रस्याशीर्वचनं बालकत्वेन तादृशयक्षिणिनामश्रवणेन त्रासो मा भूदिति यद्वा ताटका नाम ते भद्रं प्रथमशौर्यस्थानत्वेन शौर्यप्रसिद्धिकरत्वरूपं भद्रत्वमस्या इति बोध्यम् ॥ २६–२८ ॥

रा० टी०—वृत्तेति । वृत्तबाहुः वृत्तौ बाहू यस्य महाशीर्षः बृहच्छिरोविशिष्टः विपुलास्यतनुः विपुलास्ययुक्ता तनुर्यस्य महान् अत्युन्नतः भैरवाकारः भयंकराकारविशिष्टः भैरवसदृशो वा राक्षसो मारीचः प्रजाः नित्यं त्रासयते ॥ २७ ॥

रा० टी०—पुत्रकृतमुपद्रवं निवेद्य मातृकृतोपद्रवमाह—इमाविति । हे राघव ! दुष्टचारिणी ताटका इमौ प्रसिद्धौ मलदान् करूषांश्च जनपदौ नित्यमेव विनाशयति एकश्चशब्द एवार्थे२८॥

गो० टी०—मारीच इत्यर्धम् ॥ २६ ॥

गो० टी०—वृत्तेति । अत्र य इति शेषः यः प्रजाः नित्यं त्रासयते स मारीचो यस्याः पुत्रः सा यक्षी अभूदिति पूर्वेणान्वयः ॥ २७ ॥

गो० टी०—अस्तु ताटका किं ततस्तत्राह—इमाविति २८

२९ ] ति० टी०—सेयं या विनाशयति सेत्यर्थः आवृत्य निरुध्य अर्धमतिक्रान्तमत्यर्धं तादृशे योजने ॥ २९ ॥

रा० टी०—सेयमिति । सा इयं ताटका पन्थानमावृत्य निरुध्यैव यतः अध्यर्धयोजने वसति अतस्ताटकायाः वनं गन्तव्यमेव ॥ २९ ॥

गो० टी०—सेयमिति । आवार्य आवृत्य यतः यस्मिन्मार्गे ताटकायाः वनम् अत एव मार्गेण गन्तव्यम् ॥ २९ ॥

३० ] ति० टी०—यतश्चेदं ताटकावनमस्माभिर्गन्तव्यमत एव च हेतोर्हे राम स्वबाहुबलमाश्रित्येमां जहि ॥ ३० ॥

रा० टी०—तत्र गत्वा किं कर्तव्यमित्यत आह—स्वबाह्विति । स्वबाहुबलमाश्रित्य संस्मृत्य मन्नियोगान्मदाज्ञातः दुष्टचारिणीमिमां ताटकां त्वं जहि ताडय तत्फलमाह इमं देशं पुनः निष्कण्टकं पीडारहितं कुरु मन्नियोगादित्युक्त्या ,स्त्रियं न हनिष्यामीति प्रत्युत्तरं त्वया न वक्तव्यमिति हेतुर्ध्वनितः ॥ ३०॥

गो० टी०—स्वेति । निष्कण्टकं निरुपद्रवम् ॥ ३० ॥

३१ ] ति० टी०—ननु स्त्री कथं हन्तव्या तत्राह—मन्नियोगादिति । मदाज्ञया स्त्रीवधशङ्कां त्यज ईदृशं ताटकाऽऽक्रान्तम् ॥ ३१ ॥

रा० टी०—नहीति । ईदृशं रमणीयमिमं देशमागन्तुं कश्चित्पुरुषो नैव शक्नोति । तत्र हेतुः हे ! राम घोरया भयावहया असह्यया अन्यैः पराभवितुमशक्यया यक्षिण्या ताटकया उत्सादितं सर्वं पीडितम् । हिशब्द एवार्थे ॥ ३१ ॥

गो० टी०—नहीति। ईदृशमतीवपुण्यमसह्यया इतरैरजेयया।

३२ ] ति० टी०—अद्यापि न निवर्तते अत्र पूर्वस्थितो जन इति शेषः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०—तदेवोपसंहरन्नाह—एतदिति । यथा येन प्रकारेण एतद्वनं दारुणमेतत्ते तुभ्यं सर्वं कथितम् तदेवाह यया यक्ष्या एतत्सर्वमुत्सादितं सा यक्षी अद्यापि न निवर्तते चकारेण पीडयति च या सेत्यध्याहृतम् ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो० टी०—एतदिति । यथा येन प्रकारेण दारुणं यथा च उत्सादितं निर्जनीकृतं यथा चोत्सादनान्न निवर्तते तदेतत्सर्वमाख्यातमिति योजना ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४॥

---

१ अध्यर्धेति गो. रा. पाठः । २ शक्तोत्यागन्तुमिति गो. रा. पाठः । ३ कथितं सर्वमिति रा. पाठः । ४ यदेतदिति रा. पाठः ।

## पञ्चविंशः सर्गः ।

विश्वामित्ररामसंवादः, ताटकोत्पत्तिः, सुन्दाय ताटकादानम्, ताभ्यां मारीचोत्पत्तिः, मारीचं प्रत्यगस्त्यशापश्च, ताटकावधार्थं रामाय विश्वामित्रकृत प्रोत्साहनं च ।

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् । श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १ ॥
अल्पवीर्या यदा यक्षी श्रूयते मुनिपुङ्गव । कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥
इत्युक्तं वचनं श्रुत्वा राघवस्यामितौजसः । हर्षयञ्श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम् ॥ ३ ॥
विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्कटा । वरदानकृतं वीर्यं धारयत्यबला बलम् ॥ ४ ॥
पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् । अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ५ ॥
पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा । कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ६ ॥
ददौ नागसहस्रस्य बलं चास्याः पितामहः । नत्वेव पुत्रं यक्षाय ददौ चासौ महायशाः ॥ ७ ॥
तां तु बालां विवर्धन्तीं रूपयौवनशालिनीम् । जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम्॥ ८ ॥

---

१ ] ति० टी०—अथेति । अप्रमेयस्याप्रमेयप्रभावस्य । शार्दूलः श्रेष्ठः ॥ १ ॥

रा० टी०—मुनिवचनश्रवणानन्तरकालिकं वृत्तमाह—अथेति । पुरुषशार्दूलः महापुरुषः अप्रमेयस्य इयत्तारहितप्रभावस्य तस्य मुनेः विश्वामित्रस्य अथ मङ्गलमूलमुत्तमं वचनं श्रुत्वा शुभां गिरं प्रत्युवाच ॥ १ ॥

गो० टी०—*स्त्रियोपि सर्वलोकविनाशिन्या वधे न दोष इत्याह पञ्चविंशे—अथेत्यादि । अप्रमेयस्य अप्रमेयप्रभावस्य॥१॥

२–३ ] ति० टी०—यदा यतः यक्षी यक्षजातिः श्रूयते पुराणादाविति शेषः । अबलेति साभिप्रायम् ॥ २ ॥ ३ ॥

रा० टी०—तदुक्तिमेवाह—अल्पवीर्येति । हे मुनिपुंगव! यदा यतः यक्षी ताटका अबला श्रूयते भवदुक्त्या ज्ञायते अतः अल्पवीर्या भवितुमर्हतीति शेषः । अतः नागसहस्रस्य बलं कथं धारयति ॥ २ ॥

रा० टी०—इतीति । अमितौजसः इयत्तारहितबलविशिष्टस्य राघवस्य इति अनेन प्रकारेण उक्तं वचनं श्रुत्वा येन हेतुना बलोत्कटा तं हेतुं त्वं शृणु इति वाक्यं विश्वामित्रोऽब्रवीत् । अमितौजस इत्यस्याग्रे ‘ हर्षयन् श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम् ’ इत्यपि श्लोकार्धं क्वचिद्दृश्यते ॥ ३ ॥

गो० टी०—अल्पेति । यदा यस्मात् यदायत्रादयो हेतावपि मुनिभिः प्रयुज्यन्ते यस्माच्छ्रूयन्ते तस्मात् अबला स्त्री कथं नागसहस्रस्य बलं धारयति ॥ २ ॥

४ ] ति० टी०—वीर्यं शौर्यादि बलमात्रप्रश्ने वीर्याभिधानं शौर्यादयोऽन्येऽपि गुणास्तस्यां सन्तीति ज्ञापनार्थम् ॥४॥

रा० टी०—विश्वामित्रवाक्यमेवाह—वरेति । अबला ताटका वरदानकृतं बलं वीर्यं शौर्यं च धारयति । तद्वरप्रदानकारणमुपन्यस्यन्नाह—वीर्यवान् अतिवीर्यविशिष्टः अनपत्यः अपत्यरहितः शुभाचारः यथोक्ताचारविशिष्टः महायक्षः यः सुकेतुर्नाम पूर्वमेवासीत् सः महत्तपस्तेपे । चशब्द एवार्थे । अनपत्यस्तेपे इत्यनेन अपत्यार्थमेव तस्य तप इति ध्वनितम् ॥ ४ ॥

गो० टी०—विश्वामित्र इति । येन हेतुना बलोत्तरा भवति तं शृणु—तस्या वरदानकृतं वीर्यं बलमस्ति अतोऽबलापि बलं धारयति ॥ ३ ॥

५ ] ति० टी०—वरप्राप्तिमूलमाह—पूर्वमिति । तेपे पुत्रार्थम् पितामहमुद्दिश्येति शेषः ॥ ५ ॥

गो० टी०—वरदानप्रकारमाह—पूर्वमित्यादि ॥ ४ ॥

६ ] ति० टी०—कन्यारत्नं दिव्यरूपवतीं कन्याम् ॥ ६ ॥

रा० टी०—पिताम इति । हे राम ! तदा तपश्चरणसमये एव संप्रीतः पितामहस्ताटकां नाम कन्यारत्नं तस्य तपोनिरतस्य यक्षपतेः सुकेतोर्ददौ नामतः प्रसिद्धमेतत् । प्रथमान्तात्तसिः । तुशब्द एवार्थे । यक्षपतेरित्यत्र संबन्धसामान्ये षष्ठी ॥ ५ ॥

गो० टी०—पितामह इति । नाम प्रसिद्धौ ॥ ५ ॥

७ ] ति० टी०—तदभिसंहितगुणवता पुत्रेणात्यन्तं जनपीडा भवेदिति विचार्य पुत्रं न ददौ ॥ ७ ॥

रा० टी०—ददाविति । पितामहो ब्रह्मा अस्याः ताटकाया एव नागसहस्रस्य सहस्रसंख्याकगजस्य बलमिव बलं ददौ महायशाः ब्रह्मा यक्षाय सुकेतवे पुत्रं नैव ददौ । पुत्रं नैव ददावित्यनेनास्य पुत्रो यदि स्यात्तर्हि महान्तं लोकोपद्रवं करिष्यतीति हेतुः सूचितः । चशब्द इवार्थकः तुशब्द एवार्थकः ॥ ६ ॥

गो० टी०—ददाविति । यक्षाय सुकेतवे ॥ ६ ॥

८ ] ति० टी०—विवर्धन्तीं वर्धमानाम् । जम्भपुत्रायेत्यत्र ‘ खञ्जुपुत्राय ’ इति पाठे खञ्जोः पुत्रः खञ्जुपुत्रः असुरयक्षयोर्देवयोनित्वेनोचितः संबन्धः ॥ ८ ॥

---

१ यक्षा इति गो. पाठः । २ अयं श्लोको गो. पुस्तके, उत्तरार्धं च रा. पुस्तके नास्ति । ३ बलोत्तरेति रा. पाठः । ४ संप्रीत इति गो. रा. पाठः । ५ ब्रह्मेति गो. रा. पाठः । ६ जातामिति गो. रा. पाठः । *स्त्रिया अपीति युक्तम् ।

कस्यचित्त्वथ कालस्य यक्षी पुत्रं[1] व्यजायत । मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ॥ ९ ॥
सुन्दे तु निहते राम अ[2]गस्त्यमृषिसत्तमम् । ताटका सहपुत्रेण प्रधर्षयितुमिच्छति ॥ १० ॥
भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ॥ ११ ॥
राक्षसत्वं भजस्वेति मारीचं व्याजहार सः । अगस्त्यः प[3]रमामर्षस्ताटकामपि शप्तवान् ॥ १२ ॥
पुरुषादी महायक्षी वि[4]रूपा विकृतानना । इदं रूपं वि[5]हायाशु दारुणं रूपमस्तु ते ॥ १३ ॥
सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता । देशमुत्सादयत्येनमग[6]स्त्याचरितं शुभम् ॥ १४ ॥
एनां राघव दु[7]र्वृत्तां यक्षीं परमदारुणाम् । गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १५ ॥

रा० टी०–तामिति । जातां सुकेतोरुत्पन्नां विवर्धन्तीं विवर्धमानां रूपयौवनशालिनीं यशस्विनीं ताटकां भार्यां पाणिगृहीतीं जम्भपुत्राय सुन्दाय ददौ तुशब्द एवार्थे ताटकं वयेतिवत् भार्यां ददाविति प्रयोगः क्वचित् 'तां तु बालां विवर्धन्तीम्' इति पाठः । जम्भपुत्रायेत्यत्र खज्जुपुत्रायेति पाठे खज्जोः पुत्रः खज्जुपुत्रः असुरयक्षयोर्दैवयोनित्वेनोचितः संबन्ध इति नागोजिभट्टाः । अत्र पाठे खज्जुरिति जम्भस्यैव नामान्तरं बोध्यम् ॥ ७ ॥

गो० टी०–तामिति । विवर्धन्तीं विवर्धमानां भार्यां ददौ भार्यात्वेन ददौ ॥ ७ ॥

९ ] ति० टी०–व्यजायत प्रासोष्टासूत ॥ ९ ॥

रा० टी०–कस्यचिदिति । कस्यचित्कालस्य अपगमे सतीति शेषः । यक्षी यक्षकुलोत्पन्ना ताटका यः शापादेव राक्षसोऽभवत् तं दुर्धर्षं धर्षयितुमशक्यं मारीचं नाम पुत्रं व्यजायत अजनयत् तुशब्द एवार्थे ॥ ८ ॥

गो० टी०–कस्यचिदिति । कस्मिंश्चित्काले गते सति अजायत अजनयत् ॥ ८ ॥

१० ] ति० टी०–शापं दर्शयति–सुन्दे त्विति । निहते अगस्त्येन शापं दत्त्वेति शेषः इच्छतीच्छति स्म ॥ १० ॥

रा० टी०–शापकारणं वदन्नाह–सुन्द इति । हे राम ! सुन्दे ताटकापतौ निहते अगस्त्यशापेन मृते सत्येव पुत्रेण सह सहिता सा ताटका मुनिपुंगवमगस्त्यं प्रधर्षयितुं हिंसितुमिच्छति "वर्तमानसामीप्ये" इति भूते लट् तुशब्द एवार्थे ॥९॥

गो० टी०–शापप्रकारमाह–सुन्दे त्विति । निहते अगस्त्येनेति शेषः प्रधर्षयितुं हन्तुमिच्छति ऐच्छत् ॥ ९ ॥

११-१२] ति० टी०–जातसंरम्भा स्वभर्तृवधजकोपवती भजस्व शुद्धदेवयोनिस्वरूपं मुक्त्वेति शेषः शप्तवान्राक्षसत्वं भजस्वेति ॥ ११ ॥ १२ ॥

रा० टी०–प्रधर्षणप्रकारं वदन्नाह–भक्षार्थमिति । जातसंरम्भा स्वपतिवधजनितकोपविशिष्टा अत एव गर्जन्ती सा ताटका भक्षार्थमगस्त्यभक्षणाय अभ्यधावत तुना मारीचोप्यभ्यधावत भगवान्समर्थः ऋषिः सर्वज्ञः अगस्त्यः आपतन्तीं तां तदुपलक्षितमापतन्तं मारीचं च दृष्ट्वा राक्षसत्वं भजस्व प्राग्रहीत मारीचं व्याजहार सः मारीचशापदाता परमक्रुद्धः अगस्त्यः ताटकामपि शप्तवान् । ताटकायाः सुन्दवच्छापेन प्राणवियोगाकरणं तु स्त्रीत्वेनानर्हत्वान्मारीचस्य तथात्वं तु बालत्वेन ज्ञातत्वात् ॥ १० ॥ ११ ॥

गो० टी०–भक्षेति । जातसंरम्भा स्वभर्तृवधजनितकोपा अत एव भक्षार्थमभ्यधावत । अर्थम् ॥ १० ॥

गो० टी०–आपतन्तीमिति । स्पष्टम् ॥ ११॥

गो० टी०–अगस्त्य इत्यर्थम् ॥ १२ ॥

१३ ] ति० टी०–तदेव विस्तरेणाह–पुरुषादीति । भवेति शेषः । तदेवोपपादयति–इदमिति । इदं रूपं यक्षिणीरूपं विहाय त्याजयित्वा दारुणं रूपं राक्षसीरूपमस्तु भवतु एतदेवाभिप्रेत्य पाद्मे उक्तम् ' तौ रामलक्ष्मणौ वीरावायान्तीं पथि राक्षसीम् । ताटकां नाम घोरां तां सुन्दभार्यां सुकेतुजाम् ' इति ॥ १३ ॥

रा० टी०–शापस्वरूपमाह–पुरुषादीति । महायक्षी त्वमिदं रूपं यक्षीस्वरूपं विहाय त्यक्त्वा विरूपा कुत्सितस्वरूपा विकृतानना विकारविशिष्टाननाविशिष्टा पुरुषादी पुरुषभक्षणशीला राक्षसी भवेति शेषः अथ अतः दारुणं क्रूरं रूपं स्वरूपं तेऽस्तु १२

गो० टी०–पुरुषादीति । पुरुषादी मनुष्यभक्षिणी त्वमिदं रूपं विहाय पुरुषादीत्यादिविशेषणयुक्ता भव अथ ते दारुणं क्रूरं रूपं शरीरमस्तु ॥ १३ ॥

१४ ] ति० टी०–अमर्षादसहनात् देशोत्सादने हेतुगर्भं विशेषणम् अगस्त्याचरितमिति अगस्त्यतपःस्थानमित्यर्थः १४॥

रा० टी०–सेति । शापकृतामर्षा शापेन कृतः उत्पादितः अमर्षो यस्यामत एव क्रोधमूर्छिता सा प्राप्तशापा एषा ताटका शुभं मङ्गलमगस्त्यचरितमगस्त्येनाचरितमगस्त्यकर्तृकाचरणविशिष्टं पौर्वकालिकागस्त्याश्रमवन्तमित्यर्थः एनं देशमुत्सादयति पीडयति । अत्र शापानन्तरमगस्त्यभक्षणान्निवृत्त्या तदा तयोर्भीत्यतिशयः सूचितः ॥ १३ ॥

गो० टी०–सैषेति । अगस्त्यचरितं तदानीमिति शेषः ॥१४॥

१५ ] ति० टी०–गोब्राह्मणहितार्थायेति स्त्रीवधशङ्का-

१ पुत्रमजायतेति गो. पाठः । २ सागस्त्यं मुनिपुंगवमिति गो. रा. पाठः । ३ परमः क्रुद्ध इति गो. रा. पाठः । ४ विरूपेति गो. रा. पाठः । ५ विहायाथेति गो. रा. पाठः । ६ अगस्त्यचरितमिति गो. रा. पाठः । ७ दुर्धर्षामिति रा. पाठः ।

नह्येनां शापसंसृष्टां[1] कश्चिदुत्सहते पुमान् । निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १६ ॥
नहि ते स्त्रीवधकृते घृणा कार्या नरोत्तम । चातुर्वर्ण्यहितार्थं[2] हि कर्तव्यं राजसूनुना ॥ १७ ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् । पातकं वा सदोषं वा कर्तव्यं रक्षता सदा[3] ॥ १८ ॥
राज्यभारनियुक्तानामेष धर्मः सनातनः । अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्यां[4] न विद्यते ॥ १९॥
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप । पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ २० ॥
विष्णुना च पुरा राम भृगुपत्नी पतिव्रता[5] । अनिद्रं[6] लोकमिच्छन्ती काव्यमाता निषूदिता ॥२१॥

निरासाय तद्धिताय क्रियमाणं पापवदाभासमानमपि धर्मायेति भावः ॥ १२ ॥

रा० टी०—एषा देशपीडानिवृत्तिः त्वया कर्तव्येति बोधयन्नाह—एनामिति । हे राघव ! दुर्धर्षामन्यकर्तृकधर्षणानर्हां परमदारुणामतिक्रूरां दुष्टपराक्रमां दुष्टः गोब्राह्मणादिहिंसाहेतुत्वेन दोषविशिष्टः पराक्रमो यस्याः तामेनां यक्षीं ताटकां गोब्राह्मणहितार्थाय गोब्राह्मणहितार्थं साधयितुं जहि मालाहत इव द्विप इत्यादाविव ताडनार्थोऽत्र हन्तिः किंच अत्र शिखी नष्ट इत्यादाविव विशेषणीभूतदुष्टपराक्रममात्रनिवर्तने तात्पर्यमत एव परमधर्मज्ञरामस्य 'वचनं कौशिकस्येति कर्तव्यमविशङ्कया' इति प्रतिज्ञानान्तरं 'नह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम्' इत्युक्तिः संगच्छते अत एव 'रामो द्विर्नाभिभाषते' इत्याद्युक्तिः सानुकूला । तथा च मीमांसा 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' ॥ १४ ॥

गो० टी०—एनामिति । जहि नाशय ॥ १९ ॥

१६ ] ति० टी०—शापसंसृष्टामगस्त्यशापव्याप्ताम् ॥ १६ ॥

रा० टी०—त्वदन्यः कश्चिन्नास्याः नियन्तेति बोधयन्नाह—नेति । हे रघुनन्दन ! शापसंस्पृष्टां शापयुक्तामेनां ताटकां निहन्तुं त्वामृते विना त्रिषु लोकेषु कश्चित्पुमान्नैवोत्सहते । हिशब्द एवार्थे । शापसंसृष्टामिति भट्टपाठः ॥ १९ ॥

गो० टी०—नहीति । शापसंस्पृष्टां शापयुक्ताम् ॥ १६ ॥

१७ ] ति० टी०—हे नरोत्तम ! ते स्त्रीवधनिमित्ता घृणा न कार्या अत्र नरोत्तमेत्यनेन पुरुषोत्तमेश्वररूपत्वात्तव पापसंबन्धाभाव इति ध्वनितम् चातुर्वर्ण्यहितार्थं तद्धिताय । कर्तव्यमित्यस्य नृशंसमित्याद्युत्तरेणान्वयः ॥ १७ ॥

रा० टी०—ननु स्त्रीनिष्ठदुष्टपराक्रमनाशोऽपि कथं मया कार्य इत्यत आह—नहीति । हे नरोत्तम ! स्त्रीवधकृते स्त्रीकर्तृकहिंसानिवृत्तये ते तव घृणा स्त्रीनिष्ठदुष्टपराक्रमविघातविषयकदयालुता नैव कार्या । तत्र हेतुः राजसूनुना राजपुत्रेण चातुर्वर्ण्यहितार्थं कर्तव्यमेव स्त्रीवधादिकमपीति शेषः हिशब्दावेवार्थौ १६॥

गो० टी०—नहीति । ते त्वया घृणा जुगुप्सा कर्तव्यं कर्मेति शेषः ॥ १७ ॥

१८ ] ति० टी०—वाशब्द इवार्थे । अनृशंसमिव नृशंसं क्रूरमपि कार्यमित्यर्थः प्रजारक्षणकारणात्प्रजारक्षणाद्धेतोः रक्षता सदेति रक्षाधर्मसमृद्धिशेषत्वनेति भावः । पातकं वा मुख्यपातकं वा सदोषं वा यज्ञादिवत्सदोषमीषत्पापयुतं धर्मं वा सदोषवधरूपमिति यावत् ॥ १८ ॥

रा० टी०—तदेव विशदयन्नाह—नृशंसमिति । प्रजारक्षणकारणात्प्रजारक्षणहेतोरेव पातकमन्येषां पातकावहं नृशंसं क्रूरं कर्म असदोषं सदोषरहितमनृशंसमक्रूरकर्म वा रक्षता प्रजापालनकर्त्रा सदैव कर्तव्यम् वाशब्दावेवार्थौ ॥ १७ ॥

गो० टी०—नृशंसमिति । नृशंसं क्रूरकर्म सदोषं सापवादं कर्म रक्षता राजपुत्रेण प्रजारक्षणकारणात्कर्तव्यम् ॥ १८ ॥

१९ ] ति० टी०—एष धर्म इति । एष धर्ममूलकत्वादिति भावः अतोऽप्यस्या वधो न्याय्य इत्याह—अधर्म्यामिति । धर्मादपेताम् तदेवोपपादयति—धर्मो हीति ॥ १९ ॥

रा० टी०—राज्येति । हे काकुत्स्थ ! एषः अन्येषां दोषावहः राज्यभारनियुक्तानां राज्ञां सनातनः नित्यो धर्मः अतः हेतोः यतः अस्याः ताटकायाः धर्मो न विद्यते अतः अधर्म्यां धर्मादपेतां ताटकां जहि तद्दुष्टतां निवर्तयेत्यर्थः हिहेतौ ॥ १८ ॥

गो० टी०—राज्येति । सनातनः नित्यः अधर्म्यामधर्मादनपेताम् । एतदेवाह—धर्म इति ॥ १९ ॥

२० ] ति० टी०—अधर्म्यः स्त्रीवधोऽपि धर्म एवेत्यर्थं संमतिभिरुपपादयति—श्रूयते इति । पृथिवीं तदधिष्ठात्रीं देवताम् यद्वा तस्याः प्रजा इत्यर्थः ॥ २० ॥

रा० टी०—स्त्र्यादिवधे शिष्टाचारं प्रमाणयन्नाह—श्रूयते इत्यादिश्लोकद्वयेन नृप हे राजन् ! शक्रः इन्द्रः पृथिवीं हन्तुमिच्छन्तीं विरोचनसुतां मन्थरां मन्थराख्यामभ्यसूदयत् इति श्रूयते हिशब्द इत्यर्थे ॥ १९ ॥

गो० टी०—स्त्रीवधस्य कर्तव्यत्वे इतिहासद्वयमाह—श्रूयत इत्यादिना मन्थरां मन्थराभिधानाम् ॥ २० ॥

२१ ] ति० टी०—अनिद्रं निद्रासुखरहितम् । 'अनिन्द्रम्' इति पाठे इन्द्ररहितम् । काव्यः शुक्रः ॥ २१ ॥

रा० टी०—विष्णुनेति । हे राम ! दृढव्रता अप्रच्युतसंकल्पा अनिद्रं निद्रानन्दरहितं लोकमिच्छन्ती काव्यमाता शुक्राचार्यजननी भृगुपत्नी पुरा विष्णुना निषूदिता इत्यपि श्रूयते इत्य-

१ संस्पृष्टामिति गो. रा. पाठः । २ हितार्थायेति गो. पाठः । ३ सतेति गो. पाठः । ४ ह्यस्या इति गो. रा. पाठः । ५ दृढव्रतेति गो. रा. पाठः । ६ अनिन्द्रमित्यपि पाठस्तिलककृत्संमतः ।

एतैश्चान्यैश्च बहुभी राजपुत्रैर्महात्मभिः । अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥
तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

विश्वामित्ररामयोः संवादः, विश्वामित्रवचसि रामविश्वासः, रामकृतज्याघोषः, तेन ताटकाक्रोधमूर्च्छनम्, रामलक्ष्मणसंवादः, स्त्रीत्वात्ताटकायाः कर्णनासाग्रच्छेदने रामाभिप्रायः, ताटकायाः कुवर्तनम्, रामकृतताटकाभुजच्छेदनम्, लक्ष्मणकृतकर्णनासाग्रच्छेदनम्, विश्वामित्ररामयोः संवादः, रामसायकैस्ताटकाप्राणोत्क्रमणम्, देवानां सुरपतेश्चात्यन्तसन्तोषः, विश्वामित्ररामलक्ष्मणानां ताटकावने वासश्च ।

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः । राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥
पितुर्वचननिर्देशात्पितुर्वचनगौरवात् । वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २ ॥
अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना । पित्रा दशरथेनाहं नावज्ञेयं [3]हि तद्वचः ॥ ३ ॥

नुकृष्यते एतेन यदि विशिष्टहतिः वृद्धव्यवहारसिद्धा तर्हि विशेषणमात्रहतिरिति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः चकार इत्यपीत्यर्थे अनिन्द्रमिति पाठे इन्द्ररहितमिति भट्टाः । शुक्रे तपश्चरणार्थं गते सति देवपीडितदैत्यप्रार्थितां देवहननोद्योगवतीं शुक्रमातरं भृगुपत्नीमिन्द्रप्रार्थितो विष्णुर्जघानेति मत्स्यपुराणे प्रसिद्धम् ॥ २० ॥

गो० टी०–विष्णुनेति । काव्यमाता शुक्रमाता इयं कथा मत्स्यपुराणे दर्शिता स्वपुत्रे शुक्रे देवाशिक्षार्थं रुद्रसमीपे तपस्यति सति देवपीडिता असुराः शुक्रमातरं भृगुपत्नीं शरणमगच्छन् सा चासुररक्षणार्थं देवान् हन्तुमुद्युक्ता तां चेन्द्रप्रार्थितो विष्णुरासाद्य तस्याः शिरश्चिच्छेदेति ॥ २१ ॥

२२ ] ति० टी०–एतैरेतादृशैः यद्वा आर्षं बहुत्वम् एताभ्यां शक्रविष्णुभ्यामित्यर्थः मच्छासनादिति यथा परशुरामस्य जमदग्नेर्गुरोराज्ञया मातृवधेऽपि न दोषस्तथा बलादिदातृत्वेन गुरोर्ममाज्ञया स्त्रीवधे तव न दोष इति भावः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०–तदेवोपसंहरन्नाह–एतैरिति । एतैः शक्रादिभिः अन्यैः महात्मभिः बहुभिः पुरुषसत्तमैः राजपुत्रैः 'अधर्मसहिता नार्यो हता एव महात्मभिः' इत्यादिविशेषणैस्तेषां परमाप्तत्वं ध्वनितम् तेन विशेषणमात्रनिवर्तने संशयो न कार्य इति ध्वनितम् एकश्चशब्द एवार्थे ॥ २१ ॥

रा० टी०–प्रकृतमाह–तस्मादिति । हे नृप ! तस्मात् आप्तैराचारितत्वात् घृणामबला न हन्तव्येत्याकारिकां करुणां त्यक्त्वा मच्छासनात्सद्भावितमदाज्ञातः एनां ताटकां जहि ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०–एतैरिति । एतैः एतादृशैरित्यर्थः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

१ ] ति० टी०–मुनेरिति । अक्लीबं धृष्टम् ॥ १ ॥

२ ] ति० टी०–पितुरिति । कौशिकस्य वचनमविशङ्कया कर्तव्यं त्वयेत्येवंरूपान्निर्देशान्नियोगात् पितुर्वचनगौरवात्परमाप्तवाक्यत्वेनातिप्रमाणत्वात् त्वद्वचनमवश्यं कर्तव्यत्वेन निश्चितमिति शेषः ॥ २ ॥

रा० टी०–मुनेरिति । अक्लीबं क्लीबतानिवर्तकं मुनेर्वचनं दृढव्रतः अप्रच्युतसंकल्पः नरवरात्मजः महाराजपुत्रो राघवः श्रुत्वा प्राञ्जलिर्भूत्वा पितुर्जनकस्य वचनगौरवाद्वचनस्य आज्ञापनस्य गौरवाद्गुरुत्वेनात्याज्यत्वादित्यर्थः पितुर्वचननिर्देशाद्वचनेन साक्षादुक्त्या यो निर्देशः कौशिकवचनमवश्यं कर्तव्यमित्याज्ञापनं तस्मात्कौशिकस्य विश्वामित्रस्य वचनमविशङ्कया कर्तव्यमिति निश्चित्य प्रत्युवाचेति द्वयोरेकत्रान्वयः निश्चित्येत्यध्याहारलभ्यम् ॥ १ ॥ २ ॥

गो० टी०–अथ ताटकावधः षड्विंशे–मुनेरित्यादि । अक्लीबं धृष्टम् ॥ १ ॥ पितुरिति । पितुर्वचननिर्देशान्नियोगात् कौशिकवचनं त्वया कर्तव्यमित्येवंरूपात् पितृवचनगौरवात् बहुमानाच्च इति उक्तप्रकारं कौशिकस्य वचनं कर्तव्यमिति मानसव्यापारः ॥ २ ॥

३ ] ति० टी०–कदैवं नियोगः कृत इत्यत्राह–अनुशिष्ट इति । गुरवो वसिष्ठवामदेवाद्याः अनवज्ञानहेतुरुक्त एव तद्वचो विश्वामित्रवच इत्यनुशिष्ट इत्यन्वयः ॥ ३ ॥

रा० टी०–विश्वामित्रं प्रति रामोक्तिमेवाह–अनुशिष्ट इत्यादिश्लोकत्रयेण । अयोध्यायां गुरुमध्ये वसिष्ठवामदेवादि-

१ राजपुत्रेति गो० पाठः । २ इदमर्धं गो० नास्ति । ३ चेति गो० रा० पाठः ।

सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः । करिष्यामि न संदेहस्ताटकावधमुत्तमम् ॥ ४ ॥
गोब्राह्मणहितार्थाय देशस्य च हिताय च । तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिन्दमः । ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ६ ॥
तेन शब्देन वित्रस्तास्ताटकावनवासिनः । ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७ ॥
तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता । श्रुत्वा चाभ्यद्रवत्क्रुद्धा यत्र शब्दो विनिःसृतः ॥ ८ ॥
तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् । प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९ ॥
पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः । भिद्येरन्दर्शनादस्या भीरूणां हृदयानि च ॥ १० ॥
एतां पश्य दुराधर्षां मायाबलसमन्विताम् । विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११ ॥

---

सन्निधौ महात्मना दशरथेन पित्रा तद्वचो विश्वामित्रवचनं त्वया तावज्ञेयमित्यहमनुशिष्टः शिक्षितोऽस्मि चशब्द इत्यर्थे ॥ ३ ॥

गो० टी०—मुनिं प्रत्याह—अनुशिष्ट इति ॥ ३ ॥

४ ] ति० टी०—सोऽहमिति । ब्रह्मवादिनस्तस्यापापस्पर्शेन तत्संकल्पादन्यस्यापि पापमपापं पुण्यं चेत्याह—उत्तममिति । उत्कृष्टधर्ममित्यर्थः ॥ ४ ॥

रा० टी०—स इति । पितुर्वचो वचनं श्रुत्वा आगतः सः भवद्वचनविषयकश्रद्धावानहं ब्रह्मवादिनो भवतः शासनात् आज्ञातः उत्तमं ताटकावधं करिष्यामि संदेहो नास्मिन् कृत्ये संशयो न कार्य इत्यर्थः ॥ ४ ॥

गो० टी०—सोऽहमिति। श्रुत्वा स्थितः सोहमित्यन्वयः॥४॥

५ ] ति० टी०—पुण्यत्वमेवोपपादयति—गोब्राह्मणेति । अप्रमेयस्य तव च हिताय अस्य हितं स्वाज्ञापरिपालनेन संतोषरूपम् इदमावर्तते तव वचनं कर्तुमुद्यतो विचिकित्सारहितोऽहं ताटकावधं करिष्यामीति पूर्वेणान्वयः ॥ ५ ॥

रा० टी०—गोब्राह्मणेति । गोब्राह्मणहितार्थाय गोब्राह्मणहितरूपप्रयोजनाय लोकस्य अस्मद्दृष्टिपथस्य अस्य देशस्य हिताय चकारेण यशःप्राप्तिरूपस्वहिताय चकारान्तरेण स्वनिष्ठभवच्छिष्यत्वप्रकटनाय अप्रमेयस्य इयत्तारहितप्रभावस्य तव वचनमुक्तिं कर्तुं साधयितुमुद्यत एवाहमस्मीति शेषः ॥ ५ ॥

गो० टी०—गोब्राह्मणेति । उद्यतः अहमिति शेषः ॥ ५ ॥

६ ] ति० टी—तीव्रं परुषश्रवणम् ॥ ६ ॥

रा० टी०—एवमिति। अरिंदमः स्वाश्रितारिनिवर्तकः रामः एवमनेन प्रकारेण उक्त्वा धनुर्मध्ये मुष्टिं बद्ध्वा शब्देन दिशः पूरयन्सन् तीव्रं ज्याघोषमकरोत् ॥ ६ ॥

गो० टी०—एवमिति । स्पष्टम् ॥ ६ ॥

७ ] ति० टी०—वित्रस्ता भीताः मोहिता व्याकुलचित्ता जाता ॥ ७ ॥

रा० टी०—तेनेति । तेन रामधनुर्ज्याजनितेन शब्देन ताटकावनवासिनः ताटकानुयायिन इत्यर्थः वित्रस्ताः अत्युद्विग्नचित्ता आसन्निति शेषः मोहिता दुष्टचित्ता ताटका तु तेन शब्देन सुसंक्रुद्धा आसीदिति शेषः चस्त्वर्थे ॥ ७ ॥

गो० टी०—तेनेति । सुसंक्रुद्धा प्रकृत्या अतिकोपना मोहिता किं कर्तव्यमिति संभ्रान्ता आसीत् ॥ ७ ॥

८ ] ति० टी०—तं शब्दं श्रुत्वा च क्रुद्धा स शब्दो यत्र यतो विनिःसृतस्तमभिनिध्याय शब्दनिःसरणावधिदेशं लक्षीकृत्याभ्यद्रवदिति योजना ॥ ८ ॥

रा० टी०—ताटकाकृत्यमाह—तमिति । तं ज्याजनितं शब्दं श्रुत्वा क्रोधमूर्छिता राक्षसी ताटका अभिनिध्याय शब्ददेशं निश्चित्य क्रुद्धा यतः क्रुद्धस्य क्रोधस्य आयतो विस्तारो यस्मात् सशब्दो यतो विनिःसृतस्तं देशमभ्यद्रवत् अत एव क्रोधमूर्छिता इत्यनेन क्रुद्धेत्यस्य न पौनरुक्त्यम् चशब्दो यत इत्यर्थे ॥ ८ ॥

गो० टी०—तमिति । अभिनिध्याय आकर्ण्य क्रोधमूर्च्छिता अःसात् श्रुत्वा क्रुद्धा साभ्यद्रवच ॥ ८ ॥

९ ] ति० टी०—प्रमाणेन शरीरप्रमाणेन ॥ ९ ॥

रा० टी०—तामिति । विकृतां विकृतस्वरूपामत एव विकृताननां प्रमाणेन शरीरेयत्तया अतिवृत्तामतिक्रान्तामतिप्रौढशरीरामित्यर्थः तां ताटकां स राघवः दृष्ट्वैव लक्ष्मणमभ्यभाषत ॥ ९ ॥

गो० टी०—तामिति । प्रमाणेन औन्नत्येन ॥ ९ ॥

१० ] ति० टी०—भैरवं भयंकरम् दारुणं घोरम् अस्य वपुषः । चोऽप्यर्थः । अभीरूणामपीत्यर्थः ॥ १० ॥

रा० टी०—तद्भाषणमेवाह—पश्येत्यादिश्लोकत्रयेण । हे लक्ष्मण ! यक्षिण्यास्ताटकाया भैरवं भयावहं दारुणमत्युत्कटं वपुः शरीरं पश्य अस्या दर्शनादेव भीरूणां हृदयानि भिद्येरन् । त्वशब्द एवार्थे ॥ १० ॥

गो० टी०—पश्येति। भैरवं भयंकरं दारुणं विकृतम् ॥१०॥

११ ] ति० टी०—एतामिति । विनिवृत्तामस्मत्संमुखागमनात्पराङ्वृत्तां पलायितामिति यावत् ॥ ११ ॥

रा० टी०—एतामिति । दुराधर्षामस्मदन्यैर्धर्षयितुमशक्यां मायाबलसमन्वितां मायाबलमन्तर्धानादिक्रियासामर्थ्यं तेन समन्वितां युक्तामेनां ताटकां त्वं पश्य एनां हृतकर्णाग्रनासिकां हृतं मया छिन्नं कर्णाग्रनासिकं यस्यास्तामत एव वि-

---

१ लोकस्येति गो. रा. पाठः । २ वेगादिति गो. पाठः । ३ यत इति गो. रा. पाठः । ४ क्रुद्ध इति रा. पाठः । ५ वृत्तामिति रा. पाठः । ६ एनामिति गो. रा. पाठः । ७ एतामिति रा. पाठः ।

नह्येनामुत्सहे हन्तु स्त्रीस्वभावेन रक्षिताम् । वीर्यं चास्या गतिं चैवं हन्यामिति हि मे मतिः ॥ १२ ॥
एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता । उद्यम्य बाहुं गर्जन्ती राममेवाभ्यधावत ॥ १३ ॥
विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिभर्त्स्य ताम् । स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १४ ॥
उद्धुन्वाना रजो घोरं ताटका राघवावुभौ । रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १५ ॥
ततो मायां समास्थाय शिलावर्षेण राघवौ । अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ १६ ॥
शिलावर्षं महत्तस्याः शरवर्षेण राघवः । प्रतिवार्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७ ॥
ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् । सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८ ॥
कामरूपधरा सा तु कृत्वा रूपाण्यनेकशः । अन्तर्धानं गता यक्षी मोहयन्ती स्वमायया ॥ १९ ॥

---

निवृत्तां पराङ्मुखीमहं करोमीति त्वं पश्य एतेनकर्णच्छेदादिना तस्या दुष्टपराक्रमध्वंसो भविष्यत्येवेति सूचितम् ॥ ११ ॥

गो० टी०—एनामिति । मायाबलमन्तर्धानबलं विनिवृत्तां पराङ्मुखीमेतावतैव गुरुवचनानुष्ठानसिद्धेरिति भावः ॥ ११ ॥

१२ ] ति० टी०—कर्णादिहरणमात्रे हेतुमाह—नहीति । वीर्यं परपराभवशक्तिं गतिमाकाशादिगतिं पाणिपादच्छेदेनेति शेषः तावतैव देशहितस्य गुरुवचनानुष्ठानस्य च सिद्ध्या शूरविगर्हितः स्त्रीवधोऽनुचित इति भावः ॥ १२ ॥

रा० टी०—नन्वस्याः साक्षाद्वधः कुतो न क्रियत इत्यत आह—नहीति । स्त्रीस्वभावेन स्त्री स्त्रीत्वं स्वभावः स्वस्यां भावोऽतिबलप्राप्तिश्चानयोः समाहारः तेन रक्षितां स्त्रीत्वाद्वीरशूरकर्तृकवधानर्हत्वेन अतिबलवतीत्वादितरैर्हन्तुमशक्यत्वेन च पालितामेनां हन्तुमहं नैवोत्सहे अतः अस्याः वीर्यं गतिं च हनिष्यामीत्येव मे मतिः निश्चयः हिर्हेतौ एकश्चशब्दोऽपिश्चैवार्थे एतेन शूरधर्मसंरक्षणं गुरोः संतोषश्च भविष्यतीति ध्वनितम् ॥ १२ ॥

गो० टी०—नहीति । वीर्यगतिहननं हस्तपादभञ्जनेन ॥ १२ ॥

१३ ] ति० टी०—राममेव विश्वामित्रस्य दुर्धर्षत्वेन तं विसृज्य मानुषबुद्ध्या राममेवेत्यर्थः ॥ १३ ॥

रा० टी०—एवमिति । रामे एवं ब्रुवाणे सत्येव क्रोधमूर्छिता ताटका बाहू उद्यम्य गर्जन्ती सती एव राममभ्यधावत् तुशब्द एवार्थे ॥ १३ ॥

गो० टी०—एवमिति । स्पष्टम् ॥ १३ ॥

१४ ] ति० टी०—तां रामसंमुखमभिधावन्तीम् जयं च जयविषयकाशिषं च ॥ १४ ॥

रा० टी०—विश्वामित्र इति । ब्रह्मर्षिर्विश्वामित्रः हुंकारेणैव तां ताटकामभिभर्त्स्य राघवयोः रामलक्ष्मणयोः स्वस्ति अस्तु इत्यभ्यभाषत जयं जयशब्दं चाभ्यभाषत चशब्द इत्यर्थे ॥ १४ ॥

गो० टी०—विश्वामित्र इति । अस्त्वित्यत्र इतिशब्दोऽध्याहार्यः अतिमानुषशक्तिं जानन्नपि ताटकायाः क्रौर्यातिशयं दृष्ट्वातिशङ्कया महर्षिर्मङ्गलमाशास्ते ॥ १४ ॥

१५ ] ति० टी०—घोरं रज उद्धुन्वानेत्यन्वयः । रजोमेघेन रजोऽन्धकारेण ॥ १५ ॥

रा० टी०—उद्धुन्वानेति । घोरमुत्कटं रजः धुन्वाना उत्किरन्ती ताटका महता रजोमेघेन मेघसदृशरजसा एव उभौ राघवौ रामलक्ष्मणौ मुहूर्तममोहयत् मोहनानुकूलव्यापारं चकारेत्यर्थः तुशब्द एवार्थे ॥ १५ ॥

गो० टी०—उद्धून्वानेति । उद्धून्वाना उत्किरन्ती ॥ १५ ॥

१६ ] ति० टी०—मायां समास्थाय अन्तर्धानं गत्वेति यावत् चुक्रोध स्त्रीत्वप्रयुक्तदाक्षिण्यं विसृज्येति शेषः ॥ १६ ॥

रा० टी०—तत इति । ततः रजोवर्षणानन्तरं मायामन्तर्धानं समास्थाय स्वीकृत्य सुमहता शिलावर्षेण राघवौ रामलक्ष्मणौ अवाकिरत् ततः तस्माच्छिलावर्षणाद्राघवो रामः चुक्रोध तदपकारनिवर्तनहेतुभूतक्रोधं चकारेत्यर्थः ॥ १६ ॥

गो० टी०—तत इति । मायामन्तर्धानशक्तिम् ॥ १६ ॥

१७ ] ति० टी०—पत्रिभिरिति । एकैकस्य बहुधा खण्डनाभिप्रायेण ॥ १७ ॥

रा० टी०—शिलेति । तस्याः ताटकायाः महच्छिलावर्षं शरवर्षेण राघवो रामः प्रतिहत्य विनाश्य उपधावन्त्या तस्याः करौ पत्रिभिर्बाणैः चिच्छेद ॥ १७ ॥

गो० टी०—शिलेति । प्रतिहत्य भङ्क्त्वा करौ चिच्छेद शिलावर्षहेतुत्वात्पत्रिभिः शरैः ॥ १७ ॥

१८ ] ति० टी०—हृते कर्णाग्रे नासिका च यस्यास्ताम् १८

रा० टी०—तत इति । ततः भुजच्छेदनानन्तरं छिन्नभुजां छिन्नौ भुजौ यस्याः तामत एव श्रान्तामभ्यासे समीपे परिगर्जतीं ताटकां सौमित्रिः लक्ष्मणः क्रोधोद्धृतकर्णाग्रनासिकामकरोत् १८

गो० टी०—तत इति । अभ्याशे समीपे गर्जतीं गर्जन्तीं नुमभाव आर्षः ॥ १८ ॥

१९ ] ति० टी०—अनेकशो रूपाणि कृत्वान्तर्धानं गता सती स्वमायया राघवौ मोहयन्ती ॥ १९ ॥

रा० टी०—कामेति । कामरूपधरा ईप्सितस्वरूपधारण-

---

१ चापीति गो. रा. पाठः । २ हनिष्यामीति गो. रा. पाठः । ३ चाप्यभ्येति रा. पाठः । ४ उद्धून्वानेति गो. पाठः । ५ त्वमोहयदिति रा. पाठः । ६ हत्येति गो. रा. पाठः । ७ सद्य इति गो. रा. पाठः ।

अश्मवर्षं विमुञ्चन्ती भैरवं विचचार सा¹ । ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ॥ २० ॥
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् । अलं ते घृणया राम पापैषा दुष्टचारिणी ॥ २१ ॥
यज्ञविघ्नकरी यक्षी पुरा वर्धेत³ मायया । वध्यतां तावदेवैषा पुरा संध्या प्रवर्तते ॥ २२ ॥
रक्षांसि संध्याकाले⁴ तु दुर्धर्षाणि भवन्ति हि⁵ । इत्युक्तः स⁶ तु तां यक्षीमश्मवृष्ट्याभिवर्षिणीम्॥२३॥
दर्शयञ्छब्दवेधित्वं तां रुरोध ससायकैः । सा रुद्धा बाणजालेन मायाबलसमन्विता ॥ २४ ॥
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी । तामापतन्तीं वेगेन विक्रान्तामशनीमिव ॥ २५ ॥

---

समर्था अत एव सद्यः शीघ्रमनेकशो रूपाणि कृत्वा अन्तर्धानं गता प्राप्ता यक्षी ताटका स्वमायया मोहयन्ती मोहनानुकूलव्यापारं कुर्वती भैरवं भयंकरमश्मवर्षं प्रसिद्धं विमुञ्चन्ती विचचार। सार्धश्लोक एकान्वयी हशब्दः प्रसिद्धौ॥१९॥२०॥

गो० टी०—कामेति । कामरूपधरा कामरूपधरणशक्ता अत एवानेकशो रूपाणि कृत्वा मायया अन्तर्धानं गता सती भैरवमश्मवर्षं विमुञ्चन्ती मोहयन्तीव विचचार। अर्धत्रयम्॥१९॥

२० ] ति० टी०—भैरवमश्मवर्षमित्यन्वयः ॥ २० ॥

रा० टी०—तत इति । ततः राक्षसीकृताश्मवर्षणानन्तरं समन्ततः चतुर्दिक्षु अश्मवर्षेण कीर्यमाणौ तौ रामलक्ष्मणौ श्रीमान् तपःसंपत्तिविशिष्टः गाधिसुतो विश्वामित्रः दृष्ट्वा इदं वक्ष्यमाणं वचनमब्रवीत् ॥ २१ ॥

गो० टी०—तत इति। श्रीमान्स्वत एव ताटकावधहेतुप्राप्तिकृतहर्षेण कान्तिमान् ॥ २० ॥

२१ ] ति० टी०—घृणयालं स्त्री इति घृणा मास्त्वित्यर्थः दुष्टचारिणी मायाशक्त्यान्तर्धानेन पाषाणादिदृष्टिकर्त्री अतो घृणानुचिता ॥ २१ ॥

रा० टी०—तद्वचनमेवाह—अलमिति । हे वार! ते तव घृणया कृपया अलं विशेषणमात्रत्याजनेपि घृणां न कुरु इत्यर्थः। दुष्टचारिणी दोषविशिष्टाचरणशीला अत एव यज्ञविघ्नकरी यक्षी ताटका पुरा रामः पूर्वसंध्यायां मायया वर्धेत अतो यावत्पुरा संध्या प्रवर्तते प्रवर्तिष्यते तावदेवैषा ताटका वध्यताम् तत्र हेतुः संध्याकालेषु रक्षांसि दुर्धर्षाण्येव भवन्ति वैशब्द एवार्थे "यावत्पुरानिपातयोः" इति विहितः प्रवर्तत इत्यत्र लट् द्वयोरेकत्रान्वयः ॥ २२ ॥ २३ ॥

गो० टी०—अलमिति । दुष्टचारिणी दुष्टं यथा तथा आचरणशीला अन्तर्धानशक्त्या अश्मवर्षशीलेत्यर्थः एतेन ऐहिकनाशकत्वमुक्तं पारलौकिकनाशकत्वमप्याह—यज्ञविघ्नकरीति । पुरा वर्धति वर्धिष्यते "यावत्पुरानिपातयोर्लट्" ॥ २१ ॥

२२ ] ति० टी०—घृणा नोचितेत्यत्र हेत्वन्तरमाह—यज्ञविघ्नकरीति । मायया पुरा यावद्वर्धेत तावत्तत्कालात्पुरैव पूर्वमेवैषा वध्यताम् सायंसंध्या पुरा प्रवर्तते प्रवर्तयिष्यत इत्यर्थः२२

गो० टी०—वध्यतामिति । संध्या पुरा प्रवर्तते प्रवर्तिष्यते तावत् पूर्वमेव वध्यताम् । संध्याप्रवृत्तौ का हानिस्तत्राह—रक्षांसीति ॥ २२ ॥

२३ ] ति० टी०—किं तत्रेत्याह—रक्षांसीति । अश्मवृष्ट्येति करणे तृतीया ॥ २३ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण उक्तः स रामः शब्दवेधित्वं श्रूयमाणः शब्दो यस्मादुत्पन्नः तद्वेधित्वं गुणं दर्शयन्सन् अश्मवृष्ट्या तथा अभिवर्षतीमभिवर्षन्तीं तां यक्षीं ताटकां सायकैः बाणैः रुरोध वृष्टिप्रतिबन्धं चकारेत्यर्थः॥२४॥

गो० टी०—इतीति । अभिवर्षतीमभिवर्षन्तीं शब्दवेधित्वं श्रुतः शब्दो यस्मादुत्पन्नः तद्वेधित्वम् ॥ २३ ॥

२४ ] ति० टी०—शब्दमात्रेण लक्ष्यं सम्यङ्निश्चित्य वेधकर्तृत्वसामर्थ्यं दर्शयन्नित्यर्थः ॥ २४ ॥

रा० टी०—सेति । शरजालेन बाणसमूहेन रुद्धा मायाबलसमन्विता अन्तर्धानादिक्रियानिपुणा सा ताटका विनेदुषी अतिनादं कुर्वती सती काकुत्स्थं रामं लक्ष्मणं च अभिदुद्राव अन्तर्धानं हित्वा रामसंमुखं द्रुतं जगामेत्यर्थः ॥ २६ ॥

गो० टी०—सेति । अभिदुद्राव अप्रयोजकमन्तर्धानं विहायेत्यर्थः विनेदुषी नादं कुर्वन्ती ॥ २४ ॥

२५ ] ति० टी०—अभिदुद्रावेति । अन्तर्धानं हित्वेति शेषः ॥ २६ ॥

रा० टी०—तामिति । विक्रान्तां प्रक्षिप्तामशनीं वज्रमिव वेगेनापतन्तीं तां ताटकां शरेण उरसि विव्याध *तताड अतः सा ताटका ममार मं शिवसन्निधिमार जगाम पपात च तद्देशं प्राप्य शिवसंनिधावपतदित्यर्थः । किंच अपपातमम् अपगतः पातः पुनरावृत्तिर्यस्मात्स एव मः शिवस्तं कैलासाद्रिमित्यर्थः आर प्राप बाणवेगेन तत्र प्रक्षिप्तेत्यर्थः एतेन स्त्रीत्वादेव त्वं न हतास्यतस्तत्र पुनर्न गन्तव्यमिति शिव उपदेक्ष्यतीति हेतुर्व्यक्तः । अत एव 'नह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम्' इतिप्रतिज्ञया न विरोधः अत एव 'रामो द्विर्नाभिभाषते, इति सानुकूलमत एव 'सुन्दस्त्रीदमनप्रमोदमुदितादास्थाय विद्योदयं रामः सत्यवतीसुतादथ गतस्तस्याश्रमं लीलया । क्रूरे कौशिकनन्दनेन च मखे तत्रागतान्राक्षसान्हत्वाऽमूमुचदाशुभाविविदसौ मारीचमुग्राकृतिम्' इतिहनुमन्नाटकपद्यघटकीभूतसुन्दस्त्रीदमन-

---

१ हेति रा. गो. पाठः । २ वीरेति गो. रा. पाठः । ३ वर्धतीति गो. रा. पाठः । ४ कालेष्विति गो. रा. पाठः । ५ वै इति गो. रा. पाठः । ६ तु तदेति गो. तथेति रा. पाठः । ७ वर्षतीमिति गो. रा. पाठः । ८ शरेति गो. रा. पाठः । * ताडयामासेति युक्तम् ।

शरेणोरसि विव्याध सा पपात ममार च । तां हतां भीमसंकाशां दृष्ट्वा सुरपतिस्तदा ॥ २६ ॥
साधु साध्विति काकुत्स्थं सुराश्चा[1]प्यभिपूजयन् । उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ॥ २७ ॥
सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् । मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ॥ २८ ॥
तोषिताः कर्मणानेन स्नेहं दर्शय राघवे । प्रजापतेः कृशाश्वस्य पुत्रान्सत्यपराक्रमान् ॥ २९ ॥
तपोबलभृतो ब्रह्मन्राघवाय निवेदय । पात्रभूतश्च ते ब्रह्मंस्तवानुगमने रतः[2] ॥ ३० ॥
कर्तव्यं [3]सुमहत्कर्म सुराणां राजसूनुना । एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा[4] विहायसम् ॥ ३१ ॥
विश्वामित्रं पूजयन्त[5]स्ततः संध्या प्रवर्तते । ततो मुनिवरः प्रीतस्ताटकावधतोषितः ॥ ३२ ॥
मूर्ध्नि राम[6]मुपाघ्राय इदं वचनमब्रवीत् । इहाद्य रजनीं राम वसाम शुभदर्शन ॥ ३३ ॥
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम । विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ॥ ३४ ॥

---

प्रमोदमुदितादिति पद्यघटकदमनप्रयोगः संगच्छते अन्यथा सुन्दस्त्रीहननप्रमोदमुदितादिति वदेदिति दिक् । 'मो यमे समयेऽपि स्याद्विषे च मधुसूदने । मा स्त्री पद्मालयायां स्यात्पुंल्लिङ्गश्चन्द्रशेखरे' इति मेदनी । अस्मिन्नर्थे चेवे । अशनीमित्यत्र " कृदिकारादक्तिनः " इति ङीप् ॥ २६ ॥

**गो० टी०—तामिति** । अशनीम् "सर्वतोऽक्तिन्नर्थादित्येके" इति ङीष् ॥ २६ ॥

२६ ] **ति० टी०**—भीमसंकाशां भामरूपाम् ॥ २६ ॥

**रा० टी०—तामिति** । तदा पतनकाले भीमसंकाशां भयंकररूपां हतां तां ताटकां दृष्ट्वा सुरपतिरिन्द्रः सुराश्च काकुत्स्थं रामं साधु साध्विति समपूजयन् प्रशशंसुः चाप्यभिपूजन्निति भाट्टपाठः अडभाव आर्ष इति तद्व्याख्या ॥ २७ ॥

**गो० टी०—तामिति** । भीमसंकाशां भीमरूपां सुरपतिः सुराश्च समपूजयन् ॥ २६ ॥

२७ ] **ति० टी०**—अभिपूजयन् अडभाव आर्षः । सहस्राक्षो विश्वामित्रमुवाचेत्यन्वयः ॥ २७ ॥

**रा० टी०—उवाचेति** । परमप्रीतः अतिप्रसन्नः सहस्राक्षः सहस्रनेत्रविशिष्टः पुरंदर इन्द्रः विश्वामित्रमुवाच अथानन्तरं संहृष्टाः सर्वे सुराः देवाश्च अब्रुवन् । एकस्य यौगिकत्वस्वीकारेण न पौनरुक्त्यम् ॥ २८ ॥

**गो० टी०—उवाचेति** । स्पष्टम् ॥ २७ ॥

२८ ] **ति० टी०**—किमुक्तवन्तस्तदाह—**मुने इति** ॥ २८ ॥

**रा० टी०**—तदुक्तिमेवाह—**मुने इति** । हे मुने कौशिक ! भद्रं कल्याणं तेऽस्तु यतः सेन्द्रा इन्द्रसहिताः सर्वे मरुद्गणा वयमनेन ताटकाघातनेन कर्मणा तोषिताः त्वयेति शेषः । अतः राघवे रामे स्नेहं एतादृशः प्रियः विश्वामित्रस्य कश्चिन्नास्तीत्येतद्गमकव्यापारविशेषं दर्शय प्रकटय ॥ २९ ॥

**गो० टी०—मुने इति** । सर्वे वयमिति शेषः स्नेहं दर्शय स्नेहकार्यं प्रवर्तय ॥ २८ ॥

२९ ] **ति० टी०**—तोषिताः वयमिति शेषः । अनेन कर्मणा त्वत्प्रवर्तितताटकावधरूपेण स्नेहं दर्शय मदीयोऽयमाप्तः शिष्य इति स्नेहमूलं व्यापारं प्रवर्तय । तमेव व्यापारमाह—**प्रजापतेरिति** ॥ २९ ॥

**रा० टी०**—तं व्यापारं बोधयन्त आहुः—**प्रजेति** । हे ब्रह्मन् ! सत्यपराक्रमान् कापट्यरहितपराक्रमविशिष्टान् तपोबलभृतः तपोबलेन पोषकान् प्रजापतेः कृशाश्वस्य पुत्रान्राघवाय निवेदय ॥ ३० ॥

**गो० टी०**—एतदेवाह—**प्रजापतेरिति** ॥ २९ ॥

३०–३१ ] **ति० टी०**—तपसा ज्ञानेन बलेन च भृतः पूर्णः ते तव दानस्य पात्रभूतश्च राघवः अतस्तस्मै कृशाश्वपुत्रान्निवेदय तथा लब्धानामेवास्त्राणां कार्यक्षमत्वमिति भावः अनुगमने शुश्रूषणे दृढनिश्चयः ॥ ३० ॥ ३१ ॥

**रा० टी०**—कृशाश्वपुत्राः समर्पणीया इत्यत्र हेतुमाहुः—**पात्रेति** । हे ब्रह्मन् ! तवानुगमने रतः अनुगमनविषयकवृत्तिविशिष्टः रामः ते तव पात्रभूतः त्वत्कर्तृकदानसंप्रदानत्वयोग्यः राजसूनुना सुराणां महत्कार्यं कर्तव्यमेव अतोऽस्मै निवेदयेति पूर्वेणान्वयः एकश्चकार एवार्थे अपरो हेत्वर्थे ॥ ३१ ॥

**गो० टी०—पात्रेति** । अयमिति शेषः । अनुगमने शुश्रूषणे धृतः स्थिरधीः ॥ ३० ॥

**रा० टी०—एवमिति** । हृष्टाः सर्वे सुरा एवमनेन प्रकारेण विश्वामित्रमुक्त्वा पूजयन्तः प्रशंसां कुर्वन्तः सन्तः विहायसं जग्मुः ततोऽनन्तरं संध्या प्रवर्तते प्रावर्तत । "वर्तमानसामीप्ये" इति लट् ॥ ३२ ॥

**गो० टी०—एवमिति** । पुरस्कृत्य पूजयित्वा जग्मुः संध्या सायंसंध्या प्रवर्तते स्म ॥ ३१ ॥

३२–३४ ] **ति० टी०**—पूजयन्तः स्तुवन्तो जग्मुरित्यन्वयः प्रवर्तत इत्यस्य स्मेति शेषः ॥ ३२ ॥ ३३ ॥ ३४ ॥

**रा० टी०—तत इति** । ततो देवगमनानन्तरं ताटकावध-

---

१ च, समेति गो. रा. पाठः । २ धृत इति गो. वृत इति रा. पाठः । ३ च महत्कार्यमिति गो. रा. पाठः । ४ यथागतमिति गो. रा. पाठः । ५ पुरस्कृत्येति गो. पाठः । ६ अवघ्रायेति रा. पाठः ।

उवास रजनीं तत्र ताटकाया वने सुखम् । मुक्तशापं वनं तच्च तस्मिन्नेव तदाहनि ॥
रमणीयं विबभ्राज[1] यथा चैत्ररथं वनम् ॥ ॥ ३५ ॥
निहत्य तां यक्षसुतां स[2] रामः प्रशस्यमानः सुरसिद्धसंघैः[3] ।
उवास तस्मिन्मुनिना सहैव प्रभातवेलां प्रतिबोध्यमानः ॥ ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ।

रामाय ताटकावधसंतुष्टविश्वामित्रकृतास्त्रदानम्, तत्तदस्त्राधिपतिदैवतस्य रामायानुग्रहप्रार्थना, विश्वामित्ररामयोः संवादश्च ।

अथ तां रजनीमुष्य विश्वामित्रो महायशाः । प्रहस्य राघवं वाक्यमुवाच मधुरस्वरम्[4] ॥ १ ॥
परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः । प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २ ॥

तोषितः स्वप्रेरितरामकर्तृकताटकाताडनेन तोषिताः सुरा येन स प्रीतो मुनिवरो विश्वामित्रो रामं मूर्ध्नि अवघ्राय इदं वचनमब्रवीत् ॥ ३३ ॥

गो० टी०—तत इति । स्पष्टम् ॥ ३२ ॥

रा० टी०—तद्वचनमेवाह—इहेति । हे शुभदर्शन राम ! अद्य रजनीमिह वसाम श्वोऽनागतेऽह्नि प्रभाते प्रातःकाले तत्प्रसिद्धं मम आश्रमपदमत्यन्तश्रमनिवर्तकं स्थानं गमिष्यामः अनद्यतनत्वाविवक्षया लट् ॥ ३४ ॥

गो० टी०—इहेति । तत् पूर्वोक्तम् ॥ ३३ ॥

रा० टी०—विश्वामित्रेति । विश्वामित्रवचः श्रुत्वा हृष्टो हर्षं प्राप्तो दशरथात्मजो रामः तत्र प्रसिद्धे ताटकाया वने रजनीं सुखं यथा स्यात्तथा उवास ॥ ३५ ॥

गो० टी०—विश्वामित्रेति । स्पष्टम् ॥ ३४ ॥

३५ ] ति० टी०—मुक्तशापमपगतोपद्रवं यद्वा लब्धशापया ताटकया मुक्तम् ॥ ३५ ॥

रा० टी०—मुक्तेति । मुक्तशापं रहितोपद्रवम् किंच मुक्ता रामबाणस्पर्शेन स्वस्वरूपं प्राप्ता शापा शापविशिष्टा ताटका यस्मिन् तत्प्रसिद्धं वनं तस्मिन् ताटकाहननाधारभूते अहनि दिने तदा ताटकाहननकाले एव रमणीयं चैत्ररथं वनं यथा इव सुबभ्राज । तस्मिन्नेव तदहनीत्येतदग्रे 'चम्पकाशोकपुन्नागमल्लिकाभिः सुशोभितम् । चूतैश्च पनसैः पूगैर्नारिकेरैश्च शोभितम् ॥ वापीकूपतटाकैश्च दीर्घिकाभिरलंकृतम् । मल्लिकाहेमकूटैश्च मण्डपैरुपशोभितम् ॥' इतिश्लोकद्वयं तीर्थभट्टटीकाङ्कितपुस्तके दृश्यते टीका तु नैतयोरिति दिक् ॥ ३६ ॥

गो० टी०—मुक्तशापमिति । मुक्तशापं मुक्तोपद्रवं तस्मिन्नहनि तदैव तत्क्षणे एव चैत्ररथं कुबेरोद्यानम् ॥ ३५ ॥

३६ ] ति० टी०—प्रभातवेलां प्रतिबोध्यमान इति विश्वामित्रेणेत्यादिः जजागारेति शेषः ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-आदिकाव्ये बालकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०—निहत्येति । तां प्रसिद्धां यक्षसुतां ताटकां पराक्रमात्[2] परेषां महात्मनां य आक्रमः पीडनं तस्मात्तन्निवृत्तये इत्यर्थः निहत्य सुरसिद्धसंघैः प्रशस्यमानः स रामः मुनिना सहैव तस्मिन्वने उवास ततः प्रभातवेलां प्रति प्रातःकाले बोध्यमानो मुनिना आसीदिति शेषः ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०—निहत्येति । प्रतिबोध्यमानः मुनिनेति शेषः 'कौसल्या सुप्रजा राम' इत्येवं प्रबोधितोऽभूदित्यर्थः उपजातिवृत्तम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

१ ] ति० टी०—अथेति । उष्येत्यार्षम् प्रहस्य विजयशालिरामदर्शनजसंतोषजो हासः ॥ १

रा० टी०—अथेति । महायशाः विश्वामित्रः तां रजनीमथोष्य समकूलं निवासं कृत्वा प्रहस्य मधुराक्षरं मधुराक्षरयुक्तं वाक्यं राघवमुवाच अथशब्दो मङ्गलार्थः ल्यबार्षः ॥ १ ॥

गो० टी०—अस्त्रगणलाभः सप्तविंशे—अथेत्यादि । उष्य उषित्वा प्रहस्य प्रहर्षेण मन्दहासं कृत्वा ॥ १ ॥

२ ] ति० टी०—सर्वशः सर्वाणि ॥ २ ॥

रा० टी०—तद्वचनमेवाह—परीत्यादिभिः । हे महायशः राजपुत्र ! अहं परितुष्टः प्रसन्नोऽस्मि अतस्ते भद्रं कल्याणमस्तु

१ सुबभ्राजेति रा. पाठः । २ पराक्रमादिति रा. पाठः । ३ रुद्रैरिति रा. पाठः । ४ मधुराक्षरमिति गो. रा. पाठः ।

देवासुरगणान्वापि सगन्धर्वोरगान्भुवि । यैरमित्रान्प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥
तानि दिव्यनि भद्रं ते ददाम्यस्त्राणि सर्वशः । दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ॥ ४ ॥
धर्मचक्रं ततो वीर कालचक्रं तथैव च । विष्णुचक्रं तथात्युग्रमैन्द्रं चक्रं तथैव च ॥ ५ ॥
वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा । अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥ ६ ॥
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् । गदे द्वे चैव काकुत्स्थ मोदकीशिखरी शुभे ॥ ७ ॥
प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज । धर्मपाशमहं राम कालपाशं तथैव च ॥ ८ ॥
वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम् । अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ॥ ९ ॥
ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा । आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥ १० ॥
वायव्यं प्रथमं नाम ददामि तव चानघ । अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥ ११ ॥
शक्तिद्वयं च काकुत्स्थ ददामि तव राघव । कङ्कालं मुसलं घोरं कापालमथ किङ्किणीम् ॥ १२ ॥

---

अत एव परमया अत्युत्कृष्टया प्रीत्या त्वद्विषयकप्रेम्णा युक्तोऽहं सर्वशः निखिलान्यस्त्राणि ते ददामि तें इत्युभयान्वयि ॥ २ ॥

गो० टी०–परीति । महायश इति संबुद्धित्वान्न दीर्घः प्रीत्या परमया युक्त इति परितुष्टोस्मीत्यस्यानुवादः सर्वशः सर्वाणि ॥ २ ॥

३ ] ति० टी०–देवासुरगणान्वापि वाशब्दश्चार्थे गन्धर्वोरगसहितदेवासुरगणरूपशत्रूनपि प्रसह्य बलेन जयिष्यसि जेष्यसि यदि वधे दया तदा वशीकृत्य संमोहनास्त्रादिना जेष्यसि अन्येषां तु का गणनेति भावः ॥ ३ ॥

रा० टी०–अस्त्रग्रहणे प्रयोजनं बोधयन्नाह–देवेत्यादि । यैः अस्त्रैः सगन्धर्वोरगान्गन्धर्वोरगसहितान्देवासुरगणान् अपिना मनुष्यादीनपि अमित्रान्छत्रून् आजौ संग्रामे प्रसह्य हठात् वशीकृत्य जयिष्यसि जेष्यस्येव तानि सर्वशो निखिलानि दिव्यानि अस्त्राणि ते तुभ्यं ददामि अतस्ते भद्रं कल्याणमेवास्तु सार्धश्लोक एकान्वयी वाशब्द एकोऽपिशब्दश्च एवार्थे ॥ ३ ॥

गो० टी०–देवेति । आजौ युद्धे जयिष्यसि स्वार्थे णिच् ॥ ३ ॥

४–५ ] ति० टी०–दण्डचक्रादयोऽस्त्रभेदाः ॥ ४ ॥ ५ ॥

रा० टी०–नामतोऽस्त्राणि बोधयन्नाह–दण्डचक्रमित्यादिभिः । दण्डचक्रादयस्तत्तन्नामकास्त्रभेदाः शूलवरं शूलश्रेष्ठम् शूलवतमिति भट्टसंमतः पाठः शूलवतनामकमित्यर्थः ॥४॥५॥

गो० टी०–तानीति । दण्डचक्रादयश्चक्रभेदाः ॥ ४ ॥

गो० टी०–धर्मेति । सार्धश्लोकद्वयमेकान्वयम् शूलवरं शूलश्रेष्ठं ब्रह्मशिरः ब्रह्मास्त्रादन्यत् ॥ ५ ॥ ६ ॥

६ ] ति० टी०–शूलवतं शूलवतनामकम् क्वचित्तु 'शूलवरम्' इति पाठः ब्रह्मशिरोस्त्रं ब्रह्मास्त्रादन्यत् ॥ ६ ॥

रा० टी०–अस्त्रमिति । ब्रह्मशिरोरूपमस्त्रमित्यर्थः । इदं च ब्रह्मास्त्रादन्यदिति वक्ष्यमाणेन न पौनरुक्त्यम् ॥ ६ ॥

७–८ ] ति० टी०–गदे द्वे मोदकीशिखरीसंज्ञे द्वे गदे गदासंज्ञके अस्त्रे ॥ ७ ॥ ८ ॥

रा० टी०–गदे इति । मोदकीशिखरीनामके इत्यर्थः ॥७॥

गो० टी०–गदे इति । मोदकीशिखरीसंज्ञे द्वे गदे स्तः ते उभे दास्यामीति संबन्धः ॥ ७ ॥

रा० टी०–धर्मेति । अनुत्तममतिश्रेष्ठम् ॥ ८ ॥

गो० टी०–धर्मेति । वारुणमित्यस्य काकाक्षिन्यायेनोभयत्रान्वयः ॥ ८ ॥

९ ] ति० टी०–अस्त्रं च वारुणास्त्रं चेत्यर्थः शुष्कार्द्रसंज्ञके द्वे अशनी अशनीसंज्ञके अस्त्रे ॥ ९ ॥

रा० टी०–अशनी इति ॥ ९ ॥

गो० टी०–अशनी इति । शुष्काशनिरार्द्राशनिरित्यन्वय पिनाकिन इदं पैनाकम् ॥ ९ ॥

१० ] ति० टी०–पिनाकिन इदं पैनाकम् । दयितमग्नेरिति शेषः । शिखरं नाम शिखरमितिप्रसिद्धम् ॥ १० ॥

रा० टी०–आग्नेयमिति । तद्देवताकमित्यर्थः ॥ १० ॥

गो० टी०–आग्नेयमिति । आग्नेयमग्निदेवताकं दयितम् अग्नेरिति शेषः ॥ १० ॥

११ ] ति० टी०–प्रथमं मुख्यम् ॥ ११ ॥

रा० टी०–अस्त्रमिति । शक्तिद्वयं विष्णोः रुद्रस्य चेत्यर्थः ॥ ११ ॥

गो० टी०–अस्त्रमिति । शक्तिद्वयं विष्णुशक्तिः रुद्रशक्तिश्चेति ॥ ११ ॥

१२ ] ति० टी०–कङ्कालादीन्यसुरधार्यास्त्राणि ॥ १२ ॥

रा० टी०–कङ्कालमिति । एतन्नामकादीनि ददामि ॥१२॥

गो० टी०–कङ्कालमिति । स्पष्टम् ॥ १२ ॥

---

१ अपीति गो. रा. पाठः । २ इदमर्धं रा. न दृश्यते । ३ ऐन्द्रमस्त्रमिति गो. पाठः । ४ शूलवरमिति गो. रा. पाठः । ५ उभे इति गो. रा. पाठः । ६ अयमिति रा. पाठः । ७ कङ्कणमिति गो. पाठः ।

वधार्थं रक्षसां यानि ददाम्येतानि सर्वशः । वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ॥ १३ ॥
असिरत्नं महाबाहो ददामि नृवरात्मज । गान्धर्वमस्त्रं दयितं मोहनं[3] नाम नामतः ॥ १४ ॥
प्रस्वापनं प्रशमनं दद्मि सौम्यं[4] च राघव । वर्षणं शोषणं चैव संतापनविलापने ॥ १५ ॥
मादनं चैव दुर्धर्षं कन्दर्पदयितं तथा । गान्धर्वमस्त्रं दयितं मानवं नाम नामतः ॥ १६ ॥
पैशाचमस्त्रं दयितं मोहनं नाम नामतः । प्रतीच्छ नरशार्दूल राजपुत्र महायशः ॥ १७ ॥
तामसं नरशार्दूल सौमनं च महाबलम् । संवर्तं चैव दुर्धर्षं मौसलं च नृपात्मज ॥ १८ ॥
सत्यमस्त्रं महाबाहो तथा मायामयं परम् । [12]सौरं तेजःप्रभं नाम परतेजोपकर्षणम् ॥ १९ ॥
सोमास्त्रं शिशिरं[14] नाम त्वाष्ट्रमस्त्रं सुदारुणम् । दारुणं च भगस्यापि शीतेषुमथ मानवम् ॥ २० ॥
एतान्राम महाबाहो कामरूपान्महाबलान् । गृहाण परमोदारान्क्षिप्रमेव नृपात्मज ॥ २१ ॥
स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा । ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २२ ॥
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् । तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २३ ॥

---

१३-१४ ] ति० टी०-यानि रक्षसां वधार्थं समर्थानि एतानि ददामीत्यन्वयः वैद्याधरं विद्याधरसंबन्धि नन्दनं नामासिरत्नमित्यन्वयः यतोऽस्त्रादसीनां प्रादुर्भाव इति भावः १३-१४

रा० टी०-वैद्याधरमिति । विद्याधरसंबन्धि महास्त्रं नन्दनं नामासिरत्नमिति संबन्धः ॥ १३ ॥

गो० टी०-वैद्याधरमिति । वैद्याधरं नन्दनं नामासिरत्नं महास्त्रमित्यर्थः असिर्हि विद्याधरास्त्रम् ॥ १३ ॥

रा० टी०-गान्धर्वमिति ॥ १४ ॥

गो० टी०-गान्धर्वमिति । प्रस्वापनप्रशमने च गान्धर्वे १४

१५ ] ति० टी०-दद्मीत्यार्षम् प्रशमनं रिपूणां क्रोधशामकमस्त्रम् विलापनं परिदेवनकारकम् ॥ १५ ॥

रा० टी०-धर्षणमिति । विलापनं रोदनकारकम् ॥१५॥

गो० टी०-दर्पणमिति । विलापयति परिदेवयतीति विलापनम् । मदयतीति मदनम् ॥ १५ ॥

१६ ] ति० टी०-मादनं शत्रूणां मदजनकं दुर्धर्षमित्यास्य विशेषणम् ॥ १६ ॥

१७ ] ति० टी०-प्रतीच्छ गृहाण ॥ १७ ॥

रा० टी०-पैशाचमिति । प्रतीच्छ गृहाण ॥ १६ ॥

गो० टी०-पैशाचमिति । प्रतीच्छ गृहाण ॥ १६ ॥

१८-२१] ति०टी०-मौसलमास्त्रमुसलादन्यत्॥१८-२१॥

रा० टी०-तामसमिति । मौशलं मुशलाद्भिन्नमस्त्रविशेषः १७

गो० टी०-तामसमिति । मुसलान्मौसलमन्यत् ॥ १७॥

रा० टी०-सत्यमिति ॥ १८ ॥

गो० टी०-सत्यमिति । स्पष्टम् ॥ १८ ॥

रा० टी०-सौम्येति । शीतेषुं शीतेषुसंज्ञकम् ॥ १९ ॥

गो० टी०-सौम्येति । शीतेषुं शीतेषुनामकम् ॥ १९ ॥

रा० टी०-एतानिति । हे महाबाहो नृपात्मज राम ! कामरूपान् ईप्सितरूपधारणसमर्थान्महाबलानतिबलिनः परमोदारानीप्सितदातॄनेतानस्त्रग्रामान् क्षिप्रं शीघ्रमेव त्वं गृहाण ॥२०॥

गो० टी०-एतानिति । कामरूपान् ऐच्छिकशरीरान् २०

२२ ] ति० टी०-मन्त्रग्राममस्त्राणां मन्त्रमूर्तित्वात् । ननु बलातिबलादानप्रसङ्गेऽपि मन्त्रग्रामं गृहाणेत्युक्तमिति पुनरत्र दानं विफलमिति चेन्न गृहाणेत्येव तत्रोक्तत्वात् न तु ददाविति । तेन तत्कालोपयोगिबलातिबलयोरेव तत्र दानमित्यर्थस्त्वत्रेति विवेक इति कतककृतः वस्तुतो बलातिबले मन्त्रसमूहात्मके इति तद्रूपं मन्त्रग्राममिति तत्रार्थ इति न दोष इति परे ॥ २२ ॥

रा० टी०-स्थित इति । तदा तस्मिन्काले शुचिः कृतस्नानादिक्रियः सुप्रीतः रामविषयकप्रीतिविशिष्टः प्राङ्मुखो भूत्वा स्थितः मुनिवरः विश्वामित्रः मन्त्रग्रामं मन्त्रसमूहमनुस्मरन् तत्तदस्त्रनियोजकत्वेन अनुस्मारयन् रामाय ददौ तुना लक्ष्मणाय च ददौ स्मरन्निति अन्तर्भावितणिजर्थः तेन रामज्ञानविषयीभूता एव ते मन्त्राः इति बोधितम् तेन मन्त्रग्रहणं मर्यादापालनायैवेति ध्वनितम् ॥ २१ ॥

गो० टी०-स्थित इति । मन्त्रग्राममित्यनेन पूर्वोक्तास्त्रप्रदानं नाम तत्तन्मन्त्रप्रदानमित्युक्तं भवति तेषां कृशाश्वजन्यत्वमधिष्ठातृदेवताद्वारा ॥ २१ ॥

२३ ] ति० टी०-सर्वेति । येषामुक्तदिव्यास्त्राणां सर्वसंग्रहणं सर्वधारणं कर्तुं दैवतैरपि दुर्लभं दुष्करं देवा अपि

---

१ धारयन्त्यसुरा इति गो. रा. पाठः । २ अस्त्राणीति रा. पाठः । ३ मानवमिति गो. पाठः । ४ सौरमिति गो. पाठः । ५ दर्पणमिति गो. घर्षणमिति रा. पाठः । ६ मदनमिति गो. रा. पाठः । ७ इदमर्धं गो. रा. नास्ति । ८ महाबलेति गो. पाठः । ९ नाम नामतः इति गो. रा. पाठः । १० ततो मायां परंतपेति रा. पाठः । ११ धरमिति गो. पाठः । १२ घोरमिति गो. घोरतेजःप्रदमिति रा. पाठः । १३ सौम्यास्त्रमिति गो. रा. पाठः । १४ शीतलमिति रा. पाठः । १५ सुकामदमिति गो. पाठः । १६ गभस्त्यस्त्रमिति रा. पाठः । १७ अतीति रा. पाठः । १८ अनुस्मरन्निति रा. पाठः ।

जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः । उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २४ ॥
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा । इमे चै परमोदारं किंकरास्तव राघव ॥ २५ ॥
यैद्यदिच्छसि भद्रं ते तत्सर्वं करवाम वै । ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः॥ २६ ॥
प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना । मानसा मे भविष्यध्वमिति तान्यभ्यचोदयत्॥ २७ ॥
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् । अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

विश्वामित्रं प्रत्यस्त्रसंहारविषयको रामस्य प्रश्नः, विश्वामित्रस्य रामं प्रति संहारोपदेशनं रक्षणीययज्ञस्य वध्यराक्षसानां विषये रामस्य विश्वामित्रं प्रति प्रार्थना च ।

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः । गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत्॥ १ ॥

यत्किंचिदस्त्रमेव जानन्तीति भावः तानि सर्वाण्यस्त्राणि राघवाय रामाय विश्वामित्रो न्यवेदयद्दत्तवान् राघवाय रामाय लक्ष्मणाय चेत्यपि बोध्यम् युगपदेवोभयोरुपदेश इति बोध्यम ॥ २३ ॥

रा० टी०–सर्वेति । येषामस्त्राणां यैरस्त्रैः सर्वसंग्रहणं निखिलविषयकज्ञानमत एव दैवतैरपि दुर्लभं दुष्प्रापं दुर्ज्ञेयमिति यावत् तानि सर्वाण्यस्त्राणि तदास्त्रमन्त्रदानोत्तरकाले विप्रो विश्वामित्रो राघवाय रामलक्ष्मणाय न्यवेदयत् ॥ २२ ॥

गो० टी०–सर्वेति । सर्वसंग्रहणं कार्त्स्न्येन संग्रहणम् ॥२२॥

२४ ] ति० टी०–जपतः रामाय दातुं तेषां वीर्यवत्तासंपादनाय तान्यस्त्राणि जपत इत्यर्थः उपतस्थुर्गृहीतभामण्डलवपूंष्युपतस्थुरुपस्थितानि विश्वामित्रनियोगेन रामं चोपतस्थुः ॥२४॥

रा० टी०–अस्त्रप्रदानकालेऽस्त्रवृत्तं बोधयन्नाह–जपत इत्यादिसार्धश्लोकद्वयेन । जपतस्तत्तदस्त्रतत्तन्मन्त्रानुच्चारयतः धीमतः प्रशस्तबुद्धिविशिष्टस्य मुनेः राममननशीलस्य तस्य प्रसिद्धस्य विश्वामित्रस्य महार्हाणि अतिपूज्यानि सर्वाणि निखिलान्यस्त्राणि राघवं रामलक्ष्मणमुपतस्थुः सशरीराणि प्रापुः तुना नेमुश्च ॥ २३ ॥

गो० टी०–जपत इति । अस्त्रमन्त्रान् दत्त्वा मन्त्रदेवता अपि रामाज्ञानुवर्तिनीः कारयितुं ताः स्मृत्वा जपतो विश्वामित्रस्याज्ञया राघवमुपतस्थुः सिषेविरे ॥ २३ ॥

२५–२६ ] ति० टी०–सर्वेऽस्त्रदेवा मुदिताः स्वाधिदैवतरामसंबन्धेन तुष्टाः किंकरा अङ्गीकृतदासत्वाः ॥ २५ ॥ २६ ॥

रा० टी०–ऊचुरिति । मुदिताः रामदर्शनजनितप्रमोदं प्राप्ताः अत एव प्राञ्जलयः सर्वे अस्त्रसमूहाः तदा उपस्थितिकाले एव ऊचुः तद्वचनमेवाह–हे परमोदार राघव राम ! इमे वयं तव किंकरा भृत्याः अतः यदिच्छसि तत्सर्वं वयं करवामैव ते भद्रं कल्याणमस्तु सार्धश्लोक एकान्वयी चवैशब्दौ एवार्थौ स्मशब्दो हेत्वर्थे ॥ २५ ॥ २६ ॥

रा० टी०–तत इति । ततः अस्त्रप्रार्थनानन्तरमेव महाबलैः अतिबलविशिष्टैः तैः अस्त्रैः इत्यनेन प्रकारेण उक्तः प्रार्थितः स प्रसन्नात्मा प्रसन्नचित्तः काकुत्स्थः रामः प्रतिगृह्य मदीया भवन्तः इति स्वीकृत्य पाणिना समालभ्य संस्पृश्य च मे मानसाः मनोधीनत्वम् यूयं भविष्यध्वं प्राप्नुत इति तानस्त्रग्रामानभ्यचोदयदाज्ञापयत् । मानसशब्दो भावप्रधानः भूः प्राप्त्यर्थकः अत एव आत्मनेपदसिद्धिः सार्धश्लोक एकान्वयी । एकश्चकार एवार्थे ॥ २६ ॥

गो० टी०–ऊचुरिति । राघवेत्यनन्तरमितिकरणं बोध्यम् ॥ २४ ॥

२७–२८ ] ति० टी०–समालभ्योपस्पृश्य । मानसाः सदा मनसि स्थिताः । यद्यपि भगवतो रामस्य सर्वं विदितमेव तथापि विद्या गुरूपदेशगृहीतैव फलदा नान्यथेति लोकान्बोधयितुं विश्वामित्रोपदेशग्रहणमिति बोध्यम् ॥ २७ ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०–तत इति । ततः अस्त्रस्वीकारानन्तरं प्रीतमनाः महातेजाः समाधिकरहितप्रतापविशिष्टः रामः महामुनिं विश्वामित्रमभिवाद्य प्रणम्य गमनाय गमनं कर्तुमुपचक्रमे प्रारभत २७॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०–प्रतिगृह्येति । प्रतिगृह्य अस्त्रसेवामङ्गीकृत्य समालभ्य संस्पृश्य 'आलम्भस्पर्शहिंसयोः' इत्यमरः मानसाः मनोनुसारिणः चिन्तामात्रे उपस्थिता इति यावत् भविष्यध्वं भवत मानसाः सन्तो मां प्राप्नुतेति वार्थः भूप्राप्ताविति धातुः ॥ २६ ॥

गो० टी०–तत इति । गमनाय गन्तुम् "तुमर्थाच्च भाववचनात्" इति चतुर्थी ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

१ ] ति० टी०–गच्छन्गमिष्यन् ॥ १ ॥

१ स्म इति गो. रा. पाठः । २ परमोदारा इति गो. पाठः । ३ अयं श्लोको गो. नास्ति ।

गृहीतास्त्रोऽस्मि भगवन्दुराधर्षः [1]सुरैरपि । [2]अस्त्राणां त्वहमिच्छामि [3]संहारान्मुनिपुंगव ॥ २ ॥
एवं ब्रुवति काकुत्स्थे विश्वामित्रो [4]महातपाः । [5]संहारान्व्याजहाराथ धृतिमान्सुव्रतः शुचिः ॥ ३ ॥
सत्यवन्तं सत्यकीर्तिं [6]धृष्टं रभसमेव च । प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥
[7]लक्ष्यालक्ष्याविमौ चैव दृढनाभसु[8]नाभकौ । दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥
पद्मनाभमहानाभौ दुन्दुनाभ[9]स्वनाभकौ । ज्योतिषं शकुनं चैव नैरास्यविमलावुभौ ॥ ६ ॥
[10]यौगंधरविनिद्रौ च दैत्यप्रमथनौ तथा । [11]शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा ॥
सार्चिमाली धृति[12]मौली वृत्तिमान्रुचिरस्तथा ॥ ॥ ७ ॥
[13]पित्र्यः सौमनसश्चैव विधूतमकरावुभौ । [14]परवीरं रतिं चैव [15]धनधान्यौ च राघव ॥ ८ ॥
कामरूपं कामरुचिं मोहमावरणं तथा । जृम्भकं [16]सर्पनाथं च [17]पन्थानवरुणौ तथा ॥ ९ ॥
कृशाश्वतनयान्राम भास्वरान्कामरूपिणः । प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव ॥ १० ॥
बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना[18] । दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः ॥ ११ ॥

रा० टी०—गमिष्यतो रामस्य वृत्तमाह—प्रतीतिश्लोकद्वयेन । प्रहृष्टवदनः शुचिः काकुत्स्थो रामः अस्त्राणि प्रतिगृह्य ततः ताटकावनाद्गच्छन् गमिष्यन्नेव विश्वामित्रमथ समङ्गलमब्रवीत् माङ्गलिकं वचनमुच्चारयामासेत्यर्थः गच्छन्नित्यत्र वर्तमानसामीप्ये भविष्यति लट् ॥ १ ॥

गो० टी०—अस्त्रसंहारकप्रतिग्रहोऽष्टाविंशे—प्रतिगृह्येत्यादि। गच्छन् गमिष्यन् "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्॥१॥

२ ] ति० टी०—संहारान् ज्ञातुमिति शेषः उपसंहारापरिज्ञाने पुनः प्रयोगानर्हतयाप्राप्तप्रायत्वात्तज्ज्ञानेच्छा संहारो नाम प्रयुक्तस्यास्त्रस्य मन्त्रविशेषेण पुनः स्वात्मनि स्थापनम् ॥ २ ॥

रा० टी०—तदाकारमाह—गृहीतेति । हे भगवन् सकलसामर्थ्यविशिष्ट हे मुनिपुंगव ! गृहीतास्त्रः गृहीतमस्त्रं येन सोहमस्मि अत एव सुरासुरैः दुराधर्षः अहमस्त्राणां संहारं ज्ञातुमिच्छामि । ज्ञातुमित्यध्याहृतम् ॥ २ ॥

गो० टी०—गृहीतेति । संहारमवगतप्रयोगानामस्त्राणां पुनरुपसंहारं तत्तदस्त्रमूलमन्त्रवर्ति तत्तदस्त्रोपसंहारमन्त्रजातमित्यर्थः । जात्येकवचनम् ॥ २ ॥

३ ] ति० टी०—एवमिति । उक्तास्त्राणां संहारमार्गमुपदिश्य अथानन्तरं तत्प्रश्नसंतुष्टः परमर्षिरन्यान्यप्यस्त्राण्युपदिशति स्म ॥ ३ ॥

रा० टी०—एवमिति । महायशाः धृतिमान् प्रशस्तधैर्यविशिष्टः सुव्रतः सत्यसंकल्पः शुचिः नित्यं पूतो विश्वामित्रः काकुत्स्थे रामे एवमनेन प्रकारेण ब्रुवति कथयति सति संहारमथ मङ्गलं यथा स्यात्तथा व्याजहार उवाच ॥ ३ ॥

गो० टी०—एवमिति । धृतिमान् प्रीतिमान् ॥ ३ ॥

४–६ ] ति० टी०—तदाह—सत्यवन्तमित्यादि । ददामीति सर्वत्र शेषः ॥ ४—६ ॥

रा० टी०—अस्त्रसंहारान्नामतो गणयन्नाह—सत्यवन्तमित्यादिनवभिः श्लोकैः । सत्यवन्तं सत्यवत्संज्ञकं संप्रतीच्छेत्यपकृष्यते एवमन्यद्वितीयान्तेष्वपि बोध्यम् अत्र यत्र प्रथमान्तं तत्र योऽस्ति तमित्यध्याहार्यम् ॥ ४ ॥

गो० टी०—सत्यवन्तमित्यादिसप्तश्लोक्येकान्वया । सत्यवदादीनि उपसंहाराणां नामानि सार्चिर्मालीत्यादिषु प्रथमा द्वितीयार्थे मम मत्तः ॥ ४—१० ॥

रा० टी०—लक्ष्येति ॥ ५ ॥

रा० टी०—पद्मनाभेति ॥ ६ ॥

७–९ ] ति० टी०—सार्चिमाल्यादयोऽन्ये तांश्च ददामीत्यर्थः ॥ ७–९ ॥

रा० टी०—योगंधरेति ॥ ७ ॥

रा० टी०—पित्र्य इति ॥ ८ ॥

रा० टी०—कामरूपमिति ॥ ९ ॥

१० ] ति० टी०—भास्वरांस्तेजोमयान् प्रतीच्छ गृहाण पात्रभूतः अस्त्रदानस्येति शेषः । मम मत्तः ॥ १० ॥

रा० टी०—नामतः उपसंहारानुपदिश्य रामं प्रत्याह—कृशाश्वेति । हे राघव रघुकुलप्रादुर्भूत राम ! कामरूपिणः ईप्सितरूपधारणसमर्थान्भास्वरान्प्रकाशमानान्कृशाश्वतनयान् त्वं प्रतीच्छ गृहाण ते भद्रमस्तु तत्र हेतुः यतः मम दानस्य पात्रभूतस्त्वमसि ॥ १० ॥

११ ] ति० टी०—बाढमित्यङ्गीकारे । प्रहृष्टेनान्तरात्मना प्रत्यग्रहीदिति शेषः मूर्तिमन्तः स्वस्वदेवतारूपेण ॥ ११ ॥

रा० टी०—बाढमिति । काकुत्स्थो रामः प्रहृष्टेनान्तरा-

१ सुरासुरैरिति गो. रा. पाठः । २ अस्त्राणामहमिच्छामीति रा. पाठः । ३ संहारमिति गो. रा. पाठः । ४ महायशा इति गो. रा. पाठः । ५ संहारमिति गो. रा. पाठः । ६ हृष्टमिति रा. पाठः । ७ लक्षाक्षविषमाविति गो. पाठः । ८ सुनाभकाविति गो. रा. पाठः । ९ कुशनमिति गो. पाठः । १० योगंधरहरिद्राविति गो. पाठः । ११ इदमर्धं गो. रा. नास्ति । १२ धृतिर्मालीति गो. पाठः । १३ पितृसौमनसमिति गो. पाठः । १४ करवीरकरमिति गो. करवीरानिरमिति रा. पाठः । १५ धनधान्ये इति गो. पाठः । १६ सर्वनाथमिति गो. रा. पाठः । १७ संतानवरुणाविति गो. रा. पाठः । १८ एतदग्रे जग्राह मन्त्रग्रामं तेऽप्युपतस्थुश्च राघवेत्यधिको गो. पाठः । तत्रापि राघवमिति युक्तम् । स च प्रक्षिप्त इति भाति 'जग्राहेति शेषः' इति टीकाकृतोक्तत्वात् ।

केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा । चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलिपुटास्तथा ॥ १२ ॥
रामं प्राञ्जलयो भूत्वाब्रुवन्मधुरभाषिणः । इमे स्म नरशार्दूल शाधि किं करवाम ते ॥ १३ ॥
गम्यतामिति तानाह यथेष्टं रघुनन्दनः । मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥ १४ ॥
अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् । एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ॥ १५ ॥
स च तान्राघवो ज्ञात्वा विश्वामित्रं महामुनिम् । गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १६ ॥
किमेतन्मेघसंकाशं पर्वतस्याविदूरतः । वृक्षखण्डमितो भाति परं कौतूहलं हि मे ॥ १७ ॥

त्मना मनसा बाढमिति कृत्वैव जग्राहेति शेषः उपसंहारा अपि मूर्तिमन्तः सन्तीति वर्णयंस्तत्प्रार्थनामाह–दिव्येतिसार्धश्लोकद्वयेन दिव्यभास्वरदेहाः दिव्याः प्राकृतविलक्षणाः भास्वरा प्रकाशवन्तो देहाः येषां ते मूर्तिमन्तः काठिन्यविशिष्टशरीराः सुखप्रदाः दर्शनमात्रेणाश्रितानां सुखप्रदातारः प्रह्वाञ्जलिपुटाः प्रह्वाः प्रणतिसूचकाः देवादीनामञ्जलिपुटा येषु ते मधुरभाषिणः मधुरभाषणशीला एव सन्तीति शेषः च एवार्थे तत्र केचिदङ्गारसदृशाः अङ्गारप्रतियोगिकसादृश्यविशिष्टाः प्रतीयन्ते केचिद्धूमोपमाः धूमप्रतियोगिकसादृश्यविशिष्टाः प्रतीयन्ते केचिच्चन्द्रार्कसदृशाः चन्द्रार्कप्रतियोगिकसादृश्यविशिष्टाः प्रतीयन्ते ते सर्वे प्राञ्जलयो बद्धयुगलकरा भूत्वैव राममब्रुवन् तद्भाषणमेवाह–हे नरशार्दूल ! इमे वयं ते तव स्मः अतः किं करवाम इति त्वं शाधि शिक्षय आज्ञापयेत्यर्थः सार्धश्लोकद्वयमेकान्वयि तत्र ते सर्वे प्रतीयन्ते इत्यध्याहृतम् स्मेत्यार्षम् ॥ ११—१३ ॥

गो० टी०–बाढमिति अर्धम् । बाढमित्यङ्गीकारे प्रहृष्टेनान्तरात्मना प्रतिजग्राहेति शेषः ॥ ११ ॥

गो० टी०–मन्त्रस्वीकारानन्तरं मन्त्रदेवतासाक्षात्कारं दर्शयति–दिव्येत्यादिश्लोकद्वयेन दिव्याः श्लाघ्याः भास्वराश्च देहा येषां ते तथा मूर्तिमन्तः शरीरकाठिन्यवन्तः ' मूर्तिः काठिन्यकाययोः ' इत्यमरः सुखप्रदाः आह्लादकाः प्रह्वाः नम्राः अञ्जलिपुटाः अञ्जलिपुटयुक्ताः अर्शआदित्वादच् प्राञ्जलयः कृताञ्जलयः मधुरभाषिणः मधुरभाषणशीलाः केचित्पुरुषाः राममब्रुवन् ॥ १२ ॥ १३ ॥

१२ ] ति० टी०–प्रह्वाञ्जलिपुटाः प्रह्वा नम्रास्ते च तेऽञ्जलेः पुटं संश्लेषो येषां तादृशाः ॥ १२ ॥

१३ ] ति० टी०–इमे स्म संनिहिता वयमिति शेषः शाध्याज्ञापय ॥ १३ ॥

गो० टी०–इम इति । अर्धम् । स्मेत्यार्षः सलोपः शाधि आज्ञापय " शा हौ " इति शास्तेः शादेशः ॥ १४ ॥

१४ ] ति० टी०–गम्यताम् इदानीमिति शेषः कार्यकालेषु मानसा मनसि संनिहिता भूत्वा साहाय्यं करिष्यथ॥१४॥

रा० टी०–प्रार्थनोत्तरकाले रघुनाथवचनमाह–मानसा इति । मम मानसाः सन्तः कार्यकालेषु साहाय्यं करिष्यथ इति हेतोः यथेष्टं यथेच्छं गम्यतामिति रघुनन्दनस्तानुपसंहरन्नाह१४

गो० टी०–मानसा इति । यथेष्टं गम्यतामित्यन्वयः॥१५॥

१५ ] ति० टी०–प्रदक्षिणं सकलस्वदेवताधिदैवतरूपत्वाद्रामस्य प्रदक्षिणकरणम् ॥ १५ ॥

रा० टी०–अथेति । ते सर्वे उपसंहाराः तं काकुत्स्थं राममेवमस्तु इत्युक्त्वा आमन्त्र्य गमनाय तदाज्ञां गृहीत्वा प्रदक्षिणं च कृत्वा यथागतमथ जग्मुः ॥ १५ ॥

गो० टी०–अथेति । ते पुरुषाः ॥ १६ ॥

१६ ] ति० टी०–एतदुत्तरम्–'ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः । लक्ष्मणाय च तान्सर्वान्स चास्त्रान्रघुनन्दनः ॥ ससंहारान्सुसंहृष्टः श्रीमांस्तस्मै न्यवेदयत् ' इत्यधिकं दृश्यते तत्प्रक्षिप्तम् । बलातिबलयोरिवास्त्राणामपि युगपदुभयोर्विश्वामित्रेणैवोपदेशदानसंभवात् । स तानुपदिष्टानस्त्रान्राघवो रामो ज्ञात्वा मन्त्रतो मूर्तितः प्रयोगतश्चेति शेषः ॥ १६ ॥

रा० टी०–स इति । स राघवो रामः तान् उपसंहारमन्त्रान् ज्ञात्वा गच्छन्नेव महामुनिं विश्वामित्रमथ सकलमङ्गलमूलं मधुरं माधुर्यविशिष्टं श्लक्ष्णं श्रवणमात्रेण सुखप्रदं वचनमब्रवीत् ॥ १६ ॥

गो० टी०–सचेति । तान् उपसंहारमन्त्रान् श्लक्ष्णं व्यक्तम् ॥ १७ ॥

१७ ] ति० टी०–मेघसंकाशं कार्ष्ण्यात्रैबिड्याच्च । वृक्षखण्डं वृक्षसमूहम् किं वनसंबन्धि उत आश्रमसंबन्धीति प्रश्नः ॥ १७ ॥

रा० टी०–तद्वचनमेवाह–किंन्विति । मेघसंकाशं मेघसदृशं परमुत्कृष्टं मे कौतूहलमुत्साहोत्पादकं दर्शनीयमृगाकीर्णं दर्शनीया दर्शनयोग्याः ये मृगाः तैः आकीर्णं व्याप्तं वल्गुभाषैः मनोहरवचनैः नानाप्रकारैः अनेकविधैः शकुनैः पक्षिभिश्च अलंकृतमत एवातीव मनोहरम् दर्शनीयमिति पाठे तु वनविशेषणम् वृक्षखण्डं वृक्षसमूहः पर्वतस्याविदूरतः निकटे एव विद्यमानमतः अस्मात्स्थानाद्भाति प्रकाशते एतत् किं स्वत एव भाति देवप्रसादाद्वेति प्रश्ने बीजम् । तुशब्द एवार्थे हिर्हेतौ श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०–किंन्विति । श्लोकद्वयम् । इतः अस्मिन् प्रदेशे कौतूहलं श्रोतुमिति शेषः ॥ १८ ॥ १९ ॥

१ किंन्वेतदिति गो. किंस्वेतदिति रा. पाठः ।

दर्शनीयं[1] मृगाकीर्णं मनोहरमतीव च । नानाप्रकारैः शकुनैर्वल्गुभाषैरलंकृतम्[2] ॥ १८ ॥
निःसृताः स्मो मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् । अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ १९ ॥
सर्वं मे शंस भगवन्कस्याश्रमपदं त्विदम् । संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ॥ २० ॥
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने[3] । भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ॥ २१ ॥
रक्षितव्या क्रिया ब्रह्मन्मया[4] वध्याश्च राक्षसाः । एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं प्रभो ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

विष्णोः सिद्धाश्रमदर्शनम्, तत्संबन्धीयकथोपाख्यानं च ।

अथ तस्याप्रमेयस्य वचनं[5] परिपृच्छतः । विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥
इह राम महाबाहो विष्णुर्देवनमस्कृतः[6] । वर्षाणि सुबहूनीह[7] तथा युगशतानि च ॥ २ ॥

१८ ] ति० टी०—वल्गुभाषैर्मधुरभाषैः ॥ १८ ॥

१९ ] ति० टी०—रोमहर्षणात्ताटकया निर्जनीकरणात्तस्य भयानकत्वेन रोमहर्षणत्वम् अनया देशस्य सुखवत्तयेदमाश्रमपदं त्ववगच्छामि ॥ १९ ॥

रा० टी०—निःसृता इति । हे मुनिश्रेष्ठ ! रोमहर्षणाद् रोमोद्गमकारणभयप्रापकादित्यर्थः कान्तारात्ताटकावनाद् वयं निःसृताः स्मः अनन्तरमनया देशस्य सुखवत्तया देशनिष्ठसुखकारणतयैवावगच्छामि अतः इदमश्रमपदं श्रमनिवर्तकं स्थानं कस्येति सर्वं मे हे भगवन् ! त्वं शंस कथय श्लोकद्वयमेकान्वयि एकस्तुशब्दः अनन्तरार्थकः द्वितीयस्तुशब्दः एवार्थकः ॥ २० ॥

गो० टी०—निःसृता इति । कान्तारात्ताटकावनात् रोमहर्षणात् रोमाञ्चकरात् भयंकरादिति यावत् अर्धमेकम् ॥ २० ॥

गो० टी०—अनयेति । अनया देशस्य सुखवत्तया इदमाश्रमपदमित्यवगच्छामि कस्येति न जानामि तत्सर्वं शंस आदितः प्रभृति वदेत्यर्थः ॥ २१ ॥

२० ] ति० टी०—आश्रमपदं निर्णीय तत्कस्येति शंसेति पृच्छति—सर्वमिति । सर्वं च शंस सर्वशब्दविवक्षितं जिज्ञासान्तरं स्वयमेवाह—संप्राप्ता इति ते ब्रह्मघ्नास्तव यज्ञस्य विघ्नाय यत्र संप्राप्ताः स देशः कः ॥ २० ॥

रा० टी०—संप्राप्ता इति । हे महामते ! पापाः पापमयाः अतो ब्रह्मघ्नाः वेदमार्गध्वंसकाः अत एव दुष्टचारिणः दुष्टाचरणशीलाः अत एव दुरात्मानः दुष्टप्रयत्नकाः ते राक्षसाः तव यज्ञस्य विघ्नाय यत्र यस्मिन्काले संप्राप्ता भवन्तीति शेषः तस्य कालस्य संबन्धी देशः कः ननु देशप्रश्नेन किमित्यत आह—हे भगवन् हे ब्रह्मन् ! रक्षितव्या मम रक्षणीया तव याज्ञिकी क्रिया यत्रास्ति तत्रैव मम वध्या राक्षसा भविष्यन्ति अतो हे मुनिश्रेष्ठ हे प्रभो ! एतत्सर्वमहं श्रोतुमिच्छामि अतस्त्वं शंसेत्यर्थः । सार्धश्लोकद्वयमेकान्वयि चशब्द एवार्थे ॥ २१–२३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—संप्राप्ता इत्यादि । श्लोकद्वयम् । ते पूर्वोक्ताः तव यज्ञस्य विघ्नाय यत्राश्रमपदे संप्राप्ताः सा च तव याज्ञिकी क्रिया यत्र रक्षितव्या राक्षसाश्च वध्याः तस्याश्रमस्य को देशः ॥ २२ ॥ २३ ॥

२१–२२ ] ति० टी०—यत्र च तव याज्ञिकी क्रिया मया रक्षितव्या यत्र च राक्षसा वध्याः भगवन् तस्य त्वदाश्रमस्य को देशः प्रदेश इत्यन्वयः ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—एतदित्यर्धम् ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

---

१ ] ति० टी०— तस्य रामस्य परिपृच्छतो वचनं श्रुत्वेति शेषः व्याख्यातुं पृष्टोत्तरमिति शेषः ॥ १ ॥

रा० टी०—अथेति । अथ रामप्रश्नानन्तरमप्रमेयस्य इयत्तारहितप्रभावादिमतः तद् पर्वतनिकटवर्ति वनं परिपृच्छतो रामस्य महातेजा विश्वामित्रो व्याख्यातुमुपचक्रमे प्रारेभे संबन्धसामान्यविवक्षया षष्ठी संमुख इत्यध्याहारो वा अप्रमेयस्येत्युक्त्या लीलार्थमेव प्रश्नादिक्रिया रामस्येति ध्वनितम् ॥ १ ॥

गो० टी०—अथ सिद्धाश्रमस्य नित्यं भगवत्संनिधिमत्त्वेन दिव्यदेशत्वं तत्संनिधाने पूर्वेषां सिद्धतपस्करत्वं भगवद्देशस्यैव वस्तव्यत्वमित्येतत्प्रतिपादनमुखेन स्वाध्याश्रमाद्वैलक्षण्यं दर्शयत्येकोनत्रिंशे—अथ तस्येत्यादि । अप्रमेयस्य अचिन्त्यवैभवस्य मानुषभावनया पूर्ववृत्तमज्ञातमिव पृच्छत इत्यर्थः चतुर्थ्यर्थे षष्ठी ॥ १ ॥

२ ] ति० टी०—इह वने इह प्रदेशे ॥ २ ॥

रा० टी०—तद्वचनमेवाह—इहेतित्रयोविंशत्या श्लोकैः ।

१ दर्शनीयमृगाकीर्णमिति रा. पाठः । २ नादैरिति गो. पाठः । ३ महामते इति गो. रा. पाठः । ४ ममेति गो. रा. पाठः । ५ तद्वनमिति गो. रा. पाठः । ६ वरप्रभ इति रा. वरः प्रभुरिति गो. पाठः । ७ पुरेति गो. रा. पाठः ।

तपश्चरणयोगार्थमुवास सुमहातपाः । एष पूर्वाश्रमो राम वामनस्य महात्मनः ॥ ३ ॥
सिद्धाश्रम इति ख्यातः सिद्धो [1]ह्यत्र महातपाः । एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ ४ ॥
निर्जित्य दैवतगणान्[2]सेन्द्रान्सहमरुद्गणान् । कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ५ ॥
यज्ञं चकार [3]सुमहानसुरेन्द्रो [4]महाबलः । बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ॥
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ॥ ६ ॥
बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम् । [5]असमाप्तव्रते तस्मिन्स्वकार्यमभिपद्यताम् ॥ ७ ॥

हे महाबाहो हे राम ! देववरप्रभः देववरस्येन्द्रस्य प्रभा यस्मात् सः सुमहातपाः विष्णुः इहास्मिन् वने युगशतानि तथा सुबहूनि वर्षाणि अन्यान्यपि तपश्चरणयोगार्थं तपश्चरणानां तपस्विनां यो योगस्त्वयि चित्तवृत्तिनिरोधस्तदर्थमुवास चशब्दोऽप्यर्थे एतेन विष्णौ रामोपासकशिरोमणित्वं ध्वनितम् तेन विष्णोरयं पूर्वाश्रम इति ध्वनितम् ॥ २ ॥

गो॰ टी॰—इहेति । सार्धश्लोकः तपश्चरणयोगार्थं तपश्चरणफलसिद्ध्यर्थं यद्वा तपश्चरणं च योगश्च तदुभयार्थं केचिदिह इहशब्दद्वयं पठन्ति तदा इह वने तत्रापि इह प्रदेशे इत्यर्थः ॥ २ ॥

३ ] ति॰ टी॰—तपश्चरणयोगार्थं स्वाचारेण लोकप्रवर्तनाय स्वतपश्चरणम् वामनस्य करिष्यमाणवामनावतारस्य विष्णोः पूर्वाश्रमो वामनावतारात्पूर्वकाले तपोयोगार्थं परिगृहीत आश्रमः ॥ ३ ॥

रा॰ टी॰—विष्ण्ववतारभूतवामनस्यापीह स्थितिरिति बोधयन्नाह—एष इति । हे राम ! महात्मनः सर्वत्र परिपूर्णस्य वामनस्यापि सिद्धाश्रम इति ख्यातः प्रसिद्धः एषः पूर्वाश्रमः पौर्वकालिकं स्थानमासेति शेषः सिद्धाश्रम इति ख्यातौ हेतुमाह—यतः महातपाः विष्णुः वामनस्थितिपूर्वकाले अत्र सिद्धः तपश्चरणानां चित्तैकाग्र्यं स्वस्मिन् रामोपासकाचार्यत्वं साधितवान् सिद्ध इति अन्तर्भावितणिजर्थः किंच सिद्धः सकलसिद्ध्याश्रयोऽपि विष्णुः अत्र महातपाः अतिविचारशील आस स्वस्मिन् रामोपासकत्वाभिधानार्थमिति शेषः अतः सिद्धाश्रम इत्यर्थः अस्मिन्पक्षे सिद्धानां रामोपासनपरिपक्कानां विष्ण्वादीनामाश्रमः स्थानमिति व्युत्पत्तिरिति भावः विष्णौ रामोपासकत्वे प्रमाणम् 'ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः। तं रामं सच्चिदानन्दं नित्यं रामेश्वरं भजे' इति हनुमत्संहितावचनादि अत एव "अव्यक्तात्पुरुषः परः" इत्यादिश्रुतिः संगच्छते ॥ ३ ॥

गो॰ टी॰—एष इति । वामनस्य वामनरूपेणावतरिष्यतः पूर्वं विष्णुत्वेन रूपेणेह तपश्चचार पश्चाद्वामनरूपेणापीति तस्याश्रमस्यातिशयो दर्शितः विष्णोरत्र तपश्चरणं लोके तपसः प्रवर्तनाय बदरिकाश्रम इव नारायणस्य सिद्धाश्रमत्वं निर्वक्ति—सिद्ध इति महातपाः काश्यपः अत्र हि यस्मात् सिद्धः तपःफलं प्राप्तः तस्मादेष सिद्धाश्रमो नाम ॥ ३ ॥

४ ] ति॰ टी॰—सिद्धाश्रमत्वव्यवहारे बीजमाह—हि यस्मात् अत्र महातपा विष्णुस्तपःसिद्धो जात इति एतस्मिन्काले विष्णोस्तपःकाले ॥ ४ ॥

रा॰ टी॰—वामनावतारस्य प्रयोजनं वदन्नाह—एतस्मिन्निति । एतस्मिन् विष्णोस्तपश्चरणसंबन्धिनि काले एव वैरोचनिः विरोचनसुतो राजा बलिः सेन्द्रान् इन्द्रसहितान् समरुद्गणान् मरुद्गणसहितान् दैवतगणान् निर्जित्य त्रिषु लोकेषु विश्रुतः सन् तद्राज्यं इन्द्रराज्यं कारयामास चकार कारयामासेति रामो राज्यमचीकरदितिवत्प्रयोगः ॥ ४ ॥

गो॰ टी॰—एतस्मिन्निति । सार्धश्लोकः । एतस्मिन्काले विष्णोस्तपश्चरणकाले विरोचनः प्रह्लादसुतः तस्यापत्यं वैरोचनिः समरुद्गणान् सवायुगणान् कारयामास मन्त्रिभिरिति शेषः । तद्राज्यं इन्द्रराज्यम् ॥ ४ ॥

५ ] ति॰ टी॰—मरुद्गणानावहादिवायुगणान् कारयामास स्वार्थे णिच् चकारेत्यर्थः यद्वा इन्द्रादिराज्यं स्वीयैः कैश्चिदेव कारयामासेत्यन्वयः ॥ ५ ॥

६ ] ति॰ टी॰—बलेर्यजमानस्य व्यवहारं दृष्ट्वेति शेषः साग्निपुरोगमेनाग्निना सहिता इत्यर्थः अग्निमुखत्वाच्च देवानां तस्मिन्पुरोगमत्वं स्वयमेवागम्य न तु दूतमुखेन ॥ ६ ॥

रा॰ टी॰—यज्ञमिति । मतिमान् प्रशस्तमतिविशिष्टः महाबली अतिवीर्यवान् असुरेन्द्रो बलिर्यज्ञं चकार ॥ ६ ॥

गो॰ टी॰—बलेरिति । भावलक्षणे षष्ठी बलौ यजमाने यागं कुर्वाणे साग्निपुरोगमाः पुरोगमेनाग्निना सहिताः अग्निमुखत्वाद्देवानां स्वयमेव समागम्य इहाश्रमे तपश्चरन्तं विष्णुमूचुः ॥ ६ ॥

७ ] ति॰ टी॰—यजते कर्त्रभिप्रायत्वादात्मनेपदम् नन्वसुरस्य बलेर्देवद्विषो यागाद्यनुपपत्तिः यागतर्पणीयदेवताभावात् इन्द्रादीनां तद्द्वेष्यत्वात् न च शब्दमात्रं देवतेति युक्तम् अर्थवादप्रामाण्येन देवताया विग्रहवत्त्वस्योत्तरमीमांसायां सिद्धान्तितत्वादिति चेन्न कर्मदेवाजानदेवभेदेन देवानां द्वैविध्यात् तत्र ये कर्मणा देवत्वं प्राप्तास्ते कर्मदेवाः आजानदेवास्तु यज्ञ-

१ ह्यत्रेति गो. रा. पाठः । २ सेन्द्रांश्च समरुद्गणानिति गो. रा. पाठः । ३ मतिमानिति गो. रा. पाठः । ४ महाबलीति गो. महाबलिरिति रा. पाठः । ५ असमाप्ते क्रताविति गो. रा. पाठः ।

ये चैनमभिवर्तन्ते याचितार इतस्ततः । यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ८ ॥
स त्वं सुरहितार्थाय मायायोगमुपाश्रितः । वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ ९ ॥
एतस्मिन्नन्तरे राम कश्यपोऽग्निसमप्रभः । अदित्या सहितो राम दीप्यमान इवौजसा ॥ १० ॥

मन्त्रार्थभूता मन्त्रेण नित्यसंबद्धाः कर्मदेवेभ्यः प्राचीना एव तत्कर्मदेवानां द्वेष्यत्वेऽप्याजानदेवानां यज्ञे तदर्थत्वेन न दोषः विघ्नकर्तारोऽप्यत्र कर्मदेवा एव यज्ञाद्यधिकाराभावोऽप्याजानदेवानामेव स्वयष्टव्यदेवतान्तराभावात् कर्मदेवानां त्वस्त्येव अत एवेन्द्रादीनां यज्ञादिश्रवणं नानुपपन्नमित्यन्यत्र विस्तरः असमाप्तव्रतेऽसमाप्तयज्ञे स्वकार्यमात्मीयानां देवानां कार्यं अभिपद्यतां संपाद्यताम् ॥ ७ ॥

रा० टी०–बलेरिति । साग्निपुरोगमाः पुरस्कृताग्निसहिताः यजमानस्य बलेः देवाः स्वयमेव समागम्य प्राप्य इहाश्रमे एव विद्यमानं विष्णुमूचुः तुचशब्दावेवार्थे ॥ ६ ॥

रा० टी०–तद्वचनमेवाह–बलिरिति । हे विष्णो ! वैरोचनिः विरोचनपुत्रो बलिः उत्तमं यज्ञं यजते करोति तस्मिन् क्रतौ यज्ञे असमाप्ते समाप्तेः पूर्वकाले स्वकार्यमभिपद्यतां प्राप्यताम् स्वकार्यमभिपद्यतामित्यनेन अस्मत्कार्यार्थमेवायमिह स्थित इति देवानां ज्ञानमस्तीति व्यक्तम् किंच स्वेषामात्मीयानामस्माकं कार्यं प्रयोजनमभिपद्यतां साध्यतामित्यर्थः ॥ ७ ॥

गो० टी०–बलिरिति । यज्ञं यजते यज्ञं करोतीत्यर्थः ओदनपाकं पचतीतिवत् असमाप्त इति समाप्तश्चेत् न स जेतुं शक्य इत्यर्थः । स्वकार्यदेवकार्यमाश्रितकार्यस्य स्वकार्यत्वात्तथोच्यते अभिपद्यतामभितः कार्त्स्न्येन संपाद्यताम् ॥६॥

८ ] ति० टी०–असमाप्तव्रत इत्युक्तेः प्रयोजनं दर्शनं दर्शयन्तस्तत्संपादन उपायमपि स्वयमेव वदन्ति—ये चेति । अभिवर्तन्ते प्राप्नुवन्ति इतस्ततो नानादेशेभ्यः यत्र गोभूहिरण्यादिविषये यच्च वस्तु याचन्ते तेभ्यस्तत्सर्वं यथावद्यज्ञसादुण्यायावमानादिरहितं सत्कारपूर्वं प्रयच्छति चौ एवार्थे ॥ ८ ॥

रा० टी०–य इति । यत्रान्नवस्त्रद्रव्यवाहनादिषु यथाचितारो ये इतोऽस्माद्देशात्ततो देशान्तराच्च एनं बलिमभिवर्तन्ते प्राप्नुवन्ति तत्सर्वं तेभ्यो याचकेभ्यः यथावत् संप्रयच्छति सम्यक् ददात्येव चशब्द एवार्थे एकेन चकारेण याचितादधिकमपि ददातीत्यर्थः संपन्नः याचितार इति तृन्नन्तः अत एव यदित्यत्र न षष्ठी सर्वं प्रयच्छतीत्यनेन त्वमपि अस्मदुपकारार्थमस्मद्राज्यं याचयेति बोधितम् तेन अस्मद्राज्यप्राप्तौ उपायान्तरं नास्तीति व्यञ्जितं तेन बलेः परमबलवत्ता सूचिता ॥ ८ ॥

गो० टी०–ननु कथमसुरस्य यज्ञानुष्ठानम् "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति" इतिश्रुतेः तत्तद्देवध्यानपूर्वकं तन्मन्त्रेण तत्तदुद्देशेन तत्तद्धविःप्रदानस्य यागत्वात्तस्य च देवशत्रोरयोगात् नच चतुर्थ्यन्तः शब्दो देवतेति वाच्यम् अचेतनप्रीणनासंभवात् तत्प्रीतिमूलफलासिद्धेश्च अत एव केवला क्रियैव फलदेति प्रत्युक्तम् अतोऽर्थवादाद्यनुरोधेन शब्दक्रियातिरिक्ता सचेतना वज्रहस्तत्वादिविशिष्टविग्रहवती देवता नच विग्रहवत्त्वे युगपदनेकयागसंनिधानासंभवः दिव्यशक्तिमत्त्वेन नानाशरीरपरिग्रहसंभवेन तेषां सर्वयागसांनिध्यस्य सुलभत्वात् तस्मान्न देवतावैरिणो यागसंभव इत्युच्यते । नायं बलिना क्रियमाणो याग इन्द्रादिदेवताराध्यकः येनोक्तदोषः स्यात् किंतु भगवदाराधनभूतः कश्चियागविशेषः तस्य विष्णुभक्तत्वेन प्रसिद्धत्वात् तर्हि भक्तयज्ञविघ्नं विष्णुः कथं कुर्यात् स्वभक्तस्यापि स्वभक्तविरोधित्वं भगवतोऽसह्यं ततः पुत्रान्तरविरोधिपुत्रशिक्षणवत् स्वाश्रितदेवविरोधिशिक्षणं युक्तमेव अत एवोक्तम् 'मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्' इति । तर्हि तस्य धार्मिकस्य कथं निग्रहः स्यात्तत्राह–ये चेत्यादिश्लोकद्वयेन । ये यत्र वस्तुवाहनादिषु यद्वस्तुयाचितारः याचिष्यमाणाः सन्तः इतस्ततः देशात् एनमभिवर्तन्ते ॥ ७ ॥

९ ] ति० टी०–माया स्वतत्त्वाच्छादनेन प्राकृतमर्त्यादिभावप्रकाशिका शक्तिस्तस्या योगः संबन्धस्तमाश्रितः वामनत्वप्राप्तावयं हेतुः–वामनरूपस्यात्याश्चर्यत्वेन तत्प्रार्थनाविषयस्यावश्यं यजमानकर्तव्यतया तद्रूपप्रार्थनम् ॥ ९ ॥

रा० टी०–ननु भवतः पक्षपातिनं मां ज्ञात्वा कथं दास्यतीत्याह–स त्वमिति । हे विष्णो ! मायायोगं मायायाः अस्मद्विषयककृपाया योगं संबन्धमुपागतः नित्यं प्राप्तस्त्वं सुरकार्यहितार्थाय वामनत्वं स्वकीयं नित्यवामनरूपं गतः प्रकटत्वेन प्राप्तः सन् उत्तममाश्रितपालकत्वेन श्रेष्ठं कल्याणं कुरु प्रकटय ॥ ९ ॥

गो० टी०–तत्सर्वं तेभ्यः यथावत्सत्कारपूर्वकं प्रयच्छति–स इति । माया विष्णुत्वाच्छादिका शक्तिस्तस्या योगं संबन्धमुपागतः वामनत्वं वामनरूपत्वं गतः कल्याणमस्मत्कार्यं कुरु तस्मिन्नौदार्याख्यो महागुणो वर्तते तेन त्वं वामनवेषो भूत्वा याच्ञापदेशेन तद्राज्यमपहृत्य देहीति भावः ॥ ८ ॥

१० ] ति० टी०–एतस्मिन्नन्तरे देवैर्वामनावतारप्रार्थनसमये रामेति द्विः संबोधनं स्वाश्रमसंनिधानेन रामपृष्टतन्महत्त्वकथनेन हर्षातिशयाच्च बोध्यम् ॥ १० ॥

रा० टी०–एतस्मिन्निति । हे राम ! एतस्मिन्नन्तरे इन्द्रादिप्रार्थनासमये रामो दीप्यमानः रामनाम्ना प्रकाशमानः देवीसहायः देवी पार्वती सहायो यस्य स भगवान्शंभुरिव अग्निसमप्रभः अग्निप्रभाविशिष्टः ओजसा इव ओजस्तुल्यया

१ उपागत इति गो. रा. पाठः ।

देवीसहायो भगवान्दिव्यं वर्षसहस्रकम् । व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ ११ ॥
तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् । तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ १२ ॥
शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो । त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥ १३ ॥
तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् । वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १४ ॥
तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् । अदित्या देवतानां च मम चैवानुयाचितम् ॥ १५ ॥

अदित्या स्वपत्न्या सहितः कश्यपः दिव्यं वर्षसहस्रकं दिव्यसहस्रसाध्यं व्रतं समाप्य वरदमभीष्टस्य प्रदातारं मधुसूदनं मधुनामकदैत्यनिहन्तारं विष्णुं तुष्टाव इव उभयान्वयी श्लोकद्वयमेकान्वयि ॥ १० ॥

गो० टी०—एतस्मिन्निति । श्लोकद्वयम् । एतस्मिन्नन्तरे देवप्रार्थनावसरे कश्यपः अदित्या सहितो व्रतं समाप्य विष्णूद्देशेन कृतं व्रतं समाप्य वरदं वरदानाय सन्निहितं विष्णुं देवीसहायः सन् तुष्टाव अत्र रामपदद्वयं रूढ्या योगेन च निर्वाह्यं व्रतानुष्ठानकाले वरकाले च देवीसाहित्यद्योतनाय द्विःप्रयोगो देव्याः अयमत्र क्रमः "सोऽकामयत बहु स्यां प्रजायेयेति स तपो तप्यत" इत्युक्तरीत्या विष्णुर्जगद्रक्षणचिन्तापरोऽत्र देशे चिरमदृश्य उवास तद्विदित्वा तमेव पुत्रं लब्धुकामः कश्यपो देव्या सह दिव्यवर्षसहस्रनिर्वर्त्यं विष्ण्वाराधनरूपं किंचिद्व्रतमनुष्ठाय तदन्ते वरदानाय दृश्यमानं विष्णुं तुष्टाव तस्मिन्नेवावसरे देवाश्चागताः प्रार्थितवन्त इति ॥ ९ ॥ १० ॥

११ ] ति० टी०—अदित्या सहितो व्रतं समाप्य देवीसहायस्तुष्टावेत्यन्वयः देव्यदितिरेव यद्वा देवी सरस्वती वरदं विष्णुरूपपुत्रप्राप्त्युद्देशेन कृतव्रतान्ते वरदानोन्मुखम् ॥ ११ ॥

१२ ] ति० टी०—स्तोत्रप्रकारमाह—तपोमयमित्यादि । अन्नमयो यज्ञ इतिवत्प्रचुरतपोयुक्तमित्यर्थः । तावतेतरेषां किमत आह—तपोराशिं द्रष्टृणां सकलतपोजन्यफलप्राप्त्या भगवतस्तपोराशित्वम् ननु तपसोऽन्यत्वेऽद्वैतश्रुतिबाधोऽत आह—तपोमूर्तिमिति एवं च तपसस्तदनन्यत्वेन नाद्वैतहानिः । तपात्मकमिति घञर्थे कविधानमिति कप्रत्यये तपनं तपो ज्ञानम् 'तप आलोचने' इति धात्वनुसारात् तदात्मकं ज्ञानस्वरूपमित्यर्थः अत एवातप्ततपसा द्रष्टुमशक्य इत्यतस्तपसा त्वामिति ॥ १२ ॥

रा० टी०—तत्स्तवनमेवाह—तप इति । हे प्रभो ! तपोमयं तपसा वेदबोधिताभिलाषरहितकृच्छ्रचान्द्रायणादिना मयते अन्तःकरणशुद्धिपूर्वकज्ञानोत्पत्तिद्वारा प्राप्नोति तमत एव तपोराशिं तपसां राशिः समूहो यस्मै यत्प्राप्तिफलकमेव तपआद्याचरणं तमत एव तपोमूर्तिं तपोयुक्ता मूर्तिर्विग्रहो यस्य तं लोकशिक्षणार्थं तपश्चरन्तमित्यर्थः । तपात्मकं तपोज्ञानमात्मा यस्य तं पुरुषोत्तमं पुरुषः उत्तमो ध्येयत्वेन यस्मिन् तं त्वां सुतप्तेन तपसा पश्यामि तव शरीरे इदं सर्वं जगत्पश्यामि सार्धश्लोक एकान्वयी ॥ ११ ॥ १२ ॥

गो० टी०—तपोमयमिति । तपोमयं तपःप्रचुरं प्राचुर्यं चाराध्यत्वेन तपसाराध्यमित्यर्थः तपोराशिं तपोराशिस्वरूपं तपःफलदमिति यावत् तपोमूर्तिं ज्ञानस्वरूपं तप आलोचन इति धातोरसुन्प्रत्ययः तपात्मकं तपःस्वभावं ज्ञानगुणकमित्यर्थः उक्ताद्धातोः "घञर्थे कविधानम्" इति कः पुरुषोत्तमं बद्धमुक्तोभयावस्थाज्जीवाद्विलक्षणं त्वां सुतप्तेन अनन्यप्रयोजनतयानुष्ठितेन तपसा आराधनेन पश्यामि साक्षात्करोमि सर्वकर्मसमाराध्यं सर्वकर्मफलप्रदं ज्ञानस्वरूपत्वेन समस्तहेयप्रत्यनीकज्ञानानन्दाद्यपरिमितगुणवत्त्वेन च सर्वस्माद्विलक्षणं त्वां साक्षात्करोमि एतदेव मे परमप्रयोजनमित्यर्थः ॥ ११ ॥

१३ ] ति० टी०—दृश्यमानं च वैराजं रूपमित्याह—शरीर इत्यादि । अनिर्देश्योऽशक्यपरिच्छेदः ॥ १३ ॥

रा० टी०—त्वमिति । यस्त्वमनादिः आदिरहितः सर्वकारणमित्यर्थः अनिर्देश्यः साकल्येन निर्देष्टुमनर्हः तं शरणं सर्वरक्षितारं त्वामहं गतः प्राप्तः विष्णूक्तिं वर्णयन्नाह—तमिति । प्रीतः कश्यपोक्त्या संतुष्टः हरिः शरणागतपापहारकः विष्णुः धूतकल्मषमघरहितं तं कश्यपमुवाच ॥ १३ ॥

गो० टी०—शरीर इति । इदं चेतनाचेतनात्मकं सर्वं जगत् तव शरीरेऽस्मिन् पश्यामि । एवं गीतम् 'पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् । ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान्' इति । यद्वा जगत्सर्वं शरीरमित्युक्तत्वात् शरीरतया पश्यामीत्यर्थः त्वमनादिः उत्पत्तिरहितः अनिर्देश्यः एतावानिति परिच्छेत्तुमशक्य इत्यर्थः अतस्त्वामहं शरणं रक्षितारं गतः ॥ १२ ॥

१४ ] ति० टी०—वरमभीष्टम् । वरार्हो दिव्यवर्षसहस्रतपसा वरदानयोग्यः ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—वरमिति । यतस्त्वं वरार्हः ईप्सितप्राप्तियोग्यः अत एव मम मतोऽभिमतोऽसि अतः वरं स्वेप्सितं वरय याचस्व ते भद्रं कल्याणमस्तु तस्य विष्णोस्तद्वचनं श्रुत्वा मारीचः मरीचेः सुतः कश्यपोऽब्रवीत् ॥ १४ ॥

गो० टी०—तमिति । स्पष्टम् ॥ १३ ॥

१५ ] ति० टी०—मारीचो मरीचिपुत्रः । अदित्या इत्यादेर्याचमानाया इत्यादिः शेषः ॥ १५ ॥

रा० टी०—तद्वचनमेवाह—अदित्येति । अनुयाचतः प्रार्थयतो मम अनुयाचमानानां देवतानां च अनुयाचमानाया अदि-

१ सुतप्तेनेति रा. पाठः । २ पुरुषोत्तममिति गो. रा. पाठः । ३ याचतः इति रा. पाठः ।

वरं वरद सुप्रीतो दातुमर्हसि सुव्रत । पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ ॥ १६ ॥
भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन । शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १७ ॥
अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति । सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥ १८ ॥
अथ विष्णुर्महातेजा अदित्यां समजायत । वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १९ ॥
त्रीन्पदानथ भिक्षित्वा प्रतिगृह्य च मेदिनीम्[1] । आक्रम्य लोकाँल्लोकार्थी[2] सर्वलोकहिते रतः ॥ २० ॥
महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा । त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ २१ ॥
तेनैव पूर्वमाक्रान्त आश्रमः श्रमनाशनः । मयापि भक्त्या तस्यैव वामनस्योपभुज्यते[4] ॥ २२ ॥

त्याश्च वरमीप्सितं हे वरद हे सुव्रत ! सुप्रीतस्त्वं दातुमर्हसि ॥ १६ ॥

गो० टी०—तच्छ्रुत्वेत्यर्थम् । मारीचः मरीचिपुत्रः ॥ १४ ॥

गो० टी०—अदित्या इति । अदित्या याचमानायाः । देवतानां याचमानानामित्यूह्यम् ॥ १५ ॥

१६ ] ति० टी०—याच्यमानवरमाह–पुत्रत्वमित्यादि॥१६॥

रा० टी०—ननु किं भवदीप्सितमित्यत आह–पुत्रत्वमिति । हे अनघ स्वाश्रितपापनिवर्तक हे भगवन् सर्वसामर्थ्यविशिष्ट हे असुरसूदन ! अदित्याः मम च पुत्रत्वं गच्छ प्राप्नुहि अतः शक्रस्य इन्द्रस्य यवीयान् कनिष्ठः भ्राता त्वं भव इन्द्रस्य भ्राता भवेत्यनेन इन्द्रेप्सितकार्यकारित्वं स्वस्मिन्नसुसंधेयामिति प्रार्थना सूचिता असुरसूदनेत्यनेन सनातनोऽसुरद्वेषः त्वय्यस्तीति बोधितं तेनासुरा निरसनीया भवता इति द्योतितम् ॥ १६ ॥

गो० टी०—पुत्रत्वमित्यादि । सार्धश्लोक एकान्वयः॥१६॥

१७ ] ति० टी०—यवीयान्कनिष्ठः । साहाय्यं बलिच्छलरूपम् ॥ १७ ॥

रा० टी०—तदेव वाच्यवृत्त्या बोधयन्नाह–शोकार्तानामिति । हे भगवन् !शोकार्तानां राज्यापहरणेन शोकसंतप्तानां देवानां साहाय्यं कर्तुं त्वमर्हस्येव ते प्रसादात् त्वदत्यन्तवासादयं सिद्धाश्रमो नाम भविष्यति अतः देवेशः इन्द्रस्य कर्मणि कार्ये सिद्धे इन्द्रकार्यसिद्ध्यर्थमित्यर्थः इतः अस्मात् स्थानात् उत्तिष्ठ मम गृहे प्रादुर्भवेत्यर्थः तुशब्द एवार्थे ॥ १७ ॥

१८ ] ति० टी०—अयमिति । यत्राश्रमे तपोमयस्त्वं मया देवैश्च अनुभूयस इत्यर्थः सिद्ध एतदाश्रमस्थितिसाध्ये तपःकर्मणि सिद्धे सति निष्पन्ने सति प्रयोजनाभावादित उत्तिष्ठ देवकार्यायेति शेषः ॥ १८ ॥

गो० टी०—देवेऽप्यनुग्रहः क्रियतामित्याह–अयमिति । ते प्रसादात्कर्मणि मत्तपसि सिद्धे सति त्वयि मे पुत्रत्वं प्राप्त इत्यर्थः अयं सिद्धाश्रमो नाम भविष्यति तस्मादित आश्रमादुत्तिष्ठ अवतारायेति शेषः ॥ १७ ॥

१९ ] ति० टी०—अथ देवकार्यनियोगानन्तरम् ॥ १९ ॥

रा० टी०—विष्णुवृत्तमाह–अथेत्यादिभिः । अथ कश्यपप्रार्थनानन्तरं महातेजाः विष्णुः वामनं रूपमास्थाय प्रकटय्य अदित्यां समजायत प्रादुरभवत् अथ अनन्तरं वैरोचनिं विरोचनसुतं बलिमुपागमत् प्राप्तोत् ॥ १८ ॥

गो० टी०—अथेति । स्पष्टम् ॥ १८ ॥

२० ] ति० टी०—आक्रम्य त्रिभिः पदैरिति शेषः । लोकार्थी त्रैलोक्याक्रमणार्थी ॥ २० ॥

रा० टी०—त्रीनिति । अथ बलिसमीपप्राप्त्यनन्तरं त्रीन् पदान् पादत्रयपरिमितभूमिं भिक्षित्वा संयाच्य त्रींल्लोकानाक्रम्य त्रिभिः पादैः परिच्छिद्य प्रतिगृह्य सर्वांल्लोकान् गृहीत्वा च ओजसा बलिं नियम्य मानदः स्वाश्रितप्रतिष्ठाप्रदाता लोकार्थी त्रिलोकीग्रहणप्रयोजनकः किंच लोकोऽवलोकनमर्थोऽस्त्यस्मिन्निति साक्षीत्यर्थः अत एव सर्वलोकहिते रतः वामनः त्रैलोक्यं महेन्द्राय पुनः प्रादात् अनेन प्रकारेण महातेजाः स वामनः त्रैलोक्यं शक्रवशमिन्द्राधीनं पुनश्चक्रे श्लोकद्वयमेकान्वयि त्रीन् इत्यावृत्त्या उभयत्रान्वेति ॥ १९ ॥ २० ॥

गो० टी०—त्रीनिति । श्लोकद्वयमेकान्वयम् । क्रमान् पदविक्षेपान् भिक्षित्वा याचित्वा प्रतिगृह्य मानं यति खण्डयतीति मानदः निरभिमानो भिक्षित्वेत्यर्थः लोकाक्रमणे हेतुर्लोकात्मेति वामनरूपेण याचित्वा सर्वलोकव्यापिशरीरेण क्रान्त्वेत्यर्थः नियम्य बद्ध्वा त्रैलोक्यस्यापि पदद्वयक्रान्तत्वेन तृतीयपदालाभात्तदर्थं बद्ध्वेत्यर्थः॥ १९ ॥ २० ॥

२१ ] ति० टी०—नियम्य बद्ध्वा ॥ २१ ॥

२२ ] ति० टी०—तेनैव वामनावतारकर्त्रा । मया विश्वामित्रेण ॥ २२ ॥

रा० टी०—तेनेति । श्रमनाशनः अयमाश्रमः तेन वामनरूपविष्णुना पूर्वमेवाक्रान्तः तस्य वामनरूपविष्णोरयमाश्रमः मयापि भक्त्या त्वद्विषयकप्रीत्यैव निषेव्यते यद्वा तेन वामनेन श्रमनाशनोऽयमाश्रमः भक्त्या त्वद्विषयकप्रीत्या पूर्वमेव आक्रान्तः सेवितः मयापि त्वद्विषयकप्रीत्यैव तस्य वामनस्यायमाश्रमः निषेव्यते एतेन रामस्याखेटखेलने वनं तदिति ध्वनितम् तेनाप्रकटरूपेण सदैव तत्र रामस्य स्थितिरिति व्यञ्जितं तेन रामप्रश्नः विश्वामित्रज्ञानपरीक्षार्थमेवेति व्यक्तम् ॥ २१ ॥

गो० टी०—प्रकृतमुपसंहरति–तेनेति । तेन वामनेन श्रम-

१ क्रमानिति गो. पादानिति रा. पाठः । २ मानद इति गो. रा. पाठः । ३ लोकात्मेति गो. पाठः । ४ निषेव्यते इति रा. पाठः ।

एतमाश्रममायान्ति राक्षसा विघ्नकारिणः । अत्र ते[3] पुरुषव्याघ्र हन्तव्या दुष्टचारिणः ॥ २३ ॥
अद्य गच्छामहे राम सिद्धाश्रममनुत्तमम् । तदाश्रमपदं तात तवाप्येतद्यथा मम ॥ २४ ॥
इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् । प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥
शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ ॥ २५ ॥
तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः । उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २६ ॥
यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते । तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २७ ॥
मुहूर्तमथ विश्रान्तौ राजपुत्रावरिंदमौ । प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २८ ॥
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुंगव । सिद्धाश्रमोऽयं सिद्धः स्यात्सत्यमस्तु वचस्तव ॥२९॥

नाशनः संसारश्रमनिवर्तकः । संनिहितं स्थाण्वाश्रमं विहाय भवान् किमर्थमत्र स्थित इत्यत्राह–मया त्विति । मया तु देवतान्तरेषु परत्वबुद्धिरहितेन भक्त्या विष्णुभक्त्या तस्य वामनस्य एष आश्रमः उपभुज्यते आश्रीयते वामनस्येयं भूमिरिति केवलं तामेवाजिघ्रन्वर्ते इत्यर्थः ॥ २१ ॥

२३ ] ति० टी०–पूर्वसर्गान्तकृतद्वितीयप्रश्नोत्तरमाह–एनमिति ॥ २३ ॥

रा० टी०–एतमिति । हे पुरुषव्याघ्र ! विघ्नकारिणः यज्ञविनाशनशीलाः राक्षसाः एतमाश्रममायान्ति अतः दुष्टचारिणो राक्षसा अत्र अस्मिन्काले ते तव हन्तव्याः त्वत्कर्तृकहननयोग्याः ॥ २२ ॥

गो० टी०–एतमिति । स्पष्टम् ॥ २२ ॥

२४ ] ति० टी०–अनुत्तमं सर्वोत्तमम् । हे तात तदेतदाश्रमं यथा मम स्वभूतं तथा तवापि विष्ण्ववतारत्वादिति गदोऽभिसन्धिः ॥ २४ ॥

रा० टी०–अद्येति । हे राम तात हे प्रिय ! आश्रपदमत्यन्तश्रमनिवर्तकस्थानमत एव अनुत्तममतिश्रेष्ठं एतन्मम सिद्धाश्रमं सिद्धाश्रमसंज्ञकं तवैव तत्तस्माद्धेतोः अद्य वयं यथा यथावद्गच्छाम हे । अपिशब्द एवार्थे ॥ २३ ॥ २४ ॥

गो० टी०–अद्येति । गच्छामहे गच्छामः तातेत्युपलालने तदेतदाश्रमपदं यथा मम तथा तव स्वमिति शेषः ॥ २३ ।

२५ ] ति० टी०–पुनर्वसू द्वे तारे ॥ २५ ॥

रा० टी०–प्रविशन्निति । रामलक्ष्मणाभ्यां सहित इति शेषः महामुनिः विश्वामित्रः आश्रमपदं प्रविशन् सन् व्यरोचत् तत्र दृष्टान्तः गतनीहारस्त्यक्तहिमः पुनर्वसुसमन्वितः पुनर्वसू द्वे तारे ताभ्यां समन्वितो युक्तः शशी चन्द्र इव ॥ २५ ॥

गो० टी०–प्रविशन्निति । गतनीहारः गतहिमः पुनर्वसुभ्यां समन्वित इति रामलक्ष्मणसाम्यापेक्षया ॥ २४ ॥

२६–२८ ] ति० टी०–उत्पत्योत्पत्य संतोषातिशयादिति शेषः ॥ २६–२८ ॥

रा० टी०–तमिति । सिद्धाश्रमनिवासिनः सर्वे मुनयः तं रामलक्ष्मणसहितं विश्वामित्रं दृष्ट्वा सहसा उत्पत्योत्पत्य तत्तत्समीपं प्राप्य प्राप्य अपूजयन् ॥ २६ ॥

गो० टी०–तमिति । उत्पत्योत्पत्येति प्रीत्यतिशयोक्तिः आगत्यागत्येत्यर्थः अनेन निरन्तरं तदागमनोक्त्या मुनिबहुत्वमुच्यते ॥ २६ ॥

रा० टी०–पूजामेव विशदयन्नाह–यथेति । धीमते विश्वामित्राय विश्वामित्रं प्रसादयितुं यथार्हं यथायोग्यं पूजां क्रियां चक्रिरे तथैव राजपुत्राभ्यां रामलक्ष्मणाभ्यामतिथिक्रियामकुर्वन् ॥ २७ ॥

गो० टी०–यथार्हमिति । यथार्हं मुनियोग्यतामनतिक्रम्य ॥ २६ ॥

रा० टी०–मुहूर्तमिति । मुहूर्तमेव विश्रान्तौ मुहूर्तमात्रेण निवर्तिताध्वश्रमौ अरिंदमौ स्वाश्रितारिनिवर्तकौ रघुनन्दनौ रघुकुलवर्धकौ प्राञ्जली प्रणतिसूचकबद्धयुगलकरौ रामलक्ष्मणौ मुनिशार्दूलं मुनिश्रेष्ठं विश्वामित्रमूचतुः इवशब्द एवार्थे ॥ २८ ॥

गो० टी०–मुहूर्तमिति । मुहूर्तमल्पकालं विश्रान्ताविवेति मनुष्यभावेनोच्यते ॥ २७ ॥

२९ ] ति० टी०–अद्यैव प्रवेशदिन एव । कालविलम्बे फलाभावात् सिद्धस्त्वद्यज्ञसिद्ध्यान्वर्थसिद्धसंज्ञः तव वचोऽत्रैव पुरुषव्याघ्रहन्तव्या दुष्टचारिण इति यत्तत्सत्यमस्तु । राक्षसान्सर्वथा हनिष्य इति भावः ॥ २९ ॥

रा० टी०–तद्वचनमेवाह–अद्येति । हे मुनिपुंगव ! त्वमद्यैव दीक्षां प्रविश ते भद्रं कल्याणमस्तु अयं सिद्धाश्रमः सिद्धः साधितयागक्रियः स्यात् तव वचः 'अत्रैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणः' इत्याकारकं वचनं सत्यमस्तु एतेन रामे अतीव युद्धोत्साहो व्यक्तः ॥ २९ ॥

गो० टी०–अद्यैवेति । अद्यैव प्रवेशदिन एव अयं सिद्धाश्रमः सिद्धः स्यात् त्वद्यज्ञसिद्ध्या अन्वर्थसिद्धसंज्ञोऽस्तु सत्यमस्तु वचस्तव 'अत्रैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणः' इति वच इत्यर्थः राक्षसान्सर्वथा हनिष्य इति भावः ॥ २८ ॥

१ एतमिति गो. रा. पाठः । २ अर्धमिदं रा. पुस्तके नास्ति । ३ एवेति गो. रा. पाठः । ४ अर्धमिदं गो. रा. पुस्तकयोर्नास्ति । ५ इवेति गो. रा. पाठः ।

एवमुक्तो महातेजा विश्वामित्रो महानृषिः। प्रविवेश तदा दीक्षां नियतो नियतेन्द्रियः ॥ ३० ॥
कुमाराविव तां रात्रिमुषित्वा सुसमाहितौ। प्रभातकाले चोत्थाय पूर्वां संध्यामुपास्य च ॥ ३१ ॥
प्रशुची परमं जाप्यं समाप्य नियमेन च। हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः।

तपोवनस्य षड्रात्ररक्षणे काकुत्स्थयोः मुन्युक्तिः, षष्ठेऽहनि सपरिवारमारीचसुबाह्वोरागमनम्, मानवास्त्रेण रामकृतं तन्निवारणम्। काकुत्स्थं प्रति विश्वामित्रोक्तिश्च।

अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ। देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥
भगवञ्छ्रोतुमिच्छावो यस्मिन्काले निशाचरौ। संरक्षणीयौ तौ ब्रूहि नातिवर्तेत तत्क्षणम् ॥ २ ॥
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया। सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥

---

३० ] ति० टी०—नियतो गृहीतान्तःकरणः ॥ ३० ॥

रा० टी०—एवमिति। एवमनेन प्रकारेण उक्तः रामेण प्रार्थितः महातेजाः अतिप्रभावविशिष्टः नियतः अतिप्रयत्नशीलः नियतेन्द्रियः नियमितान्तर्बहिरुभयकरणः महामुनिः विश्वामित्रः ततो रामप्रार्थनानन्तरं दीक्षां प्रविवेश ॥ ३० ॥

गो० टी०—एवमिति। नियतः निगृहीतान्तःकरणः॥ ३० ॥

३१ ] ति० टी०—कुमाराविव स्कन्दविशाखाविव ॥ ३१ ॥

३२ ] ति० टी०—प्रशुची अवतारत्वादशुचित्वसंभावनाराहित्येन प्रकर्षतः शुची नियमेन कर्तव्यं जाप्यं समाप्येत्यन्वयः 'दीक्षामध्ये नाग्निहोत्रम्' इति निषेधादग्निहोत्रपदमौपासनहोमपरमिति केचित् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—मुनेर्दीक्षाप्रवेशानन्तरं रामकृत्यमाह—कुमाराविति। सुसमाहितौ नित्यैकाग्रचित्तौ कुमारौ रामलक्ष्मणावपि तां रात्रीमुषित्वा प्रभातकाले उत्थाय च स्पृष्टोदकौ शुची सन्तौ पूर्वां संध्यामुपास्य च नियमेन जप्यं समाप्य च हुताग्निहोत्रं दीक्षाग्रहणात्पूर्वं हुताग्निहोत्रकमासीनं दीक्षाग्रहणादूर्ध्वं स्वस्थतया तिष्ठन्तं विश्वामित्रमवन्देतां 'दीक्षामध्येनाग्निहोत्रम्' इति अग्निहोत्रस्य निषेधात् दीक्षापूर्वकाले इत्यध्याहृतम्।श्लोकद्वयमेकान्वयि इव शब्दोऽप्यर्थे ॥ ३१ ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—कुमाराविति। श्लोकद्वयम्। स्पृष्टोदकौ दत्ताघ्यौं नियमेन जप्यं समाप्य अग्रेहोत्रं होमः औपासनहोमः "दीक्षामध्ये नाग्निहोत्रम् न दर्शपूर्णमासाभ्यां यजते" इत्यग्निहोत्रस्य निषिद्धत्वात् मानसमग्निहोत्रमित्येके ॥ ३० ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणव्याख्याने मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

१ ] ति० टी०—अथेति। कौशिकं वचोऽब्रूतामित्यन्वयः१

रा० टी०—रामकर्तृकविश्वामित्रकर्मकवन्दनोत्तरकालिकरामोक्तिमाह—अथेत्यादिश्लोकद्वयेन। अथ प्रणामानन्तरं देशकालज्ञौ देशकालोचितकर्तव्यतायाः वेदितारौ अरिन्दमौ स्वाश्रितारिनिवर्तकौ देशकालेषु वाक्यज्ञौ देशेषु कालेषु च यद्वाक्यं वक्तव्यं तस्य ज्ञातारौ राजपुत्रौ रामलक्ष्मणौ कौशिकं विश्वामित्रमब्रूताम् ॥१॥

गो० टी०—सुबाहुमारीचप्रभृतिदुष्टनिग्रहस्त्रिंशे—अथ ताविल्यादि। देशकालज्ञाविति हेतुगर्भं देशकालज्ञत्वादुचिते देशे उचिते काले चाब्रूताम् ॥ १ ॥

२–३ ] ति० टी०—तौ निशाचरौ संरक्षणीयौ यज्ञसंरक्षणाय निवारणीयौ गह्यादित्वाच्छः तत्क्षणं स क्षणो यथा नातिवर्तेत नातिक्रमेत तथा ब्रूहीत्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—भगवन्निति। हे भगवन् हे ब्रह्मन्! यस्मिन्काले तौ प्रसिद्धौ निशाचरौ सुबाहुमारीचौ संरक्षणीयौ संरक्ष्यते याग आभ्यामिति अपादाने अनीयर् किंच संरक्षणीयौ दुष्टकर्महेतुकनरकपातादितो निवर्तनीयौ तं कालं श्रोतुमिच्छावः यतः तत्क्षणो नातिवर्तेत नातिक्रमेत् ॥ २ ॥

गो० टी०—भगवन्निति। संरक्षणीयौ निवारणीयौ धातूनामनेकार्थत्वात् विपरीतलक्षणा वा यद्वा इष्टप्राप्तिरनिष्टनिवृत्तिश्च रक्षणम् अत्र अनिष्टनिवृत्तिः तत्क्षणं स कालः नातिवर्तेत अज्ञातो नातिक्रामेत्॥ २ ॥

रा० टी०—एवमिति। एवमुक्तप्रकारेण ब्रुवाणौ कथयन्तौ युयुत्सया त्वरमाणौ वेगवन्तौ नृपात्मजौ दशरथसुतौ काकुत्स्थौ रामलक्ष्मणौ प्रीतास्ते सर्वे मुनयः प्रशशंसुः ॥ ३ ॥

गो० टी०—एवमिति। युयुत्सया योद्धुमिच्छया प्रशशंसुः प्रोचुः ॥ ३ ॥

---

१ महामुनिरिति गो. रा. पाठः। २ तत इति गो. रा. पाठः। ३ अथेति गो. रा. पाठः। ४ स्पृष्टोदकौ शुची जप्यमिति गो. रा. पाठः। ५ त्विति रा. पाठः। ६ भगवन्निति गो. रा. पाठः।

अद्यप्रभृति षड्रात्रं रक्षतां राघवौ युवाम् । दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥
तौ तु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ । अनिद्रं षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥
उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ । ररक्षतुर्मुनिवरं विश्वामित्रमरिंदमम् ॥ ६ ॥
अथ काले गते तस्मिन्षष्ठेऽहनि तथागते । सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७ ॥
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया । प्रजज्वाल ततो वेदिः सोपाध्यायपुरोहिता ॥ ८ ॥
सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया । विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९ ॥
मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते । आकाशे च महाञ्छब्दः प्रादुरासीद्भयानकः ॥ १० ॥

४-५ ] ति० टी०-एवं विश्वामित्रे पृष्टे दीक्षया तस्य मौनित्वादृषय ऊचुः—अद्येति । मौनित्वं च गमिष्यति अद्यापि दीक्षितत्वान्मौन्येवातः परमपि षड्रात्रपर्यन्तं मौनित्वं प्राप्स्यतीत्यर्थः ॥ ४ ॥ ५ ॥

रा० टी०-अद्येति । हे राघवौ ! अद्यप्रभृति एतद्दिवसमारभ्य षड्रात्रं रात्रिषट्कपर्यन्तं युवां रक्षताम् तत्र हेतुः यतः दीक्षां गतः प्राप्तः एषः मुनिर्विश्वामित्रः अद्यप्रभृति षड्रात्रं मौनत्वं गमिष्यति प्राप्स्यति अद्यप्रभृति षड्रात्रमित्यावृत्या उभयत्रान्वेति । चशब्दो हेत्वर्थे ॥ ४ ॥

गो० टी०-अद्येति । रक्षतामिति लोण्मध्यमपुरुषद्विवचनम् एतद्दिनमारभ्य षड्रात्रपर्यन्तं मुनिर्मौनित्वं गमिष्यति अतो वयं वदाम इत्यर्थः ॥ ४ ॥

रा० टी०-ताविति । तन्मुनिभिरुक्तं वचनं श्रुत्वैव यशस्विनौ अतियशोविशिष्टौ तौ मुनिप्रार्थितौ राजपुत्रौ रामलक्ष्मणौ अनितौ निद्रारहितौ सन्तौ षडहोरात्रमहोरात्रषट्कपर्यन्तं तपोवनमरक्षताम् । चशब्द एवार्थे ॥ ५ ॥

गो० टी०-ताविति । षडहोरात्रं षण्णामहोरात्राणां समाहारः षडहोरात्रं तत् ॥ ५ ॥

६ ] ति० टी०-यत्तौ संनद्धौ परमधन्विनावित्यार्षम् विश्वामित्रं तद्यज्ञम् ॥ ६ ॥

रा० टी०-रक्षणमेव विशदयन्नाह-उपेति । वीरौ वीर्यविशिष्टौ अत एव यत्तौ धृतकवचौ परमधन्विनौ समातिशयरहितधनुर्विशिष्टौ अरिंदमौ स्वाश्रितारिनिवर्तकौ रामलक्ष्मणौ उपासां मुनिसमीपस्थितिं चक्रतुः मुनिवरं विश्वामित्रं ररक्षतुश्च विनापि चं समुच्चयः परमधन्विनावित्यत्र व्रीह्यादित्वादिनिः ॥ ६ ॥

गो० टी०-उपासाञ्चक्रतुरिति। उपासाञ्चक्रतुः ऊषतुः यत्तौ सन्नद्धौ परमं धनुर्ययोस्तौ परमधन्विनौ व्रीह्यादित्वादिनिः ॥६॥

७ ] ति० टी०-काले पञ्चाहोरात्रलक्षणे षष्ठेऽहन्यागत इतिच्छेदः प्राप्त इत्यर्थः यद्वा षष्ठेऽहनि गते रात्रावित्यर्थः यत्तः सज्जः समाहित एकाग्रचित्तः ॥ ७ ॥

रा० टी०-अथेति । काले पञ्चदिनात्मके गते व्यतीते सति तस्मिन्सुत्यादिनत्वेन प्रसिद्धे षष्ठे अहनि समागते प्राप्ते सति रामः सौमित्रिं लक्ष्मणमथ मङ्गलमब्रवीत् तद्वचनमेवाह-यत्तः प्रयत्नवान् त्वं समाहितो भव ॥ ७ ॥

गो० टी०-अथेति । काले पञ्चदिनात्मके गते तस्मिन् प्रधाने अहनि सुत्यादिने समाहितः एकाग्रचित्तः अत्राद्यप्रभृति षड्रात्रमित्युक्त्या पूर्वसर्गे तत्पूर्वदिने दीक्षाप्रवेशोक्त्या च सप्तरात्रनिर्वर्त्यः सत्रविशेषोऽयमिति गम्यते ॥ ७ ॥

८ ] ति० टी०-उपाध्यायो ब्रह्मा पुरोहित उपद्रष्टा इदमृत्विगन्तराणामप्युपलक्षणम् इदं ज्वलनं राक्षसागमनसूचक उत्पात इत्याहुः ॥ ८ ॥

रा० टी०-रामस्येति । ततः रामोक्त्यनन्तरं युयुत्सया युद्धेच्छया त्वरितस्य प्रकटीकृतवेगस्य एवमनेन प्रकारेण ब्रुवाणस्य रामस्य समीपे सोपाध्यायपुरोहिता उपाध्यायो विश्वामित्रः पुरोहिता ऋत्विजः तत्सहिता वेदिः प्रजज्वाल राक्षसागमसूचकोत्पातविशेषप्रज्वलनविशिष्टा बभूव ॥ ८ ॥

गो० टी०-रामस्येति । वेदिप्रज्वलनमुत्पातो राक्षसागमसूचकः उपाध्यायः विश्वामित्रः पुरोहिता ऋत्विजः ॥ ८ ॥

९ ] ति० टी०-दर्भसहितचमसस्रुग्वती समित्कुसुमोच्चयैश्च सहिता इदं वेदीज्वलनं यज्ञोद्देश्यकम् ॥ ९ ॥

रा० टी०-तदेव विशदयन्नाह-सदर्भेति । सदर्भचमसस्रुक्का दर्भचमसस्रुक्सहिता ससमित्कुसुमोच्चया समित्कुसुमोच्चयसहिता विश्वामित्रेण सहिता सर्त्विजा ऋत्विक्सहिता वेदिः जज्वाल हलन्ताट्टाप् ॥ ९ ॥

गो० टी०-एतद्विवृणोति-सदर्भेति । चमसं नाम पानपात्रं स्रुक् होमपात्रम् उच्चयः समूहः कुसुमोच्चयोऽलंकारार्थः ॥ ९ ॥

१० ] ति० टी०-संप्रवर्तते स्म आकाशे महाञ्छब्दः प्रादुरासीच्च ॥ १० ॥

रा० टी०-मन्त्रवदिति । मन्त्र उच्यते अस्मिन्निति किंच मन्त्रेण वन्यते स्च्यते इति मन्त्रवत् अयं षष्ठदिनसाध्यो यज्ञः यथान्यायमेव संप्रवर्तते संप्रावर्तत तदा भयानको भयावहः आकाशे महान् शब्दः प्रादुरासीत् । चशब्द एवार्थे द्वितीयस्तदर्थे ॥ १० ॥

१ मौनत्वमिति रा. पाठः । २ चेति गो. रा. पाठः । ३ अनिद्राविति गो. रा. पाठः । ४ अरिंदमौ इति गो. रा. पाठः । ५ समागते इति गो. रा. पाठः । ६ यज्ञोऽयमिति रा. पाठः ।

आवार्य गगनं मेघौ यथा प्रावृषि दृश्यते । तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११ ॥
मारीचश्च सुबाहुश्च तयोरनुचरास्तथा । आगम्य भीमसंकाशा रुधिरौघानवासृजन् ॥ १२ ॥
तां तेन रुधिरौघेण वेदीं वीक्ष्य समुक्षिताम् । सहसाभिद्रुतो रामस्तानपश्यत्ततो दिवि ॥ १३ ॥
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः । लक्ष्मणं त्वभिसंप्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥
पश्य लक्ष्मण दुर्वृत्तान्राक्षसान्पिशिताशनान् । मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥
करिष्यामि न संदेहो नोत्सहे हन्तुमीदृशान् । इत्युक्त्वा वचनं रामश्चापे संधाय वेगवान् ॥ १६ ॥
मानवं परमोदारमस्त्रं परमभास्वरम् । चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १७ ॥
स तेन परमास्त्रेण मानवेन समाहतः । संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १८ ॥

गो० टी०—मन्त्रवदिति । ननु रक्षोघ्नमन्त्रजपे क्रियमाणे कथं राक्षसागमनप्रसक्तिः न कथंचित् किंतु दूरत एवाकाशे मेघवद्रुधिरं ववर्षुः तदिदमाह—आकाश इति भयानकः भयंकरः ॥ १० ॥

११ ] ति० टी०—यथा प्रावृषि गगनमावार्य गगनमाच्छाद्य महाशनिमहागर्जमहावर्षादिविचित्रकारी दृश्यते तथा मायां प्रकटीकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११ ॥

रा० टी०—आवार्येति । प्रावृषि वर्षायां गगनमावार्य प्राच्छाद्य मेघो यथा निर्गतः तथा मायां विकुर्वाणौ राक्षसौ मारीचसुबाहू अभ्यधावताम् 'प्रावृषि दृश्यते' इति भट्टसंमतः पाठः ॥ ११ ॥

गो० टी०—आवार्येति । प्रावृषि वर्षाकाले निर्गतो मेघो यथा तथाभ्यधावताम् ॥ ११ ॥

१२ ] ति० टी०—कौ तौ का च सा मायेत्यत्राह—मारीच इत्यादि । अवासृजन्ववृषुः ॥ १२ ॥

रा० टी०—मारीच इति । मारीचः सुबाहुश्च मेघसंकाशाः तयोरनुचराश्च आगम्य समीपं प्राप्य रुधिरौघान् रुधिरसमूहान् अवासृजन् ववृषुः तथाशब्दो मांसपूयादिसंग्राहकः॥ १२ ॥

गो० टी०—मारीच इति । भीमसंकाशाः भयंकराः॥१२॥

१३ ] ति० टी०—समुक्षिताम् अभ्याश इति शेषः अभिद्रुतोऽभितः शालां प्रधावंस्तत्रादृष्ट्वा ततो दिवि तानपश्यत्॥१३॥

रा० टी०—सेति । तेन मारीचसुबाहुवर्षितेन रुधिरौघेण मण्डिता वेदिः जज्वाल ततोऽनन्तरं सहसा अभिद्रुतः रुधिरवर्षकान् द्रष्टुं संप्रचलितो रामः तान् रुधिरवर्षकान् दिवि आकाशे अपश्यत् ॥ १३ ॥

गो० टी०-सेति । अभिद्रुतः अभिमुखं धावन् ॥ १३ ॥

१४ ] ति० टी०—आपतन्तौ स्वसंमुखमागच्छन्तौ ॥१४॥

रा० टी०—ताविति । सहसा आपतन्तौ तौ मारीचसुबाहू दृष्ट्वैव राजीवलोचनो रामः लक्ष्मणमभिसंप्रेक्ष्य वचनमब्रवीत् तुशब्द एवार्थे ॥ १४ ॥

गो० टी०—ताविति । स्पष्टम् ॥ १४ ॥

१५ ] ति० टी०—मानवास्त्रसमाधूतान्करिष्यामि पदयोजना ॥ १५ ॥

रा० टी०—तद्वचनमेवाह—पश्येति । हे लक्ष्मण ! दुर्वृत्तान् दुष्टाचारान् पिशिताशनान् मांसभक्षणशीलान्राक्षसान् अनिलेन घनानिव मानवास्त्रसमाधूतान् मनुवंशप्रादुर्भूतमदस्त्रप्रक्षिप्तान् करिष्यामि अत्र संदेहो न इति त्वं पश्य मानवेति तं बोधनं वा ननु हन्तव्या एव ते इत्यत आह—ईदृशान् इष्वकर्तॄन् हन्तुं नोत्सहे ॥ १५ ॥

गो० टी०—पश्येति । पिशिताशनान् मांसभक्षकान एतद्विधूननार्थं मानवास्त्रं प्रयोक्ष्य इति भावः ॥ १५ ॥

१६ ] ति० टी०—ईदृशान्स्थितापुंसपान्दुर्बलान्वा ॥१६॥

१७ ] ति० टी०—परमोदारं परमश्रेष्ठम ॥ १७ ॥

रा० टी०—इतीति । वेगवान् प्रशस्तहस्तलाघवी विशिष्टोऽतिक्रुद्धः राघवो रामः इति उक्तप्रकारेण एवं लक्ष्मणतोषकं वचनमुक्त्वा परमोदारमतिश्रेष्ठं किंच परम एव तत् परमात्मा रामः तमासमन्ताद्भावेन राति ददातीति तत् स्वहंतृभ्यो राम प्रापकमित्यर्थः परमभास्वरमस्त्रं मारीचोरसि चिक्षेप तत्शब्दस्य परमात्मवाचकत्वमुपनिषत्सु प्रसिद्धम् सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

गो० टी०—मानवमिति । अत्रादावित्युक्त्वोपक्रम्य नैयम् ननु सर्वराक्षसेष्वस्त्रप्रयोगं प्रतिज्ञाय मारीचोरसि तत्प्रयोगः कथमिति चेन्न पूर्वश्लोके राक्षसशब्दस्य मारीचमात्रपरत्वात् ॥ १६ ॥

१८ ] ति० टी०—स तेनेति । स मारीचः । सागरसंप्लवे समुद्रमध्ये ॥ १८ ॥

रा० टी०—स इति । तेन मानवेन परमास्त्रेण समाहतः संताडितः स मारीचः सागरसंप्लवे समुद्रमध्ये संपूर्णं यथा स्यात्तथा योजनशतं क्षिप्तः अत्र श्लोके प्रथमः सकारो गायत्रीद्वितीयवर्णं इति वदन्ति ॥ १८ ॥

गो० टी०—स इति । सागरसंप्लवे समुद्रपूरे अत्र गायत्रीद्वितीयाक्षरं सः ॥ १७ ॥

१ निर्गत इति गो. रा. पाठः । २ च ये इति गो. पाठः । ३ मेवेति रा. पाठः । ४ सेति गो. रा. पाठः । ५ वेदिर्जज्वाल मण्डितेति गो. रा. पाठः । ६ नास्त्ययं गो. पुस्तको ७ समाहित इति गो. पाठः ।

विचेतनं विघूर्णन्तं शीतेषुबलपीडितम् । निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १९ ॥
पश्य लक्ष्मण शीतेषुं मानवं मनुसंहितम् । मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ॥ २० ॥
इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः । राक्षसान्पापकर्मस्थान्यज्ञघ्नान्रुधिराशनान् ॥ २१ ॥
इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव । विगृह्य सुमहच्चास्त्रमाग्नेयं रघुनन्दनः ॥ २२ ॥
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि । शेषान्वायव्यमादाय निजघान महायशाः ॥
राघवः परमोदारो मुनीनां मुदमावहन् ॥ ॥ २३ ॥
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः । ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २४ ॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः । निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥२५॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया । सिद्धाश्रममिदं सत्यं कृतं वीर महायशः ॥
स हि रामं प्रशस्यैवं ताभ्यां संध्यामुपागमत् ॥ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

१९ ] ति० टी०—विचेतनं चैतन्यरहितमत एव विघूर्णमानम् शीतेषुरिति मानवास्त्रनामान्तरम् दृश्य दृष्ट्वा ॥ १९ ॥

रा० टी०—विचेतनमिति। विचेतनं चैतन्यरहितं विघूर्णन्तं भ्रमणविशिष्टं तत्र हेतुः शीतेषुबलताडितम् शीतेषुरिति मानवास्त्रस्य संज्ञा तद्बलेन ताडितमत एव निरस्तं मारीचं दृश्य दृष्ट्वा रामः लक्ष्मणमब्रवीत् ॥ १९ ॥

गो० टी०—विचेतनमिति। शीतेषुशब्दोऽवयववृत्त्या मानवास्त्रे वर्तते दृश्य दृष्ट्वा मारीचस्य प्राणरक्षणं भाविकार्यान्तरसाधनाय ॥ १८ ॥

२० ] ति० टी०—शीतेषुं शीतेष्वित्यपरनामकं मानवास्त्रम् मनुसंहितं मनुप्रयुक्तम् वियुज्यते वियोजयतीति यावत् ॥ २० ॥ २१ ॥ २२ ॥

रा० टी०—तद्वचनमेवाह—पश्येति। हे लक्ष्मण! धर्मसंहितं धर्मात्मानं मानवं मनुसंबन्धिनं शीतेषुनामकमस्त्रं त्वं पश्य तत्र हेतुं वदन्नाह—एनं मारीचं मोहयित्वैव नयति शीतेषुरिति शेषः अतः प्राणैः न वियुज्यते प्राणकर्तृकत्यागाश्रयो मारीचो न भवतीत्यर्थः। च शब्द एवार्थे ॥ २० ॥

रा० टी०—इमानिति। निर्घृणान् दयारहितानत एव दुष्टचारिणः दोषविशिष्टाचरणशीलानत एव पापकर्मस्थान्पापकर्मसु स्थः प्रतिक्षणं स्थितिः चिन्तनमिति यावत् येषाम् किंच पापकर्मसु तिष्ठन्ति तानत एव यज्ञघ्नान्यज्ञविध्वंसकर्तॄनिमानपि राक्षसानहं वधिष्यामि ताडयिष्यामि दुष्टचारित्वं निवारयिष्यामीति वा दूरदेशं प्रक्षेपयिष्यामीत्यर्थः अत एव नोत्सहे हन्तुमीदृशानस्त्रसमाधूतान्करिष्यामीत्यत्र बहुवचनं संगच्छते ॥२१॥

गो० टी०—इमानिति। वधप्रयोजकानि निर्घृणत्वादीनि ॥ १९ ॥

रा० टी०—प्रतिज्ञातमाह—संगृह्येति। सुमहदतिश्रेष्ठमाग्नेयमस्त्रं रघुनन्दनः सुबाहूरसि चिक्षेप तदा विद्धः बाणताडितः स सुबाहुः भुवि ताटकापतनभूमौ प्रापतत् चशब्दस्तदार्थे ॥ २२ ॥

गो० टी०—संगृह्येति। अद्भुत यथा तथा चिक्षेप ॥२०॥

२३-२४ ] ति० टी०—निजघान दूरोत्सरणपूर्वकं नाशनं वायव्यास्त्रफलं बोध्यम् ॥ २३ ॥ २४ ॥

रा० टी०—शेषानिति। महायशाः समाधिकरहितयशोविशिष्टः परमोदारो राघवः मुनीनां मुदं प्रमोदमावहन् प्रापयन्सन् वायव्यं वायुदेवताकमस्त्रमादाय गृहीत्वा शेषानुर्वरितान्राक्षसान्निजघान तताड दूरदेशं प्रचिक्षेपेत्यर्थः ॥ २३ ॥

गो० टी०—शेषानिति। निजघान हिंसितवान् ॥ २१ ॥

रा० टी०—स इति। यज्ञघ्नान्सर्वान्राक्षसान् हत्वा संताड्य वर्तमानः स रघुनन्दनः तत्र तस्मिन्वने ऋषिभिः पूजित आसीत् इति शेषः तत्र दृष्टान्तः पुराविजये असुरपराभवमूलकदेवकर्तृकाविजयप्राप्तौ इन्द्रो यथा ॥ २४ ॥

गो० टी०—स इति। पुरा विजये असुरविजये ॥ २२ ॥

२५ ] ति० टी०—निरीतिका निराबाधाः ॥ २५ ॥

रा० टी०—अथेति। अथ असुरहननानन्तरमेव यज्ञे समाप्ते सति महामुनिर्विश्वामित्रः निरीतिकाः बाधारहिताः दिशो दृष्ट्वा काकुत्स्थं राममिदं वचनमब्रवीत् तुशब्द एवार्थे ॥ २५ ॥

गो० टी०—अथेति। निरीतिकाः निर्बाधाः ॥ २३ ॥

२६ ] ति० टी०—सत्यं कृतम् अन्वर्थनामकं कृतमित्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—तद्वचनमेवाह—कृतार्थ इति। हे महाबाहो! य-

---

१ ताडितमिति गो. रा. पाठः। २ क्षेपकोयं गो. पुस्तके। ३ धर्मसंहितमिति गो. रा. पाठः। ४ व्ययुज्यतेति गो. पाठः। ५ अर्धमिदं गो. रा. पुस्तकयोर्नास्ति। ६ संगृह्येति गो. रा. पाठः। ७ रामेति गो. रा. पाठः। ८ अर्धमिदं गो. रा. पुस्तकयोर्नास्ति।

# एकत्रिंशः सर्गः ।

किं शासनं विधेयमिति रामलक्ष्मणयोः विश्वामित्रं प्रति प्रश्नः, विश्वामित्रं पुरस्कृत्य जनकराज्ये गन्तुमद्भुतधनूरत्नदर्शनार्थमत्याग्रहपूर्वकं महर्षीणां रामाय निवेदनम्, सर्षिसंघविश्वामित्रस्योत्तरदिशि प्रस्थानम् शोणातीरे निवासःरामस्य तद्देशकथाविषयको विश्वामित्रं प्रति प्रश्नश्च ।

**अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ । ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥**
**प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ । विश्वामित्रमृषींश्चान्यान्सहितावभिजग्मतुः ॥ २ ॥**
**अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् । ऊचतुः परमोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥**
**इमौ स्म मुनिशार्दूल किंकरौ समुपागतौ । आज्ञापय मुनिश्रेष्ठ शासनं करवाव किम् ॥ ४ ॥**
**एवमुक्ते तयोर्वाक्ये सर्व एव महर्षयः । विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥**

तत्त्वया गुरुवचः कृतम् अतः अहं कृतार्थोऽस्मि हे महायशः राम ! इदं सिद्धाश्रमं सत्यं सार्थकम् किंच राक्षसोपद्रवरहितं वनं सत्यलोकवत् कृतं संपादितं त्वयेत्यत्राप्याकृष्यते ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

**गो० टी०—कृतार्थ इति** । गुरुवचः पितृवचः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

---

१ ] **ति० टी०—**एवं स्वयज्ञविघ्नविनाशफलकं सर्वाश्रमसंबन्धानुग्रहं कृत्वा भगवान्विश्वामित्रः सहजलक्ष्मीशक्तिसंबन्धानुग्रहाय प्रवर्तत इत्याह—**अथेति** । तत्र यज्ञशालायाम् ॥ १ ॥

**रा० टी०—**विश्वामित्रवचनानन्तरकालिकं वृत्तमाह—**अथेति** । अथ विश्वामित्रोक्त्यनन्तरं कृतार्थौ साधितमुनिप्रयोजनौ मुदितौ प्रमोदस्य दातारौ प्रहृष्टेन अन्तरात्मनोपलक्षितौ वीरौ रामलक्ष्मणौ तत्र सिद्धाश्रमे ऊषतुः मुदितावित्यत्रान्तर्भावितणिजर्थः कर्मणोऽविवक्षया कर्तरि निष्ठा ॥ १ ॥

**गो० टी०—**एवं कृतार्थो विश्वामित्रो जनकसुतात्वेनावतीर्णया श्रिया रामं योजयितुं व्याजेन मिथिलाप्रस्थानं प्रस्तौत्येकत्रिंशे—**अथेत्यादि** । कृतार्थौ कृतविश्वामित्रप्रयोजनौ प्रहृष्टेन संतुष्टेन अन्तरात्मना अन्तःकरणेन उपलक्षितौ ॥ १ ॥

२ ] **ति० टी०—**कृता पौर्वाह्णिकी क्रिया याभ्यां तावभिजग्मतुः अभिवादार्थमिति शेषः तदुक्तं पूर्वसर्गान्ते—'संध्यामुपागमत्' इति सह गतो विश्वामित्रो होमार्थं त्वरया शालामागत इति बोध्यम् ॥ २ ॥

**रा० टी०—प्रभातायामिति** । शर्वर्यां रात्रौ प्रभातायां प्रभातत्वं प्राप्तायामेव कृतपौर्वाह्णिकक्रियौ निर्वर्तितप्रातःक्रियाकलापौ सहितौ रामलक्ष्मणौ विश्वामित्रमन्यांश्च मुनीनभिजग्मतुः तत्संमुखं प्रापतुः ॥ २ ॥

**गो० टी०—प्रभातायामिति** । सहितौ अविनाभूतौ ॥२॥

३ ] **ति० टी०—**मुनिश्रेष्ठं विश्वामित्रम् ॥ ३ ॥

**रा० टी०—अभिवाद्येति** । ज्वलन्तं पावकमिव मुनिश्रेष्ठं विश्वामित्रप्रभृतिमभिवाद्य प्रणम्य मधुरोदारं मधुरत्वसमानाधिकरणोदारत्वविशिष्टं वाक्यं मधुरभाषिणौ नित्यं मधुरभाषणशीलौ रामलक्ष्मणौ ऊचतुः ॥ ३ ॥

**गो० टी०—अभिवाद्येति** । मधुरोदारोक्तौ हेतुर्मधुरभाषिणाविति ॥ ३ ॥

४ ] **ति० टी०—**स्मेत्यव्ययम् ॥ ४ ॥

**रा० टी०—**तद्वचनमेवाह—**इमाविति** हे मुनिशार्दूल ! समुपस्थितौ त्वां प्राप्तौ इमौ आवां द्वौ किंकरौ त्वं यथेष्टं यथेच्छमेव किमपि आज्ञापय तव शासनमावां करवाव स्मशब्द एवार्थे वैशब्दोऽप्यर्थे ॥ ४ ॥

**गो० टी०—इमाविति** । स्मेति भूतार्थसूचकमव्ययम् इमौ स्म आज्ञापितं सर्वमनुष्ठितवन्तावित्यर्थः मुनिशार्दूल ब्रह्मध्यायिषु श्रेष्ठ ! अनेन निरवधिकभक्तिमत्त्वं सूचितम् किंकरौ 'भक्तिक्रीतो जनार्दनः' इत्युक्तरीत्या त्वया क्रीतौ समुपस्थितौ भक्तं त्वां विना क्षणमपि स्थातुमक्षमौ 'शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ॥ मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः' इतिवत् आज्ञापय यथेष्टं क्षामकाले अल्पद्रव्याय क्रीतो राजपुत्रः पुनर्निवर्तयितुं नार्हः किल शासनं करवाव किंकर्तव्ये न संकोचः कार्य इत्यर्थः अनेन स्वभक्ताय स्वान्यं न ददाति आहूय न ददाति स्वयं गत्वैव ददाति स्वात्मानमिष्टविनियोगार्हं करोतीत्युक्तम् ॥ ४ ॥

५ ] **ति० टी०—**तयोरिति ताभ्यामित्यर्थे विश्वामित्रं पुरस्कृत्य कृतविश्वामित्रानुमतिका इति यावत् ॥ ५ ॥

**रा० टी०—**रामप्रार्थनोत्तरकालिकं वृत्तमाह—**एवमिति** । तयोः रामलक्ष्मणयोः एवमनेन प्रकारेण वाक्ये उक्ते सति सर्वे महर्षयः विश्वामित्रं पुरस्कृत्यैव रामं वचनमब्रुवन् संबन्धसामान्यविवक्षया षष्ठी ॥ ५ ॥

**गो० टी०—एवमिति** । अत्र विश्वामित्रेण प्रतिवचने

---

१ मुनीनिति गो. रा. पाठः । २ मधुरोदारमिति गो. रा. पाठः । ३ यथेष्टं वै इति गो. रा. पाठः । ४ मुक्तास्ततस्ताभ्यामिति गो. पाठः ।

मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति । यज्ञः परमधर्मिष्ठस्तत्र यास्यामहे वयम् ॥ ६ ॥
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि । अद्भुतं च धनूरत्नं तत्र त्वं द्रष्टुमर्हसि ॥ ७ ॥
तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः । अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः । कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥ ९ ॥
धनुषस्तस्य वीर्यं हि जिज्ञासन्तो महीक्षितः । न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः । तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं च परमाद्भुतम् ॥ ११ ॥
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः । याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२ ॥

ऋषिभिर्नियोजनं रामभक्त्यतिरेकेण पुरस्कृत्य तदनुज्ञां लब्ध्वेत्यर्थः यद्वा विश्वामित्रप्रमुखा मुनय इत्यर्थः ॥ ५ ॥

६ ] ति० टी०—मैथिलस्य मैथिलाधिपतेः । परमधर्मिष्ठ उत्कटातिशयितधर्मवान् परमेति पृथक्पदं वा परा मा यस्मिन्नित्यर्थकं रामसंबोधनम् ॥ ६ ॥ ७ ॥

रा० टी०—तद्वचनमेवाह—मैथिलस्येत्यादिभिः । नरश्रेष्ठ हे राम ! मैथिलस्य मिथिलाधिपतेः जनकस्य परमधार्मिष्ठः अतिशयधर्मोत्पादक इत्यर्थः यज्ञः भविष्यति तत्र वयं यास्यामहे यास्यामः ॥ ६ ॥

गो० टी०—मैथिलस्येति । मिथिलाया ईश्वरो मैथिलः "तस्येदम्" इत्यण् परमधर्मिष्ठः अतिशयेन धर्मवान् भगवत्कैङ्कर्यरूपत्वेन काम्यनित्याभ्यामुत्कृष्ट इत्यर्थः तस्य तस्य कृते ॥ ६ ॥

रा० टी०—अतः हे नरशार्दूल। अस्माभिःसह त्वमपि तत्र गमिष्यसि तत्र हेतुः तत्र यागे अद्भुतं विलक्षणं तत्प्रसिद्धं धनूरत्नं त्वं द्रष्टुमर्हसि चशब्दो हेतौ एवोऽप्यर्थे ॥ ७ ॥

गो० टी०—त्वमिति । गमिष्यसि यदीति शेषः धनुरत्नं धनुःश्रेष्ठं दीर्घाभाव आर्षः चकाराद्यज्ञं चेत्यर्थः तत्प्रसिद्धम् ॥७॥

८ ] ति० टी०—पूर्वं पूर्वस्मिन्काले । देवरातारव्यप्राचीनजनकस्य यज्ञे सदसि दैवतैर्दक्षयज्ञवधे प्रसादिताच्छिवाल्लब्धं यज्ञप्रसादितैः शिवसहितैर्देवैर्दत्तम् अतस्तत्र तिष्ठतीति शेषः ८ ॥

रा० टी०—धनुषोऽद्भुतत्वं दर्शयन्नाह—तद्दिति । हे नरश्रेष्ठ अप्रमेयबलमियत्तारहितबलविशिष्टमतिगुर्वित्यर्थः परमभास्वरमतिदीप्तियुक्तमत एव घोरं भयंकरं तत्प्रसिद्धं धनुः मखे सदसि देवरातनामकजनकमखसभायां दैवतैः दक्षप्रजापतियागध्वंसे प्रसादितशिवाल्लब्धधनुष्कदेवैः किंच देवतैः देवतास्वामिशिवेन बहुत्वमादरार्थं पूर्वं दत्तं देवरातनामकपूर्वजनकायेति शेषः हिर्हेतौ ॥ ९ ॥

गो० टी०—तस्य धनूरत्नं कुतः समायातं तत्राह—तद्धीति। मखे सदसि दैवतैर्दत्तमित्यन्वयः ॥ ८ ॥

९-१० ] ति० टी०—तस्याद्भुतत्वमाह—नास्येति । आरोपणं शरप्रक्षेपयोग्यज्यासंबन्धः न कथंचन न कथमपीत्यर्थः ॥ ९ ॥ १० ॥

रा० टी०—नास्येति । अस्य धनुषः आरोपणं बाणप्रक्षेपयोग्यज्यासंयोगं कर्तुं देवाः कथंचन न शक्ताः गन्धर्वाः कथंचन न शक्ताः असुराः कथंचन न शक्ताः राक्षसाः कथंचन न शक्ताः मानुषाश्च कथंचन न शक्ताः मनुष्येष्वपि नहुषादिषु अधिकपराक्रमश्रुतेः न पतत्प्रकर्षदोषाशङ्का ॥ ९ ॥

गो० टी०—नास्येति । आरोपणं ज्यारोपणम् ॥ ९ ॥

रा० टी०—धनुष इति । तस्य देवैर्दत्तस्य धनुषः वीर्यं जिज्ञासन्तः महाबला महीक्षितो राजानः राजपुत्राश्च आरोपयितुं बाणप्रक्षेपयोग्यज्यासंयोगं कर्तुं न शेकुः हिशब्दश्चार्थे ॥ १० ॥

गो० टी०—धनुष इति। जिज्ञासन्तः जिज्ञासमानाः॥१०॥

११ ] ति० टी०—तत्र मिथिलायाम् । यज्ञं चेति यज्ञं द्रक्ष्यसि चेत्यन्वयः । चकारेण जानकीस्त्रीकारसमुच्चयः ॥ ११ ॥

रा० टी०—उपसंहरन्नाह—तदिति । हे नरशार्दूल हे काकुत्स्थ ! अद्भुतदर्शनं तत्प्रसिद्धं मैथिलस्य धनुर्यज्ञं च तत्र मिथिलायां द्रक्ष्यसि ॥ ११ ॥

गो० टी०—तदिति । यज्ञं द्रक्ष्यसि तत्र तद्धनुश्च द्रक्ष्यसीत्यन्वयः ॥ ११ ॥

१२ ] ति० टी०—कुतस्तादृशधनुषस्तत्र स्थितिस्तत्राह—तद्धीति । उत्तमं तद्धनुर्मैथिलेन निजयज्ञप्रीतदेवेभ्यो यज्ञफलत्वेन याचितं युद्धे रिपूणां जयाय सर्वदैवतैः शिवसहितैः सर्वदैवतैर्दत्तम् अतस्तत्र तिष्ठतीत्यर्थः तदुक्तं पाद्मे 'चापं शंभोर्दयादत्तम्' इति । कौर्मेऽपि 'प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥' इति । सुनाभं शोभनमुष्टिबन्धस्थानम् ॥ १२ ॥

रा० टी०—ननु तद्धनुः कथं प्राप्तमित्यत आह—तदिति । हे नरशार्दूल ! सुनाभं रमणीयमुष्टिबन्धनस्थानकमिदमेव यज्ञफलमिति मैथिलेन मिथिलाधिपतिना याचितमुत्तमं श्रेष्ठं तत्प्रसिद्धं धनुः सर्वदैवतैः सर्वदेवदेवैः शिवेन दत्तमिति शेषः । च-

१ तस्येति गो. पाठः । २ तदिति रा. पाठः । ३ धनुरत्नमिति गो. पाठः । ४ तदिति गो. पाठः । ५ त्विति गो. पाठः । ६ चाद्भुतदर्शनमिति गो. रा. पाठः । ७ चेतीति रा. पाठः ।

आयागभूतं नृपतेस्तस्य वेश्मनि राघव[1] । अर्चितं विविधैर्गन्धैर्[2]धूपैश्चागुरुगन्धिभिः ॥ १३ ॥
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा । सर्षिसंघः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४ ॥
स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् । उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५ ॥
इत्युक्त्वा[3] मुनिशार्दूलः कौशिकः स तपोधनः । उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥
तं व्रजन्तं[4] मुनिवरमन्वगादन्[5]नुसारिणाम्[6] । शकटीशतमात्रं तु[7] प्रयाणे[8] ब्रह्मवादिनाम् ॥ १७ ॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः । अनुजग्मुर्महात्मानो[9] विश्वामित्रं तपोधनम्[10] ॥ १८ ॥
निवर्तयामास ततः सर्षिसंघः[11] स पक्षिणः । ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ॥ १९ ॥

शब्द इदमित्यर्थे हिशब्द एवार्थे अत एव 'चापं शंभोर्दयादत्तम्' इति पाद्मवचनं 'प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः' इति कौर्मवचनं च संगच्छते ॥ १२ ॥

गो० टी०—मखे किमर्थं दत्तं तत्राह—तद्धीति । सुनाभं शोभनमुष्टिबन्धनस्थानं दैवतैः दैवतेभ्यः याचितं दत्तं चेत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—आयागभूतं यजनीयदेवताभूतमित्यर्थः । वेश्मनीत्यस्य तिष्ठतीति शेषः । अतएवाह—अर्चितमित्यादि । 'न्यासभूतं नरपतेः' इति क्वचित्पाठः तत्रापि न्यस्यतेऽस्मिन्देवतेति व्युत्पत्त्या स एवार्थः देवतान्यासश्च यागार्थ एव प्रतिमादौ ॥ १३ ॥

रा० टी०—आयागेति । हे राघव! तस्य प्रसिद्धस्य नृपतेर्जनकस्य वेश्मनि विविधैः अनेकप्रकारैः गन्धैश्चन्दनैः माल्यैः पुष्पैः अगरुगन्धिभिश्च अर्चितं पूजितमायागभूतमासमन्तात् यागो यजनं यत्र तत्र भूतं प्राप्तं धनुरस्तीति शेषः ॥ १३ ॥

गो० टी०—आयागेति । आयागभूतं धनुरुत्सवे प्राधान्येनार्चितं धनुरायाग उच्यते अत्र विश्वामित्रेणैवानुक्तिः सर्वसंमतत्वद्योतनाय ॥ १३ ॥

१४ ] ति० टी०—एवमुक्त्वेति । महर्षिगणद्वारेति शेषः मुनिवरो विश्वामित्रः वनदेवता वनदुर्गाद्याः ॥ १४ ॥

रा० टी०—एवमिति । सर्षिसंघः ऋषिसंघसहितः सकाकुत्स्थः काकुत्स्थो रामस्तत्सहितः मुनिवरो विश्वामित्रः एवमनेन प्रकारेणोक्त्वा तदैव वनदेवता आमन्त्र्य च प्रस्थानमकरोत् विनापि चं समुच्चयः सर्वं वाक्यं सावधारणं भवतीति न्यायेनैवकारलाभः ॥ १४ ॥

गो० टी०—एवमिति । पूर्वं विश्वामित्रं पुरस्कृत्येत्युक्त्या प्राधान्यात् विश्वामित्र उक्तवानित्यनूद्यते ॥ १४ ॥

१५-१६ ] ति० टी०—सिद्धः निर्विघ्नयज्ञसिद्ध्येति भावः क्वगमिष्यसीत्यत्राह—उत्तर इति ॥ १५ ॥ १६ ॥

रा० टी०—आमन्त्रणप्रकारं वदन्नाह—स्वस्तीति । सिद्धः साधितयागादिक्रियोऽहमुत्तरे जाह्नवीतीरे भियमानं शिलोच्चयं हिमवन्तं सिद्धाश्रमाद्गमिष्यामि वो युष्मभ्यं स्वस्त्यस्तु ॥ १५ ॥

गो० टी०—स्वस्तीति । जाह्नवीतीरे स्थितं हिमवन्तं गमिष्यामीत्यन्वयः । शिलोच्चयं पर्वतं सिद्धाश्रमाद्धिमवद्गमनं मिथिलामार्गेणेति ज्ञेयम् ॥ १५ ॥

रा० टी०—प्रदक्षिणमिति । ततः वनदेवतामन्त्रणानन्तरमनुत्तमं परमोत्कृष्टं सिद्धाश्रमं प्रदक्षिणं कृत्वा उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥

गो० टी०—प्रदक्षिणमिति । ततः वनदेवतामन्त्रणानन्तरम् ॥ १६ ॥

१७-१८ ] ति० टी०—अनुसारिणामुक्तदिगनुसारिणां पश्चाद्गामिनामिति वा शकटीशतमात्रं शतपरिच्छिन्नशकट्यारोपिताग्निहोत्रसंभारादिमद्ब्रह्मवादिनां यूथमन्वगादिति संबन्धः ॥ १७ ॥ १८ ॥

रा० टी०—तमिति । व्रजन्तं तं प्रसिद्धं मुनिवरमनुसारिणां ब्रह्मवादिनां प्रयाणे एव शकटीशतमात्रं शकटीशतेन शतसंख्याकशकटीभिः मीयते परिच्छिद्यते तत् यागोपस्करणं यागसामग्रीपूरितशकटीशतमित्यर्थः अन्वयात् अन्वगच्छत् चशब्द एवार्थे ॥ १७ ॥

गो० टी०—तमिति । अनुसारिणमुत्तरदिगनुसारिणं तं प्रायेण बाहुल्येन ब्रह्मवादिनां शकटीशतमात्रं शकट्यः शकटानि तेषां शतमात्रं शतप्रमाणं अन्वयात् अन्वगात् यद्वा शतमात्रमन्वयात् इतरत्सर्वं सिद्धाश्रम एव स्थितमित्यर्थः अत्र शकटीशब्देन शकट्यारोपिताग्निहोत्रसंभारादिकमुच्यते ॥ १७ ॥

रा० टी०—मृगेति । सिद्धाश्रमनिवासिनो मृगपक्षिगणा अपि महात्मानं पूज्यस्वरूपं महामुनिं विश्वामित्रमेवानुजग्मुः चकारोऽप्यर्थकः ॥ १८ ॥

गो० टी०—मृगेति । तद्भक्त्येति भावः ॥ १८ ॥

१९ ] ति० टी०—पक्षिणो निवर्तयामासेत्यनेन ऋषीणामनिवर्तनमुक्तम् तदेवाह—ते गत्वेति ॥ १९ ॥

रा० टी०—निवर्तयामासेति । ततः मृगाद्यनुगमनानन्तरं बहून् पक्षिसंघान् अपिशब्देन मृगसंघान् बहून्निवर्तयामास ॥ १९ ॥

१ राघवः इति रा. पाठः । २ माल्यैरिति गो. रा. पाठः । ३ प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तममिति गो. रा. पाठः । ४ प्रयान्तमिति गो. पाठः । ५ अन्वयादिति गो. रा. पाठः । ६ सारिणमिति गो. पाठः । ७ चेति गो. रा. पाठः । ८ प्रायेणेति गो. पाठः । ९ महात्मानमिति गो. रा. पाठः । १० महामुनिमिति गो रा. पाठः । ११ पक्षिसंघान्मृगानपीतिगो. पक्षिसंघान्बहूनपीति रा. पाठः ।

वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः । तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ॥ २० ॥
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः । रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ॥२१॥
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः । अथ रामो महातेजा विश्वामित्रं तपोधनम् ॥ २२ ॥
पप्रच्छ मुनिशार्दूलं कौतूहलसमन्वितम् । भगवन्को न्वयं देशः समृद्धवनशोभितः ॥ २३ ॥
श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः । नोदितो रामवाक्येन कथयामास सुव्रतः ॥
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

ब्रह्मयोनेः कुशस्य चतुःसुतमध्ये कुशनाभाद्घृताच्यां कन्याशतोत्पत्तिवर्णनम्, ताभिः सह ' अहं वः कामये ' इत्यादिर्वायोः संवादः, स्वयंवरकरणे तासामनौत्सुक्याद्वायोः प्रभावात्तासां कुब्जात्वम्, स्वसद्मनि पितृसमीपे आगमनं च ।

ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः । अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥

---

रा० टी०—ते इति । समागता मुनिवरा दूरमध्वानं गत्वा दिवाकरे लम्बमाने अस्तं प्राप्ते सति शोणकूले वासं चक्रुः ॥२०॥

गो० टी०—निवर्तयामासेत्यर्थम् । अत्र पक्ष्यादिनिवर्तनेन मुनीनां गमनं द्योतितम् ॥ १९ ॥

गो० टी०—त इति । शोणः पुंनदः स एव शोणेत्यपि व्यपदिश्यते ॥ २० ॥

२०-२२ ] ति० टी०—शोणनदस्यैव ' शोणा ' इत्यपि नामेत्याहुः वस्तुतः ' शोणा ' इति गिरिव्रजसमीपस्थो नदीविशेष इत्येतदुत्तरसर्गे स्पष्टम् अस्तं गते अस्तं जिगमिषतीत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥

रा० टी०—तदेव विशदयन्नाह—ते इति । हुतहुताशना अमितौजसस्ते मुनयः दिनकरे सूर्येऽस्तं गते सति विश्वामित्रं पुरस्कृत्य निषेदुः॥ २१ ॥

गो० टी०—त इति । शोणे स्नात्वा दिनकरेऽस्तं गते सति हुतहुताशना इत्यन्वयः ॥ २१ ॥

रा० टी०—राम इति । अथ मुनिनिषादानन्तरं सहसौमित्रिः सौमित्रिसहितः रामोऽपि तान्समागतान्मुनीनभिपूज्य चकारेण प्रणामादिकं विधाय धीमतो विश्वामित्रस्याग्रतो निषसाद २२॥

गो० टी०—राम इति । अभिपूज्य अभिवाद्य ॥ २२ ॥

रा० टी०—अथेति । अथ सर्वनिषादानन्तरं महातेजाः नरशार्दूलो रामः कौतूहलसमन्वितः सन् महामुनिं विश्वामित्रं पप्रच्छ

गो० टी०—अथेति । स्पष्टम् ॥ २३ ॥

२३ ] ति० टी०—अयं देशः शोणाकूलस्थः ॥ २३ ॥

रा० टी०—प्रश्नमेवाह—भगवन्निति । हे भगवन् सकलसामर्थ्यविशिष्ट समृद्धवनशोभितः अयं देशः कस्य इति अहं श्रोतुमिच्छामि अतस्त्वं तत्त्वतो वक्तुमर्हसि ते तुभ्यं भद्रमस्तु ॥ २४ ॥

गो० टी०—भगवन्निति । अयं शोणकूलस्थः ॥ २४ ॥

२४ ] ति० टी०—निखिलम् वैभवमिति शेषः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्ड एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०—चोदित इति । रामवाक्येन चोदितः प्रेरितः सुव्रतः महातपाः विश्वामित्रः तस्य देशस्य निखिलं संपूर्णं वृत्तान्तमृषिमध्ये कथयामास ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०—चोदित इति । निखिलं वृत्तान्तमित्यर्थः ॥२६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

१ ] ति० टी०—शोणाकूलदेशवैभवप्रश्ने मद्वंश्यानामयं देश इत्युत्तरमाह—ब्रह्मयोनिरिति । ब्रह्मपुत्र इत्यर्थः अक्लिष्टव्रतश्चासौ धर्मज्ञश्चेति विग्रहः ॥ १ ॥

रा० टी०—विश्वामित्रकथनमेवाह—ब्रह्मयोनिरिति । ब्रह्मा हिरण्यगर्भः योनिः उत्पत्तिकारणं यस्य सः ब्रह्मपुत्र इत्यर्थः । अत एव महायशाः उत्तमयशोविशिष्टः अक्लिष्टव्रतधर्मज्ञः अक्लिष्टं बाधारहितं व्रतं संकल्पो यस्य स सत्यसंकल्प इत्यर्थः धर्मं जानाति धर्मज्ञः स एव स इति कर्मधारयः अत एव सज्जनप्रतिपूजकः महात्मप्रतिपूजनस्य कर्ता अत एव महान्सर्वश्रेष्ठः कुशो नामासीत् ॥ १ ॥

गो० टी०—एवं शोणकूलदेशवैभवे पृष्टे अयं मद्वंश्यानां देश इति विवक्षन् स्वान्वयं प्रदर्शयति द्वात्रिंशे—ब्रह्मयोनिरित्यादि । ब्रह्मा योनिः कारणं यस्य सः ब्रह्मयोनिः अयोनिजो ब्रह्मपुत्रः महान् ज्ञानशौर्यादिभिरितरब्रह्मपुत्रविलक्षणः कौ भूमौ

---

१ वरा इति गो. रा. पाठः । २ शोणकूले इति रा. पाठः । ३ समागता इति गो. रा. पाठः । ४ ह्रीति गो. रा. पाठः । ५ महामुनिमिति गो. रा. पाठः । ६ नरशार्दूल इति गो. रा. पाठः । ७ समन्वित इति गो. रा. पाठः । ८ कस्य देशोयऽमिति गो. रा. पाठः । ९ चोदित गो. रा. पाठः । १० महायशा इति रा. पाठः ।

स महात्मा कुलीनायां युक्तायां सुमहाबलान्[1] । वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान् ॥ २ ॥
कुशाम्बं कुशनाभं च असूर्तरजसं[2] वसुम् । दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥ ३ ॥
तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः । क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ ४ ॥
कुशस्य[3] वचनं श्रुत्वा चत्वारो लोकसत्तमाः[4] । निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम् । कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६ ॥
असूर्तरजसो[5] नाम धर्मारण्यं महामतिः[6] । चक्रे पुरवरं राज्ञा वसुर्नाम[7] गिरिव्रजम् ॥ ७ ॥
एषा वसुमती नाम वसोस्तस्य महात्मनः । एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥
सुमागधी नदी रम्या मागधान्विश्रुता[8] ययौ । पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥
सैषा हि मागधी राम[9] वसोस्तस्य महात्मनः । पूर्वाभिचरिता राम[10] सुक्षेत्रा सस्यमालिनी ॥ १० ॥

---

श्रेत इति कुशः नारदादिवत् ब्रह्मलोकेऽनवस्थाय प्रजापालने दत्तादरतया भूमाववस्थानात् कुश इत्यस्य नाम अत एव क्षत्रियव्यापारात् क्षत्रियोऽयम् अक्लिष्टं निर्बाधं व्रतं यस्य सोऽक्लिष्टव्रतः अक्लिष्टव्रतश्चासौ धर्मज्ञश्चेति कर्मधारयः ॥ १ ॥

२] ति० टी०—युक्तायाम् अशेषस्त्रीगुणयुक्तायामित्यर्थः॥२॥

रा० टी०—स इति । महात्मा स कुशनामा कुलीनायामुत्कृष्टकुलविशिष्टायां युक्तायामात्मसदृशायां वैदर्भ्यां सुमहाबलान् अत्यन्तबलविशिष्टान् कुशाम्बं कुशनाभं च अमूर्तिरजसं च वसुं च चतुरः सदृशान्सुतान् जनयामास एक एव चः स्वहीनयोरप्यन्वेति ॥ २ ॥

गो० टी०—स इति । सार्धश्लोकः । युक्तायामनुरूपायाम्॥२॥

३ ] ति० टी०—असूर्तरजसं न विद्यते सूर्तं प्रसूतं रजो यस्य तम् अजिति योगविभागादच् क्षत्रधर्मचिकीर्षया तद्धर्मवृद्धिकरणेच्छया ॥ ३ ॥

रा० टी०—दीप्तियुक्तानिति । दीप्तियुक्तानतिप्रकाशविशिष्टान् धर्मिष्ठान् अतिशयधर्मविशिष्टान्सत्यवादिनः सत्यवचनांस्तान् चतुरः पुत्रान् क्षत्रधर्मचिकीर्षया क्षत्रियधर्मप्रवृत्तीच्छया उवाच ॥ ३ ॥

गो०टी—दीप्तीति । क्षत्रधर्मः प्रजापालनम् ॥ ३ ॥

४ ] ति० टी०—पालनं प्रजापालनम् ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—क्रियतामित्यर्धेन । हे पुत्राः पालनं प्रजारक्षणं क्रियतां तेन पुष्कलं संपूर्णं धर्मं प्राप्स्यथ तदा तस्मिन् काले लोकसंमताः नृवराः नरश्रेष्ठाः सर्वे ते चत्वारः पुत्राः पितुर्वचनं श्रुत्वा पुराणां निवेशं निर्माणं चक्रिरे॥४॥

गो० टी०—क्रियतामिति । सार्धश्लोकः । पुष्कलं समग्रं ऋषेः कुशस्य निवेशं संनिवेशम् ॥ ४ ॥

५ ] ति० टी०—निवेशं संनिवेशम् ॥ ५ ॥

६-७ ] ति० टी०—महोदयं महोदयनामकम् ॥ ६ ॥ ७ ॥

रा० टी०—तत्प्रकारमाह—कुशाम्ब इति । महातेजाः कुशाम्बस्तु कौशाम्बीं पुरीमकरोत् धर्मात्मा कुशनाभस्तु महोदयं नाम पुरं चक्रे ॥ ५ ॥

रा० टी०—अमूर्तिरजस इति । हे राम ! महीपतिः अमूर्तिरजसः धर्मारण्यं पुरवरं चक्रे राजा वसुः गिरिव्रजं पुरवरं चक्रे पुरवरमित्युभयान्वयि ॥ ६ ॥

गो० टी०—कुशाम्ब इत्यादिश्लोकद्वयम् ॥ ५ ॥ ६ ॥

८ ] ति० टी०—एषा गिरिव्रजापरपर्याया ॥ ८ ॥

रा० टी०—एषेति । हे राम ! महात्मनः तस्य वसोः एषा वसुमती पृथ्वी समन्ततः एते पञ्च शैलवराश्च प्रकाशन्ते। विनापि चं समुच्चयः ॥ ७ ॥

गो० टी०—एषेति । एषा शोणकूलस्था शैलवराः गिरिव्रजसंज्ञामूलाः ॥ ७ ॥

९ ] ति० टी०—सुमागधी तत्संज्ञा आययाविति पदच्छेदः ॥ ९ ॥

रा० टी०—सुमागधीति । पञ्चानां शैलमुख्यानां मध्ये माला इव या शोभते सा विश्रुता प्रसिद्धा रम्या रमणीया सुमागधी नदी मगधान् ययौ येति सेति चाध्याहृतम् ॥ ८ ॥

गो० टी०—सुमागधीति । मगधदेशादागता मागधीति शोण एवोच्यते आययावितिच्छेदः ॥ ८ ॥

१० ] ति० टी०-सा मागधी मगधादागततया मागधीत्वेन प्रसिद्धा सैषा शोणा तस्य मद्वंश्यस्य वसोर्भवति पूर्वाभिचरिता पूर्वदिग्गामिनी सुक्षेत्रा पार्श्वद्वयेऽपीति शेषः॥१०॥

रा० टी०—सेति । हे वीर ! पूर्वाभिचरिता पूर्वदिग्वाहिनी सुक्षेत्रा शोभनानि क्षेत्राणि उभयकूलवर्तीनि यस्या अत एव सस्यमालिनी सस्याभिन्नमालास्ति अस्या “ व्रीह्यादिभ्यश्च ” इतीनिः एषा मागधीनाम नदी अपि महात्मनस्तस्य वसोः सम्बन्धिनी हिशब्दोऽप्यर्थे ॥ ९ ॥

गो० टी०—सैषेति । पूर्वाभिचरिता पूर्वदेशात् प्रत्यङ्मुखवाहिनी सुक्षेत्रा उभयपार्श्वत इति शेषः ॥ ९ ॥

---

१ गुणोल्बणानिति गो. पाठः । २ अमूर्तिरजसमिति रा. आधूर्तरजसमिति गो. पाठः । ३ पितुस्ते इति रा. ऋषेस्तु इति गो. पाठः । ४ लोकसंमता इति गो. रा. पाठः । ५ अमूर्तीति रा. आधूर्तेति गो. पाठः । ६ महीपतिरिति गो. रा. पाठः । ७ चक्रे इति गो. रा. पाठः । ८ मगधानिति गो. रा. पाठः । ९ नामेति रा. पाठः । १० वीरेति रा. पाठः

कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् । जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११ ॥
तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः । उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव । आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥
अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि । उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १४ ॥
ताः सर्वा[1] गुणसंपन्ना[2] रूपयौवनसंयुताः । दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १५ ॥
अहं वः कामये सर्वा भार्या मम भविष्यथ । मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १६ ॥
चलं हि यौवनं नित्यं मानुषेषु विशेषतः । अक्षयं[3] यौवनं प्राप्ता अमर्यश्च[4] भविष्यथ ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः । अपहास्य[5] ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १८ ॥
अन्तश्चरसि भूतानां सर्वेषां सुरसत्तम[6] । प्रभावज्ञाश्च[7] ते सर्वाः किमर्थमवमन्यसे[8] ॥ १९ ॥

---

११ ] ति० टी०—घृताच्यां तन्नामिकाप्सरःसु ॥ ११ ॥

रा० टी०—कुशनाभ इति । हे रघुनन्दन ! धर्मात्मा धर्मस्वभावः राजर्षिः कुशनाभस्तु अनुत्तमं सर्वश्रेष्ठं कन्याशतं शतसंख्याककन्याः घृताच्यामप्सरस्सु जनयामास ॥ १० ॥

गो० टी०—कुशनाभ इत्यादि । घृतवत्पुरुषं दृष्ट्वा द्रवती सत्यञ्चतीति घृताची कुशनाभभार्या घृतवत्पुरुषं कृत्वाञ्चतीति वा अप्सरसः ॥ १० ॥

१२ ] ति० टी०—ताः शतं कन्याः ॥ १२ ॥

रा० टी०—ता इति । यौवनशालिन्यः प्राप्तयौवनावस्था अत एव रूपवत्यः प्रशस्तरूपविशिष्टाः स्वलङ्कृताः शोभनकुङ्कुमकस्तूर्यादिभिः प्राप्तालङ्काराः उद्यानभूमिमागम्य प्रावृषि ऋतौ शतह्रदा इव शतह्रदसदृश्यः वराभरणभूषिताः वराभरणैः नूपुरादिभिः भूषिताः शतं कन्याः गायन्त्यः नृत्यमानाश्च वादयन्त्यश्च सत्यः परमामोदं जग्मुः श्लोकद्वयमेकान्वयि तुहेतौ ॥ ११ ॥ १२ ॥

गो० टी०—तास्त्विति श्लोकद्वयम् । उद्यानभूमिमागम्य शतह्रदा इव स्थिताः शतह्रदाः विद्युतः नृत्यमानाः नृत्यन्त्यः वादयन्त्यः वीणा इति शेषः आमोदं संतोषं स्वलंकृताः कुसुमचन्दनतिलकादिभिः ॥ ११ ॥ १२ ॥

१३–१५ ] ति० टी०—आमोदं संतोषम् ॥१३॥ घनान्तरे मेघमध्ये तारा इव रेजुरिति शेषः ॥ १४ ॥ १५ ॥

रा० टी०—अथेति । चारुसर्वाङ्ग्यः भुवि रूपेण अप्रतिमाः न प्रतिमाः प्रतिनिधयो यासामनुपमरूपविशिष्टा इत्यर्थः। अथ मङ्गलदर्शनाः ताः शतकन्याः उद्यानभूमिमागम्य घनान्तरे तारा इव शुशुभिरे इति शेषः ॥ १३ ॥

गो० टी०—अथेति । तारा इव बभुरिति शेषः ॥ १३ ॥

रा० टी०—ता इति । सर्वगुणसंपन्नाः रूपयौवनसंयुताः ताः शतं कन्याः सर्वात्मको वायुर्दृष्ट्वा इदं वचनमब्रवीत् ॥१४॥

गो० टी०—ता इति । सर्वगुणसंपन्नाः सर्वालंकारसंपन्नाः सर्वत्र आत्मा स्वरूपं यस्य सः सर्वात्मकः सर्वत्र संचारीत्यर्थः१४

१६ ] ति० टी०—मत्कामनापूरणे मम देवस्य मानुष्योऽपि भार्या भविष्यथेत्यादिर्वशीकरणायार्थवादः ननु मानुषीणां देवसंबन्धोऽनुचितस्तत्राह—मानुषस्त्यज्यतां भाव इति मदङ्गीकारमात्रेण विलक्षणशक्त्याविर्भावान्मानुषभावत्यागे स्वत एव भवतीनां सामर्थ्यं भविष्यति तत्फलमाह—दीर्घमिति ॥१६॥

रा० टी०—तद्वचनमेवाह—अहमिति । वः युष्मान्सर्वा अहं कामये अतो मम भार्या यूयं भविष्यथ अतः मानुषः मनुष्यविषयको भावोऽनुरागः त्यज्यतामत एव दीर्घमायुर्यूयमवाप्स्यथ । मम भार्या भविष्यथेत्यनेन मम कामनावैफल्यं न भवतीति हेतुर्ध्वनितः । मानुषशब्दोऽर्शआद्यजन्तः "तस्येदम्" इत्यणन्तो वा ॥ १५ ॥

गो० टी०—अहमिति । वः भवतीः मानुषे भवो मानुषः भावः अनुरागः त्यज्यतां तथा सति दीर्घमायुरवाप्स्यथ ॥ १५ ॥

१७ ] ति० टी०—मानुषेषु हि यतो विशेषेण नित्यमनुक्षणं यौवनं चलं चञ्चलं क्षीयमाणमिति यावत् अतो मत्संबन्धेनाक्षयं यौवनमित्याद्यन्वयः ॥ १७ ॥

रा० टी०—मत्स्वीकारोऽवश्यं भवतीभिः कर्तव्य इति बोधयन्नाह—चलमिति । मानुषेषु यौवनं विशेषतो नित्यं चलं हि यदि यूयममरीः अमरीत्वं भविष्यथ प्राप्स्यथ तर्हि अक्षयं क्षयरहितं यौवनं प्राप्ता भविष्यथ अमरीशब्दो भावप्रधानः अमर्य इति पाठे तु भावप्रधाननिर्देशकल्पना नेति बोध्यम् ॥ १६ ॥

गो० टी०—चलमिति । नित्यं सर्वदा अक्षय्यमिति मद्भार्यात्व इति शेषः ॥ १६ ॥

१८ ] ति० टी०—अपहास्य हासपूर्वकमपमान्य ॥ १८ ॥

रा० टी०—तस्येति । अथ वायुवचनकथनानन्तरमक्लिष्टकर्मणः अबाधितक्रियस्य ततः मोहकवचनविस्तारकर्तुः तस्य प्रसिद्धस्य वायोः तन्मोहकं वचनं श्रुत्वा अपहस्य संस्मित्य कन्याशतं वाक्यमब्रवीत् ॥ १७ ॥

गो० टी०—तस्येति । अक्लिष्टकर्मणः अप्रतिहतकर्मणः ततः तद्वाक्यश्रवणेन अपहास्य अथाब्रवीत् ॥ १७ ॥

१९ ] ति० टी०—अन्तश्चरसीति पूर्वार्धेन स्वभावज्ञता

---

१ च सर्वश इति गो. पाठः । २ सर्वगुणसंपन्ना इति गो. रा. पाठः । ३ अक्षय्यमिति गो. पाठः । ४ अमरीरिति रा. पाठः । ५ अपहस्येति रा. पाठः । ६ त्वं सुरोत्तमेति गो. रा. पाठः । ७ स्मेति गो. पाठः । ८ किमस्मानवमन्यसे इति गो. रा. पाठः ।

कुशनाभसुता देवं समस्ताः सुरसत्तम । स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ २० ॥
मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् । अव[2]मन्य स्वधर्मेण स्वयंवरमुपास्महे ॥ २१ ॥
पिता हि प्रभुरस्माकं दैवतं परमं च[3] सः । यस्य नो दास्यति पिता स नो भर्ता भविष्यति । २२ ।
तासां तु[4] वचनं श्रुत्वा ह[5]रिः परमकोपनः । प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २३ ॥
[ [6]अरत्निमात्राकृतयो भग्नगात्रा भयार्दिताः ]
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् । [7]प्रविश्य च सुसंभ्रान्ताः सलज्जाः सा[8]स्रलोचनाः ॥

वायोः सूचिता ननु युष्मत्प्रभावापेक्षया मत्प्रभावोऽधिक इति चेत्तत्राह—प्रभावज्ञाश्च ते सर्वाः तथा श्रमं माकार्षीरिति भावः तस्मादेवमनुचितप्रार्थनयास्मदवमाननमनुचितमित्याह—किमर्थमित्यादि ॥ १९ ॥

रा० टी०—तद्वाक्यमेवाह—अन्तरिति । हे सुरोत्तम वायो! सर्वेषां भूतानामन्तर्मध्ये त्वं चरसि एतेन यः सर्वान्तश्चारी स सर्वान्तर्ज्ञातापीति सूचितम् तेनास्मदन्तर्ज्ञातृत्वमपि त्वय्यप्यस्तीति ध्वनितम् तेन एतासां मय्यनुरागो नास्तीति मदनुचितोक्तिं न करिष्यन्तीति ज्ञात्वाप्यनुचिताज्ञापनं तव नोचितमिति व्यञ्जितम् अतः ते तव प्रभावज्ञाः सर्वा अस्मान् किमवन्यसे किमर्थमवमानयसि अवमन्यसे इत्यत्र अन्तर्भावितणिजर्थः ॥ १८ ॥

गो० टी०—अन्तरिति । अन्तश्चरसि प्राणरूपेण भूतानां प्राणिनां प्रभावज्ञाः एवंविधप्रभावज्ञाः अस्मान् ज्ञातभवत्प्रभावान् ॥ १८ ॥

२० ] ति० टी०—स्वप्रभावं दर्शयन्ति—कुशनाभेत्यादि । स्थानाद्वायुपदात् देवमपि त्वां च्यावयितुं समर्था इति शेषः रक्षामस्त्विति शापेन तथाकरणे हि तत्क्षयः स्यादिति भावः२०

रा० टी०—ननु ज्ञातप्रभावान्मत्तः कुतो न बिभिथेत्यत आहुः—कुशनाभेति । हे सुरोत्तम ! सधर्माः धर्मसहिताः सर्वाः कुशनाभसुताः वयं देवं भवन्तं स्थानात् प्राप्ताधिकारात् च्यावयितुं पातयितुं समर्थाः स्मः ननु अनुचितवचनं श्रुत्वा कुतो न मां पातयथ इत्यत आहुः वयं तपः स्वार्जितधर्ममेव रक्षामः शापेन स्थानात् च्यावने तपो विनष्टं स्यादिति शापो न दीयत इति भावः तुशब्द एवार्थे समर्था इत्यध्याहृतम् सुता देव समस्ताः सुरसत्तम इत्यपि पाठः क्वचित् ॥ १९ ॥

गो० टी०—कुशेति। स्थानात् अधिकारात् देवंभवन्तम्॥१९॥

२१ ] ति० टी०—हे दुर्मेधः दुर्बुद्धे ! यत्र काले पितरमवमन्यापमानविषयं कृत्वा स्वधर्मेण कामेन स्वयंवरमुपास्महे आत्मना स्वातन्त्र्येण वयं वरमङ्गीकुर्मः स कालः कदाचिदपि मा भूदित्यन्वयः नावमन्य इति पाठस्तु क्वाचित्कोऽपपाठः । तथा पाठे नः इतिच्छेदः छान्दसं दीर्घत्वम् । नोऽस्माकं स कालो मा भूदित्यन्वयः । क्वचित्तु नोऽवमन्यस्व इति पाठः । अत एव ‘ मा भूत्स कालो यद्वा नो पितरं सत्यवादिनम् । कामतः समतिक्रम्य वरयेम स्वयंवरम् ॥ ’ इत्येतदर्थविवरणश्लोको दृश्यते क्वचित् ॥ २१ ॥

रा० टी०—मेति । हे दुर्मेधः दुष्टबुद्धिकारक ! यस्मिन्काले सत्यवादिनं पितरमवमन्यानादृत्य स्वधर्मेण शोभनो अतिशयितो योऽधर्मः पितरि सति स्वातन्त्र्याचरणं तेन वरं स्वयमुपास्महे स्वीकुर्मः सकालो मा भूत् नावमन्यस्वेति पाठे तु यं सत्यवादिनमत एव वरं सर्वश्रेष्ठं पितरं स्वधर्मेण वयमुपास्महे सेवामहे तं पितरं स्वयं त्वं नावमन्यस्व यतः स पिता कालः शापादिना त्वद्विघातको मा भूत् एतेन नावमन्यस्वेति पाठोऽपपाठ इति भट्टोक्तिश्चिन्त्या ॥ २० ॥

गो० टी०—मा भूदिति । सः नः पिता ते कालः मृत्युः माभूत् ये दुर्मेधः दुर्बुद्धे ! पितरं नावमन्यस्व धर्मेण पितृप्रदानरूपेण वरं स्वयमुपास्महे प्रतीक्षामहे पिता स्वयं यस्मै दास्यति तं प्रतीक्षामह इत्यर्थः ॥ २० ॥

२२ ] ति० टी०—तत्र बीजमाह—पिता हीति ॥ २२ ॥

रा० टी०—पिता नावमन्तव्य इत्यत्र हेतुं वदन्त्य आहुः—पितेति । अस्माकं प्रभुः नियन्ता परमं दैवतं देवता च सः प्रसिद्धः पितैव अतो नः पिता नोऽस्मान् यस्य यस्मै दास्यति स नोऽस्माकं भर्ता भविष्यति हिशब्द एवार्थे यस्येति संबन्धसमान्ये षष्ठी ॥ २१ ॥

गो० टी०—उक्तं विवृणोति—पितेति ॥ २१ ॥

२३ ] ति० टी०—हारिर्वायुः । क्वचित्तु वायुः इत्येव पाठः॥

रा० टी०—तासामिति । तासां कन्यानां तत्स्वास्वीकारबोधकं वचनं श्रुत्वा परमकोपनो भगवान् माहात्म्यविशिष्टः प्रभुः समर्थो हरिः सर्वव्यापको वायुः प्रविश्य तच्छरीरान्तः प्राप्य सर्वगात्राणि बभञ्ज ‘भगं श्रीकाममाहात्म्य—’ इति कोशः क्वचिद्वायुरिति पाठः तत्रान्ते हरिरिति ॥ २२ ॥

गो० टी०—तासामिति । बभञ्ज कुब्जीचकार ॥ २२ ॥

२४ ] ति० टी०—सलज्जा अन्याय्यपतिप्रसङ्गतः सलज्जाः ।

रा० टी०—ता इति । वायुना भग्ना अत एव संभ्रान्ताः उद्विग्नाः सलज्जाः लज्जासहिताः साश्रुलोचनाः अश्रुयुक्तलोचनविशिष्टास्ताः कन्याः नृपतेर्गृहं विविशुः भुवि प्रापतंश्च विनापि चं समुच्चयः ॥ २३ ॥

१ सर्वाः सधर्माः स्म सुरोत्तमेति रा. सर्वाः समर्थास्त्वां सुरोत्तमेति गो. पाठः । २ नावमन्येति गो. पाठः । ३ हि न इति गो. रा. पाठः । ४ तदिति गो. रा. पाठः । ५ वायुरिति गो. पाठः । ६ इत्यर्धमधिकं गो. पुस्तके । ७ प्रापतन्भुविसंभ्रान्ता इति गो. रा. पाठः । ८ साश्रु इति गो. रा. पाठः ।

स च ता दयिता भग्नाः कन्याः परमशोभनाः । दृष्ट्वा दीनास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २५ ॥
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते । कुब्जाः केन कृताः सर्वाश्चेष्टन्त्यो नाभिभाषथ ॥
एवं राजा विनिःश्वस्य समाधिं संदधे ततः ॥ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ।

कन्याभिर्वाय्वाचरणकथनम्, कुशनाभस्य मन्त्रिभिः सह कन्याप्रदानविषयको विचारः, तत्काले चूलिनाम्नो महर्षेरागमनम्, गन्धर्व्यूर्मिलातनयासोमदायास्तत्पर्युपासनम्, तत्सेवासंतुष्टचूलिनो वरदान उद्युक्तत्वम्, सोमदायाः पुत्रप्राप्तिः, तत्पुत्रस्य ब्रह्मदत्त इति नामकरणम्, ब्रह्मदत्तस्य काम्पिल्यां निवासः, तस्मै कुशनाभकृतकन्याशतदानम्, तद्दर्शनात्सोमदाया आनन्दवृत्तिकथनं च ।

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः । शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाशत ॥ १ ॥
वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति । अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २ ॥
पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः । पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥

---

गो० टी०—ता इति। सलज्जाः शरीरवैरूप्यादिति भावः॥२३॥

२५ ] ति० टी०—भग्ना भग्नाङ्गाः ॥ २५ ॥

रा० टी०—स इति । तदा कन्याप्रवेशनसमये भग्नाः वायुकृतशरीरकुटिलतां प्राप्ताः अत एव दीनाः परमशोभनाः अतिकान्तिमतीः दर्पिताः प्रियाः ताः कन्याः दृष्ट्वैव संभ्रान्तः उद्विग्नचित्तः स राजा इदमब्रवीत् चशब्द एवार्थे ॥ २४ ॥

गो० टी०—स चेति । संभ्रान्तः पर्याकुलचित्तः ॥ २४ ॥

२६ ] ति० टी०—धर्ममवमन्यते बलात्कारं करोतीति यावत् रोदनादिना चेष्टन्त्यः किं नाभिभाषथेत्यन्वयः । एवं पृष्ट्वेति शेषः समाधिं संदध इति तद्वचःश्रवणैकाग्रचित्तोऽभूदित्यर्थः

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०—तद्वचनमेवाह—किमिति । हे पुत्र्यः धर्मं कोऽवमन्यते तिरोऽकरोत् ननु कोऽपि नावमन्यते इत्यत आह—कुब्जाः केन हेतुना यूयं कृताः चेष्टन्त्यः सर्वा यूयं किं किमर्थं नाभिभाषथ इदं कथ्यताम् को धर्ममवमन्यते इत्यनेन केनचिदिमाः अवश्यमवमानिताः इति चेष्टादिना ज्ञातमिति ध्वनितम् अवमन्यते इत्यत्र वर्तमानसामीप्य इति भूते लट् ॥२५॥

गो० टी०—किमिति । को धर्ममवमन्यते बलात्कारं करोतीत्यर्थः । कुब्जाः वक्रशरीराः ॥ २५ ॥

रा० टी०—एवमिति । राजा एवमनेन प्रकारेण पृष्ट्वा ततः तद्विकलताहेतोः विनिःश्वस्य शोकसूचकोर्ध्वश्वासं प्राप्य समाधिं चित्तैकाग्र्यं संदधे विचारतः कारयामासेत्यर्थः ॥२६॥

इति श्रीमद्रामवाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०—एवमिति। पृष्ट्वेति शेषः। विनिःश्वस्य व्यथित्वा समाधिं किं वक्ष्यन्तीति तद्वचनश्रवणावधानम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

१ ] ति० टी०—तस्येति । चरणौ स्पृष्ट्वा नमस्कृत्य ॥१॥

रा० टी०—तस्येति । धीमतः तस्य कुशनाभस्य तद्वचनं श्रुत्वा शिरोभिश्चरणौ स्पृष्ट्वा पितृपादाभिवन्दनं विधायेत्यर्थः कन्याशतमभाषत ॥ १ ॥

गो० टी०—अथ कुशनाभस्य कन्यावचनं शृण्वतः क्षमाविशेष उच्यते त्रयस्त्रिंशे—तस्येत्यादि । शिरोभिश्चरणौ स्पृष्ट्वा पादयोः प्रणम्येत्यर्थः ॥ १ ॥

२ ] ति० टी०—प्रधर्षयितुमभिभवितुमिच्छति स्म अशुभं बलात्काररूपमवेक्षते स्म ॥ २ ॥

रा० टी०—तद्भाषणमेवाह—वायुरिति । हे राजन् ! सर्वात्मको वायुः अशुभमनुचितत्वेन शुभविघातकं मार्गमास्थाय प्रधर्षयितुमस्मान् अभिभवितुमिच्छति ऐच्छत् धर्मम्स्मदुक्तसन्मार्गं न प्रत्यवेक्षते व्यचारयत उभयत्रापि वर्तमानसामीप्य इति भूते लट् एतेन बलात्कारेण अस्मान् ग्रहीतुमैच्छदिति सूचितम् ॥ २ ॥

गो० टी०—वायुरिति । प्रधर्षयितुमभिभवितुमिच्छति वर्तमानसामीप्याल्लट् अशुभं बलात्काररूपम् ॥ २ ॥

३ ] ति० टी०—पितृमत्यः पित्रधीनाः स्वच्छन्देन पतिस्वीकारविषये स्वातन्त्र्येण स्थिता न वर्तामहे यतः अतो नः, पितरं वृणीष्व त्वं यदि नोऽस्मांस्तुभ्यं स दास्यति तदा तव त्वदीया भविष्यामः ते तव भद्रमस्त्विति योजना ॥ ३ ॥

रा० टी०—स्वोक्तिमेवाहुः—पितृमत्य इति । यतो वयं पितृमत्यः अतः स्वच्छन्दे स्वाधीनत्वे नैव स्थिताः अतः नोऽस्माकं पितरं त्वं वृणीष्व यदि नो अस्मान् पिता दास्यते तदा तव वयं भविष्याम इति शेषः। ते तुभ्यं भद्रमस्तु। स्मशब्द एवार्थे॥

गो० टी०—पितृमत्य इति । पितृमत्यः स्म अतः स्वच्छन्दे स्वातन्त्र्ये किंचित्पतिस्वीकारविषये वयं न स्थिताः अतो नः पितरमेव वृणीष्व स यदि नः अस्मान् तुभ्यं दास्यति तदा तव भविष्यामः ते भद्रमस्तु ॥ ३ ॥

तेन पापानुबन्धेन वचनं न प्रतीच्छता । एवं ब्रुवन्त्यः सर्वाः स्म वायुनाभिहता भृशम् ॥ ४ ॥
तासां तु वचनं श्रुत्वा राजा परमधार्मिकः । प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥
क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम् । ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६ ॥
अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा । दुष्करं तच्च वै क्षान्तं त्रिदशेषु विशेषतः ॥ ७ ॥
यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः । क्षमा दानं क्षमा सत्यं क्षमा यज्ञाश्च पुत्रिकाः॥ ८ ॥
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् । विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः॥ ९ ॥

४-५ ] ति० टी०—एवं ब्रुवन्तीनां नो वचनं न प्रतीच्छता-नङ्गीकुर्वता पापानुबन्धेनाधर्मबद्धचित्तेनैवं धर्मं ब्रुवन्त्यः सर्वा वायुनाभिहताः स्मेति योजना ॥ ४ ॥ ५ ॥

रा० टी०—तेनेति । पापानुबन्धेन पापमतिना अत एव वचनं अस्माकमुक्तीः न प्रतीच्छता अस्मदुक्तिविचारहीनेनेत्यर्थः वायुना एवमेव ब्रुवत्यः सर्वाः वयं भृशमत्यन्तं निहताः स्मशब्द एवार्थे ॥ ४ ॥

गो० टी०—तेनेति । एवं ब्रुवन्त्यो वयमस्माकं वचनं न प्रतीच्छता अनङ्गीकुर्वता पापानुबन्धेन पापानुसारिणा तेन वायुना निहताः ॥ ४ ॥

रा० टी०—तासामिति । परमधार्मिकः महातेजा राजा तासां कन्यानां वचनं श्रुत्वैवानुत्तममत्युत्कृष्टं कन्याशतं प्रत्युवाच तुशब्द एवार्थे ॥ ५ ॥

गो० टी०—तासामिति । अनुत्तमं क्षमावत्त्वात् ॥ ५ ॥

६ ] ति० टी०—हे पुत्र्यः! क्षमावतां क्षमावद्भिः कर्तुमर्हं यत्क्षान्तं क्षमा तत्सुमहत्कृतं महती क्षमा कृतेति यावत् गात्रभङ्गोत्थक्रोधवेगसहनमतिदुष्करमिति भावः यच्च कुलमवेक्षितं कामवेगसहनं कृतं तदपि सुमहत् ॥ ६ ॥

रा० टी०—तद्वचनमेवाह—क्षान्तमिति । हे पुत्र्यः! क्षमावतां कर्तव्यं क्षान्तं क्षान्तिः ऐकमत्यमुपागम्य प्राप्य भवतीभिर्यत् कृतं तत्सुमहदति प्रशंसनीयं मम कुलं कुलोचितमवेक्षितं विचारितं तच्च महदतिप्रशंसनीयं कामक्रोधयोर्जयो दुष्कर इति भावः ॥ ६ ॥

गो० टी०—क्षान्तमिति । हे पुत्र्यः! क्षमावतां कर्तव्यं कर्तुमर्हम् "कृत्यानां कर्तरि वा" इति षष्ठी क्षान्तं क्षमा भावे निष्ठा कृतमिदं सुमहत्कर्म देवे प्रार्थयमानेऽप्यविकृतचित्तत्वं शरीरं भञ्जयति सति निष्क्रोधत्वं च दुष्करमिति भावः । कुलं चावेक्षितं कुलानुरूपं कृत्यं कृतमित्यर्थः ॥ ६ ॥

७ ] ति० टी०—पुरुषस्य वेति अविशेषेणेति शेषः तत्तु दुष्करं यत्त्रिदशविषये क्षान्तं कामवेगसहनं कृतं तदतिदुष्करं तेषामभिरूपादिकमनीयगुणबाहुल्यात् ॥ ७ ॥

रा० टी०—तदेव विशदयन्नाह—अलमित्यादि सार्धश्लोकद्वयेन । हे पुत्र्यः! नारीणां पुरुषस्य च क्षमैव विशेषतोऽलंकारः। ननु सर्वैः कुतो न क्रियतेऽत आह सर्वासां वो युष्माकमविशेषतो विशेषराहित्येन एकरूपेणेत्यर्थः यादृशी क्षमा तत्तादृशं क्षान्तं क्षमा विशेषतः त्रिदशेषु विशिष्टदेवेष्वपि दुष्करमेव वासनात्यागस्य दुष्करत्वाद्देवविशेषैरपि कर्तुमशक्यमित्यर्थः । हितुशब्दौ एवार्थे वैशब्दोऽप्यर्थे वाश्चार्थे सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०—उक्तमर्थं विवृणोति—अलङ्कार इति अर्धम् । क्षमा अपराधसहिष्णुत्वम् ॥ ७ ॥

८-९ ] ति० टी०—स्वकन्यानां क्षमां श्लाघयंस्तादृशीं क्षमां स्वकुले प्रार्थयते—यादृशीति । भो पुत्र्यः! यादृशी युष्माकं क्षमा तादृश्यस्मत्कुले सर्वासाम् अस्त्विति शेषः अथवा विशेषतः सकलस्त्रीपुरुषाविशेषेणेत्यर्थः क्षमायाः प्रार्थनीयत्वे निमित्तमाह—क्षमेत्यादि । दानसत्यवचनयज्ञसमाधिजसकलधर्मफला क्षमा सकलजगदाधारभूता च क्षमा अतः सोपादेयेत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—क्षमाप्रशंसामाह—क्षमेति । हे पुत्रिकाः! क्षमैव दानं क्षमैव सत्यं क्षमैव यज्ञः क्षमैव यशः क्षमैव धर्मः अतः क्षमायां जगन्निष्ठितं यद्यवच्छेदकावच्छेदेन क्षमा विनश्येत्तर्हि जगदपि विनश्येदिति तात्पर्यम् एतेन क्षमा न त्याज्येति उपदेशः सूचितः राजोक्तिं समाप्य राजवृत्तमाह—विसृज्येति । हे काकुत्स्थ राम! त्रिदशविक्रमः त्रिदशविक्रमसदृशविक्रमविशिष्टः मन्त्रज्ञः राजा कुशनाभः मन्त्रिभिः सह प्रदानं कन्याप्रदानस्य देशकालौ कन्याप्रदानोचितं देशं कालं च सदृशे कन्यादानोचितकुले प्रतिपादनं वरवृत्त्यर्थं ब्राह्मणादिप्रेषणं मन्त्रयामास कन्यावश्यं देयेति सा च यस्मिन्देशे यस्मिन्काले देया तं देशं कालं यस्मिन्कुले देया तत्कुलं वरवृत्त्यर्थं यः प्रेषणीयस्तं च विचारयामासेत्यर्थः। 'देशे काले च कर्तव्यं' इति भट्टसंमतः पाठः ॥ ८ ॥ ९ ॥ १० ॥

गो० टी०—दुष्करमिति । वः तत्क्षान्तं क्षमा दुष्करं त्रिदशेषु रूपैश्वर्यसंपन्नेषु विशेषतो दुष्करं यादृशीति सर्वासामविशेषतः या क्षमा सापि दुष्करेत्यन्वयः । क्षमैव दुष्करा ततस्त्रिदशेषु दुष्करा ततोऽपि सर्वासामविशेषेण क्षमा दुष्करैवेत्यर्थः ॥ ८ ॥

गो० टी०—क्षमां प्रशंसति—क्षमेति । क्षमादानं दानेन

१ ब्रुवत्य इति रा. पाठः । २ निहता इति गो. रा. पाठः । ३ तदिति गो. पाठः । ४ तद्धि व इति गो. पाठः । ५ यशश्चेति गो. रा. पाठः। ६ क्षमयेति गो. पाठः । ७ निष्ठितमिति रा. पाठः ।

मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः । देशे[1] काले च कर्तव्यं सदृशे प्रतिपादनम् ॥ १० ॥
एतस्मिन्नेव काले तु चूली नाम महाद्युतिः[2] । ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११ ॥
तपस्यन्तं[3] ऋषिं तत्र गन्धर्वी पर्युपासते । सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२ ॥
सा च तं प्रणता भूत्वा शुश्रूषणपरायणा । उवास काले धर्मिष्ठा[4] तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥
स च तां कालयोगेन प्रोवाच रघुनन्दन । परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४ ॥
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरम्[5] । उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५ ॥
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः । ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम्॥ १६ ॥

---

यत्फलं प्राप्नोति तत् क्षमया प्राप्नोतीत्यर्थः एवमुत्तरत्रापि योज्यं धर्मः तटाकारामनिर्माणादिः क्षमया भूमिसंबन्धिन्या जगच्चराचरं विष्ठितं स्थितं भवति ॥ ९ ॥

१० ] ति० टी०—प्रदानं कन्याप्रदानम् उचिते देशे काले सदृशे स्वकुलादिसदृशे पात्रे प्रदानं कर्तव्यमिति मन्त्रणप्रक्रमः ॥ १० ॥

गो० टी०—विसृज्येति अर्धत्रयम् । प्रदानं कन्याप्रदानम् चिन्ताप्रकारमाह—देश इति । प्रदानस्य कन्याप्रदानस्य उचितौ देशकालौ सदृशे स्वकुलस्य सदृशे पात्रे प्रतिपादनं च मन्त्रयामासेत्यर्थः ॥ १० ॥

११ ] ति० टी०—ऊर्ध्वरेता ब्रह्मचारी ब्राह्मं तपो ब्रह्म विषयं चित्तैकाग्र्यम् 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इति स्मृतिः ॥ ११ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्काले कुशनाभविचारसमये एव ऊर्ध्वरेता अच्युतरेतस्कः शुभाचारः शोभनाचरणयुक्तः चूलीनाम चूलिसंज्ञकः महामुनिः ब्राह्म्यं वेदविहितमेव तप उपागमत् प्राप्नोत् तुशब्द एवार्थे ॥ ११ ॥

गो० टी०—एतस्मिन्निति । एतस्मिन्नेव काले कुशनाभीयकाले उत्तरत्रान्वयः ऊर्ध्वरेताः अस्खलितरेताः ब्राह्मं तपः वैदिकं तपः ब्रह्मोद्देश्यकं वा ॥ ११ ॥

१२ ] ति० टी०—यदा चूली तपश्चरति तदा ऊर्मिलातनया सोमदानाम गन्धर्वी तं पर्युपास्ते स्म मय्यनुग्रहं कुर्विति प्रार्थनया सेवते स्म पर्युपासत इति शबलुगार्षः ॥ १२ ॥

रा० टी०—तपस्यन्तमिति । तदा ऋषितपश्चरणसमये तत्र ऋष्यधिष्ठितदेशे ऊर्मिलातनया ऊर्मिलायाः कन्या सोमदा नाम गन्धर्वी ते भद्रमस्तु इत्युक्त्वा तपस्यन्तमृषिं चूलिनं पर्युपासते पर्युपास्ते असेवत तपश्चरणसमये इत्युक्त्या शयनादिसमये तत्समीपे तस्यागमनाभावः सूचितस्तेन तस्याः सावधानत्वं व्यक्तम् वर्तमानसामीप्य इति भूते लट् गणकार्यस्यानित्यत्वात् शब्लुग्विरहः ॥ १२ ॥

गो० टी०—तप्यन्तमिति । तत्र तस्मिन्देशे तदा तत्काले तप्यन्तं दाहार्थेऽपि व्यत्ययाच्छयन् गन्धर्वी जातिवाचित्वात् पर्युपासते अशुश्रूषत मध्ये मध्ये भद्रमस्त्विति प्रयोगः शुभोत्तरत्वाय ॥ १२ ॥

१३ ] ति० टी०—तमिति प्रतियोगे द्वितीया तत्समीपे आसेत्यर्थः ॥ १३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेण वर्णयन्नाह—सेति । काले यथोचितसमये प्रणता भूत्वा शुश्रूषणपरायणा सा गन्धर्वी उवास तेन हेतुना गुरुर्मुनिस्तस्यास्तुष्टोऽभवत् चशब्दो हेत्वर्थे ॥ १३ ॥

गो० टी०—सा चेति । काले कियति काले तुष्टोऽभवत् ब्रह्मर्षित्वाद्गुरुरित्युक्तिः ॥ १३ ॥

१४–१५ ] ति० टी०—कालयोगेन शुश्रूषाजनितधर्मपरिपाकार्हकालसंबन्धेन अनेन दिव्ययोगिनीयोगिनोरकल्मषतपःप्रवृत्तिः सूचिता ॥ १४ ॥ १५ ॥

रा० टी०—तुष्टेन यदुक्तं तद्बोधयन्नाह—स इति । हे रघुनन्दन ! सः चूलिः मुनिः कालयोगेन शुभकालप्राप्तां तां गन्धर्वीं प्रोवाच तद्वचनमेवाह अहं परितुष्टोऽस्मि अतः किं तव प्रियं करोमि तद्वदेत्यर्थः ॥ १४ ॥

गो० टी०—स चेति । कालयोगेन शुश्रूषापरिपाककालसंबन्धेन करोमि कुर्याम् ॥ १४ ॥

रा० टी०—परीति । परमप्रीता अतिप्रसन्नचित्ता वाक्यज्ञा वचनतात्पर्यस्य ज्ञात्री गन्धर्वी वाक्यकोविदं मुनिं परितुष्टं ज्ञात्वा मधुरस्वरं यथा स्यात्तथा उवाच ॥ १५ ॥

गो० टी०—परितुष्टमिति । वाक्यकोविदं वाक्ये वचने कोविदं समर्थम् ॥ १५ ॥

१६ ] ति० टी०—ब्राह्म्या लक्ष्म्या ब्रह्मवर्चसेन ब्रह्मभूतो ब्रह्मात्मभावनया अत एव महातपाः यतस्त्वमीदृशोऽतो ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि ब्राह्मं तपो ब्रह्मविषयमैकाग्र्यम् यद्वा ब्राह्मं तपः स्वाध्यायः ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—लक्ष्म्येति । यतस्त्वं महातपाः अत एव ब्राह्म्या लक्ष्म्या ब्रह्मसंपत्त्या समुदितः अत एव ब्रह्मभूतः ब्रह्मत्वं प्राप्तः अतः ब्राह्मेण वेदबोधितेन तपसा युक्तं धार्मिकं पुत्रमिच्छामि भवत इति शेषः धार्मिकं पुत्रमिच्छा-

---

१ देशकालौ प्रदानस्येति गो. रा. पाठः । २ महामुनिरिति गो. रा. पाठः । ३ तप्यन्तं तमिति गो. पाठः । ४ धर्मिष्ठ इति रा. पाठः । ५ स्वरेति गो. पाठः ।

अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् । ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७ ॥
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ ब्राह्ममनुत्तमम् । ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत्तदा । कांपिल्यां परया लक्ष्म्या देवराजो यथा दिवम् १९
स बुद्धिं कृतवान्राजा कुशनाभः सुधार्मिकः । ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा॥ २० ॥
तमाहूय महातेजा ब्रह्मदत्तं महीपतिः । ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥
यथाक्रमं तदा पाणिं जग्राह रघुनन्दन । ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥

---

मीत्यनेन तत्संगमस्तया न प्रार्थित इति व्यक्तं तेन तस्याः परमधैर्यं धर्मात्मत्वं च व्यक्तम् ब्रह्मभूत इत्यनेन यथा ब्रह्म सकलमभिधातुं समर्थं तथा त्वमपीत्युपमालङ्कारो ध्वनितः ॥ १६ ॥

गो० टी०—लक्ष्म्येति । ब्राह्मया लक्ष्म्या ब्रह्मवर्चसेन समुदितः श्रेष्ठः अत एव ब्रह्मभूतः ब्रह्मतुल्यः महातपा असि तस्मात्त्वत्तः पुत्रमिच्छामि 'दीप्यसे परया लक्ष्म्या' इति कोशान्तरे ॥ १६ ॥

१७ ] ति० टी०—ननु पुत्रप्रार्थना पत्याद्युचिता तत्राह—अपतिश्चास्मीति । इतःपरमप्यस्मि अहं न कस्यचिद्भार्या भविष्यामीति शेषः अनेन नैष्ठिकब्रह्मचारिणीत्वं सूचितम् अथापि यथा पुत्रावाप्तिर्भवति तथा ते भद्रमनुग्रहोऽस्तु नन्वेवं नैष्ठिकब्रह्मचर्ये कथं पुत्रलाभः संभाव्येतात आह—ब्राह्मेणेति । उपगतायाः किंकरत्वं प्राप्तायाः ब्राह्मेण ब्रह्मसंबन्धिनोपायेन मे सुतं दातुमर्हसि सनकादय इव मानसपुत्रो देय इति भावः ॥ १७ ॥

रा० टी०—ननु पुत्रप्रार्थना पत्युरुचिता मत्तः कथं प्रार्थ्यते इत्यत आह—अपतिरिति । अपतिः पतिरहितैव अहमस्मि अतः कथं पत्युः प्रार्थना स्यादिति भावः ननु पतिलाभार्थं यतितव्यं ततः पुत्रो भविष्यत्येवेत्यत आह—अहं कस्यचिद्भार्या नास्मि नैव भविष्यामि ननु पतिमन्तरा कथं पुत्रलाभ इत्यत आह—ब्राह्मण हे ब्रह्मवेत्तः ! उपगतायाः त्वां सेवमानाया मे सुतं दातुमर्हस्येव त्वत्सेवामाहात्म्यात्पतिमन्तरापि पुत्रो भवत्विति भावः । पतिरहितैवेत्यत्र एवकारः पतिसंसर्गाभावसूचकः तेन वैधव्यशङ्कानिरासः भार्या चास्मीत्यत्र भविष्यत्कालाविवक्षया लट्प्रयोगः । चकारत्रयमेवार्थम् । 'ब्राह्मयेणोपगतायाश्च' इति भट्टसंमतः पाठः तत्र ब्राह्मयेण ब्रह्मसंबन्धिना उपायेनेत्यर्थः ॥ १७ ॥

गो० टी०—अपतिरिति । विधवाप्यपतिर्भवति तत्राह—भार्येति । उपगतायाः शरणं गतायाः मे ब्राह्मेण तपोमहिम्ना ॥ १७ ॥

१८ ] ति० टी०—तस्याः सोमदायाः प्रसन्नश्चूलिननामा ब्रह्मर्षिर्ब्राह्मं ब्रह्मतपसा युक्तं ब्राह्मणदत्तत्वाद्ब्रह्मदत्त इति ख्यातं मानसं सुतं ददावित्यन्वयः । फली फलिन इतिवच्चूली चूलिन इति ऋषेर्नामद्वयं साधु ॥ १८ ॥

रा० टी०—तस्या इति । प्रसन्नः ब्रह्मर्षिश्चूली मानससंकल्पमात्रेण सिद्धमत एव अनुत्तमं सर्वश्रेष्ठं पुत्रं तस्यास्तस्यै गन्धर्व्यै ददौ इति हेतोः ख्यातं ब्रह्मदत्तं चूलिनः सुतं वदन्तीति शेषः ॥ १८ ॥

गो० टी०—तस्या इति । ब्रह्मणा तपोयोगेन दत्तो ब्रह्मदत्तः चूलिनः स्वस्य मानसं मनःसंकल्पजं सुतं ददौ ॥ १८ ॥

१९–२१ ] ति० टी०—राजा गन्धर्व्याः सोमदायाः क्षत्रियत्वात् काम्पिल्यां कम्पिलेन निर्वृत्ताम् ॥ १९–२१ ॥

रा० टी०—स इति । ब्रह्मदत्तोऽपि स राजा सन् काम्पिलीं कम्पिल्यनिर्मितां पुरीं परया लक्ष्म्या दिवं देवराज इन्द्र इव अध्यवसत् "उपान्वध्याङ्वसः" इति कर्मत्वं तस्य ब्राह्मणदत्तत्वात् ब्राह्मणत्वेऽपि क्षात्रियात्वेन प्रसिद्धायाः गन्धर्व्याः सुतत्वात्क्षत्रियत्वमपि ब्रह्मदत्त इत्यन्वर्थं नाम तुशब्दोऽप्यर्थे १९॥

गो० टी०—स इति । राजा क्षत्रियः क्षत्रजत्वात् लक्ष्म्या संपदा युक्तः एतस्मिन्नन्तरे पुरीमध्यावसदिति संबन्धः ॥ १९ ॥

रा० टी०—ब्रह्मदत्तवृत्तं समाप्य यदर्थं तद्वृत्तप्रक्रमः तदाह—सुबुद्धिमित्यादिना । हे काकुत्स्थ राम ! तदा ब्रह्मदत्तराज्यसमये सुधार्मिकः अत्यन्तधर्मशीलः राजा कुशनाभः कन्याशतं ब्रह्मदत्ताय दातुं सुबुद्धिं शोभननिश्चयं कृतवान् ॥ २० ॥

गो० टी०—स बुद्धिमिति । तदा ब्रह्मदत्तस्य काम्पिल्याख्यायां पुर्यामावासकाले ॥ २० ॥

रा० टी०—तमिति । महातेजा राजा कुशनाभः महीपतिं तं ब्रह्मदत्तमाहूय सुप्रीतेनातिप्रसन्नेन अन्तरात्मना मनसा कन्याशतं ददौ ॥ २१ ॥

गो० टी०—तमिति । राजा रञ्जकः ॥ २१ ॥

२२ ] ति० टी०—देवपतिर्यथा इन्द्रसदृशो महीपाल इत्यर्थः ॥ २२ ॥

रा० टी०—यथेति । हे रघुनन्दन ! तदा कन्यादानसमये तासां कन्यानां पाणीन् देवपतिरिव महीपालो ब्रह्मदत्तः यथाक्रमं ज्येष्ठादिक्रममनतिक्रम्य जग्राह ॥ २२ ॥

गो० टी०—यथेति । तासां पाणीन् जग्राह देवपतिर्यथा देवपतिसदृशः तत्तुल्यविभव इत्यर्थः ॥ २२ ॥

---

१ ब्राह्मणोपगतायाश्चेति रा. पाठः । २ पुत्रमिति गो. रा. पाठः । ३ दत्तमितीति रा. पाठः । ४ सौमदेयस्तु पुरीमध्यावसदिति गो. पाठः ५ काम्पिलीमिति रा. पाठः । ६ सुबुद्धिमिति रा. पाठः । ७ तत इति गो. पाठः । ८ पाणीनिति गो. रा. पाठः ।

स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वराः । युक्तं परमया लक्ष्म्या बभौ कन्याशतं तदा ॥ २३ ॥
स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः । बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ २४ ॥
कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिम् । सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥
सोमदापि सुतं दृष्ट्वा पुत्रस्य सदृशीं क्रियाम् । यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥
स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

कुशनाभस्य पौत्रेष्टिवर्णनम्, ब्रह्मपुत्रकुशस्य कुशनाभंप्रति गाधिनामानं पुत्रमाप्स्यसीत्याशीः, तस्य ब्रह्मलोके गमनम्, गाधेरुत्पत्तिः, विश्वामित्रभगिन्याः सत्यवत्या वर्णनं च ।

कृतोद्वाहे गते तस्मिन्ब्रह्मदत्ते च राघव । अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥

---

२३ ] ति० टी०–तदा तेन राज्ञा पाणौ स्पृष्टमात्रे ताः कन्या विकुब्जाः कुब्जत्वरहिताः आसन्निति शेषः ब्रह्मतपोयुक्तत्वादेवं सामर्थ्यं राज्ञः एवं च सति तत्कन्याशतं परमया लक्ष्म्या बभावित्यन्वयः ॥ २३ ॥

रा० टी०–स्पृष्टेति । तदा पाणिग्रहणसमये पाणौ कन्याकरे स्पष्टमात्रे सति विकुब्जाः कुब्जात्वरहिताः अत एव विगतज्वरास्ताः कन्या आसन्निति शेषः तदा विगतज्वरसमये परमया लक्ष्म्या संपत्त्या युक्तं कन्याशतं बभौ पाणावित्यत्र जात्यभिप्रायेणैकवचनं कुब्जाशब्दो भावप्रधानः ॥ २३ ॥

गो० टी०–स्पृष्टेति । ततश्चूलिसूनुना पाणाविति जात्येकवचनम् । विकुब्जाः विगतकुब्जभावाः शतं कन्या बभुः विसर्गलोप आर्षः 'बभुः कन्याशतम्' इति पाठः ॥ २३ ॥

२४ ] ति० टी०–स राजा वायुना मुक्ता दृष्ट्वेत्यन्वयः भग्नाः इति पाठस्तु चिन्त्यः केचित्तु तत्पाठे पूर्वं भग्ना इति व्याचख्युः ॥ २४ ॥

रा० टी०–स इति । स महीपतिः कुशनाभः वायुना वायुकृतदोषेण मुक्तास्त्यक्ताः कन्या दृष्ट्वा परमप्रीतो ब्रह्मदत्तविषयकातिप्रीतिविशिष्टो बभूव अतः पुनः पुनः प्रतिक्षणं नवं नवं हर्षं लेभे ॥ २४ ॥

गो० टी०–स इति । वायुना मुक्ताः कन्या इति शेषः परमप्रीतः अनुकूलवरलाभेन परमप्रीतः हर्षं विकुब्जत्वकृतम् ॥ २४ ॥

२५ ] ति० टी०–प्रेषयामास काम्पिल्यं प्रतीति शेषः॥२५॥

रा० टी०–कृतोद्वाहमिति । महीपतिः कुशनाभः कृतोद्वाहं सदारं दारसहितं सोपाध्यायगणमुपाध्यायगणसहितं ब्रह्मदत्तं राजानं तदा तु साङ्गविवाहोत्तरकाले एव प्रेषयामास तत्पुरं प्रापयामास । तुशब्द एवार्थे ॥ २५ ॥

गो० टी०–कृतेति । प्रेषयामास काम्पिल्यामिति शेषः२५

२६ ] ति० टी०–सदृशीं क्रियाम् दारक्रियामित्यर्थः । प्रतिनन्दनप्रकारमाह–स्पृष्ट्वेत्यादि । प्रशस्य च गतेत्यर्थः । आश्चर्यमासां धैर्यं यद्देवश्रेष्ठस्याप्यनादरः धन्योऽयं राजा यस्य कन्या ईदृश्यः अहो मे भाग्यं यस्या मे ईदृश्यः स्नुषाः इत्येवं प्रतिनन्दनम् अनेन स्त्रीमाहात्म्यं तपोमाहात्म्यं च दर्शितम्॥२६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०–सोमदेति । सोमदा गन्धर्वी पुत्रस्य ब्रह्मदत्तस्य सदृशक्रियां पुत्रोचितवैवाहिकं कर्म दृष्ट्वा माङ्गलिकस्त्रीसहितपुत्रदर्शनेन निश्चित्य यथान्यायं ज्येष्ठादिक्रमेण कन्याः कुशनाभसुतास्ताः स्वपुत्रेणोद्वाहिताः अत एव स्नुषाः स्वपुत्रवधूश्च स्पृष्ट्वा स्पृष्ट्वा कुशनाभं च प्रशस्य प्रत्यनन्दत परमहर्षं प्राप्नोत् । अपिस्त्वर्थे एकश्चकारो हेत्वर्थे ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

गो० टी०–सोमदेति सार्धश्लोकः । सोमदा चूलिपुत्रमाता पुत्रसदृशीं क्रियां दारक्रियां दृष्ट्वेति शेषः यथान्यायं यथाक्रमं स्नुषाः कन्याः कुशनाभपुत्रीः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः॥३३॥

१ ] ति० टी०–ब्रह्मदत्ते चेति । चस्त्वर्थः कन्याशतसमुच्चयार्थो वा पुत्रलाभाय पुत्रप्राप्तये ॥ १ ॥

रा० टी०–ब्रह्मदत्तविवाहानन्तरकालिकं वृत्तमाह–कृत इति । हे राघव ! कृतोद्वाहे तस्मिन् ब्रह्मदत्ते गते स्वपुरं प्राप्ते सत्येव अपुत्रः पुत्ररहितः कुशनाभः पुत्रलाभाय पौत्रीं पुत्रप्रदामिष्टिमकल्पयत् । च शब्द एवार्थे ॥ १ ॥

गो० टी०–एवं प्रासाङ्गिकं परिसमाप्य प्रकृतकथाशेषमाह चतुस्त्रिंशे–कृतोद्वाह इत्यादि । अपुत्रः कुशनाभः पुत्रार्थेयं पौत्री ताम् ॥ १ ॥

---

१ तत इति गो. पाठः । २ बभुरिति गो. पाठः । ३ महीपतिरिति गो. रा. पाठः । ४ सुसंहृष्टामिति गो. पाठः । ५ सदृशक्रियामिति रा. पाठः ।

इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् । उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥
पुत्रस्ते सदृशः पुत्र भविष्यति सुधार्मिकः । गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ३
एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् । जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः । जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥
स पिता मम काकुत्स्थ गाधिः परमधार्मिकः । कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥ ६ ॥
पूर्वजा भगिनी चापि मम राघव सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी । कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥

---

२ ] ति० टी०—कुशः कुशनाभपिता ॥ २ ॥

रा० टी०—इष्ट्यामिति । तदा ब्रह्मदत्तप्रेषणानन्तरकाले एव इष्ट्यां वर्तमानायां सत्यां महीपतिं कुशनाभं परमोदारः ब्रह्मसुतः कुशः कुशनाभपिता उवाच चशब्द एवार्थे ॥ २ ॥

गो० टी०—इष्ट्यामिति । कुशः कुशनाभपिता ॥ २ ॥

३ ] ति० टी०—कुशवाक्यमाह—पुत्र इत्यादि । सदृशस्त्वत्सदृशः कोऽसौ तत्राह—गाधिं गाधिनामानं प्राप्स्यसि तेन लोके शाश्वतीं कीर्तिं च प्राप्स्यसि ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—पुत्र इति । हे पुत्र सुधार्मिकः ! अत्यन्तधर्मशीलः अत एव ते सदृशः पुत्रः भविष्यति ननु किंनामकः पुत्रो भविष्यतीत्यत आह गाधिं गाधिनामकं पुत्रं त्वं प्राप्स्यसि तेन पुत्रेण शाश्वतीं लोके कीर्तिं प्राप्स्यसि चो हेतौ ॥ ३ ॥

गो० टी०—पुत्रेति । सदृशः गुणैरिति शेषः स पुत्रः किंनामकः तत्राह—गाधिमिति । गाधिनामानं पुत्रं प्राप्स्यसे तेन गाधिना शश्वद्भवा शाश्वती भवार्थे अण् बाहिपष्टिलोपवचनादव्ययानां भमात्रे टिलोपः क्वाचित्कः अत्र न ततो ङीप् ताम् ॥ ३ ॥

४ ] ति० टी०—'कुशो नाम' इति पाठे एतत्कुशवृत्तं नाम प्रसिद्धमित्यर्थः आकाशमाविश्याकाशरूपो भूत्वा अनेन तस्य मुक्तत्वं सूचितं तेन स्ववंशस्य माहात्म्यातिशयः सूचितः ॥ ४ ॥

रा० टी०—एवमिति । हे राम ! महीपतिं कुशनाभमेवमनेन प्रकारेण कुश उक्त्वा आकाशमाविश्य सनातनं ब्रह्मलोकं जगाम अनेन कुशस्य कामचारगतिमत्त्वं व्यक्तम् ॥ ४ ॥

गो० टी०—एवमिति । अनेन सदा ब्रह्मलोकवासी कुशः पुत्रानुग्रहार्थं भुवमागत इत्यवगम्यते सनातनं नित्यम् ॥ ४ ॥

५ ] ति० टी०—कस्यचित्त्वथ कालस्य कस्यचित्कालस्यानन्तरमित्यर्थः ॥ ५ ॥

रा० टी०—कस्यचिदिति । कस्यचित्कालस्याथ अनन्तरमेव धीमतः कुशनाभस्य भार्यायामिति शेषः परमधर्मिष्ठः अत्यन्तधर्मशीलः गाधिरिति नाम्ना विश्रुतः ख्यातः जज्ञे यदि तु कालस्येत्यस्यानन्तरमपगम इति शेषः, तदा मङ्गलरूपोऽथशब्दार्थो जज्ञ इत्येतदन्वयी ॥ ५ ॥

गो० टी०—कस्यचिदिति । कस्यचित्कालस्य कस्मिंश्चित्काले गते सति गाधिरित्येव यथा पित्रोक्तं तथैवेत्यर्थः जज्ञे घृताच्यां भार्यायाम् ॥ ५ ॥

६ ] ति० टी०—मम विश्वामित्रस्य । कुशवंशप्रसूतत्वादहं कौशिकः ॥ ६ ॥

रा० टी०—स इति । हे काकुत्स्थ हे रघुनन्दन ! परमधार्मिकः स गाधिः मम पिता यतः कुशवंशप्रसूतोऽहमस्मि अतः कौशिकः ख्यातो जनैरिति शेषः ॥ ६ ॥

गो० टी०—स इति । यतः कुशवंशप्रसूतोऽस्मि अतः कौशिकसंज्ञोऽस्मि कुशशब्दात् गोत्रापत्ये ठक् ॥ ६ ॥

७ ] ति० टी०—न केवलमहमेव गाधेः पुत्रः मम पूर्वजा ज्येष्ठा नाम्ना सत्यवतीति प्रसिद्धा ऋचीके प्रतिपादिता ऋचीकाय दत्ता इति नाम प्रसिद्धम् ॥ ७ ॥

रा० टी०—पूर्वजेति । हे राघव ! सुव्रता शोभनव्रतशीला नाम्ना सत्यवती सत्यवतीति नाम्नैव प्रसिद्धा मम पूर्वजा ज्येष्ठा भगिनी ऋचीके ऋचीकनामकमुनौ प्रतिपादिता दत्ता चशब्द इत्यर्थे अपिशब्द एवार्थे ॥ ७ ॥

गो० टी०—पूर्वजेति । पूर्वजा ज्येष्ठा ऋचीके ऋचीकाख्यमुनय इत्यर्थः ॥ ७ ॥

८ ] ति० टी०—सशरीरस्वर्गगतौ हेतुर्भर्तारमनुवर्तिनीति सहगमनं कृतवतीत्यर्थः अपि च अन्यदपि तस्याश्चरितम् कौशिकी नाम्नी महानदी तद्रूपा प्रवृत्ता च जाता ॥ ८ ॥

रा० टी०—ननु सा क्वास्तीत्यत आह—सेति । भर्तारमनुवर्तिनी पत्यनुवर्तनशीला मम भगिनी सशरीरा शरीरसहिता स्वर्गं गता प्राप्ता । अर्धं पृथक् कौशिकीति परमोदारा दिव्या मनुष्यलोकविलक्षणा प्रवृत्ता प्रकृष्टमुत्तमं वृत्तं वृत्तान्तो यस्याः सा मम भगिनी लोकस्य हितकामार्थं पुण्योदका पुण्यसंपादकजला रम्या रमणीया सती हिमवन्तमुपाश्रिता हिमवत्पार्श्ववर्तिनी सती कौशिकीति नाम्ना महानदी प्रवृत्ता महानदीत्वं प्राप्तेत्यर्थः सार्धश्लोक एकान्वयी चकार इत्यर्थे ॥ ८ ॥ ९ ॥

गो० टी०—सशरीरेति । भर्तारमनुवर्तिनी भर्त्रनुवर्तनधर्म-

---

१ चेति गो. रा. पाठः । २ कस्यचिदथेति रा. पाठः । ३ विश्रुत इति रा. पाठः ।

दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥
ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ॥१०॥
सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥
अहं हि नियमाद्राम हित्वा तां समुपागतः । सिद्धाश्रममनुप्राप्तः सिद्धोऽस्मि तव तेजसा ॥१२॥
एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता । देशस्य हि महाबाहो यन्मां त्वं परिपृच्छसि॥१३॥
गतोऽर्धरात्रः काकुत्स्थ कथाः कथयतो मम । निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोऽध्वनीह नः ॥१४॥

प्रभावादिति भावः न केवलं स्वर्गगमनमस्याः महानदीत्वं च जातमित्याह—कौशिकीति ॥ ८ ॥

९ ] ति० टी०—हितकार्यार्थम् । 'हितकामार्थम्' इति पाठे हितमामुष्मिकं काम ऐहिकं तदुभयदानार्थम् ॥ ९ ॥

गो० टी०—दिव्येति। दिव्या श्लाघ्या हितमामुष्मिकं कामः ऐहिकं तदुभयार्थं प्रवृत्ता नदीरूपेण स्वर्गाद्धिमवन्तमुपाश्रितेत्यर्थः ॥ ९ ॥

१० ] ति० टी०—यतो भगिन्यां स्नेहसंयुक्तोऽतो हिमवत्पार्श्वे कौशिक्यां नियतो नित्यं सुखं वसामीत्यन्वयः ॥ १० ॥

रा० टी०—तत इति । हे रघुनन्दन ! यतः कौशिक्यां भगिन्यामहं स्नेहसंयुक्तः ततः हेतोः हिमवत्पार्श्वे नियतः निर्गतं प्राप्तं यतं निवृत्तिर्यस्य सोऽन्यत्र गमनरहित इत्यर्थः किंच नितरां यतस्तत्र स्थितौ प्रयत्नो यस्य सोऽहं सुखं यथा स्यात्तथा वसामि ॥ १० ॥

गो० टी०—तत इति । यतो हिमवन्तमाश्रिता तत इत्यर्थः ॥ १० ॥

११ ] ति० टी०—इतश्च तस्यां वास इत्याह—सा त्विति। सत्ये धर्मे प्रतिष्ठिता तज्जलपानादिना सत्यान्मनो न निवर्तत इति भावः ॥ ११ ॥

रा० टी०—नदीस्वरूपेऽपि तस्याः पूर्ववद्धर्माचरणमिति बोधयन्नाह—सेति । सत्यवती मृषासंसर्गशून्या अत एव पुण्या अतिपुण्यहेतुः सत्यधर्मे प्रतिष्ठिता पतिव्रता महाभागा कौशिकी सा मम भगिनी सरितां सर्वनदीनां वरा श्रेष्ठा अस्तीति शेषः तु शब्दो हेत्वर्थे ॥ ११ ॥

गो० टी०—सत्यवतीनामनिमित्तमाह—सा त्विति॥ ११ ॥

१२ ] ति० टी०—नन्वेवं कथं सिद्धाश्रमे स्थितिरत आह—अहं हीति । नियमाद्वयापिण्डदानवत्सिद्धाश्रमैकसाध्ययागजन्यसिद्धिहेतोः आगमनकार्यं च त्वदनुग्रहात्सिद्धमित्याह—सिद्धाश्रममित्यादि ॥ १२ ॥

रा० टी०—ननु तां त्यक्त्वा किमर्थमिहागत इत्यत आह—अहमिति । हे राम ! नियमाद्भवत्प्रादुर्भावनिश्चयमवगत्य तां स्वभगिनीं हित्वा सिद्धाश्रमं समुपागतोऽहं तेजसा समाधिकरहितप्रतापेन युक्तं तव त्वामनुप्राप्यैव सिद्धोऽस्मि हिशब्द एवार्थे कर्मणः शेषत्वविवक्षया षष्ठी एतेन विश्वामित्रस्य रामोपासकत्वं व्यक्तम् ॥ १२ ॥

गो० टी०—एवंभूतस्य सिद्धाश्रमागमननिमित्तमाह—अहं हीति । नियमात् यागनियमाद्धेतोः समुपागतः सिद्धाश्रममिति शेषः ॥ १२ ॥

३१ ] ति० टी०—उपसंहरति—एषेति । मम गाधेः सकाशादुत्पत्तिः कीर्तिता, स्वस्य वंशस्योत्पत्तिर्ब्रह्मपुत्रात्कुशात्कीर्तिता देशस्य शोणाकूलीयगिरिव्रजदेशस्य पृच्छसि पर्यपृच्छः तत्सर्वमुक्तमिति शेषः ॥ १३ ॥

रा० टी०—एषेति । हे राम ! एषा स्वस्य वंशस्य उत्पत्तिः प्राकट्यं देशस्य च उत्पत्तिः ख्यातिः मम मया कीर्तिता यत् यस्माद्धेतोः मां त्वं परिपृच्छसि पर्यपृच्छः वर्तमानसामीप्ये इति भूते लट् । हिशब्दश्चार्थे उत्पत्तिशब्द उभयान्वयी शब्दाधिकारश्च ममेति कर्तुः शेषत्वेन विवक्षया षष्ठी ॥ १३ ॥

गो० टी०—एषेति । मम स्वस्य वंशस्य चोत्पत्तिः प्रसङ्गात्कीर्तिता यत्त्वया पृष्टं तत् देशस्य गिरिव्रजदेशस्य वैभवं चोक्तम् ॥ १३ ॥

१४ ] ति० टी०—अतः परं न प्रष्टव्यमित्याह—गत इति। विघ्नो गन्तव्याध्वनि निद्राभावप्रयुक्तजाड्यमूलः ॥ १४ ॥

रा० टी०—गत इति । काकुत्स्थ हे राम ! कथां कथयतो मम मयि कथां कथयति सति अर्धरात्रो रात्रेरर्धं गतो व्यतीतः अतः हेतोः निद्रामभ्येहि प्राप्नुहि ते भद्रं कल्याणमस्तु तत्र हेतुः यतः नोऽस्माकमिहाध्वनि विघ्नः एतदध्वचलनप्रतिबन्धकीभूता दिननिद्रा मा भूत् "अर्धं नपुंसकम्" इति समासः "रात्राह्नाहाः पुंसि" इति पुंस्त्वम् एतेन तद्घटकीभूतार्धशब्दः खण्डवाचक इति स्वीकृत्यार्षः समास इति भूषणकारोक्तिश्चिन्त्या समांशवाचकत्वे बाधकाभावात् खण्डवाचकत्वे प्रमाणाभावाच्च खण्डवाचकत्वस्वीकारेणार्धशब्दस्य प्रदोषवाचकत्वं स्वीकृत्य व्याख्यानमप्ययुक्तम् 'उपास्य रात्रिशेषं तु' इति वक्ष्यमाणेन विरोधात् ॥ १४ ॥

गो० टी०—इतः परं न प्रष्टव्यमित्याशयेनाह—गत इति । अर्धो रात्रेरर्धरात्रः अनपुंसकत्वेऽपि "अर्धं नपुंसकम्" इत्यार्षः समासः "अहःसर्व—" इत्यादिना समासान्तोऽच् "रात्राह्न—" इति पुंल्लिङ्गता अत्रार्धशब्दोंऽशवाची उक्तं हि 'भित्तं शकलखण्डे वा

१ कामार्थमिति गो. रा. पाठः । २ निरत इति गो. पाठः । ३ भगिन्या इति रा. पाठः । ४ सत्यधर्मे इति रा. पाठः । ५ प्राप्येति गो. रा. पाठः । ६ चेति गो. रा. पाठः । ७ कथामिति रा. पाठः ।

निष्पन्दा[1]स्तरवः सर्वे निलीना मृगपक्षिणः । नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥
शनैर्विसृज्यते[2] सन्ध्या नभो[4] नेत्रैरिवावृतम् । नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥
उत्तिष्ठते[3] च शीतांशुः शशी लोकतमोनुदः । ह्लादयन्प्राणिनां लोके मनांसि प्रभया स्वया[5] ॥ १७ ॥
नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः । यक्षराक्षससंघाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥
एवमुक्त्वा महातेजा विरराम महामुनिः । साधुसाध्विति ते सर्वे मुनयो[6] ह्यभ्यपूजयन् ॥ १९ ॥
कुशिकानामयं वंशो महान्धर्मपरः[7] सदा । ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥
विशेषेण भवानेव विश्वामित्र[8] महायशः । कौशिकी सरितां[9] श्रेष्ठा कुलोद्द्योतकरी तव ॥ २१ ॥

---

पुंस्यर्धोऽर्धं समेंशके' इति यावति रात्रिभागे निद्रा निषिद्धा तावान् गत इत्यर्थः जागरणे को दोष इत्यत्राह—मा भूदिति । भोगन्तव्याध्वनि निद्राभावप्रयुक्तालस्यकृतविघ्नो मा भूदित्यर्थः । मम कथाः कथयतः मयि कथां कथयति ॥ १४ ॥

१५ ] ति० टी०—अर्धरात्रचिह्नान्याह—निष्पन्दा इति । पक्षिचलनाभावादिति भावः । तदाह—निलीना इति ॥ १५ ॥

रा० टी०—अर्धरात्रलक्षणानि वदन्नाह—निस्पन्दा इत्यादिभिः । हे रघुनन्दन ! सर्वे तरवो वृक्षा निस्पन्दा स्पन्दनव्यापारशून्या अत एव सर्वे मृगपक्षिणो निलीनाः शयनं प्रापुः । तत्र हेतुः यतः नैशेन निशासंबन्धिना तमसा अन्धकारेण दिशः अव्याप्ता अल्पव्याप्तिविशिष्टाः अर्धरात्रे पूर्वरात्रापेक्षया किंचित्प्रकाशाधिक्यस्यानुभवसिद्धत्वामिति तात्पर्यम् । चशब्दो हेत्वर्थे ॥ १५ ॥

गो० टी०—अथ निशामुखं वर्णयति चतुर्भिः—निष्पन्दा इत्यादि । निष्पन्दाः पक्षिसंचाराभावादिति भावः निलीनाः निद्रां प्राप्ता इत्यर्थः नैशेन सन्ध्यातिरिक्तकालिकेन सन्ध्या वियुज्यते वियुक्ता वर्तमानसामीप्ये लट् नक्षत्रैः अश्विन्यादिभिस्ताराभिः केवलनक्षत्रैश्च गहनं व्याप्तं नभः ज्योतिर्भिः ज्योतिष्मद्भिर्नेत्रैरावृतमिवावभासते उत्तिष्ठतीति "उदोऽनूर्ध्वकर्मणि" इति परस्मैपदम् तमो नुदतीति तमोनुदः इगुपधलक्षणः कः निशायां प्रभवन्ति नैशानि "प्रभवति" इत्यण् भूतानि उलूकादयः ततस्ततः तत्र तत्र पौर्णमास्यां यज्ञं समाप्य द्वितीयायां प्रस्थानमिति चतुर्घटिकानन्तरं चन्द्रोदय इति सर्वथार्धरात्रशब्दः प्रदोषपर एव ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

१६ ] ति० टी०—शनैर्विसृज्यते व्ययुङ्क्तेत्यर्थः वर्तमानसामीप्ये भूते लट् सन्ध्याशब्देन तदुपासनयोग्यगौणकालराहित्येन सार्धयामरूपः नक्षत्रतारागहनं नभः सहस्राक्षवन्नेत्रैरावृतमिव तज्ज्योतिर्भिस्तद्रश्मिभिरवभासते ॥ १६ ॥

रा० टी०—अर्धरात्रोऽपि व्यतीतो भवतीति बोधयन्नाह—शनैरिति । संध्या सम्यक् एकाग्रतां प्राप्नुवन्ति धियश्चित्तवृत्तयो यस्यां तया पूर्वरात्रोत्तररात्रमध्यभक्त्येत्यर्थः । शनैर्वियुज्यते व्यतीयते । आवृतं अ न आवृतमावरणं यस्य तन्महदित्यर्थः नक्षत्रतारागहनं नक्षत्रगणतारागणनिबिडं यत् नभः तत् नेत्रैरिव नेत्रसदृशैः ज्योतिर्भिः नक्षत्रतारागणैः अवभासते प्रकाशते 'विसृज्यते' इति भट्टपाठः ॥ १६ ॥

१७] ति० टी०—उत्तिष्ठते "उदोऽनूर्ध्वकर्मणि" इति तङ् ॥ १७ ॥

रा० टी०—उत्तिष्ठतीति । शीतांशुः शीतकिरणः लोकतमोनुदः शशी स्वया प्रभया लोके प्राणिनां मनांसि ह्लादयन् उत्तिष्ठति उदयते " उदोऽनूर्ध्वकर्मणि " इत्यत्रानूर्ध्वकर्मणीति निषेधान्न तङ् एतेन तदानीं कृष्णनवमीति व्यक्तम् ॥ १७ ॥

१८ ] ति० टी०—नैशानि निशाप्रभवाणि । तान्येवाह—यक्षेत्यादि ॥ १८ ॥

रा० टी०—नैशानीति । नैशानि निशायामेव संचरणशीलानि सर्वभूतानि ततस्ततः स्वस्वप्रचरणयोग्ये देश एव प्रचरन्ति । ननु कानि तानीत्यत आह—रौद्राः भयानकाः पिशिताशनाः रुधिरभोजनाः यक्षराक्षससंघाः चकारेण सर्पादयः एकश्च शब्द एवार्थे । यद्वा नैशानि सर्वभूतानि सर्वस्य शिवस्य भूतानि पिशाचादयः विशेषेण विशिष्टा यक्षादयश्च प्रचरन्ति दन्त्यादिरपि शिववाचक इति प्रसिद्धम् ॥ १८ ॥

१९ ] ति० टी०—अभ्यपूजयन्नस्तुवन् ॥ १९ ॥

रा० टी०—एवमिति । महातेजाः महामुनिः विश्वामित्रः एवमुक्त्वैव विरराम सर्वे ऋषयः तं विश्वामित्रं साधु साधु इति अभ्यपूजयन् । हिशब्द एवार्थे ॥ १९ ॥

गो० टी०—एवमिति । अभ्यपूजयन् अस्तुवन् ॥ १९ ॥

२० ] ति० टी०—स्तुतिप्रकारमाह—कुशिकानामित्यादि । ब्रह्मोपमा ब्रह्मर्षितुल्याः ॥ २० ॥

रा० टी०—पूजामेव विशदयन्नाह—कुशिकानामिति । कुशिकानामयं वंशः सदा महाधर्मपरः अत एव कुशवंश्याः कुशवंशप्रभवाः महात्मानः नरोत्तमा राजानः ब्रह्मोपमाः ब्रह्मर्षिसदृशाः आसन्निति शेषः ॥ २० ॥

गो० टी०—कुशिकानामिति । गाधेः कुशिक इति नामान्तरं कुशिकानां तद्गोत्रजानां ब्रह्मोपमाः चतुर्मुखोपमाः ॥ २० ॥

२१ ] ति० टी०—हे महायशः विश्वामित्र! भवानेव विशेषेण महात्मेति शेषः यस्तपसा ब्राह्मणत्वं प्राप्त इति भावः । किं च

---

१ निस्पन्दा इति रा. पाठः । २ वियुज्यते इति गो. रा. पाठः । ३ उत्तिष्ठतीति गो. रा. पाठः । ४ विभो इति गो. पाठः । ५ तमिति गो. रा. पाठः । ६ ऋषय इति गो. रा. पाठः । ७ महाधर्मपर इति रा. पाठः । ८ विश्वामित्रो महायशा इति गो. पाठः । ९ च सरिदिति गो. रा. पाठः ।

मुदितैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः । निद्रामुपागमच्छ्रीमानस्तंगत इवांशुमान् ॥ २२ ॥
रामोऽपि सहसौमित्रिः किंचिदागतविस्मयः । प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

विश्वामित्ररामसंवादः, रामस्य गङ्गामूलोत्पत्तिश्रवणेच्छा, विश्वामित्रकृतगङ्गोमोत्पत्तिवर्णनं च ।

उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः । निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥
तच्छ्रुत्वा वचनं तस्य कृतपूर्वाह्णिकक्रियः । गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥

यस्य तव भागिनी तव कुलस्य उद्योतकर्त्र्युद्धारकर्त्री सरितां श्रेष्ठा अनेन सकलजगदुद्धारकत्वं सूचितम् ॥ २१ ॥

रा० टी०–कुशवंश्यानां श्रैष्ठ्यं प्रतिपाद्य तत्रापि विश्वामित्रस्यातिश्रैष्ठ्यं प्रतिपादयन्नाह–विशेषेणेति । हे विश्वामित्र हे महायशः! तस्मिन् कुले भवान् विशेषेण ब्रह्मोपमः ब्रह्मर्षिरेवेत्यर्थः सरिच्छ्रेष्ठा कौशिकी च विशेषेण ब्रह्मोपमा अत एव तव कुलोद्योतकरी त्वत्कुलप्रकाशिका । एवशब्दः तस्मिन्नित्यर्थे ब्रह्मोपमशब्दौ अध्याहृतौ ॥ २१ ॥

गो० टी०–विशेषेणेति । विश्वामित्रः विश्वामित्रसंज्ञः भवानेव महात्मेत्यनुषङ्गः कौशिकी च तव कुलोद्योतकरी कुलप्रकाशकरी ॥ २१ ॥

२२ ] ति० टी०–प्रशस्तः स्तुतः । 'अस्तंगत इवांशुमान्' इति पाठः ॥ २२ ॥

रा० टी०–इतीति । इति अनेन प्रकारेण तैः प्रसिद्धैः मुनिशार्दूलैः प्रशस्तः संस्तुतः श्रीमान् कुशिकात्मजो विश्वामित्रः अस्तं गतः अंशुमान् सूर्य इव निद्रामुपागमत् ॥ २२ ॥

गो० टी०–इतीति । प्रशस्तः स्तुतः शंसु स्तुतौ "यस्य विभाषा" इति नेट् "अनिदितां–" इति नलोपः श्रीमान् प्रशंसाकृतहर्षजनितश्रीमान् अस्तं गतोंऽशुमानिव तद्वत्परप्रबोधाजनक इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०–सेवते सेवते स्म ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–राम इति । सहसौमित्रिः सौमित्रिसहितः किंचिदागतविस्मयः विश्वामित्रप्रभावश्रवणेन प्राप्तकिंचिद्विस्मयो रामः मुनिशार्दूलं विश्वामित्रं प्रशस्यैव निद्रामुपसेवते प्राप्नोत् "वर्तमानसामीप्ये" इति भूते लट् । किंच आगतविस्मयः आसमन्ताद्भावेन गतो निवृत्तो विस्मयो यस्य किंच अ न आगतः प्राप्तो विस्मयो यस्मिन् किंच आगतः प्राप्तः विशिष्टः स्मयः ईषद्धासो यस्य सः । अत्र पक्षेषु किंचिदिति प्रशस्यान्वयि ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–रामोऽपीति । किंचिदागतविस्मयः निद्रापारवश्यादिति भावः समुपसेवते अध्वश्रमवशात् सम्यक् प्राप्तः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१ ] ति० टी०–रात्रिशेषमुपास्य निद्रयातिवाह्य ॥ १ ॥

रा० टी०–उपास्येति । महर्षिभिः सह विश्वामित्रः शोणकूले एव रात्रिशेषमुपास्य उपविश्य शयित्वेत्यर्थः सुप्रभातायां निशायामभ्यभाषत । तुशब्द एवार्थे । द्वितीया "कालाध्वनोः–" इति विहिता ॥ १ ॥

गो० टी०–अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुं पृच्छति पञ्चत्रिंशे–उपास्येत्यादि । उपास्य स्थित्वा शयित्वेति यावत् रात्रिशेषमिति अत्यन्तसंयोगे द्वितीया सुप्रभातायां निवृत्तायामिति यावत् अत्र रात्रिशेषमित्यनुवादात् पूर्वसर्गे गतोऽर्धरात्र इत्यत्र निशीथपरत्वं स्वरसमिति गम्यते । यद्वा रात्रिशेषं ब्राह्मे मुहूर्ते उपास्य परमात्मानमिति शेषः । 'ब्राह्मे मुहूर्त उत्थाय चिन्तयेदात्मनो हितम्' इति स्मृतेः ॥ १ ॥

२–३ ] ति० टी०–गमनाय गमनं कर्तुम् ॥ २ ॥ ३ ॥

रा० टी०–तद्भाषणमेवाह–सुप्रभातेति । हे राम ! निशा सुप्रभाता सुप्रभातत्वं प्राप्ता अत एव पूर्वा संध्या उपलक्षणया तत्संबन्धि कर्म प्रवर्तते प्रवर्तयति उत्थातुं प्रेरयतीत्यर्थः । अतः उत्तिष्ठोत्तिष्ठ ते तुभ्यं भद्रं कल्याणमस्तु गमनाय सांध्यकर्मसमाप्तिपूर्वकगमनं कर्तुमभिरोचय इच्छ ॥ २ ॥

गो० टी०–सुप्रभातेति । गमनाय गन्तुम् "क्रियार्थोपपदस्य–" इति चतुर्थी ॥ २ ॥

रा० टी०–तदिति । तस्य विश्वामित्रस्य तद्वचनं श्रुत्वा पूर्वाह्णिकीं पूर्वाह्णसम्बन्धिनीं क्रियां संध्योपासनादिरूपां कृत्वा गमनं रोचयामास इयेष इदं वाक्यं च उवाच । हशब्दो हर्षद्योतकः ॥ ३ ॥

गो० टी०–तच्छ्रुत्वेति । पूर्वाह्णे भवा पौर्वाह्णिकी ताम् ॥ ३ ॥

१ इति तैरिति गो. रा. पाठः । २ कौशिकात्मज इति रा. पाठः । ३ कृत्वा पौर्वाह्णिकीं क्रियामिति गो. रा. पाठः ।

अयं शोणः शुभजलोऽगाधः पुलिनमण्डितः । कतरेण पथा ब्रह्मन्संतरिष्यामहे वयम् ॥ ४ ॥
एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् । एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥
[ एवमुक्ता महर्षयो विश्वामित्रेण धीमता । पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ]
ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा । जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् । बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७ ॥
तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम् । ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ ८ ॥
हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः । विविशुर्जाह्नवीतीरे शुभा मुदितमानसाः ॥ ९ ॥
विश्वामित्रं महात्मानं परिवार्य समन्ततः । [4]विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ॥
संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ॥ ॥ १० ॥

---

४ ] ति० टी०—अयं शोण इति । शोणैव शोण इति व्यपदिष्टः कतरेण पथा संतरिष्यामह इत्यन्वयः प्रश्नबीजमगाध इति अतलस्पर्श इत्यर्थः ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—अयमिति । हे ब्रह्मन् ! शुभजलः शोभनजलविशिष्टः गाधः अल्पजलः अत एव पुलिनमण्डितः पुलिनैः सिकताभिः मण्डितः शोभितः यः अयं शोणोऽस्ति तं कतरेण पथा मार्गेण वयं संतरिष्यामहे कतरेणेत्युक्त्या तत्र मार्गद्वयेन मनुष्यसंतरणमिति ध्वनितम् । एतेन अगाध इति पदच्छेदो न रमणीय इति बोध्यम् ॥ ४ ॥

गो० टी०—अयमिति । गाधः स्वल्पजलः अत एव पुलिनमण्डितः सैकतालंकृतः तथा च नावं विना गन्तुं शक्यते कतरेण पथा सन्तरिष्यामहे ॥ ४ ॥

५–६ ] ति० टी०—उद्दिष्टो गन्तव्यत्वेन निश्चितः ॥५॥६॥

रा० टी०—एवमिति । एवमनेन प्रकारेण रामेणोक्तो विश्वामित्रः इदं वचनमब्रवीत् । तद्वचनमेवाह येन पथा महर्षयो यान्ति स पन्था मयैव उद्दिष्टः बोधितः तेनानेनैव मार्गेण गन्तव्यमिति ध्वनितम् । तुशब्द एवार्थे ॥ ५ ॥

गो० टी०—एवमिति । उद्दिष्टः गन्तव्यत्वेन निश्चितः ॥५॥

गो० टी०—एवमिति । स्पष्टम् ॥ ६ ॥

रा० टी०—ते इति । तदा विश्वामित्रोक्तोत्तरणोत्तरकाले ते विश्वामित्रोक्तमार्गेणोत्तीर्णनदाः दूरमध्वानं गत्वा अर्धदिवसे मध्याह्नसमये गते व्यतीते सति सरितां सर्वनदीनां मध्ये श्रेष्ठामत एव मुनिसेवितां जाह्नवीं जह्नुप्रादुर्भूतां गङ्गां ददृशुः ॥ ६ ॥

गो० टी०—त इति । जाह्नवीं गङ्गाम् ॥ ७ ॥

७ ] ति० टी०—सारसः पक्षिविशेषः ॥ ७ ॥

रा० टी०—तामिति । पुण्य सलिलां पुण्योत्पादकसलिलविशिष्टां हंससारससेवितां तां सर्वलोकप्रसिद्धां जाह्नवीं दृष्ट्वा सहराघवाः राघवसहिताः सर्वे मुनयः मुदिताः प्रमोदं प्राप्ता बभूवुः ७॥

गो० टी०—तामिति । सारसो हंसविशेषः ॥ ८ ॥

८ ] ति० टी०—वासपरिग्रहं संमार्जनादिनावासस्थानं चक्रुरित्यर्थः ॥ ८ ॥

रा० टी०—तस्या इति । तदा जाह्नवीदर्शनसमये तस्या जाह्नव्यास्तीरे वासपरिग्रहं वासस्य वासस्थानस्य परिग्रहं स्वीकारं मुदितमानसाः सर्वे चक्रुः ततः वासस्थानस्वीकारानन्तरं यथान्यायं यथाशास्त्रं स्नात्वा पितृदेवताः संतर्प्य च अग्निहोत्राणि हुत्वा च अमृतवद्धविः प्राश्य च महात्मानं विश्वामित्रं समन्ततः परिवार्य शुचौ जाह्नवीतीरे विविशुः स्वस्वस्वीकृतवासस्थाने प्रवेशं चक्रुः । सार्धश्लोकद्वयमेकान्वयि । परिवार्यसमन्ततः इत्यस्मादुत्तरत्र ‘ विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ’ इत्यर्धश्लोकः भट्टसंमतः तत्र विष्ठिता इत्यस्य विशेषेण स्थिता इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

गो० टी०—तस्या इति अर्धम् । आवासाय परिगृह्यत इत्यावासपरिग्रहः तं संमार्जनादिना वासस्थानं चक्रुरित्यर्थः॥९॥

गो० टी०—तत इत्यादि । श्लोकद्वयम् । यथान्यायं यथाशास्त्रं अघमर्षणसूक्तादिजपपूर्वकमित्यर्थः पितृदेवता इति ऋषीणामप्युपलक्षणम् अग्निहोत्राणि अग्नौ होतव्यानि पञ्चमहायज्ञादीनि अमृतवत् अमृततुल्यं हविः यज्ञशिष्टमन्नम् ‘यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्’ इति स्मृतेः शुचौ दृष्टदोषरहिते भोजनस्थानादन्यत्र ॥ १० ॥ ११ ॥

९ ] ति० टी०—अमृतवदमृततुल्यं पञ्चयज्ञाद्यवशिष्टमन्नम् यद्वामृतवत्तत्सदृशं गङ्गाजलं हविश्च प्रागुक्तं प्राश्येत्यर्थः ॥ ९ ॥

१० ] ति० टी०—विष्ठिता विशेषेण स्थिताः यथार्हतः यथावस्थानमर्हतस्तथा स्थितावित्यर्थः ॥ १० ॥

रा० टी०—समिति । अथ उपवेशानन्तरं स हृष्टमना रामो विश्वामित्रमब्रवीत् । तद्वचनमेवाह—भगवन् हे सकलसामर्थ्यविशिष्ट ! त्रिपथगां नदीं गङ्गां श्रोतुमिच्छामि ॥ ११ ॥

गो० टी०—अथेति । अथ उपवेशानन्तरं तत्र देशे तदा तस्मिन्नेव काले द्वितीयोऽथशब्दः प्रश्ने ‘ मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ’ इत्यमरः । गङ्गां गङ्गावृत्तान्तम् ॥ १२ ॥

---

१ अयं श्लोको गो. पुस्तकेऽधिकः । २ ततश्चक्रुस्त आवासेति गो. पाठः । ३ शुचाविति गो. रा. पाठः । ४ इदमर्धं गो. रा. पु. नास्ति । ५ अथ तत्र तदा राम इति गो. पाठः ।

मुदितैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः । निद्रामुपागमच्छ्रीमानस्तंगत इवांशुमान् ॥ २२ ॥
रामोऽपि सहसौमित्रिः किंचिदागतविस्मयः । प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

विश्वामित्ररामसंवादः, रामस्य गङ्गामूलोत्पत्तिश्रवणेच्छा, विश्वामित्रकृतगङ्गोमोत्पत्तिवर्णनं च ।

उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः । निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥
तच्छ्रुत्वा वचनं तस्य कृतपूर्वाह्णिकक्रियः । गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥

यस्य तव भागिनी तव कुलस्य उद्द्योतकर्युद्धारकर्त्री सरितां श्रेष्ठा अनेन सकलजगदुद्धारकत्वं सूचितम् ॥ २१ ॥

रा० टी०–कुशवंश्यानां श्रैष्ठ्यं प्रतिपाद्य तत्रापि विश्वामित्रस्यातिश्रैष्ठ्यं प्रतिपादयन्नाह–विशेषेणेति । हे विश्वामित्र हे महायशः! तस्मिन् कुले भवान् विशेषेण ब्रह्मोपमः ब्रह्मर्षिरेवेत्यर्थः सरिच्छ्रेष्ठा कौशिकी च विशेषेण ब्रह्मोपमा अत एव तव कुलोद्योतकरी त्वत्कुलप्रकाशिका । एवशब्दः तस्मिन्नित्यर्थे ब्रह्मोपमशब्दौ अध्याहृतौ ॥ २१ ॥

गो० टी०–विशेषेणेति । विश्वामित्रः विश्वामित्रसंज्ञः भवानेव महात्मेत्यनुषङ्गः कौशिकी च तव कुलोद्द्योतकरी कुलप्रकाशकरी ॥ २१ ॥

२२ ] ति० टी०–प्रशस्तः स्तुतः । 'अस्तंगत इवांशुमान्' इति पाठः ॥ २२ ॥

रा० टी०–इतीति । इति अनेन प्रकारेण तैः प्रसिद्धैः मुनिशार्दूलैः प्रशस्तः संस्तुतः श्रीमान् कुशिकात्मजो विश्वामित्रः अस्तं गतः अंशुमान् सूर्य इव निद्रामुपागमत् ॥ २२ ॥

गो० टी०–इतीति । प्रशस्तः स्तुतः शंसु स्तुतौ "यस्य विभाषा" इति नेट् "अनिदितां–" इति नलोपः श्रीमान् प्रशंसाकृतहर्षजनितश्रीमान् अस्तं गतोंऽशुमानिव तद्वत्परप्रबोधाजनक इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०–सेवते सेवते स्म ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–राम इति । सहसौमित्रिः सौमित्रिसहितः किंचिदागतविस्मयः विश्वामित्रप्रभावश्रवणेन प्राप्तकिंचिद्विस्मयो रामः मुनिशार्दूलं विश्वामित्रं प्रशस्यैव निद्रामुपसेवते प्राप्नोत् "वर्तमानसामीप्य" इति भूते लट् । किंच आगतविस्मयः आसमन्ताद्भावेन गतो निवृत्तो विस्मयो यस्य किंच अ न आगतः प्राप्तो विस्मयो यस्मिन् किंच आगतः प्राप्तः विशिष्टः स्मयः ईषद्धासो यस्य सः । अत्र पक्षेषु किंचिदिति प्रशस्यान्वयि ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–रामोऽपीति । किंचिदागतविस्मयः निद्रापारवश्यादिति भावः समुपसेवते अध्वश्रमवशात् सम्यक् प्राप्तः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१ ] ति० टी०–रात्रिशेषमुपास्य निद्रयातिवाह्य ॥ १ ॥

रा० टी०–उपास्येति । महर्षिभिः सह विश्वामित्रः शोणकूले एव रात्रिशेषमुपास्य उपविश्य शयित्वेत्यर्थः सुप्रभातायां निशायामभ्यभाषत । तुशब्द एवार्थे । द्वितीया "कालाध्वनोः–" इति विहिता ॥ १ ॥

गो० टी०–अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुं पृच्छति पञ्चत्रिंशे–उपास्येत्यादि । उपास्य स्थित्वा शयित्वेति यावत् रात्रिशेषमिति अत्यन्तसंयोगे द्वितीया सुप्रभातायां निवृत्तायामिति यावत् अत्र रात्रिशेषमित्यनुवादात् पूर्वसर्गे गतोऽर्धरात्र इत्यत्र निशीथपरत्वं स्वरसमिति गम्यते । यद्वा रात्रिशेषं ब्राह्मे मुहूर्ते उपास्य परमात्मानमिति शेषः । 'ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम्' इति स्मृतेः ॥ १ ॥

२–३ ] ति० टी०–गमनाय गमनं कर्तुम् ॥ २ ॥ ३ ॥

रा० टी०–तद्भाषणमेवाह–सुप्रभातेति । हे राम ! निशा सुप्रभाता सुप्रभातत्वं प्राप्ता अत एव पूर्वा संध्या उपलक्षणया तत्संबन्धि कर्म प्रवर्तते प्रवर्तयति उत्थातुं प्रेरयतीत्यर्थः । अतः उत्तिष्ठोत्तिष्ठ ते तुभ्यं भद्रं कल्याणमस्तु गमनाय सांध्यकर्मसमाप्तिपूर्वकगमनं कर्तुमभिरोचय इच्छ ॥ २ ॥

गो० टी०–सुप्रभातेति । गमनाय गन्तुम् "क्रियार्थोपपदस्य–" इति चतुर्थी ॥ २ ॥

रा० टी०–तदिति । तस्य विश्वामित्रस्य तद्वचनं श्रुत्वा पूर्वाह्णिकीं पूर्वाह्णसम्बन्धिनीं क्रियां संध्योपासनादिरूपां कृत्वा गमनं रोचयामास इयेष इदं वाक्यं च उवाच । हशब्दो हर्षद्योतकः ॥ ३ ॥

गो० टी०–तच्छ्रुत्वेति । पूर्वाह्णे भवा पौर्वाह्णिकी ताम् ॥ ३ ॥

१ इति तैरिति गो. रा. पाठः । २ कौशिकात्मज इति रा. पाठः । ३ कृत्वा पौर्वाह्णिकीं क्रियामिति गो. रा. पाठः ।

अयं शोणः शुभजलोऽगाधः पुलिनमण्डितः । कतरेण पथा ब्रह्मन्संतरिष्यामहे वयम् ॥ ४ ॥
एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् । एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥
[ एवमुक्ता महर्षयो विश्वामित्रेण धीमता । पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ]
ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा । जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् । बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७ ॥
तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम् । ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ ८ ॥
हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः । विविशुर्जाह्नवीतीरे शुभा मुदितमानसाः ॥ ९ ॥
विश्वामित्रं महात्मानं परिवार्य समन्ततः । विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ॥
संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ॥ ॥ १० ॥

---

४ ] ति० टी०—अयं शोण इति । शोणैव शोण इति व्यपदिष्टः कतरेण पथा संतरिष्यामह इत्यन्वयः प्रश्नबीजमगाध इति अतलस्पर्श इत्यर्थः ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—अयमिति । हे ब्रह्मन् ! शुभजलः शोभनजलविशिष्टः गाधः अल्पजलः अत एव पुलिनमण्डितः पुलिनैः सिकताभिः मण्डितः शोभितः यः अयं शोणोऽस्ति तं कतरेण पथा मार्गेण वयं संतरिष्यामहे कतरेणेत्युक्त्या तत्र मार्गद्वयेन मनुष्यसंतरणमिति ध्वनितम् । एतेन अगाध इति पदच्छेदो न रमणीय इति बोध्यम् ॥ ४ ॥

गो० टी०—अयमिति । गाधः स्वल्पजलः अत एव पुलिनमण्डितः सैकतालंकृतः तथा च नावं विना गन्तुं शक्यते कतरेण पथा सन्तरिष्यामहे ॥ ४ ॥

५–६ ] ति० टी०—उद्दिष्टो गन्तव्यत्वेन निश्चितः ॥५॥६॥

रा० टी०—एवमिति । एवमनेन प्रकारेण रामेणोक्तो विश्वामित्रः इदं वचनमब्रवीत् । तद्वचनमेवाह येन पथा महर्षयो यान्ति स पन्था मयैव उद्दिष्टः बोधितः तेनानेनैव मार्गेण गन्तव्यमिति ध्वनितम् । तुशब्द एवार्थे ॥ ५ ॥

गो० टी०—एवमिति । उद्दिष्टः गन्तव्यत्वेन निश्चितः ॥५॥

गो० टी०—एवमिति । स्पष्टम् ॥ ६ ॥

रा० टी०—ते इति । तदा विश्वामित्रोक्तोत्तरणोत्तरकाले ते विश्वामित्रोक्तमार्गेणोत्तीर्णनदाः दूरमध्वानं गत्वा अर्धदिवसे मध्याह्नसमये गते व्यतीते सति सरितां सर्वनदीनां मध्ये श्रेष्ठामत एव मुनिसेवितां जाह्नवीं जह्नुप्रादुर्भूतां गङ्गां ददृशुः ॥ ६ ॥

गो० टी०—त इति । जाह्नवीं गङ्गाम् ॥ ७ ॥

७ ] ति० टी०—सारसः पक्षिविशेषः ॥ ७ ॥

रा० टी०—तामिति । पुण्य सलिलां पुण्योत्पादकसलिलविशिष्टां हंससारससेवितां तां सर्वलोकप्रसिद्धां जाह्नवीं दृष्ट्वा सहराघवाः राघवसहिताः सर्वे मुनयः मुदिताः प्रमोदं प्राप्ता बभूवुः ७॥

गो० टी०—ता मिति । सारसो हंसविशेषः ॥ ८ ॥

८ ] ति० टी०—वासपरिग्रहं संमार्जनादिनावासस्थानं चक्रुरित्यर्थः ॥ ८ ॥

रा० टी०—तस्या इति । तदा जाह्नवीदर्शनसमये तस्या जाह्नव्यास्तीरे वासपरिग्रहं वासस्य वासस्थानस्य परिग्रहं स्वीकारं मुदितमानसाः सर्वे चक्रुः ततः वासस्थानस्वीकारानन्तरं यथान्यायं यथाशास्त्रं स्नात्वा पितृदेवताः संतर्प्य च अग्निहोत्राणि हुत्वा च अमृतवद्धविः प्राश्य च महात्मानं विश्वामित्रं समन्ततः परिवार्य शुचौ जाह्नवीतीरे विविशुः स्वस्वस्वीकृतवासस्थाने प्रवेशं चक्रुः । सार्धश्लोकद्वयमेकान्वयि । परिवार्यसमन्ततः इत्यस्मादुत्तरत्र ‘ विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ’ इत्यर्धश्लोकः भट्टसंमतः तत्र विष्ठिता इत्यस्य विशेषेण स्थिता इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

गो० टी०—तस्या इति अर्धम् । आवासाय परिगृह्यत इत्यावासपरिग्रहः तं संमार्जनादिना वासस्थानं चक्रुरित्यर्थः ॥९॥

गो० टी०—तत इत्यादि । श्लोकद्वयम् । यथान्यायं यथाशास्त्रं अघमर्षणसूक्तादिजपपूर्वकमित्यर्थः पितृदेवता इति ऋषीणामप्युपलक्षणम् अग्निहोत्राणि अग्नौ होतव्यानि पञ्चमहायज्ञादीनि अमृतवत् अमृततुल्यं हविः यज्ञशिष्टमन्नम् ‘यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्’ इति स्मृतेः शुचौ दृष्टदोषरहिते भोजनस्थानादन्यत्र ॥ १० ॥ ११ ॥

९ ] ति० टी०—अमृतवदमृततुल्यं पञ्चयज्ञावशिष्टमन्नम् यद्वामृतवत्तत्सदृशं गङ्गाजलं हविश्च प्रागुक्तं प्राश्येत्यर्थः ॥ ९ ॥

१० ] ति० टी०—विष्ठिता विशेषेण स्थिताः यथार्हतः यथावस्थानमर्हतस्तथा स्थितावित्यर्थः ॥ १० ॥

रा० टी०—समिति । अथ उपवेशानन्तरं स हृष्टमना रामो विश्वामित्रमब्रवीत् । तद्वचनमेवाह—भगवन् हे सकलसामर्थ्यविशिष्ट ! त्रिपथगां नदीं गङ्गां श्रोतुमिच्छामि ॥ ११ ॥

गो० टी०—अथेति । अथ उपवेशानन्तरं तत्र देशे तदा तस्मिन्नेव काले द्वितीयोऽथशब्दः प्रश्ने ‘ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ’ इत्यमरः । गङ्गां गङ्गावृत्तान्तम् ॥ १२ ॥

---

१ अयं श्लोको गो. पुस्तकेऽधिकः । २ ततश्चक्रुस्त आवासेति गो. पाठः । ३ शुचाविति गो. रा. पाठः । ४ इदमर्धं गो. रा. पु. नास्ति । ५ अथ तत्र तदा राम इति गो. पाठः ।

भगवञ्छ्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् । त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ ११ ॥
चोदितो रामवाक्येन विश्वामित्रो महामुनिः । वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १२ ॥
शैलेन्द्रो हिमवान्राम धातूनामाकरो महान् । तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ॥ १३ ॥
या मेरुदुहिता राम तयोर्माता सुमध्यमा । नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया ॥ १४ ॥
तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता । उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ॥ १५ ॥
अथ ज्येष्ठां सुराः सर्वे देवकार्यचिकीर्षया । शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १६ ॥
ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् । स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १७ ॥
प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकाङ्क्षिणः । गङ्गामादाय तेऽगच्छन्कृतार्थेनान्तरात्मना ॥ १८ ॥

---

११ ] ति० टी०—गङ्गां श्रोतुम् गङ्गाविषयकं किंचिच्छ्रोतुमित्यर्थः । श्रोतव्यं विषयमाह—त्रैलोक्यमित्यादि ॥ ११ ॥

रा० टी०—श्रवणप्रकारमाह—त्रैलोक्यमिति । त्रैलोक्यमाक्रम्य नदनदीपतिं समुद्रं कथं केन प्रकारेण गता प्राप्ता ॥१२॥

गो० टी०—त्रैलोक्यमिति । त्रैलोक्यमित्यर्धम् ॥ १३ ॥

१२ ] ति० टी०—वृद्धिं त्रैलोक्यव्याप्तिरूपाम् ॥ १२ ॥

रा० टी०—चोदित इति । रामवाक्येन चोदितः प्रेरितो महामुनिर्विश्वामित्रः गङ्गायाः वृद्धिं जलरूपेण त्रिलोकपूरणत्वं जन्मप्रादुर्भावं च वक्तुमेव उपचक्रमे । एवो वार्तान्तरव्यवच्छेदकः ॥ १३ ॥

गो० टी०—चोदित इति । वृद्धिं त्रैलोक्यमित्यनेनोक्तां जन्म गङ्गां श्रोतुमित्युक्तम् ॥ १४ ॥

१३ ] ति० टी०—धातूनां स्वर्णादीनाम् ॥ १३ ॥

रा० टी०—तत्र पूर्वं प्रादुर्भावप्रकारमाह—शैलेन्द्र इत्यादिभिः । हे राम ! धातूनामाकरः महानतिविस्तीर्णः शैलेन्द्रः शैलाधिपतिः यो हिमवान्नाम तस्य भुवि त्रिलोक्यां रूपेणाप्रतिममुपमारहितं कन्याद्वयमासीदिति शेषः ॥ १४ ॥

गो० टी०—शैलेन्द्र इति । धातूनामयस्ताम्रादीनाम् अस्तीति शेषः कन्याद्वयमासीदिति शेषः ॥ १५ ॥

१४ ] ति० टी०—या मेरुदुहिता मेना नाम सा तयोः कन्ययोर्मातेत्यन्वयः ॥ १४ ॥

रा० टी०—येति । हे राम ! या मेरुदुहिता मेरुकन्या सुमध्यमा शोभनकटिमती नाम्ना मेनका मेनकानाम्नी हिमवतः प्रिया नाम प्रसिद्धा पत्नी सैव तयोः हिमवत्कन्ययोर्माता । चशब्दः एवार्थे । ' नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया ' इति भट्टसंमतः पाठः । नाम्नेति तृतीया " प्रकृत्यादिभ्यश्च " इति विहिता ॥ १५ ॥

गो० टी०—येति । या मेरुदुहिता हिमवतः प्रिया पत्नी मनोरमा नाम प्रसिद्धा सा तयोर्मातेत्यन्वयः ॥ १६ ॥

१५ ] ति० टी०—तस्यां मेनायां या ज्येष्ठा हिमवतः सुता कुटिलानाम सेयं गङ्गाभवदित्यर्थः । तस्यैव हिवमतः ॥ १५ ॥

रा० टी०—तस्यामिति । हे राघव ! तस्य प्रसिद्धस्य हिमवतः भार्यायां तस्यां प्रसिद्धायां मेनायां ज्येष्ठा सुता इयं गङ्गाऽभवत् हिमवत एव उमा नाम द्वितीया कन्याऽभूत् ॥१६॥

गो० टी०—कन्याद्वयस्य नामनी दर्शयति—तस्यामिति॥१७॥

१६ ] ति० टी०—देवकार्यं वक्ष्यमाणं भववीर्यधारणम् त्रिपथगां स्वर्गभूपातालमार्गगाम् इदं वर्तमानापदेशेन वरणं चास्याः शिवभार्यात्वाय ॥ १६ ॥

रा० टी०—अथेति । अथ गङ्गाप्रादुर्भावानन्तरं देवतार्थचिकीर्षया देवतानामर्थं स्नानशिवतेजोधारणादि प्रयोजनं तस्य चिकीर्षया संपादनेच्छया सर्वे सुराः त्रिपथगां नदीं गङ्गां शैलेन्द्रं हिमवन्तं वरयामासुः ययाचे " अकथितं च " इति शैलेन्द्रस्य कर्मत्वम् । 'देवकार्यचिकीर्षया' इति भट्टसंमतः पाठः ॥ १७ ॥

गो० टी०—अथेति । देवतार्थचिकीर्षया देवतार्थसंपादनेच्छया प्रयोजनं च स्नानपानादि वक्ष्यमाणसेनापतिजननं वा परदेवतार्चनार्थं वा अत एव स्वपदेनाप्युक्तिः ॥ १८ ॥

१७ ] ति० टी०—धर्मेण कन्यादानधर्मेण स्वच्छन्दपथगामित्यपि वर्तमानापदेशेन स्वेच्छामात्रेण प्रवहादिवायुमार्गगमनशीलाम् ॥ १७ ॥

रा० टी०—ददाविति । हिमवान् लोकपावनीं लोकपावनकर्त्रीं स्वच्छन्दपथगां स्वेच्छाविषयीभूतपथगमनकर्त्रीं गङ्गां तनयां त्रैलोक्यहितकाम्यया धर्मेण ददौ ॥ १८ ॥

गो० टी०—ददाविति । धर्मेण याचका न प्रत्याख्येया इति धर्मेण । जलप्रवाहरूपाया नद्याः कथमाकाशे गमनं तत्राह—स्वच्छन्दपथगामिति । स्वच्छन्दः स्वेच्छा तदायत्तः पन्थाः स्वच्छन्दपथः " ऋक्पूरब्धूः—" इत्यादिना अप्रत्ययः समासान्तः तं गच्छतीति तथा मेघजलवद्धारगतिविशेषेणाकाशेऽपि गतिः संभवतीति भावः ॥ १९ ॥

१८] ति० टी०—त्रिलोकार्थं तारकतो भीतत्रिलोकरक्षकपुत्रोत्पत्त्यर्थमगच्छन् ब्रह्मलोकम् ' तत्र ब्रह्मशापवशाज्जलरूपताप्राप्तिरिति' इत्यादिवामनपुराणोक्तदिशा मध्ये ऊह्यम् वामनपुराणवृत्तान्तस्य प्रायेणात्र प्रत्यभिज्ञानात् एवं हि तत्राख्यायिका—

---

१ नामेति रा. पाठः । २ च मेनका नामेति रा. मनोरमा नामेति गो. पाठः । ३ नाम्नेति गो. पाठः । ४ देवतार्थेति गो. रा. पाठः । ५ कारिण इति गो. रा. पाठः ।

या चान्या शैलदुहिता कन्यासीद्रघुनन्दन । उग्रं सुव्रतमास्थाय तपस्तेपे तपोधना ॥ १९ ॥
उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् । रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २० ॥
एते ते शैलराजस्य सुते लोकनमस्कृते । गङ्गा च सरितां श्रेष्ठा उमादेवी च राघव ॥ २१ ॥
एतत्ते सर्वमाख्यातं यथा त्रिपथगामिनी । खं गता प्रथमं तात गतिं गतिमतां वर ॥
सैषा सुरनदी रम्या शैलेन्द्रतनया तदा । सुरलोकं समारूढा विपापा जलवाहिनी ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

'उमाज्येष्ठा कुटिलानाम हिमवत्कन्या देवैः शिववीर्यधारणाय हिमवन्तं प्रार्थिता तेन दत्तया तया सह देवा ब्रह्मलोकं गत्वा ब्रह्मणे निवेदितवन्तः ब्रह्मणा च 'असमर्थेयं तद्धारणे' इत्युक्ता 'अवश्यं धारयामि' इति कथितवाक्यावज्ञानेन ब्रह्मणा 'जलरूपा भव' इति शप्ता तत्रैव ब्रह्माण्डोर्ध्वकटाहे जलरूपेण लग्ना स्थिता तस्यामेवाग्निना शिववीर्यं क्षिप्तमिति । 'विष्णवङ्घ्रिणा प्रसरता कटाहे भेदितेऽम्बरात् । कुटिला विष्णुपादान्तात्पपाताकुलिता ततः ॥ तस्माद्विष्णुपदी ख्याता' इति वामनपुराणोक्तेरेव ब्रह्माण्डोर्ध्वकटाहे लग्नेति ज्ञायते पतनसमये च ब्रह्माण्डबाह्यजलेन सहैव पतितं तज्जलं ब्रह्मणा कमण्डलुधृतं बाह्यजलं च शिवानन्दबाष्पजातं नारायणात्मकमिति कामिकासंहितादौ स्पष्टम् ततो भगवता पदारोपणे तेनैव कमण्डलुजलेन तत्पादप्रक्षालनं कृत्वा तज्जलं कमण्डलावेव क्षिप्तम् । शंकरसंहितोक्तरीत्या गौरीविवाहोत्तरं लीलया गौर्या पाणिभ्यां शिवनयनाच्छादने कृते शिवेन ललाटनेत्रं प्रकाशितम् ततो भयाद्गौरीपाणिस्वेदजलं स्रुतं तदपि ब्रह्मणा कमण्डलौ स्थापितमित्यप्यत्रोह्यम् गौरीविवाहकथनेन सूचितं च । भगीरथप्रार्थनया च ब्रह्मरूपः सर्वपवित्रजलसमूहस्तस्मै दत्तः सर्वमुक्तजलमुपक्रम्य पुराणेषु भगीरथसंबन्धश्रवणात् । विस्तरस्त्वस्मत्कृतगङ्गामाहात्म्यप्रकाशे द्रष्टव्यः ॥ १८ ॥

रा० टी०—प्रतीति । त्रैलोक्यहितकारिणः ते देवाः गङ्गां त्रिलोकार्थं त्रिलोकीप्रयोजनसाधनसमर्थां प्रतिगृह्य आदाय स्वीकृत्य कृतार्थेन अन्तरात्मना मनसा अगच्छन् । त्रिलोकार्थमिति सामान्ये नपुंसकं त्रिलोकार्थं प्रतिगृह्य उद्दिश्येत्यर्थो वा ॥ १९ ॥

गो० टी०—प्रतिगृह्येति । त्रिलोकहितकारिणः देवा इति शेषः । प्रतिगृह्य स्वीकृत्य आदाय स्वेष्वन्तर्भाव्य ॥ २० ॥

१९-२१ ] ति० टी०—कन्या अवृतपतिः अग्रे शिववीर्यस्खलनादि वक्तुं चैतद्वर्णनम् उग्रं सुव्रतं पर्णभोजनस्यापि त्यागसंकल्परूपम् तपः शिवध्यानरूपम् ॥ १९ ॥ २० ॥ २१ ॥

रा० टी०—प्रसङ्गात् हिमवत्कनिष्ठकन्यावृत्तमाह—येति । हे रघुनन्दन ! अन्या कनिष्ठा या शैलदुहिता कन्या अस्वीकृतपतिः आसीत् सा सुव्रतमच्युतसंकल्पमुग्रं शिवमेव आस्थाय स्वपतित्वेन निश्चित्य तपोधना सती तपस्तेपे । चशब्द एवार्थे ॥ २० ॥

गो० टी०—गङ्गावृत्तान्तप्रसङ्गेन तदनुजावृत्तान्तमप्याह—या चेति । कन्या अलब्धभर्तृका ॥ २१ ॥

रा० टी०—उग्रेणेति । शैलवरः शैलश्रेष्ठः हिमवान् उग्रेण अत्युत्कटेन तपसा युक्तां लोकनमस्कृतामुमां सुतामप्रतिरूपाय सादृश्यानुयोगित्वानाक्रान्ताय उग्राय शिवाय ददौ ॥ २१ ॥

गो० टी०—उग्रेणेति । अप्रतिरूपाय अनुकूलाय रुद्रार्थं तपस्यन्तीमुमां प्रसन्नाय तस्मै ददावित्यर्थः ॥ २२ ॥

रा० टी०—उपसंहरन्नाह—एते इत्यादिभिः । हे राघव ! सरितां श्रेष्ठा गङ्गा देवी उमा च एते ते प्रसि एव शैलराजस्य सुते लोकनमस्कृते स्तः इति शेषः । चकारान्तरमेवार्थे ॥ २२ ॥

गो० टी०—उपसंहरति—एते इति ॥ २३ ॥

२२ ] ति० टी०—यथा त्रिपथगामिनी गङ्गा तथा प्रतिपादयामीति शेषः तदेव विवृणोति—खमित्यादि । प्रथमं खं गताकाशमार्गं गता पश्चात्सुरलोकं समारूढाभवत् जलवाहिनी तत्स्वभावा जाता विपापा सकलपापहन्त्री ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—एतदिति । हे राम वर हे सर्वश्रेष्ठ ! त्रिपथगा गङ्गा नदी गतिमतां गतिं खमाकाशं प्रथमं गता एतत्सर्वं ते तुभ्यमाख्यातं कथितम् ॥ २३ ॥

रा० टी०—सैवेति । सुरनदी रम्या अतिरमणीया सा प्रसिद्धा एषा शैलेन्द्रस्य सुता यदा सुरलोकं समारूढा प्राप्ता तदा जलवाहिनी सती विपापा स्नानादिकर्तृसकललोकपापविगतकर्त्री आसीदिति शेषः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—एवं गङ्गोत्पत्तिप्रकारं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरं त्रिपथगामित्वमुच्यत इत्याह—एतदिति । प्रथमं तावत् खं खात्मिकां गतिं गता गतिमतां सुन्दरगतिमताम् ॥ २४ ॥

---

१ सा व्रतमिति गो. पाठः । २ उग्रायेति गो. रा. पाठः । ३ गङ्गेति गो. रा. पाठः । ४ नदीति गो. रा. पाठः । ५ रामेति गो. रा. पाठः । ६ अर्धमिदमधिकं गो. रा. पाठयोः । ७ शैलेन्द्रस्य सुता तदेति गो. पाठः ।

## षट्त्रिंशः सर्गः ।

विश्वामित्रकृतं शिवपार्वतीसुरतवर्णनम्, तत्सुरतस्य कालातीतत्वे देवानां याचनम्, तेन संक्रुद्धोमाया देवानां धरण्याश्च शापः सेनापतिमभीप्सतां देवानां पितामहसमीपे याचनं च ।

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ । प्रतिनन्द्य कथां वीरावूचतुर्मुनिपुङ्गवम् ॥ १ ॥
धर्मयुक्तमिदं ब्रह्मन्कथितं परमं त्वया । दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥
विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसंभवम् ॥ ॥ २ ॥
त्रीन्पथो हेतुना केन प्लावयेल्लोकपावनी । कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ॥ ३ ॥
त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता । तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ॥ ४ ॥
निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् । पुरा राम कृतोद्वाहः शितिकण्ठो महातपाः ॥ ५ ॥

गो० टी०–अथ सुरलोकं च समारूढेत्याह–सैषेति ॥२६॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३६ ॥

१ ] ति० टी०–उक्तवाक्ये इति । उपरते इत्यर्थः ॥१॥

रा० टी०–सामान्यतो गङ्गाकथाश्रवणानन्तरं विशेषं जिज्ञासोः रामस्य प्रश्नं पुनर्वर्णयन्नाह–उक्तेति । तस्मिन् प्रसिद्धे मुनौ उक्तवाक्ये सति वीरौ अतिपराक्रमविशिष्टौ उभौ राघवलक्ष्मणौ कथां हिमवत्कन्यावृत्तान्तमभिनन्द्य प्रशस्य मुनिपुंगवं विश्वामित्रमूचतुः ॥ १ ॥

गो० टी०–'भगवन् श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम्' इति गङ्गायास्त्रिपथगात्वप्रकारे पृष्टे अन्तरिक्षस्वर्गगमनयोः प्रत्युक्तत्वात्तत्र तृतीयपथगमनं कथमित्याशयेन पुनः पृच्छन्तं श्रीरामं प्रत्याह षट्त्रिंशे—उक्तवाक्य इत्यादि । मुनौ उक्तवाक्ये उक्तोत्तरे सति अत्रोभावित्युक्तेः पूर्वसर्गे रामपदं लक्ष्मणस्याप्युपलक्षणं वेदितव्यं कथां पूर्वोक्ताम् ॥ १ ॥

२ ] ति० टी०–वक्तुमर्हसीत्यस्य विस्तरमित्यनेनान्वयः । दिव्यमानुषसंभवं दिव्यलोकनिबन्धनं च ॥ २ ॥

रा० टी०–तद्वचनमेवाह–धर्मेति । ब्रह्मन् हे मुने ! धर्मयुक्तं धर्मनिष्पादकमत एव परममतिश्रेष्ठमिदं शैलसुताचरितं त्वया कथितम् । शैलराजस्य ज्येष्ठायाः पूर्वजायाः दुहितुः कन्याया दिव्यमानुषसंभवं दिव्यलोकमानुषलोकसंबन्धं विस्तरं विस्तारसहितं यतो विस्तरज्ञोऽसि अतस्त्वं वक्तुमर्हसि सार्धश्लोक एकान्वयी । संभवशब्दः संपूर्वकप्राप्त्यर्थकभूधातुप्रकृतिकाबन्तः ॥ २ ॥

गो० टी०–धर्मेति अर्धत्रयम् । धर्मयुक्तं धर्मफलकश्रवणमित्यर्थः इदं वृत्तं ज्येष्ठाया दुहितुः वृत्तं त्वया कथितं तस्या दिव्यमानुषसंभवं दिव्यलोके मानुषलोके च संभवं विस्तरं वक्तुमर्हसि ॥ २ ॥

३ ] ति० टी०–सुसूपितं विस्तरमाह–त्रीनित्यादि । भूर्भुवःस्वर्मार्गानित्यर्थः प्लावयेद्व्याप्नुयात् इत्येको विस्तरः द्वितीयमाह–कथमिति । त्रिपथगेति प्रसिद्धिः किं निबन्धनेति द्वितीयः ॥ ३ ॥

रा० टी०–प्रश्नस्य विशेषाकारमाह–त्रीनिति । लोकपावनी गङ्गा त्रीन् पथः केन हेतुना प्लावयेत् अप्लावयत् ॥ ३ ॥

गो० टी०–त्रीनिति । त्रीन् पथः भूर्भुवःस्वर्मार्गान् केन हेतुना प्लावयेत् प्लुता 'भावयेत्' इत्यपि पाठः लकारव्यत्ययः इतरयोः पूर्वसर्ग एवोक्तत्वात्केन हेतुना तृतीयपथं गतेति द्वितीयप्रश्नार्थः ॥ ३ ॥

रा० टी०–कथमिति । हे धर्मज्ञ ! त्रिपथगा गङ्गा त्रिषु लोकेषु सरिदुत्तमा कथं विश्रुता ख्याता कैः कर्मभिः समन्विता युक्ता आसीदिति शेषः ॥ ४ ॥

गो० टी०–तृतीयप्रश्नमाह–कथमिति । त्रिपथगा गङ्गा कथं विश्रुता कैः कर्मभिः व्यापारैः सरित् उत्तमा आसीत् ॥४॥

४ ] ति० टी०–कर्मभिश्चरितैः समन्वितेति तृतीयः । द्वयोर्हिमवत्कन्ययोः प्रस्तावेऽपि स्ववंशोद्धारकत्वाद्गङ्गाविषयक एव भगवतः प्रश्न इत्यूह्यम् ॥ ४ ॥

रा० टी०–तथेति । काकुत्स्थे रामे तथा तेन प्रकारेण ब्रुवति पृच्छति सति तपोधनो विश्वामित्रः निखिलेन कार्त्स्न्येन विस्तरेणेत्यर्थः सर्वां कथां ऋषिमध्ये न्यवेदयत् अवर्णयत् ॥ ५ ॥

गो० टी०–प्रथमप्रश्नोत्तरमाहेत्याह—तथेति । काकुत्स्थ इति लक्ष्मणस्याप्युपलक्षणं निखिलेन विस्तरेण सर्वां दिव्यसंभवां मानुषसंभवां च ॥ ५ ॥

५ ] ति० टी०–निखिलेन कार्त्स्न्येन विस्तरेणेति यावत् । उद्वाहो विवाहः ॥ ५ ॥

१ अभिनन्द्येति गो. पाठः । २ नीलकण्ठ इति गो. पाठः ।

दृष्ट्वा च भगवान्देवीं मैथुनायोपचक्रमे । तस्य संक्रीडमानस्य महादेवस्य धीमतः ॥
शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ॥ ॥ ६ ॥
न चापि तनयो राम तस्यामासीत्परंतप । सर्वे देवाः समुद्युक्ताः पितामहपुरोगमाः ॥ ७ ॥
यदिहोत्पद्यते भूतं कस्तत्प्रतिसहिष्यति । अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ ८ ॥
देवदेव महादेव लोकस्यास्य हिते रत । सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ ९ ॥
न लोका धारयिष्यन्ति तव तेजः सुरोत्तम । ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ १० ॥
त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय । रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ॥ ११ ॥
देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः । बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाच ह ॥ १२ ॥

रा० टी०—तद्वर्णनमेवाह—पुरेत्यादिभिः । हे राम ! कृतोद्वाहः महातपाः अतिविचारशीलः शितिकण्ठो महादेवः स्पृहया मैथुनेच्छया देवीं दृष्ट्वैव मैथुनाय मैथुनं कर्तुमुपचक्रमे प्रारेभे ॥ ६ ॥

गो० टी०—निखिलेनेत्युक्तं गाङ्गेयसंभवमाह—पुरेति । कृतोद्वाह इति परपरिग्रहव्यावृत्तिः दृष्ट्वा स्पृहया महातपोनिष्ठत्वेऽपि कामबाणवशात् तस्यामभिलाषेण मैथुनाय मिथुनकर्म कर्तुमुपचक्रमे ॥ ६ ॥

६ ] ति० टी०—गतम् क्रीडयेति शेषः ॥ ६ ॥

रा० टी०—तस्येति । शितिः कृष्णत्वं कण्ठे यस्य देवस्य दीप्तिमतः धीमतः परमधैर्यविशिष्टस्य तस्य सर्वलोकप्रसिद्धस्य संक्रीडमानस्य महादेवस्य दिव्यं वर्षशतं गतं व्यतीतम् ॥ ७ ॥

गो० टी०—शितीति । दिव्यं वर्षशतं गतं मैथुनेनैवेति शेषः तनयः तनयप्रापकरेतोविसर्गः ॥ ७ ॥

७ ] ति० टी०—समुद्युक्ताः सेनानीप्राप्त्यर्थं परमयत्नेन रुद्रोमयोः संयोजनं कृत्वापि तस्यां रौद्रतेजसो मोचनं वारयितुं समुद्युक्ता बभूवुरित्यर्थः । 'समुद्विग्नाः' इति पाठस्तु सुगम एव ॥ ७ ॥

रा० टी०—न चेति । हे राम परन्तप ! तस्यां देव्यां तनयः चकारेण तनयापि नासीत् ततः दिव्यवर्षशतक्रीडयापि तनयाभावानन्तरमभूतं दिव्यवर्षशतेऽपि अप्रादुर्भूतं तेजो यदि उत्पद्यते तर्हि तत्तेजः कः प्रसहिष्यते इति विचाररूपहेतोः पितामहपुरोगमाः देवाः समुद्युक्ताः उद्योगं चक्रुः हशब्द इत्यर्थे ॥ ८ ॥

गो० टी०—तत इति । पितामहपुरोगमाः देवाः समुद्विग्ना भीताः पाठान्तरे 'समुद्युक्ताः' उद्योगं चक्रुः किमर्थमिह पार्वत्यां यद्भूतं पुत्रः उत्पद्यते उत्पत्स्यते वर्तमानसामीप्ये वर्तमानवत्प्रयोगः तत् कः प्रतिसहिष्यत इति विचार्य तन्निवर्तनाय समुद्युक्ता इत्यर्थः ॥ ८ ॥

८–९ ] ति० टी०—पुत्रार्थं संयोजनोद्योगवतां तन्निवारणोद्योगोऽनुचितस्तत्राह—यदिहेति । इहोमायाम् उत्पद्यते उत्पत्स्यते अब्रुवन् इति विचार्येत्यादि ॥ ८ ॥ ९ ॥

रा० टी०—तदुद्योगमेवाह—अभिगम्येति । सर्वे सुराः अभिगम्य महादेवसंमुखं प्राप्य प्रणिपत्य नमस्कृत्य इदं वचनमब्रुवन् । तद्वचनमेवाह—हे देवदेव सर्वदेवनियन्तः । अत एव महादेव यतस्त्वमस्य लोकस्य हिते रतः अतः सुराणां प्रणिपातेन सुरकर्तृकप्रणामेन प्रसादं सुरविषयकप्रसन्नतां कर्तुं निष्पादयितुमर्हसि योग्योऽसि ॥ ९ ॥

गो० टी०—तमेवोद्योगमाह—अभिगम्येति । महादेवमिति शेषः ॥ ९ ॥

गो० टी०—देवदेवेति । देवदेवेत्यनेन महादेवशब्दार्थ उक्तः प्रणिपातेन पादमूलपतनेन ॥ १० ॥

१० ] ति० टी०—प्रसादविषयमाह—न लोका इति । भूरादिलोकाः तत्स्थप्रजाश्चेत्यर्थः । ब्राह्मेण तपसा ब्रह्मानन्यतालक्षणेन तपसेत्यर्थः ॥ १० ॥

रा० टी०—नेति । हे सुरोत्तम ! तव तेजः त्वत्तेजोजनितसुतं लोका न धारयिष्यन्ति धारयितुं समर्था न भविष्यन्ति अतः ब्राह्मेण वेदबोधितेन तपसा युक्तस्त्वं देव्यासह तपश्चर कुरु क्रीडातो निवर्तस्वेति भावः ॥ १० ॥

गो० टी०—नेति । तेजः तेजःसमुद्भूतपुत्रं न धारयिष्यन्ति न सहिष्यन्ते अतो ब्राह्मेण वेदावगतेन तपसा योगेन युक्तः सन् तदङ्गतया देव्या सह तपश्चर न तेजः पार्वत्यां मोक्तुमर्हसीति भावः ॥ ११ ॥

११–१२ ] ति० टी०—तेजो रेतः तेजस्यात्मनि मत्तेजसि मया धृते को लाभस्तत्राह—रक्ष सर्वानिति । धृत्वेति शेषः । ननु रुद्रेण स्वतेजोधारणे कथं लोकरक्षेति चेच्छृणु । "यदेतत्पुरुषे रेतो भवति आदित्यस्य तद्रूपम्' इति श्रुतेस्तद्रेतोरूपं तेज एवादित्यमण्डलं तद्धृतौ सकलं जगद्रक्षितं भवति, विपर्यये विपर्यय इत्याहुः । तदेवाह—नालोकमिति । आदित्यविनाशे हि सर्वलोकविनाशप्रसङ्ग इति भावः ॥ ११ ॥ १२ ॥

रा० टी०—ननु स्वतेजसैव मत्सुतः स्थास्यति युष्माकं किमकार्यमित्यत आहुः—त्रैलोक्येति । त्रैलोक्यहितकामार्थं लोकत्रयहितेच्छया तेजः अतितेजस्विसुतजनकीभूतं रेतः तेजसि तेजोमयस्वशरीरे धारय सुतं नोत्पादयेत्यर्थः । एनेन तादृशसुतोत्पत्तौ तत्तेजसा सर्वलोकदाहः स्यात् इति वारणे हेतु-

१ स्पृहयेति गो. रा. पाठः । २ तत इति गो. रा. पाठः । ३ समुद्विग्ना इति गो. रा. पा०. । ४ सहिष्यते इति गो. रा. पाठः ।

धारयिष्याम्यहं तेजस्तेजसैव सहोमया । त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १३ ॥
यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् । धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १४ ॥
एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् । यत्तेजः क्षुभितं ह्यद्य तद्धरा धारयिष्यति ॥ १५ ॥
एवमुक्तः सुरपतिः प्रमुमोच महाबलः । तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १६ ॥
ततो देवाः पुनरिदमूचुश्चापि हुताशनम् । आविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १७ ॥
तदग्निना पुनर्व्याप्तं संजातं श्वेतपर्वतम् । दिव्यं शरवणं चैव पावकादित्यसंनिभम् ॥ १८ ॥

ध्वनितः अतः इमान्सर्वाँल्लोकान् रक्ष पुत्रोत्पत्तिनिरोधनद्वारा पालय तत्र हेतुः अलोकं लोकाभावं कर्तुं नार्हसि ॥ ११ ॥

गो० टी०—त्रैलोक्येति । त्रैलोक्यहितमेव कामः काम्यमानः पुरुषार्थः तदर्थं तेजः रेतः तेजसि तेजोमयनिजशरीरे धारय न मुञ्चेत्यर्थः ॥ १२ ॥

रा० टी०—देवतानामिति । सर्वलोकमहेश्वरो महादेवः देवतानां वचः प्रार्थनां श्रुत्वा बाढं भवत्प्रार्थितमङ्गीकृतमित्यब्रवीत् पुनश्च पुनरपि सर्वान्सुरानिदमुवाच । इ प्रसिद्धमेतत् ॥ १२ ॥

गो० टी०—देवतानामिति । सर्वलोकमहेश्वरः सर्वलोकानां परमनियन्ता 'सर्वलोकपितामहः' इति पाठान्तरम् ॥ १३ ॥

१३ ] ति० टी०—धारयिष्यामीति । सहोमयोमापि स्वरजोरूपं तेजोऽग्निं स्वस्वरूपेण तेजसा धारयिष्यति "यदेतत्स्त्रियां लोहितं भवति अग्नेस्तद्रूपम्" इति श्रुतेः । भो त्रिदशाः अनेन तेजोधारणेन पृथिवी चकारात्सर्वो लोकः निर्वाणं सुखं प्राप्नोतु । अन्यथैश्वरतेजोजन्यस्य दुर्धार्यत्वेन दुर्दर्शत्वेन च पृथिव्या लोकस्य च पीडा स्यादिति भावः ॥ १३ ॥

रा० टी०—धारयिष्यामीति । हे त्रिदशाः ! तेजः अक्षुभितवीर्यं तेजसि तेजोरूपशरीरे एव उमया सहैव अहं धारयिष्यामि । अतः पृथिवी तदुपलक्षितसर्वलोकः निर्वाणं भयत्यागजनितसुखमधिगच्छतु प्राप्नोतु । चशब्दो हेत्वर्थे सहोमयेत्युक्त्या अक्षुभितवीर्यनिरोधकरणं शिवस्य अक्षुभितशोणितनिरोधकरणमुमाया इति सूचितम् ॥ १३ ॥

गो० टी०—बाढमित्यङ्गीकृतांशमाह—धारयिष्यामीति । तेजःअक्षुभितांशम् उमया उमाप्यक्षुभितं शोणितरूपं तेजो धारयत्वित्यर्थः पृथिवीशब्देन लोका उच्यन्ते निर्वाणं सुखम् ॥१४॥

१४ ] ति० टी०—दिव्यवर्षशतमोगवशात्स्थानतश्च्युतस्य शुक्रांशस्य धारणासंभवेन तद्धारणसमर्थं मोक्षस्थानं निरूपयन्निवाह—यदिदमिति । स्थानाद्धृदयपुण्डरीकलक्षणात् क्षुभितं चिरकालभोगवशात्स्खलितम् अनुत्तमं देवकार्याहितसमर्थत्वेन सर्वोत्तमं भवत्प्रार्थनयोमामगमनार्हं को धारयिष्यति ॥ १४ ॥

रा० टी०—यदिदमिति । हे सुरसत्तमाः ! अनुत्तमं भवत्कार्यसाधकत्वेनात्युत्तमं स्थानात् क्षुभितं यत् इदं मम तेजस्तत्कः धारयिष्यति इति मे मह्यं ब्रुवन्तु । तुशब्दो हेत्वर्थे भवन्त इति शेषः ॥ १४ ॥

गो० टी०—पुनश्चेदमुवाच हेत्युक्तमंशं दर्शयति—यदिदमिति । स्थानात् रेतःस्थानहृदयसंपुटात् अनुत्तमं दुर्भरं मे मह्यं ब्रुवन्तु ॥ १२ ॥

१५-१६ ] ति० टी०—उत्तरमाहुः—एवमिति । धरा धारयिष्यतीति तस्या अशेषधारणशक्तिमत्त्वादिति भावः ॥१५॥१६॥

रा० टी०—एवमिति । ततः शिवोक्त्यनन्तरमेवमनेन प्रकारेण उक्ताः कथिताः देवाः वृषभध्वजं शिवं प्रत्यूचुः तद्वचनमेवाह यत्तेजः अद्य अस्मिन्काले क्षुभितं तत्तेजः धरा धारयिष्यति अथेत्युक्त्या इतःप्रभृति अधिकं वीर्यं च्युतं चेत् तद्धारणे न कश्चन समर्थो भवितेति ध्वनितम् ॥ १५ ॥

गो० टी०—एवमिति । धरा सर्वधारणशक्तिमती अनेन धरा तद्धारणार्थं देवैः प्रार्थितेति सिद्धम् ॥ १६ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण उक्तः देवैः प्रार्थितो महाबलः सुरपतिः शिवः प्रमुमोच क्षुभितं तेजः तत्याज येन त्यक्तेन तेजसा सगिरिकानना गिरिकाननसहिता पृथिवी व्याप्ता ॥ १६ ॥

गो० टी०—एवमिति । सुरपतिः रुद्रः प्रमुमोच तेज इति सिद्धं येन तेजसा पृथिवी व्याप्ता तत्प्रमुमोच ॥ १७ ॥

१७ ] ति० टी०—पृथिव्यां शुक्रस्य तेजसो धारणार्थमग्रेः पृथिव्यधिपतित्वेन पृथिव्यभिमानित्वात्तं नियुञ्जते—तत इति । पुनःशब्दो वाक्यालङ्कारे हुताशनं देवीक्लेदोऽग्निरूपम् अन्यादृशाग्नेरौद्रतेजःप्रवेशासंभवात् वायुसमन्वित इत्यनेन चालनलक्षणः प्रवेशोपाय उक्तः ॥ १७ ॥

रा० टी०—तत इति । ततः पृथिव्यां तेजोव्याप्त्यनन्तरं देवाः हुताशनमग्निमपीदं पुनरूचुः तद्वचनमेवाह—रौद्रं शिवोद्भूतं महातेजः वायुसमन्वित एव त्वं प्रविश आत्मनि प्रवेशय अन्तर्भावितणिजर्थः । चशब्द एवार्थकः ॥ १७ ॥

गो० टी०—तत इति । ततः पृथिव्यां व्याप्तत्वादेव हेतोः पृथिवी भग्ना भविष्यतीति हुताशनमूचुः पुनरूचुरित्यनेनाग्नेः प्रवेशभीतत्वं गम्यते अग्निचारणहेतुतया वायुसमन्वित इत्युक्तम् ॥ १८ ॥

१८ ] ति० टी०—तदग्निनेति । तदग्निना चालनपूर्वकप्रवेशात्तत्तेजोवद्वं सत्केवलश्वेतपर्वतरूपं जातम् तद्रूपं तेजः प्रवेशवशादेवं तन्मध्यस्थं दिव्यं पावकादित्यसंनिभं शरवणं चाभूत्॥१८॥

१ तेजस्तेजैवेति गो. रा. पाठः । २ तेऽब्रुवंस्तु० तेऽब्रुविति गो. पाठः । ३ महीतले इति गो. पाठः । ४ प्रविशेति गो. पाठः । ५ संजातः श्वेतपर्वत इति गो. रा. पाठः ।

यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः । अथोमां च शिवं चैव देवाः सर्षिगणास्तथा ॥ १९ ॥
पूजयामासुरत्यर्थं सुप्रीतमनसस्तदा । अथ शैलसुता राम त्रिदशानिदमब्रवीत् ॥ २० ॥
समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना । यस्मान्निवारिता चाहं संगता पुत्रकाम्यया ॥ २१ ॥
अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ । अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥
[ पत्न्यो न जनयिष्यन्ति अद्यप्रभृतिचात्मजान् । ] ॥ २२ ॥
एवमुक्त्वा सुरान्सर्वाञ्शशाप पृथिवीमपि । अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ २३ ॥

रा० टी०—तदिति । पुनरग्निना व्याप्तं पावकादित्यसन्निभं पावकस्थितादित्यसदृशं तत्तेजः श्वेतपर्वतः संजातः दिव्यं विलक्षणं शरवणं च संजातम् यत्र यस्मिन् शरवणे तदेव तेजः महातेजाः परमतेजस्वी कार्तिकेयो जातः अत एव अग्निसंभव उच्यते इति शेषः कृत्तिकया धृतत्वात्तदपत्यत्वेन कार्तिकेय इति व्यवहारो बोध्यः पावकादित्यसन्निभमित्यनेन यदि आदित्यः पावके स्थितः स्यात् तर्हि तेन सहोपमीयेत इति पर्यवसन्नाभूतोपमालंकारेण तस्यानुपमत्वं ध्वनितम् । सार्धश्लोक एकान्वयी ॥ १८ ॥

गो० टी०—तदिति । अर्धत्रयम् । तत्तेजः अग्निना व्याप्तं सत् श्वेतपर्वतः संजातः ततः कालपरिपाकेन शरवणं च संजातं शराणां वनं शरवणम् "प्रनिरन्तःशर—" इति णत्वम् । शरवणं विशेषयति—यत्रेति । कृत्तिकानामपत्यं पुमान् कार्तिकेयः "स्त्रीभ्यो ढक्" स्तन्यदानात्कृत्तिकापुत्रत्वम् अग्निना धृत्वा मुक्तत्वादग्निसंभवः ॥ १९ ॥

१९ ] ति० टी०—यत्रेति । किंचित्कालं धृतत्वात्कार्तिकेयत्ववदेवाग्निसंभवत्वं बोध्यम् ॥ १९ ॥

रा० टी०—अथेति । तदा स्वप्रार्थितसिद्धिकाले सुप्रीतमनसः सर्षिगणाः ऋषिगणसहिताः देवाः उमां देवीम् अथ मङ्गलं यथा स्यात्तथा अत्यर्थं पूजयामासुः तथैव शिवं च पूजयामासुः । पूर्वमुमां पूजयामासुरित्यनेन उमातः सुरा भीता इति ध्वनितम् तेन देव्याः कोपचेष्टा जातेति व्यक्तम् ॥ १९ ॥

गो० टी०—अथेति । पूजयामासुः मैथुनविघ्नकृतकोपशान्त्यर्थमित्यर्थः ॥ २० ॥

२० ] ति० टी०—सुप्रीतमनसो लोकानुग्रहाय मूलतेजसो धृतत्वाद्देवकार्याय स्कन्नतेजसश्च दत्तत्वात्संतोषः । क्रियमाणामपि पूजामुमादेवी नाङ्गीकरोति स्म, प्रत्युत क्रुद्धैवाभूदित्याह—अथ शैलेति ॥ २० ॥

रा० टी०—अथेति । हे राम ! अथ देवकृतपूजानन्तरं समन्युः मन्युसहिता अत एव संरक्तलोचना शैलसुता सर्वान् त्रिदशानिदमब्रवीत् किमब्रवीदित्यत आह—अशपत् शापमदात् ॥ २० ॥

गो० टी०—अथेति । अब्रवीदित्येतद्विविच्योच्यते—अशपदिति ॥ २१ ॥

२१ ] ति० टी०—किमब्रवीत्तदाह—अशपदिति । शापरूपं वचोऽब्रवीदित्यर्थः । मन्युकारणमाह—यस्मादिति ॥ २१ ॥

रा० टी०—शापस्वरूपं वर्णयन्नाह—यस्मादिति । पुत्रकाम्यया संगतिः सम्यक् गतिः पतिसंयोगो यस्याः सा अहं यस्मात् हेतोर्निवारिता भवद्भिः त्याजितपत्यत्यन्तसंयोगा तस्मात् अद्यप्रभृति इतः कालादारभ्य स्वेषु दारेषु अपत्यमुत्पादयितुं यूयं नार्हथ अत एव युष्माकं पत्नयः पत्न्यः अप्रजाः सन्तु । शापेन औरसपुत्रोत्पत्तिं संनिवार्य क्षेत्रजपुत्रोत्पत्तिं निवारयन्ती आह—अद्यप्रभृति युष्माकं पत्न्यः आत्मजान् पुत्रान्नैव जनयिष्यन्ति पत्यन्तरादपि नोत्पादयिष्यन्तीत्यर्थः । चशब्द एवार्थे । द्वयोरेकत्रान्वयः । पत्न्यो न जनयिष्यन्तीति श्लोकार्धं भट्टटीकाङ्कितपुस्तकेषु न दृश्यते तत्र हेतुर्लेखकप्रमादो बोध्यः । अत्र शापेन देवपुत्रनिवारणमेव कृतमित्यनेन पुत्रोत्पादनार्थमेव पार्वत्या रतिः न तु सुखार्थमिति ध्वनितम् तेन तस्याः परमानन्दस्वरूपता व्यक्ता ॥ २१ ॥ २२ ॥

गो० टी०—यस्मादिति । पुत्रकाम्यया मया संगतिः भर्तृसंयोगो मैथुनरूपः सा यस्मान्निवारिता तस्माद्यूयमपि स्वेषु दारेषु अपत्यं पुत्रं नोत्पादयिष्यथ ॥ २२ ॥

२२ ] ति० टी०—शापस्वरूपमाह—अपत्यमित्यादि ॥ २२ ॥

गो० टी०—अथेति । पूर्वार्धेन पूर्वश्लोकपठितमुच्यते पत्नय इत्यार्षं ह्रस्वत्वम् ॥ २३ ॥

२३ ] ति० टी०—एवमुक्त्वा शपथरूपं वच इति शेषः । हे अवने पृथ्वि ! नैकरूपा एकत्रैव क्षेत्रेऽनेकबीजफलजनकत्वात् बहुभार्याऽनेकभूपतिभोग्या ॥ २३ ॥

रा० टी०—रतिनिवारणसाक्षात्कारणभूतान्सुरान् शप्त्वा वीर्यधारणस्वीकारकर्तृत्वेन कारणीभूतां पृथ्वीमपि शशापेति वर्णयन्नाह—एवमिति । एवमनेन प्रकारेण सर्वान् सुरान् उक्त्वा शप्त्वेत्यर्थः पृथिवीमपि शशाप । तत् शापस्वरूपं वर्णयन्नाह—हे अवने ! बहुभार्या अनेकवीरभोग्या त्वं भविष्यसि नैकरूपा ऊषराद्यनेकरूपवती च भविष्यसि । विनापि चं समुच्चयः ॥ २३ ॥

गो० टी०—अवन इति । सार्धश्लोकः । नैकरूपा ऊषरत्वादिरूपेण नानाविधा बहुभार्या बहूनां राज्ञां भार्या मम पुत्रम-

१ तदेति गो. पाठः । २ तत इति गो. पाठः । ३ चैवेति गो. पाठः । ४ संगतिरिति गो. रा. पाठः । ५ तस्मान्नोत्पादयिष्यथेति गो. पाठः । ६ अधिकमेतदर्धं रा. पाठे ।

न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता । प्राप्स्यसे त्वं सुदुर्मेधो[1] मम पुत्रमनिच्छती ॥ २४ ॥
तान्सर्वान्पीडितान्[2]दृष्ट्वा सुरान्सुरपतिस्तदा । गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २५ ॥
स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः । हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २६ ॥
एष ते विस्तरो राम शैलपुत्र्या निवेदितः । गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मण ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

विस्तरेण कार्तिकेयोत्पत्तिवर्णनम् ।

तप्यमाने तदा[3] देवे सेन्द्राः साग्निपुरोगमाः । सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥

निच्छती अनिच्छन्ती त्वं मत्क्रोधेन शापरूपेण कलुषीकृता विपर्यस्तप्रकृतिः सती पुत्रकृतां प्रीतिं न प्राप्स्यसीति भावः ॥२४॥

२४ ] ति० टी०—न च पुत्रकृतां प्रीतिम् वराहादुत्पन्नस्यापि नरकासुरस्य भौमस्य कृष्णावतारे तेनैव हननात् । सुदुर्मेध इति " नित्यमसिच्प्रजामेधयोः" इत्यसिच् । सुतरां दुष्टा मेधा यस्यास्तत्संबोधनं सुदुर्मेधः ! मम पुत्रमनिच्छती तेजोधारणानुमत्या यथेपा तत्तेजोधारणं नानुमन्येत तर्हि स पुत्रो ममैव स्यादित्याशयः ॥ २४ ॥

रा० टी०—शापान्तरमाह—न चेति । हे सुदुर्मेधे ! मम पुत्रमनिच्छती अत एव मत्क्रोधकलुषीकृता त्वं पुत्रकृतां प्रीतिं नैव प्राप्स्यसि । चशब्द एवार्थे ॥ २४ ॥

२५ ] ति० टी०—पीडितान्देवीशापदुःखितान् । उपचक्राम पादन्यासं कृतवान् ॥ २५ ॥

रा० टी०—तानिति । तदा शापोत्तरकाले सुरपतिः शिवः व्यथितान् शापेन दुःखितान् तान् सर्वान्सुरान्दृष्ट्वा वरुणपालितां दिशं पश्चिमां गमनाय गमनं कर्तुमुपचक्राम ॥२५॥

गो० टी०—तानिति । सुरपतिः रुद्रः तान्सुरान् स्वकीयशापेन व्रीडितान् लज्जितान् दृष्ट्वा प्रियाशापस्य दुष्परिहरत्वात् स्वीयशापदुःखस्य द्रष्टुमशक्यत्वाच्च वरुणपालितां दिशं हिमवतः प्रतीचीं प्रति गमनायोपचक्राम परस्मैपदमार्षम् ॥२५॥

२६ ] ति० टी०—तस्य गिरेर्हिमालयस्योत्तरपार्श्वे हिमवत्प्रभवाख्ये शृङ्गे ॥ २६ ॥

रा० टी०—स इति । स महेश्वरः महादेवः तस्य हिमालयस्य गिरेः उत्तरे पार्श्वे हिमवत्प्रभवे हिमवत्प्रभवाख्यशृङ्गे देव्या सह गत्वा तपः आतिष्ठत ॥ २६ ॥

गो० टी०—स इति । हिमवत्प्रभवे तस्य हिमवतो गिरेरुत्तरपार्श्वभूते शृङ्गे देव्या सह तप आतिष्ठत् सदा तपोव्रतमेसंकल्पयदित्यर्थः[4] ॥ २६ ॥

२७ ] ति० टी०—उपसंहरति—एष इति । त्रिषु लोकेषु धर्मज्ञकर्मभिः कैः समन्वितेति प्रश्नोत्तरतया वक्तव्यस्य धारणरूपगङ्गाचरितस्य शेषतया शैलपुत्र्या विस्तारो निवेदितः । प्रकृतं प्रश्नोत्तरं वक्तुं प्रतिजानीते—गङ्गाया इति । प्रभवमिति च्छान्दसो ह्रस्वः । ऐशतेजोधारणरूपं प्रभावमित्यर्थः ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०—एष इति । शैलपुत्र्याः कनिष्ठाया एष विस्तरः ते तुभ्यं मया निवेदितः गङ्गाया अपि प्रभवं मे मत्त एव शृणु। चशब्दोऽप्यर्थे ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

गो० टी०—ननु दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि इति पार्वतीवृत्तान्तमुपेक्ष्य गङ्गावैभव एव मया पृष्टे तद्विहायोपेक्षितमेव पार्वतीवृत्तान्तं किमर्थं कथितवानसीति रामस्य शङ्कां परिहरति—एष इति । शैलपुत्र्याः पार्वत्याः संबन्धी कथाविस्तरो निवेदितः वक्ष्यमाणगङ्गावैभवकथनोपयोगित्वेनोक्तः गङ्गायाः प्रभवं प्रभावं त्वं शृणु । चः प्राधान्ये ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

१ ] ति० टी०—देवे शिवे । सेन्द्राः देवा इति शेषः साग्निपुरोगमाः अग्निना पुरोगमेन सहिता इत्यर्थः । 'सेन्द्राः सर्षिगणाः पुरा' इति क्वचित्पाठः ॥ १ ॥

रा० टी०—तपःप्रारम्भानन्तरकालिकं वृत्तमाह—तप्यमान इति । तदा शापोत्तरकाले देवे महादेवे तप्यमाने सेनापतिमभीप्सन्तः वाञ्छन्तः सेन्द्रा इन्द्रसहिता अग्निपुरोगमाः पुरोगमाग्निसहिताः सर्वे देवाः पितामहं ब्रह्माणमुपागमन् तत्समीपं प्रापुः ॥ १ ॥

गो० टी०—अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं तद्दिव्यसंभववैभवमाह सप्तत्रिंशे—तप्यमान इत्यादि । तप्यमाने तपःकर्मकत्वादात्मनेपदकर्मवद्भावौ देवसेनापतित्वं विहाय केवलतपःप्रवण इत्यर्थः ॥ १ ॥

१ मेधे इति गो. रा. पाठः । २ व्रीडितानिति गो. व्यथितानिति रा. पाठः । ३ तपो देवे देवाः सर्षिगणाः पुरा इति गो. पाठः । ४ समकल्पयदिति युक्तम् ।

ततोऽब्रुवन्सुराः सर्वे भगवन्तं पितामहम् । प्रणिपत्य सुरा राम सेन्द्राः साग्निपुरोगमाः ॥ २ ॥
येन[2] सेनापतिर्देवदत्तो भगवता पुरा । स तपः परमास्थाय तप्यते स्म सहोमया ॥ ३ ॥
यदत्रानन्तरं कार्यं लोकानां हितकाम्यया । संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ४ ॥
देवैतानां वचः श्रुत्वा सर्वलोकपितामहः । सान्त्वयन्मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ५ ॥
शैलपुत्र्या यदुक्तं तन्न प्रजाः स्वासु पत्निषु । तस्या वचनमक्लिष्टं सत्यमेवं न संशयः ॥ ६ ॥
इयमाकाशगङ्गा च यस्यां पुत्रं हुताशनः । जनयिष्यति देवानां सेनापतिमरिन्दमम् ॥ ७ ॥
ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् । उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ८ ॥

---

२ ] ति० टी०—अत्र ' सुराः सर्वे ' इति पुनरुक्तमतः पाठान्तरमन्वेषणीयम् । द्वितीयार्धे ' सुराराम ' इति पाठः रामसंबोधनं चैतत् ॥ २ ॥

रा० टी०—तत इति । सर्वे सर्वेषां मुनीनामीर्रीप्सितप्राप्तिः यस्मात् तत्संबोधनं हे सर्व । किञ्च सर्वान् एति स्वप्रकाशत्रह्मद्वारा व्याप्नोति तत्संबोधनम् । सुराः परमदातर्हे राम ! ततः ब्रह्मसमीपप्राप्त्यनन्तरं सेन्द्राः साग्निपुरोगमाः सर्वे सुराः भगवन्तमतिसामर्थ्यविशिष्टं पितामहमब्रुवन् । एतेनात्र सुराः सर्वे इति पुनरुक्तमतः पाठान्तरमन्वेषणीयम् इति भट्टोक्तिश्चिन्त्या उक्तरीत्या पौनरुक्त्यस्पर्शाभावात् यत्तु क्रियाभेदान्न पौनरुक्त्यमिति भूषणकृद्भिरुक्तं तदपि चिन्त्यम् समानकर्तृके क्त्वोऽनुशासनेन पौनरुक्त्यतादवस्थ्यात् ॥ २ ॥

गो० टी०—तत इति । अग्निना पुरोगमेन सहिताः साग्निपुरोगमाः सुराः सर्वे प्रणिपत्य सुराः सर्वे अब्रुवन्निति क्रियाभेदान्न पुनरुक्तिः ॥ २ ॥

३ ] ति० टी०—येन रुद्रेण सेनापतिर्बीजात्मना दत्तः स परमास्थाय परं मौनमङ्गीकृत्य तपस्तप्यतेऽनुतिष्ठति ॥ ३ ॥

रा० टी०—तदुक्तिमेवाह—य इति । देव हे ब्रह्मन् ! नोऽस्मभ्यं यः सेनापतिः भगवता त्वया पुरा पूर्वं दत्तः स उमया पार्वत्या सह परं तपः आस्थाय निश्चित्य तप्यतेस्म ॥ ३ ॥

गो० टी०—यो न इति । भगवता भवता यः सेनापतिरस्मभ्यमादिकाले दत्तः स इदानीमुमया सह तप्यते स्मेति प्रसिद्धौ ॥ ३ ॥

४ ] ति० टी०—अनन्तरं बीजदातुरुपरमानन्तरं यत्कार्यं पुत्राकारसंपत्तये विधेयं तत्संविधत्स्व ॥ ४ ॥

रा० टी०—यदिति । अत्र सेनापतिनियोगविषये लोकानां हितकाम्यया यत् कार्यं कर्तव्यं तत् अनन्तरं शीघ्रं त्वं संविधत्स्व कुरु । तत्र हेतुः हे विधानज्ञ ! नोऽस्माकं परमा गतिः त्वमेव हिशब्द एवार्थे ॥ ४ ॥

गो० टी०—यदिति । अनन्तरं सेनापतावप्यपरे सति अत्र सैनापतिविषये यत्कार्यं तत्संविधत्स्व आलोचय तमेवाहूय सैनापत्ये निवेशय अन्यं वोत्पादयेत्यर्थः ॥ ४ ॥

५ ] ति० टी०—सान्त्वयन् इष्टकार्यालाभखिन्नानिति शेषः ॥ ५ ॥

रा० टी०—देवानामिति । सर्वलोकपितामहो ब्रह्मा देवानां वचनं श्रुत्वा मधुरैः वाक्यैः त्रिदशान्देवान् सान्त्वयन् इदं वचनमब्रवीत् ॥ ५ ॥

गो० टी०—देवानामिति । सान्त्वयन् उग्रे तपसि वर्तमानस्य तस्य रुद्रस्य निवर्तनमशक्यं तत्र नाभिनिवेशः कार्य इति समाधान इत्यर्थः ॥ ५ ॥

६ ] ति० टी०—यद्यस्माच्छैलपुत्र्या ' अप्रजा भविष्यथः इत्युक्तं तत्तस्माद्युष्माकं स्वासु पत्नीषु न प्रजाः सन्तीति शेष' पत्निष्विति ह्रस्वत्वं छान्दसम् यतस्तस्या वचनमक्लिष्टममोघम् । एवं च ' प्रजास्यथ ' इति पाठकल्पना छान्दसत्वकल्पना च विफलैव ॥ ६ ॥

रा० टी०—तद्वचनमेवाह—शैलपुत्र्येति । स्वासु पत्निषु प्रजाः न उत्पादयितुमर्हथेति शेषः इति शैलपुत्र्या यदुक्तं तस्यास्तद्वचनमक्लिष्टं बाधारहितमत एव सत्यमेव न संशयः अत्र संशयो न कार्य इत्यर्थः एतेन वयं कंचन तेजस्विनं पुत्रमुत्पाद्य सेनापतिं करिष्याम इत्याशा न कर्तव्येति ध्वनितम् पत्निष्विति ह्रस्वश्छान्दसः ॥ ६ ॥

गो० टी०—अन्यं वोत्पादयेत्यत्र प्रतिवक्ति—शैलेति । शैलपुत्र्या पार्वत्या देवानां पत्निषु प्रजा न सन्त्विति यदुक्तं तद्वचनमक्लिष्टममोघं मया सत्यमेवोच्यते अत्र संशयो भवद्भिर्न कर्तव्यः ॥ ६ ॥

७ ] ति० टी०—तर्हि का गतिस्तत्राह—इयमिति । यस्यां हुताशनः पुत्रं जनयिष्यति सेयमाकाशगङ्गा आस्ते इति शेषः ॥ ७ ॥

रा० टी०—ननु तर्हि कः सेनापतिः भविष्यतीत्यत आह—इयमिति । हुताशनो वह्निः यस्यामरिन्दमं देवशत्रूणां नाशकं सेनापतिं पुत्रं जनयिष्यति सा इयमेव आकाशगङ्गा एतेन इयं भवद्भिः पूजनीयेति ध्वनितम् । चशब्द एवार्थे ॥ ७ ॥

गो० टी०—तर्हि का गतिरित्यत्राह—इयमिति । इयं बुद्धिस्था अस्तीति शेषः ॥ ७ ॥

८–९ ] ति० टी०—ज्येष्ठोमा स्वकनिष्ठापत्यत्वात्स्वापत्यवन्मानयिष्यतीत्यर्थ इति कतकः, तत्र पूर्वं गङ्गाया एव ज्येष्ठत्वोक्त्या तेन विरोधात् तस्माज्ज्येष्ठा गङ्गा स्वकनिष्ठोमापत्य-

---

१ सर्वे इति गो. रा. पाठः । २ यो न इति गो. रा. पाठः । ३ देवानां वचनमिति रा. पाठः । ४ यतदिति गो. पाठः । ५ आकाशगा गङ्गेति गो. पाठः ।

तच्छ्रुत्वा वचनं तस्य कृतार्थो रघुनन्दन । प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ ९ ॥
ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ १० ॥
देवकार्यमिदं देव समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ ११ ॥
देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १२ ॥
इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवशीर्यत ॥ १३ ॥
समन्ततस्तदा देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १४ ॥

---

त्वान्मानयिष्यतीत्यर्थः उमाशिवसंयोगेन च्युतरेतोरजोभ्यामुत्पत्तेरुमापत्यत्वमत एवाह–उमाया इति । तत्त्वापत्यसंमाननम् ॥ ८ ॥ ९ ॥

रा० टी०–तस्मिन् शैलसुतोभयपुत्रत्वमिति बोधयन्नाह–ज्येष्ठेति । ज्येष्ठा पूर्वं प्रादुर्भूता शैलेन्द्रदुहिता गङ्गा तं सेनापतिं सुतं मानयिष्यति स्वजलात् उत्पन्नत्वादिति भावः तत् गङ्गामानविषयीभूतमुमायाः बहुमतं शिवसंसर्गजनितस्वरजोहेतुकजनिमत्त्वेनात्यन्तप्रेमविषयीभूतं भविष्यति न संशयः अस्मिन्विषये संशयो न कार्यः एतेन तत्सेनापतेरजेयत्वं सूचितम् ॥ ८ ॥

गो० टी०–कथमिदं गङ्गा संमन्यते कुतो वोमा न कुप्येत्तत्राह–ज्येष्ठेति । तत्सुतमग्नेः सुतं मानयिष्यति बहुमतिपूर्वं जनयिष्यतीत्यर्थः । तदुमाया बहुमतं स्वज्येष्ठायाः प्रीत्यर्थत्वादिति भावः ॥ ८ ॥

रा० टी०–तदिति । हे रघुनन्दन ! तस्य पितामहस्य तद्वचनं श्रुत्वा कृतार्थाः सर्वे सुराः पितामहं प्रणिपत्य अपूजयन् ॥ ९ ॥

गो० टी०–तदिति । कृतार्थाः कृतार्थप्रायाः ॥ ९ ॥

१० ] ति० टी०–कैलासपर्वतं गत्वेत्यन्वयः ॥ १० ॥

रा० टी०–ते इति । हे राम ! सर्वदेवताः सर्वः शिवो विष्णुर्वा देवता येषां ते सर्वदेवाः धातुमण्डितं कैलासपर्वतं गत्वा पुत्रार्थं कर्तव्यसेनापतिसुतप्रसवार्थमग्निं नियोजयामासुः । दन्त्यादिरपि सर्वशब्दः शिववाचकोऽस्तीति कोशादौ प्रसिद्धं विष्णुपरता तु सूतमस्मिन्निखिलमिति व्युत्पत्त्या लब्धा अत एव 'सर्वः शर्वः' इति सहस्रनामोक्तिः संगच्छते एतेन देवताशब्दः पुँल्लिङ्गोऽप्यस्ति 'पुंसि वा देवतास्त्रियाम्' इत्यनुशासनादिति भूषणोक्तिश्चिन्त्या पुंसिवेत्यस्य पूर्वान्वयित्वात् ॥ १० ॥

गो० टी०–त इति । दैवतशब्दः पुँल्लिङ्गोऽप्यस्ति 'दैवतानि पुंसि वा' इत्यनुशासनात् । दग्धरुद्रतेजसोऽग्नेः स्थानं कैलासः पुत्रार्थं पुत्रोत्पादनार्थमग्निमूर्त्यन्तरं दग्धरुद्रतेजःस्थम् ॥ १० ॥

११ ] ति० टी०–समाधत्स्व कुरु महातेज इति संबुद्धिः शैलपुत्र्यां गङ्गायामैशं तेज उत्सृजेत्यन्वयः ॥ ११ ॥

रा० टी०– तन्नियोजनमेवाह–देवकार्यमिति । हे महातेजः देव हुताशन ! इदं देवकार्यं समाधत्स्व त्वं साधय । किंतत् कार्यमित्यत आह–शैलपुत्र्यां गङ्गायां तेजः स्वेन गृहीतं शिवरेतः उत्सृज ॥ ११ ॥

गो० टी०–देवेति । संनिधत्स्व संपादय अस्य विवरणमुत्तरार्धं प्रथमं सामान्येनोक्तिराग्निहृदयज्ञानाय महातेज इति संबोधनं तेजः रेतः ॥ ११ ॥

१२ ] ति० टी०–प्रतिज्ञाय तथा करोमीति प्रतिज्ञाय इदं गर्भधारणं देवतानां प्रियमित्यन्वयः ॥ १२ ॥

रा० टी०–देवतानामिति । पावकः देवतानामग्रे प्रतिज्ञाय भवदुक्तमवश्यं करिष्यामीति प्रतिज्ञां कृत्वा गङ्गामभ्येत्य प्राप्य हे देवि ! गर्भं गर्भकारणीभूतं मया धृतं शिवरेतः धारय स्वस्मिन्संस्थापय तत्र हेतुः देवतानामिदमेव प्रियमिति प्रार्थयामासेति शेषः । वैशब्द एवार्थे ॥ १२ ॥

गो० टी०–देवतानामिति । देवताभ्यस्तथेति प्रतिज्ञायाकाशगङ्गां गत्वा हे देवि ! गर्भं धारय इत्युवाचेति शेषः । किमर्थमित्यत आह–देवतानामिदं प्रियमिति ॥ १२ ॥

१३ ] ति० टी०–दिव्यं रूपमधारयत् स्रोतोरूपं मुक्त्वेति शेषः । तस्या महिमां दिव्यरूपं वैभवम् स ऐश्वरतेजोराशिः पारदोऽवशीर्यत शीर्णः उत्तमस्त्रीदर्शने रसेश्वरस्य तद्ग्रहणायोच्छलनं द्वियोजनपर्यन्तमिति सुप्रसिद्धम् । यद्वा सोऽग्निरवशीर्यत ऐश्वरं तेजस्त्यक्तवानित्यर्थः ॥ १३ ॥

रा० टी०–इतीति । इति अनेन प्रकारेण एतत् वह्निप्रार्थितं वचनं गङ्गा श्रुत्वा दिव्यरूपं प्राकृतविलक्षणमात्मीयस्वरूपमधारयत् प्रकटयामासेत्यर्थः । सः वह्निः तस्याः गङ्गायाः महिमां रूपमहत्त्वं दृष्ट्वा समन्तात् अवकीर्यत स्वेन धारितं शिवतेजः प्राक्षिपत् श्यन्नड्विरहश्चार्षः 'अवशीर्यत' इति भट्टसंमतः पाठः ॥ १३ ॥

गो० टी०–तस्येति । दिव्यरूपं दिव्यस्त्रीवेषं सोऽग्निस्तस्या महिमानं सौन्दर्यातिशयं दृष्ट्वा समन्तात्सर्वावयवेभ्यः अवकीर्यत अवाकिरत् आर्षः श्यन्प्रत्ययः द्रुतवीर्योऽभूत् 'अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्' इतिन्यायात् ॥ १३ ॥

१४ ] ति० टी०–अभ्यषिञ्चतेति रसेश्वरेणेति शेषः स्रोतांसि नाड्यः ॥ १४ ॥

रा० टी०–समन्तत इति । हे रघुनन्दन ! पावकः यत् शिवतेजः समन्ततः देवीमभ्यषिञ्चत् तेन शिवतेजसा गङ्गाया

---

१ पर्वतमिति गो. रा. पाठः । २ तस्य तदिति गो. पाठः । ३ दृष्ट्वा तन्महिमानं स इति गो. पाठः ।

तमुवाच ततो गङ्गा सर्वदेवपुरोगमम् । अशक्ता धारणे देव तेजस्तव समुद्धतम् ॥ १५ ॥
दह्यमानाग्निना तेन संप्रव्यथितचेतना । अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ॥ १६ ॥
इह हैमवते पार्श्वे गर्भोऽयं संनिवेश्यताम् । श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ॥ १७ ॥
उत्ससर्ज महातेजाः स्रोतोभ्यो हि तदानघ । यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ॥ १८ ॥
काञ्चनं धरणीं प्राप्तं हिरण्यमतुलप्रभम् । ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभिजायत ॥ १९ ॥
मलं तस्याभवत्तत्र त्रपु सीसकमेव च । तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २० ॥

सर्वस्रोतांसि पूर्णानि आसन्निति शेषः । अत्र दिव्यस्त्रीरूपस्य रेतस्सिक्तत्वेपि सर्वस्रोतांसि पूर्णानीत्युक्त्या प्रवाहतद्रूपयोरभेदः सूचितः ॥ १४ ॥

**गो० टी०—समन्तत इति** । समन्ततः सर्वावयवेषु अभ्यषिञ्चत रेतः सर्वावयवेषु यथा व्याप्तं भवति तथा सिक्तवानित्यर्थः तेन सर्वस्रोतांसि सर्वावयवाः पूर्णानि व्याप्तानि ॥ १४ ॥

१५ ] **ति० टी०—**पुरोगमः पुरोयायी हितकरश्च । नवाग्रेयेन तेजसा संबन्धात् समुद्धतमत्युग्रं तेजः शैवं यतोऽतस्तस्य धारणेऽहमशक्तेत्यन्वयः ॥ १५ ॥

**रा० टी०—तमिति** । ततः स्रोतसां रेतोव्याप्तत्वानन्तरं सर्वदेवपुरोहितं तमग्निं तेन प्रक्षिप्तेन अग्निना शिवरेतस्तेजसा दह्यमाना अत एव संप्रव्यथितचेतना गङ्गा हे देव ! समुद्धतं प्रवृद्धं यत्तव तेजस्त्वत्प्रक्षिप्तं शिवरेतस्तस्य धारणे अहमशक्तेत्युवाच सार्धश्लोक एकान्वयी । अग्नेः सर्वदेवपुरोहितत्वम् 'अग्निमीळे पुरोहितम्' इत्यादिश्रुत्या प्रसिद्धम् 'सर्वदेवपुरोगमम्' इति भट्टसंमतः पाठः ॥ १५ ॥

**गो० टी०—तमित्यर्धत्रयम्** । तेनाग्निना अग्नितेजसा दह्यमाना अत एव संप्रव्यथितचेतना अतिदुःखितचित्ता गङ्गा सर्वदेवानां पुरोहितम् "अग्निमीळे पुरोहितम्" इति श्रुतेः तमग्निमुवाच । कथं हे देव ! तव तेजः समुद्धतमभिवृद्धं भवति अस्य धारणे अशक्तास्मीति ॥ १५ ॥

१६ ] **ति० टी०—**संप्रव्यथितचेतना अस्मीति शेषः । सर्वदेवहुताशनः सर्वदेवोद्देशेन हुतस्य भक्षकः ॥ १६ ॥

**रा० टी०—अथेति** । अथ गङ्गावचनश्रवणानन्तरं सर्वदेवहुताशनः गङ्गामिदमब्रवीत् । तद्वचनमेवाह—इह अस्मिन् हैमवते पादे पादसदृशे स्थापनयोग्ये तदवयवे इत्यर्थः अयं गर्भः सन्निवेश्यताम् । 'हिमवत्पार्श्वे' इति भट्टसंमतः पाठः ॥ १६ ॥

**गो० टी०—अथेति** । सर्वदेवानां यद्धुतं तदश्नातीति सर्वदेवहुताशनः । पादे प्रत्यन्तपर्वते अग्निदग्धश्वेतपर्वतीकृतरुद्रतेजोराशावित्यर्थः ॥ १६ ॥

१७ ] **ति० टी०—**संनिवेश्यतां स्थाप्यताम् ॥ १७ ॥

**रा० टी०—श्रुत्वेति** । हे अनघ ! स्वाश्रितापघनिवर्तक हे महातेजः ! समाधिकरहिततेजोविशिष्ट ! तदा अग्निकथनसमये अग्निवचः श्रुत्वैव अतिभास्वरमतिप्रकाशमानं तं प्रसिद्धं गर्भं स्रोतोभ्यः उत्थाप्य उत्ससर्ज यथोचितदेशे तत्याज तुशब्द एवार्थे ॥ १७ ॥

**गो० टी०—श्रुत्वेति** । महातेज इति संबोधनं स्रोतोभ्य उत्कृष्येति शेषः ॥ १७ ॥

१८ ] **ति० टी०—**स्रोतोभ्य उत्कृष्य तत्तेजो हिमवत्पार्श्वे उत्ससर्जेत्यन्वयः । यद्यस्मादस्या निर्गतं तत्तस्माद्गङ्गागर्भतो निर्गमात्तत्तेजो जाम्बूनदाकारसुमेरुकन्यापत्यत्वाद्गङ्गायास्तप्तं जाम्बूनदं सुवर्णं तेन समप्रभम् आसीदिति शेषः ॥ १८ ॥

**रा० टी०—यदिति** । अस्याः गङ्गायाः निर्गतं गङ्गया त्यक्तं यत्तेजः तत् तप्तजाम्बूनदप्रभं द्रुतसुवर्णकान्तिकमभिजायत अभ्यजायत तस्मात्तेजसो विभज्य यत् धरणीं प्राप्तं तदपि अमलं काञ्चनं सुवर्णं शुभं हिरण्यं रजतं चाभिजायत तैक्ष्णात् तैक्ष्णस्य अत् प्राप्तिर्यस्मिन् तत् वस्तुजातं ताम्रकार्ष्णायसं चाभिजायत तत्र तस्मिन्समये तस्य तेजस्तैक्ष्णसंबद्धवस्तुजातस्य यन्मलं तत् त्रपु रङ्गं सीसकं च अभवत् द्वयोरेकत्रान्वयः । एकः एवशब्दोऽप्यर्थकः द्वितीयस्त्वर्थकः । अभिजायत इति पाठे तु आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ १८ ॥ १९ ॥

**गो० टी०—यदिति** । अस्याः गङ्गातः निर्गतं यत् शोणितादि धरणीं गतं तस्मात्तप्तजाम्बूनदप्रभं द्रुतस्वर्णविशेषकान्ति काञ्चनममलं शुभं हिरण्यं रजतं च अभवदिति वक्ष्यमाणमनुषज्यते अमलमिति निर्गतविशेषणं वा ॥ १८ ॥

१९ ] **ति० टी०—**अत एव धरणीं प्राप्तं साक्षात्स्वसंबद्धधरणीस्थं वस्तु काञ्चनमकरोत् तत्समीपवर्ति भूसंस्थमतुलप्रभं हिरण्यं रजतमकरोत् । तत्तेजःसंबन्धितैक्ष्ण्यादेव तद्व्यवहितभूस्थं वस्तुजातं ताम्रं कार्ष्णायसं लोहमभिजायत अडभाव आर्षः ॥ १९ ॥

**गो० टी०—ताम्रमिति** । गङ्गातो निर्गतात् तैक्ष्ण्यात् क्षारात् ताम्रं कार्ष्णायसं चाभ्यजायत तस्या गङ्गातः अभवत् निर्गच्छति स्म मलं तत्र भूमौ त्रपुसीसकं चाभ्यजायत कृष्णायसमेव कार्ष्णायसम् ॥ १९ ॥

२० ] **ति० टी०—**तत्तस्य गर्भस्य मलं त्रपु सीसं चाभवत् । अयं भावः—तैक्ष्ण्यमलगन्धयुक्तेन शुद्धेन स्पर्शतो विद्धं स्वर्णम्, गन्धयुक्तेन विद्धं रजतम्, तैक्ष्ण्ययुक्तेन विद्धं ताम्रं लोहं च, मलयुक्तेन विद्धं त्रपुसीसे इति नानाधातुस्तद्रूपम् ॥ २० ॥

१ पुरोहितमिति गो. रा. पाठः । २ पादे इति गो. रा. पाठः । ३ अमलं शुभमिति गो. रा. पाठः । ४ ताम्रकार्ष्णायसमिति रा. पाठः । ५ तैक्ष्णादिति रा. पाठः । ६ अभ्यजायत इति गो. पाठः ।

निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् । सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम् ॥ २१ ॥
जातरूपमिति ख्यातं तदाप्रभृति राघव । सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ॥
[ तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ॥ ] ॥ २२ ॥
तं कुमारं ततो जातं सेन्द्राः सह मरुद्गणाः । क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन्[2] ॥ २३ ॥
ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् । ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः २४ ॥
ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् । पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥ २५ ॥
तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे । स्नापयन्परया लक्ष्म्या दीप्यमानं यथानलम् ॥ २६ ॥

रा० टी०-उपसंहरन्नाह-तदिति । तत्प्रसिद्धमेतद्वर्णितं तेजः धरणीं प्राप्य नाना धातुः सन् अवर्धत ॥ २० ॥

गो० टी०-उपसंहरति-तदिति । तदेतत् गङ्गातो निर्गतम् ॥ २० ॥

२१ ] ति० टी०-न च स्पर्शवेधित्वमेव तस्य अपि तु रूपवेधित्वमपीत्याह-निक्षिप्तेत्यादि । संनद्धं संबद्धम् ॥२१॥

रा० टी०-तेजोराशिविभक्तस्य धरण्यां पतितस्य तेजसः सृष्टिं संवर्ण्य तेजोमयस्य गर्भस्य संबन्धेन यत्सर्जनं तद्वर्णयन्नाह-निक्षिप्तमात्रे इति । गर्भे निक्षिप्तमात्रे सति तेजोभिः गर्भप्रकाशैः अभिरञ्जितं प्रकाशितं पर्वतसंनद्धं पर्वतावयवः सर्वं वनं च सौवर्णमभवत् ॥ २१ ॥

गो० टी०-एवं गर्भोत्सर्जनकाले गङ्गातो निर्गतानां शोणितादीनां सौवर्णादिभावमुक्त्वा गर्भतेजोरञ्जनात् केषांचित्सरणभावमाह-निक्षिप्तेति । गर्भे गङ्गया निक्षिप्तमात्रे तस्य तेजोभिरभिराञ्जितं व्याप्तं पर्वतसन्नद्धं पूर्वोक्तश्वेतपर्वतसहितं सर्वं तद्वनं शरवणं सौवर्णं स्वर्णमयमभवत् ॥ २१ ॥

२२ ] ति० टी०-जातरूपम् रूपेण जातमित्यर्थः ॥२२॥

रा० टी०-जातरूपमिति । हे राघव पुरुषव्याघ्र ! हुताशनसमप्रभं सुवर्णं तदाप्रभृति वनादीनां सुवर्णत्वप्राप्तिकालादारभ्य जातरूपमिति नाम्ना ख्यातं प्रसिद्धं जातं प्रकटीभूतं रूपमपूर्वस्वरूपं यस्येति व्युत्पत्त्येति भावः ॥ २२ ॥

रा० टी०-उपसंहरन्नाह-तृणेत्यर्धेन । सर्वं तृणवृक्षलतागुल्मं काञ्चनं भवति अभवदित्यर्थः पर्वतस्याप्युपलक्षणमिदम् वर्तमानसामीप्येति भूते लट् । इदमर्धं भट्टटीकाङ्कितपुस्तकेषु न दृश्यते ॥ २३ ॥

गो० टी०-जातेति । यदा सुवर्णं जातं तदाप्रभृति हुताशनसमप्रभं सुवर्णं जातं रूपं यस्येति व्युत्पत्त्या जातरूपमिति विख्यातमभूत् ॥ २२ ॥

गो० टी०-उपसंहरति-तृणेति ॥ २३ ॥

२३ ] ति० टी०-तं कुमारमिति । ततो रुद्रतेजसो जातं क्रमेण साकारतां प्राप्तम् क्षीरसंभावनार्थाय क्षीरपानप्रयोजनसिद्धये । कृत्तिकाः कृत्तिकाभिः यद्वा समयोजयान्नित्यस्य प्रैरयन्नित्यर्थः ॥ २३ ॥

रा० टी०-तमिति । ततः गर्भत्यागानन्तरं जातमुत्पन्नं तं प्रसिद्धं कुमारं सेन्द्रा इन्द्रसहिता मरुद्गणा देवाः क्षीरसंभावनार्थाय क्षीरस्य संभावना सम्यक् प्राप्तिः सैव अर्थः प्रयोजनं तस्मै कृत्तिकाः षट्तारकाः सह एककालावच्छेदेन समपूजयन् सत्कारेण क्षीरपायने न्ययोजयन्नित्यर्थः ॥ २४ ॥

गो० टी०-एवं गङ्गयोत्सृष्टस्य गर्भस्य पोषणप्रकारमाह-तमिति । ततः गङ्गोत्सर्जनानन्तरं जातं तं कुमारं मरुद्गणा देवगणाः सह युगपत् क्षीरसंभावनार्थाय क्षीरेण वर्धनप्रयोजनाय कृत्तिकाः समयोजयन् ण्यन्तत्वाद्विकर्मकत्वम् ॥ २४ ॥

२४ ] ति० टी०- अथ ताः कृत्तिका अस्माकं सर्वासां पुत्रो भवत्वित्युत्तमं समयं कृत्वा निश्चितास्तद्विषयकनिश्चयवत्यो जातमात्रस्य तस्य क्षीरं ददुरित्यन्वयः ॥ २४ ॥

रा० टी०-ता इति । ताः स्तन्यपायने नियोजिता अत एव अयमस्माकं सर्वासां पुत्रो भवितेति शेषः इति निश्चिताः षट् कृत्तिकाः उत्तमं सर्वेप्सितत्वेन श्रेष्ठं समयमेककालावच्छेदेन सर्वा वयं पाययिष्याम इति संकेतं कृत्वा जातमात्रस्य क्षीरं ददुः एतेन तस्य षडाननानि जातानीति व्यक्तम् ॥ २५ ॥

गो० टी०-ता इति । कृत्तिकाः अयमस्माकं सर्वासां पुत्रो भवत्विति देवैः सह समयं संकेतं कृत्वा निश्चिताः कृतनिश्चयाः सत्यः जातमात्रस्य तस्य क्षीरं ददुः दातुमुद्युक्ताः ॥ २५ ॥

२५ ] ति० टी०-ततः सर्वदेवता युष्माकमयं पुत्रः कार्तिकेय इति त्रैलोक्यविख्यातो भविष्यति अत्र संदेहो नेति ब्रुवन् अब्रुवन्नित्यर्थः अडभाव आर्षः ॥ २५ ॥

रा० टी०-तत इति । ततः कृतनिश्चयाद्धेतोः सर्वा देवताः कार्तिकेय इति त्रैलोक्यविख्यातः पुत्रः अयं सुतः भविष्यति संशयः अस्मिन् विषये संदेहो न इति ब्रुवन् आगमशासनस्य अनित्यत्वादड्विरहः । इतिशब्दः आवृत्त्या उभयत्रान्वेति ॥२६॥

गो० टी०-तत इति । उक्तविशेषणः पुत्रः कार्तिकेयः कृत्तिकापुत्रो भविष्यति इति ब्रुवन् अब्रुवन् ॥ २६ ॥

२६ ] ति० टी०-तेषां देवानां तत्स्वेष्टानुकूलं वचनं श्रुत्वा स्कन्नमादावीश्वरयोः सकाशात्स्कन्नं पश्चाद्गङ्गाया गर्भात्परिस्रवे सति परया लक्ष्म्या दीप्यमानमनलमिव दुःस्पर्शं दुःस्पर्शतानिवृत्तिप्रयोजनकशैत्यसिद्धये ताः स्नापयन् अस्नापयन्नित्यर्थः ॥ २६ ॥

रा० टी०-तेषामिति । तेषां देवानां तत् स्वेष्टसिद्धिसूचकं वचनं श्रुत्वा गर्भपरिस्रवे गर्भश्च परिस्रवो गङ्गाप्रवाहश्चा-

१ अर्धमेतदाधेकं गो. रा. पाठे । २ समपूजयन्निति गो. रा. पाठः ।

स्कन्द इत्यब्रुवन्देवाः स्कन्नं गर्भपरिस्रवे[1] । कार्तिकेयं महाबाहुं[2] काकुत्स्थ ज्वलनोपमम् ॥ २७ ॥
प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् । षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ २८ ॥
गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा । अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ॥ २९ ॥
सुरसेनागणपतिमभ्यषिञ्चन्महाद्युतिम्[3] । ततस्तममराः सर्वे समेत्याग्निपुरोगमाः ॥ ३० ॥
एष ते राम गङ्गाया विस्तरोऽभिहितो मया । कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ॥ ३१ ॥
भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः । आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

नयोः समाहारः । किंच गर्भोऽन्यायुदर एव स्रवः प्रवाहस्तस्मिन् स्कन्नं प्राप्तमत एव परया उत्कृष्टया लक्ष्म्या शोभयाऽनलमिव दीप्यमानं बालं स्नापयन् षट् कृत्तिका इति शेषः । आगमशास्त्रस्य अनित्यत्वादड्विरहः ॥ २७ ॥

गो० टी०–तेषामिति । कृत्तिकाः गर्भपरिस्रवे गर्भोदके स्कन्नं पतितं स्नापयन् अस्नापयन् गर्भस्रवनिवृत्त्यर्थम् ॥ २७ ॥

२७ ] ति० टी०–ततः स्कन्नपरिस्रुतत्वहेतोः पूर्वं कार्तिकेयत्वेनोक्तं स्कन्द इत्यन्वर्थनाम्नाब्रुवन्नित्यन्वयः स्कन्नपरिस्रुत इत्यर्थे स्कन्द इति पृषोदरादित्वात्साधुः ॥ २७ ॥

रा० टी०–स्कन्द इति । काकुत्स्थ हे राम ! महाभागं ज्वलनोपममग्निसदृशं कार्तिकेयं गर्भपरिस्रवे बहुगर्भे स्कन्नं प्राप्तं बालं स्कन्द इति देवाः अब्रुवन् स्कन्दति बहुगर्भं प्राप्नोति इति व्युत्पत्त्या स्कन्दं प्राहुरित्यर्थः ॥ २८ ॥

गो० टी०–स्कन्द इति । स्कन्नत्वात् स्कन्द इत्यन्वर्थनाम चक्रुरित्यर्थः ॥ २८ ॥

२८ ] ति० टी०–ततः कृत्तिकानां क्षीरं प्रादुर्भूतम् आसीदिति शेषः ततः षण्णामपि स्तनजं पयः क्षुधातिशयेन षडाननो भूत्वा जग्राह ॥ २८ ॥

रा० टी०–प्रादुरिति । षण्णां कृत्तिकानामनुत्तमम् अतिश्रेष्ठं क्षीरं प्रादुर्भूतं ततः क्षीरप्रादुर्भावानन्तरं स्तनजं पयः षडाननो भूत्वा जग्राह कार्तिकेय इति शेषः ॥ २९ ॥

गो० टी०–प्रादुर्भूतमिति । ततः स्नापनानन्तरं षण्णां कृत्तिकानां क्षीरं प्रादुर्भूतं तच्च स्तनजं पयः षडाननो भूत्वा जग्राह ॥ २९ ॥

२९ ] ति० टी०–एवं तदा षड्भिर्मुखैर्यावदपेक्षितं क्षीरं गृहीत्वैकाह्नैकदिनेनैव सुकुमारवपुरपि स्वतेजसैव दैत्यसैन्यगणानजयत् ॥ २९ ॥

रा० टी०–गृहीत्वेति । सुकुमारवपुः विभुः समर्थः कार्तिकेयस्तदा क्षीरग्रहणकाले एकाह्ना एकदिनेन क्षीरं गृहीत्वा स्वेन वीर्येण दैत्यसैन्यगणान् अजयत् ॥ ३० ॥

गो० टी०–गृहीत्वेति । एकाह्नेति टजभावः समासान्तस्यानित्यत्वात् एकदिनेन स्तन्यं पीत्वा क्रमेण सुकुमारवपुरपि दैत्यगणानजयत् ॥ ३० ॥

३० ] ति० टी०–ततः सकलासुरजयाद्धेतोः सर्वेऽग्निपुरोगमा देवाः समेत्य सुरसेनागणपतिं तमभ्यषिञ्चन्नित्यन्वयः ॥ ३० ॥

रा० टी०–सुरेति । ततः असुरजयानन्तरमतुलद्युतिमनुपमप्रकाशं कार्तिकेयमग्निपुरोगमाः अग्निः पुरोगमो येषां ते सुरगणाः समेत्य तत्समीपं प्राप्य सुरसेनागणपतिमभ्यषिञ्चन् सेनापतित्वेनाभिषेकं चक्रुरित्यर्थः ॥ ३१ ॥

गो० टी०–सुरेति । सुरसेनागणपतित्वेनाभ्यषिञ्चन्नित्यर्थः प्रथममभिषेकस्ततो जय इत्यर्थक्रमः ॥ ३१ ॥

३१ ] ति० टी०–उपसंहरति–एष इत्यादिना ॥ ३१ ॥

रा० टी०–एष इति । हे राम ! धन्यः धन्यत्वहेतुः पुण्यः पुण्यत्वहेतुश्च एषः एव गङ्गायाः विस्तरः ते तुभ्यं मया अभिहितः कथितः तथैव धन्यत्वपुण्यत्वहेतुत्वेन तत्सदृश एव कुमारसंभवश्च अभिहितः ॥ ३२ ॥

गो० टी०–एष इति । विस्तरः दिव्यसंभवः । तमेवाह–कुमारेति । एवमेतदाख्यानश्रवणफलमुक्तं धन्य इत्यादिना ॥ ३२ ॥

३२ ] ति० टी०–धन्यत्वपुण्यत्वे विवृणोति–भक्तश्चेति । ऐहलौकिकफलेन धन्यत्वम् आमुष्मिकेन पुण्यत्वम् पुत्रपौत्रैश्चेत्यस्य युक्तः सन् देहत्याग इति शेषः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०–भक्त इति । हे काकुत्स्थ ! भुवि यः कार्तिकेये भक्तः स पुरुषः पुत्रपौत्रैः युक्त एव आयुष्मान् सन् स्कन्दसालोक्यतां व्रजेत् चकारेण यः एतत् शृणुयात् पठेद् वा सोऽपि तत्फलं प्राप्नोतीत्यर्थः चकारान्तरमेवार्थकम् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

गो० टी०–अथ प्रसङ्गात्तद्भक्तिफलमाह–भक्तश्चेति । सलोक एव सालोक्यं स्वार्थे ष्यञ् तस्य भावः सालोक्यता स्कन्दसमानलोकत्वमित्यर्थः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१ परिस्रवादिति गो. पाठः । २ महाभागमिति गो. पाठः । ३ ततस्तमतुलद्युतिम् । अभ्यषिञ्चन्सुरगणा इति गो. रा. पाठः ।

## अष्टात्रिंशः सर्गः ।

विश्वामित्रस्य रामं प्रत्युक्तिः, पौर्वकायोध्यापतिसगरस्योपाख्यानम् ।

तां कथां कौशिको रामे निवेद्य मधुराक्षराम्[1] । पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥
अयोध्याधिपतिर्वीरे[2] पूर्वमासीन्नराधिपः । सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजः ॥ २ ॥
वैदर्भदुहिता राम केशिनी नाम नामतः । ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥
अरिष्टनेमेर्दुहिता[3] सुपर्णभगिनी तु सा । द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४ ॥
ताभ्यां सह महाराजः[4] पत्नीभ्यां तप्तवांस्तपः । हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥
अथ वर्षशते पूर्णे तपसाराधितो मुनिः । सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥ ६ ॥
अपत्यलाभः सुमहान्भविष्यति तवानघ । कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥
एका जनयिता तात पुत्रं वंशकरं तव । षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥

१ ] ति० टी०—अथ त्रीन्पथो हेतुना केनेत्यादिप्रश्नस्योत्तरं वक्तुमाह—तां कथामिति । अपरं वाक्यं वक्ष्यमाणं प्रश्नोत्तरम् ॥ १ ॥

रा० टी०—गङ्गायास्त्रिपथगामिनीत्वं वर्णयितुं कथान्तरमुपाक्रमतेत्याह—तामिति । कौशिकः विश्वामित्रः रामे तां वर्णितां कथां निवेद्य मधुराक्षरं मनोरमाक्षरविशिष्टमपरमन्यद् इदं वाक्यं काकुत्स्थं रामं पुनरप्यब्रवीत् । एवोऽप्यर्थे ॥१॥

गो० टी०—एवं दिव्यसंभवं विस्तरं प्रतिपाद्य मानुषलोकसंभवविस्तरं वक्तुमुपक्रमतेऽष्टत्रिंशे—तामित्यादि । रामे रामाय कौशिकशब्दार्थमाह—कुशिकात्मज इति ॥ १ ॥

२–३ ] ति० टी०—यस्मादप्रजस्तस्मात्प्रजाकामोऽभूदित्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—अयोध्येति । वीर हे राम ! धर्मात्मा धर्मबुद्धिः अप्रजः अनपत्यः प्रजाकामः अपत्यविषयकेच्छाविशिष्टः अयोध्याधिपतिः अयोध्याराजधानीकः स प्रसिद्धः सगरो नाम नराधिपो राजा पूर्वमेवासीत् नामतः प्रसिद्धमेतत् । चशब्द एवार्थे । रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिन इत्यादाविव शब्दार्थयोस्तादात्म्यान्नामसगरशब्दार्थयोरभेदान्वयः ॥ २ ॥

गो० टी०—अयोध्येति । अप्रजः अत एव प्रजाकामः ॥२॥

रा० टी०—वैदर्भेति । हे राम ! धर्मिष्ठा सत्यवादिनी सा प्रसिद्धा केशिनी नाम वैदर्भदुहिता विदर्भराजकन्या ज्येष्ठा सगरपत्नी आसीदिति शेषः नामतः प्रसिद्धमेतत् ॥ ३ ॥

गो० टी०—वैदर्भेति । या वैदर्भदुहिता सा ज्येष्ठपत्न्यासीत् ॥ ३ ॥

४ ] ति० टी०—अरिष्टनेमिः कश्यपः अस्यां सुपर्णभगिनीत्यनुपदप्रयोगात् ॥ ४ ॥

रा० टी०—अरिष्टनेमेरिति । अरिष्टनेमेः कश्यपस्य दुहिता सा प्रसिद्धा सुपर्णभगिनी सुमतिसंज्ञिता द्वितीयापि सगरस्य पत्नी आसीत् तुशब्दोऽप्यर्थे ॥ ४ ॥

गो० टी०—अरिष्टेति । अरिष्टनेमिः काश्यपः ॥ ४ ॥

५–७ ] ति० टी०—भृगुप्रस्रवणे भृग्वधिष्ठितं प्रस्रवणं प्रवाहो यस्मिन् गिरौ हिमवत्पादपर्वते ॥ ५ ॥ ६ ॥ ७ ॥

रा० टी०—ताभ्यामिति । हिमवन्तं समासाद्य प्राप्य भृगौ भृगुशरीरे प्रस्रवणं प्रकृष्टं स्रवणं जलप्रवाहो यस्मात् किंच भृगोः प्रस्रवणमतिप्रचारो यस्मिन् तस्मिन् गिरौ हिमवत्पार्श्ववर्तिभृगुप्रस्रवणसंज्ञकपर्वते इत्यर्थः ताभ्यां पूर्वोक्ताभ्यां पत्नीभ्यां सह महाराजः सगरस्तपस्तप्तवान् ॥ ५ ॥

गो० टी०—ताभ्यामिति । भृग्वधिष्ठितं प्रस्रवणं वारिप्रवाहो यस्मिंस्तथा गिरौ पर्यन्तपर्वते ॥ ५ ॥

रा० टी०—अथेति । अथ तपःप्रारम्भानन्तरं वर्षशते पूर्णे सति तपसा सगरतपश्चर्यया आराधितस्तोषितः सत्यवतां वरो मुनिर्भृगुः सगराय वरं प्रादात् ॥ ६ ॥

गो० टी०—अथेति । वर्षशते पूर्णे तपस्यत इति शेषः ॥६॥

रा० टी०—वरप्रदानमेवाह—अपत्येति । हे अनघ ! सुमहान् अतिप्रशंसनीयोऽपत्यलाभः तव भविष्यति हेपुरुषर्षभ ! लोके अप्रतिमां तुलारहितां कीर्तिं च प्राप्स्यसे ॥ ७ ॥

गो० टी०—अपत्येति । सुबह्वपत्यविषयत्वात्सुमहत्त्वम् । कीर्तिमिति । तेनेति शेषः ॥ ७ ॥

८ ] ति० टी०—तातेत्युपलालने जनयिता जनयिष्यति षष्टिमिति नित्यैकवचनान्तत्वात्सहस्राणीत्यनेन सामानाधिकरण्यम् ॥ ८ ॥

रा० टी०—अपत्यसंख्यां बोधयन्नाह—एकेति । हे तात प्रिय ! एका पत्नी तव वंशकरं पुत्रं एकमित्यर्थः जनयिता अपरा द्वितीया पत्नी षष्टिं पुत्रसहस्राणिजनयिष्यति ॥ ८ ॥

गो० टी०—एकेति । जनयितेति लुट् तातेत्युपलालने ॥८॥

१ मधुराक्षरमिति रा. कुशिकात्मज इति गो. पाठः । २ शूर इति गो. रा. पाठः । ३ नेमिदुहितेति गो. पाठः । ४ तथा राजेति गो. पाठः ।

भाषमाणं नरव्याघ्रं राजपुत्र्यौ प्रसाद्य तम् । ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥
एकः कस्याः सुतो ब्रह्मन्का बहूञ्जनयिष्यति । श्रोतुमिच्छावहे ब्रह्मन्सत्यमस्तु वचस्तव ॥ १० ॥
तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः । उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११ ॥
एको वंशकरो वास्तु बहवो वा महाबलाः । कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२ ॥
मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन । पुत्रं वंशकरं राम जग्राह नृपसंनिधौ ॥ १३ ॥
षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा[२] । महोत्साहान्कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४ ॥
प्रदक्षिणमृषिं कृत्वा शिरसाभिप्रणम्य तम्[३] । जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५ ॥
अथ काले गते तस्मै[४] ज्येष्ठा पुत्रं व्यजायत । असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६ ॥
सुमतिस्तु नरव्याघ्र गर्भतुम्बं व्यजायत । षष्टिः पुत्रसहस्राणि तुम्बभेदाद्विनिःसृता ॥ १७ ॥
घृतपूर्णेषु कुम्भेषु धात्र्यस्तान्समवर्धयन् । कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥

---

९ ] ति० टी०—राजपुत्र्यावित्यत्रच्छत्रिन्यायेन प्रयोगः॥९॥

रा० टी०—भाषमाणमिति । तदा वरप्रदानसमये भाषमाणं वरं ददतं महात्मानं तं प्रसिद्धं भृगुं कृताञ्जलिपुटे प्रणतिसूचकबद्धयुगलकरे परमप्रीते राजपुत्र्यौ क्षत्रियराजवैदर्भद्विजराजकश्यपयोः पुत्र्यौ ऊचतुः राजशब्देनोभयोर्ग्रहणं विनिगमनाविरहात् योग्यत्वाच्च ॥ ९ ॥

गो० टी०—भाषमाणमिति । राजपुत्र्याविति छत्रिन्यायादुक्तं सुमतेः काश्यपपुत्रीत्वात् ॥ ९ ॥

१० ] ति० टी०—इच्छावहे इच्छावः ॥ १० ॥

रा० टी०—तद्वचनमेवाह—एक इति । हे ब्रह्मन् ! तव वचः सत्यमस्तु यस्याः यः पुत्रः तवाभिमतः तस्याः स एव भवत्वित्यर्थः परन्तु कस्या राजपुत्र्या एकः सुतो भविष्यतीति शेषः का राजपुत्री बहून् पुत्रान् जनयिष्यति इति श्रोतुमिच्छावहे आवामिच्छावः ॥ १० ॥

गो० टी०—एक इति । तव वचः सत्यमस्तु यस्या एकमिच्छसि तस्या एकः यस्या बहूनिच्छसि तस्या बहवः सन्त्वित्यर्थः ॥ १० ॥

११ ] ति० टी०—स्वच्छन्दः स्वेच्छा विधीयतां ज्ञाप्यताम् स्वेच्छयैवैकपुत्रता बहुपुत्रता वा व्रियतामिति तात्पर्यम् ॥ ११ ॥

रा० टी०—तयोरिति । तयो राजपुत्र्योस्तद्वचनं श्रुत्वा परमधार्मिको भृगुः परमां रमणीयां वाणीमुवाच । अत्र पुत्रोत्पत्तिविभागविषये स्वच्छन्दः स्वेच्छाचारः विधीयतां क्रियतां यथेच्छं व्रियतामित्यर्थः ॥ ११ ॥

गो० टी०—तयोरिति । अत्र पुत्रविषये स्वच्छन्दः स्वेच्छा विधीयतां ज्ञाप्यताम् ॥ ११ ॥

१२ ] ति० टी०—तदेवाह—एको वंशकरो वेति । वंशकरो वंशवृद्धिहेतुः ॥ १२ ॥

रा० टी०—स्वच्छन्दतां विवृण्वन्नाह—एक इति । वंशकरः एक एव अस्तु महाबला महोत्साहा बहवः कीर्तिमन्त एव वा सन्तु । का वा क्षत्री राजकन्या द्विजराजकन्या वा कं वा वंशकरमेकं पुत्रं कीर्तिमतो बहून् वा पुत्रान् इच्छति इच्छतु एतेन यस्या यत्पुत्रविषयिणीच्छा तस्यास्तत्पुत्रप्राप्तिर्भविष्यतीति ध्वनितं तेन भृगोर्दयालुत्वातिशयः सूचितः एकस्मिन्नेव वंशकरत्वोक्त्या बहूनां वंशकरत्वाभावो ध्वनितः सर्वं वाक्यं सावधारणं भवतीति न्यायेनोभयत्रैवकारलाभः ॥ १२ ॥

गो० टी०—तदेव विवृणोति—एक इति ॥ १२ ॥

१३ ] ति० टी०—नृपसंनिधावित्यनेन तस्यापि साक्षित्वमात्रं न तु वरणानियमकर्तृतेति सूचितम् ॥ १३ ॥

रा० टी०—मुनेरिति । हे रघुनन्दन राम ! मुनेस्तद्वचनं श्रुत्वा वंशकरमेकं पुत्रं नृपसन्निधौ केशिनी वैदर्भदुहिता जग्राह स्वीचकार ॥ १३ ॥

गो० टी०—मुनेरिति । जग्राह वरयामास ॥ १३ ॥

१४–१५ ] ति० टी०—सुपर्णो गरुडः ॥ १४ ॥ १५ ॥

रा० टी०—षष्टिमिति । महोत्साहान् कीर्तिमतः षष्टिं पुत्रसहस्राणि सुतान् सुपर्णभगिनी सुमतिः कश्यपसुता तथा तेन प्रकारेण जग्राह ॥ १४ ॥

गो० टी०—षष्टिमिति । सुपर्णभगिनी गरुडभगिनी॥१४॥

रा० टी०—प्रदक्षिणमिति । हे रघुनन्दन ! ऋषिं भृगुं प्रदक्षिणं कृत्वा शिरसा अभिप्रणम्य च सभार्यः भार्याभ्यां सहितः राजा सगरः स्वपुरं जगाम ॥ १५ ॥

गो० टी०—प्रदक्षिणमिति । ऋषिं भृगुम् ॥ १५ ॥

१६ ] ति० टी०—व्यजायत प्रसूतवती ॥ १६ ॥

रा० टी०—अथेति । अथ स्वपुरप्राप्त्यनन्तरं तस्मिन्प्रसिद्धे काले प्रसूतिसमये गते प्राप्ते सति ज्येष्ठा केशिनी सगरात्मजमसमञ्ज इति ख्यातं पुत्रं व्यजायत प्रासूत असमञ्जस इत्याद्यपूर्विकोऽप्येतद्वाचकोऽस्तीति भागवतात् असमञ्जसवीर्यवानिति वक्ष्यमाणाच्च न विरोधः ॥ १६ ॥

गो० टी०—अथेति । व्यजायत प्रसूतवती ॥ १६ ॥

१७–१८ ] ति० टी०—गर्भतुम्बं तुम्बफलाकारगर्भपि-

---

१ महात्मानमिति गो. रा. पाठः । २ तथेति रा. पाठः । ३ चेति गो. रा. पाठः । ४ तस्मिन्निति गो. रा. पाठः ।

अथ दीर्घेण कालेन रूपयौवनशालिनः। षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥
स च ज्येष्ठो नरश्रेष्ठः[1] सगरस्यात्मसंभवः। बालान्गृहीत्वा तु जले सरय्वा रघुनन्दन ॥ २० ॥
प्रक्षिप्य प्राहसन्नित्यं[2] मज्जतस्तान्निरीक्ष्य[3] वै। एवं पापसमाचारः सज्जनप्रतिबाधकः ॥ २१ ॥
पौराणामहिते युक्तः पित्रा निर्वासितः पुरात्। तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान्॥ २२ ॥
संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः। ततः कालेन महता मतिः समभिजायत ॥ २३ ॥
सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता। स कृत्वा निश्चयं राजा सोपाध्यायगणस्तदा ॥
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

ण्डं व्यजायत प्रसूतवती। कथं ततः पुत्रोदय इत्यत आह–षष्टिरित्यादि ॥ १७ ॥ १८ ॥

रा० टी०–सुमतिरिति। हे नरव्याघ्र! सुमतिः सुमतिनामा कनिष्ठा गर्भतुम्बं तुम्बाकारगर्भं व्यजायत। तुम्बभेदात् तुम्बाकारगर्भस्य भेदनात् षष्टिः पुत्रसहस्राणि विनिःसृताः विनिःसृतानि ॥ १७ ॥

गो० टी०–सुमतिरिति। गर्भतुम्बं वृत्ताकारं गर्भपिण्डम्। कथं ततः पुत्रोदय इत्यत आह–षष्टिरिति। तुम्बभेदात् न तु गान्धार्या इव पश्चाद्विभजनीय इत्यर्थः ॥ १७ ॥

रा० टी०–घृतेति। तान् षष्टिसहस्रसंख्यातसुतान् घृतपूर्णेषु कुम्भेषु धात्र्यः समवर्धयन्। सर्वे पुत्राः महता कालेन यौवनं प्रतिपेदिरे प्रापुः ॥ १८ ॥

गो० टी०–घृतेति। धात्र्याः उपमातरः तान्विभक्ततुम्बान् ॥ १८ ॥

१९ ] ति० टी०–दीर्घेण कालेन यौवनशालित्वे हेतुत्वात्तृतीया ॥ १९ ॥

रा० टी०–अथेति। तदा रूपयौवनप्राप्तिकाले दीर्घेण कालेन रूपयौवनशालिनः प्राप्तरूपयौवनाः अथाभवन् माङ्गलिकस्थितिं प्रापुरित्यर्थः ॥ १९ ॥

गो० टी०–अथेति। दीर्घेण कालेनेति यौवनशालित्वे हेतुत्वात्तृतीया यौवनशालिन इति पुँल्लिङ्गत्वमार्षम् ॥ १९ ॥

२०–२१ ] ति० टी०–ज्येष्ठोऽसमञ्जः बालान्गृहीत्वा जले प्रक्षिप्य मज्जतस्तान्समीक्ष्य नित्यं प्राहसत् 'प्रहसन्' इति पाठे स्थितो भवतीति शेषः। सज्जनप्रतिबाधकः सज्जनपीडकः ॥ २० ॥ २१ ॥

रा० टी०–ज्येष्ठपुत्रवृत्तमाह–स चेति। हे नरश्रेष्ठ रघुनन्दन हे राम! सगरस्यात्मसभवः ज्येष्ठः सोऽसमञ्जसः बालान् गृहीत्वा सरय्वाः सलिले नित्यं प्रक्षिप्य प्रहसन् सन् निमज्जतस्तान्निरीक्षते ॥ २० ॥

गो० टी०–स चेति। अर्धत्रयम्। ज्येष्ठः असमञ्जः प्रहसन् स्थित इति शेषः ॥ २० ॥

रा० टी०–एवमिति। एवमनेन प्रकारेण पापसमाचारः पापाचरणयुक्तः अत एव सज्जनप्रतिबाधकः अत एव पौराणां पुरवासिनामहिते युक्तोऽसमञ्जसः पुरात् पित्रा निर्वासितः निःसारितः ॥ २१ ॥

गो० टी०–एवमिति। निर्वासितः विवास्यते स्म ॥ २१ ॥

२२ ] ति० टी०–निर्वासितो निष्कासितः। तस्यासमञ्जस्य एतद्वाची असमञ्जशब्दोऽदन्तः सान्तश्चेति बोध्यम् ॥ २२ ॥

रा० टी०–तस्येति। असमञ्जसवीर्यवान् असमञ्जसवीर्यसदृशवीर्यविशिष्टः सर्वलोकप्रियंवदः अत एव सर्वलोकस्य संमतः अंशुमान्नाम तस्य असमञ्जसस्य पुत्र आसीदिति शेषः २२॥

गो० टी०–तस्येति। अंशुमान्नाम आसीदिति शेषः ॥ २२ ॥

२३ ] ति० टी०–समभिजायत अडभाव आर्षः ॥ २३ ॥

रा० टी०–तत इति। हे नरश्रेष्ठ! ततः अंशुमदुत्पत्त्यनन्तरं महता कालेन अहं यजेयमिति निश्चिता मतिः सगरस्य समभिजायत आगमशास्त्रस्यानित्यत्वादङ्विरहः ॥ २३ ॥

गो० टी०–तत इति। यजेयमिति निश्चिता मतिः समभिजायत समभ्यजायत ॥ २३ ॥

२४ ] ति० टी०–यज्ञकर्मणीत्यस्य निश्चयं कृत्वेति प्राक्तनेनान्वयः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०–स इति। सोपाध्यायगणसहितः वेदज्ञः निखिलवेदस्य ज्ञाता स प्रसिद्धो राजा सगरः यज्ञकर्मणि निश्चयं कृत्वा तदा यागोचितकाले यष्टुं यागं कर्तुं समुपचक्रमे उपक्रमं चकार ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०–स इति। यज्ञकर्मणि निश्चयं कृत्वा यष्टुं समुपचक्रमे ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

---

१ श्रेष्ठ इति रा. पाठः। २ प्रहसन्निति गो. रा. पाठः। ३ समीक्ष्येति गो. रा. पाठः।

# एकोनचत्वारिंशः सर्गः ।

सगरयज्ञवर्णनम् । इन्द्रेण मायया यज्ञियाश्वापहरणम् । सगराज्ञया तत्पुत्रैः षष्टिसहस्रैर्धरणीविभेदनम् । ततो देवानां प्रजाक्षोभसंभ्रान्तमनसां ब्रह्मणे तन्निवेदनम् ।

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः । उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥
श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् । पूर्वजो मे कथं ब्रह्मन्यज्ञं वै समुपाहरत् ॥ २ ॥
तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितः । विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ॥ ३ ॥
श्रूयतां विस्तरो राम सगरस्य महात्मनः । शंकरश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ ४ ॥
विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् । तयोर्मध्ये समभवद्यज्ञः स पुरुषोत्तमे ॥ ५ ॥
स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि । तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ॥ ६ ॥

---

१ ] ति० टी०—कथान्ते यज्ञोपक्रमकथान्त इत्यर्थः ॥ १ ॥

रा० टी०—रामप्रश्नान्तरं वर्णयन्नाह—विश्वामित्रेत्यादिश्लोकद्वयेन । विश्वामित्रवचः श्रुत्वा कथान्ते कथासिद्धान्तं ज्ञातुं परमप्रीतो रघुनन्दनो दीप्तमनलमिव मुनिमुवाच अन्तति बादं प्रतिबध्नाति स सिद्धान्त इत्यर्थः बन्धनार्थकातिधातोः कर्तरि क्विप् "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । किंच कथान्ते कथावसानकाले विद्यमानं मुनिमित्यन्वयः । श्रुत्वेत्यनेन पुनरुक्तिवारणायैष यत्नः अन्यथा तु पौनरुक्त्यं दुर्वारम् १॥

गो० टी०—अथ रामेण स्वपूर्वकवृत्तान्तप्रस्तावेन कुतूहलात्पृष्टे सति विश्वामित्रेण तदुत्तरकथनमेकोनचत्वारिंशे—विश्वामित्रेत्यादि । कथान्ते यज्ञोपक्रमकथनानन्तरम् ॥ १ ॥

२ ] ति० टी०—इमां यज्ञसंबन्धिनीम् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—श्रोतुमिति । हे ब्रह्मन् ! मे पूर्वकः सगरः यज्ञं कथं केन प्रकारेण समुपाहरत् इमां कथां विस्तरेणैव श्रोतुमिच्छामि ते भद्रं कल्याणमस्तु । वैशब्द एवार्थे । एतेन तां कथयेति सूचितम् ॥ २ ॥

गो० टी०—श्रोतुमिति । इमां यज्ञकथां पूर्वकः मद्वंशकूटस्थः समुपाहरत् कृतवान् ॥ २ ॥

३ ] ति० टी०—प्रहसन्निव विकसितवदनः स्वपूर्वजवृत्तान्ततया श्रवणकौतुकेन रामभद्रस्यायं प्रश्नः अत एव मुनेर्हासः स्ववंश्य इति रामस्यापि लोकवत्स्नेहः संपन्न इति ॥ ३ ॥

रा० टी०—तस्येति । तस्य रघुनाथस्य तत्प्रसिद्धं वचनं प्रश्नवाक्यं श्रुत्वैव कौतूहलसमन्वितो विश्वामित्रः काकुत्स्थं प्रहसन् सन्नेव उवाच । तद्वचनमेवाह—हे राम ! महात्मनः सगरस्य सगरयागस्य विस्तरः श्रूयताम् । इवतुशब्दावेवार्थे ॥ ३ ॥

गो० टी०—विश्वामित्र इति । प्रहसन्निव प्रसन्नवदन इत्यर्थः । स्वविवक्षितस्यैव पृष्टत्वात् प्रहासः अजानन्निव पृष्टवानिति वा विस्तर इति यज्ञस्येति शेषः ॥ ३ ॥

४ ] ति० टी०—सगरस्य सगरयज्ञस्येत्यर्थः ॥ ४ ॥

रा० टी०—शंकरेति । अचलोत्तमः शंकरश्वशुरः हिमवान् नाम विन्ध्यपर्वतमासाद्य प्राप्तीच्छामिव कृत्वा उन्नतत्वेन समत्वं प्राप्येति वा विन्ध्यपर्वतश्च हिमवन्तमासाद्य परस्परं निरीक्षेते। एतेन तयोर्मध्ये तन्निरोधकपर्वतान्तराभावः सूचितः। परस्परशब्दशक्त्या विन्ध्यपर्वतश्चेत्याद्यध्याहृतम् ॥ ४ ॥

गो०, टी०—शंकरेति । विन्ध्यपर्वतमासाद्य मध्ये महागिरिनिरोधाभावात् प्राप्य तथा विन्ध्योऽपि हिमवन्तमित्येवं परस्परमासाद्य वीक्षाविरोधाभावात् निरीक्षेते परस्परं निरीक्षमाणाविव स्थितावित्यर्थः ॥ ४ ॥

५ ] ति० टी०—मध्ये महापर्वतविरोधाभावाद्विन्ध्यपर्वतं हिमवांस्तथा विन्ध्योऽपि हिमवन्तमित्येवं परस्परमासाद्योच्चत्वेन साम्यं प्राप्य औन्नत्यातिशयेन वीक्षानिरोधकाभावात् परस्परं निरीक्षेते पश्यत इत्यर्थः । तयोर्मध्य आर्यावर्तभूमौ 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इति वचनात् ॥ ५ ॥

रा० टी०—तयोरिति । हे नरव्याघ्र ! तयोः विन्ध्यहिमालययोर्मध्ये आर्यावर्त इत्यर्थः पुरुषोत्तमः पुरुषो नराकृतिः परमात्मा उत्तमः पूज्यत्वेन यस्मिन्स यज्ञः प्रवृत्तोऽभूत् हि यतः स देशः यज्ञकर्मणि प्रशस्तः । एतदर्थबोधकं 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इत्यादिवचनान्तरमपि ॥ ५ ॥

गो० टी०—अस्त्वेवं ततः किमित्यत्राह—तयोरिति । हि यस्मात् स देशः यज्ञकर्मणि प्रशस्तः 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इतिवचनात् अतस्तयोर्मध्ये यज्ञः प्रवृत्तोऽभूत् ५

६ ] ति० टी०—प्रशस्तः प्रशस्तत्वेन प्रसिद्धः । उक्तवचनादश्वचर्यारक्षार्थमश्वानुगमनम् ॥ ६ ॥

रा० टी०—तस्येति । हे काकुत्स्थ तात हे राम ! तस्य यज्ञस्य अश्वचर्यां रक्षार्थमश्वसमीपेऽनुगमनं दृढं धनुर्यस्य स महारथः सगरस्य मते संमतौ स्थितोंऽशुमानकरोत् ॥ ६ ॥

गो० टी०—तस्येति । अश्वचर्यामश्वानुचरणं मते आज्ञायाम् ॥ ६ ॥

---

१ पूर्वको इति गो. रा. पाठः । २ अर्धमिदं गो. नास्ति । ३ नाम हिमवानचलोत्तम इति गो. रा. पाठः । ४ प्रवृत्तोऽभूच्च इति गो. रा. पाठः । ५ पुरुषोत्तमः इति रा. पाठः ।

अंशुमानकरोत्तात सगरस्य मते स्थितः । तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ॥ ७ ॥
राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत् । ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे महात्मनः ॥ ८ ॥
उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् । अयं पर्वणि वेगेन यज्ञियाश्वोऽपनीयते ॥ ९ ॥
हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् । यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ॥ १० ॥
तत्तथा क्रियतां राजन्यज्ञोऽच्छिद्रः कृतो भवेत् । सोपाध्यायवचः श्रुत्वा तस्मिन्सदसि पार्थिवः॥ ११॥
षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह । गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ॥ १२ ॥
मन्त्रपूतैर्महाभागैरास्थितोऽपि महाक्रतुः । तद्गच्छथ विचिन्वध्वं पुत्रका भद्रमस्तु वः ॥ १३ ॥

---

७ ] ति० टी०—मते शासने पर्वण्युक्थ्याहे अश्वमेधे उक्थ्यसंस्थात्रयम् तत्र द्वितीयेऽश्वालम्भनदिवसेऽश्वविशसनात्प्राक् तं यज्ञम् विहन्तुमिति शेषः ॥ ७ ॥

रा० टी०—तस्येति । पर्वणि तं यज्ञं यजमानस्य कुर्वतस्तस्य सगरस्य यज्ञियाश्वं राक्षसीं तनुमास्थाय गृहीत्वा वासव इन्द्रोऽपाहरत् ॥ ७ ॥

गो० टी०—तस्येति । तं यज्ञं यजमानस्य तस्य सगरस्य यज्ञियाश्वं यज्ञार्हाश्वं राक्षसीं मायामयीं तनुमास्थाय पर्वणि उक्थ्याहे 'तिथिभेदे क्षणे पर्व' इति निघण्टुः । अपाहरत् अपहृतवान् ॥ ७ ॥

८ ] ति० टी०—यज्ञियाश्वं यज्ञार्हमश्वम् ॥ ८ ॥

रा० टी०—ह्रियमाणे इति । हे काकुत्स्थ हे राम ! महात्मनः सगरस्य तस्मिन् अश्वमेधीये अश्वे ह्रियमाणे सत्येव सर्वे उपाध्यायगणाः यजमानं सगरमथाऽब्रुवन् माङ्गलिकं वचनमुच्चारयामासुः। अथशब्दोऽश्वान्वयी वा । तुशब्द एवार्थे । उपाध्यायगणा अब्रुवन्नित्यनेन अंशुमताश्वहरणं न ज्ञातमिति ध्वनितं तेनेन्द्रस्य चुराभिज्ञत्वं व्यक्तम् ॥ ८ ॥

गो० टी०—ह्रियमाण इति।उपाध्यायगणाः ऋत्विग्गणाः ८

९ ] ति० टी०—अयं यज्ञियोऽश्वः पर्वणि वेगेनापनीयतेऽपह्रियते ॥ ९ ॥

रा० टी०—तद्वचनमेवाह—अयमिति । अयं यज्ञियाश्वः पर्वणि वेगेनैवापनीयते ह्रियते अतो हर्तारमश्वस्य हारकं हे काकुत्स्थ ! जहि ताडय हयः उपनीयतां समीपं प्राप्यतां च । अत्र चोरनामानुक्त्या ऋषीणां सौशील्यातिशयः सूचितः ॥ ९ ॥

गो० टी०—अयमिति । अपनीयते "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥ ९ ॥

१० ] ति० टी०—अतो हर्तारमश्वहर्तारं जहि अश्वश्च शीघ्रमुपनीयताम् । यज्ञच्छिद्रं यज्ञस्य विघ्नः ॥ १० ॥

रा० टी०—अश्वावश्यकग्रहणार्थमश्वहरणे दोषं दर्शयन्त आहुः—यज्ञेति । सर्वेषां यज्ञकर्तॄणां नोऽस्माकमशिवाय अशिवं कर्तुमेतत् यज्ञच्छिद्रं यज्ञविघ्नो भवति । हे राजन् ! तत्तस्मात्कारणात् यथा येन प्रकारेण क्रतुर्यज्ञः अच्छिद्रो विघ्नरहितो भवेत्तथा क्रियतां विधीयतामश्वो गृह्यतामिति भावः ॥ १० ॥

गो० टी०—यज्ञेति । एतद्यज्ञच्छिद्रं यज्ञापराधः 'छिद्रं रन्ध्रापराधयोः' इति वैजयन्ती । सर्वेषां नः अशिवाय भवति तस्मात् क्रतुर्यथा अच्छिद्रो भवेत्तथैव क्रियताम् ॥ १० ॥

११ ] ति० टी०—अच्छिद्र इतिच्छेदः । यथा यज्ञोऽच्छिद्रो भवेदित्यन्वयः । सोपाध्यायवच उपाध्यायसहितर्त्विग्गणवचः ॥ ११ ॥

रा० टी०—सोपाध्यायेति । तस्मिन्प्रसिद्धे सदसि यागसभायां पार्थिवः सगरः सोपाध्यायवचः उपाध्यायसहितऋत्विग्गणवचनं श्रुत्वैव षष्टिं पुत्रसहस्राणि एतत् वाक्यमुवाच । हशब्द एवार्थे ॥ ११ ॥

गो० टी०—उपाध्यायेति । पार्थिवः सगरः ॥ ११ ॥

१२-१३ ] ति० टी०—भो पुरुषर्षभाः पुत्रकाः ! मन्त्रपूतैर्महाभागैर्यद्यपि महाक्रतुरास्थितोऽधिष्ठितः तथापि रक्षसां मायया यदिच्छिद्रं स्यात्तदात्मनो गतिं न पश्यामि । तस्माद्गच्छथ विचिन्वध्वमन्वेषयतेत्यर्थ इति केचित् । परे तु 'आस्थितो हि' इति पाठः हि यस्मादीदृशैर्महाभागैरास्थितोऽयं क्रतुः अतोऽत्र क्रतौ रक्षसां गतिं न पश्यामि तत्तस्मात्केनापि देवेन हृत इति तमन्वेषयतेत्यर्थ इत्याहुः ॥ १२ ॥ १३ ॥

रा० टी०—तद्वचनमेवाह—गतिमिति। हे पुरुषर्षभाः पुत्राः हि यतः मन्त्रपूतैर्महाभागैर्महाक्रतुरास्थितः अतो रक्षसां गतिं गमनं न पश्यामि यागसंलग्नचित्तत्वादश्वं हृत्वा कः क्व गत इति न जानामीत्यर्थः । यद्वा यतो मन्त्रपूतैर्महाक्रतुरास्थितोऽतो रक्षसां गतिमत्रागमनसामर्थ्यं न पश्यामि एतेन यागागमनाधिकारिणा केनचिदश्वोपहृत इति सूचितम् ॥ १२ ॥

गो० टी०—गतिमिति । हे पुत्राः ! हि यस्मान्महाक्रतुः मन्त्रपूतैर्महाभागैरास्थितः अनुष्ठितः तस्माद्रक्षसां गतिमागमनं न पश्यामि प्रसक्त्यभावादिति भावः ॥ १२ ॥

रा० टी०—तदिति । हे पुत्रकाः तत्तस्माद्धेतोः गच्छत इतो यात विचिन्वध्वमश्वान्वेषणं कुरुत । वो भद्रमस्तु । क्व गच्छामेत्यत आह—सर्वां समुद्रमालिनीं पृथिवीमनुगच्छत ॥१३॥

गो० टी०—अतः केन प्रकारेण गतोऽश्व इति विचिनुध्वमित्याह—तदिति । यद्वा अहं कर्मव्यग्रः स्थितः अश्वापहर्तॄणां रक्षसां गतिं गन्तव्यदेशं न पश्यामि । विचिनुध्वमित्याह—

---

१ अर्धमिदं रा. नास्ति । २ यथाच्छिद्रः क्रतुर्भवेदिति गो. रा. पाठः । ३ उपाध्यायेति गो. पाठः । ४ गच्छतेति गो. रा. पाठः ।

समुद्रमालिनीं सर्वां पृथिवीमनुगच्छथ । एकैकं योजनं पुत्रा विस्तारमभिगच्छत ॥ १४ ॥
यावत्तुरगसंदर्शस्तावत्खनत मेदिनीम् । तमेव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १५ ॥
दीक्षितः पौत्रसहितः सोपाध्यायगणस्त्वहम् । इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १६ ॥
ते सर्वे हृष्टमनसो राजपुत्रा महाबलाः । जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १७ ॥
[ गत्वा तु पृथिवीं सर्वामदृष्ट्वा तं महाबलाः ]
योजनायामविस्तारमेकैको धरणीतलम् । बिभिदुः पुरुषव्याघ्रा वज्रस्पर्शसमैर्भुजैः[5] ॥ १८ ॥
शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः । भिद्यमाना वसुमती ननाद रघुनन्दन ॥ १९ ॥
नागानां वध्यमानानामसुराणां च राघव । राक्षसानां दुराधर्षं सत्त्वानां निनदोऽभवत् ॥ २० ॥
योजनानां सहस्राणि षष्टिं तु रघुनन्दन । बिभिदुर्धरणीं राम रसातलमनुत्तमम् ॥ २१ ॥
एवं पर्वतसंबाधं जम्बूद्वीपं नृपात्मजाः । खनन्तो नृपशार्दूल सर्वतः परिचक्रमुः ॥ २२ ॥
ततो देवाः सगन्धर्वाः सासुराः सहपन्नगाः । संभ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २३ ॥
ते प्रसाद्य महात्मानं विषण्णवदनास्तदा । ऊचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २४ ॥

तदिति । समुद्र एव माला आवरणमस्या इति समुद्रमालिनी तामनुगच्छत अन्वेषध्वम् ॥ १३ ॥

**१४ ] ति० टी०—**अनुगच्छथान्वेषयत । थस्य तादेशाभाव आर्षत्वात् ॥ १४ ॥

**गो० टी०—एकेति ।** अर्धमेकम् । प्रथममेकं योजनं विचित्य पश्चाद्योजनान्तरमिति क्रमेण विचिनुध्वमित्यर्थः । यद्वा एकएकं योजनमिति क्रमेण विचिनुध्वमित्यर्थः ॥ १४ ॥

**१५ ] ति० टी०—**यदि भूमौ न लभ्यते तदाह—**यावत्तुरगेत्यादि** ॥ १५ ॥

**रा० टी०—**यदि अश्वो न मिलेत्तदा तत्र गत्वा किं कर्तव्यमित्यत आह—**यावदिति ।** ममाज्ञया तमृषिभिर्बोधितं हयहर्तारं मार्गमाणा एव यूयं यावत्कालं तुरगसंदर्शस्तावत्कालं मेदिनीं खनत ॥ १४ ॥

**गो० टी०—**यदि भूतले न दृश्यते तदा कर्तव्यमाह—**यावदिति** ॥ १५ ॥

**१६ ] ति० टी०—**स्वस्य तुरगानुगमनमयुक्तमित्याह—**दीक्षित इत्यादि ।** तस्य प्रवासनिषेधात्पौत्रस्य बालकत्वाच्चेति भावः ॥ १६ ॥

**रा० टी०—दीक्षित इति ।** पौत्रसहितः सोपाध्यायगणः अहं यावत्तुरगदर्शनमिहैव स्थास्यामि वो भद्रमस्तु । हिशब्द एवार्थे ॥ १५ ॥

**गो० टी०—**मम तु गमनं न युक्तमित्याह—**दीक्षित इति** १६ ॥

**१७ ] ति० टी०—**यन्त्रिता नियुक्ताः ॥ १७ ॥

**रा० टी०—ते इति ।** हे राम ! हृष्टमनसः महाबलाः सर्वे ते राजपुत्राः पितुर्वचनयन्त्रिताः सन्तः महीतलं जग्मुः ॥ १६ ॥

**रा० टी०—गत्वेति ।** हे रघुनन्दन ! महाबलाः पुरुषव्याघ्राः पुरुषश्रेष्ठाः सगरपुत्राः सर्वां पृथ्वीं गत्वा तमश्वमदृष्ट्वैव योजनायामविस्तारं योजने आयामविस्तारौ दैर्घ्यविशाले यस्मिन् तद्धरणीतलमेकैको विभज्य वज्रस्पर्शसमैर्वज्रस्पर्शसदृशस्पर्शैर्भुजैः अशनिकल्पैः शूलैश्च सुदारुणैर्हलैश्च बिभिदुस्तेन हेतुना भिद्यमाना वसुमती ननाद । सार्धश्लोकद्वयमेकान्वयि । तुशब्द एवार्थेऽपिशब्दो हेत्वर्थे ॥ १७ ॥ १८ ॥

**गो० टी०—इतीति ।** यन्त्रिताः नियुक्ताः ॥ १७ ॥

**१८ ] ति० टी०—**आयामो दैर्घ्यम्, विस्तारो विशालता तद्युक्तम् धरणीतलमेकैकोऽन्वेषयामासेत्यर्थः बिभिदुरिति पृथिव्यामदृष्ट्वेति शेषः ॥ १८ ॥

**गो० टी०—योजनेति ।** आयामः दैर्घ्यं विस्तारः विशालता वज्रस्पर्शसमैः वज्रस्पर्शसमस्पर्शैरित्यर्थः ॥ १८ ॥

**१९–२० ] ति० टी०—**भिद्यमाना सर्वत इति शेषः॥ १९॥ २०॥

**रा० टी०—नागानामिति ।** हे राघव ! वध्यमानानां पृथिवीखनने हन्यमानानां नागानामसुराणां च राक्षसानां च ससत्त्वानां दुर्धर्षः निनदः शब्दोऽभवत् ॥ १९ ॥

**गो० टी०—शूलैरिति ।** अशनिकल्पैः वज्रतुल्यैः ॥ १९ ॥

**गो० टी०—नागानामिति ।** नागानां सर्पाणाम् असुरराक्षसाः पातालवासिनः ॥ २० ॥

**२१ ] ति० टी०—**अनुत्तमं रसातलं विचेतुमिव धरणीं योजनानां षष्टिसहस्राणि बिभिदुरित्यन्वयः ॥ २१ ॥

**रा० टी०—योजनानामिति ।** हे रघुनन्दन ! योजनानां षष्टिं सहस्राणि अनुत्तमं प्रसिद्धरसातलान्मध्यमनुत्तमं वा रसातलं कर्तुमिव वीराः धरणीं बिभिदुः । तुशब्द इवार्थे ॥ २० ॥

**गो० टी०—योजनानामिति ।** रसातलं पातालं यथा भवति तथा धरणीं बिभिदुः ॥ २१ ॥

**२२–२४ ] ति० टी०—**पर्वतसंबाधं पर्वतनिबिडम् ॥ २२–२४ ॥

**रा० टी०—एवमिति ।** नरशार्दूल हे राम ! पर्वतसंबाधं

१ गच्छतेति गो. रा. पाठः । २ अर्धमिदं रा. नास्ति । ३ गणो ह्यहमिति गो. पाठः । ४ अर्धमिदमधिकं गो. रा. पाठयोः । ५ नखैरिति गो. पाठः । ६ च दुर्धर्ष इति गो. रा. पाठः । ७ वीरा. इति गो. रा. पाठः । ८ संभ्रान्ता इति रा. पाठः ।

भगवन्पृथिवी सर्वा खन्यते सगरात्मजैः । बहवश्च महात्मानो वध्यन्ते जलचारिणः ॥ २५ ॥
अयं यज्ञहरोऽस्माकमनेनाश्वोऽपनीयते । इति ते सर्वभूतानि हिंसन्ति सगरात्मजाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

ब्रह्मणा कपिलकोपेन सगरपुत्रा नङ्क्ष्यन्तीति देवानामाश्वासनम् । प्राच्यदिक्क्रमेण भूमिं खनद्भिः सगरपुत्रैरैशान्यां भूमेरधस्ताद्भगवतः कपिलस्यान्तिके चरन्तमश्वमालोक्य कपिलवधाय संरम्भकरणम् । कपिलकोपेन तेषां भस्मीभावः ।

देवतानां वचः श्रुत्वा भगवान्वै पितामहः । प्रत्युवाच सुसंत्रस्तान्कृतान्तबलमोहितान् ॥ १ ॥
यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः । महिषी माधवस्यैषा स एव भगवान्प्रभुः ॥ २ ॥
कापिलं रूपमास्थाय धारयत्यनिशं धराम् । तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥३॥
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः । सगरस्य च पुत्राणां विनाशो दीर्घदर्शिनाम्॥ ४ ॥

पर्वतसंकुलं जम्बूद्वीपमेवमनेन प्रकारेण सर्वतः खनन्तो नृपात्मजाः परिचक्रमुः बभ्रमुः ॥ २१ ॥

गो० टी०–एवमिति । संबाधं निबिडम् ॥ २२ ॥

रा० टी०–तत इति । ततः सर्वेषां पीडितत्वाद्धेतोः संभ्रान्तमनसः सगन्धर्वाः गन्धर्वसहिताः सासुराः असुरसहिताः सहपन्नगाः पन्नगसहिताः सर्वे देवाः पितामहं ब्रह्माणमुपागमन् प्रापुः ॥ २२ ॥

गो० टी०–तत इति । स्पष्टम् ॥ २३ ॥

रा० टी०–ते इति । महात्मानं पितामहं परमसन्तप्ता अत एव विषण्णवदनाः प्राप्तवैवर्ण्यमुखास्ते उक्तविशेषणविशिष्टाः देवाः तदा स्वप्राप्तिकाले प्रसाद्य इदं वच ऊचुः ॥ २३ ॥

गो० टी०–त इति । प्रसाद्य स्तुत्वा ॥ २४ ॥

२५ ] ति० टी०–महात्मानः सिद्धगन्धर्वादयः ॥ २५ ॥

रा० टी०–तद्वचनमेवाह–भगवन्निति । हे भगवन् ! सगरात्मजैः सर्वा पृथिवी खन्यते अतो बहवो महात्मानः जलचारिणश्च वध्यन्ते पीड्यन्ते ॥ २४ ॥

गो० टी०–भगवन्निति । तलवासिनः रसातलवासिनः२५

२६ ] ति० टी०–'यज्ञहनः' इति पाठे हन्तीति हनः अपनीयतेऽपनीयते स्म । सर्वभूतानि तत्प्रसङ्गरहितान्यपि ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्ड एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रा० टी०–ननु किमर्थं तैः सर्वे पीड्यन्ते इत्यत आहुः–अयमिति । अयं भूतसमूहः अस्माकं यज्ञहनः । तत्र हेतुः यतोऽनेनाश्वोऽपनीयते इति हेतोः सर्वभूतानि सगरात्मजाः हिंसन्ति । अपनीयन्ते इत्यत्र वर्तमानसामीप्ये इति भूते लट्॥२६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०–अयमिति । यज्ञहरः यज्ञहन्ता 'यज्ञहन' इति पाठे हन्तीति हनः पचाद्यच् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

१ ] ति० टी०–कृतान्तबलमोहितान्कृतः सर्वलोकस्यान्तो नाशो यैस्तादृशानि यानि बलानि सगरसुतबलानि तैर्मोहितान्मूर्च्छितचित्तान् ॥ १ ॥

रा० टी०–देवतानामिति । भगवान् पितामहो ब्रह्मा देवतानां वचः श्रुत्वैव कृतान्तबलमोहितान् कृतोऽन्तो बहुलोकविनाशो यैस्ते सगरात्मजास्तेषां बलेन अननुमेयपराक्रमेण मोहितान् विवेकरहितान् अत एव सुसंत्रस्तान् देवादीन् प्रत्युवाच ॥ १ ॥

गो० टी०–देवतानामित्यादि । कृतः अन्तो जननाशो यैस्ते कृतान्ताः सगरपुत्राः ॥ १ ॥

२ ] ति० टी०–एषा वसुधा ॥ २ ॥

३ ] ति० टी०–धारयति योगबलेनेति शेषः ॥ ३ ॥

रा० टी०–तद्वचनमेवाह–यस्येति । यस्य माधवस्य रमापतेः धीमतः सर्वबुद्धिप्रवर्तकस्य वासुदेवस्य इयं कृत्स्ना वसुधा यद्वासुदेवनिष्ठस्वामितानिरूपितस्वताविशिष्टा सकलवसुधेत्यर्थः। तस्य वासुदेवस्य एषा वसुधा महिषी सः एषः भगवान् अघटितघटनापटीयःसामर्थ्यविशिष्टः प्रभुः वासुदेवः कापिलं रूपमास्थाय प्रकटय्य अनिशं धरां धारयति तस्य कोपाग्निना नृपात्मजाः दग्धा भविष्यन्ति । द्वयोरेकत्रान्वयः ॥ २ ॥ ३ ॥

गो० टी०–यस्येति । सार्धश्लोकः । आस्थाय य इति शेषः ॥ २ ॥

४ ] ति० टी–पृथिव्या विभेदश्च सनातनः प्रतिकल्पमवश्यं भाव्यः श्रौतस्मार्तसागरादिशब्दैर्दृष्ट एव अतस्तत्र न शोकः कार्य इति भावः । एवं दीर्घदर्शिनां दीर्घदर्शिभिः सगरपुत्रविनाशो-

१ हन इति रा. पाठः । २ निघ्नन्तीति गो. पाठः । ३ अर्धमिदं गो. नास्ति । ४ दीर्घजीविनामिति गो. रा. पाठः ।

पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदमाः । देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ५ ॥
सगरस्य च पुत्राणां प्रादुरासीन्महास्वनः । पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ॥ ६ ॥
ततो भित्त्वा महीं सर्वां कृत्वा चापि प्रदक्षिणम् । सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ॥ ७ ॥
परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः । देवदानवरक्षांसि पिशाचोरगपन्नगाः ॥ ८ ॥
न च पश्यामहेऽश्वं ते अश्वहर्तारमेव च । किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥ ९ ॥
तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः । समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥ १० ॥
भूयः खनत भद्रं वो विभेद्य वसुधातलम् । अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तत ॥ ११ ॥
पितुर्वचनमासाद्य सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ १२ ॥

---

ऽयं दृष्ट एव अतस्तत्रापि शोकोऽनुचितः । शेषे षष्ठी । यद्वा अदीर्घदर्शिनामितिच्छेदः ॥ ४ ॥

रा० टी०—देवविश्वासार्थमियं सनातनी रीतिरिति बोधयन्नाह—पृथिव्या इति । सनातनः सर्वसत्ययुगोद्भवः पृथिव्या निर्भेदो भेदनं चकारेण देवगन्धर्वादीनां क्लेशोऽपि दृष्ट एव' अदीर्घजीविनां सगरस्य पुत्राणां सनातनो विनाशश्च दृष्ट एव कपिलकोपद्वारेति शेषः एतेन अवश्यं सगरपुत्राणां विनाशो भविष्यतीति ध्वनितम् । अपिरेवार्थे ॥ ४ ॥

गो० टी०—पृथिव्या इति । सनातनः प्रतिकल्पमवश्यंभावी दृष्टः निश्चितः अतो न तत्रापि शोकः कार्य इति भावः। अदीर्घजीविनामितिच्छेदः विनाशः दृष्ट इत्यनुषङ्गः ॥ ३ ॥

५ ] ति० टी०—त्रयस्त्रिंशत् अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः अश्विनौ च ॥ ९ ॥

रा० टी०—पितामहेति । अरिंदमाः शत्रुसूदनाः परमसंतुष्टाः त्रयस्त्रिंशद्देवाः यथागतमागतमनतिक्रम्य पुनर्जग्मुः येन प्रकारेण आगताः तेन प्रकारेण पुनः स्वस्वलोकं प्रापुरित्यर्थः । देवानां त्रयस्त्रिंशत्त्वं तु वसूनामष्टत्वेन रुद्राणामेकादशत्वेन आदित्यानां द्वादशत्वेन अश्विनोर्द्वित्वेन च बोध्यम् ॥ ९ ॥

गो० टी०—पितामहेति । त्रयस्त्रिंशद्देवाः अष्टौ वसव एकादश रुद्रा द्वादशादित्या अश्विनौ च इदमुपलक्षणं गन्धर्वादेर्गमनस्यापि ॥ ४ ॥

६ ] ति० टी०—निर्घातसमनिःस्वनः निर्घातनिःस्वनसदृश इत्यर्थः ॥ ६ ॥

रा० टी०—सगरस्येति । पृथिव्यां भिद्यमानायां सत्यां महात्मनां सगरस्य पुत्राणामग्रे एव निर्घातसमनिस्वनः निर्घातशब्दसदृशशब्दो महास्वनः प्रादुरासीत् नीलो घटो घट इतिवच्छाब्दबोधः । किञ्च महान्स्वनः स्वनत्वं यस्मिन् सः निर्घातसमनिस्वनः प्रादुरासीत् । अपिशब्द एवार्थे । निर्घातः अशुभसूचकः शब्दविशेषः ॥ ६ ॥

गो० टी०—सगरस्येति । निर्घातः उत्पातविशेषः ॥ ९ ॥

७ ] ति० टी०—' ततो भित्त्वा ' इति पाठः ॥ ७ ॥

रा० टी०—तत इति । ततः अशुभसूचकशब्दश्रवणानन्तरं सर्वां महीमभिप्रदक्षिणं कृत्वा भित्त्वा अश्वापहारकस्यान्तर्निलीनत्वशङ्कया पृथिव्यवयवविशेषं विदार्य च पितरं प्राप्ताः सहिता मिलिताः सर्वे सागराः सगरपुत्राः वाक्यमब्रुवन् । प्राप्ता इत्यध्याहृतम् ॥ ७ ॥

गो० टी०—तत इति । सर्वे महीं प्रदक्षिणं कृत्वा पितरं गत्वा सर्वे पितरमब्रुवन् ॥ ६ ॥

८ ] ति० टी०—सत्त्ववन्तो बलवन्तः ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—परीति । सर्वा मही परिक्रान्ता प्रदक्षिणीकृता चकारेण अश्वापहारकस्यान्तर्निलीनत्वशङ्कया पृथिव्यवयवविशेषो विदारितश्च अत एव सत्त्ववन्तो देवदानवरक्षांसि पिशाचोरगकिंनराश्च सूदिताः ॥ ८ ॥

गो०टी०—परिक्रान्तेति । श्लोकद्वयम् । सत्त्ववन्तो बलवन्तः करिष्यामेति विसर्गलोपश्छान्दसः ॥ ७ ॥ ८ ॥

९–१० ] ति० टी०—तेऽस्मासु परमनुग्रहबुद्धिरस्तु वयं किं करिष्याम । सलोपश्छान्दसः बुद्धिरुपायः ॥ ९ ॥ १० ॥

रा० टी०—न चेति । ते अश्वमश्वहर्तारं च नैव पश्यामहे अतः किं करिष्यामः । अत्र अस्मत्कर्तव्यताविषये बुद्धिः निश्चयः विचार्यतां क्रियतामेव ते भद्रमस्तु । अत्र दृशधातोरात्मनेपदं करिष्याम इत्यत्र विसर्गलोपश्चार्षः । चशब्द एवार्थे । बुद्धिरत्रेति सगरसंबोधनं वा तदर्थस्तु बुद्धिरतो बुद्धिमतश्चायते तत्संबोधनम् किं करिष्याम इति विचार्यतामित्यर्थः । चशब्द इत्यर्थकः ॥ ९ ॥

रा० टी०—तेषामिति । हे रघुनन्दन ! तेषां पुत्राणां तद्वचनं श्रुत्वा समन्युः मन्युसहितः राजसत्तमः सगरः वाक्यमब्रवीत् ॥ १० ॥

गो० टी०—तेषामिति । समन्युः अश्वालाभकृतक्रोधवान्॥९॥

११–१२ ] ति० टी०—भूयो विभेद्येत्यन्वयः । कृतार्थाश्च कृतार्थाश्चेत्तदा निवर्तत निवर्तध्वमित्यर्थे आर्षमेतद् अन्यथा न निवृत्तिरित्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०—तद्वचनमेवाह—भूय इति । वसुधातलं निर्भिद्य

---

१ अरिंदमेति गो. पाठः । २ महात्मनामिति गो. पाठः । ३ चाभीति रा. पाठः । ४ किंनरा इति गो. रा. पाठः । ५ चाश्वामिति रा. पाठः । ६ सत्तमेति गो. पाठः । ७ निर्भिद्येति गो. रा. पाठः । ८ निवर्तध्वेति गो. पाठः ।

खन्यमाने ततस्तस्मिन्ददृशुः पर्वतोपमम् । दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३ ॥
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन । धारयामास शिरसा विरूपाक्षो महागजः ॥ १४ ॥
यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः । खेदाच्चालयते शीर्षं[1] भूमिकम्पस्तदा भवेत् ॥ १५ ॥
ते[2] तं प्रदक्षिणं कृत्वा दिशापालं महागजम् । मानयन्तो हि ते राम जग्मुर्भित्त्वा रसातलम् ॥ १६ ॥
ततः पूर्वां दिशं भित्त्वा[3] दक्षिणां बिभिदुः पुनः । दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥ १७ ॥
महापद्मं महात्मानं सुमहत्पर्वतोपमम् । शिरसा धारयन्तं[4] गां विस्मयं जग्मुरुत्तमम् ॥ १८ ॥
ते[5] तं प्रदक्षिणं कृत्वा सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥ १९ ॥
पश्चिमायामपि दिशि महान्तमचलोपमम् । दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ २० ॥
ते[2] तं प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् । खनन्तः समुपाक्रान्ता दिशं सोमवतीं[6] तदा[7] ॥ २१ ॥

---

भूयः खनत अश्वहर्तारमासाद्य प्राप्यैव कृतार्थाः साधितप्रयोजनाः सन्तो यूयं निवर्तत वो भद्रमस्तु । चशब्द एवार्थे । मुखं व्यादाय स्वपितीतिवत्प्रयोगः । निर्भिद्य निर्भेत्तव्यमेव वसुधातलमिति कर्मधारयो वा संज्ञापूर्वकविधेरनित्यत्वात् ण्यत्यपि गुणाभावः ॥ ११ ॥

**गो० टी०—भूय इति** । भूयो निर्भिद्य खनतेत्यन्वयः निवर्तथ निवर्तध्वम् ॥ १० ॥

**रा० टी०—पितुरिति** । महात्मनः पितुः सगरस्य वचनमासाद्य स्वीकृत्य षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् खनन्तोऽगच्छन् आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ १२ ॥

**गो० टी०—पितुरिति** । अभिद्रवन् अभ्यद्रवन् ॥ ११ ॥

**१३ ] ति० टी०—खन्यमान इति** । षष्टियोजनसहस्रपरमपीति शेषः । दिशा इत्याबन्तम् ॥ १३ ॥

**रा० टी०—खन्यमान इति** । तस्मिन्महीतले खन्यमाने सति ततस्तस्मात्खननान्महीतलं धारयन्तं पर्वतोपमं विरूपाक्षं दिशो गजं ददृशुः । खननविस्तरस्य कर्तार इत्यर्थकं कर्तृपदं वा तत इति ॥ १३ ॥

**गो० टी०—खन्यमान इति** । दिशागजम् 'वष्टिभागुरि-'इत्याप् विरूपाक्षं विरूपाक्षाख्यम् ॥ १२ ॥

**१४ ] ति० टी०—कृत्स्नाम्** तदेकप्रदेशाच्छिन्नामिति शेषः॥ १४

**रा० टी०—प्रसङ्गाद्गजवृत्तमाह—सपर्वतेति**। हे रघुनन्दन ! सपर्वतवनां पर्वतवनसहितां कृत्स्नां पृथिवीं विरूपाक्षो महागजः शिरसा धारयामास ॥ १४ ॥

**गो० टी०—उक्तं विवृणोति—सेति** ॥ १३ ॥

**१५ ] ति० टी०—यदा पर्वणि** यस्मिन्काले यस्मिन्क्षणे । 'तिथिभेदे क्षणे पर्व' इत्यमरः ॥ १५ ॥

**रा० टी०—यदेति**। हे काकुत्स्थ राम ! महागजः विरूपाक्षः यदा यस्मिन्पर्वणि काले खेदात्खेदं प्राप्य विश्रामार्थं शीर्षं चालयते करेण भूमिं संगृह्य किंचिच्चलतीत्यर्थः तदा भूमिकम्पः भवेत् ॥ १५ ॥

**गो० टी०—यदेति** । पर्वणि काले खेदाद्धेतोर्विश्रमार्थं श्रमशान्त्यर्थं चालयते चालयति ॥ १४ ॥

**१६-१८ ] ति० टी०—मानयन्तः** दिग्गजमिति शेषः । हिस्त्वर्थे ॥ १६ ॥ १७ ॥ १८ ॥

**रा० टी०—प्रासङ्गिकगजवर्णनं समाप्य प्रकृतसगरपुत्रवृत्तमाह—तमिति** । हे राम ! हि ते अश्वप्राप्तये रसातलं भित्त्वा दिशः पालं तं महागजं मानयन्तः पूजयन्तस्ते सगरपुत्राः प्रदक्षिणं कृत्वा पूर्वां दिशं हित्वा त्यक्त्वा दक्षिणां दिशं जग्मुः । ततस्तस्यां दिशि पुनर्बिभिदुः दक्षिणस्यां दिश्यपि महात्मानं पूज्यस्वरूपं सुमहापर्वतोपममत्यन्तबृहत्पर्वतसदृशं शिरसा गां पृथिवीं धारयन्तं महापद्मं महापद्मसंज्ञकं महागजं ते सगरपुत्राः ददृशुः उत्तमं परमं विस्मयं च जग्मुः प्रापुः अद्भुतरूपदर्शनादितिभावः विनापि चं समुच्चयः । त्रयाणामेकत्रान्वयः १६-१८

**गो० टी०—तमिति** । मानयन्तः पूजयन्तः ॥ १५ ॥ **तत इति** । तत इत्यस्य विवरणं पूर्वां दिशं भित्त्वेति ॥ १६ ॥ महागजं विशेषयति—**महेति** । सुमहदित्यार्षम् ॥ १७ ॥

**१९-२० ] ति० टी०—प्रदक्षिणं** कृत्वा दिग्गजमिति शेषः ॥ १९ ॥ २० ॥

**रा० टी०—तत इति** । ततो महागजदर्शनानन्तरं प्रदक्षिणं कृत्वा महापद्ममिति शेषः । महात्मनः सगरस्य षष्टिः पुत्रसहस्राणि पश्चिमां दिशं तद्दिग्भूमिं बिभिदुः ॥ १९ ॥

**गो० टी०—तत इति** । दिक्शब्देन देश उच्यते ॥ १८ ॥

**रा० टी०—पश्चिमायामिति** । महाबलास्ते सगरपुत्राः पश्चिमायां दिश्यपि अचलोपमं पर्वतसदृशमत एव महान्तं सौमनसं सौमनससंज्ञकं दिशागजं ददृशुः ॥ २० ॥

**गो० टी०—पश्चिमायामिति**। सौमनसं सौमनसाख्यम्१९

**२१ ] ति० टी०—निरामयं** कुशलम् । सोमवतीमुदीचीम् ॥ २१ ॥

---

१ शीघ्रमिति रा. पाठः । २ तं ते इति गो. रा. पाठः । ३ हित्वेति रा. पाठः । ४ धारयन्तं ते इति गो. रा. पाठः । ५ तत इति गो. रा. पाठः । ६ हैमवतीति गो. रा. पाठः । ७ तत इति गो. पाठः ।

उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डुरम् । भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२ ॥
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् । षष्टिः पुत्रसहस्राणि विभिदुर्वसुधातलम् ॥ २३ ॥
ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् । रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ॥ २४ ॥
ते तु सर्वे महात्मानो भीमवेगा महाबलाः । ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५ ॥
हयं च तस्य देवस्य चरन्तमविदूरतः । प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥ २६ ॥
ते तं यज्ञहनं ज्ञात्वा क्रोधपर्याकुलेक्षणाः । खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ॥ २७ ॥
अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् । अस्माकं त्वं हि तुरगं यज्ञियं हृतवानसि ॥ २८ ॥
दुर्मेधस्त्वं हि संप्राप्तान्विद्धि नः सगरात्मजान् । श्रुत्वा तद्वचनं तेषां कपिलो रघुनन्दन ॥ २९ ॥
रोषेण महताविष्टो हुंकारमकरोत्तदा । ततस्तेनाप्रमेयेण[1] कापिलेन महात्मना ॥
भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०—तमिति । खनन्तस्ते सर्वे षष्टिः पुत्रसहस्राणि सागराः सगरपुत्रास्तं सौमनसं गजं प्रदक्षिणं कृत्वा निरामयं कुशलं च पृष्ट्वा हैमवतीं हिमवत्संबन्धिनीमुत्तरां दिशं समुपाक्रान्ताः प्राप्ताः सन्तः तथा तेन प्रकारेण वसुधातलं बिभिदुः । हे रघुश्रेष्ठ ! उत्तरस्यां दिशि हिमपाण्डुरं हिमसदृशश्वेतं भद्रेण कल्याणयुक्तेन वपुषा इमां महीं धारयन्तं भद्रं भद्राख्यगजं ददृशुः ततः दर्शनानन्तरमेनं भद्रं समालभ्य स्पृष्ट्वा प्रदक्षिणं च कृत्वा ततः उत्तरदिशातः प्रागुत्तरामैशानीं प्रथितां प्रसिद्धां दिशं गत्वा रोषात्क्रोधात्सर्वे सगरात्मजाः पृथिवीमभ्यखनन् । चतुर्णां संमिलितान्वयः 'सोमवतीमिति भट्टसंमतः पाठः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

गो० टी०—तमिति । निरामयं कुशलं समुपक्रान्ताः गताः वैमवतीं हिमवत्संबन्धिनीम् ॥ २० ॥

२२ ] ति० टी०—भद्रं भद्राख्यम् ॥ २२ ॥

गो० टी०—उत्तरस्यामिति।भद्रं भद्राख्यं भद्रेण शोभनेन

२३ ] ति० टी०—समालभ्य स्पृष्ट्वा ॥ २३ ॥

गो० टी०—समालभ्येति । समालभ्य स्पृष्ट्वा 'आलम्भः स्पर्शहिंसयोः' इत्यमरः ॥ २२ ॥

२४ ] ति० टी०—प्रागुत्तरामैशानीम् प्रथितां सर्वकर्मार्हत्वेन प्रसिद्धाम् ॥ २४ ॥

गो० टी०—तत इति । प्रागुत्तरामैशानीं दिशं प्रथिताम्- भगमनयोग्यतावतीं गमनखननक्रियाभेदात्सागरसगरात्मजपदप्रयोगः ॥ २३ ॥

२५ ] ति० टी०—कपिलं कपिलरूपधारिणम् ॥ २५ ॥

रा० टी०—ते इति । महात्मानः अतिप्रयत्नाः भीमवेगाः अतिवेगविशिष्टाः महाबलाः सर्वे ते सगरपुत्राः तत्र ऐशान्यां दिशि एव सनातनं नित्यसिद्धं कपिलं कपिलरूपवन्तं वासुदेवं ददृशुः । तुशब्द एवार्थे ॥ २५ ॥

गो० टी०—ते त्विति । महात्मानः महाकायाः कपिलं कपिलावतारम् ॥ २४ ॥

२६ ] ति० टी०—तस्य कपिलस्य ॥ २६ ॥

रा० टी०—हयमिति । हे रघुनन्दन ! तस्य देवस्य कपिलस्य अविदूरतः समीपे चरन्तं हयं च ददृशुः तेन हेतुना ते सर्वे अतुलमनुपमं प्रहर्षं प्राप्ताः ददृशुरित्यनुकृष्यते। चो हेतौ ॥ २६ ॥

गो० टी०—हयं चेति । चरन्तं तृणानि भक्षयन्तम् ॥२५॥

२७-३० ] ति० टी०—तं कपिलम् । हन्तीति हनः पचाद्यच् । अविचारतस्तमेवाश्वापहारद्वारा यज्ञहन्तारं ज्ञात्वेत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०—ते तमिति । तं कपिलं यज्ञहनमश्वापहरणेन यज्ञविघ्नकर्तारं ज्ञात्वा संक्रुद्धाः अतिक्रोधं प्राप्ताः अत एव क्रोधपर्याकुलेक्षणाः अत एव खनित्रलाङ्गलधराः नानावृक्षशिलाधराः ते सगरात्मजाः अभ्यधावन्त तिष्ठ तिष्ठ इति च अब्रुवन् स्वस्थतया स्थिते एकाकिन्यपि तस्मिन् दृष्टे सर्वेषां वृक्षशिलादिग्रहणेन तिष्ठ तिष्ठेत्युक्त्या च तेषां भ्रमः सूचितः तेन कपिलस्य तेजोतिशयः सूचितः ॥ २७ ॥

गो० टी०—ते तमिति । सार्धश्लोकः । तं कपिलम् ॥२६॥

रा० टी०—अस्माकमिति । हे दुर्मेधः दुष्टबुद्धे ! हि यतोऽस्माकं यज्ञियं तुरगमश्वं त्वं हृतवानसि हि अतः संप्राप्तान् सगरात्मजानोऽस्मान् त्वं विद्धि एतेनापराधतुल्यदण्डमवश्यं त्वं प्राप्स्यसीति ध्वनितम् ॥ २८ ॥

गो० टी०—अस्माकमिति । दुर्मेध इति संबोधनम् ॥२७॥

रा० टी०—श्रुत्वेति । हे रघुनन्दन ! तदा तत्कथनसमये

[1] प्रमेयेनेति गो. रा. पाठः ।

## एकचत्वारिंशः सर्गः ।

सगरनप्तुरसमञ्जसुतस्यांशुमतो स्वपितृमार्गणार्थं पितृकृतान्तर्भौममार्गेण प्रक्रमणम्, तस्य भस्मराशित्वमापन्नानां पितॄणां समीपेऽश्वं दृष्ट्वा तत्रैव विरामः । स शोकाकुलो यावत्पश्यति तावद्वैनतेयेन कपिलहुंकारदग्धानां सलिलक्रियाकरणनिषेधः, गङ्गायां सलिलक्रियाकरणोपदेशश्च अंशुमतोऽश्वग्रहणपूर्वकराजासादनं पितृव्यवृत्तनिवेदनं च, सगरस्य यज्ञपरिसमाप्तिः, सगरस्य त्रिंशद्वर्षसहस्रं राज्यकरणं पश्चात्स्वर्गगमनं च ।

पुत्रांश्चिरगतान्ज्ञात्वा सगरो रघुनन्दन । नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥
शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा । पितॄणां गतिमन्विच्छ येन चाश्वोपवाहितः ॥ २ ॥
अन्तर्भौमानि सत्त्वानि वीर्यवन्ति महान्ति च । तेषां तु प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३ ॥
अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि । सिद्धार्थः सन्निवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥
एवमुक्तोंऽशुमान्सम्यक्सगरेण महात्मना । धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥
स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः । प्रापद्यत नरश्रेष्ठ तेन राज्ञाभिचोदितः ॥ ६ ॥
देवदानवरक्षोभिः पिशाचपतगोरगैः । पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥

---

तेषां सगरात्मजानां तद्वचनं श्रुत्वा महता रोषेणाविष्टः कपिलः हुंकारमकरोत् ॥ २९ ॥

गो० टी०—श्रुत्वेति । स्पष्टम् ॥ २८ ॥

रा० टी०—कपिलहुंकारोत्तरकालिकं वृत्तमाह—तत इति । हे काकुत्स्थनाम ! ततो हुंकारानन्तरमप्रमेयेन अनियतप्रभावेण महात्मना कपिलेन सर्वे सगरात्मजाः भस्मराशीकृताः भस्मसमूहतां प्रापिताः ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०—तत इति । अप्रमेयेन अप्रमेयवैभवेन ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

१ ] ति० टी०—चिरगतान् अप्रत्यागच्छत इति शेषः । नप्तारं पौत्रम् ॥ १ ॥

रा० टी०—भस्मराशीकरणान्तरकालिकं वृत्तमाह—पुत्रानिति । हे रघुनन्दन चिरगतान् अश्वान्वेषणार्थं बहुकालतो देशान्तरं प्राप्तान् पुत्रान् ज्ञात्वा स्मृत्वां स्वतेजसा दीप्यमानं नप्तारमंशुमन्तं राजा सगरोऽब्रवीत् ॥ १ ॥

गो० टी०—पुत्रानित्यादि । नप्तारं पौत्रम् ॥ १ ॥

२ ] ति० टी०—पूर्वैः पितृभिः गतिं वृत्तान्तम् । येन चाश्वोऽपवाहितो देशान्तरं प्रापितस्तद्गतिं चान्विच्छान्वेषय ॥ २ ॥

रा० टी०—शूर इति । तेजसा पूर्वैस्तुल्यः शूरः कृतविद्यः संपादिताशास्त्रादिविद्यश्च त्वमसि अतो हेतोः पितॄणां गतिमन्विच्छ अन्वेषणं कुरु येन अश्वोऽपहारितोऽपहृतस्तं चान्विच्छ एकश्चकारो हेत्वर्थकः ॥ २ ॥

गो० टी०—शूर इति । पूर्वैः पितृभिः पितॄणां कनिष्ठपितॄणां गतिं मार्गं अन्विच्छ अन्वेषय अश्वो येनापवाहितस्तस्य च गतिमन्विच्छ ॥ २ ॥

३ ] ति० टी०—अन्तर्भौमानि भूमेरन्तर्जातानि सत्त्वानि प्राणिनः ॥ ३ ॥

रा० टी०—अन्वेषणरीतिमुपदिशन्नाह—अन्तारिति । अन्तर्भौमानि भूम्यन्तर्वर्तीनि सत्वानि वध्यदुष्टप्राणिनः वीर्यवन्ति अतिवीर्ययुक्तानि महान्ति बृहच्छरीराणि च सन्ति अतस्तेषां सत्त्वानां प्रतिघातार्थं सासिमासिसहितं कार्मुकं धनुस्त्वं गृहीष्व ३ ॥

गो० टी०—अन्तरिति । अन्तर्भौमानि भूमेरन्तर्जातानि भूबिलमाश्रितानीत्यर्थः । यानीति शेषः ॥ ३ ॥

४–५ ] ति० टी०—अभिवाद्यान्नमस्कारार्हान् । मम यज्ञस्य पारगः पारप्रापकश्च भवेत्यर्थः ॥ ४ ॥ ५ ॥

रा० टी०—अभिवाद्येति । अभिवाद्यान् तत्र मिलिताभिवादनयोग्यान् अभिवाद्य प्रणम्य विघ्नकरांश्च हत्वा सिद्धार्थो निष्पादितप्रयोजनः प्राप्ताश्वक इत्यर्थः अत एव मम यज्ञस्य पारगस्त्वं संनिवर्तस्व अश्वं गृहीत्वा गृहमागच्छेत्यर्थः ॥ ४ ॥

गो० टी०—अभिवाद्येति । पारगः समाप्तिकरः ॥ ४ ॥

रा० टी०—एवमिति । महात्मना सगरेण एवमनेन प्रकारेण सम्यगुक्तः सम्यगुपदिष्टः लघुविक्रमः लघुना कालेन विक्रमो बहुगमनं यस्य सोंऽशुमान् धनुः खड्गं चादाय गृहीत्वा जगाम ॥ ५ ॥

गो० टी०—एवमिति । लघुविक्रमः शीघ्रगमनः ॥ ५ ॥

६–७ ] ति० टी०—पितृभिः खातं भूमेरन्तर्विद्यमानं मार्गं पितृवृत्तान्तपरिज्ञानाय प्रापद्यत प्राप्तः ॥ ६ ॥ ७ ॥

रा० टी०—स इति । नरश्रेष्ठ हे राम । तेन प्रसिद्धेन राज्ञा सगरेण अभिचोदितः प्रेरितः सोंऽशुमान् पितृखातं पितॄणां खननेन निर्मितमन्तर्भौमंभूम्यन्तर्विद्यमानं मार्गं महात्मभिरतिप्रयत्नैः प्रापद्यत । महात्मभिरिति पित्रन्वयि वा ॥ ६ ॥

---

१ हारित इति रा. पाठः । २ त्वमिति गो. रा. पाठः ।

स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् । पितृन्स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥
दिशागजस्तु तच्छ्रुत्वा प्रत्युवाच महामतिः । आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् । यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥
तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः । पूजितः सहयश्चैवागन्तासीत्यभिचोदितः ॥ ११ ॥
तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः । भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२ ॥
स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा । चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥
यज्ञियं च हयं तत्र चरन्तमविदूरतः । ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४ ॥
स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् । स जलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५ ॥

गो० टी०—स इति । खातं कूपमित्यर्थः ॥ ६ ॥

रा० टी०—दैत्येति । महातेजा अंशुमान् दैत्यादिभिः पूज्यमानं दिशागजमपश्यत ॥ ७ ॥

गो० टी०—दैत्येति । अपश्यत अपश्यत् ॥ ७ ॥

८ ] ति० टी०—निरामयं कुशलम् ॥ ८ ॥

रा० टी०—स इति । हे स! अरिनिवर्तक राम सोंऽशुमान् तं गजं प्रदक्षिणं कृत्वैव निरामयं कुशलं च पृष्ट्वैव पितृन् वाजिहर्तारं च पप्रच्छ ॥ ८ ॥

गो० टी०—स इति । परिपप्रच्छ क्वास्त इति शेषः ॥ ८ ॥

९-१० ] ति० टी०—आसमञ्ज असमञ्जपुत्र इति संबोधनम् । इञभाव आर्षः ॥ ९ ॥ १० ॥

रा० टी०—दिशेति । दिशागजोंऽशुमतस्तद्वचः श्रुत्वैव प्रत्याह तत्प्रतिवचनमेवाह हे आसमञ्ज! कृतार्थः दृष्टाश्वः अत एव सहाश्वः अश्वसहितः त्वं शीघ्रमेष्यसि स्वपितामहसमीपं प्राप्स्यसि एतेन गजानां ( गजस्य ) परमाभिज्ञत्वं सूचितम् विशेषदृष्टानुक्त्या तेषां ( तस्य ) दयालुत्वं सूचितम् । आसमञ्जशब्दःशिवाद्यणन्तः ॥ ९ ॥

गो० टी०—दिशेति।आसमञ्ज असमञ्जपुत्र!इञभावआर्षः९

रा० टी०—तस्येति । तस्य पूर्वदिग्गजस्य तद्वचनं श्रुत्वैव सर्वान् दिशो गजान् यथाक्रमं क्रममनतिक्रम्य यथान्यायं यथोचितं प्रष्टुं समुपचक्रमे ॥ १० ॥

गो०टी०—तस्येति।समुपचक्रम इति सविनयत्वप्रकटनम्१०

११ ] ति० टी०—वाक्यं वक्तुमर्हम् कालदेशोचितवक्तव्यतत्त्वज्ञैः तदुचितवचनसमर्थैश्चेत्यर्थः द्वितीयवाक्ये कृत्यः । सहय आगन्तासीत्यभिचोदितश्च बोधितश्च ॥ ११ ॥

रा० टी०—तैरिति । वाक्यज्ञैः परवचनश्रवणमात्रेणाशयाभिज्ञैः वाक्यकोविदैः वचननिपुणैर्दिशां पालैः सर्वैरेव तैर्गजैः पूजितः सहय एव त्वं गन्तासीत्यभिचोदितश्च एवांशुमानासीदिति शेषः । विशेषदृत्तं तैरपि नोक्तमित्यर्थः । तेन तेषामपि तत्त्वं व्यञ्जितम् । एकश्चशब्द एवार्थे ॥ ११ ॥

गो० टी०—तैश्चेति । वक्तुमर्हं वाक्यम् "ऋहलोर्ण्यत् । चजोः कुघिण्यतोः" इतिकुत्वं वाक्यकोविदैः कालदेशोचितवक्तव्यार्थज्ञैः यद्वा परवाक्याशयज्ञैः स्वयं वाक्यप्रयोगकुशलैश्चेत्यर्थः सहयः पितामहसमीपं गन्तासीत्यभिचोदितोऽभूत् ॥ ११ ॥

१२ ] ति० टी०—यत्र पितरः सागरा भस्मराशीकृतास्तत्र देशे जगामेत्यन्वयः ॥ १२ ॥

रा० टी०—तेषामिति । तेषां गजानां तद्वचनं श्रुत्वा लघुविक्रमोंऽशुमान् यत्र तस्यांशुमतः पितरः सागरा भस्मराशीकृतास्तत्र जगाम ॥ १२ ॥

गो० टी०—तेषामिति । तस्यांशुमतः पितरो यत्र भस्मराशीकृतास्तं देशं जगाम ॥ १२ ॥

१३-१५ ] ति० टी०—चुक्रोश भस्मीभूतपितृनिति शेषः ॥ १३ ॥ १४ ॥ १५ ॥

रा० टी०—स इति । तदा प्राप्तिसमये एव असमञ्जसुतः सोंऽशुमान् दुःखवशमापन्नः कुशकुनदर्शनादिना किंचिद्दुःखं प्राप्त इत्यर्थः । पश्चात्तेषां पितॄणां वधाद्वधमवगत्य सुदुःखितः अत्यन्तदुःखं प्राप्तः अत एव परमार्तः पृथिव्यां लुण्ठितः चुक्रोश रुरोद । एकस्तुशब्द एवार्थे द्वितीयः पश्चादर्थकः ॥ १३ ॥

गो० टी०—स इति । पूर्वमदर्शनाद्दुःखवशमापन्नस्तेषां वधात् वधदर्शनात् सुदुःखितः परमार्तः भृशं तप्तः चुक्रोश रुरोद ॥ १३ ॥

रा० टी०—यज्ञियमिति । तत्र तस्मिन्समये दुःखशोकसमन्वितः पुरुषव्याघ्रोंऽशुमान् अविदूरत एव चरन्तं यज्ञियं हयं ददर्श । चशब्द एवार्थे ॥ १४ ॥

गो० टी०—यज्ञीयमिति । शोकः विलापः ॥ १४ ॥

रा० टी०—स इति । तेषां दग्धानां राजपुत्राणां जलक्रियां कर्तुकामः अत एव सलिलार्थी सलिलप्रयोजनवान् महातेजाः सोंऽशुमान् जलाशयं नैवापश्यत् । चशब्द एवार्थे१५

गो० टी०—स इति । जलक्रिया तर्पणम् ॥ १५॥

१ प्रत्याहांशुमतो वचः इति गो. रा. पाठः । २ दिशो गजानिति रा. पाठः । ३ चैव गन्तासीति गो. रा. पाठः । ४ यज्ञीयमिति गो. पाठः । ५ सलिलार्थीति गो. रा. पाठः । ६ दैत्यदानवेति गो. रा. पुस्तकयोर्मूले पाठो बोध्यः ।

विसार्य निपुणां दृष्टिं ततोऽपश्यत्खगाधिपम् । पितॄणां मातुलं राम सुपर्णमनिलोपमम् ॥ १६ ॥
स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः । मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥ १७ ॥
कपिलेनाप्रमेयेण दग्धा हीमे महाबलाः । सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥ १८ ॥
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ । तस्यां कुरु महाबाहो पितॄणां सलिलक्रियाम् ॥ १९ ॥
भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी । तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया
षष्टिं पुत्र सहस्राणि स्वर्गलोकं गमिष्यति ॥ ॥ २० ॥
निर्गच्छाश्वं महाभाग संगृह्य पुरुषर्षभ । यज्ञं पैतामहं वीर निर्वर्तयितुमर्हसि ॥ २१ ॥
सुपर्णवचनं श्रुत्वा सोंऽशुमानतिवीर्यवान् । त्वरितं हयमादाय पुनरायान्महातपाः ॥ २२ ॥

---

१६ ] ति० टी०—विसार्य समन्तात्प्रसार्येत्यर्थः । निपुणां दूरविवेचनसमर्थाम् पितॄणां मातुलम् सुपर्णभगिनी सुमतिरिति प्रागुक्तत्वात् अनिलोपमं वेगेन वायूपमम् ॥ १६ ॥

रा० टी०—विसार्येति । हे राम ! निपुणां दूरदर्शनक्षमां दृष्टिं विसार्य सर्वतः प्रसार्य पितॄणां मातुलमनिलोपमं वायुसदृशं खगाधिपं सुपर्णं गरुडं तत्र तस्मिन्समये अपश्यत् अंशुमानिति शेषः ॥ १६ ॥

गो० टी०—विसार्येति । विसार्य समंतात्प्रसार्य निपुणां दूरवीक्षणक्षमाम् अनिलोपमं वेगेनेति शेषः ॥ १६ ॥

१७ ] ति० टी०—लोकसंमतो लोकहित एतन्मूलकतया सर्वलोकहितगङ्गाया भूलोकेऽवतारणात् ॥ १७ ॥

रा० टी०—स इति । महाबलः सोंशुमता दृष्टो वैनतेयो गरुड एनमंशुमन्तं वाक्यमब्रवीत् । तद्वाक्यमेवाह—हे पुरुषव्याघ्र ! अयं वधः लोकसंमतः लोकानामूर्ध्वाधोमध्यवर्तिभुवनानां संमतः अतो मा शुचः शोकं न कुरु। चशब्दो हेत्वर्थे॥१७॥

गो० टी०—स चेति । लोकसंमतः लोकहितः ॥ १७ ॥

१८–१९ ] ति० टी०—हि यस्मात्कपिलेन दग्धाः यतश्च महाबला महाबलवत्त्वेन प्रायश्चित्तमर्यादातिक्रान्तपापवन्तः अतो लौकिकं सलिलं दातुं नार्हसि । 'चण्डालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्डदानं च न तेषां तु विधीयते ' इति स्मृतेः । प्रकृते ब्राह्मणाद्वधो महापापित्वं च ॥ १८ ॥ १९ ॥

रा० टी०—कपिलेनेति । हे प्राज्ञ ! अप्रमेयेन इयत्तारहितप्रभावविशिष्टेन कपिलेन इमे महाबला हताः अतो लौकिकं सलिलमेषां दातुं नैवार्हसि । हिशब्द एवार्थे द्वितीयो हेत्वर्थे ॥ १८ ॥

गो० टी०—कपिलेनेति । हि यस्मात्कपिलेन हताः लौकिकं लोकतः प्राप्तं सलिलं दातुं नार्हसि । 'चण्डालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्डदानं च एतेभ्यो यद्विधीयते । नोपातिष्ठति तत्सर्वमन्तरिक्षे विनश्यति' इति स्मृतेः । कपिलो ब्राह्मणः॥१८॥

रा० टी०—ननु किमलौकिकजलमस्ति यद्दातव्यमित्यत आह—गङ्गेति । हे पुरुषर्षभ पुरुषश्रेष्ठ महाबाहो ! हिमवतो ज्येष्ठा दुहिता या गङ्गा तस्यां पितॄणां सलिलक्रियां कुरु ॥१९॥

गो० टी०—गङ्गेति । गङ्गा अस्तीति शेषः ॥ १९ ॥

२० ] ति० टी०—तर्हि देवलोकं गत्वा गङ्गोदकेन क्रिया कार्या । नेत्याह—भस्मेति । यदा प्लावयेत्तदा गङ्गया क्लिन्नं सिक्तमिदं भस्म हे पुत्र षष्टिं 'सहस्राणि सागरान्स्वर्गलोकं गमिष्यति प्रापयिष्यतीत्यर्थः । 'नयिष्यति' इति पाठे नेष्यतीत्यर्थः । अनेन सगरपुत्राणां मन्वाद्युक्तप्रायश्चित्ताविषयत्वं सूचितम् । तत्प्रायश्चित्तविषयाणामपि पापिनां पुद्गलस्य गङ्गाजलस्पर्शः सर्वपापप्रायश्चित्तमिति सूचितम् । अकृतप्रायश्चित्तानामपि महापातकिनामौर्ध्वदेहिकायोग्यानां गङ्गाजलस्पृष्टपुद्गलानां विनापि प्रायश्चित्तान्तरं तत्काल एव सकलौर्ध्वदेहिकक्रियायोग्यत्वं च सूचितम् ॥ २० ॥

रा० टी०—अलौकिकजलेन सलिलक्रियाकरणे हेतुमाह—भस्मेति । लोकपावनी गङ्गा एतान् भस्मराशीकृतान् प्लावयेत् । ननु तया भस्मप्लावने किं फलमित्यत आह—लोककान्तया ज्ञानोत्पादनद्वारा लोकप्रकाशिकया तया प्रसिद्धया गङ्गया इदं क्लिन्नं प्लावितं भस्म षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति नेष्यति एतेन अवश्यं गङ्गानयने यत्नः कर्तव्य इति ध्वनितम् ॥ २० ॥

गो० टी०—न केवलं तत्र जलक्रिया तया सेचनीयं चेत्याह—भस्मेति । सार्धश्लोकः । यदि प्लावयेत्सेचयेत् तदा तया क्लिन्नं सिक्तं भस्म नयिष्यति नेष्यति ॥ २० ॥

२१–२२ ] ति० टी०—अश्वं गृहीत्वा निर्गच्छ । निर्वर्तयितुं समापयितुम् ॥ २१ ॥ २२ ॥

रा० टी०—तात्कालिककर्तव्यमाह—गच्छेति । हे महाभाग हे पुरुषर्षभ ! अश्वं संगृह्य त्वं गच्छ तेन पैतामहं यज्ञं संवर्तयितुं संसाधयितुमर्हस्येव चशब्द एवार्थे ॥ २१ ॥

गो० टी०—गच्छेति । संवर्तयितुं समापयितुम् ॥ २१ ॥

---

१ तत्रेति रा. पाठः । २ हता इति रा. पाठः । ३ तु जलक्रियामिति गो. पाठः । ४ नयिष्यतीति गो. रा. पाठः । ५ गच्छ चाश्वमिति गो. रा. पाठः । ६ संवर्तयितुमिति गो. रा. पाठः । ७ महायशा इति गो. रा. पाठः ।

ततो राजानमासाद्य दीक्षितं रघुनन्दन । न्यवेदयद्यथा वृत्तं सुपर्णवचनं तथा ॥ २३ ॥
तच्छ्रुत्वा घोरसंकाशं वाक्यमंशुमतो नृपः । यज्ञं निर्वर्तयामास यथाकल्पं यथाविधि ॥ २४ ॥
स्वपुरं त्वगमच्छ्रीमानिष्टयज्ञो महीपतिः । गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत ॥ २५ ॥
अगत्वा निश्चयं राजा कालेन महता महान् । त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ।

अंशुमतो राज्यप्राप्तिः, तस्य पुत्राय दिलीपाय राज्यप्रदानपूर्वकं हिमवच्छिखरे गमनं तपोनुष्ठानेन स्वर्गगमनं च, दिलीपस्य यज्ञकरणं स्वात्मजभगीरथाय राज्यदानं स्वर्गगमनं च, मन्त्रिषु राज्यमाधाय तीव्रं तपश्चरतो भगीरथस्य प्रसन्नाद्ब्रह्मणो वरलाभः, गङ्गापतनधारणक्षमः शिव एवेति कथनं च ।

कालधर्मं गते राम सगरे प्रकृतीजनाः । राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥
स राजा सुमहानासीदंशुमान्रघुनन्दन । तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥

रा० टी०—सुपर्णेति । अतिवीर्यवान् महायशाः सः प्रसिद्धः अंशुमान् सुपर्णवचनं श्रुत्वा हयमादाय त्वरितं पुनः आयात् ॥ २२ ॥

गो० टी०—सुपर्णेति । आयात् आगच्छत् ॥ २२ ॥

२३-२४ ] ति० टी०—वृत्तं पितृव्यवृत्तं तथा सुपर्णवचनं च यथा तथा न्यवेदयत् ॥ २३ ॥ २४ ॥

रा० टी०—तत इति । हे रघुनन्दन ! ततः कपिलाश्रमात् दीक्षितं राजानमासाद्य प्राप्य वृत्तं पितॄणां वृत्तान्तं यथा यथावन्न्यवेदयत् तथा तेन प्रकारेण सुपर्णवचनं च न्यवेदयत् ॥ २३ ॥

गो० टी०—तत इति । वृत्तं पितृवृत्तान्तं सुपर्णवचनं च यथा तथा न्यवेदयदित्यन्वयः ॥ २३ ॥

रा० टी०—तदिति । घोरसंकाशं घोरत्वेन प्रकाशमानं अंशुमतस्तद्वाक्यं श्रुत्वा नृपः सगरः यथाकल्पं यथासामर्थ्यं यथाविधि विधिमनतिक्रम्य यज्ञं निर्वर्तयामास समापयाञ्चकार ॥ २४ ॥

गो० टी०—तच्छ्रुत्वेति । यथाकल्पं यथाक्रमम् ॥ २४ ॥

२५-२६ ] ति० टी०—इष्टयज्ञ इति बहुव्रीहिः । आगमे भूमावागमे निश्चयमुपायविषयं नाध्यगच्छतेति तदर्थः ॥ २५ ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०—स्वेति । श्रीमान् इष्टयज्ञः महीपतिः सगरः स्वपुरं शीघ्रमेवागमत् । राजा सगरः गङ्गायाः आगमे निश्चयं नैवाध्यगच्छत् । तुचशब्दौ एवार्थौ ॥ २५ ॥

गो० टी०—स्वेति । निश्चयमुपायम् ॥ २५ ॥

रा० टी०—अगत्वेति । महान् राजा सगरः निश्चयं गङ्गानयने यत्नविशेषं महता कालेनापि अगत्वा अप्राप्य त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०—अकृत्वेति । महता कालेन दिवं गत इत्यन्वयः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१-२ ] ति० टी०—कालधर्मो मृत्युः प्रकृतीजना अमात्यवर्गाः दीर्घश्छान्दसः । रोचयामासुर्न्यायप्राप्तत्वादैच्छन् ॥१॥२॥

रा० टी०—सगरकर्तृकस्वर्गगमनानन्तरकालिकं वृत्तमाह—कालेति । हे राम ! सगरे कालधर्मं गते सति प्रकृतीजनाः सर्वाः प्रजाः सुधार्मिकमंशुमन्तं राजानं रोचयामासुः राजत्वेनेषुः । प्रकृतिशब्दो दीर्घैकारान्तोऽपि "कृदिकारादक्तिनः" इति प्रवृत्तेः । क्तिन्नन्तत्वान्न तत्प्रवृत्तिरिति तु न भ्रमितव्यम् संज्ञावाचकत्वेन क्तिजन्तत्वात् । संज्ञात्वे प्रमाणम् 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति वैजयन्ती । एतेन छान्दसो दीर्घ इति भूषणायुक्तिर्नादर्तव्या ॥ १ ॥

गो० टी०—अथ गङ्गायास्त्रिपथगमनहेतुप्रश्नस्य पूर्वप्रकृतस्य साक्षादुत्तरमाह—कालधर्ममित्यादि । जातमात्रस्य कालेनावश्यं प्राप्तव्यो धर्मः कालधर्मः मरणमिति यावत् । प्रकृतीजना इत्यत्र दीर्घश्छान्दसः । अमात्यवर्गाः 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति वैजयन्ती । रोचयामासुः न्यायप्राप्तत्वादैच्छन् ॥ १ ॥

रा० टी०—स इति । हे रघुनन्दन ! सः प्रजाभिः राजत्वेन इष्टः अंशुमान् सुमहान् राजा आसीत् । तस्यांशुमतः पुत्रः महान् सर्वपूज्यः दिलीप इति विश्रुतः ख्यातः आसीत् ॥ २ ॥

१ चागमदिति गो. पाठः । २ अकृत्वेति गो. पाठः ।

तस्मै राज्यं समादिश्य दिलीपे रघुनन्दन। हिमवच्छिखरे रम्ये तपस्तेपे सुदारुणम् ॥ ३ ॥
द्वात्रिंशच्छतसाहस्रं वर्षाणि सुमहायशाः। तपोवनगतो राजा स्वर्गं लेभे तपोधनः ॥ ४ ॥
दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम्। दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ५ ॥
कथं गङ्गावतरणं कथं तेषां जलक्रिया। तारयेयं कथं चैतानिति चिन्तापरोऽभवत् ॥ ६ ॥
तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः। पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥
दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान्। त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥
अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति। व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९ ॥
इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा। राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ १० ॥
भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन। अनपत्यो महाराजः प्रजाकामः स चाप्रजाः ॥ ११ ॥

---

गो० टी०-स इति। सः सुमहान् राजासीदित्यन्वयः ॥२॥

३-४ ] ति० टी०-दिलीपे दिलीपाय। तपस्तेपे पितृगतये गङ्गाया भूलोकावतारणायेति शेषः ॥ ३ ॥ ४ ॥

रा० टी०-तस्मिन्निति। हे रघुनन्दन! तस्मिन् दिलीपे राज्यं समावेश्य रम्ये हिमवच्छिखरे सुदारुणं तपस्तेपे गङ्गानयनकामनया अंशुमानिति शेषः ॥ ३ ॥

गो० टी०-तस्मिन्निति। तेपे गङ्गावतरणायेति शेषः॥३॥

रा० टी०-द्वात्रिंशच्चेति। द्वात्रिंशत्सहस्राणि वर्षाणि तपोवनगतस्तपोवनं प्राप्तः अत एव तपोधनः राजांशुमान् स्वर्गमेव लेभे। एतेन गङ्गालाभव्यवच्छेदः। चशब्द एवार्थे ॥४॥

गो० टी०-द्वात्रिंशादिति। स्वर्गं लेभे नतु गङ्गाम् ॥४॥

५ ] ति० टी०-पैतामहं वधं पितामहानां सागराणामपमृत्युम् ॥ ५ ॥

रा० टी०-दिलीप इति। महातेजाः दिलीपः पैतामहं पितामहसंबन्धिनं वधं मृत्युं श्रुत्वैव दुःखोपहतया दुःखाभिभूतयाबुद्धया निश्चयं गङ्गानयनोपायविषयकबुद्धिं नाध्यगच्छत न प्राप्नोत्। एतेन चिन्तापरतयैव बहूनि दिनानि व्यतीतानीति ध्वनितम् ॥ ५ ॥

गो० टी०-दिलीप इति। वधमपमृत्युं दुःखोपहतया पित्रा दुश्चरे तपसि कृतेऽपि तेषां गतिर्नाभूदित्येवंरूपया नाध्यगच्छत नाध्यगच्छत् ॥ ५ ॥

६]ति० टी०-निश्चयानधिगमनमभिनयति-कथमिति॥६॥

रा० टी०-चिन्तास्वरूपमेवाह-कथमिति। गङ्गावतरणं गङ्गया आगमनं कथं स्यात्। ननु मास्त्वागमनमत आह-तेषामपमृत्युप्राप्तानां पितॄणां जलक्रिया कथं स्यात्। ननु जलान्तरेण जलक्रियास्त्वित्यत आह-कथमेतान् पितॄन् तारयेयम् एतेन जलान्तरेण जलक्रियया एषां तरणं न भविष्यतीति सूचितम् इति एवंप्रकारेण चिन्तापर एवाभवत् दिलीप इति शेषः। चशब्द एवार्थे ॥ ६ ॥

गो० टी०-निश्चयानधिगममेवाह-कथमित्यादिना ॥ ६ ॥

७ ] ति० टी०-धर्मेण विदितेति धर्मेण प्रसिद्ध इत्यर्थः ॥ ७ ॥

रा० टी०-तस्येति। नित्यं चिन्तयतः धर्मेण धर्माचरणेन विदितः प्रख्यातः आत्मा स्वरूपं यस्य तस्य दिलीपस्य परमधार्मिकः भगीरथो नाम पुत्रः जज्ञे ॥ ७ ॥

गो० टी०-तस्येति। धर्मेण प्रयोजकेन चिन्तयतः ॥ ७ ॥

८ ] ति० टी०-अकारयत्कृतवान् ॥ ८ ॥

रा० टी०-दिलीप इति। महातेजाः दिलीपस्तु बहुभिः यज्ञैः इष्टवान्। तद्राज्यकरणसंख्यामाह-त्रिंशद्वर्षसहस्राणि राजा दिलीपः राज्यमकारयत्। रामो राज्यमचीकरदित्यादाविव णिच्प्रयोगः ॥ ८ ॥

गो० टी०-दिलीप इति। अकारयत् अकरोत् ॥ ८ ॥

९-१० ] ति० टी०-व्याधिना पितॄणामुद्धरणालाभजन्यदुःखजेन। तद्दिलीपवंशजो रघुपुत्रको दिलीपः कालिदासोक्तोऽन्य एवेति बोध्यम् ॥ ९ ॥ १० ॥

रा० टी०-अगत्वेति। हे नरशार्दूल! राजा दिलीपस्तेषामपमृत्युं प्राप्तानां पितॄणामुद्धरणं प्रति निश्चयमगत्वा अप्राप्य व्याधिना कालधर्ममुपेयिवान् प्राप ॥ ९ ॥

गो० टी०-अगत्वेति। उपेयिवान् ययौ ॥ ९ ॥

रा० टी०-कालधर्मप्राप्तिप्रकारं वर्णयन्नाह-इन्द्रेति। राज्ये पुत्रं भगीरथमभिषिच्य स्वार्जितेन कर्मणैव राजा दिलीपः इन्द्रलोकं गत ॥ १० ॥

गो० टी०-इन्द्रेति। अभिषिच्य इन्द्रलोकं गतः ॥ १० ॥

११ ] ति० टी०-स च प्रजा इत्यस्य मन्त्रिष्वाधायेत्युत्तरेणान्वयः ॥ ११ ॥

रा० टी०-भगीरथ इति। हे रघुनन्दन! राजर्षिः धार्मिकः धर्मनिरतः भगीरथस्तु अनपत्यः अपत्यरहित आसीदिति शेषः। हे रघुनन्दन! अप्रजाः अपत्यरहितः अत एव प्रजाकामः अपत्यविषयकेच्छावान् स भगीरथः मन्त्रिषु तद्राज्यमाधाय नियुज्य गङ्गावतरणे गङ्गानयने रतः अत एव गोकर्णे

---

१ तस्मिन्निति गो. रा. पाठः। २ च सहस्राणीति गो. पाठः। ३ रामेति गो. रा. पाठः। ४ चाप्रजाः इति गो. रा. पाठः।

मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः । तपो दीर्घं समातिष्ठद्गोकर्णे रघुनन्दन ॥ १२ ॥
ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः । तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ १३ ॥
अतीतानि महाबाहो तस्य राज्ञो महात्मनः । सुप्रीतो भगवान्ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ १४ ॥
ततः सुरगणैः सार्धमुपागम्य पितामहः । भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १५ ॥
भगीरथ महाराज प्रीतस्तेऽहं जनाधिप । तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १६ ॥
तमुवाच महातेजाः सर्वलोकपितामहम् । भगीरथो महाबाहुः कृताञ्जलिपुटः स्थितः ॥ १७ ॥
यदि मे भगवान्प्रीतो यद्यस्ति तपसः फलम् । सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १८ ॥
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् । स्वर्गं गच्छेयुरत्यन्तं सर्वे च प्रपितामहाः ॥ १९ ॥

---

गोकर्णाभिधमहादेवसमीपे ऊर्ध्वबाहुः पञ्चतपाः पञ्चानां पार्श्वचतुष्टयवर्तिवह्न्यूर्ध्ववर्तिसूर्याणां मध्ये तपो यस्य उक्तैः पञ्चभिस्तपो यस्येति वा मासाहारः मासे मासान्ते आहारो भोजनं यस्य जितेन्द्रियः सन् दीर्घं तपः समातिष्ठत् अकरोत्। चशब्दो हेत्वर्थे सार्धश्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—भगीरथ इति । अनपत्यः अत एव प्रजाकामोऽभूत् स चाप्रजा इत्युत्तरशेषः ॥ ११ ॥

१२ ] ति० टी०—प्रजास्तद्राज्यं च मन्त्रिष्वाधाय गङ्गावतरणेच्छुस्तप आतिष्ठत् । गोकर्णो हिमवत्पादविशेषः दक्षिणदिक्स्थतीर्थविशेषो वा ॥ १२ ॥

गो० टी०—स इति । गोकर्णे हिमवत्पादविशेषे पञ्चाग्नयः चतुर्षु पार्श्वेष्वग्नय उपरि सूर्यश्च तेषां मध्ये तपो यस्य सः पञ्चतपाः मासस्य सकृदाहारो यस्य स मासाहारः उभयत्र मध्यमपदलोपी समासः पृषोदरादित्वात्साधुत्वम् ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—पञ्चतपाः पञ्चाग्निमध्ये तपो तस्य । मासाहारो मासे गते आहारो यस्य । वर्षसहस्राण्यतीतानीत्यन्वयः ॥ १३ ॥

रा० टी०—तस्येति । हे महाबाहो ! घोरे तपसि तिष्ठतस्तस्य भगीरथस्य वर्षसहस्राणि अतीतानि व्यतीतानि अत एव महात्मनस्तस्य राज्ञो भगीरथस्य उपरि भगवान् सकलसामर्थ्यविशिष्टः प्रजानां पतिः स्वामी अत एव ईश्वरो नियन्ता ब्रह्मा सुप्रीतोऽभवदिति शेषः । सार्धश्लोकः संमिलितान्वयी ॥ १३ ॥

गो० टी०—तस्येति । तस्य राज्ञो महात्मन इत्युत्तरशेषः ॥ १४ ॥

१४–१५ ] ति० टी०—तस्य राज्ञः सुप्रीत इत्यन्वयः ॥ १४ ॥ १५ ॥

गो० टी०—सुप्रीत इत्यर्थम् ॥ १५ ॥

रा० टी०—तत इति । ततः सुप्रसादानन्तरं पितामहो ब्रह्मा सुरगणैः सार्धमुपागम्य प्राप्य महात्मानमतिप्रयत्नवन्तं तप्यमानं भगीरथमथ मङ्गलवचनमब्रवीत् । तद्वचनमेवाह—हे सुव्रत हे महातेजः हे भगीरथ हे जनाधिप ! ते सुतप्तेन तपसा अहं प्रीतः अतः वरं वरय । चशब्दो हेत्वर्थे ॥१४॥१५॥

गो० टी०—तत इति । अथ उपगमनानन्तरम् ॥ १६ ॥

१६–१७ ] ति० टी०—तपसा चेति । चस्त्वर्थे ॥ १६ ॥ १७ ॥

गो० टी०—भगीरथेति । ते तपसा प्रीतः ॥ १७ ॥

रा० टी०—तमिति । महातेजाः महाभागः परमभाग्यविशिष्टः कृताञ्जलिः प्रणतिसूचककरयुगलकरः उपस्थितः समीपं प्राप्तो भगीरथस्तं प्रसन्नं सर्वलोकपितामहं ब्रह्माणमुवाच ॥१६॥

गो० टी०—तमिति । महातेजाः तपःकृतनिरवधिकतेजाः ॥ १८ ॥

१८ ] ति० टी०—यद्यस्तीत्याद्यसंदिग्धे संदिग्धवचनं वेदाश्चेत्प्रमाणं स्युरितिवत् । सलिलं स्पर्शमात्रेण स्वर्गतिसाधनं सलिलम् ॥ १८ ॥

रा० टी०—तद्वचनमेवाह—यदीति । भगवन् हे ब्रह्मन् ! यदि भवान् मे प्रीतः अस्ति तपसः फलं चास्ति तर्हि सर्वे सगरस्यात्मजाः सलिलं गङ्गाजलं मत्त आप्नुयुः प्राप्नुयुः ॥ १७ ॥

गो० टी०—यदीति मे तपस इत्यन्वयः ॥ १९ ॥

१९ ] ति० टी०—अभीष्टोक्तगुणकसलिलप्राप्तिं दर्शयति—गङ्गाया इति । एषां भस्मनि गङ्गायाः सलिलेन क्लिन्ने सति एतेऽत्यन्तमक्षय्यं यथा भवति तथा स्वर्गं गच्छेयुः नान्यथेत्यर्थः ॥ १९ ॥

रा० टी०—गङ्गाया इति । एषां महात्मनां भस्मनि गङ्गायाः सलिलक्लिन्ने सति अत्यन्तम् अन्तं ध्वंसमतिक्रान्तमक्षय्यमित्यर्थः स्वर्गं सर्वे मे प्रपितामहाः गच्छेयुः प्राप्नुयुः ॥१८॥

गो० टी०—न केवलं सलिलाप्तिरन्यच्चेत्याह—गङ्गाया इति । अत्यन्तमक्षय्यम् ॥ २० ॥

---

१ स तपो दीर्घमातिष्ठदिति गो. रा. पाठः । २ पतिरिति गो. रा. पाठः । ३ महातेजः इति रा. महाभाग इति गो. पाठः । ४ जनेश्वरेति गो. पाठः । ५ ते इति गो. रा. पाठः । ६ महाभाग इति गो. रा. पाठः । ७ भगवन्निति गो. रा. पाठः । ८ मे इति गो. रा. पाठः ।

देवं याचे ह संतत्यै नावसीदेत्कुलं च नः । इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ २० ॥
उक्तवाक्यं तु राजानं सर्वलोकपितामहः । प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २१ ॥
मनोरथो महानेष भगीरथ महारथ । एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २२ ॥
इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता । तां वै धारयितुं राजन्हरस्तत्र नियुज्यताम् ॥ २३ ॥
गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते । तां वै धारयितुं राजन्नान्यं पश्यामि शूलिनः ॥२४॥
तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् । जगाम त्रिदिवं देवैः सर्वैः सह मरुद्गणैः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

२०-२१ ] ति० टी०-इक्ष्वाकूणां कुले जातस्य मम सन्ततिर्देया यथा नः कुलं नावसीदेत् । सन्तत्यै इति चतुर्थी प्रथमार्थे एष परो वरः द्वितीयवर इत्यर्थः । परे तु सन्तत्यै तदर्थं नः कुलं नावसीदेदिति च याचे मत्कुलेऽसंततिः कोऽपि मा भूदित्यर्थः । उपसंहरति-इक्ष्वाकूणामिति । तत्कुले जातस्यैष एव वरोऽस्तु नातोऽधिकं तृतीयं वरान्तरं याचे इत्यर्थः । एतेन पूर्वपरोपकारिता भगीरथस्य दर्शितेत्याहुः ॥ २०॥२१ ॥

रा० टी०-वरान्तरं प्रार्थयते-देयेति । हे देव ! सन्ततिः पुत्रश्च मे मह्यं देया यतो नोऽस्माकं कुलं नावसीदेत् इक्ष्वाकूणां कुले जातस्य मे एषः परो द्वितीयो देवः प्रमोदकारकः वरोऽस्तु ॥ १९ ॥

गो० टी०-देया चेति । इक्ष्वाकूणां कुले जातस्य मे संततिर्देया यया नः कुलं नावसीदेदेष वरः परः द्वितीयो वरोऽस्त्विन्वयः । तपसे निर्गमदशायामपि हि प्रजाकाम इत्युक्तम् ॥२१॥

रा० टी०-उक्तेति । उक्तवाक्यमुच्चारितप्रार्थनावचनं राजानं भगीरथं सर्वलोकपितामहो ब्रह्मा शुभां शुभहेतुभूतामेव मधुरां मनोहरां मधुराक्षरां मनोहराक्षरविशिष्टां वाणीं प्रत्युवाच । तुशब्द एवार्थे ॥ २० ॥

गो० टी०-उक्तेति । शुभां शुभहेतुं मधुरामर्थतो मनोज्ञाम् ॥ २२ ॥

२२ ] ति० टी०-मनोरथः तावक इति शेषः ॥ २२ ॥

रा० टी०-तत्प्रतिवचनमेवाह-मनोरथ इति । हे महारथ हे भगीरथ हे इक्ष्वाकुकुलवर्धन ! एष ते महान् मनोरथः एवं सिद्धो भवतु ते भद्रं कल्याणमस्तु ॥ २१ ॥

गो० टी०-मनोरथ इति । मनोरथः तावक इति शेषः २३॥

२३ ] ति० टी०-स्वसमीपे स्थितत्वादियमिति निर्देशः २३॥

रा० टी०-इयमिति । हैमवती हिमवत्समीपवर्तिनी हिमवतो ज्येष्ठा सुता या इयं प्रसिद्धा गङ्गा तां तत्र गङ्गागमनसमये धारयितुं हरः एव नियुज्यतां प्रार्थ्यताम् । वैशब्द एवार्थे तेन तद्धारणसामर्थ्यं शिवातिरिक्तस्य नास्तीति बोधितम्॥२२॥

गो० टी०-इयमिति । इयं संनिहिता हैमवती हिमवत्संनिहिता धारयितुं शक्तः हरः तत्र धारणे नियुज्यतां प्रार्थ्यताम्॥

२४ ] ति० टी०-हरनियोगहेतुमाह-गङ्गाया इति । तां गङ्गाम् ॥ २४ ॥

रा० टी०-ननु पृथिव्येव धारयिष्यतीत्यत आह-गङ्गाया इति । हे राजन् ! गङ्गायाः पतनं पृथिवी न सहिष्यते अतो हे राजन् ! तां गङ्गां धारयितुं शूलिनः शिवादन्यं न पश्यामि । वैशब्दः शीघ्रार्थकः ॥ २३ ॥

गो० टी०-गङ्गाया इति । धारयितुं शक्तमिति शेषः ॥२९॥

२५ ] ति० टी०-गङ्गामाभाष्य राजानं यथाकालमनुगृहाणेत्युक्त्वा देवैराजानजैः मरुद्गणैः कर्मदेवैः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रा० टी०-तमिति । लोककृद्ब्रह्मा राजानं तं भगीरथमेवमुक्त्वा गङ्गां चाभाष्य एतद्भगीरथप्रार्थनासिद्धिस्त्वया कर्तव्येत्युक्त्वा सर्वैर्देवैः सर्वैर्मरुद्गणैः सह त्रिदिवं स्वं लोकं जगाम पुनर्मरुद्गणोपादानं ब्राह्मणवशिष्ठन्यायेनेति बोध्यम् ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

गो० टी०-तमिति । आभाष्य वत्से राजानं यथाकालमनुगृहाणेत्युक्त्वेति यावत् । मरुद्गणैर्वायुगणैः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

१ देया च संततिर्देवेति गो. रा. पाठः । २ सहिष्यतीति गो. रा. पाठः । ३ वीरेति गो. पाठः । ४ दैवः सह देवैरिति गो. रा. पाठः ।

## त्रिचत्वारिंशः सर्गः ।

भगीरथतपश्चरणसंतुष्टहरशिरसि गङ्गापतनम्, हरजटायां लोपभवनम्, भगीरथकृतशिवस्तुत्या गङ्गाया निर्गमनम्, सप्तस्रोतसामुत्पत्तिः, गङ्गाकृतयज्ञवाटप्लावनसंजातक्रोधेन जह्नुना गङ्गाप्राशनम् पुनर्भगीरथप्रार्थनया श्रोत्राभ्यां तद्विसर्जनं, गङ्गाया भगीरथेन सह रसातलगमनेन तत्पितामहपवित्रीकरणम्, तेषां स्वर्गप्राप्तिश्च ।

देवदेवे गते तस्मिन्सोऽङ्गुष्ठाग्रनिपीडिताम् । कृत्वा वसुमतीं राम वत्सरं[1] समुपासत ॥ १ ॥
अथ[2] संवत्सरे पूर्णे सर्वलोकनमस्कृतः । उमापतिः पशुपती राजानमिदमब्रवीत् ॥ २ ॥
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् । शिरसा धारयिष्यामि शैलराजसुतामहम्[3] ॥ ३ ॥
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता । तदा सातिमहद्रूपं कृत्वा वेगं च दुःसहम् ॥ ४ ॥
आकाशादपतद्राम शिवे शिवशिरस्युत । अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥ ५ ॥
विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् । तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ॥ ६ ॥
तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा । सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥ ७ ॥

---

१–२–३ ] ति० टी०–देवदेवे आजानजानामपि देवानां देवे पूज्ये अङ्गुष्ठाग्रेण निपीडिताम् । समुपासतेत्यार्षं बहुवचनम् समुपास्तेत्यर्थः । उमापतिमिति शेषः ॥ १ ॥ २ ॥ ३ ॥

रा० टी०–ब्रह्मगमनोत्तरकालिकं भगीरथवृत्तमाह–देवेति । देवदेवे देवपूज्ये तस्मिन् ब्रह्मणि गते सति हे राम ! स भगीरथः अङ्गुष्ठाग्रनिपीडितां वामपादाङ्गुष्ठाग्रमात्राश्रितां वसुमतीं पृथिवीं कृत्वा संवत्सरमुपासत । गणकार्यस्यानियत्वात् शप्श्रुतिः ॥ १ ॥

गो० टी०–अथ गङ्गाप्लवनेन सागराणां स्वर्गगतिस्त्रिचत्वारिंशे–देवदेव इत्यादि । उपासत उपास्त शिवमिति शेषः ॥१॥

रा० टी०–अथेति । अथ उपासनानन्तरं संवत्सरे पूर्णे सति सर्वलोकनमस्कृतः उमापतिः पशुपतिः शिवो राजानं भगीरथमिदमब्रवीत् उमापतिः पशुपतिरित्युक्त्या उमानन्दीश्वरयोः साहित्यं शिवस्य सूचितम् ॥ २ ॥

गो० टी०–अथेति । उमापतिरित्यनेनोमया सहागत इत्युच्यते ॥ २ ॥

रा० टी०–तद्वचनमेवाह–प्रीत इति । हे नरश्रेष्ठ ! अहं ते प्रीतः त्वद्विषयकप्रीतिमानतस्तव प्रियमीप्सितं करिष्यामि । प्रियमेव निर्दिशन्नाह–शैलज्येष्ठसुतां गङ्गामहं शिरसा धारयिष्यामि ॥ ३ ॥

गो० टी०–प्रीत इति । प्रियं करिष्यामीत्येतद्विवृणोति–शिरसेति ॥ ३ ॥

४ ] ति० टी०–तदा सेति । ईश्वरेण धारणाङ्गीकारे कृते गर्वादित्यर्थः ॥ ४ ॥

रा० टी०–तत इति । तदा धारणप्रतिज्ञानन्तरकाले सर्वलोकनमस्कृता ज्येष्ठा हैमवती हिमवत्कन्या सा प्रसिद्धा गङ्गा अतिमहद्रूपं दुःसहं *महद्वेगं च कृत्वा ततः गङ्गाभवनत्वेन प्रसिद्धादाकाशात् शिवे सकलकल्याणमूलभूतशिवशिरसि उत वितर्केणापतत् । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०–तत इति । अर्धत्रयमेकान्वयम् । हैमवती हिमवत्कन्या शिवे शुद्धे । उतेति प्रसिद्धौ ॥ ४ ॥

५ ] ति० टी०–शिवे शोभने । तादृशरूपकरणे हेतुमाह–अचिन्तयदित्यादि ॥ ५ ॥

रा० टी०–तद्वितर्कमेव निर्दिशन्नाह–अचिन्तयदिति । स्रोतसा शंकरमागृह्यैव पातालमहं विशामीति परमदुर्धरा सा देवी गङ्गा अचिन्तयत् । चकार इत्यर्थकः हिरेवार्थकः । एतेन गङ्गायाः शिवे प्रीत्यतिशयः खेलनेच्छा च सूचिता ॥ ५ ॥

गो० टी०–महारूपदुःसहवेगकरणे निमित्तमाह–अचिन्तयदिति । दुर्धरा धर्तुमशक्या गृह्य गृहीत्वा ॥ ५ ॥

६ ] ति० टी०–तस्यावलेपनमिति संधिरार्षः अवलेपनं स्वस्यापि स्रोतसोभिभवनचिन्तारूपं गर्वम् ॥ ६ ॥

रा० टी०–तस्या इति । तदा गङ्गाविचारसमये एव तस्याः गङ्गायाः लेपनं खेलनेच्छावृद्धिं ज्ञात्वा क्रुद्धो व क्रुद्ध इव भगवान् अतिसामर्थ्यविशिष्टस्त्रिनयनो हरः तिरोभावयितुं स्वशिरसि गङ्गां गोपयितुं बुद्धिं निश्चयं चक्रे एतेन शिवस्यापि खेलनेच्छा सूचिता । तुशब्द एवार्थे वशब्द इवार्थे अत एव संधौ नार्षकल्पना ॥ ६ ॥

गो० टी०–तस्या इति । वलेपनं गर्वं "वष्टिभागुरिः" इत्यल्लोपः तिरोभावयितुं तिरोहितां कर्तुम् ॥ ६ ॥

७ ] ति० टी०–तिरोभावयितुं जटामण्डले तिरोधानेनाभिभूतां कर्तुम् ॥ ७ ॥

रा० टी०–सेति । हे राम ! पुण्या परमपवित्रत्वहेतुभूता सा गङ्गा पुण्ये अतिपवित्रत्वहेतुभूते हिमवत्प्रतिमे हिमवान्

---

१ संवत्सरमुपासतेति गो. रा. पाठः । २ अस्मात्प्राक् ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः । अचलः स्थाणुवत्स्थित्वा रात्रिंदिवमरिंदमेत्यधिकं गो. पुस्तके. । ३ ज्येष्ठसुतामहमिति रा. पाठः । ४ गङ्गेति रा. पाठः । * महावेगमिति युक्तम् ।

हिमवत्प्रतिमे राम जटामण्डलगह्वरे । सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ॥ ८ ॥
नैव सा निर्गमं लेभे जटामण्डलमन्ततः । तत्रैवाबभ्रमद्देवी संवत्सरगणान्बहून् ॥ ९ ॥
तामपश्यत्पुनस्तत्र तपः परममास्थितः । स तेन तोषितश्चासीदत्यन्तं रघुनन्दन ॥ १० ॥
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति । तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ ११ ॥
ह्लादिनी पावनी चैव नलिनी च तथैव च । तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥ १२ ॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु दिशं शुभाः ॥ १३ ॥
सप्तमी चान्वगात्तासां भगीरथरथं तदा । भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ १४ ॥

प्रतिमा सदृशो यस्य तस्मिन् जटामण्डलगह्वरे तस्मिन्प्रसिद्धे रुद्रस्य शिवस्य मूर्धनि पतिता ॥ ७ ॥

गो० टी०—सेति। जटामण्डलमेव गह्वरं गुहा यस्मिंस्तत्तथा ७

८ ] ति० टी०—जटामण्डलेन गह्वरे दुष्प्रवेशे निर्गमे यत्नमास्थितापि महीं गन्तुं नाशक्नोदित्यन्वयः ॥ ८ ॥

रा० टी०—सेति । यत्नमास्थिता सा गङ्गा महीं गन्तुं कथंचिन्नाशक्नोत् । तत्र हेतुः यतः जटामण्डलमोहिता सा गङ्गा निर्गमं मार्गं नैव लेभे ॥ ८ ॥

गो० टी०—सेति । निर्गमनं जटामण्डलान्निःसरणमात्रमपि जटामण्डले मोहिता संजातमोहा ॥ ८ ॥

९ ] ति० टी०—नैवेति । जटामण्डलं भ्रान्त्वा प्रान्तमागताप्यन्ततस्तत्प्रान्तभागतोऽपि निर्गमं न लेभे प्रान्तभागेऽपि तन्मध्यत्वभ्रमस्य मायया भगवतोत्पादनात् । यद्यपि ब्रह्मैव माययागङ्गाजलरूपामिति पुराणेतिहासादिषु प्रसिद्धम् तस्य चाहं ममेत्यभिमानहीनस्यायमहंकारः शिवस्य च तादृशस्यतत्पराभाहंकरोऽत्यन्तमनुचितस्तथा तादृश्या गङ्गयाः प्रान्तभागे मध्यत्वभ्रमोऽप्यत्यन्तमनुचितः अत एवोक्तमन्यत्र ' परमात्मा शिवो ह्यन्यस्तस्मादन्या च जाह्नवी । इति यः सेवते गङ्गां न स मोक्षस्य भाजनम् ॥' इति तथापि लीलामात्रत्वाददोषः । शिवविष्ण्वोः परस्परमुपास्योपासकभाववदिति बोध्यम् । तर्हि किं कृतवती तत्राह—तत्रैवेति । अबभ्रमत् आर्षत्वात्सन्वदित्वं न ९

रा० टी०—तत्रेति । देवी गङ्गा बहून्संवत्सरगणान् तत्र शिवमूर्धन्येव अबभ्रमत् अवाभ्रमत् आगमशास्त्रस्यानित्यत्वाद्‍ह्विरहः तां देवीं तत्र शिवशिरस्येव अपश्यत् अत एव परमं तपः पुनः आस्थितः ॥ ९ ॥

गो० टी०—तत्रेति । अबभ्रमत् पुनः पुनरभ्रमत् । यङ्लुगन्ताल्लङ् । आस्थितः राजेति शेषः ॥ ९ ॥

१० ] ति० टी०—अथ तां जटाटवीतिरोहितां गङ्गां भगीरथोऽपश्यत् । पुनश्च तत्र तत्प्राप्तिविषये हरमुद्दिश्य परमं तप आस्थितः स हरः । तेन तपसा ॥ १० ॥

रा० टी०—अनेनेति । हे रघुनन्दन। अनेन भगीरथतपसा हरः अत्यर्थमत्यन्तं तोषितः आसीत् अत एव ततः स्वजटातः बिन्दुसरः ब्रह्मनिर्मितहिमवदेकदेशवर्ति सरोविशेषं प्रति गङ्गां विससर्ज ॥ १० ॥

गो० टी०—अनेनेति । अनेन तपसा तोषितश्चासीत् विससर्ज च बिन्दुसरोनाम हिमवति ब्रह्मनिर्मितसरोविशेषः ॥१०॥

११-१३ ] ति० टी०—ततस्तुष्टः सन्हरो बिन्दुसरः प्रति हिमवत्स्थितब्रह्मनिर्मितसरोविशेषं प्रति गङ्गां विससर्जेत्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥

रा० टी०—तस्यामिति । तस्यां गङ्गायां विसृज्यमाणायां सत्यां सप्तस्रोतांसि जज्ञिरे तेषां स्रोतसां नामानि निर्दिशन् सूत्तमाह—ह्लादिनीनामा तथैव पावनीनामा च तथैव नलिनीनामा च आसीदिति शेषः । गङ्गा शिवजलाः गङ्गेव शिवानि जलानि यासु ताः अत एव शुभाः सकलशुभहेतुभूताः तिस्रः ह्लादिन्यादयः प्राचीं दिशं जग्मुः ॥ ११ ॥

गो० टी०—तस्यामित्यर्धम् । स्रोतांसि प्रवाहाः ॥ ११ ॥

गो० टी०—स्रोतसां नामनिर्देशपूर्वकं गतिभेदमाह—ह्लादिनीति । शुभाः शोभमानाः ॥ १२ ॥

रा० टी०—सुचक्षुरिति । प्रसिद्धा सुचक्षुः प्रसिद्धा सीता च प्रसिद्धा सिन्धुश्च महानदी आसीदिति शेषः । एताः प्रसिद्धाः शुभोदकास्तिस्रोऽपि प्रतीचीं दिशमेव जग्मुः । तुचैवशब्दाः प्रसिद्धार्थाः । एकस्तुशब्दोऽप्यर्थकः ॥ १२ ॥

गो० टी०—सुचक्षुरिति । महानदीति सर्वविशेषणम् १३॥

१४ ] ति० टी०—एतेन भगीरथतपोहेतुकं त्रिपथगमनमुक्तम् । अथ चरितप्रश्नोत्तरमाह—भगीरथोऽपीति ॥ १४ ॥

रा० टी०—सप्तमीति । अथोऽनन्तरं तासां सप्तानां स्रोतोव्यक्तीनां मध्ये सप्तमी तु भगीरथं नृपमन्वगात् । दिव्यं स्यन्दनमास्थितो महातेजाः राजर्षिः भगीरथोऽपि अग्रे गङ्गायाः पुरतः प्रायात् गङ्गा तं रथस्थमपि अनुव्रजत् आगमशास्त्रस्यानित्यत्वादड्विरहः। सार्धश्लोक एकान्वयी । एकश्चस्त्वर्थे द्वितीयश्चकारोऽप्यर्थकः ॥ १३ ॥

गो० टी०—सप्तमीत्यर्धम् । तासां मध्ये ॥ १५ ॥

१ निर्गमनमिति गो. पाठः । २ मोहितेति गो. रा. पाठः । ३ बम्भ्रमदिति गो. पाठः । ४ अपश्यन्निति गो. पाठः । ५ अनेनेति गो. रा. पाठः । ६ अभूदिति गो. पाठः । ७ अत्यर्थमिति गो. रा. पाठः । ८ शुभा नदीति रा. पाठः । ९ स्त्वेता इति गो. पाठः । १० शुभोदका इति गो. रा. पाठः । ११ अथो नृपमिति गो. रा. पाठः ।

धावयादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् । गगनाच्छंकराशिरस्ततो धरणिमागता ॥ १५ ॥
अ[1]सर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् । मत्स्यकच्छपसंघैश्च शिंशुमारगणैस्तथा ॥ १६ ॥
पतद्भिः पतितै[2]श्चैवं व्यरोचत वसुंधरा । ततो देवर्षिगन्धर्वा यक्ष[3]सिद्धगणास्तथा ॥ १७ ॥
व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा । विमानैर्नगराकारै[4]र्हयैर्गजवरैस्तदा[5] ॥ १८ ॥
पारिप्लवगताश्चापि[6] देवतास्तत्र विष्ठिताः । तदद्भुतमिमं[7] लोके गङ्गावतर[8]मुत्तमम् ॥ १९ ॥
दिदृक्षवो देवगणाः समीयुरमितौजसः । संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ॥ २० ॥
शतादित्यमिवाभाति गगनं गततोयदम् । शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः ॥ २१ ॥
विद्युद्भिरिव [9]विक्षिप्तैराकाशमभवत्तदा । पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ॥ २२ ॥

गो॰ टी॰—भगीरथोऽपीति । स्यन्दनं रथमनुव्रजदन्वव्रजत् । अत्र स्वर्गाकाशभूमिगमनात् त्रिपथगात्वमित्येके दिक्त्रयगमनादित्यपरे ॥ १५ ॥

१५ ] ति॰ टी॰—अनुव्रजादित्यडभाव आर्षः ॥ १५ ॥

रा॰ टी॰—गङ्गागमनप्रकारं वर्णयन्नाह—गगनादिति । गगनात् शंकरशिर आगता ततः शंकरशिरसो धरणिं पृथिवीमागता तत्र धरण्यां तीव्रशब्दपुरस्कृतं तीव्रोत्युग्रः शब्दः पुरस्कृतः अग्रे गतो यस्य . तत् जलं गङ्गातोयं व्यसर्पत विशेषतोऽचलत् ॥ १४ ॥

गो॰ टी॰—एवं त्रीन्पथः केन हेतुनेत्यस्योत्तरमभिधाय कर्मभिः कैः समन्वितेत्यस्य चरितभेदप्रश्नस्योत्तरमाह—गगनादिति । तीव्रशब्दे हेतुरयम् ॥ १६ ॥

१६–१७ ] ति॰ टी॰—तीव्रशब्दपुरस्कृतमित्यत्र हेतुर्गगनादित्यादिनोक्तः। शिंशुमारः कप्याकारो जलचरविशेषः॥१६॥१७॥

रा॰ टी॰—मत्स्येति । पतद्भिः वर्तमानकालिकपतनाश्रयैः पतितैर्भूतकालिकपतनाश्रयैश्च मत्स्यादिसंघैः शिंशुमारगणैः शिंशुमारोऽम्बुकरी तत्समूहैश्च तथान्यैरनेकविधैर्जलचरैर्वसुंधरा पृथ्वी व्यरोचत ‘ शिंशुमारोऽम्बुकरी ’ इति वैजयन्ती ॥ १५ ॥

गो॰ टी॰—मत्स्येति । शिंशुमारः अम्बुकरी ‘ शिंशुमारस्त्वम्बुकरी ’ इति वैजयन्ती । अन्यैः जलजन्तुविशेषैः॥ १७ ॥

रा॰ टी॰—तत इति । तदा गङ्गागमनकाले ततः गङ्गालोकत्वेन प्रसिद्धात् गगनात् गां पृथ्वीं गतां प्राप्तां गङ्गां तत्र गगने स्थितास्ते देवादयस्तथा यक्षसिद्धगणाः व्यलोकयन्त॥१६॥

गो॰ टी॰—तत इति । गगनाद् रुद्रजटागगनात् गां भूमिम् ॥ १८ ॥

१८ ] ति॰ टी॰—गगनाद्गां गताम् रुद्रजटाकाशाद्भुवमित्यर्थः । विमानैरित्यादेश्चरन्त इति शेषः ॥ १८ ॥

रा॰ टी॰—विमानैरिति । पारिप्लवगतैः पारिप्लवः संभ्रमः स गतः प्राप्तो येभ्यः गगनाकारैः विपुलत्वेन गगनसदृशैर्विमानैस्तथा हयैः गजवरैरपि तत्र आकाशे एव विष्ठिताः गङ्गादर्शनकामनया संस्थिताः । चशब्द एवार्थे ॥ १७ ॥

गो॰ टी॰—विमानैरिति । नगराकारैः नगरवद्विपुलैः पारिप्लवगतैः पारिप्लवं संभ्रमं गतैरिति विमानादिविशेषणम् । तत्र गङ्गापतनप्रदेशे विष्ठिताः विशेषेण स्थिताः ॥ १९ ॥

१९ ] ति॰ टी॰—पारिप्लवगताः संभ्रमं गताः संभ्रमं प्राप्ता इत्यर्थ इत्येके । पारिप्लवो यानभेदः शिबिकादिरूपः शिबिकादियानस्था इत्यर्थ इत्यन्ये ॥ १९ ॥

रा॰ टी॰—तदिति । अद्भुततममत्यन्तविलक्षणमत एव उत्तमं सर्वश्रेष्ठं किंच उत्तममुत्कर्षेण दर्शनाकाङ्क्षोत्पादकं तत् प्रसिद्धं लोके गङ्गापतनं दिदृक्षवः अमितौजसः अपरिमेयपराक्रमाः देवगणाः समीयुः स्वस्ववाहनेभ्यः उत्तीर्य गङ्गासमीपं प्रापुः ॥ १८ ॥

गो॰ टी॰—तदिति । लोके भूलोके अमितौजस इत्यनेन प्रधानदेवा उच्यन्ते ॥ २० ॥

२० ] ति॰ टी॰—देवगणा ब्रह्मादयः । संपतद्भिरागच्छद्भिः ॥ २० ॥

रा॰ टी॰—संपतद्भिरिति । संपतद्भिः द्रुतमागच्छद्भिः सुरगणैस्तेषामाभरणौजसा च गततोयदं अभ्ररहितं गगनं शतादित्यं शतमादित्या यस्मिन् तदिव आभाति अशोभत “वर्तमानसामीप्ये–” इतिभूते लट् ॥ १९ ॥

गो॰ टी॰—संपतद्भिरिति । सुरगणैः अमिततेजोभिरिति सिद्धम् आभाति अभात् ॥ २१ ॥

२१ ] ति॰ टी॰—तन्मूलिकामुपमामाह—शतादित्यमिवेति ॥ २१ ॥

रा॰ टी॰—शिंशुमारेति । तदा तस्मिन् काले एव विद्युद्भिरिव शिंशुमारोरगगणैः अम्बुकरिसर्पसमूहैः चञ्चलैः मीनैरपि विक्षिप्तं व्याप्तमाकाशमभवत् । चशब्द एवार्थे ॥२०॥

गो॰ टी॰—शिंशुमारेति । आकाशं चञ्चलैः शिंशुमारादिभिः विद्युद्भिरिव विक्षिप्तं व्याप्तमभवत् ॥ २२ ॥

२२ ] ति॰ टी॰—विक्षिप्तैर्निःसृतैः विद्युच्छब्दः पुंलिङ्गोऽप्येतत्प्रामाण्यात् । सलिलोत्पीडैः फेनैः सहस्रधा करणं व्याप्त्या-यपाधित आकाशमभवत् व्याप्तमिति शेषः ॥ २२ ॥

१ व्यसर्पतेति गो. रा. पाठः । २ चान्यैरिति गो. रा. पाठः । ३ यक्षाः सिद्धेति गो. पाठः । ४ गगनाकारैरिति रा. पाठः। ५ तथेति ग.. पाठः । ६ गतैरिति गो. रा. पाठः । ७ तमाग्निति गो. रा. पाठः । ८ पतनमिति गो. रा. पाठः । ९ विक्षिप्तमिति गो. रा. पाठः ।

शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः। क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ॥ २३ ॥
विनतं क्वचिदुद्धूतं क्वचिद्याति शनैः शनैः। सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ॥ २४ ॥
मुहुरूर्ध्वपथं गत्वा पपात वसुधां पुनः। तच्छंकरशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ॥ २५ ॥
व्यरोचत तदा तोयं निर्मलं गतकल्मषम्। तत्रर्षिगणगन्धर्वा वसुधातलवासिनः ॥ २६ ॥

रा० टी०—पाण्डुरैरिति। शारदाभ्रैरिव शरत्कालिकमेघसदृशैः हंससंप्लवैरिव प्लवमानहंससदृशैश्च पाण्डुरैः श्वेतैः सहस्रधा वायुवेगादिनानेकप्रकारं कीर्यमाणैः सलिलोत्पीडैः फेनैः आकीर्णं व्याप्तं गगनमभवदित्यनुकृष्यते। इवशब्द आवृत्त्या उभयत्रान्वेति विनापि चं समुच्चयः ॥ २१ ॥

गो० टी०—पाण्डुरैरिति। वेगवशेन सहस्रधा कीर्यमाणैः सलिलोत्पीडैः फेनैर्हंससंप्लवैः हंससंकुलैः शारदाभ्रैरिव गगनमाकीर्णमित्यन्वयः ॥ २३ ॥

२३ ] ति० टी०—शारदाभ्रैरिव हंससंप्लवैर्हंससमूहैः संकीर्णं गगनमभवदिति पूर्वेणान्वयः। आयतं विस्तृतप्रवाहम् ॥ २३ ॥

रा० टी०—गङ्गासंबन्धेनाकाशं संवर्ण्य गङ्गागमनप्रकारमाह—क्वचिदिति। क्वचित्कदाचिद्द्रुततरं यथा भवति तथा याति गच्छति क्वचित्कुटिलं याति क्वचित् आयतं विस्तृतं याति क्वचित् विनीतं अगाधताप्राप्त्या संकुचितं याति क्वचिदुद्धूतं पाषाणस्खलनादिना ऊर्ध्वमुखं याति क्वचिच्छनैः शनैः याति ॥ २२ ॥

गो० टी०—क्वचिदिति। अत्र गङ्गेत्यनुपज्यते द्रुततरामित्यादिक्रियाविशेषणम् आयतमृजुविनतं निम्नेन संकुचितमुद्धूतं पाषाणस्खलनादिना ऊर्ध्वमुखम्। सर्वत्र व्यत्ययेन भूते लट् ॥ २४ ॥

२४ ] ति० टी०—विनतमगाधदेशे संकुचितम्। उद्धूतं पाषाणादियोगात् ॥ २४ ॥

रा० टी०—सलिलेनेति। क्वचित्कदाचित्सलिलेनैव अभ्याहतं सलिलमूर्ध्वगतिं गत्वा वसुधातलं पुनः पपात ॥२३॥

गो० टी०—सलिलेनेति। अभ्याहतं वातव्यावर्तितं तरङ्गसलिलेनाभिमुखमाहतमित्यर्थः ॥ २६ ॥

२५ ] ति० टी०—मुहुरिति। ऊर्ध्वपथगमने सलिलयोरभ्याघातो निमित्तम्। शंकरशिरसि भ्रष्टम् ॥ २५ ॥

रा० टी०—पातकालिकशोभां वर्णयन्नाह—तदिति। निर्मलं शिलासु पातेन पङ्कादिरूपमलरहितं किंच निर्गतो यो मः परिमाणं घमर्थे कविधानमिति माधातोः कः तं लाति गृह्णातीति निर्मलं इयत्तारहितप्रभाववदित्यर्थः। गतकल्मषं गतानि निष्टानि कल्मषानि आश्रितानां पापानि यस्मात् तत् क्तप्रत्ययोपस्थितकालस्यात्राविवक्षा कर्तुरीप्सिततममिति सूत्रघटकीभूतक्तप्रत्ययोपात्तवर्तमानत्वस्येव आश्रिता चाविवक्षा 'गन्ता विदेशं पथिकः प्रियो मे त्वद्वाक्यमात्रावधिरेव यात्रा। अतोऽतिमौनं कुरु ताम्रचूड त्वां स्वर्णचूडाख्यमहं वदिष्ये'' रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः। इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार' इत्यादौ तेन यदैव गङ्गादर्शनादि तदैव तत्कर्तॄणां पापक्षय इति फलितं तेन यदि दर्शनादिकर्तॄणां न पातकसंबन्धस्तर्हि तत्र नेति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः। शंकरशिरोभ्रष्टं शंकरशिरश्च्युतं पुनरनन्तरं भूमितलं भ्रष्टं तत् गङ्गाजलं तदा पतनादिकाले व्यरोचत लोकविलक्षणमशोभत तेन गङ्गाया ईश्वरत्वं बोधितम् ॥ २५ ॥

गो० टी०—तदिति। शंकरशिरसि भ्रष्टं पतितमपि ततः भूमितले पतितमपि निर्मलं गतं कल्मषं येन तद्गतकल्मषं पापापहमित्यर्थः ॥ २६ ॥

२६ ] ति० टी०—निर्मलम् नैर्मल्ये प्रागुक्तभ्रंशद्वयं हेतुः। गतकल्मषं स्वजलस्पर्शवतां प्राणिनां नाशितपापम् ॥ २६ ॥

रा० टी०—तत्रेति। तत्र गङ्गापतनकाले ऋषिगणगन्धर्वाः वसुधातलवासिनश्च भवाङ्गपतितं भवाङ्गात् पतितमित्यतः पवित्रमतिशुद्धं तोयं पस्पृशुरेव। सर्वं वाक्यं सावधारणं भवतीति न्यायेनैवकारलाभः। अत्र पस्पृशुरेवेत्युक्त्या न सस्नुरिति फलितं तेन अवगाहनार्हवेगवत्त्वं तज्जलस्य सूचितम्। पञ्चमीतियोग विभागेन संबन्धसामान्यपष्ठ्या वा समासः। पूर्वविधावनलविधावित्यादाविव। अतिपवित्रमित्यनेन स्वतः पवित्रत्वे सिद्धेऽपि भवाङ्गस्पर्शद्वारा लोकानपि पावयिष्यतीति हेतुर्ध्वनितः। एतेनानुशासनविरहात् पञ्चमीसमासानुपपत्तिरिति प्रत्युक्तम् यत्तु सामान्योक्त्या शिवस्यापि पवित्रत्वकारकमिति भूषणकृद्भिरुक्तं तच्चिन्त्यं हरस्येश्वरत्वेन तत्र मलसंबन्धस्यासंभवेन तत्पावित्र्यत्वकारकस्य दुर्वचत्वात् यदि ईश्वरेऽपि मलसंबन्धः स्वीक्रियते तर्हि हर्येनुकेन्न्यूनता तेषां स्यात् किंच हरिहरभक्तानां तीर्थपावनसामर्थ्यमस्तीति स्मृत्यादिसिद्धमत एव 'साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः। हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः' इति गङ्गागमनसमये गङ्गां प्रति भगीरथवचनं 'भवद्विधा भागवतास्तीर्थभूताः स्वयं प्रभो। तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता' इत्यादिविदुरं प्रति युधिष्ठिरवचनं संगच्छते। एतेन गङ्गाजलसंबन्धाद्धरः शुद्धः हराङ्गसंबन्धाच्च गङ्गामतिपवित्रता तत्याजेति वचनं श्रेयस्कामैर्दूरतः परिवर्जनीयम् आदरणीयं चेदं हरगात्रस्पर्शादतिपवित्रत्वं प्राप्ता गङ्गेति अत एव हरस्य गात्रसंस्पर्शात्पवित्रत्वमुपागतेत्यादीनि संगच्छन्ते संगच्छते च विष्णुपादोद्भवां दिव्यामित्यादिपवित्रत्वमुपागतेत्यत्र पवित्रशब्दोऽतिपवित्रपरः 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन

१ विनीतमिति रा. पाठः। २ मुखमिति गो. गतिमिति रा. पाठः। ३ वसुधातलमिति गो. रा. पाठः।

भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः । शापात्प्रपतिता ये च गगनाद्वसुधातलम् ॥ २७ ॥
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः । धूतपापाः पुनस्तेन तोयेनाथ शुभान्विताः ॥ २८ ॥
पुनराकाशमाविश्य स्वाँल्लोकान्प्रतिपेदिरे । मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ॥ २९ ॥
कृताभिषेको गङ्गायां बभूव गतकल्मषः । भगीरथो हि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ ३० ॥
प्रायादग्रे महाराजस्तं गङ्गा पृष्ठतोऽन्वगात् । देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ॥ ३१ ॥

मूर्ध्न्यधिकृतेन शिवः शिवोभूत्'इतिभागवतस्य तु अयमर्थः शिवः स्वतः सिद्धकल्याणस्वरूपः शिवः लोकानां कल्याणप्रदोऽभूदिति अयं भावः यदि शिवो गङ्गां न धारयेत् तर्हि गङ्गा पृथिव्यां नोपलभ्येत तथा च लोककल्याणं न स्यात् धारणे तु सर्वं सिद्धमिति अत 'एव तदम्बु पतितं स्पृष्ट्वा दधार शिरसा हरः । पावनार्थं जटामध्ये गतोऽस्मीत्यवधारणात् ' इतिभारतपद्ये पूप्रकृतिकणिजन्तप्रकृतिकल्युडन्तप्रयोगः लोकानां पावनार्थमित्यर्थः । अन्यथा 'तदम्बु पतितं स्पृष्ट्वा दधार शिरसा हरः । पूतोऽभूत्स जटामध्ये गतोऽस्मीत्यवधारणात्' इत्येव वदेत्। हरस्येश्वरत्वे प्रमाणं तु 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै' रित्यादि। 'धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु । अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ' इत्यादिभागवतादिवचनमिति दिक् ॥ २६ ॥

गो० टी०—तत्रेति । पवित्रं पावनम् । तत्र ज्ञापकहेतुमाह—भवाङ्गपतितमिति । भवेन रुद्रेण शिरसा धृतत्वात्पवित्रमिति ज्ञात्वा पस्पृशुरित्यर्थः । पवित्रमिति सामान्योक्त्या भवस्यान्येषां च पवित्रमित्युक्तमत एव हरस्य गात्रसंस्पर्शात् पवित्रत्वमुपागतेत्यत्रापि हरस्य शुद्धिप्रदत्वमुपागतेत्यर्थः । अन्येऽप्येवमूचुः श्रीमद्भागवते 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्' इति । भारते—'तदम्बु पतितं दृष्ट्वा दधार शिरसा हरः । पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात् ' इति । अत्राप्ययोध्याकाण्डे वक्ष्यति विष्णुपादोद्भवां दिव्यामिति । गङ्गाया विष्णुपादोद्भवत्वेन पवित्रत्वरूपं दिव्यत्वं भवाङ्गात्पतितमिति वार्थः । "द्वितीयाश्रितातीतपतित" इति द्वितीयासमासविधानात् पञ्चमीसमासानुपपत्तेश्च भवेन धृतत्वात् अस्माभिरपि धार्यमिति पस्पृशुरित्येवार्थः । यद्वा भवाङ्गपतितत्वात् पवित्रं न तु पूर्ववदतिपवित्रमत एव पस्पृशुः न तु सस्नुः । यद्वा यद्यपि भवाङ्गात्पतितं तथापि विष्णुपादोद्भूतत्वात्पवित्रमिति वा 'नदी वेगेन शुध्यति' इतिन्यायात् । भवसंपर्कविगमे पवित्रमिति वा पस्पृशुः ॥ २७ ॥

२७ ] ति० टी०—भवाङ्गं शिवमूर्धा पस्पृशुः सस्नुः । न केवलं पापसंहारमात्रं गङ्गायाः कृत्यम्, अपि तु पुण्यलोकप्रापणमपीत्याह—शापादित्यादि । गगनादुच्चस्थानात् ॥ २७ ॥

रा० टी०—गङ्गाप्रभावं वर्णयन्वृत्तान्तरमाह—शापादिति । चशब्द एवार्थे । ये देवादयः गगनाद्वसुधातलं शापात्प्रपतितास्ते तत्र गङ्गायामभिषेकं कृत्वैव गतकल्मषाः शापादिहेतुककल्मषरहिता बभूवुः ॥ २६ ॥

गो० टी०—शापादिति । शापाद्धेतोः ॥ २८ ॥

२८ ] ति० टी०—गतकल्मषा मुक्तशापाः अनेन ब्रह्मशापपरिहारोऽपि गङ्गास्नानफलमिति कृतपापानां तज्जलस्पर्शे तत्पापनाशपूर्वकं स्वर्गप्राप्तिः कैमुतिकन्यायेनैव सिद्धेति बोध्यम् ॥ २८ ॥

रा० टी०—पापापगमानन्तरकालिकं वृत्तमाह—धूतेति । ततः अभिषेकानन्तरं शुभास्वता अत्यन्तप्रकाशमानेन तेन पृथिवीं प्राप्तेन तोयेन अभिषिक्तगङ्गाजलेनैव धूतपापाः विगतकल्मषास्ते शापवशेन पृथिवीं प्राप्ताः देवादयः आकाशं पुनः आविश्य प्रविश्य आकाशमार्गेण गत्वेत्यर्थः स्वान् लोकान् पुनः प्रतिपेदिरे प्रापुः ॥ २७ ॥

गो० टी०—धूतेति । आकाशमाविश्य आकाशमार्गेणेत्यर्थः ॥ २९ ॥

२९–३१ ] ति० टी०—मुदितो दर्शनमात्रेण मुमुदे स्नानपानादिना ॥ २९ ॥ ३० ॥ ३१ ॥

रा० टी०—मुमुदे इति । मुदितः गङ्गागमनश्रवणेन प्रमोदं प्राप्तः लोकः तात्कालिकतद्देशसंबन्धिजनः भास्वता प्रकाशमानेन तेन शापादिदोषनिवर्तकत्वेन दृष्टेन गङ्गायां विद्यमानेन तोयेन कृताभिषेकः सन् विगतक्लमः विगतो निवृत्तः क्लमः कल्मषादिहेतुकग्लानिर्यस्य स बभूव अत एव मुमुदे परमं प्रमोदं प्राप ॥ २८ ॥

गो० टी०—मुमुद इति । मुदितो मुमुदे पुनः पुनर्जहर्षेत्यर्थः ॥ ३० ॥

रा० टी०—प्रसङ्गतः गङ्गाप्रभावं संवर्ण्य प्रकृतभगीरथवृत्तमाह—भगीरथ इति । दिव्यं स्यन्दनमास्थितः राजर्षिः महातेजाः भगीरथः अग्रे प्रायात् तं भगीरथं गङ्गापि पृष्ठत अन्वगात् ॥ २९ ॥

गो० टी०—भगीरथ इति । स्पष्टम् ॥ ३१ ॥

रा० टी०—देवा इति। हे राम!प्रीताः सर्षिगणाः ऋषिगणसहिताः सर्वे देवाः दैत्यदानवराक्षसाश्च सकिन्नरमहोरगाः किन्नरमहोरगैःसहिताः गन्धर्वयक्षप्रवराश्च सर्वा अप्सरसश्च सर्वे ये जलचरास्ते च भगीरथरथानुगाः सन्तः गङ्गाम् अन्वगमन् अगच्छन् । द्वयोरेकत्रान्वयः ॥ ३० ॥

१ ततस्तेनेति रा. पाठः। २ तोयेन च शुभास्वतेति गो. रा. पाठः।३ विगतक्लम इति गो. रा.पाठः।४ अपीति गो.रा. पाठः।५ तेजस्तमिति गो.रा. पाठः।

गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः । सर्पाश्चाप्सरसो राम भगीरथरथानुगाः ॥ ३२ ॥
गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये । यतो भगीरथो राजा ततो गङ्गा यशस्विनी ॥ ३३ ॥
जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी । ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ॥ ३४ ॥
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः । तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव ॥ ३५ ॥
अपिबत्तु जलं सर्वं गङ्गायाः परमाद्भुतम् । ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः ॥ ३६ ॥
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् । गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः ॥ ३७ ॥
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्प्रभुः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥ ३८ ॥
जगाम च पुनर्गङ्गा भगीरथरथानुगा । सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ॥ ३९ ॥

---

गो० टी०—देवा इति । श्लोकद्वयम् । भगीरथरथानुगां गङ्गामन्वगमन् ॥ ३२ ॥ ३३ ॥

३२ ] ति० टी०—भगीरथरथानुगाः सन्तो गङ्गामन्वगमन्नित्यन्वयः ॥ ३२ ॥

३३ ] ति० टी०—यतो येन मार्गेण ॥ ३३ ॥

रा० टी०—यत इति । राजा महाराजाधिराजो भगीरथः यतः येन पथा गच्छतीति शेषः ततः तेन पथा यशस्विनी समाधिकरहितयशोविशिष्टा सर्वपापविनाशिनी स्वाश्रितसमूलदोषनिवर्तनशीला सरितां श्रेष्ठा गङ्गा गच्छति तृतीयान्तात्तसिः ॥३१॥

गो० टी०—यत इति । यतः यत्र ततस्तत्र ॥ ३४ ॥

३४ ] ति० टी—अद्भुतकर्मणः वक्ष्यमाणगङ्गोपसंहाराभिप्रायमेतत् ॥ ३४ ॥

रा० टी०—तत इति । ततः उक्तक्रियादिविशिष्टत्वाद्धेतोः अद्भुतकर्मणः महात्मनः यजमानस्य जह्नोः यज्ञवाटं यज्ञशालां गङ्गा संप्लावयामास हि विद्वत्समाजे प्रसिद्धमेतत् । अत्र प्रार्थनां विनैव गङ्गा यज्ञशालां प्राप्तेत्यनेन जह्नोर्गङ्गोपासकत्वं सूचितम् ॥ ३२ ॥

गो० टी०—ततो हीति । अद्भुतकर्मण इति वक्ष्यमाणगङ्गापानाभिप्रायं यज्ञवाटं यज्ञक्षेत्रम् ॥ ३५ ॥

३५ ] ति० टी०—तस्यावलेपनं तस्या अवलेपनं गर्वमित्यर्थः ॥ ३५ ॥

रा० टी०—तस्या इति । हे राघव ! तस्याः गङ्गाया वलेयागशालाया आच्छादने प्लावने इत्यर्थः । पनमहोभाग्यमेतस्य यस्य यज्ञशालां गङ्गा प्राप्तेति स्वकीयां स्तुतिमेव ज्ञात्वा अत एव अक्रुद्धः क्रोधरहित एव जह्नुः परमाद्भुतं लौकिकविलक्षणं सर्वं गङ्गाया जलमपिबत् तेन जह्नोर्गङ्गाविषयकप्रीत्यतिशयः सूचितः । तुशब्दौ एवार्थौ । यत्तु क्रुद्ध इति छित्वा गङ्गासंप्रदानककोपं वर्णयन्ति तच्चिन्त्यम् गङ्गाया भगीरथानुगमनशीलत्वेन कोपाविषयत्वात् भगीरथसंप्रदानककोपावर्णनाच्च ॥ ३३ ॥

गो० टी०—तस्या इति । वलेपनं गर्वं परमाद्भुतमिति क्रियाविशेषणम् ॥ ३६ ॥

३६ ] ति० टी०—अपिबत् अगस्त्यः समुद्रजलमिव योगशक्त्येति भावः । परमाद्भुतं तदभवत् लोकस्येति शेषः ॥३६॥

रा० टी०—तत इति । सगन्धर्वाः देवाः ऋषयश्च सुविस्मिताः सन्तः महात्मानं पुरुषसत्तमं जह्नुं पूजयन्ति अपूजयन् । "वर्तमानसामीप्ये" इति भूते लट् । महात्मनः जह्नोः दुहितृत्वे जह्नुनिरूपितकन्यात्वे गङ्गां च नयन्ति स्म यदि भवच्छरीरात् गङ्गा निस्सरिष्यति तर्हि भवत्कन्या भविष्यतीत्यूचुरित्यर्थः । अपिशब्दः प्रसिद्धार्थकः इदं प्रसिद्धमित्यर्थः ॥ ३४ ॥

गो० टी०—तत इति सार्धश्लोकः । दुहितृत्वे नयन्ति स्म दुहितरमकुर्वन्नित्यर्थः ॥ ३७ ॥

३७ ] ति० टी०—पूजयन्ति स्तोत्रादिनेति शेषः । 'अनुनयन्ति' इति पाठे शैलराजदुहितुः कथमन्यद्दुहितृत्वमिति विमतिवारणाय गङ्गानुनयः ॥ ३७ ॥

३८ ] ति० टी०—तुष्टो गङ्गायाः स्वदुहितृत्वप्रापणात् । तस्मायतः पीतां पुनरसृजत्तस्मादित्यर्थः ॥ ३८ ॥

रा० टी०—तत इति । ततः दुहितृत्वप्रापणानन्तरं तुष्टो महातेजा जह्नुः श्रोत्राभ्यां पुनरसृजत् गङ्गा प्रादुश्चकारेत्यर्थः । तस्मात् जह्नुश्रोत्रप्रादुर्भावात् गङ्गां जह्नुसुता जाह्नवी इति च प्रोच्यते तुष्ट इत्यनेन गङ्गारूपसुतार्थमेवैतस्य यागे प्रवृत्तिरिति ध्वनितम् ॥ ३५ ॥

गो० टी०—तत इति । ततः दुहितृत्वप्रापणात् श्रोत्राभ्यां नरावयवेषु श्रोत्रस्यातिपावनत्वादिति भावः ॥ ३८ ॥

३९ ] ति० टी०—सागरं सगरसुतखातं संप्राप्ता तत्पूरणायेति शेषः । क्षारत्वं तु तस्यागस्त्येन पानोत्तरमित्यन्यत्र स्फुटम् ॥ ३९ ॥

रा० टी०—जगामेति । गङ्गा भगीरथरथानुगा सती पुनर्जगाम अनन्तरं सा सरित्प्रवरा गङ्गा सागरं संप्राप्ता तदा सागरप्राप्त्युत्तरकाले एव तस्य भगीरथप्रार्थितस्य कर्मणस्तत्पितृतारणकार्यस्य सिद्ध्यर्थं रसातलमप्युपागच्छत् । एकश्चशब्द एवार्थकः अपरोऽनन्तरार्थकः ॥ ३६ ॥

गो० टी०—जगामेत्यर्धत्रयम् । तस्य कर्मणः भगीरथयत्नस्य ॥ ३९ ॥

---

१ सर्वाश्चाप्स इति गो. रा. पाठः । २ अनुगामिति गो. पाठः । ३ विनाशिनीति गो. रा. पाठः । ४ यज्वा त्विति गो. पाठः । ५ चेति गो. पाठः । ६ पुनः इति गो. रा. पाठः ।

रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः । भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः ॥ ४० ॥
पितामहान्भस्मकृतानपश्यद्गतचेतनः । अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ॥
प्लावयत्पूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥ ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः ।

गङ्गासलिलेन सगरपुत्रभस्मन्याप्लुते ब्रह्मा तेषां देवलोकस्थितिमुक्त्वा राजानं च प्रशस्य सलिलक्रियां चादिश्य स्वलोकमगमत् । राजनि तदनुष्ठाय स्वराष्ट्रं गते प्रजानां परमः प्रमोदः ।

स गत्वा सागरं राजा गङ्गयानुगतस्तदा । प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १ ॥
भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥
तारिता नरशार्दूल दिवं याताश्च देववत् । षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥
सागरस्य जलं लोके यावत्स्थास्यति पार्थिव । सगरस्यात्मजाः सर्वे दिवि स्थास्यन्ति देववत् ॥ ४ ॥
इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति । त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥ ५ ॥

---

४० ] ति० टी०—तस्य कर्मणः सिद्ध्यर्थं भगीरथस्य स्ववंशोद्धारकर्मणः । यत्नतः प्रागुक्तयत्नैः ॥ ४० ॥

रा० टी०—भगीरथ इति । राजर्षिर्भगीरथोऽपि यत्नतः गङ्गामादाय भस्मकृतान् पितामहान् दीनचेतनः सन् अपश्यत् ॥ ३७ ॥

गो० टी०—भगीरथ इति । भस्मकृतान् भस्मत्वेन कृतान् ॥ ४० ॥

४१ ] ति० टी०—भस्मसात्कृतान्कपिलकोपाग्निना भस्मभावं प्राप्तान् प्लावयत्सेचयति स्म अत एव पूतपाप्मानः ॥४१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०—अथेति । हे रघूत्तम! उत्तमं तत् गङ्गासलिलं भस्मनां राशिं प्लावयत् अप्लावयत् । अथानेन हेतुना पूतपाप्मानः सागराः स्वर्गं प्राप्ताः । आगमशास्त्रस्यानित्यत्वादड्विरहः । 'प्लावयेत्' इति भूषणपाठः। आप्लावयदिति तद्व्याख्या ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डेऽत्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०—अथेति । तत्सलिलं प्लावयत् अप्लावयत् प्राप्ताः सगरपुत्रा इति शेषः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

१-२ ] ति० टी०—उक्तमेव विस्तरेणाह—स गत्वेति । भस्मसात्कृताः कात्स्न्र्येन भस्मकृताः । भूमेस्तलं पातालम् ॥ १ ॥ २ ॥

रा० टी०—ब्रह्मसंवादं वर्णयितुं पुनस्तदेव वर्णयन्नाह—स इति । तदा गङ्गाया जह्नुसुतात्वप्राप्त्युत्तरकाले गङ्गयानुगतः स राजा भगीरथः सागरं गत्वा प्राप्य यत्र ते सगरसुता भस्मसात् कृतास्तद्भूमेस्तलं प्रविवेश भस्मसमीपं प्रापेत्यर्थः । गङ्गयानुगत इत्युक्त्या गङ्गापि तत्तत्स्थलं प्रापेति फलितार्थः ॥ १ ॥

गो० टी०—पूर्वसर्गान्ते संग्रहेणोक्तं विस्तृणीते चतुश्चत्वारिंशे—स गत्वेत्यादि । भूमेस्तलं पातालं भस्मसात्कृताः सर्वात्मना भस्मस्वभावापन्नये संपादिताः "विभाषा साति कात्स्न्र्ये" इति सातिः ॥ १ ॥

रा० टी०—भस्मनीति । अथ भस्मसमीपप्राप्त्यनन्तरं हे राम ! गङ्गायाः सलिलेन भस्मनि आप्लुते सत्येव सर्वलोकप्रभुर्ब्रह्मा राजानं भगीरथमिदमब्रवीत् । वैशब्द एवार्थे ॥ २ ॥

गो० टी०—भस्मनीति । स्पष्टम् ॥ २ ॥

३ ] ति० टी०—तारिताः प्रेतत्वात् देववत्स्वर्गं प्राप्ताश्च । अनेन प्रेतत्वविमुक्तिस्वर्गप्राप्ती भस्मनोऽपि गङ्गास्पर्शस्य फलं किमुतास्थिपुद्गलादेरित्युक्तम् ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—तारिता इति । हे नरशार्दूल भगीरथ ! महात्मनः सगरस्य षष्टिः पुत्रसहस्राणि तारिताः कपिलापराधजनितशोकसागरान्निःसारिताः अत एव देववत् दिवं स्वर्गं याताः प्राप्ताः ॥ ३ ॥

गो० टी०—तारिता इति । तारिताः प्रेतभावान्मोचिताः ॥ ३ ॥

४-५ ] ति० टी०—यावत्सागरस्य जलं स्थास्यति तावद्दिवि स्थास्यन्तीत्यर्थः । तन्निमित्तमपि तया गङ्गया तत्खातस्य सागरस्य पूरणमिति भावः ॥ ४ ॥ ५ ॥

---

१ दीनचेतन इति गो. रा. पाठः । २ ह्रीति गो. रा. पाठः । ३ वै इति रा. पाठः ।

गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च । त्रीन्पथो भावयन्तीति तस्मात्त्रिपथगा स्मृता ॥ ६ ॥
पितामहानां सर्वेषां त्वमत्र मनुजाधिप । कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ॥ ७ ॥
पूर्वकेण हि ते राजंस्तेनातियशसा तदा । धर्मिणां प्रवरेणाथ नैष प्राप्तो मनोरथः ॥ ८ ॥
तथैवांशुमता वत्स लोकेऽप्रतिमतेजसा । गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९ ॥
राजर्षिणा गुणवता महर्षिसमतेजसा । मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥ १० ॥
दिलीपेन महाभाग तव पित्रातितेजसा । पुनर्न शंकिता नेतुं गङ्गां प्रार्थयतानघ ॥ ११ ॥
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ । प्राप्तोऽसि परमं लोके यशः परमसंमतम् ॥ १२ ॥

रा० टी०—सागरस्येति । हे पार्थिव ! सागरस्य जलं यावल्लोके स्थास्यति तावत् सर्वे सगरस्यात्मजा देववत् स्वर्गे स्थास्यन्ति ॥ ४ ॥

गो० टी०—स्वर्गप्राप्तेर्विशेषं चाह—सागरस्येति ॥ ४ ॥

रा० टी०—तवाप्यतिकीर्तिर्भविष्यतीति बोधयन्नाह—इय-मिति । इयं गङ्गा तवापि ज्येष्ठा दुहिता भविष्यत्येव त्वत्कृतेन तव कृतं ज्ञानविषयीभूतप्रयत्नो यस्मात् तेन नाम्नैव विश्रुता ख्याता सती लोके स्थास्यति । हिशब्दोऽप्यर्थे चवैशब्दावेवार्थे ॥ ५ ॥

गो० टी०—इयं चेति । त्वत्कृतेन नाम्ना लोके विश्रुता ॥५॥

६ ] ति० टी०—तत्कृतनामादिविश्रुतत्वमेव दर्शयति—गङ्गेत्यादि । त्रिपथगेति नाम्नोऽन्वर्थत्वं दर्शयति—त्रीनित्यादि । अनेन कथं गङ्गा त्रिपथगेत्यस्योत्तरं संवृत्तम् ॥ ६ ॥

रा० टी०—तन्नाम बोधयन्नाह—गङ्गेति । त्रिपथगा नाम भागीरथीतिनाम च दिव्येति नाम च गङ्गा भविष्यतीति शेषः ‘ रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः’ इत्यादाविव शब्दार्थयोस्तादात्म्यान्नामगङ्गार्थयोरभेदः । तत्र त्रिपथगानामार्थं वर्णयन्नाह—ततो विस्तृतान् त्रीन् लोकत्रयवर्तिनः पथो मार्गान् भावयन्ती भगीरथेन सह गच्छन्ती भगीरथं स्वाग्रे गमयन्तीवेति त्रिपथगा स्मृता । द्वितीयपक्षे अन्तर्भावितणिजर्थः । त्रिपथगाघटकीभूतो गमिः हेतुमतिचेति सूत्रविहितणिच्संनियोगान्न भूप्राप्तावात्मनेपदीति नियमप्रसक्तिः ॥ ६ ॥

गो० टी०—तदेव नामद्वयं दर्शयन् त्रिपथगाशब्दं व्युत्पादयति—गङ्गेति ॥ ६ ॥

७ ] ति० टी०—कुरुष्वेति । गङ्गाजलसेकतो जातप्रायश्चित्तत्वात्सलिलदानयोग्यतासंपत्तेः । प्रतिज्ञां गङ्गासलिलप्रदानेन सागरांस्तारये इत्येवंरूपां गरुत्मदुपदिष्टाम् अपवर्जय समाप्तां कुर्वित्यर्थः ॥ ७ ॥

रा० टी०—पितामहानामिति । हे मनुजाधिप हे राजन् लोकरञ्जक ! सर्वेषां पितामहानामत्रास्मिन् जले सलिलं सलिलक्रियां त्वं कुरुष्व तेन प्रतिज्ञां गङ्गाजलप्रदानेन सगरपुत्रांस्तर्पयिष्ये इति स्वपूर्वजादिकृतप्रतिश्रुतिमपवर्जय समापय॥७॥

गो० टी०—पितामहानामिति । प्रतिज्ञां गङ्गासलिलप्रदानेन सागरांस्तारयिष्यामीति प्रतिज्ञाम् अपवर्जय समापय॥७॥

८ ] ति० टी०—पूर्वकेण सगरेण एष गङ्गालाभरूपः । पूर्वकेणेति कप्रत्ययेनैषैव कुत्सा द्योत्यते ॥ ८ ॥

रा० टी०—दुष्प्रापं त्वया प्राप्तमिति बोधयन्नाह—पूर्वकेणेतिषड्भिः । राजन् हे भगीरथ ! अतियशसा यशस्विश्रेष्ठेन तथैव धर्मिणां प्रवरेण श्रेष्ठेन तेन प्रसिद्धेन ते पूर्वकेण सगरेण मनोरथः ईप्सितगङ्गा नैव प्राप्ता । हिशब्द एवार्थे स च तथोत्तरत्र द्रष्टव्यः ॥ ८ ॥

गो० टी०—पूर्वकेणेति । पूर्वकेण सगरेण ॥ ८ ॥

९ ] ति० टी०—गङ्गां नेतुं भूलोकं प्रापयितुं प्रार्थयता प्रतिज्ञा नापवर्जिता न फलपर्यवसायिनी कृता ॥ ९ ॥

रा० टी०—तथेति । वत्स ! हे प्रिय लोकेऽप्रतिमतेजसा तथैव त्वया इव गङ्गामानेतुं प्रार्थयतांशुमता प्रतिज्ञा नापवर्जिता न समापिता ॥ ९ ॥

गो० टी०—तथेति । नापवर्जिता न समापिता ॥ ९ ॥

१० ] ति० टी०—मत्तुल्येति । ब्रह्मतुल्येत्यर्थः ॥ १० ॥

रा० टी०—राजर्षिणेति । हे महाभाग हे अनघ राजर्षिणा राजश्रेष्ठेन गुणवता प्रशस्तगुणविशिष्टेन महर्षिसमतेजसा वशिष्ठतुल्यप्रतापेन मत्तुल्यतपसा मत्सदृशतपोविशिष्टेन क्षत्रधर्मस्थितेन अतितेजसा अत्यन्तकान्तिमता गङ्गामानेतुमेव पुनः पुनः प्रार्थयता तव पित्रा दिलीपेनापि आनेतुं गङ्गा न शकिता । आनेतुं विभक्तिविपरिणामेन गङ्गेति चोभयान्वयि श्लोकद्वयमेकान्वयि एकश्चकारः पुनरर्थः अपरोऽप्यर्थकः ॥ १० ॥ ११ ॥

गो० टी०—राजर्षिणेतिश्लोकद्वयम् । गङ्गां प्रार्थयतापि सा पुनर्नेतुं न शङ्किता न विचारितेत्यर्थः ॥ १० ॥ ११ ॥

११ ] ति० टी०—गङ्गां नेतुं प्रार्थयता सा गङ्गा नेतुं न शकितेत्यर्थः । यत्तु गङ्गामानेतुं न शङ्किता न विचारिता प्रतिज्ञेति शेषः । चिन्ताविषयमपि न प्रापितेत्यर्थ इति, तत्प्रार्थयतेति पदस्वरसविरोधाच्चिन्त्यम् ॥ ११ ॥

१२ ] ति० टी०—समतिक्रान्ता निस्तीर्णा । परमसंमतं परममुत्कृष्टं च तत्संमतम् सर्वलोकसंमतमित्यर्थः ॥ १२ ॥

१ राजन्निति गो. रा. पाठः । २ तत इति गो. रा. पाठः । ३ नापीति गो. रा. पाठः । ४ तातेति गो. रा. पाठः । ५ शङ्कितेति गो. पाठः । ६ वितेति गो. पाठः ।

तच्च गङ्गावतरणं त्वया कृतमरिंदम । अनेन च भवान्प्राप्तो धर्मस्यायतनं महत् ॥ १३ ॥
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते । सलिले पुरुषश्रेष्ठ शुचिः पुण्यफलो भव ॥ १४ ॥
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् । स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप १५॥
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः । यथागतं तथागच्छद्देवलोकं महायशाः ॥ १६ ॥
भगीरथस्तु राजर्षिः कृत्वा सलिलमुत्तमम् । यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७ ॥
कृतोदकः शुची राजा स्वपुरं प्रविवेश ह । समृद्धार्थो नरश्रेष्ठ स्वराज्यं प्रशशास ह ॥ १८ ॥
प्रमुमोद च लोकस्तं नृपमासाद्य राघव । नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९ ॥

रा० टी०–सेति । हे पुरुषर्षभ सा अन्यासमतिक्रमणीया प्रतिज्ञा त्वया समतिक्रान्ता परिपालिता अतः परमसंमतं परमाणामुत्कृष्टजनानां संमतमत्यन्तेच्छाविषयीभूतमत एव परममुत्कृष्टं यशः लोके त्वं प्राप्तोऽसि ॥ १२ ॥

गो० टी०–सेति । समतिक्रान्ता निस्तीर्णा ॥ १२ ॥

१३ ] ति० टी०–धर्मस्यायतनं धर्मप्राप्यस्थानम् महद्ब्रह्मलोकरूपम् ॥ १३ ॥

रा० टी०–यशःप्राप्तिकारणं स्पष्टं कथयन्नाह–यच्चेति । अरिंदम हे शत्रुसूदन यद् गङ्गावतरणं त्वया कृतं तेनानेन प्रसिद्धेनावतरणेनैव धर्मस्य महत् उत्कृष्टमायतनं गृहमेव भवान् प्राप्तः । एतेन पुरुषार्थसिद्धिस्तव जातेति ध्वनितम् । चद्वयमेवार्थकम् ॥ १३ ॥

गो० टी०–यच्चेति । आयतनं प्रतिष्ठाम् ॥ १३ ॥

१४ ] ति० टी०–यथास्या ब्रह्मलोकप्रापकत्वं तदाह–प्लावयस्वेति । आत्मानं स्वदेहम् । सदोचिते सिंहकर्कटमध्येऽपि स्नानादिव्यवहारोचिते भूप्रवहनदीनामेव तत्काले भौमत्वमूलरजःसंबन्धात्स्नानाद्यनर्हत्वम् । पुण्यफल इति मत्वर्थीयाजन्तो बहुव्रीहिर्वा । अनेन स्नानमात्रेण गङ्गा ब्रह्मलोकप्राप्तिकरीति सूचितम् ॥ १४ ॥

रा० टी०–लोकशिक्षार्थं कर्तव्यमुपदिशन्नाह–प्लावयस्वेति । नरोत्तम पुरुषश्रेष्ठ शुचिरपि त्वमुचिते सदा स्नानादियोग्ये सलिले आत्मानं स्वदेहं सदा प्लावयस्व तेन पुण्यफलः लोकानां पुण्यनिष्पादकस्त्वं भव ॥ १४ ॥

गो० टी०–प्लावयस्वेति । प्लावयस्व स्नानं कुर्वित्यर्थः । सदोचिते सदा स्नानयोग्ये अन्यासामेव हि नदीनां रजोदोष इति भावः ॥ १४ ॥

१५ ] ति० टी०–सागराणां जातप्रायश्चित्तत्वसंदेहापत्तये गङ्गाजलसंबन्धस्य सर्वपापप्रायश्चित्तत्वबोधनाय च पुनस्तेषां सलिलं कार्यमित्याह–पितामहानामित्यादि । स्वं लोकं ब्रह्मलोकम् । गम्यताम् कृतोदकक्रियेण स्वपुरमिति शेषः । अयं नियोगो राजधर्मपरिपालनाय ॥ १५ ॥

रा० टी०–उपसंहरन्नाह–पितामहानामिति । हे नृप सर्वेषां पितामहानां सलिलक्रियां त्वं कुरुष्व ते स्वस्ति अस्तु अहं स्वं लोकं गमिष्यामि त्वयापि गम्यताम् ॥ १५ ॥

गो० टी०–पितामहानामिति । गम्यतां त्वयापीति शेषः ॥ १५ ॥

१६ ] ति० टी०–यथा आगतमितिच्छेदः । देवलोकं ब्रह्मलोकम् ॥ १६ ॥

रा० टी०–इतीति । देवेशः देवनियन्ता महायशाः सर्वलोकपितामहः ब्रह्मा वचः एवमनेन प्रकारेण उक्त्वैव यथा येन प्रकारेण आगतं तथा तेन प्रकारेण देवलोकमगच्छत्॥१६॥

गो० टी०–इतीति । यथागतं तथागच्छत् एक एवेत्यर्थः१६

१७ ] ति० टी०–यथाक्रमं ज्येष्ठक्रमेण । यथान्यायं स्मृत्युक्तक्रमेण । उत्तममुत्तमलोकप्रापकम् ॥ १७ ॥

रा० टी०–ब्रह्मगमनौत्तरकालिकं भगीरथवृत्तमाह–भगीरथ इति । राजर्षिः महायशाः भगीरथस्तु सागराणां यथाक्रमं ज्येष्ठादिक्रममनतिक्रम्य यथान्यायं यथाशास्त्रमुत्तमं सलिलं सलिलक्रियां कृत्वा स्वपुरं प्रविवेश ॥ १७ ॥

गो० टी०–भगीरथ इति श्लोकद्वयम् । यथाक्रमं कृतोदकः अन्येषामपीति शेषः । प्रशशास ह प्रशशास चेत्यर्थः ॥ १७ ॥ १८ ॥

१८ ] ति० टी०–कृतोदक इति । अन्येषामपीति शेषः१८

रा० टी०–ह अनन्तरं कृतमुदकमुदकक्रिया येन सः अत एव शुचिः अत एव समृद्धार्थः समृद्धः संपन्नः अर्थः प्रयोजनं यस्य सः अत एव नरश्रेष्ठः उत्तमपुरुषः राजा भगीरथः स्वे राज्यं प्रशशास । प्रथमो हकारः हेत्वर्थः सचाद्वस्या उक्तेष्व-श्वेति श्लोकद्वयं संमिलितान्वयि ॥ १८ ॥

१९ ] ति० टी०–नष्टशोको नष्टतद्वियोगजशोकः विगतज्वरः कथमस्मत्पालनं भविष्यतीति विगतचिन्तः ॥ १९ ॥

रा० टी०–भगीरथप्रजावृत्तमाह–प्रेति । हे राघव ! तं भगीरथं नृपमासाद्य प्राप्यैव समृद्धार्थः संप्राप्तैश्वर्यः अत एव विगतज्वरः विगतशरीरसंतापः अत एव नष्टशोकः लोको जनः प्रमुमोद । चशब्दो हेत्वर्थे ॥ १९ ॥

गो० टी०–प्रमुमोदेति । विगतज्वरः निरामय इत्यर्थः१९

१ यच्चेति गो. रा. पाठः । २ व्याघ्रेति गो. पाठः । ३ अपीति गो. पाठः ।

एष ते राम गङ्गाया विस्तरोऽभिहितो मया । स्वस्ति प्राप्नुहि भद्रं ते संध्याकालोऽतिवर्तते ॥ २० ॥
धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमथापि च । यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥ २१ ॥
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च । इदमाख्यानमायुष्यं गङ्गावतरणं शुभम् ॥ २२ ॥
यः शृणोति च काकुत्स्थ सर्वान्कामानवाप्नुयात् । सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते ॥२३॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ।

प्रातः कृताह्निकानां विश्वामित्रादीनां गङ्गामुत्तीर्य विशालानगरीं प्रति गमनम्, विशालाधिष्ठितराजवंशवृत्तान्तं पृच्छते रामाय विश्वामित्रस्य तदुपोद्घाततया क्षीरोदधिमथनवर्णनम् ।

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः । विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥
अत्यद्भुतमिदं ब्रह्मन्कथितं परमं त्वया । गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥
क्षणभूतेव नौ रात्रिः संवृत्तेयं परंतप । इमां चिन्तयतोः सर्वां निखिलेन कथां तव ॥ ३ ॥

---

२० ] ति० टी०—उपसंहरति—एष इति । स्वस्तिभद्रयोः तत्प्रीत्यादरसूचनार्थं ग्रहणम् ॥ २० ॥

रा० टी०—उपसंहरन्नाह—एष इति । हे राम ! एष गङ्गायाः विस्तरः ते मयाभिहितः कथितः अतः ते भद्रं कल्याणं संध्याकालः अतिवर्तते अत्यन्तं प्राप्नोति अतः त्वं स्वस्ति मङ्गलमूलं संध्योपासनादि प्राप्नुहि कुरु । एतेन अहमपि संध्योपासनादि करिष्यामीति ध्वनितम् ॥ २० ॥

गो० टी०—उपसंहरति—एष इति । भद्रं तेऽस्त्विति वचनपरिपाटी संध्याकालोऽतिवर्तते इतः परं न प्रष्टव्यमिति भावः ॥ २० ॥

२१–२३ ] ति० टी०—आख्यानश्रवणफलमाह—धन्यमित्यादि ॥ २१–२३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रा० टी०—गङ्गाविस्तरश्रावणादिफलमाह—धन्यमित्यादिश्लोकत्रयेण । धन्यं धन्यतासंपादकं यशस्यं यशःप्रदमायुष्यं आयुषः प्रदं पुत्र्यं पुत्रप्रदमिदमाख्यानमव्ययः एकाग्रचित्तः यः पुरुषः विप्रेषु विप्रसभासु अथापि क्षत्रियेषु अथापि इतरेषु वैश्येषु चकारेण शूद्रसभासु श्रावयति तस्य पितरः प्रीयन्ते दैवतानि च प्रीयन्ते चकारान्तरेण परमात्मापि प्रीयते । द्वयोरेकत्रान्वयः अथापीत्यावर्तते ॥ २१ ॥ २२ ॥

गो० टी०—अथ गङ्गावतारश्रावणफलमाह—धन्यमिति । धनादिप्रदमित्यर्थः । सर्वत्र साधुत्वार्थे यत्प्रत्ययः इदमाख्यानमित्यत्रापकृष्यते । अर्धत्रयम् ॥ २१ ॥

रा० टी०—श्रावणफलमुक्त्वा श्रवणफलमाह—य इति । काकुत्स्थ हे राम ! इदमाख्यानं यः शृणोति स सर्वान्कामानवाप्नुयात् तस्य सर्वपापानि नश्यन्ति आयुः कीर्तिश्च वर्धते किंच यो विप्रादिषु श्रावयति यश्च शृणोति स सर्वान् कामानवाप्नुयात् तस्य पित्रादयः प्रीयन्ते आयुरादिश्च वर्द्धते । त्रयाणामेकत्रान्वयः ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०—इदमिति । श्रावयितुः फलमुक्तं संप्रति श्रोतुः फलमुच्यते—गङ्गावतरणं गङ्गावतरणाख्यम् । अर्धत्रयम् ॥२३॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

१ ] ति० टी०—अब्रवीत् रात्र्यन्त इति शेषः ॥ १ ॥

रा० टी०—विश्वामित्रवचनश्रवणानन्तरकालिकं वृत्तमाह—विश्वामित्रेति । अथ विश्वामित्रोक्त्यनन्तरं सहलक्ष्मणो राघवो रामः विश्वामित्रवचः श्रुत्वा परमं विस्मयं गत्वा विश्वामित्रमब्रवीत् ॥ १ ॥

गो० टी०—एवं दशभिः सर्गैः गङ्गागाङ्गेयसंभववर्णनव्याजेन धातुमोक्षणगङ्गापूतत्वनिमित्तकं देवतान्तरावरत्वं दर्शितं, अथ त्रिभिः सर्गैः महेन्द्रस्यावरत्वमुपपादयते—विश्वामित्रेत्यादि॥१॥

२ ] ति० टी०—पूरणम् गङ्गयेति शेषः ॥ २ ॥

रा० टी०—तद्वचनमेवाह—अतीति । हे ब्रह्मन् ! अत्यद्भुतं परमं मनोहरं पुण्यं पवित्रत्वहेतुभूतमिदं गङ्गावतरणं सागरस्य पूरणं गङ्गया पूर्तिरपि त्वया कथितम् ॥ २ ॥

गो० टी०—अत्यद्भुतमिति । पूरणं खननेनाभिवर्धनम् ॥२॥

३ ] ति० टी०—इमां तव कथां त्वदुक्तां कथां चिन्तयतो मम रामस्य रात्रिः क्षणभूतेव संवृत्तातीता एवमाश्चर्यभूता त्वदुक्ता गङ्गाकथेति भावः ॥ ३ ॥

रा० टी०—संतुष्टमिति । अत एव हे ब्रह्मन् ! मे मनः संतुष्टं इत्युक्त्वा विरराम । हकारः हेत्वर्थः । तस्योति सह सौमित्रिणा सह

---

१ इवेति गो. पाठः । २ अव्यग्र इति गो. रा. पाठः । ३ सर्वपापानि नश्यन्तीति गो. रा. पाठः । ४ महातपः इति गो. रा. पाठः । ५ चिन्तयतोः पुण्यामिति रा. पाठः ।

तस्य[1] सा शर्वरी सर्वा मम सौमित्रिणा सह[2] । जगाम चिन्तयानस्य विश्वामित्र कथां शुभाम् ॥ ४ ॥
ततः प्रभाते विमले विश्वामित्रं तपोधनम्[3] । उवाच राघवो वाक्यं कृताह्निकमरिंदम ॥ ५ ॥
गता भगवती रात्रिः श्रोतव्यं परमाद्भुतम्[4] । तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥ ६ ॥
नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् । भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । संतारं कारयामास सर्षिसंघस्य[5] कौशिकः ॥ ८ ॥
उत्तरं[6] तीरमासाद्य संपूज्यर्षिगणं ततः[7] । गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९ ॥
ततो मुनिवरस्तूर्णं जगाम सहराघवः । विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥१०॥
अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् । पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥११॥
क[8]तमो राजवंशोऽयं विशालायां महामुने । श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥१२॥

---

ते निद्रादिवेगं क्षमते इति सहः स एव सौमित्रिरिति कर्मधारयः तेन सह शुभां विश्वामित्रकथां चिन्तयानस्य तस्य रामस्य सर्वा सा शर्वरी रात्रिर्जगाम एतेन गङ्गाचरितस्य सहृदयहृदयापहारकत्वं व्यक्तम् ॥ ३ ॥

गो० टी०—क्षणभूतेव नौ रात्रिरिति श्लोको गता भगवतीत्यर्धात्परमनुसन्धेयः ॥ ३ ॥

४–५ ] ति० टी०—विश्वामित्रेति संबोधनम् । उक्तस्यैवार्थस्यादरातिशयबोधनाय पुनरुपादानम् ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । ततः विश्वामित्रोक्तिचिन्तनानन्तरं कृताह्निकं कृतमाह्निकं संध्योपासनादि येन तं महामुनिं विश्वामित्रमरिंदमो राघवः विमले प्रभातेऽत्यन्तप्रभातसमये वाक्यमुवाच ॥ ४ ॥

गो० टी०—तस्येति । क्षणभूतेवं जगामेत्यर्थः ॥ ४ ॥

गो० टी०—तत इति । विमले प्रभाते सम्यक् प्रभात इत्यर्थः ॥ ५ ॥

६ ] ति० टी०—भगवती गङ्गाकथाश्रवणात्पूज्या ॥ ६ ॥

रा० टी०—तद्वाक्यमेवाह—गतेति । यतः श्रोतव्यं श्रवणार्हं परममत्युत्कृष्टमावाभ्यां श्रुतमतः गता व्यतीता रात्रिः भगवती अत्यैश्वर्यप्रापिका अभवदिति शेषः । अतो हे महातपः पुण्यामिमां तव कथां त्वदुक्तगङ्गागाथां निखिलेन निःशेषतः चिन्तयतोः नौ आवयोः इयं रात्रिः क्षणभूता इव संवृत्ता जाता अतः सरितां श्रेष्ठां पुण्यां पवित्रत्वहेतुभूतां त्रिपथगां नदीं गङ्गां तराम । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—गतेत्यर्धत्रयम् । भगवती सत्कथायुक्तत्वात्पूज्या ॥ ६ ॥

गो० टी०—तरामेति अर्धत्रयम् । ऋषीणां नौः ऋषितरणार्हा नौः ॥ ७ ॥

७ ] ति० टी०—सुखास्तीर्णा सुखं शुभमास्तीर्णं यस्यां सा त्वरितमागता सर्वैस्तव सेवार्थमित्याशयः ॥ ७ ॥

रा० टी०—तरणस्यावश्यकत्वं बोधयन्नाह—नौरिति । सुखास्तीर्णा सुखमास्तीर्णमास्तरणं यस्यां सा पुण्यकर्मणामृषीणामेषा नौः भगवन्तं त्वामिह प्राप्तं ज्ञात्वैव त्वरितमागता एतेन द्रुतं तरणीयमिति ध्वनितम् । हिशब्द एवार्थे ॥ ७ ॥

८ ] ति० टी०—कारयामास नाविकैरिति शेषः ॥ ८ ॥

रा० टी०—तस्येति । महात्मनः तस्य राघवस्य तत्तरणबोधक वचनं श्रुत्वा सर्षिसंघः ऋषिसंघसहितः सराघवः राघवसहितः विश्वामित्रः संतारं गङ्गासंतरणं कारयामास चकार । स्वार्थे णिच् प्रयोजकाविवक्षा वा ॥ ८ ॥

गो० टी०—तस्येति । सराघवः सर्षिसंघः कारयामास अकरोत् स्वार्थे णिच् ॥ ८ ॥

९ ] ति० टी०—संपूज्यर्षिगणम् तत्तीरस्थमिति शेषः ॥९॥

रा० टी०—उत्तरमिति । ततः गङ्गासंतरणानन्तरमुत्तरमग्रिमं कूलमासाद्य प्राप्य ऋषिगणं तत्रत्यऋषिसमूहं संपूज्य गङ्गाकूले निविष्टाः कंचित्कालं स्थितास्ते विश्वामित्ररामलक्ष्मणाः विशालां पुरीं ददृशुः ॥ ९ ॥

गो० टी०—उत्तरमिति । ऋषिगणं नौतारणार्थमागतं संपूज्य पूजापूर्वकं निवर्त्य निविष्टाः क्षणं स्थिताः ॥ ९ ॥

१० ] ति० टी०—विशालां जगाम पूर्वदृष्टामिति शेषः ॥१०॥

रा० टी०—तत इति । तदा पुरीदर्शनानन्तरकाले सहराघवः राघवसहितः मुनिवरो विश्वामित्रः दिव्यां प्राकृतविलक्षणां रम्यां रमणीयां स्वर्गोपमां स्वर्गसदृशीं विशालां नगरीं तूर्णं शीघ्रं ततो गङ्गाकूलात् जगाम ॥ १० ॥

गो० टी०—तत इति । विशालां प्रतीति शेषः ॥ १० ॥

११ ] ति० टी०—विशालां परिपप्रच्छ विशालाविषये प्रश्नं कृतवानित्यर्थः ॥ ११ ॥

रा० टी०—अथेति । अथ गमनानन्तरं महाप्राज्ञं महामुनिं विश्वामित्रं प्राञ्जलिर्भूत्वा रामः उत्तमां विशालां पुरीं पप्रच्छ किमस्या महत्त्वमिति प्रश्नं कृतवानित्यर्थः ॥ ११ ॥

गो० टी०—अथेति । विशालां विशालामाहात्म्यम् ॥११॥

१२ ] ति० टी०—विशालायाम् संप्रति वर्तत इति शेषः ॥१२॥

---

१ एतदादिसार्धश्लोकद्वयं रा. नास्ति । २ तदेति गो. पाठः । ३ महामुनिमिति गो. पाठः । ४ परमं श्रुतमिति गो. पाठः । ५ सर्षिसंघः सराघवः इति गो. रा. पाठः । ६ कूलमिति रा. पाठः । ७ तदेति गो. पाठः । ८ कतर इति गो. रा. पाठः ।

तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुंगवः । आख्यातुं तत्समारेभे विशालायाः पुरातनम् ॥ १३ ॥
श्रूयतां राम शक्रस्य कथां कथयतः श्रुताम् । अस्मिन्देशे[3] हि यद्वृत्तं शृणु तत्त्वेन राघव ॥ १४ ॥
पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः । अदितेश्च महाभागा वीर्यवन्तः सुधार्मिकाः ॥ १५ ॥
ततस्तेषां नरव्याघ्र बुद्धिरासीन्महात्मनाम् । अमरा विजराश्चैव कथं स्यामो निरामयाः ॥ १६ ॥
तेषां चिन्तयतां तत्र बुद्धिरासीद्विपश्चिताम् । क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥ १७ ॥
ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् । मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥ १८ ॥
अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च । वमन्तोऽतिविषं तत्र ददंशुर्दशनैः शिलाः ॥ १९ ॥

रा० टी०—द्वितीयं प्रश्नमाह—कतर इति । हे महामुने ! विशालायामयं प्रसिद्धः कतरः कः राजवंशोऽस्तीति श्रोतुमिच्छामि मे परं कौतूहलमस्ति ते भद्रं एतेन प्रश्नद्वयोत्तरं वदेति ध्वनितम् । हिशब्द इत्यर्थे ॥ १२ ॥

गो० टी०—विशालायां वर्तमानो राजवंशः कतर इति द्वितीयः प्रश्नः ॥ १२ ॥

१३ ] ति० टी०—'विशालायाः पुरातनम्' इति पाठः । पुरातनं तत्पुरीनिर्मितेः प्राक्तनं वृत्तान्तम् । 'विशालस्य' इति पाठे तन्नगरीनिर्माता राजा विशालो नाम यद्वा विशालस्य विशालानगर्यधिष्ठानदेशस्येत्यर्थः ॥ १३ ॥

रा० टी०—तस्येति । तस्य रामस्य तद्वचनं श्रुत्वा मुनिपुंगवो विश्वामित्रः विशालस्य विशालाभिधनगरस्य तत् प्रसिद्धं पुरातनं पूर्वप्रश्नमाख्यातुमुत्तरत्वेन कथयितुं समारेभे ॥ १३ ॥

गो० टी०—तस्येति । विशालस्य विशालाख्यनगरस्य पुरातनं कर्म प्रथमपृष्टं वैभवमाख्यातुं समारेभे ॥ १३ ॥

१४ ] ति० टी०—शक्रस्य कथां विशालवैभवप्रतिपादिकां कथां कथयतः सकाशान्मया श्रुताम् अस्मिन्देशे विशालानगर्यधिष्ठानदेशे यद्वृत्तं पुरातनं तद्विषयां तत्त्वेन शृण्विति योजना १४

रा० टी०—तत्समारम्भमेवाह—श्रूयतामिति । हे राघव हे राम ! शक्रस्य इन्द्रस्य शुभां कथां कथयतः प्रसङ्गसंगत्या वदतो मत्तः श्रूयतामेतेनेन्द्रकथा विशालाकथोपयोगिनीति सूचितम् अत एवास्मिन् देशे यद्वृत्तं तदपि तत्त्वेन शृणु अहं कथयामीत्यर्थः ॥ १४ ॥

गो० टी०—श्रूयतामिति । अस्मिन्देशे यद्वृत्तं तच्छृणु तच्छेषतया शक्रस्य कथां कथयतो मत्तः सा श्रूयताम् ॥१४॥

१५ ] ति० टी०—सुधार्मिका इत्यदितिपुत्रविशेषणम् । आसन्निति शेषः ॥ १५ ॥

रा० टी०—प्रतिज्ञातमाह—पूर्वमिति । हे राम ! कृतयुगे पूर्वं महाबलाः दितेः पुत्रा आसन्निति शेषः । ततः महाभागाः वीर्यवन्तः सुधार्मिकाः अदितेः पुत्रा आसन् । तुशब्दोऽनन्तरार्थकः पुत्रा इत्युभयत्रान्वयि ॥ १५ ॥

गो० टी०—पूर्वमिति । पूर्वं कृतयुगे दितेः पुत्रा महाबला आसन् अदितेः पुत्रा वीर्यवन्तो धार्मिकाश्चासन् ॥ १५ ॥

१६ ] ति० टी०—अमरा मरणरहिताः विजरा जरारहिताः निरामया रोगरहिताः ॥ १६ ॥

रा० टी०—तत इति । ततः उत्पत्त्यनन्तरं हे नरव्याघ्र ! महात्मनां तेषां देवासुराणाममराः मरणरहिताः विजराः जरारहिताश्च निरामयाः रोगरहिताश्च वयं कथं स्याम इति बुद्धिः चिन्ता आसीत् । एवश्चार्थकः । इतीत्यध्याहृतम् । 'स्यामो' इति पाठो यदि प्रामाणिकस्तर्हि उरित्यर्थकः ॥ १६ ॥

गो० टी०—तत इति । म्रियन्त इति मराः पचाद्यच् अमराः मरणरहिताः अजराः जरारहिताः तेषां देवासुराणाम्॥१६॥

१७ ] ति० टी०—रसममृतरूपं रसायनम् ॥ १७ ॥

रा० टी०—तेषामिति । हे राम ! चिन्तयतां विपश्चितां पण्डितानां तेषां देवासुराणां क्षीरोदमथनं कृत्वा रसममरत्वादिहेतुभूतममृतं प्राप्स्याम प्राप्स्यामः इति बुद्धिः निश्चयस्तत्र तस्मिन्समये आसीत् । वैशब्द इत्यर्थे ॥ १७ ॥

गो० टी०—तेषामिति । रसममृतं तत्र क्षीरोदे ॥ १७ ॥

१८ ] ति० टी०—योक्त्रं मन्थनरज्जुम् ॥ १८ ॥

रा० टी०—तत इति । ततः प्रयत्नविस्तारकर्तारः अमितौजसः देवासुराः मथनं निश्चित्य वासुकिं योक्त्रं मथनरज्जुं कृत्वा मन्दरं मन्थानं च कृत्वा ममन्थुः ॥ १८ ॥

गो० टी०—तत इति । योक्त्रं मथनरज्जुं मन्थानं मथनदण्डम् ॥ १८ ॥

१९ ] ति० टी०—योक्त्रसर्पो मन्थनरज्जुभूतः सर्पः । वमन्त इति पुंस्त्वमार्षम् । अति अतिशयितं विषम् ॥ १९ ॥

रा० टी०—अथेति । अथ मन्थनप्रारम्भानन्तरं वर्षसहस्रेण अतिविषं वमन्त एव योक्त्रसर्पशिरांसि दशनैर्दंष्ट्राभिस्तत्र विद्यमानाः शिला ददंशुः वमन्त इति पुंस्त्वमार्षम् । चशब्द एवार्थे १९

गो० टी०—अथेति । धन्वन्तरिरुत्पपात अप्सराश्च उत्पेतुरिति शेषः । आकारान्तत्वमार्षम् ॥ १९ ॥

१ विशालस्येति गो. रा. पाठः । २ शुभामिति गो. रा. पाठः । ३ त्विति गो. रा. पाठः । ४ तदपि शृण्विति गो. पाठः । ५ स्त्विति गो. पाठः । ६ श्चेति गो. पाठः । ७ अजरा इति गो. पाठः । ८ स्यामेति गो. रा.पाठः । ९ रामेति गो. रा. पाठः । १० महात्मनामिति गो. पाठः । ११ एतस्मादारभ्य सार्धद्वादशश्लोका गो. न वर्तन्ते ।

उत्पपाताग्निसंकाशं हालाहलमहाविषम् । तेन दग्धं जगत्सर्वं सदेवासुरमानुषम् ॥ २० ॥
अथ देवा महादेवं शंकरं शरणार्थिनः । जग्मुः पशुपतिं रुद्रं त्राहि त्राहीति तुष्टुवुः ॥ २१ ॥
एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः । प्रादुरासीत्ततोऽत्रैव शङ्खचक्रधरो हरिः ॥ २२ ॥
उवाचैनं स्मितं कृत्वा रुद्रं शूलधरं हरिः । दैवतैर्मथ्यमाने तु यत्पूर्वं समुपस्थितम् ॥ २३ ॥
तत्त्वदीयं सुरश्रेष्ठ सुराणामग्रतो हि यत् । अग्रपूजामिह स्थित्वा गृहाणेदं विषं प्रभो ॥ २४ ॥
इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत । देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं तु शार्ङ्गिणः ॥ २५ ॥
हालाहलं विषं घोरं संजग्राहामृतोपमम् । देवान्विसृज्य देवेशो जगाम भगवान्हरः ॥ २६ ॥
ततो देवासुराः सर्वे ममन्थू रघुनन्दन । प्रविवेशाथ पातालं मन्थानः पर्वतोत्तमः ॥ २७ ॥
ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम् । त्वं गतिः सर्वभूतानां विशेषेण दिवोकसाम् ॥ २८ ॥
पालयास्मान्महाबाहो गिरिमुद्धर्तुमर्हसि । इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ॥ २९ ॥
पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः । पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ॥ ३० ॥

---

२०-२१ ] ति० टी०—उत्पपातेति तत इत्यादिः शिलादशनादित्यर्थः । दष्टशिलाखण्डा एव महाविषरूपं भूत्वोत्पपात ॥ २० ॥ २१ ॥

रा० टी०—विषप्रभावं वर्णयन्नाह—उत्पपातेति । अग्निसंकाशमग्न्यनुयोगिकसादृश्यप्रतियोगि हालाहलमहाविषं हालाहलजातिकविषोत्तममुत्पपात समुद्रादूर्ध्वमगच्छत् तेन हालाहलमहाविषेण सदेवासुरमानुषं देवासुरमानुषसहितं सर्वं जगत् दग्धं दग्धुमारेभे । आदिकर्मणि निष्ठा ॥ २० ॥

रा० टी०—अथेति । अथ विषकर्तृकदाहप्रारम्भानन्तरं शरणार्थिनः रक्षणप्रयोजनवन्तः देवाः शंकरं कल्याणकर्तारं पशुपतिं नन्दीश्वररक्षाशीलं रुद्रं सर्वरुद्रनियन्तारं महादेवं जग्मुः मनसेति शेषः त्राहि त्राहीति कृत्वा तुष्टुवुश्च । विनापि चं समुच्चयः ॥ २१ ॥

२२ ] ति० टी०—प्रभुर्महादेवः । ततो महादेवप्रादुर्भावानन्तरम् ॥ २२ ॥

रा० टी०—एवमिति । ततः त्राहि त्राहीति वचनश्रवणानन्तरमेवमनेन प्रकारेण देवैरुक्तः देवदेवेश्वरः प्रभुः शिवः प्रादुरासीत् । ततः शिवप्रादुर्भावानन्तरं शङ्खचक्रधरो हरिः अत्रैव प्रादुरासीत् ॥ २२ ॥

२३ ] ति० टी०—स्मितं कृत्वा । छलेन विषदानात्स्मितम्

२४ ] ति० टी०—यद्यतो भवान्सुराणामग्रतः तेषां मध्ये श्रेष्ठ इत्यर्थः ॥ २४ ॥

रा० टी०—उवाचेति । हरिर्विष्णुः स्मितं कृत्वा शूलभृतमेनं रुद्रमुवाच । तद्वचनमेवाह—दैवतैर्मथ्यमाने समुद्रे यत्पूर्वं समुपस्थितं निःसृतं तत् त्वदीयमेव तत्र हेतुः हे सुरश्रेष्ठ ! यद्यस्मात् त्वं सुराणामग्रतः अग्र्यः श्रेष्ठः अग्रत इत्यत्र प्रथमान्तात्तसिः अतः हे विभो ! सकलसामर्थ्यविशिष्ट इहैव स्थित्वा इदं विषं गृहाण । श्लोकद्वयमेकान्वयि । तुहिशब्दौ एवार्थौ ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—सुरश्रेष्ठो विष्णुः ॥ २५ ॥

२६ ] ति० टी०—अमृतोपमं यथा भवति तथा संजग्राहेत्यन्वयः । पूर्वं देवेषु मन्थनसहायतया स्थितोऽपि विषपानानन्तरं तत्पीडया तांस्त्यक्त्वा जगाम अमृतकुण्डमिति शेषः ॥ २६ ॥

रा० टी०—इतीति । सुरश्रेष्ठो विष्णुः इति अनेन प्रकारेण उक्त्वा तत्रैव अन्तरधीयत । देवेशः भगवान् सकलसामर्थ्यविशिष्टः हरः देवतानां भयं दृष्ट्वा शार्ङ्गिणः विष्णोः वाक्यं च श्रुत्वा घोरं हालाहलविषममृतोपमं यथा स्यात्तथा संजग्राह कण्ठे दधार देवान्विसृज्य जगाम च । श्लोकद्वयमेकान्वयि तुशब्दश्चार्थे ॥ २५ ॥ २६ ॥

२७-२८ ] ति० टी०—मन्थानः पर्वतोत्तमो मन्दरः २७॥२८

रा० टी०—तत इति । हे रघुनन्दन ! ततः रुद्रगमनानन्तरं सर्वे देवासुराः ममन्थुः । अथ अनन्तरं मन्थानः पर्वतोत्तमो मन्दरः पातालं प्रविवेश । बहुत्वमार्षम् ॥ २७ ॥

रा० टी०—तत इति । ततः पर्वतस्य पातालगमनानन्तरं सगन्धर्वा देवाः मधुसूदनं तुष्टुवुः । स्तुतिमेवाह—सर्वभूतानां दिवौकसां च विशेषेण गतिस्त्वमेव विनापि चं समुच्चयः । सर्वं वाक्यं सावधारणं भवतीति न्यायेन एवकारलाभः ॥ २८ ॥

२९ ] ति० टी०—कामठं काच्छपम् ॥ २९ ॥

रा० टी०—पालयेति । हे महाबाहो ! अस्माँस्त्वं पालय । पालनमेवाह—गिरिमुद्धर्तुं त्वमर्हसि । हृषीकेशः विष्णुः इति देववचः श्रुत्वा कामठं कमठरूपसदृशं रूपमास्थितः प्रकटितवान् ॥ २९ ॥

३० ] ति० टी०—शिश्ये स्थितवान् । जलेशय इत्यादौ स्थित्यर्थस्य शेतेर्दर्शनात् ॥ ३० ॥

रा० टी०—कमठरूपप्रकटनप्रयोजनं वदन्नाह—पर्वतमिति । हरिः कमठरूपधारी विष्णुः तत्र मथ्यमाने उदधौ पर्वतं पृष्ठतः पृष्ठे कृत्वा शिश्ये । अनन्तरं लोकात्मा केशवः पुरुषोत्तमः पर्वताग्रं हस्तेनाक्रम्य देवानां मध्यतः स्थित्वा ममन्थ । सार्धश्लोक एकान्वयी ॥ ३० ॥

देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः । अथ वर्षसहस्रेण आयुर्वेदमयः पुमान् ॥ ३१ ॥
उदतिष्ठत्सुधर्मात्मा सदण्डः सकमण्डलुः । अथ धन्वन्तरिर्नाम अप्सराश्च सुवर्चसः ॥ ३२ ॥
अप्सु निर्मथनादेव रसात्तस्माद्वरस्त्रियः । उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ ३३ ॥
षष्टिः कोटयोऽभवंस्तासामप्सराणां सुवर्चसाम् । असंख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ३४
न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः । अप्रतिग्रहणादेव तौ वै साधारणाः स्मृताः ॥ ३५ ॥
वरुणस्य ततः कन्या वारुणी रघुनन्दन । उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥ ३६ ॥
दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् । अदितेस्तु सुता वीरे जगृहुस्तामनिन्दिताम्॥ ३७ ॥
असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः । हृष्टाः प्रमुदिताश्चासन्वारुणीग्रहणात्सुराः ॥ ३८ ॥
उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् । उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम् ॥ ३९ ॥

---

३१ ] ति० टी०—ममन्थ पुरुषोत्तमः । अनेन शक्तिवैचित्र्यं प्रकटीकृतम् ॥ ३१ ॥

३२ ] ति० टी०—धन्वन्तरिरुदतिष्ठदित्यन्वयः । अप्सरा इत्यार्षम् । उदतिष्ठन्नित्यनुकर्षः ॥ ३२ ॥

रा० टी०—अथेति । अथानन्तरं वर्षसहस्रेण आयुर्वेदमयः धर्मात्मा सदण्डः दण्डसहितः सकमण्डलुः कमण्डलुसहितः स धन्वंतरिर्नाम पुमान् उदतिष्ठत् । पूर्वमिति—पूर्वं धन्वन्तरिः अनन्तरं सुवर्चसः अप्सरा अप्सरसश्च उदतिष्ठन् । अर्धमेकान्वयि चोऽनन्तरार्थकः ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०—अप्सु क्षीररूपासु । तस्मात् क्षीरोदसारभूतादित्यर्थः ॥ ३३ ॥

रा० टी०—अप्सरश्शब्दार्थं विवृण्वन्नाह—अप्स्विति । अप्सु तस्मात्प्रसिद्धात् निर्मथनादेव जातात् रसाद्वरस्त्रियः उत्पेतुः तस्माद्धेतोः हे मनुजश्रेष्ठ ! अप्सरसोऽप्सरस्संज्ञा अभवन् ता इति शेषः ॥ ३३ ॥

गो० टी०—अप्स्विति । अप्सरःशब्दं निर्वक्ति—अत्राप्शब्देन तद्विकारभूतं क्षीरमुपलक्ष्यते अप्सु यन्निर्मथनं तस्माद्यो रसस्तस्माद्रसाद्यत उत्पेतुस्तस्मादप्सरसोऽभवन् पृषोदरादित्वात्साधुः ॥ २० ॥

३४ ] ति० टी०—षष्टिः कोट्यः षष्टिकोटिसंख्याः प्रधाना अप्सरसामभवन् अपरिमितपरिचारिकोपेताः षष्टिकोट्यप्सरसो जाता इत्यर्थः ॥ ३४ ॥

रा० टी०—अप्सरसां संख्यां कुर्वन्नाह—षष्टिरिति । सुवर्चसां तासामप्सराणामप्सरसां षष्टिः कोट्यः अभवन् यास्तासां परिचारिकास्तास्तु हे काकुत्स्थ ! असंख्येयाः अभवन् । षष्टिः कोट्यः इत्यनयोः संख्येयत्वे अप्सरसामित्यत्र षष्ठी राहोः शिर इत्यादाविव बोध्या ॥ ३४ ॥

गो० टी०—षष्टिरिति । तासां प्रधानभूतानाम् ॥ २१ ॥

३५ ] ति० टी०—ता उक्ताप्सरसो न प्रतिगृह्णन्ति ममैवेमा नान्यस्येति नाङ्गीकुर्वन्ति सर्वे देवा दानवाश्चेत्यर्थः । तासां विशिष्यपत्यनिच्छयैव संमुग्धाकारतया स्थितत्वात्तासां विशिष्यप्रतिग्रहाभावः अत एव तासां साधारण्यम् ॥ ३५ ॥

रा० टी०—नेति । ते तत्र वर्तमानाः सर्वे देवदानवास्ताः परिचारिकासहिताः अप्सरसः न प्रतिगृह्णन्ति स्म तेन देवासुरसमूहेन तासामप्रतिग्रहणादेव ताः साङ्गाः अप्सरसः साधारणाः स्मृताः । ता इत्युभयान्वयि ॥ ३५ ॥

गो० टी०—न ताः स्मेति । न ताः स्म प्रतिगृह्णन्ति नासाधारण्येन प्रतिगृह्णन्ति स्मेत्यर्थः । कुतः अप्रतिग्रहणात् को वा मम पतिरिति मार्गणाकरणादित्यर्थः । तेनासाधारण्येन परिग्रहाकरणेन ॥ २२ ॥

३६ ] ति० टी०—वारुणी सुराधिदेवता । परिग्रहं केनचिदसाधारण्येनाङ्गीकारम् ॥ ३६ ॥

रा० टी०—वरुणस्येति । हे रघुनन्दन ! महाभागा परिग्रहं स्वस्वीकर्तारं मार्गमाणा वारुणी सुराभिमानिनी देवता वरुणस्य कन्या ततः समुद्रादुत्पपात निस्ससार ॥ ३६ ॥

गो० टी०—वरुणस्येति । वरुणस्य समुद्राधिदेवतायाः वारुणी सुराधिदेवता परिग्रहं ममेयमिति परिग्रहस्य कर्तारम् ॥ २३ ॥

३७ ] ति० टी०—अदितिसुताङ्गीकारे हेतुरनिन्दितामिति । निषेधशास्त्रं तु मानुषविषयम् शास्त्रे देवतानामनधिकारात् ॥ ३७ ॥

रा० टी०—दितेरिति । हे राम ! तां वरुणात्मजां दितेः पुत्रा न जगृहुः हे राम ! अदितेः सुतास्तु अनिन्दितां तां जगृहुः ॥ ३७ ॥

गो० टी०—दितेरिति । स्पष्टम् ॥ २४ ॥

३८–३९ ] ति० टी०—असुराः सुरापरिग्रहराहित्यात् । सुराः सुरापरिग्रहसत्त्वात् ॥ ३८ ॥ ३९ ॥

रा० टी०—असुरा इति । तेन सुराधिष्ठातृदेवतावरुणकन्याग्रहणाभावेन दैतेया असुरनामानोऽभवन्निति शेषः । तेन सुराधिष्ठातृदेवताग्रहणेन अदितेः सुताः सुराः अभवन् । तत्र असुर-

---

१ स धर्मात्मेति रा. पाठः । २ पूर्वं धन्वन्तरी रामेति रा. पाठः । ३ तेनेति रा. पाठः । ४ रामेति रा. पाठः । ५ हरिश्रेष्ठ इति रा. पाठः ।

अथ तस्य कृते राम महानासीत्कुलक्षयः । अदितेस्तु ततः पुत्रा दितिपुत्रानयोधयन् [1] ॥ ४० ॥
एकतामगमन्सर्वे [2] असुरा राक्षसैः सह । युद्धमासीन्महाघोरं वीरत्रैलोक्यमोहनम् ॥ ४१ ॥
यदा क्षयं गतं सर्वं [3] तदा विष्णुर्महाबलः । अमृतं सोऽहरत्तूर्णं मायामास्थाय मोहिनीम् ॥ ४२ ॥
ये गताभिमुखं विष्णुमक्षरं [4] पुरुषोत्तमम् । संपिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ४३ ॥
अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे । अस्मिन्घोरे [5] महायुद्धे दैतेयादित्ययोर्भृशम् ॥ ४४ ॥

शब्दे बहुव्रीहिः । सुरशब्दोऽर्शआद्यजन्तः । एतदनुरोधेन 'अथासीद्वारुणी देवी कन्या कमललोचना । असुरा जगृहुस्तां वै हरेरनुमते न ते' इति भागवतस्य त्वयमर्थः । हरेरनुमते स्थिता असुरास्तां वारुणीं कन्यां न जगृहुः सुरा एव जगृहुरित्यर्थः । किंच असुराः जगृहुः सुरैर्ग्राहयामासुरिति सुराः अदितिसुताः वारुणीग्रहणाद्धेतोः हृष्टाः आनन्दविशिष्टाः अत एव प्रमुदिताः पुलकिताश्चासन् ॥ ३८ ॥

गो० टी०—प्रसङ्गात्सुरासुरशब्दौ निर्वक्ति—असुरा इति । तेन सुरायाः परिग्रहेण सुराः अर्शआदित्वादजन्तः पिष्टादिविकृतिरेव सुरा निन्द्या हृष्टाः पुलकिताः ॥ २६ ॥

रा० टी०—उच्चैरिति । हे नरश्रेष्ठ ! हरिश्रेष्ठः अश्ववरः उच्चैश्श्रवाः उदतिष्ठत् । मणिरत्नं मणिश्रेष्ठं कौस्तुभं च उदतिष्ठत् तथैव उत्तममममृतमुदतिष्ठत् ॥ ३९ ॥

गो० टी०—उच्चैःश्रवा इति । उत्तमं पूर्वोत्पन्नेभ्यः श्रेष्ठम् २६

४० ] ति० टी०—तस्यामृतस्य कृते ग्रहणनिमित्तम् ॥ ४० ॥

रा० टी०—अथेति । हे राम ! अथ अमृतोत्थानानन्तरं तस्य अमृतस्य कृते प्राप्तिप्रयत्ने महान्कुलक्षयः देवासुरकुलध्वंसः आसीत् ततः बहुदेवासुरध्वंसानन्तरमदितेः पुत्राः दितेः पुत्रान् असूदयन् । अमृतस्यार्थे कुलक्षयो जात इयत्नेन उच्चैश्श्रवःकौस्तुभयोः उभयसंमत्यैव यथायोग्यं विभागो जात इति ध्वनितम् । योग्यता च पूर्वं सुराणां वारुणीग्रहणादसुराणामेव उच्चैःश्रवोग्रहणं युक्तं कौस्तुभस्य चोर्वरितत्वाद्विष्णुग्रहणं युक्तमिति ॥ ४० ॥

गो० टी०—अथेति । तस्य कृते अमृतस्य ग्रहणार्थमित्यर्थः। कुलक्षयः उभयपक्षेऽपि संघातविनाशः । तदेवोपपादयति अदितेरित्यादिना ॥ २७ ॥

४१ ] ति० टी०—कलहप्रवृत्त्यनन्तरमसुरा राक्षसैः सहैकतामगमन् बलसिद्ध्यर्थमिति शेषः । वीरेति संबुद्धिः । 'परम्' इति क्वचित्पाठः ॥ ४१ ॥

रा० टी०—दितिसुतसूदनप्रकारं वर्णयन्नाह—एकत इति । राक्षसैः सह सर्वे असुराः एकतः एकस्मिन्देशे एव अभ्यगमन् प्रापुः । हिशब्द एवार्थे तेन सुरा एव एकत्र इति ध्वनितम् । हे वीर महाघोरमतिभयंकरमत एव त्रैलोक्यमोहनं युद्धमासीत् ॥ ४१ ॥

गो० टी०—एकत इति । अनन्तरमसुरा एकतः एकतामभ्यागमन् बलवृद्धय इति भावः ॥ २८ ।

४२ ] ति० टी०—सर्वं परस्परप्रहारेण देवासुरात्मकम् । क्षयं गतं क्षयप्रायं गतम् । तदा दैत्या राक्षसैरेकत्वेन बलवत्त्वान्माहरन्त्विति बुद्ध्या मोहिनीं काममोहजननीं मायां मायातनुमास्थाय तूर्णं शीघ्रममृतमहरत् ॥ ४२ ॥

रा० टी०—यदेति । यदा यस्मिन्काले सर्वे देवासुराः क्षयं क्षीणबलतां गताः प्राप्तास्तदा महाबलः सः विष्णुः मोहिनीं मायां तूर्णमास्थाय स्वमोहिनीरूपं प्रकटय्येत्यर्थः । अमृतमहरत् ॥ ४२ ॥

गो० टी०—यदेति । मोहिनीं काममोहजननीं मायामाश्चर्यशक्तिमास्थायावलम्ब्य स्वमाययाद्भुतयोषिदाकृतिं परिगृह्य तद्रूपेण तान् वञ्चयित्वा तेभ्योऽमृतमहरदित्यर्थः । यद्वा सर्वमोहकरीमन्तर्धानशक्तिमास्थायामृतमाहरदित्यर्थः । पुराणान्तरवृत्तान्तः कल्पभेदेनेति बोध्यम् ॥ २९ ॥

४३ ] ति० टी०—गताभिमुखमिति संधिरार्षः । ये सुरा असुरा वा मायामूर्त्यां गृहीतामृतं विष्णुममृतजिघृक्षयाभिमुखं गताः प्राप्तास्ते सर्वे मूर्त्यन्तरास्थानेन प्रभविष्णुना विष्णुना युद्धे संपिष्टाः ॥ ४३ ॥

रा० टी०—य इति । अक्षयं विनाशरहितं पुरुषोत्तमं विष्णुं युद्धे येऽभिमुखं गताः बलादमृतजिघृक्षया प्राप्तास्ते तदागमनसमये प्रभविष्णुना स्वसामर्थ्यप्रकटनेच्छावता विष्णुना संपिष्टाः संचूर्णिताः । संदिष्टा इति पाठे तु ये मित्रभावादिनाभिमुखं गताः ते संदिष्टाः अमृतपानाय आदिष्टा तेभ्योऽमृतं दत्तवानित्यर्थः । अस्मिन् पाठे पूर्वोक्तपाठार्थो व्यङ्ग्यमर्यादया लभ्यते । पूर्वोक्तपाठे एतत्पाठार्थस्तथा लभ्यत इति बोध्यम् ॥ ४३ ॥

गो० टी०—य इति । अत्र संधिरार्षः । ये असुराः अक्षयम् अस्ति जायते परिणमते विवर्धते अपक्षीयते विनश्यतीत्युक्तषड्भावविकारैः शून्यं पुरुषोत्तमं सर्वपुरुषेषूत्तमं विष्णुमभिमुखं गताः अभिमुखतया प्रातिकूल्येन गतास्ते विष्णुना संपिष्टाश्चूर्णिताः 'संविष्टा' इतिपाठे ये असुमभिमुखं गताः शरणागताः देवास्ते युद्धे संविष्टाःआविष्टाःआप्यायितबला आसन्नित्यर्थः ॥ ३० ॥

४४ ] ति० टी०—दितेः पुत्रान्निजघ्निरे धार्मिकत्वाद्विष्णवनुग्रहाच्च । दैतेयादित्ययोः सुरासुरवर्गयोः ॥ ४४ ॥

रा० टी०—अदितेरिति । हे वीर अदितेरात्मजा दितेः पुत्रान् दैतेयादित्ययोः महाघोरे तस्मिन् युद्धे भृशं निजघ्निरे ॥ ४४ ॥

गो० टी०—अदितेरिति । दितेः पुत्रान् अवशिष्टानिति शेषः । यद्वा अदितेरात्मजा आप्यायितबलाः सन्तः तस्मिन् दैतेयादित्ययोर्देवासुरयोर्युद्धेऽसुरान्निजघ्निरे ॥ ३१ ॥

१ दितेः पुत्रानसूदयन्निति गो. रा. पाठः । २ एकतोऽभ्यगमन्सर्वे ह्यसुरा इति गो. रा. पाठः । ३ गताः सर्वे इति गो. रा. पाठः । ४ अक्षयमिति गो. रा. पाठः । ५ तस्मिन्घोरे इति गो. रा. पाठः ।

निहत्य दितिपुत्रांस्तु राज्यं प्राप्य पुरंदरः । शशास मुदितो लोकान्सर्षिसंघान्सचारणान् ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः ।

अमृतनिमित्तके दैवासुरयुद्धे हतस्वपुत्रश्रवणेन निर्विण्णया दित्या भर्तारं काश्यपं प्रति शक्रहन्तृपुत्रप्रार्थना । भर्तुस्तत्प्रतिश्रुत्य सहस्रसंवत्सरसाध्यव्रतचर्याचोदनम् । इन्द्रस्य व्रतं चरन्त्या दितेः परिचरणम् । कदाचिच्छिरः स्थाने पादौ कृत्वा शायानां तामशुचिं ज्ञात्वा शक्रस्य तदुदरं प्रविश्य गर्भस्य सप्तधा भेदनं दितिक्षमापनं च ।

हतेषु तेषु पुत्रेषु दितिः परमदुःखिता । मारीचं कश्यपं नाम भर्तारमिदमब्रवीत् ॥ १ ॥
हतपुत्रास्मि भगवंस्तव पुत्रैर्महात्मभिः । शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोर्जितम् ॥ २ ॥
साहं तपश्चरिष्यामि गर्भं मे दातुमर्हसि । ईश्वरं शक्रहन्तारं त्वमनुज्ञातुमर्हसि ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तदा । प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥

---

४५ ] ति० टी०–तुश्चार्थे राज्यमित्यनन्तरं योज्यः । राज्यममृतं च प्राप्येत्यर्थः ॥ ४६ ॥

अत्र 'ममन्थुरमितौ जसः' इति श्लोकानन्तरम् 'अथ वर्षे–' इत्यादि 'आयुर्वेदमयः पुमान्' इत्यन्तत्रयोदशश्लोकाः प्रक्षिप्ता इति बहवः । अमृतदानराहुशिरश्छेदाद्यवर्णनवद्धालाहलोत्पत्त्याद्यवर्णनमिति तदाशयः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०–निहत्येति । पुरंदरः इन्द्रः दितिपुत्रान्निहत्य राज्यं प्राप्य च मुदितः सन् सर्षिसंघानृषिसंघसहितान् सचारणान् चारणसहिताँल्लोकान् शशास । अत्रास्मिन्सर्गे द्वात्रिंशत् श्लोकाः अन्ये कल्पिताः इति भूषणकृद्भिरुक्तं तत्रान्यकल्पितत्वं मूलयुक्तेरभावात् श्लोकार्थानामबाधकत्वाच्च भारतादिप्रसिद्धविषयबोधकत्वाच्च सर्वपुस्तकेषूपलम्भाच्च तदप्रमाणमिति प्रमाणिकाः अत एव ममन्थुरमितौजस इति श्लोकानन्तरं अथ वर्षेत्यादिआयुर्वेदमयः पुमानित्यन्तं त्रयोदशश्लोकाः प्रक्षिप्ता इत्यादिनात्र त्रयोदशानामेव प्रक्षिप्तत्वं भट्टैरुक्तं तन्मतेऽपि एकोनविंशतेः श्लोकानां कल्पितत्वाभाववत्त्वं सिद्धमेवोक्तत्रयोदशश्लोककल्पितत्वेऽपि प्रमाणमलब्ध्वा बहव इत्युक्तम् एतेन तन्मतेऽपि सर्वेषां कल्पितत्वाभाववत्त्वमर्थतः फलितमत एव तीर्थादिव्याख्यासु कल्पितत्वप्रसङ्गानुत्थानमिति दिक् ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०–निहत्येति । चकारादमृतमपीत्यर्थः । अस्मिन्सर्गे द्वात्रिंशच्छ्लोकाः अन्ये कल्पिताः यद्यप्यत्र कालकूटाद्युत्पत्तिरपेक्षिता तथाप्युत्तरकथाशेषत्वेन सर्वासुरक्षय एव प्रधानतयोपात्त इति बोध्यम् ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

१ ] ति० टी०–किं तत इत्यत्राह—हतेष्वित्यादि । मारीचं मरीचेरपत्यम् ॥ १ ॥

रा० टी०–पुत्रनाशानन्तरकालिकं दितिवृत्तमाह–हतेष्विति । तेषु पूर्वजेषु पुत्रेषु हतेषु सत्सु परमदुःखिता दितिः मारीचं मरीचपुत्रं कश्यपं नाम भर्तारमिदमब्रवीत् ॥ १ ॥

गो० टी०–विष्णुपक्षविरोधे महानपि यत्नो विफलः स्यादित्याह षट्चत्वारिंशे–हतेष्वित्यादि । मारीचं मरीचिपुत्रम् ॥ १ ॥

२ ] ति० टी०–दीर्घेण तपसार्जितम् ॥ २ ॥

रा० टी०–तद्वचनमेवाह–हतेति । हे भगवन् ! महाबलैः[1] तव पुत्रैः अहं हतपुत्रास्मि अतः दीर्घतपोर्जितं दीर्घतपेन राज्यविषयकात्यन्तज्ञानेन ऊर्जितं प्रवृद्धं शक्रहन्तारं पुत्रमिच्छामि । आलोचनार्थकतपधातोः अच् ॥ २ ॥

गो० टी०–हतेति । तपोर्जितं तपसा ऊर्जितं दृढम् आर्षः संधिः ॥ २ ॥

३–४ ] ति० टी०–ईश्वरं त्रैलोक्यनाथम् । 'ईदृशम्' इति पाठान्तरम् तत्रेदृशमित्यस्यैव विवरणं शक्रहन्तारमिति ॥ ३ ॥ ४ ॥

रा० टी०–सेति । सा शक्रहन्तृपुत्रविषयकेच्छावती अहं तपश्चरिष्यामि अतस्त्वमनुज्ञातुमाज्ञापयितुमर्हसि । ईश्वरं समर्थं शक्रहन्तारं गर्भं पुत्रं दातुं च त्वमर्हसि । 'ईदृशं शक्रहन्तारम्' इति पाठान्तरम् । विनापि चं समुच्चयः ॥ ३ ॥

गो० टी०–साहमिति । गर्भं पुत्रम् ईश्वरं त्रैलोक्यनियन्तारम् 'ईदृशम्' इति पाठेऽप्ययमर्थो विवक्षितः अनुज्ञातुं तप इति शेषः । भर्त्रनुज्ञां विना तपसि स्त्रिया अस्वातन्त्र्यादिति भावः ॥ ३ ॥

रा० टी०–तस्या इति । तदा दितिप्रार्थनासमये तस्याः दितेस्तत्तादृशपुत्रविषयकं वचनं श्रुत्वा महातेजाः मारीचः कश्यपः परमदुःखितां दितिं प्रत्युवाच ॥ ४ ॥

गो० टी०–तस्या इति ॥ ४ ॥

---

१ महाबलैरिति गो. रा. पाठः ।

एवं भवतु भद्रं ते शुचिर्भव तपोधने । जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ॥ ५ ॥
पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि । पुत्रं त्रैलोक्यहन्तारं मत्तस्त्वं जनयिष्यसि ॥ ६ ॥
एवमुक्त्वा महातेजाः पाणिना संममार्ज ताम् । तामालभ्य ततः स्वस्ति इत्युक्त्वा तपसे ययौ ॥ ७ ॥
गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता । कुशप्लवं समासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥
तपस्तस्यां हि कुर्वत्यां परिचर्यां चकार ह । सहस्राक्षो नरश्रेष्ठ परया गुणसंपदा ॥ ९ ॥
अग्निं कुशान्काष्ठमपः फलं मूलं तथैव च । न्यवेदयत्सहस्राक्षो यच्चान्यदपि काङ्क्षितम् ॥ १० ॥
गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा । शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११ ॥
पूर्णे वर्षसहस्रे सा दशोने रघुनन्दन । दितिः परमसंहृष्टा सहस्राक्षमथाब्रवीत् ॥ १२ ॥
तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर । अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ॥ १३ ॥

---

५ ] ति० टी०—शुचिर्भव पुत्रोत्पत्तिं यावदिति शेषः ॥ ५ ॥

रा० टी०—तत्प्रतिवचनमेवाह—एवमिति । हे तपोधने ! एवमनेन प्रकारेण प्रार्थितं भवतु सिध्यतु ते भद्रं कल्याणं त्वं शुचिः भव तेन आहवे संग्रामे शक्रहन्तारं पुत्रं जनयिष्यसि ॥५॥

गो० टी०—एवमिति । शुचिर्भव यावत्पुत्रोत्पत्तिमिति शेषः ५

६ ] ति० टी०—पूर्णे वर्षसहस्रे त्विति जनयिष्यसीत्यनेनान्वयः । शुचिर्यदि भविष्यसीति वत्सरसहस्रमपीति शेषः । त्रैलोक्यहन्तारं तदधिपशक्रहन्तारम् ॥ ६ ॥

रा० टी०—तदेव विशदयन्नाह—पूर्ण इति । यदि त्वं शुचिर्भविष्यसि तर्हि वर्षसहस्रे पूर्णे सति त्रैलोक्यहन्तारं त्रिलोकीहननसमर्थं पुत्रं मत्तस्त्वं जनयिष्यसि । त्रैलोक्यहन्तारमित्यनेन यदि त्रिलोकहननयोग्यः सः तर्हि इन्द्रहननयोग्य इति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः । किंच त्रैलोक्यं नियम्यत्वेनास्यातीति त्रैलोक्य इन्द्रः किंच त्रिलोक्या अयं स्वामी त्रैलोक्यः तस्येदमित्यण् यस्येति लोपाभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ ६ ॥

गो० टी०—पूर्ण इति । मत्तः मदनुग्रहादित्यर्थः ॥ ६ ॥

७ ] ति० टी०—पाणिना संममार्ज तादृशपुत्रप्रतिबन्धहेतुपापक्षयार्थमिति शेषः । अथ तामालभ्य स्पृष्ट्वा 'स्वति गर्भं भद्रं तवास्तु' इत्युक्त्वा स कश्यपस्तपसे ययावित्यन्वयः ॥७॥

रा० टी०—एवमिति । महातेजाः स कश्यपः एवमनेन प्रकारेण उक्त्वा तां दितिं संममार्ज पुत्रोत्पत्तिप्रतिबन्धकीभूतदुरितध्वंसार्थं मार्जनं चकारेत्यर्थः । संमार्जनानन्तरं पाणिना समालभ्य स्पृष्ट्वा स्वस्ति शुभं ते स्यादित्युक्त्वा तपसे ययौ एतेन कश्यपस्य सुशीलतातिशयः सूचितः । 'तामालभ्य' इति भाट्टपाठः ॥ ७ ॥

गो० टी०—एवमिति । ममार्जेत्याश्वासनप्रकारः ततः मार्जनानन्तरमुदरं समालभ्य स्वस्ति पुत्रोत्पत्तिरूपं शुभं भवत्वित्युक्त्वानुगृह्य स काश्यपस्तपसे ययौ ॥ ७ ॥

८ ] ति० टी०—कुशप्लवं विशालाख्यं पूर्वदेशस्थतपोवनम् ८

रा० टी०—गते इति । हे नरश्रेष्ठ ! तस्मिन् कश्यपे गते सति परमहर्षिता दितिः कुशप्लवनं विशालाभिधपूर्वदेशस्थतपोवनमासाद्य प्राप्य सुदारुणं तपस्तेपे । 'कुशप्लवं समासाद्य' इति भाट्टपाठः ॥ ८ ॥

गो० टी०—गत इति । कुशप्लवनं विशालायाः पूर्वस्थानम् ८

९ ] ति० टी०—गुणसंपदा शुश्रूषोपयोगिगुणसंपदा ॥९॥

रा० टी०—तप इति । हे नरश्रेष्ठ । तस्यां दितौ तप एव कुर्वत्यां सत्यां सहस्राक्षः इन्द्रः परया गुणसंपदा विनयादिसंपत्यैव परिचर्यां चकार । हिहशब्दौ एवार्थे ॥ ९ ॥

गो० टी०—तप इति । गुणसंपदा विनयादिसमृद्ध्या ॥९॥

१० ] ति० टी०—तामेव गुणसंपदमाह—अग्निमित्यादि १०

रा० टी०—परिचर्यास्वरूपं वर्णयन्नाह—अग्निमिति द्वाभ्याम् । सहस्राक्षः अग्न्यादीन्न्यवेदयत् अन्यदपि यत्काङ्क्षितं तदपि न्यवेदयत् ॥ १० ॥

गो० टी०—अग्निमिति । परिचर्याप्रकारः ॥ १० ॥

११ ] ति० टी०—पुत्रत्वाद्गात्रसंवाहनादि सर्वेषु कालेषु तस्या अशुचित्वप्रतीक्षयेति भावः । ननु तद्धन्तृपुत्रप्रेप्सोर्दितेः कथं तत्परिचर्याङ्गीकार इति चेद्देवमाययैवेति गृहाण ॥ ११ ॥

रा० टी०—गात्रेति । गात्रसंवाहनैः गात्ररक्षणप्रयत्नैः च्छत्रादिग्रहणैरित्यर्थः । तथा श्रमापनयनैः । श्रमनिवर्तकपादपीडनादिभिश्च सर्वेष्वपि कालेषु शक्रः दितिमेव परिचचार । ह प्रसिद्धमेतत् । एवोऽप्यर्थे ॥ ११ ॥

गो० टी०—गात्रेति । मातृत्वात् गात्रसंवहनानि श्रमापनयनैः व्यजनवीजनादिभिरिति शेषः ॥ ११ ॥

१२–१३ ] ति० टी०—दशोने दशभिर्न्यूने ॥ १२ ॥ १३ ॥

रा० टी०—पूर्णे इति । हे रघुनन्दन ! दशोने दशवर्षहीने वर्षसहस्रे पूर्णे सति परमसंहृष्टा दितिः अथ इदं सहस्राक्षमब्रवीत् । अथशब्द इत्यर्थे ॥ १२ ॥

---

१ भर्तारमिति गो. पाठः । २ समालभ्येति गो. समालम्ब्येति रा. पाठः । ३ कुशप्लवनमासाद्येति गो. रा. पाठः । ४ अथेति गो. पाठः ५ त्विति । गो. पाठः । ६ संप्रीतेति गो. पाठः । ७ रामायणशिरोमणिकृता गोविन्दराजेन च 'याचितेन' इति पञ्चदशः श्लोकः 'तपश्चरन्त्या' इति त्रयोदशात्राव्याख्यातः । तथापि तिलकानुरोधेनास्माभिरत्र व्याख्या परिवर्तिता ।

येमहं त्वत्कृते पुत्र तमाधास्ये जयोत्सुकम् । त्रैलोक्यविजयं पुत्र सह भोक्ष्यसि विज्वरः ॥ १४ ॥
याचितेन सुरश्रेष्ठ पित्रा तव महात्मना । वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ॥ १५ ॥
ईत्युक्त्वा च दितिस्तत्र प्राप्ते मध्यं दिनेश्वरे । निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ॥ १६ ॥
दृष्ट्वा तामशुचिं शक्रः पादयोः कृतमूर्धजाम् । शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥ १७ ॥
तस्याः शरीरविवरं प्रविवेश पुरंदरः । गर्भं च सप्तधा राम चिच्छेद परमात्मवान् ॥ १८ ॥

गो० टी०–अथेति । दशोने दशवर्षोने ॥ १२ ॥

रा० टी०–तप इति । वीर्यवतां वर ! हे इन्द्र तपश्चरन्त्या मम दशवर्षाणि अवशिष्टानि ततः दशवर्षानन्तरं भ्रातरं द्रक्ष्यसे ते भद्रम् ॥ १४ ॥

गो० टी०–तप इति । ततः दशवर्षान्ते ॥ १४ ॥

१४–१५ ] ति० टी०–हे पुत्र ! यं पुत्रमहं त्वत्कृते त्वन्नाशार्थं याचितवती तं तव जयोत्सुकमाधास्ये विगतवैरं भ्रातृस्नेहवन्तमेव करिष्य इत्यन्वयः । त्रैलोक्यविजयं भ्रातृकृतम् । सह तेन भ्रात्रा सह ॥ १४ ॥ १५ ॥

रा० टी०–यमिति । हे पुत्र ! जयोत्सुकं स्वविजयाकाङ्क्षिणं त्रैलोक्यविजयं त्रैलोक्यविजयकर्तारं यं पुत्रं त्वत्कृते त्वन्नाशाय अहं समाधास्ये तेन पुत्रेण सह विज्वरः विगतसंतापस्त्वं भोक्ष्यसि पायिष्यसि एतेन दितेः कारुण्यं जातमिति सूचितम् । तेन वक्ष्यमाणाशुचित्वहेतुभूतानवधानता दितिज्ञानपूर्विकेति व्यक्तम् ॥ १५ ॥

गो० टी०–तमिति । समाधास्ये विगतवैरं भ्रातृस्नेहवन्तमेव करिष्यामीत्यर्थः । त्रैलोक्यविजयं त्वद्भ्रातृकृतमिति शेषः । अमोघभर्त्रनुग्रहेणाप्रतिबन्धसुतोत्पत्तिं मन्वाना ऋजुतया शुश्रूषाफलमुक्तवती ॥ १५ ॥

रा० टी०–तद्वचनमेवाह–याचितेनेति । हे सुरश्रेष्ठ ! याचितेन मया प्रार्थितेन महात्मना तव पित्रा वर्षसहस्रान्ते वर्षसहस्रतपश्चरणानन्तरकाले मम सुतं प्रति वरो दत्तः ॥ १३ ॥

गो० टी०–याचितेनेति । शुश्रूषाकृतप्रीत्यतिशयाद्वैरं विस्मृतवतीति भावः ॥ १३ ॥

१६ ] ति० टी०–दिनेश्वरे सूर्ये मध्यं प्राप्ते सति शय्यायां शीर्षस्थाने पादौ कृत्वा दितिर्निद्रयापहृता गृहीतेत्यर्थः । अनेन दिवास्वापरूपपापेन शय्यापादस्थाने मस्तककरणेन चाशुचित्वं सूचितम् । केचित्तु—उपविष्टाया एव प्रह्वतया पादपर्यन्तं शिरःसंबन्धेन शीर्षे पादसंबन्धः तेन ब्राह्मणस्य शूद्रस्पर्श इव शिरसः पादस्पर्शेऽशुचित्वं सूचितम् । तपसि स्थितायाः शय्यासंबन्धाभावेन पूर्वव्याख्याया अयुक्तत्वादित्याहुः । परे तु भूशयनेऽपि दक्षिणपूर्वदिशोः शिरःस्थापनयोग्यतायाः स्मृतिषूक्तेस्तद्वैपरीत्येन शयनस्याशुचित्वसूचकत्वमस्त्येवेत्याहुः ॥ १६ ॥

रा० टी०–एवमिति । तत्र तस्मिन्संवादे दिवाकरे मध्यं प्राप्ते सति देवी दितिः एवमनेन प्रकारेण उक्त्वा पादौ शीर्षतः शिरस्थापनोचितदेशे दक्षिणे पूर्वे वा कृत्वा निद्रया अपहृता अपहृतबुद्धिरासीदिति शेषः । अथशब्देन पादयोर्मूर्धजांश्च कृत्वेत्यर्थः । तेन पादयोः पूर्वदक्षिणस्थापनं मूर्धजानां पादस्पर्शनं चेत्येतद्द्वयमपि अशुचिहेतुभूतं संजातमिति फलितम् ॥१६॥

गो० टी०–एवमिति । मध्यं गगनमध्यं शीर्षतः शिरसि पादौ कृत्वा स्थितेति शेषः । मध्याह्नशयनपरिग्रहप्रसक्त्यभावेनासन एवोपविशन्त्यास्तस्या निद्रापारवश्येन नम्रं शिरः पादयोः संसक्तमभवदित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–पादयोस्तत्स्थापनदेशे कृतमूर्धजाम् मूर्धजसंबन्धे मूर्धसंबन्धोऽपि जात एव, अत एवाशुचिम् । तथा शिरःस्थाने तया पादौ कृतावतस्तामशुचिं दृष्ट्वेत्यर्थः । अत्रैकेनैवोभयलाभ उभयोपादानं स्पष्टार्थम् । वस्तुतो वक्रग्रीवतया वक्रपादतया वा शयने परस्परस्थानव्यत्ययाभावेन तथा अशुचित्वमित्यत्यन्ताशुचित्वप्रतिपादनायोभयोपादानमिति बोध्यम् । मुमोद प्राप्तच्छिद्रत्वादिति भावः । मोदवशादेव जहास च ॥ १७ ॥

रा० टी०–दृष्ट्वेति । यया शिरः स्थाने पादौ कृतौ तां पादयोः कृतमूर्धजामत एव अशुचिं तां दितिं शक्रो दृष्ट्वा जहास मुमोद च । जहासेत्यनेन एतावन्तं श्रमं कृत्वापि सह भोक्ष्यसि विज्वर इति आशीर्वादो मात्रा दत्त इति स्मृतिर्व्यञ्जिता । एकश्चकार एवार्थकः । पादयोः मूर्धजस्पर्शस्य पूर्वदक्षिणयोः पादस्थापनस्य चाशुचिकारणत्वं धर्मशास्त्रादौ प्रसिद्धम् ॥ १७ ॥

गो० टी०–दृष्ट्वेति । पादतः कृतमूर्द्धजां पादौ कृत्वाथ शीर्षत इत्यस्य विवरणमत एव अशुचिं तां दृष्ट्वा शिरःस्थाने कृतौ पादौ शिरःस्पृष्टौ पादाविति मुमोद तेन जहास च यद्वा प्राप्ते मध्यं दिवाकर इत्यनेन दिवास्वापरूपाशौचं दर्शितं शीर्षतः शिरःस्थाने शिरःस्थान इत्यनुवादात् । पादतः पादस्थाने शयनपरिग्रहाभावेऽपि कृष्णाजिनाद्यास्तरणे पादस्थाने शिरः शिरःस्थाने च पादौ कृत्वा सुप्तवतीत्यर्थः । पादोपधाने शीर्षं शीर्षोपधाने पादौ च कृत्वेत्यर्थः । रन्ध्रान्वेषणफलं जातमिति मोदः वृथागर्वितेयमिति हासः ॥ १७ ॥

१८ ] ति० टी०–शरीरविवरं योनिविवरम् । आत्मवान्सावधानः ॥ १८ ॥

रा० टी०–तस्या इति । हे राम ! परमात्मवानातिप्रयत्नशीलः पुरन्दरस्तस्या दितेः शरीरविवरं योनिप्रदेशं प्रविवेश गर्भं च सप्तधा बिभेद अनेकधाभवनानुकूलव्यापारं चकार १८

१ तमिति गो. पाठः । २ एवमुक्त्वा दितिः ( तत्र ) शक्रं प्राप्ते मध्यं दिवाकरे इति गो. रा. पाठः । ३ पादत इति गो. पाठः । ४ बिभेदेति गो. रा. पाठः ।

भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा । रुरोद सुस्वरं राम ततो दितिरबुध्यत ॥ १९ ॥
मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत । बिभेद च महातेजा रुदन्तमपि वासवः ॥ २० ॥
न हन्तव्यं न हन्तव्यमित्येव दितिरब्रवीत् । निष्पपात ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत । अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा ॥ २२ ॥
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे । अभिन्दं सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

दितिवचनादिन्द्रेण सप्तगर्भखण्डानां वायुस्कन्धसप्तकपालकत्वकल्पनम्, इत्युपोद्घातपूर्वमस्मिन्नेव दितितपश्चरणदेशे इक्ष्वाकुसूनुर्विशालो नाम विशालां पुरीं निर्ममे तद्वंश्य एवायमद्यतनः सुमतिरिति सुमतेः प्रशंसनम्, सुमतिना सादरमुपगम्य विश्वामित्रपूजनं च ।

सप्तधा तु कृते गर्भे दितिः परमदुःखिता । सहस्राक्षं दुराधर्षं वाक्यं सानुनयाब्रवीत् ॥ १ ॥
ममापराधाद्गर्भोऽयं सप्तधा शकलीकृतः । नापराधो हि देवेश तवात्र बलसूदन ॥ २ ॥

---

गो० टी०—तस्या इति । शरीरविवरं योनिविवरम् आत्मवान् धैर्यवान् ॥ १८ ॥

१९-२० ] ति० टी०—शतपर्वणा शतकोटिना । अबुध्यत भिद्यमानगर्भस्य रोदनशब्देनेत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—भिद्यमान इति । हे राम ! ततः इन्द्रकृतभेदानुकूलव्यापारानन्तरं शतपर्वणा शतकोटियुक्तेन वज्रेण भिद्यमानः गर्भः सुस्वरं यथा स्यात्तथा रुरोद ततस्तस्मात् रोदनात् दितिः अबुद्ध्यत ॥ १९ ॥

गो० टी०—भिद्यमान इति । शतपर्वणा शतकोटिना॥१९॥

रा० टी०—मेति । शक्रः मा रुदो मा रुद इति गर्भं पुनः पुनर्व्यभाषत महातेजा वासवः रुदन्तमपि गर्भं बिभेदैव । एकश्चकारः पुनःपुनरर्थकः ॥ २० ॥

गो० टी०—मा रुद इति । रुदिर् अश्रुविमोचन इत्यस्माल्लुङ् माङ्योगादडभावः ॥ २० ॥

२१-२२ ] ति० टी०—न हन्तव्यमिति विभागेऽपि प्राणवियोजनं मा कुर्वित्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—नेति । न हन्तव्यः न हन्तव्यः इत्येव वचनं दितिः अब्रवीत् ततः दितिवचनश्रवणानन्तरं मातुः वचनगौरवाद्धेतोः शक्रः निष्पपात दितेः उदरात् निःससार ॥ २१ ॥

गो० टी०—न हन्तव्य इति । न हन्तव्यः भेदने कृतेऽपि प्राणवियोजनं मा कुर्वित्यर्थः ॥ २१ ॥

रा० टी०—प्राञ्जलिरिति । प्राञ्जलिः प्रणयसूचकबद्धयुगलकरः शक्रः दितिमभ्यभाषत । अभिभाषणमेवाह—हे देवि ! पादयोःकृतमूर्धजा अत एव अशुचिस्त्वं सुप्तासि तदन्तरं छिद्रं लब्ध्वा आहवे संग्रामे शक्रहन्तारं त्वद्गर्भमहं सप्तधा अभिदं तन्मे अपराधं क्षन्तुमर्हसि ॥ २२ ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०—प्राञ्जलिरिति ॥ २२ ॥

२३ ] ति० टी०—तदन्तरं छिद्रम् । आहवे शक्रस्य मम हन्तारमङ्कुरच्छेदनन्यायेनाभिन्दम् । तन्मेऽपराधकर्म त्वं क्षन्तुमर्हसि पूर्वतनीं सेवां स्मृत्वेति शेषः ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०—तदिति । अन्तरमवकाशम् । क्षन्तुमर्हसि स्वहिंसापरं गामपि हिंस्यादितिन्यायेन युक्तत्वादिति भावः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

१ ] ति० टी०—सप्तधा त्विति । दुराधर्षं न्यायोपायेन जेतृत्वादित्याशयः ॥ १ ॥

रा० टी०—दितेर्वचनमाह—सप्तधेति । गर्भे सप्तधा कृते सति एव परमदुःखिता अत एव सानुनया विनम्रतासहिता दितिः दुराधर्षं जेतुमशक्यं सहस्राक्षं वाक्यमब्रवीत् । तुशब्द एवार्थे ॥ १ ॥

गो० टी०—सप्तधेत्यादि । दुराधर्षं दुर्जयम् ॥ १ ॥

२ ] ति० टी०—ममापराधादशुचित्वरूपात् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—ममेति । हे देवेश ! हे बलसूदन ! ममापराधात् मत्कृतविरुद्धशयनादिजन्यदोषात् अयं गर्भः सप्तधा विफलीकृतः शकलतां प्रापितः अतः अत्र गर्भविफलीकरणे तवापराधो नास्ति ॥ २ ॥

गो० टी०—ममेति । अपराधात्प्रमादात् विफलीकृतः शकलीकृतः ॥ २ ॥

---

१ हन्तव्य इति गो. रा. पाठः । २ अभिदमिति गो. रा. पाठः । ३ विफलीकृत इति गो. रा. पाठः ।

प्रियं त्वत्कृतमिच्छामि मम गर्भविपर्यये । मरुतां सप्त सप्तानां स्थानपाला भवन्तु ते ॥ ३ ॥
वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रक । मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥ ४ ॥
ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः । दिव्यवायुरिति ख्यातस्तृतीयोऽपि महायशाः ॥ ५ ॥
चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात् । संचरिष्यन्ति भद्रं ते कालेन हि ममात्मजाः ॥ ६ ॥
त्वत्कृतेनैव नाम्ना वै मारुता इति विश्रुताः । तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः ॥ ७ ॥
उवाच प्राञ्जलिर्वाक्यमितीदं बलसूदनः । सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ ८ ॥

३ ] ति० टी०—गर्भविपर्यये गर्भविपत्तौ यत्त्वया कृतं कर्म तत्तव च मम च यथा प्रियं भवति तथेच्छामि । तत्प्रकारमाह—मरुतामिति । सप्तानां मरुतां वा तत्स्थानविशेषाणां सप्त इमे ते त्वदधीनाः स्थानपाला लोकरक्षिणो भवन्त्वित्यन्वयः ॥ ३ ॥

रा० टी०—प्रियमिति । मम गर्भविपर्यये गर्भच्छेदे सत्यपि कृत्तं छिन्नं गर्भं प्रियमावयोः प्रियकर्तारमिच्छामि किंच कृतं त्वत्कर्तृकछेदनं प्रियमेतत्कर्तृकप्रीतिविषयीभूतं यथा स्यात्तथा इच्छामि । प्रियकरणोपायमाह—सप्तसप्तानामेकोनपञ्चाशत्संख्यानां महतां देवान्तर्गतवायुविशेषाणां स्थानपालाः स्थानस्वामिनः इमे भवन्तु । स्थानपाला भवन्त्वित्यनेन पूर्वमरुतां देवासुरसंग्रामे प्रलयो जात इति ध्वनितम् । तेन ते एव दितिगर्भेऽवतीर्णा इति व्यञ्जितम् । तुशब्दोऽप्यर्थे । प्रियमित्यत्र प्रीधातोः इगुपधेति कर्तरि कः । कृतमित्यत्र छेदनार्थककृतीधातोः कर्मणि कः । द्वितीयपक्षे कृतमिति भावक्तान्तं प्रियमिति कर्मक्तान्तम् ॥ ३ ॥

गो० टी०—प्रियं त्विति । गर्भविपर्यये उपहतगर्भविषये प्रियं श्रेय कर्तुमिच्छामि । तदेव श्रेयः आह—मरुतामिति । सप्तानां मरुतां वातस्कन्धानामिमे सप्त भागाः स्थानपालाः लोकपालाः भवन्तु । सप्तमरुतश्चोक्ताः—'गगनस्पर्शनो वायुरनिलश्च तथापरः । प्राणः प्राणेश्वरो जीव इत्येते सप्त मारुताः' इति । विष्णुपुराणे तु—'आवहप्रवहसंवहोद्वहविवहपरिवहपरावहाः सप्त मारुताः' इत्युक्तम् ॥ ३ ॥

४ ] ति० टी०—तदर्थमेव हे पुत्रक ! मारुता इति नाम्ना प्रसिद्धा दिव्यरूपा मम पुत्रा य इमे वातस्कन्धा इति सप्त प्रसिद्धास्तेषु चरन्त्वित्यन्वयः ॥ ४ ॥

रा० टी०—वातेति । हे पुत्रक ! मारुता इति विख्याताः दिव्यरूपा देवतारूपं प्राप्ताः वातस्कन्धा वातभेदाः सप्तसप्तावयवकसप्तगणाः इमे ममात्मजा दिवि पृथिव्या ऊर्ध्वं किंच दिवि व्यवहारसिद्ध्यर्थं चरन्तु विहरन्तु । चरमपक्षे दिवधातोर्विच् वलोपाभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ ४ ॥

गो० टी०—वातेति । वातस्कन्धाः वातस्कन्धाभिमानिदेवताः मरुदभिमानिदेवतात्वान्मारुता इति विख्याताः त्वत्कृतेन मा रुद इत्युच्चारणेन मारुता इति विख्याताः पृषोदरादित्वाद्वर्णव्यत्यय इत्याहुः ॥ ४ ॥

५ ] ति० टी०—एक इति । एको गण इत्यर्थः । प्रथमं सप्तधा विभज्य पुनरेकशः सप्तधा करणमित्यस्यार्थस्य पुराणान्तरे स्पष्टमुक्तत्वात्, इहापि बिभेद च महातेजा रुदन्तमपि इत्यादिना ध्वनितत्वाच्चेति बोध्यम् । एवमपर इत्यत्रापि व्याख्येयम् । इन्द्रलोकमिति । 'रुद्रलोकम्' इति प्रचुरः पाठः । दिव्यवायुः दिव्यन्तरिक्षे भव इत्यर्थः ॥ ५ ॥

रा० टी०—सप्तानां गणानां स्थानविशेषं निर्दिशन्नाह—ब्रह्मेत्यादिश्लोकद्वयेन । एकः विभक्तगणान्तर्गतसप्तावयवकः प्रथमो गणः ब्रह्मलोकं चरतु अपरो द्वितीयो गणः इन्द्रलोकं तथा चरतु महायशा दिव्यवायुरिति ख्यातस्तृतीयोऽपि गण इन्द्रलोकं चरतु ॥ ५ ॥

गो० टी०—सप्त मरुतः कुत्र वर्तन्ते तेषां स्थानपालनं च कथमित्यत्राह—ब्रह्मेति । दिवि अन्तरिक्षे विष्णुपदाख्ये विष्णुलोके चरत्वित्यनुषङ्गः ॥ ५ ॥

६ ] ति० टी०—दिशः पूर्वादिमहादिशः ॥ ६ ॥

रा० टी०—चत्वार इति । हे सुरश्रेष्ठ ! देवरूपा एव ममात्मजाः चत्वारः चतुर्थपञ्चमषष्ठसप्तमगणास्तु त्वत्कृतेन तव कृतं मा रुदः मा रुद इति *प्रयन्तो बोधकत्वेन यस्मिन् तेन मारुता इति नाम्नैव विश्रुताः ख्याताः सन्तः तव शासनादेव दिशः पूर्वादिक्रमेण चतस्रः ककुभः संचरिष्यन्ति ते भद्रमस्तु । वैशब्द एवार्थे सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—चत्वार इति । सार्धश्लोकः ॥ ६ ॥

७ ] ति० टी०—त्वत्कृतेन मा रुदो मा रुद इति वचनमूलेन ॥ ७ ॥

रा० टी०—तस्या इति । तस्याः दितेस्तद्वचनं श्रुत्वा बलनिषूदनः प्राञ्जलिः प्रणयसूचकबद्धयुगलकरः सहस्राक्षः पुरंदरः दितिं वाक्यमुवाच । द्विकर्मकोऽयम् ॥ ७ ॥

गो० टी०—तस्या इति । दितिगर्भखण्डनेन सहस्राक्षत्वादीनि सिद्धानीति भावः ॥ ७ ॥

८ ] ति० टी०—यथोक्तं ब्रह्मादिस्थानपालकत्वम् ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—सर्वमिति । एतत्सर्वं यथा

१ तु कर्तुमिति गो. रा. पाठः । २ भवन्त्विमे इति गो. रा. पाठः । ३ पुत्रका इति रा. पाठः । ४ देवभूता इति गो. देवरूपा इति रा. पाठः । ५ दितिं बलनिषूदन इति गो. रा. पाठः । * प्रयत्नो इति भाति ।

विचरिष्यन्ति भद्रं ते देवरूपास्तवात्मजाः । एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ॥ ९ ॥
जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् । एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ॥ १० ॥
दितिं यत्र तपःसिद्धामेवं परिचचार सः । इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः ॥ ११ ॥
अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः । तेन चासीदिह स्थाने विशालेति पुरी कृता ॥ १२ ॥
विशालस्य सुतो राम हेमचन्द्रो महाबलः । सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः ॥ १३ ॥
सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः । धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ॥ १४ ॥
सृञ्जयस्य सुतः श्रीमान्सहदेवः प्रतापवान् । कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ॥ १५ ॥
कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् । सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ १६ ॥
तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् । आवसत्परमप्रख्यः[3] सुमतिर्नाम दुर्जयः ॥ १७ ॥
इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः । दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ १८ ॥

येन प्रकारेण ते उक्तं तथा भविष्यति संशयः अस्मिन् विषये संदेहो न। तदेव स्पष्टमाह—देवरूपाः तवात्मजा विचरिष्यन्ति॥८॥

गो० टी०—सर्वमिति । यथोक्तमित्यस्य विवरणं विचरिष्यन्तीति ॥ ८ ॥

९ ] ति० टी०—मातापुत्रौ दितीन्द्रौ ॥ ९ ॥

रा० टी०—एवमिति । हे राम ! कृतार्थौ साधितप्रयोजनौ तौ मातापुत्रौ दितीन्द्रौ तपोवने एवं वर्णितप्रकारेण निश्चयं कृत्वा त्रिदिवं जग्मतुः इति नः श्रुतम् ॥ ९ ॥

गो० टी०—एवमिति । नः अस्माभिरित्यर्थः "क्तस्य च वर्तमाने" इति षष्ठी ॥ ९ ॥

१० ] ति० टी०—वर्णितेन्द्रचरितस्य प्रकृतशेषत्वमाह—एष इति । स एष इत्यन्वयः ॥ १० ॥

रा० टी०—प्रथमप्रश्नोत्तरमुपसंहरन्नाह—एष इति । काकुत्स्थ हे राम ! एष देशः पुरैव महेन्द्राध्युषितः यत्र यस्मिन्देशे तपःसिद्धां दितिं स इन्द्रः एवं वर्णितप्रकारेण परिचचार । तुशब्द एवार्थे ॥ १० ॥

गो० टी०—प्रकृतमुपसंहरति—एष इति । स एष इत्यन्वयः । सः इन्द्रः ॥ १० ॥

११ ] ति० टी०—एवं प्रागुक्तरीत्या । एवंभूते देशे । विशालोत्पत्तिप्रकारमाह—इक्ष्वाकोस्त्विवति ॥ ११ ॥

रा० टी०—अथ कतरो राजवंश इति द्वितीयप्रश्नोत्तरं वर्णयन्नाह—इक्ष्वाकोरित्यादिभिः । हे नरव्याघ्र ! अलम्बुसायामलम्बुसानामभार्यायामेव[2] उत्पन्नः विशाल इति नाम्ना विश्रुतः ख्यातः परमधार्मिकः इक्ष्वाकोः पुत्र आसीदिति शेषः । तुशब्द एवार्थे ॥ ११ ॥

गो० टी०—अथ कतरो राजवंश दति द्वितीयप्रश्नस्योत्तरमाह—इक्ष्वाकोरित्यादिना ॥ ११ ॥

१२ ] ति० टी०—विशालेति कृता आसीदित्यन्वयः ॥१२॥

रा० टी०—तेनेति । तेन विशालेन कृता निर्मिता विशालेति[1] पुरी इह स्थाने एव आसीत् । चशब्द एवार्थे । हे राम ! महाबलः हेमचन्द्रः हेमचन्द्रनामा विशालस्य सुत आसीत् ॥१२॥

गो० टी०—तेनेति ॥ १२ ॥

१३-१६ ] ति० टी०—कतरोऽत्र वंश इति प्रश्नस्योत्तरमाह—विशालस्येत्यादि ॥ १३—१६ ॥

रा० टी०—सुचन्द्र इति । हेमचन्द्रादनन्तरः हेमचन्द्रोत्तरकालिकः सुचन्द्र इति विख्यात आसीदिति शेषः । हे राम ! धूम्राश्व इति विश्रुतः सुचन्द्रतनयः आसीत् ॥ १३ ॥

गो० टी०—सुचन्द्र इति ॥ १३ ॥

रा० टी०—धूम्रेति । सृञ्जयनामा धूम्राश्वतनयश्च समपद्यत श्रीमान् प्रतापवान् सहदेवः सृञ्जयस्यापि सुतः समपद्यत ॥१४॥

गो० टी०—धूम्रेति । सृञ्जयः समपद्यत सृञ्जयनामाऽऽसीत्१४

रा० टी०—कुशाश्व इति । परमधार्मिकः कुशाश्वः कुशाश्वनामा सहदेवस्य पुत्रः आसीत् महातेजाः प्रतापवान सोमदत्तः सोमदत्तनामा कुशाश्वस्य पुत्रः आसीत् ॥ १५ ॥

गो० टी०—कुशाश्व इति ॥ १५ ॥

१७ ] ति० टी०—इमां पुरीं संप्रत्यावसदित्यन्वयः ॥ १७ ॥

रा० टी०—सोमदत्तस्येति । सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति नाम्ना विश्रुतः आसीत् । अर्धं पृथक् । महातेजा अमरप्रख्यः अमरसदृशः दुर्जयः जेतुमशक्यः सुमतिर्नाम सुमतिनामा तस्य काकुत्स्थस्य एषः पुत्रः संप्रति इमां विशालां पुरीमावसति ॥ १६ ॥

गो० टी०—सोमदत्तस्येति । अर्धमेकम् ॥ १६ ॥

गो० टी०—तस्येति । "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वम् ॥ १७ ॥

१८ ] ति० टी०—वैशालिका विशालायां निवासो येषां त इत्यर्थः । अनेन त्वत्समानवंश्योऽयमिति सूचितम् ॥ १८ ॥

रा० टी०—एतावद्बृहत्कालपर्यन्तं एतैः एव कथं भुक्तेति शङ्कां परिहरन्नाह—इक्ष्वाकोरिति। इक्ष्वाकोः प्रसादेनैव दीर्घा-

१ लेति रा. पाठः । २ बुसायामिति गो. रा. पाठः । ३ आवसत्यमरप्रख्य इति गो. रा. पाठः ।

इहाद्य रजनीमेकां सुखं स्वप्स्यामहे वयम् । श्वः प्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९ ॥
सुमतिस्तु महातेजा विश्वामित्रमुपागतम् । श्रुत्वा नरवरश्रेष्ठः प्रत्यागच्छन्महायशाः ॥ २० ॥
पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः । प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥ २१ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुने । संप्राप्तो दर्शनं चैव नास्ति धन्यतरो मम ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ।

सुमतिकृतसत्कारं स्वीकृत्य तस्मै रामलक्ष्मणवृत्तनिवेदनपूर्वकं विश्वामित्रस्य तत्र निवासः, रामादिभिः सहापरेऽह्नि गौतमाश्रमं प्रति गमनम्, तत्राहल्यावृत्तं निवेद्येन्द्राहल्ययोर्गौतमशापप्राप्तिकथनम् ।

पृष्ट्वा तु कुशलं तत्र परस्परसमागमे । कथान्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १ ॥
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ । गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥

---

युषः महात्मानः अतिप्रयत्नवन्तः वीर्यवन्तः अतिपराक्रमविशिष्टाः सुधार्मिकाः वैशालिकाः विशाला निवासो येषां ते कुमुदादित्वाट्ठक् सर्वे नृपाः आसन्निति शेषः । तुशब्द एवार्थे ॥ १७ ॥

गो० टी०—कथं कतिपयैरेव पुरुषैरिदानीमिक्ष्वाकुवंश इत्यत्राह—इक्ष्वाकोरिति । विशाला निवास एषां ते वैशालिकाः कुमुदादित्वात् ठक् । विशालप्रार्थनमिक्ष्वाकुप्रसादनिमित्तम् १८॥

१९-२१ ] ति० टी०—अत एवाह—इहाद्येति ॥१९-२१॥

रा० टी०—इहेति । हे राम हे नरश्रेष्ठ! अद्य रजनीं वयमिह सुखं वत्स्यामहे श्वः आगामिनि प्रभाते जनकं द्रष्टुमर्हसि ॥१८॥

गो० टी०—इहेति । वत्स्यामहे आर्षमात्मनेपदम् ॥ १९ ॥

रा० टी०—सुमतिरिति । नरश्रेष्ठः महातेजाः महायशाः सुमतिः उपगतं विश्वामित्रं श्रुत्वैव प्रत्यागच्छत्। तुशब्द एवार्थे१९॥

गो० टी०—सुमतिरिति । प्रत्युद्गच्छत्प्रत्युदगच्छत् ॥२०॥

रा० टी०—पूजामिति । अथ प्रत्यागमनानन्तरं सोपाध्यायः सबान्धवः प्राञ्जलिः प्रणयसूचकबद्धयुगलकरः सुमतिः परमां पूजां कृत्वा कुशलं च पृष्ट्वा अब्रवीत् ॥ २० ॥

गो० टी०—पूजां चेति ॥ २१ ॥

२२ ] ति० टी०—मम मत्त इत्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तचत्वारिंशः सर्गः॥ ४७ ॥

रा० टी०—तद्वचनमेवाह—धन्येति । यस्य मे विषयं देशं गतः भवान्प्राप्तः सः अहं धन्यःअस्मि अनुगृहीतश्चास्मि यतः दर्शनं संप्राप्तोऽस्मि अतः मम मत्तः धन्यतरः अन्यो नास्त्येव । अन्य इत्यध्याहृतम् मम इति पञ्चम्यर्थे षष्ठी ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गो० टी०—धन्य इति । विषयं स्थानं दर्शनं च प्राप्त इत्यनुषङ्गः । मया सदृश इति शेषः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

१ ] ति० टी०—पृष्ट्वेति । सुमतिर्नाम *विशालाराजा महामुनिं विश्वामित्रम् कथान्ते विश्वामित्रेण कथ्यमानकथान्ते ॥ १ ॥

रा० टी०—कुशलप्रश्नानन्तरकालिकं वृत्तमाह—पृष्ट्वेति । तत्र विशालायां कुशलं पृष्ट्वा परस्परसमागमे याः कथा उक्तिप्रत्युक्तयस्तासामन्ते अवसाने एव सुमतिः विशालाधिपतिः महामुनिं विश्वामित्रं वाक्यं व्याजहार । तुशब्द एवार्थे ॥ १ ॥

गो० टी०—अथ रामस्य परमपावनत्वं दर्शयत्यष्टचत्वारिंशे-पृष्ट्वा त्वित्यादि । परस्परेत्यविभक्तिकनिर्देशः परस्परं कुशलं पृष्ट्वा कथान्ते तदुत्तरान्ते इति योजना ॥ १ ॥

२ ] ति० टी०—गजसिंहगती गजवद्धीरमन्दगती सिंहवदप्रतिहतगती । यद्वा प्रभुत्वाद्गजगती रामोऽन्यगतिर्लक्ष्मणः तथा शार्दूलाकृती रामो वृषभाकृतिर्लक्ष्मणः ॥ २ ॥

रा० टी०—तद्व्याहरणमेवाह—इमावित्यादिपञ्चभिः श्लोकैः । हे मुने ! देवतुल्यपराक्रमौ देवतुल्यपराक्रमवत्तया लक्ष्यमाणौ किंच देवौ क्रीडाशीलौ तुल्यपराक्रमौ परस्परं सदृशपराक्रमवत्तया प्रतीयमानौ तावेव ताविति कर्मधारयः गजसिंहगती गजसिंहनिष्ठमन्दाप्रतिहतगमनसदृशगमनवत्तया प्रतीयमानौ शार्दूलवृषभोपमौ शार्दूलवृषभनिष्ठदुर्धर्षत्वोन्नतस्कन्धत्वसदृशदुर्धर्षत्वोन्नतस्कन्धत्ववत्तया प्रतीयमानौ ॥ २ ॥

गो० टी०—इमावित्यादिपञ्चश्लोकी । इमौ कुमारौ कोऽयं कुमारभाव इति विस्मयते । दृष्टिदोषो मा भूदित्याह—भद्रं ते

---

१ रामेति गो. रा. पाठः । २ वत्स्यामह इति गो. रा. पाठः । ३ प्रत्युद्गच्छदिति गो. पाठः । ४ मुनिरिति गो. गत इति रा. पाठः । ५ मयेति रा. पाठः । * रोजं इति युक्तं भाति ।

पद्मपत्रविशालाक्षौ खड्गतूणधनुर्धरौ । अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥
यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ । कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ ४ ॥
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् । परस्परेण सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५ ॥
किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि । वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् । [ सिद्धाश्रमनिवासं च राक्षसानां वधं यथा ]
विश्वामित्रवचः श्रुत्वा राजा परमविस्मितः ॥ ॥ ७ ॥

इति । देवतुल्यपराक्रमौ संस्थानविशेषदर्शनेन नूनमेतौ विष्णुतुल्यपराक्रमाविति मन्यामहे । गजसिंहगती वीरौ शार्दूलवृषभोपमौ । चतुर्गतित्वमुच्यते गाम्भीर्यगमने गजतुल्यौ पराभिभवनार्हगमने सिंहतुल्यौ भयंकरगमने शार्दूलतुल्यौ समौ सगर्वगमने वृषभसदृशावित्यर्थः । विशेषेण रावयतः शत्रूनिति वीरौ अनुभवितॄणां विरोधिनिवर्तकावित्यर्थः । पद्मपत्रविशालाक्षौ द्रष्टॄणामाकर्षकावयवविशेषौ नयनसौन्दर्यं हि लावण्यपरमकाष्ठा । खड्गतूणीधनुर्धराविति आभरणकोटौ आयुधकोटौ च एषामन्तर्भावः । अश्विनाविव रूपेण रूपवत्सु अश्विनौ प्रसिद्धौ रूपेणासाधारणधर्मेण ताविव स्थितौ समुपस्थितयौवनौ रूपानुरूपं प्रादुर्भवद्यौवनौ यदृच्छयैव भाग्यवशादेव देवलोकाद्गां भुवं प्राप्तौ अमरौ कौचिद्देवविशेषाविव स्थितौ तेजसा देवकुमारतुल्यावित्यर्थः। एतत्तेजोविशेषविलोकनेनैतौ मर्त्यावपि अमर्त्याविति प्रतिभातीति भावः। कथं पद्भ्यां इह प्राप्तौ अतीवकोमलाभ्यां पद्भ्यामिह दुर्गमे पथि कथं प्राप्तावित्युदरं परिस्पृशति किमर्थं एतद्रूपदर्शनेनैवाप्तसमस्तकामाविति निश्चिनुमः कस्य वा पुत्रावित्यर्थः । यद्वा कस्य पुरुषस्य कतमप्रयोजनाय इह प्राप्तावित्यर्थः । मुने सर्वज्ञो भवान् इममर्थं जानात्येवेत्यर्थः । चन्द्रसूर्यावम्बरमिव इमं देशं भूषयन्तौ शैत्यप्रतापाभ्यामुभावपि चन्द्रसूर्यतुल्यौ अयं लोको विष्णुपदमासीदिति भावः । भूषयन्तौ निजतेजसेति भावः । प्रमाणं शरीरौन्नत्यादि इङ्गितमन्तर्गतभावसूचकस्मितादि चेष्टितं गमनभाषणविलोकनादि एतैः परस्परसदृशौ तुल्यपुरुषान्तराभावात् । नरश्रेष्ठावपि दुर्गमे पथि किमर्थं संप्राप्तौ पूर्वं पद्भ्यां कथं प्राप्तावित्युक्तं संप्रति दुर्गमं वनं किमर्थं प्राप्तावित्युच्यते वरायुधधरौ आयुधश्रेष्ठधनुरादिधरौ पूर्वमाभरणान्वयेन खड्गादिकमुक्तमिदानीं तान्येवायुधतयोच्यन्ते यद्वा पूर्वोक्तानां वरायुधत्वमुच्यते । वीरौ वीर्ययुक्तौ पूर्वं वीरशब्दोऽन्यथा व्याख्यातः । श्रोतुमिच्छामि तत्त्वतः यद्यपि राजपुत्रौ कस्यचिद्विघ्नस्य शान्तये आगताविति सामान्यतो जानामि तथापि विशेषतो ज्ञातुमिच्छामीत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

३ ] ति० टी०—पद्मपत्रविशालाक्षावित्यनेन भाग्यसंपत्सूचिता । वीरधर्मसूचकं खड्गेत्यादि ॥ ३ ॥

रा० टी०—पद्मपत्रविशालाक्षौ पद्मपत्रवद्विशाले अक्षिणी ययोस्तौ खड्गतूणीधनुर्धरौ खड्गतूणीधनूंषि धरतस्तौ कर्मणः शेषत्वविवक्षया कर्मण्यणितिशास्त्राविषयतया गदाधरवत् पचाद्यच् रूपेण अश्विनाविव अश्विनिष्ठरूपप्रतियोगिकसादृश्यविशिष्टरूपवत्तया प्रतीयमानावित्यर्थः । समुपस्थितयौवनौ संप्राप्तयौवनावस्थाकौ ॥ ३ ॥

४ ] ति० टी०—यदृच्छया दैववशसंपन्ननिमित्तविशेषेण यया कयाचित्स्वेच्छयेत्यर्थो वा । देवलोकाद्गां भुवं प्राप्तावतीर्णौ अमराविव स्थितौ । किमर्थं किं वा प्रयोजनमुद्दिश्य । कथमतिसुकुमारचरणत्वात्केन प्रकारेण पद्भ्यामिह प्राप्तौ कस्य वा सुताविति शेषः ॥ ४ ॥

रा० टी०—यदृच्छया स्वेच्छयैव देवलोकात्संप्राप्तौ अमराविव देवलोकात् यदृच्छासंप्राप्तामरप्रतियोगिकसादृश्यविशिष्टौ इमौ वीरौ कुमारौ इह पद्भ्यां कथं प्राप्तौ किमर्थं कमर्थमुद्दिश्य च प्राप्तौ कस्य किंनिरूपितसंबन्धवन्तौ ते भद्रं कल्याणम् । एतेन मत्पृष्टं द्रुतं ब्रूहीति व्यञ्जितम् । त्रयाणामेकत्रान्वयः । वाशब्दश्चार्थे ४

५ ] ति० टी०—भूषयन्तौ स्वतेजसेति शेषः । प्रमाणं शरीरौन्नत्यादि, इङ्गितमान्तराशयबोधकम्, चेष्टितं वचनगमनादि, तैस्तादृशपुरुषान्तराभावात्परस्परसदृशौ ॥ ५ ॥

रा० टी०—उत्तरविलम्बं ज्ञात्वातिशुश्रूषया भङ्ग्यन्तरेण वर्णयन् पुनस्तदेव पृच्छति—भूषयन्तावित्यादिश्लोकद्वयेन । चन्द्रसूर्यावम्बरमिव इमं देशं भूषयन्तौ प्रमाणेङ्गितचेष्टितैः प्रमाणं शरीरेयत्ता इङ्गितमन्तर्व्यापारः चेष्टितं बहिरिन्द्रियव्यापारः एतैः परस्परस्य सदृशौ एतेन वास्तवोपमानान्तराभावः सूचितः ॥ ५ ॥

६ ] ति० टी०—आदरातिशयात्पुनः पृच्छति—किमर्थं चेत्यादि । दुर्गमे कान्तारसंबन्धात् ॥ ६ ॥

रा० टी०—किमर्थमिति । नरश्रेष्ठौ नरवरौ वरायुधधरौ वीरौ दुर्गमे पथि किमर्थं संप्राप्ताविति तत्त्वतः श्रोतुमिच्छामि । द्वयोरेकत्रान्वयः । एतेन स्वभाग्यातिशयोऽनुमित इति व्यक्तम् । चशब्द इत्यर्थे ॥ ६ ॥

७ ] ति० टी०—यथावृत्तं न्यवेदयत् दशरथकुमारावस्मद्यज्ञविघ्ननिवारणाय मदाकारणान्मदुपलालनात्सिद्धाश्रमं प्राप्य तत्र विघ्नकर्तृराक्षसादीन्हत्वा पथि ताटकां च हत्वा जनकदिदृक्षयैतद्देशमागताविति न्यवेदयत् ॥ ७ ॥

रा० टी०—तस्येति । तस्य विशालाधिपतेः सुमतेस्तद्व-

---

१ यदृच्छयैव संप्राप्ताविति गो. रा. पाठः । २ परस्परस्येति गो. रा. पाठः । ३ अर्धमेतदाधिकं गो. रा. पाठे । ४ च तद्वधमिति रा. पाठः । ५ हर्षित इति गो. रा. पाठः ।

अतिथी परमं प्राप्तौ पुत्रौ दशरथस्य तौ । पूजयामास विधिवत्सत्कारार्हौ महाबलौ ॥ ८ ॥
ततः परमसत्कारं सुमतेः प्राप्य राघवौ । उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ॥ ९ ॥
तां दृष्ट्वा मुनयः सर्वे जनकस्य पुरीं शुभाम् । साधु साध्विति शंसन्तो मिथिलां समपूजयन् ॥ १० ॥
मिथिलोपवने तत्र आश्रमं दृश्य राघवः । पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुङ्गवम् ॥ ११ ॥
इदमाश्रमसंकाशं किं न्विदं मुनिवर्जितम् । श्रोतुमिच्छामि भगवन्कस्यायं पूर्व आश्रमः ॥ १२ ॥
तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ॥ १३ ॥
हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव । यस्यैतदाश्रमपदं शप्तं कोपान्महात्मनः ॥ १४ ॥
गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मनः । आश्रमो दिव्यसंकाशः सुरैरपि सुपूजितः ॥ १५ ॥

---

चनं श्रुत्वा सिद्धाश्रमनिवासं राक्षसानां तद्वधं च यथावृत्तमेव न्यवेदयत् विश्वामित्र इति शेषः । एकश्चकार एवार्थे ॥ ७ ॥

गो० टी०–तस्येति । स्वस्य सिद्धाश्रमनिवासं तत्र स्वयज्ञविघ्नकरराक्षसानामेताभ्यां वधं चकारादिगौ दशरथकुमारौ हरधनुर्दर्शनाय मिथिलां गच्छत इत्येतत्समुच्चीयते । एतत्सर्वं यथावृत्तमब्रवीदिति योजना ॥ ७ ॥

रा० टी०–विश्वामित्रेति । विश्वामित्रवचः श्रुत्वा परमहर्षितः परमहर्षं प्राप्तो राजा विशालाधिपतिः सुमतिः परमौ उत्तमौ सत्कारार्हौ सत्कृतियोग्यौ महाबलौ प्राप्तौ समीपमागतौ दशरथस्य पुत्रौ तौ रामलक्ष्मणौ अतिथी विधिवत्पूजयामास । सार्धश्लोक एकान्वयी ॥ ८ ॥ ९ ॥

गो० टी०–विश्वामित्रेति । सार्धश्लोकः ॥ ८ ॥

८–९ ] ति० टी०–परमत्यन्तमादरणीयौ प्राप्तावतिथी तौ पूजयामासेत्यन्वयः ॥ ८ ॥ सुमतेरिति पञ्चमी । उष्योषित्वा आर्षमेतत् ॥ ९ ॥

रा० टी०–तत इति । ततः सुमतिकृतपूजानन्तरं सुमतेः परमसत्कारं प्राप्य तत्र एकां निशामुष्य उषित्वा राघवौ रामलक्ष्मणौ ततः विशालातः मिथिलां जग्मतुः । आर्षो ल्यप् ॥ १० ॥

गो० टी०–तत इति । उष्य उषित्वा ततः प्रातःकाले मिथिलां प्रति इति शेषः ॥ ९ ॥

१० ] ति० टी०–पूजाप्रकारः साधुसाध्विति शंसनम् ॥ १० ॥

रा० टी०–तामिति । जनकस्य शुभां पुरीं तां मिथिलां दृष्ट्वा साधु साधु इति शंसन्तः सर्वे मुनयः समपूजयन् प्राशंसन् ॥ ११ ॥

गो० टी०–तानिति । तान् मिथिलां प्रति प्रस्थितान् रामादीन् पूजाप्रकारः साधु साध्विति ॥ १० ॥

११ ] ति० टी०–मिथिलोपवने मिथिलासमीपवने दृश्य दृष्ट्वा । पुराणमित्यादित्रयमाश्रमविशेषणम् ॥ ११ ॥

रा० टी०–मिथिलोपवन इति । तत्र तस्मिन्समये पुराणं निर्जनं जनरहितं रम्यमाश्रमं मिथिलोपवने मिथिलासमीपवर्तिवनप्रदेशे दृश्य दृष्ट्वा राघवो रामः मुनिपुंगवं विश्वामित्रं पप्रच्छ ॥ १२ ॥

गो० टी०–मिथिलेति । मिथिलाया उप समीपे वर्तमानं वनं मिथिलोपवनं तस्मिन् शून्यमुटजसंस्थानरहितं दृश्य दृष्ट्वा ॥ ११ ॥

१२–१३ ] ति० टी०–मुनिरहितयादाश्रमवदस्याशक्यत्वम्, अत एवाश्रमसंकाशमाश्रमवदवभासमानम् । अत इदं किं नु तस्यैव विवरणम् । कस्यायं पूर्वः पूर्वस्त्रभूतः ॥ १२ ॥ १३ ॥

रा० टी०–तत्प्रश्नमेवाह–श्रीमदिति । श्रीमत् शोभाविशिष्टमाश्रमसंकाशं मुनिनिवासवत्प्रतिभासमानं मुनिवर्जितमिदं किं नु आश्रमः आश्रमभिन्नो वेति भावः । आर्षं निश्चित्य पृच्छति हे भगवन् ! पूर्वे पूर्वस्मिन्काले अयमाश्रमः कस्येति श्रोतुमहमिच्छामि तद्वदेत्यर्थः ॥ १३ ॥

गो० टी०–श्रीमदिति । आश्रमसंकाशमाश्रमवद्भासमानं किंन्विदमित्यस्य विवरणं कस्यायमिति ॥ १२ ॥

रा० टी०–तदिति । राघवेणोक्तं तद्वाक्यं वाक्यविशारदः महातेजाः महामुनिः विश्वामित्रः श्रुत्वा प्रत्युवाच ॥ १४ ॥

गो० टी०–तदिति ॥ १३ ॥

१४ ] ति० टी०–अहल्यानुग्रहे तु कालस्मृतिजसंतोषे हन्तेति । यस्यैतदाश्रमपदं भवति । महात्मनः कोपाद्यथा शप्तं प्राप्तशापं तत्ते कथयिष्यामीत्यन्वयः ॥ १४ ॥

रा० टी०–तत्प्रतिवचनमेवाह–हन्तेत्यादिभिः । हे राघव ! कोपात् शप्तं महात्मनो यस्यैतत् आश्रमपदं आसमन्ताद्रावेन श्रमो यस्मात् व्यवस्थाश्रवणमात्रेण अतिखेदप्रापकमित्यर्थः तदेव पदं स्थानं तमहं तत्त्वेन ते कथयिष्यामि हन्त अतः शृणु ॥ १५ ॥

गो० टी०–हन्तेति । अहल्यानुग्रहहेतुकालस्मृतिजसंतोषे हन्तेति । महात्मना कोपाच्छप्तं प्राप्तशापमिदमाश्रमपदं यस्य भवति तं कथयिष्यामि तत्त्वेन शृणु ॥ १४ ॥

१५ ] ति० टी०–दिव्यसंकाशो सुभवाश्रमतुल्यः ॥ १५ ॥

रा० टी०–प्रतिज्ञातमाह–गौतमेत्यादिभिः । हे नरश्रेष्ठ ! दिव्यसंकाशः दिव्यत्वेन प्रतिभासमानः अत एव सुरैरपि सुपूजितः अयमाश्रमः महात्मनः गौतमस्य पूर्वमासीत् ॥ १६ ॥

---

१ परमाविति गो० रा० पाठः । २ तानिति गो० पाठः । ३ श्रीमदिति गो० रा० पाठः ।

स चात्र तप आतिष्ठदहल्यासहितः पुरा । वर्षपूगान्यनेकानि राजपुत्र महायशः ॥ १६ ॥
तस्यान्तरं विदित्वा च सहस्राक्षः शचीपतिः । मुनिवेषधरो भूत्वा अहल्यामिदमब्रवीत् ॥ १७ ॥
ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते । संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥ १८ ॥
मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ १९ ॥
अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना । कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो ॥ २० ॥
आत्मानं मां च देवेश सर्वथा रक्ष गौतमात् । इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ २१ ॥
सुश्रोणि परितुष्टोऽस्मि गमिष्यामि यथागतम् । एवं संगम्य तु तदा निश्चक्रामोटजात्ततः ॥ २२ ॥

---

गो० टी०—गौतमस्येति।दिव्यसंकाशः दिव्यत्वेन भासमानः१९

१६ ] ति० टी०—अनेकानि वर्षपूगान्यनेकवर्षसमूहान् १६

रा० टी०—तदेव विशदयन्नाह—स चेति । हे राजपुत्र ! हे महायशः ! हे राम ! अहल्यासहितः स गौतमः इह मिथिलोपवने एव अनेकानि वर्षपूगानि वर्षसमूहान् पुरा पूर्वं तपः आतिष्ठत्। चशब्द एवार्थे ॥ १७ ॥

गो० टी०—स चेति । वर्षपूगान् वर्षसमूहान् ॥ १६ ॥

१७ ] ति० टी०—तस्याश्रमस्य । अन्तरं मुनिसंनिधानरहितं कालम् । शचीपतिरित्यनेन शचीतोऽपि सौन्दर्यमहल्याया ध्वनितम् । मुनिवेषधरो गौतमवेषधरः मम रूपं समास्थायेति वक्ष्यमाणत्वात् ॥ १७ ॥

रा० टी०—तस्येति । तस्य गौतमस्य अन्तरं स्नानादिगमनेन व्यवधानं विदित्वा ज्ञात्वैव मुनिवेषधरः शचीपतिः सहस्राक्षः इन्द्रः अहल्यामिदं वचनमब्रवीत् । अथशब्द एवार्थे एकस्य यौगिकत्वस्वीकारान्न पौनरुक्त्यम् ॥ १८ ॥

गो० टी०—तस्येति । अन्तरं मुनिरहितकालं मुनिवेषधरः गौतमवेषधरः॥ १७ ॥

१८ ] ति० टी—ऋतुकालं शास्त्रोक्तरतिकालम् । अर्थिनो रत्यर्थिनः । सुसमाहिते संगमोचितरूपप्रसाधनवति, अतिसुन्दरीति वा । तेन स्वाभिलष्यदिव्यस्त्रीत्वं सूचितम् ॥ १८ ॥

रा० टी०—तद्वचनमेवाह—ऋतुकालमिति । हे सुसमाहिते एकाग्रचित्ते अर्थिनः रतिकामा जनाः ऋतुकालं शास्त्रोक्तरतिविहितसमयं न प्रतीक्षन्ते अतः हे सुमध्यमे त्वया सह संगमं रतिमहमिच्छामि । एतेन तदानीं तस्याः रतिनिषिद्धकालः संस्थित इति ध्वनितं तेन रतिकालो नास्तीति पूर्वमहल्यया निवारितमिति व्यक्तम् । तुशब्दो हेत्वर्थे ॥ १९ ॥

गो० टी०—ऋत्विति । ऋतुकालम् 'षोडशर्तुर्निशाः स्त्रीणाम्' इत्युक्तकालम् अर्थिनः कामाद्भोगार्थिन अनृतुकालस्त्वायमवसर इत्यहल्यया प्रतिषिद्धमित्यवगम्यते । सुसमाहिते सम्यक् ब्रह्मणा निर्मिते अतिसुन्दरीत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—सहस्राक्षं विज्ञाय । 'ऋतुकालं प्रतीक्षन्ते नार्थिनः' इति वचनात्तपसा चाश्रमवर्तिसर्वप्राणिजातस्य शङ्काभावाय गौतमवेषोऽयमिन्द्र इति ज्ञात्वेत्यर्थः । देवराजकुतूहलात्स मामभिलषतीति कौतुकात् दिव्यरतिकौतुकाच्चेत्यर्थः । दुर्मेधा अहल्या तेन सह रत्यर्थं मतिं चकारेत्यन्वयः ॥ १९ ॥

रा० टी०—मुनिवेष इति । हे रघुनन्दन ! मुनिवेषं गौतमवेषधारिणं सहस्राक्षमिन्द्रं विज्ञाय दुर्मेधा अहल्या देवराजकुतूहलात् स मां वाञ्छतीति जातोत्साहात् देवराजाभिलाषातिशयाद्वा मतिं रतिविषयकनिश्चयं चकार ॥ २० ॥

गो० टी०—मुनीति । सहस्राक्षं विज्ञाय कदाचिदपि मुनिनैवमर्थनाभावादन्यस्यात्र प्रवेष्टुमशक्तेरिन्द्रस्यैवात्मनि बहुकालमभिलाषश्रवणाच्चेति भावः ॥ १९ ॥

२० ] ति० टी०—कृतार्था तादृशदिव्यपुरुषलाभात्प्राप्ततपःफला ॥ २० ॥

रा० टी०—अथेति । अथ रत्यनन्तरं कृतार्थेनान्तरात्मना मनसा सुरश्रेष्ठमिन्द्रमब्रवीत्। तद्वचनमेवाह—हे सुरश्रेष्ठ ! हे प्रभो ! अहं कृतार्थास्मि अतः इतः स्थानात् शीघ्रं गच्छ ॥२१॥

गो० टी०—अथेति । कृतार्थेन संतुष्टेनेत्यर्थः । अन्तरात्मना मनसा उपलक्षिता ॥ २०

२१ ] ति० टी०—शीघ्रगमने हेतुर्ममाहल्याया आत्मन इन्द्रस्य च शापतो रक्षणम् । तदाह—आत्मानमित्यादि । प्रहसन्निति विशिष्टस्त्रीचरितेन प्रहासो रक्षणस्य दुर्लभत्वाद्वा । गौतमतपोभङ्गस्य स्वेष्टस्य करणेनाग्निमशापादिभयमल्पमिति वा ॥ २१ ॥

रा० टी०—शीघ्रगमने प्रयोजनं वदन्ती आह—आत्मानमिति । हे देवेश ! आत्मानं मां च सर्वथा सर्वप्रकारेण रक्ष गौतमादिति शेषः । एतेन गौतमदृष्टिपथगश्चेत्त्वं भविष्यसि तर्हि तच्छापेन मम तव च विध्वंसो भविष्यतीति ध्वनितम् । तद्वाक्यश्रवणानन्तरं प्रहसन्सन् इन्द्रः इदं वचनमहल्यामब्रवीत् । तुशब्दोऽनन्तरार्थकः । प्रहसन्नित्यनेन अहल्यावाञ्छितशापाभावस्य दुर्लभत्वं द्योतितम् ॥ २२ ॥

गो० टी०—आत्मानमिति।रक्ष अप्रकाशगमनादितिभावः २१

२२ ] ति० टी०—संगम्य अहल्यया सहेति शेषः ॥ २२ ॥

रा० टी०—इन्द्रवाक्यमेवाह—सुश्रोणीति । हे सुश्रोणि !

---

१ चेहेति गो. रा. पाठः । २ वर्षपूगाननकांश्चेति गो. पाठः । ३ त्विति गो. अथेति रा. पाठः । ४ ऽहल्यामिदं वचनमिति गो. रा. पाठः । ५ मानदेति गो. रा. पाठः । ६ तयेति गो. रा. पाठः ।

स संभ्रमात्त्वरन्राम शङ्कितो गौतमं प्रति । गौतमं स ददर्शाथ प्रविशन्तं महामुनिम् ॥ २३ ॥
देवदानवदुर्धर्षं तपोबलसमन्वितम् । तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ २४ ॥
गृहीतसमिधं तत्र सकुशं मुनिपुंगवम् । दृष्ट्वा सुरपतिस्त्रस्तो विषण्ण[1]वदनोऽभवत् ॥ २५ ॥
अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः । दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ २६ ॥
मम रूपं समास्थाय कृतवानसि दुर्मते । अकर्तव्यमिदं यस्माद्विफलस्त्वं भविष्यसि ॥ २७ ॥
गौतमेनैवमुक्तस्य सुरोषेण[2] महात्मना । पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ २८ ॥
तथा शप्त्वा च वै शक्रं भार्यामपि[3] च शप्तवान् । इह वर्षसहस्राणि बहूनि निर्वसिष्यसि[4] ॥ २९ ॥
वातभक्षा[5] निराहारा तप्यन्ती भस्मशायिनी । अदृश्या सर्वभूतानामाश्रमेऽस्मिन्वसिष्यसि[6] ॥ ३० ॥

अहं परितुष्टोऽस्मि त्वत्कर्तृकमदनुकूलानुवर्तनेन प्राप्तसंतोषोऽस्मि अतः यथागतमागतमनतिक्रम्य गमिष्यामि एवमनेन प्रकारेण तया अहल्यया संगम्य ततस्तस्मादुटजात्पर्णशालातः निश्चक्राम ॥ २३ ॥

गो० टी०–सुश्रोणीत्यर्धम् ॥ २२ ॥

गो० टी०–एवमिति । सः इन्द्रः संभ्रमात् भयात् 'संभ्रमो ष्वादरे भये' इति निघण्टुः । शङ्कितः शङ्कावान् ॥ २३ ॥

२३–२६ ] ति० टी०–स इन्द्रः संभ्रमाद्गौतमभयात्त्वरन्निश्चक्रामेत्यन्वयः। निर्गमसमये गौतमं प्रति तदागमनं प्रति शङ्कितश्च आसीदिति शेषः । अथ निष्क्रमणसमयानन्तरमेव २३–२६

रा० टी०–स इति । हे राम ! अथ उटजान्निःसरणानन्तरं संभ्रमात् गौतमशापभयात् गौतमं प्रति शङ्कितः गौतमागमनविषयकशङ्काविशिष्टः अत एव त्वरन् शीघ्रगमनं कुर्वन् स इन्द्रः प्रविशन्तं स्वगृहे प्रवेशं कुर्वन्तं देवदानवदुर्धर्षं तत्र हेतुः तपोबलसमन्वितं महामुनिं गौतमं संददर्श । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०–गौतममिति श्लोकद्वयम्। अथ उटजान्निष्क्रमणकाल एव परिक्लिन्नं स्नात्वागतमित्यर्थः। तत्र आश्रमे॥२४॥२५॥

रा० टी०–तीर्थेति । तीर्थोदकपरिक्लिन्नमनलमिव दीप्यमानं गृहीतसमिधं सकुशं कुशसहितं मुनिपुंगवं मुनिश्रेष्ठं गौतमं तत्र गौतमाश्रमे सुरपतिरिन्द्रो दृष्ट्वा त्रस्तः अत एव विषण्णवदनः उदासीनमुखोऽभवत् ॥ २५ ॥ २६ ॥ २७ ॥

गो० टी०–दृष्ट्वेत्यर्धम् । विवर्णवदनः शुष्कमुखः ॥२६॥

रा० टी०–अथेति । अथ इन्द्रोदासीनमुखभवनानन्तरं मुनिवेषधरं दुर्वृत्तं निषिद्धवृत्तिमन्तं सहस्राक्षं वृत्तसंपन्नः मुनिः गौतमो रोषाद्वचनमब्रवीत् ॥ २८ ॥

गो० टी०–अथेति । मुनिवेषधरं स्ववेषधरम् ॥ २७ ॥

२७–२९ ] ति० टी०–मम गौतमस्य। कृतवानसि मद्भार्याभोगरूपमकार्यम् । तस्माद्विफलो विगतवृषणः ॥ २७–२९ ॥

रा० टी०–तद्वचनमेवाह–ममेति । हे दुर्मते ! मम रूपं समास्थाय आश्रित्य यस्मादकर्तव्यमिदं त्वं कृतवानसि अतः विफलः वृषणरहितस्त्वं भविष्यसि ॥ २९ ॥

गो० टी०–ममेति । स्वभार्यासंगमस्य दुःशीलत्वेनावाच्यत्वादिदमित्याह विफलः विगतवृषणः 'लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्' इति निघण्टुः ॥ २८ ॥

रा० टी०–गौतमेनेति । सरोषेण रोषसहितेन महात्मना गौतमेन एवमुक्तप्रकारेण उक्तस्य सहस्राक्षस्य वृषणौ तत्क्षणात् भूमौ पेततुः। एतेन तस्य पुंस्त्वं विनष्टमिति सूचितम् ॥ ३० ॥

गो० टी०–गौतमेति ॥ २९ ॥

रा० टी०–तथेति । शक्रमेवं शप्त्वा तथा तेन प्रकारेणैव सापराधां भार्यामपि शप्तवान् । शापस्वरूपमाह–इह अस्मिन् मिथिलोपवने एव बहूनि वर्षसहस्राणि त्वं निवत्स्यसि । चशब्दावेवार्थौ वैशब्द *एवमर्थकः॥ ३१ ॥

गो० टी०–तथेति ॥ ३० ॥

३० ] ति० टी०–शापस्वरूपम्–वातभक्षेत्यादि । तप्यन्ती स्वकृताकार्यस्मरणेन पीडिता। पुराणादिप्रसिद्धशिलारूपप्राप्तिशापस्तु कल्पान्तरीण इति न विरोधः । अत्र शिलारूपत्वे तात्पर्यकल्पने वातभक्षेत्यनेन विरोधः स्पष्ट एवेति केचित् वस्तुतस्तु अदृश्येत्यस्य स्वरूपेणादृश्या शिलाप्रतिमारूपेण सर्वैदृश्येत्यर्थः। न च तावता चैतन्यहानिरिति क्षुधादिपीडा स्यादेवेत्यतो वातभक्षा तदतिरिक्ताहाराभावाच्च निराहारा तप्यन्ती स्वकर्मणेति शेषः । तादृश्यापि भस्मशायिनी न तु स्थिता इति न कश्चिद्विरोधः । इन्द्रशापोऽप्युपलक्षणमत्रानन्तभगवतः शापस्य । तदुक्तं पाद्मे—'शापदग्धा पुरा भर्त्रा राम शक्रापराधतः । अहल्याख्या शिला जज्ञे शतलिङ्गः कृतः स्वराट् ॥' इति । शिला तत्प्रतिमाकारा । शतशब्दोऽनन्तवाची । लिङ्गशब्देन भगाकारं चिह्नम् । स्वराडिन्द्रः ॥ ३० ॥

रा० टी०–सप्रकारं निवसनमेवाह–वायुभक्षेति । वायुमेव भक्षयति सा अत एव निराहारा वाय्वाहारातिरिक्ताहारविवर्जिता तप्यन्ती स्वापराधजनितसंतापमनुभवन्ती भस्मशा-

१ विवर्णेति गो. पाठः । २ सरोषेणेति गो. रा. पाठः । ३ अहल्यामपीति गो. पाठः । ४ त्वं निवत्स्यसीति गो.रा. पाठः । ५ वायुभक्षेति गो. रा. पाठः । ६ निवत्स्यसीति गो. पाठः । * एवार्थक इति भाति ।

यदा त्वेतद्वनं घोरं रामो दशरथात्मजः । आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ ३१ ॥
तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता । मत्सकाशं मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ ३२ ॥
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् । इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

निर्वृषणत्वात्त्रस्तेनेन्द्रेण प्रेरितैर्देवैः प्रार्थितेषु पितृदेवेष्वग्नेर्वचसा देवैरिन्द्रे मेषवृषणसंयोजनम्, विश्वामित्रप्रेरणयाऽऽश्रमप्रवेशिनो रामस्य दर्शनात्प्राप्तदिव्यरूपाया अहल्याया रामलक्ष्मणकृतपादाभिवन्दनं गौतमाहल्याभ्यां कृतं रामाराधनं देवैश्चाहल्याया साधुसाध्विति प्रशंसनम् ।

अफलस्तु ततः शक्रो देवानग्निपुरोगमान् । अब्रवीत्त्रस्तनयनः सिद्धगन्धर्वचारणान् ॥ १ ॥

यिनी भस्मशयनशीला सर्वभूतानामदृश्या अस्मिन् आश्रमे त्वं वसिष्यसि वत्स्यसि ॥ ३२ ॥

गो० टी०—कथं निवासमात्रस्य शापत्वमिति तद्विशिनोति—वायुभक्षेति । निराहारा अन्नपानादिरहिता तप्यन्ती तप्यमाना भस्मशायिनी भस्मशयना अत्र बुद्धिपूर्वकव्यभिचारस्य विधीयमानं प्रायश्चित्तं शापापदेशेनोच्यते एवं व्यक्ततया वाल्मीकिवचने स्थिते शैली भवेति शापो रामपादस्पर्शात् शिलात्वमुक्तिरिति पुराणकथा कल्पान्तरवृत्तमनुसृत्येति बोध्यम् ॥ ३१ ॥

३१ ] ति० टी०—शापान्तमाह—यदेति । घोरमित्यनेन मुनिराहित्यसूचनम् । रामो यदागमिष्यति तदागमनकाले जायमानचरणविन्यासेनानायासतस्तत्पादस्पर्शात्पूता व्यभिचारकृतपापनाशेन पवित्रा भविष्यसि पावित्र्येण च तपस्विनां दृश्या भविष्यसि ॥ ३१ ॥

रा० टी०—शापावधिं कुर्वन्नाह—यदेति । दुर्धर्षः दशरथात्मजः घोरमेतद्वनं यदा आगमिष्यति तदैव त्वं पूता भविष्यसि । चशब्द एवार्थे ॥ ३३ ॥

गो० टी०—यदेति । पूता भविष्यसि तत्पादपरागस्पर्शादिति भावः । एतेन बहुवर्षप्रायश्चित्तकरणमपि भगवत्पादरेणुस्पर्शस्य कलां नार्हतीत्युक्तम् ॥ ३२ ॥

३२–३३ ] ति० टी०—ततो मत्सकाशं मत्सांनिध्यं प्राप्ता स्वं वपुः पूर्ववत्सर्वदृश्यं भस्मनानावृतं धारयिष्यसि प्राप्स्यसीत्यर्थः । इतरत्स्पष्टम् । कतककारस्तु—'यदा तु' इत्यादिशापान्तप्रतिपादकं 'स्वं वपुर्धारयिष्यसि' इत्यन्तं श्लोकद्वयं प्रक्षिप्तमित्याह । 'एवमुक्त्वा' इत्यादिसार्धश्लोकस्तु प्रामाणिक एव । एवं च द्वात्रिंशच्छ्लोका एवात्रेत्याहुः ॥ ३२–३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रा० टी०—तस्येति । हे दुर्वृत्ते ! तस्य रामस्य आतिथ्येन लोभमोहविवर्जिता मुदा युक्ता सती त्वं मत्सकाशं मम सकाशः सामीप्यं यस्मात् मत्समीपगमनयोग्यमित्यर्थः । स्वं वपुर्धारयिष्यसि । अत्र प्रार्थनामन्तरेणानुग्रहवचनोक्त्या मुनेर्दयालुत्वं व्यक्तम् ॥ ३४ ॥

गो० टी०—पूतत्वेऽपि पूर्वरूपप्राप्तिस्तत्पादपूजां विना न संभवतीत्याह—तस्येति । मत्सकाशे मत्समीपे स्थितेति शेषः । स्वं वपुः दृश्यं वपुः । केचिदिदं श्लोकद्वयं प्रक्षिप्तमित्याहुः तन्न स्मरन्ती गौतमवच इत्याद्युत्तरसर्गवचनविरोधात् ॥ ३३ ॥

रा० टी०—एवमिति । महातेजा महातपा गौतमः दुष्टचारिणीमहल्यामेवमुक्त्वा इममाश्रममुत्सृज्य त्यक्त्वा सिद्धचारणसेविते रम्ये हिमवच्छिखरे तपस्तेपे । सार्धश्लोक एकान्वयी॥३५॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०—एवमिति । सार्धश्लोकः । तपस्तेपे तच्छापकृतपापप्रायश्चित्तार्थम् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१ ] ति० टी०—धर्मधुरंधरस्यापि शक्रस्याधर्मे प्रवृत्तौ बीजं दर्शयितुमाह—अफल इति । अवृषण इत्यर्थः । त्रस्तेति त्रासेन स्वकारणं दैन्यं व्यज्यते ॥ १ ॥

रा० टी०—प्राप्तशापौत्तरकालिकमिन्द्रवृत्तमाह—अफल इत्यादिभिः । ततः प्राप्तगौतमशापानन्तरमेव अफलः शापेन वृषणरहितः त्रस्तवदनः शक्रः अग्निपुरोधसः अग्निः पुरोधाः अग्रे गन्ता येषां तान् सर्षिसंघान् ऋषिसंघसहितान् सचारणान् चारणसहितान् देवान् अब्रवीत् । तुशब्द एवार्थे ॥ १ ॥

१ चैतद्वनमिति गो. च तद्वनमिति रा. पाठः । २ सकाशे इति गो. पाठः । ३ पुरोधस इति गो. रा. पाठः । ४ वदनः सर्षिसंघान्सचारणानिति गो. रा. पाठः ।

कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥ २ ॥
अफलोऽस्मि कृतस्तेन क्रोधात्सा च निराकृता । शापमोक्षेण महता तपोऽस्यापहृतं मया ॥ ३ ॥
तन्मां सुरवराः सर्वे सर्षिसंघाः सचारणाः । सुरकार्यकरं यूयं सफलं कर्तुमर्हथ ॥ ४ ॥
शतक्रतोवचः श्रुत्वा देवाः साग्निपुरोगमाः । पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः ॥ ५ ॥
अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः । मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छत ॥ ६ ॥
अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति । भवतां हर्षणार्थं च ये च दास्यन्ति मानवाः ॥
अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम् ॥ ॥ ७ ॥

गो० टी०–अनयोर्द्वयोः शापयोरेकः पूर्वमेव मुक्तः अपरस्त्वया मोचनीय इत्याशयेनाह एकोनपञ्चाशे–अफल इत्यादि । अग्निपुरोधसः अग्निपुरोगमान् । त्रस्तवदनः त्रस्तशब्देन तत्कार्यं दैन्यमुच्यते ॥ १ ॥

२ ] ति० टी०–सुरकार्यमिति अन्यथा ह्युग्रतपसा सकलदेवस्थानापहारस्तेन कृतः स्यादिति भावः ॥ २ ॥

रा० टी०–तद्वचनमेवाह–कुर्वतेति । महात्मनः गौतमस्य तपसो विघ्नं कुर्वता मया गौतमस्य क्रोधमुत्पाद्य इदं तपोध्वंसनरूपं सुरकार्यं कृतम् । एतेन यदि तपोध्वंसो न स्यात्तर्हि तपोबलेन देवलोकं गौतमो गृह्णीयादिति निश्चयो ध्वनितः ॥ २ ॥

गो० टी०–कुर्वतेति । महात्मनः गौतमस्य तपसः अस्मत्पदच्यवनकारणस्य विघ्नं क्रोधमुत्पाद्य तस्य क्रोधजननमुखेन कुर्वता मया इदं गौतमतपोभङ्गरूपं सुरकार्यं कृतं सर्वदेवपदच्यवनार्हं तपो गौतमेन कृतं तस्य तपोनाशकमहाक्रोधोत्पादनाय तद्भार्यया तु मया व्यभिचारः कृत इत्यर्थः ॥ २ ॥

३ ] ति० टी०–साहल्या दुष्टचारित्रेति निराकृतोक्तशापपूर्वं त्यक्ता । एवमपि सुरकार्यनिष्पत्तिः कथं तत्राह–शापेति । स्वस्मिन्गौतमकर्तृकशापमोक्षणेनास्य तपो मया हृतम् । महतः शापेन विना न तपोव्यय इति भावः । तपोव्ययसंपादकक्रोधोत्पादनमेव कार्यं मया कृतमिति तात्पर्यम् ॥ ३ ॥

रा० टी०–क्रोधोत्पत्त्या किं कृतमित्यत आह–अफल इति । तेन मुनिना क्रोधान्महता शापमोक्षेणाहमफलः वृषणरहितः कृतोऽस्मि सा अहल्या च निराकृता अतः अस्य मुनेस्तपो मयाऽपहृतं क्रोधोत्पादनद्वारा तत्तपो ध्वंसितमित्यर्थः । क्रोधादयस्तपोनाशकत्वेन स्मृत्यादौ प्रसिद्धाः ॥ ३ ॥

गो० टी०–अफल इति । तेन गौतमेन सा अहल्या निराकृता शापमोक्षपूर्वकं त्यक्ता शापमोक्षेण मयि अहल्यायां च शापदानेन ॥ ३ ॥

४ ] ति० टी०–सफलं मां सवृषणम् । सर्वे इत्यस्य वारद्वयपाठे हे सर्वे सुरवराः सर्वे यूयमित्यन्वयो ज्ञेयः परत्र 'यूयम्' इत्येव पाठः प्रायेण ॥ ४ ॥

रा० टी०–तस्मादिति । हे सुरवराः ! तस्मात् भवत्साहाय्यकारित्वाद्धेतोः सर्षिसंघाः ऋषिसंघसहिताः सचारणाः चारणसहिताः सर्वे यूयं सुरसाह्यकरं सुरसाहाय्यकर्तारं मां सफलं वृषणसहितं कर्तुमर्हथ । क्वचित् 'सुरकार्यकरं यूयम्' इति पाठः ॥४॥

गो० टी०–तस्मादिति । हे सर्वे सुरवराः ! इतिसंबोधनम् द्वितीयसर्वशब्दस्य सर्वे यूयमिति संबन्धः । साह्यं साहाय्यं सफलं मामिति शेषः ॥ ४ ॥

५ ] ति० टी०–पितृदेवाः कव्यवाहनादयस्तानुपेत्य हव्यवाहनाग्निमुखेनाहुः 'अग्नेस्तु वचनं श्रुत्वा' इति वक्ष्यमाणत्वात् ॥ ५ ॥

रा० टी०–शतक्रतोरिति । साग्निपुरोगमाः अग्निपुरोगमसहिताः मरुद्गणैः सह सर्वे देवाः शतक्रतोः इन्द्रस्य वचः श्रुत्वा पितृदेवान्कव्यवाहनादीन् उपेत्य प्राप्य आहुः ॥ ५ ॥

गो० टी०–शतक्रतोरिति । पितृदेवान् अग्निकव्यवाहनादीन् ॥ ५ ॥

६ ] ति० टी०–अयं मेषो यो भवतां हविष्ट्वेन कल्पितः । गृह्य गृहीत्वा ॥ ६ ॥

रा० टी०–तद्वचनमेवाह–अयमिति । शक्रः इन्द्रः अवृषणः कृतः शापेनेति शेषः । अयं युष्मदीयः मेषस्तु सवृषणोऽस्ति अतः अस्य मेषस्य वृषणौ गृह्य गृहीत्वा शक्राय आशु शीघ्रं प्रयच्छत । एतेनैतद्वृषणाभ्यामेवायं वृषणवान्भविष्यतीति ध्वनितम्॥६॥

गो० टी०–अयमिति । अयमिदानीं यज्ञे युष्मभ्यं नियुज्यमानो मेषः । गृह्य गृहीत्वा ॥ ६ ॥

७ ] ति० टी०–अफलस्त्विवाति । नन्विदमयुक्तम् नहि मेषा अवृषणा दृश्यन्त इति चेन्न, भवदुद्देशेन कृतो हविष्ट्वेन कल्पितो योऽफलः षण्डो मेषः । यद्वा वृषणभिन्नो यो मेषो मेषावयवो भवद्धविष्ट्वेन कल्पितः स भवतां परां तुष्टिं दास्यतीत्यन्वयात् । ये वाफलं मेषं भवतां हर्षणार्थं तोषाय भवद्भ्यो दास्यन्ति तेषामक्षयं फलं यूयं दास्यथेत्यन्वयः ॥ ७ ॥

रा० टी०–ननु वृषणदाने अस्मत्तुष्टिवैकल्यं स्यादित्यत आहुः–अफल इति । अफल एव कृतः संपादितो मेषः परां तुष्टिं प्रदास्यति एव भवद्भ्य इति शेषः । अतः ये मानवाः भवतां हर्षणार्थमफलमेषं दास्यन्ति तेषामेव अक्षयं विनाशरहितं पुष्कलं फलं यूयं दास्यथ । तुशब्दः चशब्दौ एवार्थाः हिर्हेतौ ॥७॥

१ तस्मादिति गो. रा. पाठः । २ साह्यकरमिति गो. रा. पाठः । ३ हर्षणार्थे इति गो. पाठः । ४ इदमर्धं गो. नास्ति ।

अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः। उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ ८ ॥
तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः। अफलान्भुञ्जते मेषान्फलैस्तेषामयोजयन् ॥ ९ ॥
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव। गौतमस्य प्रभावेण तपसा च महात्मनः ॥ १० ॥
तदागच्छ महातेज आश्रमं पुण्यकर्मणः। तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ ११ ॥
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः। विश्वामित्रं पुरस्कृत्य आश्रमं प्रविवेश ह ॥ १२ ॥
ददर्श च महाभागां तपसा द्योतितप्रभाम्। लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १३ ॥
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव। धूमेनाभिपरीताङ्गीं दीप्तामग्निशिखामिव ॥ १४ ॥

---

गो० टी०–तद्दानेऽस्मत्तुष्टिवैकल्यं स्यादित्यत्राह–अफल इत्यर्धम्। प्रदास्यतीत्यनुगृह्णन्ति ॥ ७ ॥ दातॄणामपि फलन्यूनता न भवत्वित्यनुगृह्णन्ति भवतामिति। दास्यन्ति अवृषणमिति शेषः ॥ ८ ॥

८ ] ति० टी०–समागता मिलिताः ॥ ८ ॥

रा० टी०–अग्नेरिति। अग्नेर्वचनं श्रुत्वैव समागता कृतसंमतयः पितृदेवाः मेषवृषणौ उत्पाट्य सहस्राक्षे न्यवेशयन् इचितदेशे नियोजयामासुः ॥ ८ ॥

गो० टी०–अग्नेरिति। अग्निपुरःसराणामित्यर्थः। मेषस्य तदा यूपे नियुक्तस्य मेषस्य वृषणौ ॥ ९ ॥

९ ] ति० टी०–अफलान्षण्ढांस्तदंशरहितान्वा यतस्तेषां फलैः फलाभ्यां वृषणाभ्यामिन्द्रमयोजयन् ॥ ९ ॥

रा० टी०–तदेति। हे काकुत्स्थ! तदाप्रभृति मेषवृषणदानकालादारभ्य समागताः पितृदेवाः अफलान्वृषणरहितान् मेषान् भुञ्जते तेषां वृषणरहितमेषदातॄणां फलैः सवृषणमेषदानोचितपुण्यैः अयोजयन् योजयन्ते लङ्पात्तभूतत्वस्याविवक्षा॥९॥

गो० टी०–तदेति। तदाप्रभृति वृषणदानात्प्रभृति दत्तसजातीयत्वाद्वृषणौ विना मेषान् भुञ्जते तेषां सवृषणानां फलैः सवृषणमेषदानफलैरित्यर्थः अयोजयन् दातॄनिति शेषः ॥१०॥

१० ] ति० टी०–तदाप्रभृति ततो हेतोरिन्द्रो मेषवृषण इत्यन्वयः। तपसा प्रभावेण तपःकृतप्रभावेण च स्वापचारेण च ॥ १० ॥

रा० टी०–इन्द्र इति। हे राघव! तदाप्रभृति महात्मनः तापसस्य[1] गौतमस्य प्रभावेण इन्द्रस्तु मेषवृषण आसीदिति शेषः। 'तपसा च' इति भाट्टपाठः ॥ १० ॥

गो० टी०–इन्द्रस्त्विति। गौतमस्य तपसः प्रभावेण वृषणहान्या मेषवृषणोऽभूदित्यर्थः ॥ ११ ॥

११-१२ ] ति० टी०–महातेज इति रामसंबोधनम्। पुण्यकर्मणो गौतमस्य। ननु ताटकयेव घोररूपयाहल्ययावष्टब्धमाश्रमं कथं गच्छेयमत आह–देवरूपिणीमिति। शापस्यैतदवधिकत्वात् अथ त्वत्पादस्पर्शनान्मुक्तशापतया देवरूपिणीमित्यर्थः। एनां तारय भर्तृप्रत्यापत्तिफलकमातिथ्यं गृहीत्वा भर्तृप्रापणेनैनामनुगृहाण ॥ ११ ॥ १२ ॥

रा० टी०–शापवृत्तान्तं संवर्ण्य प्रकृतमाह–तदिति। यस्माद्भवतो गमनमेव अहल्यायाः कल्याणहेतुस्तत्तस्मात् हे महातेजः! पुण्यकर्मणः गौतमस्य आश्रममागच्छ महाभागां देवरूपिणीमेनामहल्यां तारय ॥ ११ ॥

गो० टी०–तदिति। तत् त्वदागमनावधित्वादहल्याशापस्येत्यर्थः ॥ १२ ॥

रा० टी०–विश्वामित्रेति। सहलक्ष्मणः लक्ष्मणसहितः राघवः विश्वामित्रवचः श्रुत्वैव विश्वामित्रं पुरस्कृत्य आश्रमं प्रविवेश। हशब्द एवार्थे ॥ १२ ॥

गो० टी०–विश्वामित्रेति ॥ १३ ॥

१३ ] ति० टी०–ददर्शेति। आश्रमप्रवेशकालेऽनायासतः स्वचरणस्पर्शाद्व्यभिचारकृतपापनाशेन शापनिवृत्त्या शापवशात्सुरासुरैः समागम्य मिलित्वापि सर्वलोकैर्दुर्निरीक्ष्यां विश्वामित्रो यथावद्देवरूपिणीमिति तथा ददर्शेत्यर्थः। तदुक्तम्–तपसा द्योतितप्रभामिति। एवं दर्शनं तत्समये रामलक्ष्मणविश्वामित्राणामेव। सर्वदृश्यत्वं तु भगवदातिथ्यकार्यमिति बोध्यम्॥१३॥

रा० टी०–ददर्शेति। महाभागां रामागमनेनानुमितात्यन्तभागविशिष्टां तपसैव द्योतितप्रभां लोकैः इहलोकस्थजनैः सुरासुरैरपि दुर्निरीक्षां[2] शापवशेन द्रष्टुमशक्याम्। चशब्द एवार्थे॥१३॥

गो० टी०–रामसंनिधानमात्रेणाहल्या मुक्तशापा स्वरूपं प्राप्तेत्याह–ददर्श चेति। सार्धश्लोकद्वयम्। तपसा वाय्वाहारत्वादितपसा द्योतितप्रभामतिशयितप्रभामत एव लोकैर्मानुषैः सुरासुरैरपि समागम्य समीपमागत्य दुर्निरीक्षां दिव्याम् अतिमानुषरूपां मायामयीमिव मायानिर्मितामिव स्थितां वृक्षलताकुसुमान्तर्वर्तित्वेन सतुषारावरणां साभ्रां चन्द्रप्रभामिव[3] स्थिताम्। आवृतशब्द आवरणार्थकः भावे निष्ठा स इति भिन्नं पदं वा मध्य इति अक्रौर्यदुर्निरीक्षत्वाभ्यां प्रतिबिम्बसूर्यप्रभातुल्याम् ॥ १४ ॥ १५ ॥

१४ ] ति० टी०–प्रयत्नादित्यादिना दिव्यरूपत्वमुक्तम्। रामादेरपि दर्शनं नात्यन्तस्पष्टतया किंत्वेवंरूपेण। भर्तृसंतापक-

---

१ तापसस्येति रा. पाठः। २ दुर्निरीक्षामिति गो. रा. पाठः। ३ सतुषारावृतां साभ्रांपूर्णचन्द्रप्रभामिवेति गो. पाठः।

सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव । मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १५ ॥
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह । त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् ॥
शापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ ॥ १६ ॥
राघवौ तु तदा तस्याः पादौ जगृहतुर्मुदा । स्मरन्ती गौतमवचः प्रतिजग्राह सा हि तौ ॥ १७ ॥
पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता । प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १८ ॥
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः । गन्धर्वाप्सरसां चैव महानासीत्समुत्सवः ॥ १९ ॥

---

रस्य भर्तृसांनिध्यस्य शापान्तकरणस्याभावादित्याह—धूमेनेति। धूमेनाभिपरीतानि व्याप्तान्यङ्गानि यस्याः सा ॥ १४ ॥

रा० टी०—धात्रा ब्रह्मणा प्रयत्नात् अतिप्रयत्नतः निर्मितां दिव्यामेतल्लोकविलक्षणामत एव मायामयीमिव मायामयीसदृशीं धूमेनाभिपरीताङ्गीं धूमावृतशरीरां दीप्तां प्रज्वलितामग्निशिखामिव अग्निशिखासदृशीं सतुषारावृतां तुषारावरणसहितां साभ्रामभ्रसहितां पूर्णचन्द्रप्रभामिव पूर्णचन्द्रप्रभासदृशीमम्भसो जलस्य मध्ये दीप्तां दुराधर्षां सूर्यप्रभामिव सूर्यप्रभासदृशीमहल्यां ददर्श। श्लोकत्रयमेकान्वयि। आवृतशब्दो भावनिष्ठान्तः१४—१५

१५ ] ति० टी०—उपमात्रयं भस्मावृतत्वेन । अम्भसो लक्षणया तद्युक्तमेघस्य मध्यस्थां रविप्रभामिव ददर्श । दुराधर्षां स्प्रष्टुमशक्याम् ॥ १५ ॥

१६ ] ति० टी०—तथादर्शने हेतुमाह—सा हीति। त्रयाणामपि लोकानां दुर्निरीक्ष्यत्वशापवशाद्रामादीनामप्येवं दर्शनविषया जाता अन्येषां त्वदृश्यैव रामादीनां तु दुःखदृश्येत्यर्थः। शापस्यान्तं तदन्तस्यावधिकालं प्राप्य तेषां रामादीनां दर्शनं पूर्वोक्तप्रकारेण दर्शनविषयत्वं प्राप्तेत्यर्थः। तथा च पाद्मे—'गच्छतस्तस्य रामस्य पादस्पर्शान्महाशिला । काचिद्योषाभवत्सोऽपि विस्मितो मुनिरब्रवीत् ॥' शिला तत्प्रतिमाकारा सोऽपि रामः । विस्मितः स एवासीत् । तथाभूतं तं दृष्ट्वा मुनिरवददित्यर्थः । 'शापदग्धा पुरा भर्त्रा राम शक्रापराधतः । अहल्याख्या शिला जज्ञे शतलिङ्गः कृतः स्वराट् ॥ त्वदङ्घ्रिस्पर्शनात्तस्यै शापान्तं प्राह गौतमः । तस्मादियं ते पादाब्जस्पर्शाच्छुद्धाभवत्प्रभो ॥' इति । यदुद्धारार्थं त्वं मयेहानीतः सैवेति शेषः । एवं मदुक्तरीत्या सर्वेषामविरोधे संभवति कल्पान्तरपरत्वेनाविरोधवर्णनं कतकाद्युक्तं चिन्त्यम् । यदपि 'तेन धूमेन' इत्यादिसार्धश्लोके तामेव दुर्निरीक्ष्यामिति शेषं पूरयित्वा दुर्निरीक्ष्यत्वे हेतुमाह—सा हीति । तेषां दर्शनमित्यत्र तेषां त्रयाणां लोकानामिति व्याख्यातं तदपि क्लिष्टम् ॥ १६ ॥

रा० टी०—सेति । या अहल्या गौतमवाक्येन गौतमशापेनैव त्रयाणां लोकानां रामस्य दर्शनात् यावत् पूर्वं दुर्निरीक्ष्या बभूव सा अहल्या शापस्यान्तमवसानमुपागम्यैव तेषां त्रयाणां लोकानां दर्शनं दृष्टिपथमागता प्राप्ता ह प्रसिद्धमेतत् । अपिशब्दावेवार्थौ । सार्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—अदृश्या सा कथमिदानीं दृश्यासीदित्यत्राह सार्धेन—सा हीत्यादि ॥ १६ ॥

१७ ] ति० टी०—तदा स्वपदस्पर्शमात्रेण शिलारूपतापरित्यागे गौतमवचः स्मरन्ती मदाश्रमप्राप्तराघवपूजया पुनर्मत्संबन्ध इत्येवं तद्वचः स्मरन्तीत्यर्थः । स्वशिलारूपतापरित्यागमात्रेण तु तस्मिन्रामत्वनिश्चयोऽस्याः तौ रामपादौ प्रतिजग्राह स्पृष्ट्वा प्रणनाम । यत्तु तौ रामलक्ष्मणौ प्रतिजग्राह पूज्यत्वबुद्धिमकरोदिति तन्न अग्रे काकुत्स्थ इत्येकवचनप्रयोगात् ॥१७॥

रा० टी०—राघवाविति । अतिथी अतिथित्वरूपेण प्राप्तौ राघवौ रामलक्ष्मणौ तस्याः गौतमपत्न्याः पादौ जगृहतुः । तदा तु रामकर्तृकपादग्रहणसमये एव गौतमवचस्तस्यातिथ्येन दुर्मेधे इत्यादिगौतमोक्तं स्मरन्ती सती अहल्या तौ रामलक्ष्मणौ प्रतिजग्राह अतिथ्युचितपूजनीयत्वेन स्वीचकार । तुहिशब्दौ एवार्थे ॥ १७ ॥

गो० टी०—राघवौ त्विति । तस्याः वृद्धमुनिपत्न्याः गौतमवचः 'तस्यातिथ्येन दुर्वृत्ते' इत्यादिकं प्रतिजग्राह पूजनीयत्वेनेति शेषः ॥ १७ ॥

१८ ] ति० टी०—सुसमाहिताऽप्रमत्ता । काकुत्स्थो रामः तस्यैव मुख्यतया पूजनात् ॥ १८ ॥

रा० टी०—अहल्याकर्तृकपूजनप्रकारं वर्णयन्नाह—पाद्यमिति । सुसमाहिता अत्येकाग्रचित्ता अहल्या पाद्यमर्घ्यं तथा अन्यदपि आतिथ्यमतिथिहितं विधिदृष्टेन वेदबोधितेन कर्मणा चकार । काकुत्स्थः लक्ष्मणसहितरामः प्रतिजग्राह समर्पितं पाद्यादिकं स्वीचकार ॥ १८ ॥

गो० टी०—पाद्यमिति । विधिदृष्टेन शास्त्रदृष्टेन कर्मणा प्रकारेण पाद्यादिकं चकारेत्यन्वयः ॥ १८ ॥

१९ ] ति० टी०—देवदुन्दुभिनिःस्वनैः सह पुष्पवृष्टिरासीत् । रामस्याहल्यायाश्चेत्यर्थः ॥ १९ ॥

रा० टी०—पुष्पेति । देवदुन्दुभिनिस्वनैः देववादितदुन्दुभिशब्दैः साकमेव महती पुष्पवृष्टिरासीत् गन्धर्वाप्सरसां महान् गीतनृत्यादिनोत्कर्षतां प्राप्तः समागमश्च आसीत् । अपिशब्द एवार्थे ॥ १९ ॥

गो० टी०—पुष्पेति । रामस्येति शेषः । सम्यगागमः समागमः नृत्यगीतादिकमिति यावत् ॥ १९ ॥

---

१ सापीति रा. पाठः । २ दर्शनादिति रा. पाठः । ३ त्वतिथी इति गो. रा. पाठः । ४ तदेति गो. रा. पाठः । ५ चेति गो. पाठः । ६ चापीति गो. रा. पाठः । ७ समागम इति गो. रा. पाठः ।

साधु साध्विति देवास्तामहल्यां समपूजयन् । तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २० ॥
गौतमोऽपि[1] महातेजा अहल्यासहितः सुखी । रामं संपूज्य विधिवत्तपस्तेपे महातपाः ॥ २१ ॥
रामोऽपि परमां पूजां गौतमस्य महामुनेः । सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

## पञ्चाशः सर्गः ।

रामलक्ष्मणसहितस्य विश्वामित्रस्यागमनं श्रुत्वा जनकस्य शतानन्दं पुरस्कृत्य प्रत्युद्गमनमातिथिसत्कारेण विश्वामित्रपूजनं, जनकं प्रति रामवृत्तान्तकथनपूर्वकं विश्वामित्रस्य धनुर्दिदृक्षाकथनं च ।

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह । विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः । साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥
बहूनीह सहस्राणि नानादेशनिवासिनाम् । ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३ ॥
ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः । देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥ ४ ॥

२० ] ति० टी०—रामपूजया निष्पापत्वादहल्यायाः पूजा । तपोबलविशुद्धाङ्गीं तद्बललब्धरामस्पर्शेन शुद्धाङ्गीमत एव गौतमस्य वशां तद्गतचित्तामत एव पूर्वं परत्र काले शरीरेणापि तदनुगाम् ॥ २० ॥

रा० टी०—साध्विति । तपोबलविशुद्धाङ्गीमत एव गौतमस्य वशानुगां गौतमस्य वशः अनुगः अनुगमनं यस्यास्तां गौतमानुगमनशीलामित्यर्थः । तां रामं पूजयन्तीमहल्यां देवाः साधु साधु इति समपूजयन् प्राशंसन् । गौतमस्य वशानुगामित्यनेन गौतमोऽपि तदानीं तत्र समागत इति ध्वनितमेतेन गौतमस्य रामविषयप्रीत्यतिशयः सूचितः ॥ २० ॥

गो० टी०—साध्विति । गौतमस्य वशानुगामित्यनेन गौतमस्तदा रामागमनं विदित्वा समागत इत्यवगम्यते ॥२०॥

२१–२२ ] ति० टी०—अहल्यासहितः सुखीत्यनेन योगबलाद्रामागमनं ज्ञात्वा तद्बलादेव झटिति तदाश्रमप्राप्तिर्गौतमस्येति बोध्यम् ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

रा० टी०—गौतम इति । महातेजाः सुखी महायशाः गौतमः अहल्यासहितः सन्नेव रामं विधिवत्संपूज्य तपस्तेपे । हिशब्द एवार्थे ॥ २१ ॥

गो० टी०—गौतम इति । तेपे तत्रैवाश्रम इति शेषः ॥ २१ ॥

रा० टी०—राम इति । महात्मनः गौतमस्य सकाशात् समीपात् विधिवत् परमां पूजां प्राप्य रामोऽपि ततः मिथिलोपवनान्मिथिलां जगाम ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

गो० टी०—रामोऽपीति । ततः तस्माद्देशात् ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

१–२ ] ति० टी०—प्रागुत्तरामैशानीम् । ततो गौतमाश्रमात् ॥ १ ॥ २ ॥

रा० टी०—मिथिलोपवनाद्गमनानन्तरकालिकं वृत्तमाह—तत इत्यादिभिः । ततः गौतमाश्रमात् प्रागुत्तरामैशानीं दिशं गत्वा सौमित्रिणा सह रामः विश्वामित्रं पुरस्कृत्य यज्ञवाटं जनकयज्ञशालामुपागमत् ॥ १ ॥

गो० टी०—एवं रामस्य परमपावनत्वमुक्तम् । अथ तस्य सीताविवाहवृत्तान्तं प्रस्तौति श्रियः पतित्वं प्रतिपादयितुं पञ्चाशे—ततः प्रागित्यादि । प्राच्या उत्तरस्याश्च दिशोऽन्तराल यत्सा प्रागुत्तरा तामैशानीं दिशमित्यर्थः । ततः तस्मादाश्रमाद् यज्ञवाटं जनकस्येति शेषः ॥ १ ॥

रा० टी०—राम इति । सहलक्ष्मणो रामः मुनिशार्दूलं विश्वामित्रमुवाच तुशब्देनान्येऽपि तत्पार्श्ववर्तिनः मुनय ऊचुः । तद्वचनमेवाह—महात्मनः जनकस्य इयं यज्ञसमृद्धिः साध्वी । हि शब्दः इयमित्यर्थे ॥ २ ॥

गो० टी०—रामस्त्विति । यज्ञसमृद्धिः यज्ञसंभारसामग्री २

३ ] ति० टी०—बहूनीति । दृश्यन्त इति शेषः ॥ ३ ॥

रा० टी०—साध्वीत्वमेव बोधयन्नाह—बहूनीति । हे महाभाग ! वेदाध्ययनशालिनां नानादेशनिवासिनां ब्राह्मणानां बहूनि सहस्राणि शकटीशतसंकुलाः बहुशकटीव्याप्ताः ऋषिवाटाः ऋषिनिवासस्थानानि चेह दृश्यन्ते अतः हे ब्रह्मन् यत्र वयं वत्स्यामहे स देशः विधीयतां बोध्यताम् । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—तामेवाह—बहूनीति । ब्राह्मणानां सहस्राणीत्यन्वयः । दृश्यन्त इति वक्ष्यमाणमनुषज्यते ॥ ३ ॥

४ ] ति० टी०—शकटीशतमग्निहोत्रसंभारवाहकम् । ऋषिवाटा यज्ञार्थमागतानां साग्निहोत्रऋषीणां निवासाः । एवं नैबि-

१ ह्रीति गो. रा. पाठः । २ महायशा इति रा. पाठः । ३ महात्मन इति रा. पाठः ।

रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः । निवासमकरोद्देशे विविक्ते सलिलान्विते ॥ ५ ॥
विश्वामित्रमनुप्राप्तं श्रुत्वा नृपवरस्तदा । शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितः ॥ ६ ॥
ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् । प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥ ७ ॥
विश्वामित्राय धर्मेण ददौ धर्मपुरस्कृतम् । प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ॥ ८ ॥
पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् । स तांश्चार्थ मुनीन्पृष्ट्वा सोपाध्यायपुरोधसः ॥ ९ ॥
यथार्हमृषिभिः सर्वैः समागच्छत्प्रहृष्टवत् । अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ १० ॥
आसने भगवानास्तां सहैभिर्मुनिपुङ्गवैः । जनकस्य वचः श्रुत्वा निषसाद महामुनिः ॥ ११ ॥
पुरोधा ऋत्विजश्चैव राजा च सहमन्त्रिभिः । आसनेषु यथान्यायमुपविष्टाः समन्ततः ॥ १२ ॥

---

व्यात्त्वावासदेशविचारः । देश इत्यादि देशो निवासस्थानम् । विधीयतां विचार्यताम् ॥ ४ ॥

गो० टी०—ऋषीति । ऋषिवाटाः ऋषिनिवासाः विधीयतां कल्प्यतां बहुसंकुलत्वेनैवमुक्तम् ॥ ४ ॥

५–६ ] ति० टी०—विविक्ते सलिलान्वित इत्यनेनानुष्ठानसौकर्यम् ॥ ५ ॥ ६ ॥

रा० टी०—रामस्येति । महामुनिर्विश्वामित्रः रामस्य वचनं श्रुत्वा विविक्ते जनरहिते सलिलान्विते जलसमीपे देशे निवासमकरोत् ॥ ५ ॥

गो० टी०—रामस्येति । विविक्ते विजने पूते वा 'विविक्तौ पूतविजनौ' इत्यमरः । आयुते युक्ते यौतेर्मिश्रणार्थात् क्तः ॥ ५ ॥

रा० टी०—विश्वामित्रमिति । तदा विविक्तदेशनिवासोत्तरकाले अनुप्राप्तं विश्वामित्रं श्रुत्वा विनयेन समन्वितः स नृपतिर्जनकः अनिन्दितं पुरोहितं शतानन्दं पुरस्कृत्य सहसा प्रत्युज्जगाम । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—विश्वामित्रमिति सार्धश्लोकः । प्रत्युज्जगाम दीक्षितविमितप्रदेशसीमानमनतिलङ्घ्यन्नित्यर्थः ॥ ६ ॥

७ ] ति० टी०—ऋत्विजोऽपीत्यत्र पुरस्कृत्येत्यनुकर्षः ॥ ७ ॥

रा० टी०—ऋत्विज इति । सत्वराः त्वरायुक्ता महात्मानः ऋत्विजः धर्मेण धर्मोत्पादकविधिना मन्त्रपुरस्कृतमर्घ्यमादाय ग्राहयित्वा ददुर्जनकेन दापयामासुः । किंच ऋत्विजः अपिशब्देन जनकः अर्घ्यं गृहीत्वा ददुः ॥ ७ ॥

गो० टी०—ऋत्विज इति । अर्घ्यमित्यातिथ्यस्योपलक्षणं मन्त्रपुरस्कृतमित्यनेन मधुपर्ककरणमुच्यते ॥ ७ ॥

८ ] ति० टी०—धर्मेण शास्त्रमार्गेण ददौ अर्घ्यमिति शेषः । धर्मपुरस्कृतमित्यर्घ्यविशेषणम् ' महाजं वा महोक्षं वा श्रोत्रियायोपकल्पयेत् ' इति शास्त्रोक्तेन धर्मसाधनेन पुरस्कृतम् तत्सहितमिति यावत् ॥ ८ ॥

रा० टी०—प्रतीति । महात्मनः जनकस्य तां पूजां प्रतिगृह्य तुशब्देन ऋत्विजां पूजां प्रतिगृह्य राज्ञः कुशलं राष्ट्राद्युपद्रवराहित्यं यज्ञस्य निरामयं विघ्नराहित्यं च पप्रच्छ ॥ ८ ॥

गो० टी०—प्रतिगृह्येति । निरामयं निरुपप्लवत्वम् ॥ ८ ॥

९ ] ति० टी०—राज्ञः कुशलं निरामयं यज्ञस्य निरामयं कुशलं निर्विघ्नत्वमविकलत्वं वा । स विश्वामित्रस्तानर्घ्यदातॄन्पृष्ट्वा कुशलमिति शेषः ॥ ९ ॥

रा० टी०—स इति । अथ राजकुशलप्रश्नानन्तरं स विश्वामित्रः सोपाध्यायपुरोधसः तान्मुनीन् पृष्ट्वा कुशलमिति शेषः । प्रहृष्टवत् यथा स्यात्तथा सर्वैः ऋषिभिः सार्धं यथार्हं यथायोग्यं समागच्छत् आलिङ्गनमकरोत् ॥ ९ ॥

गो० टी०—स इति । तान् अर्घ्यदातॄन् सोपाध्यायपुरोधसः उपाध्याया ऋत्विजः पुरोधाः शतानन्दः तत्सहितांस्तान् कुशलं पृष्ट्वेत्यर्थः । सर्वैर्जनैः शतानन्दऋत्विगादिभिः प्रहृष्टवत् सहर्षमित्यर्थः । भावे निष्ठा यथान्यायं यथाक्रमं पृष्ट्वेन्वयः ॥ ९ ॥

१०–१२ ] ति० टी०—यथार्हं यथान्यायम् । प्रहृष्टवत्प्रहर्षवत् तोषसहितं यथा भवति तथेत्यर्थः । समागच्छत्संतोषसहितमालिङ्गनं यथा भवति तथा सर्वैः संगतो बभूवेत्यर्थः ॥ १०–१२ ॥

रा० टी०—अथेति । अथ कुशलप्रश्नानन्तरं मुनिश्रेष्ठं विश्वामित्रं कृताञ्जलिः प्रणयसूचकबद्धयुगलकरः राजा जनकः अभाषत । तद्भाषणमेवाह—हे भगवन् ! एभिः मुनिसत्तमैः सह आसने आस्ताम् ॥ १० ॥

गो० टी०—अथेति ॥ १० ॥

रा० टी०—जनकस्येति । महामुनिः विश्वामित्रः जनकस्य वचः श्रुत्वा निषसाद आसने इति शेषः । अर्धमेकान्वयि । पुरोधाः शतानन्दः ऋत्विजश्च मन्त्रिभिः सह राजा जनकश्च यथान्यायं समंततः विश्वामित्रस्य चतुर्दिक्षु एव आसनेषु उपविष्टाः अभवन्निति शेषः । नृपतिः स राजा जनकः तत्र तस्मिन् समाजे विश्वामित्रं दृष्ट्वा अब्रवीत् ॥ ११ ॥ १२ ॥

गो० टी०—जनकस्येति । राजा चेति विश्वामित्रवचनादित्यर्थसिद्धम् ॥ ११ ॥

---

१ निवेशमिति गो. पाठः । २ सलिलायुते इति गो. पाठः । ३ स नृपतिरिति गो. रा. पाठः । ४ अनिन्दितमिति गो. रा. पाठः । ५ अस्य पूर्वार्धपरार्धयोर्व्यत्यासः गो.रा. पुस्तकयोः । ६ सत्वरा इति रा. पाठः । ७ ददुर्मन्त्रपुरस्कृतमिति रा. पाठः । ८ अपीति गो. पाठः । ९ यथान्यायं तत इति गो. पाठः । १० सत्तमैरिति गो. रा. पाठः । ११ उपविष्टानिति गो. पाठः ।

दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् । अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १३ ॥
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगवः ॥ १४ ॥
यज्ञोपसदनं ब्रह्मन्प्राप्तोऽसि मुनिभिः सह । द्वादशाहं तु ब्रह्मर्षे दीक्षामाहुर्मनीषिणः ॥ १५ ॥
ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक । इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवचनस्तदा ॥ १६ ॥
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः । इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ १७ ॥
गजतुल्यगती वीरौ शार्दूलवृषभोपमौ । [ पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ ]
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ॥ १८ ॥
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ । कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ १९ ॥
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने । भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ॥ २० ॥
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः । काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ २१ ॥
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः । न्यवेदयदमेयात्मा पुत्रौ दशरथस्य तौ ॥ २२ ॥

---

गो० टी०–आसनेष्विति । उपविष्टान् तानिति शेषः ॥१२॥

१३–१४ ] ति० टी०–यज्ञसमृद्धिरङ्गवैकल्यराहित्यं साद्गुण्यं च । अत एव सफला कृता इष्टिरिति शेषः ॥१३॥१४॥

रा० टी०–तद्वचनमेवाह–अद्येत्यादिश्लोकत्रयेण । मे मम यज्ञसमृद्धिः दैवतैः सफला फलसहिता अद्य कृता । ननु तत्फलं कदा प्राप्स्यसीत्यत आह–मया अद्यैव भगवद्दर्शनात् यज्ञफलं प्राप्तं सर्वं वाक्यं सावधारणं भवतीतिन्यायेन एवकारलाभः एतेन स्वेप्सितयज्ञफलप्राप्तेरतिसांनिध्यं बोधितम् तेन तत्फलप्रापकशकुनविशेषो जात इति ध्वनितम् ॥ १३ ॥

गो० टी०–अद्येति । यज्ञसमृद्धिः समग्रता जातेति शेषः । सा दैवतैः सफला कृता च । तिष्ठतु यज्ञः भवद्दर्शनमेव यज्ञफलमित्याह–अद्य यज्ञफलमिति ॥ १३ ॥

रा० टी०–धन्य इति । हे मुनिपुंगव हे ब्रह्मन् ! यस्य मे यज्ञोपसदनं यज्ञशालासमीपं मुनिभिः सह त्वं प्राप्तोऽसि सोऽहं धन्योऽस्मि । तत्र हेतुः यतः अनुगृहीतोऽस्मि अनुग्रहमन्तरा अत्रागमनं न स्यादिति भावः ॥ १४ ॥

गो० टी०–धन्य इति ॥ १४ ॥

१५ ] ति० टी०–तत्र हेतुमाह–यज्ञोपसदनमिति । यज्ञस्थानम् । द्वादशाहं द्वादशदिनानि । दीक्षां कर्तव्यत्वेनाहुः । दीक्षायास्तावन्ति दिनान्यवशिष्टानि ऋत्विज आहुः ॥ १५ ॥

रा० टी०–द्वादशाहमिति । हे ब्रह्मर्षे ! मनीषिणः ऋत्विजः यज्ञस्य द्वादशाहं द्वादशदिनानि एव शेषमाहुस्ततस्तस्माद्धेतोः हे कौशिक ! भागार्थिनो देवान् द्रष्टुं त्वमर्हसि । तुशब्द एवार्थे ॥ १५ ॥

गो० टी०–द्वादशेति । द्वादश अहानि समाहृतानि द्वादशाहं "राजाहःसखिभ्यष्टच्" इति टच् "न संख्यादेः–" इत्यह्लादेशाभावः । द्वादश दिनान्यवशिष्टानि यज्ञस्येति मनीषिणो ऋत्विज आहुः ततः भागार्थिनो देवानिति द्वादशदिनान्ते सुत्याहोमो भविष्यतीत्यर्थः ॥ १५ ॥

१६ ] ति० टी०–विश्वामित्रस्य योगेन सर्वसामर्थ्यादाह–देवान्द्रष्टुमर्हसीति ॥ १६ ॥

रा० टी०–इतीति । प्रहृष्टवदनः प्राञ्जलिः प्रयतः नृपो जनकस्तदा स्थितिकाले मुनिशार्दूलं तं विश्वामित्रमिति वचनमुक्त्वा पुनः परिपप्रच्छ ॥ १६ ॥

गो० टी०–इतीति । प्रहृष्टेति कुतूहलविशेषः सूच्यते ॥१६॥

१७–१८ ] ति० टी०–इमौ कुमारावित्यादि व्याख्यातप्रायम् ॥ १७ ॥ १८ ॥

रा० टी०–तत्प्रश्नमेवाह–इमावित्यादिश्लोकचतुष्टयेन । एवमानुपूर्वीका इमे चत्वारः श्लोकाः अष्टचत्वारिंशे सर्गे सुमतिप्रश्ने पूर्वमप्युक्तास्ते तत्रैव व्याख्याता अतो अत्र न व्याख्यायन्ते–इमाविति ॥ १७ ॥

गो० टी०–इमावित्यादिश्लोकपञ्चकं व्याख्यातम् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

१९–२१ ] ति० टी०–पद्भ्यां वाहनराहिताभ्याम् । पद्मपत्रकोमलत्वात्कथमेतद्दूरं प्राप्ताविति विस्मयः किमर्थमिति प्रयोजनप्रश्नः । कस्य वेति पुत्राविति शेषः । उत्तरश्लोको यदि प्रमाणं तर्ह्यस्यैव विवरणं बोध्यम् । केचित्तु कस्येत्यस्य पुरुषस्य कार्यं साधयितुमिति शेषमाहुः, तत्प्रयोजनप्रश्नेनैव गतार्थम् ॥ १९–२१ ॥

रा० टी०–यदृच्छयेति ॥ १८ ॥

रा० टी०–वरेति ॥ १९ ॥

रा० टी०–परस्परेति ॥ २० ॥

२२ ] ति० टी०–'निवेदयत्' इति पाठेऽडभाव आर्षः ॥२२॥

रा० टी०–तस्येति । महात्मनस्तस्य जनकस्य तत् राम-

---

१ शेषमाहुरिति गो. रा. पाठः । २ वदन इति गो. रा. पाठः । ३ अर्धमिदं रा. नास्ति । ४ सिंहगती इति गो. पाठः । ५ इत्यर्धमधिकं गो. पाठे । ६ एवेति गो. रा. पाठः । ७ महात्मानाविति गो. रा. पाठः ।

सिद्धाश्रमनिवासं च राक्षसानां वधं तथा । तत्रागमनमव्यग्रं विशालायाश्च दर्शनम् ॥ २३ ॥
अहल्यादर्शनं चैव गौतमेन समागमम् । महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥ २४ ॥
एतत्सर्वं महातेजा जनकाय महात्मने । निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।

शतानन्देन पृष्टे सति विश्वामित्रोऽहल्योद्धारं तस्याश्च गौतमेन समागमं ताभ्यां च कृतं रामपूजनाद्यकथयत्, शतानन्दो रामं प्रति विश्वामित्रचरितं वर्णयितुमारभते, तत्प्रस्तावे कदाचिद्विश्वामित्रस्य वसिष्ठाश्रमं प्रत्यभिगमनवर्णनम् ।

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः । हृष्टरोमा महातेजाः शतनन्दो महातपाः ॥ १ ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः । रामसंदर्शनादेव परं विस्मयमागतः ॥ २ ॥
एतौ निषण्णौ संप्रेक्ष्य शतानन्दो नृपात्मजौ । सुखासीनौ मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३ ॥
अपि ते मुनिशार्दूल मम माता यशस्विनी । दर्शिता राजपुत्राय तपोदीर्घमुपागता ॥ ४ ॥

---

लक्ष्मणप्रश्नविषयकं वचनं श्रुत्वा महात्मानौ ईश्वरैरपि पूजितस्वरूपौ तौ प्रकटितौ दशरथस्य पुत्रौ न्यवेदयत् ॥ २१ ॥

गो० टी०—तस्येति । तौ दशरथस्य पुत्राविति न्यवेदयदित्यर्थः ॥ २२ ॥

२३–२५ ] ति० टी०—तत्राव्यग्रमागमनं रक्षःसमाक्रान्तेऽपि मार्गे भयरहितमागमनम् महाधनुषि जिज्ञासां तद्विषयां रामस्य दिदृक्षाम् ज्ञानमिह दर्शनरूपम् यद्वा धनुर्निष्ठसारजिज्ञासाम् । तथादृष्टस्य तस्य सज्जीकरणादिकं च कर्तुमागमनमित्येतत्सर्वं निवेद्य । 'विरराम तदा' इति पाठेऽर्थश्चिन्त्यः॥२३–२५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

रा० टी०—सिद्धेति । आगमनमयोध्यातः सिद्धाश्रमप्राप्तिं सिद्धाश्रमनिवासं च तथा तत्र राक्षसानां वधमव्यग्रं यथा स्यात्तथा विशालायाः दर्शनं च ॥ २२ ॥ अहल्यादर्शनं गौतमेन समागमं च महाधनुषि जिज्ञासां तत्त्वनिश्चयं कर्तुमागमनं च न्यवेदयत् इत्यनुकर्षः । एवतथाशब्दौ चार्थौ । श्लोकद्वयमेकान्वयि ॥२३॥ उपसंहरन्नाह—एतदिति । महातेजाः महामुनिः विश्वामित्रः महात्मने जनकाय अथ मङ्गलं यथा स्यात्तथा एतत्सर्वं निवेद्य विरराम ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

गो० टी०—सिद्धेत्यादित्रयः । अव्यग्रं रक्षःसहस्राहते मार्गे निर्भयागमनं जिज्ञासां सारासारपरीक्षाम् ॥ २३–२५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

१ ] ति० टी०—तस्येति । हृष्टरोमा स्वमातुः शापोद्धारश्रवणजसंतोषेण जातरोमाञ्चः ॥ १ ॥

२ ] ति० टी०—परं विस्मयमिति भगवद्दर्शनस्यान्यासुलभत्वात् ॥ २ ॥

रा० टी०—विश्वामित्रवचनश्रवणानन्तरकालिकं वृत्तमाह—तस्येति । धीमतस्तस्य प्रसिद्धस्य विश्वामित्रस्य तन्मातृशापोद्धारविषयकं वचनं श्रुत्वा हृष्टरोमा पुलकिताङ्गः महातेजाः अतिप्रतापः महातपाः अत एव तपसा द्योतितप्रभः तपःकरणकोद्भूतप्रभाविशिष्टः गौतमस्य ज्येष्ठः सुतः रामसंदर्शनादेव परं विस्मयमागतः प्राप्तः आसीदिति शेषः । एतेन रघुनाथशरीरशोभादेः लौकिकविलक्षणत्वं ध्वनितम् । द्वयोरेकत्रान्वयः ॥ १ ॥ २ ॥

गो० टी०—अथाचार्यवैभवस्य ज्ञेयत्वाभिप्रायेण विश्वामित्रचरित्रं प्रस्तौति—तस्य तद्वचनमित्यादिभिः पञ्चदशभिः सर्गैः । तस्येत्यादिद्वौ । हृष्टरोमा संजातरोमाञ्चः विस्मयमागतः अहो महिमा रामस्य यन्मे माता कृतार्थीकृतेति विस्मयं प्राप्तोऽभूदित्यर्थः ॥ १ ॥ २ ॥

३ ] ति० टी०—निषण्णावासने ॥ ३ ॥

रा० टी०—स इति । अथ विस्मयप्राप्त्यनन्तरं स शतानन्दः निषण्णौ आसने उपविष्टौ अत एव सुखासीनौ सुखं स्थितौ नृपात्मजौ तौ रामलक्ष्मणौ संप्रेक्ष्य मुनिश्रेष्ठं विश्वामित्रमब्रवीत् ॥ ३ ॥

गो० टी०—स इति । निषण्णावित्यस्य विवरणं सुखासीनाविति ॥ ३ ॥

४ ] ति० टी०—उक्तमप्यर्थमुत्कण्ठातिशयेन पुनः पृच्छति दार्ढ्याय—अपि ते इति । अपिः प्रश्ने ते त्वया ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—अपीति । हे मुनिशार्दूल! दीर्घं तपः उपागता यशस्विनी प्रशस्तयशोविशिष्टा मम माता ते तव राजपुत्राय दर्शिता । अपि ते इति संबन्धसामान्ये षष्ठी । अपिः प्रश्ने । यशस्विनी इत्यनेन पतिवेषोऽपि नानादरणीयः

---

१ तत्रागमनमिति गो. पाठः । २ स ताविति गो. रा. पाठः ।

अपि रामे महातेजा मम माता यशस्विनी । वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५ ॥
अपि रामाय कथितं यद्वृत्तं तत्पुरातनम् । मम मातुर्महातेजो देवेन दुरनुष्ठितम् ॥ ६ ॥
अपि कौशिक भद्रं ते गुरुणा मम संगता । मम माता मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७ ॥
अपि मे गुरुणा रामः पूजितः कुशिकात्मज । इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ८ ॥
अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज । इहागतेन रामेण पूजितेनाभिवादितः ॥ ९ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः । प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १० ॥
नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया । संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः । शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥

---

इति बुद्धैयव इन्द्रस्वीकारः कृतः इति ध्वनितं तेन तस्याः पतिव्रताग्रणीत्वं व्यक्तम् ॥ ४ ॥

गो० टी०—स्वमातरि रामकृतानुग्रहस्य श्रुतस्य विस्मयावहतया पुनः पृच्छति—अपीत्यादि । अपिः प्रश्ने ते त्वया दीर्घं तप उपागता पूर्वोक्तभस्मशायित्वादिलक्षणं तपः प्राप्ता अनेन पाषाणीभूय स्थितेति पक्षो न वाल्मीकेः ॥ ४ ॥

५ ] ति०टी०—रामे रामविषये।पूजार्हे इति रामविशेषणम् ५॥

रा० टी०—अपीति । हे महातेजः । यशस्विनी मम माता सर्वदेहिनां पूजार्हे रामे वन्यैः वनोद्भवैः पुष्पफलाद्यैः पूजामुपाहरदपि ॥ ५ ॥

गो० टी०—अपीति । रामे रामविषये वन्यैः कन्दमूलफलादिभिः अनेन पूर्वमपि वन्यैरेतस्या जीवनमिति गम्यते सर्वदेहिनां पूजार्ह इत्यनेन परत्वं व्यञ्जितम् ॥ ५ ॥

६ ] ति० टी०—देवेनेन्द्रेण दुरनुष्ठितं गौतमवेषधारणपूर्वकं तत्कर्तृकदुरनुष्ठानरूपं मातुर्यद्वृत्तं चरितं पुरातनं तद्रामाय कथितमित्यन्वयः । महातेज इति विश्वामित्रसंबोधनम् ॥ ६ ॥

रा० टी०—अपि रामायेति । हे महातेजः ! देवेन इन्द्रेण मम मातुः यद्दुःखनाय्यनुष्ठितं कृतं तत्पुरातनं वृत्तं रामाय यथावत्कथितमपि ॥ ६ ॥

गो० टी०—अपीति । हे महातेजः विश्वामित्र ! मम मातुर्विषये देवेन इन्द्रेण विधिना वा दुरनुष्ठितं दुरनुष्ठानरूपं पुरातनं वृत्तं चरितं यथा यथावत् कथितं चापि कथितं किम्॥६॥

७ ] ति० टी०—मम गुरुणा मम मातेत्यन्वयः । अत्र वारद्वयं ममेति प्रयोगो हर्षातिशयात् । रामसंदर्शनादित इतस्य गतशापेति शेषः । आदिना पूजापादस्पर्शौ ॥ ७ ॥

रा० टी०—अपि कौशिकेति । हे कौशिक हे मुनिश्रेष्ठ ! इतः अस्मात् रामसंदर्शनात् मम माता मम गुरुणा पित्रा सह संगता अपि ते भद्रं वृत्तं त्वं शीघ्रमेव ब्रूहीति भावः ॥ ७ ॥

गो० टी०—अपीति । गुरुणा पित्रा इतः अस्मादुपस्थिताद्रामसंदर्शनात् यद्वा रामसंदर्शनादितः रामसंदर्शनादिना तृतीयार्थे तसिः पूजा अपिशब्दार्थः ॥ ७ ॥

८ ] ति० टी०—महातेजा रामो मद्गुरोः सकाशात्पूजां प्राप्येह यज्ञभूमावागत इति पृष्टस्यैवार्थस्य भङ्ग्यन्तरेण प्रश्नः॥८॥

रा० टी०—अपि मे इति । हे कुशिकात्मज विश्वामित्र ! महात्मनः रामस्य पूजां रामकर्तृकाहल्यालाभरूपसत्कृतिं प्राप्य मे गुरुणा पित्रा इह मिथिलोपवने आगतो महातेजाः रामः पूजितोऽपि ॥ ८ ॥

गो० टी०—अपीति । इहास्मदाश्रमे आगतः महातेजा गुरुः महात्मनः रामात् पूजामहल्यालाभरूपामपि प्राप्तः ॥ ८ ॥

९–१० ] ति० टी०—शान्तेन मनसोपलक्षितो मे गुरुरिहागतेन गौतमाश्रम आगतेन गौतमपूजितेन रामेणाभिवादितः । न तु मन्मातृदोषात्तिरस्कृत इति प्रश्नान्तरम् । पूजाङ्गीकारवन्दने अतिरस्कारचिह्नमिति भावः ॥ ९ ॥ १० ॥

रा० टी०—अपि शान्तेनेति । हे कुशिकात्मज ! इह मिथिलोपवने आगतेन प्रयतेन यतचित्तेन रामेण शान्तेन मनसा उपलक्षितो मे गुरुः पिता अभिवादितोऽपि । 'पूजितेनाभिवादितम्' इति भाट्टपाठः ॥ ९ ॥

गो० टी०—अपीति । शान्तेन कोपरहितेन मनसोपलक्षितो गुरुः इहास्मदाश्रमे आगतेन प्रयतेन मनःसक्तिरूपयत्नवता रामेण अभिवादितः किम् ॥ ९ ॥

रा० टी०—तदिति । तस्य शतानन्दस्य तत् प्रश्नरूपं वचनं श्रुत्वा वाक्यज्ञः महामुनिः विश्वामित्रः वाक्यकोविदं शतानन्द प्रत्युवाच ॥ १० ॥

गो० टी०—तच्छ्रुत्वेति ॥ १० ॥

११–१२ ] ति० टी०—यत्कर्तव्यं तन्नातिक्रान्तं न विस्मृतम् किंतु मया कृतमेवेत्यर्थः । भार्गवो जमदग्निस्तत्कोपहता रेणुका परशुराममाता यथा जमदग्निना संगता तद्वदित्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०—विश्वामित्रप्रतिवचनमेवाह—नेति । हे मुनिश्रेष्ठ शतानन्द ! यत् कर्तव्यं भवन्मातृविषयकशापनिवारणादौ यत् करणीयं तत् मया कृतं अतिक्रान्तं विस्मृतं न एतेन सर्वस्य शतानन्दपृष्टस्योत्तरं दत्तमिति ध्वनितम् । तत्र किंचित् स्पष्टत आह भार्गवेण जमदग्निना रेणुका परशुराममातेव मुनिना गौतमेन पत्नी तद्भार्या त्वन्माता संगता मिलिता ॥ ११ ॥

---

१ यथावृत्तमिति गो. रा. पाठः । २ प्राप्त इति गो. पाठः । ३ प्रयतेनेति गो. रा. पाठः ।

स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव । विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३ ॥
अचिन्त्यकर्मा तपसा ब्रह्मर्षिरमितप्रभः । विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४ ॥
नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन । गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५ ॥
श्रूयतां[3] चाभिधास्यामि कौशिकस्य महात्मनः । यथाबलं यथातत्त्वं तन्मे निगदतः शृणु ॥ १६ ॥
राजासीदेष धर्मात्मा दीर्घकालमरिंदमः । धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७ ॥
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः ॥ १८ ॥
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः । गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥
विश्वामित्रो महातेजाः पालयामास मेदिनीम् । बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २० ॥

---

गो० टी०–नेति । नातिक्रान्तं मया समयातिक्रमो न कृतः समये यत्कर्तव्यं तत्कृतम् । तदेवाह–संगतेति । नातिक्रान्तमित्यस्य विवरणं यत्कर्तव्यमिति तस्य विवरणं संगतेति भार्गवेण जमदग्निना रेणुका परशुराममातेवेति भावः ॥ ११ ॥

रा० टी०–विश्वामित्रवचःश्रवणानन्तरकालिकं वृत्तमाह–तदिति । धीमतस्तस्य प्रसिद्धस्य विश्वामित्रस्य तत् मातृवृत्तसंबन्धि वचनं श्रुत्वा महातेजाः शतानन्दः रामं वचनमब्रवीत् १२

गो० टी०–तदिति ॥ १२ ॥

१३ ] ति० टी०–दिष्ट्या भाग्येन ॥ १३ ॥

रा० टी०–शतानन्दवचनमेवाह–स्वागतमिति । हे नरश्रेष्ठ ! हे राघव ! अपराजितं पराजेतुमशक्यं महर्षिं विश्वामित्रं पुरस्कृत्य त्वं प्राप्तोऽसि तत् ते तव स्वागतमतिशोभनमागमनं तदित्यध्याहृतम् ॥ १३ ॥

गो० टी०–स्वागतमिति । दिष्ट्या दैवयोगेन ॥ १३ ॥

१४ ] ति० टी०–विश्वामित्रयत्नत एव तेन सह प्राप्तिस्तत एव च मातुः शापोद्धार इति तं स्तौति–अचिन्त्येत्यादिना । मनसाप्यन्येनाशक्यचिन्तनप्रतिसृष्ट्यादिकर्ता । परमां गतिं जगतः परमहितप्रदम् । अन्ये तव मम चेत्याहुः ॥ १४ ॥

रा० टी०–विश्वामित्रं प्रशंसन् आह–अचिन्त्येत्यादिभिः । अचिन्त्यकर्मा अतर्क्यकर्मकारी तपसा ब्रह्मर्षिस्तपःप्राप्तब्रह्मर्षित्वविशिष्टः अत एव अतुलप्रभः तुलारहितप्रभाविशिष्टः महातेजाः अतिप्रतापः यः अयं विश्वामित्रः तमेनं परमामतिशोभनां गतिं भवदागमनहेतुमहं वेद्मि ॥ १४ ॥

गो० टी०–विश्वामित्रं स्तौति–अचिन्त्येत्यादि । तपसा-ब्रह्मर्षिस्तपसा प्राप्तब्रह्मर्षिभावः परमां गतिं तव परमहितप्रदं वेत्सीत्यत्र काकुरनुसंधेया ॥ १४ ॥

१५ ] ति० टी०–गोप्ता जदानादिना ॥ १५ ॥

रा० टी०–नेति । हे राम ! येन महत्तपस्तप्तं स कुशिकपुत्रः यस्य ते तव गोप्ता रक्षकः तस्मात्त्वत्तः अन्यो धन्यतरः भुवि त्रिलोक्यां कश्चन नास्तीति श्रूयतामित्युत्तरेणान्वयः ॥ १५ ॥

गो० टी०–एतदेवाह–नास्तीति । धन्यत्वे हेतुः गोप्तेति येन कुशिकपुत्रेण ॥ १५ ॥

१६–१७ ] ति० टी०–बलं तपोबलम् यथा यादृशम् । तत्त्वं ब्रह्मर्षित्वं च यथा तच्छृण्वित्यर्थः । 'वृत्तम्' इति क्वचित्पाठः । वृत्तं चरितम् ॥ १६ ॥ १७ ॥

रा० टी०–ननु कुतः एवं महत्त्वं विश्वामित्रस्येत्यत आह–महात्मनः कौशिकस्य बलं तपोबलं यथावृत्तं प्रवृत्तं तथा अहमभिधास्यामि त्वं निगदतः मे यथावच्छृणु ॥ १६ ॥

गो० टी०–श्रूयतामिति । बलं तपोबलं यथा यादृशं वृत्तं चरित्रं च यथा यादृशं तथा तत्सर्वं मे मत्तः शृणु ॥ १६ ॥

रा० टी०–तदुक्तिमेवाह–राजेति । धर्मात्मा विहितधर्माचरणशीलः अरिन्दमः शत्रुसूदनः धर्मज्ञः निखिलधर्मविज्ञाता । तत्र हेतुः कृतविद्यः कृता उपार्जिता विद्या येन अत एव प्रजानां हिते एव रतः एष विश्वामित्रः दीर्घकालं राजाभूत् । चशब्द एवार्थे द्वितीयश्चशब्दः हेत्वर्थे ॥ १७ ॥

गो० टी०–राजेति ॥ १७ ॥

१८–१९ ] ति० टी०–स राजा कस्य पुत्रस्तत्राह–प्रजापतीत्यादि ॥ १८ ॥ १९ ॥

रा० टी०–तत्प्राशस्त्यं बोधयितुं तत्पूर्वजान् क्रमशो निर्दिशन्नाह–प्रजेति । कुशो नाम महीपतिः प्रजापतिसुत आसीत् अनन्तरं बलवान् सुधार्मिकः कुशस्य पुत्रः कुशनाभ आसीत् । तुशब्दोऽनन्तरार्थकः ॥ १८ ॥

गो० टी०–कस्य राज्ञः पुत्र इत्यत्राह–प्रजापतीत्यादिश्लोकत्रयम् । पालयामासेत्यस्य विवरणं बह्वितिति ॥ १८–२० ॥

रा० टी०–कुशेति । गाधिरित्येव नाम्ना विश्रुतः प्रख्यातः कुशनाभसुत आसीत् अनन्तरं महातेजा महामुनिर्गाधिपुत्रः विश्वामित्र आसीत् तुशब्दोऽनन्तरार्थकः ॥ १९ ॥

२० ] ति० टी०–अकारयत् स्वार्थेणिः ॥ २० ॥

रा० टी०–विश्वामित्र इति । महातेजाः विश्वामित्रः मेदिनीं पालयामास युवराजावस्थायामेवेत्यर्थः । युवराजावस्था-

---

१ अतुलेति गो. रा. पाठः । २ वेत्सीति गो. पाठः । ३ श्रूयताममभिधास्यामीति गो.रा. पाठः । ४ यथावृत्तमिति गो. रा. पाठः । ५ अभूदिति गो. रा. पाठः ।

कदाचित्तु महातेजा योजयित्वा वरूथिनीम् । अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥
नगराणि च राष्ट्राणि सरितश्च महागिरीन् । आश्रमान्क्रमशो राजा विचरन्नाजगाम ह ॥ २२ ॥
वसिष्ठस्याश्रमपदं नानापुष्पलताद्रुमम् । नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥
देवदानवगन्धर्वैः किन्नरैरुपशोभितम् । प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४ ॥
ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् । तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५ ॥
सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महात्मभिः । अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥ २६ ॥
फलमूलाशनैर्दान्तैर्जितदोषैर्जितेन्द्रियैः । ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ॥ २७ ॥
अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् । वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ॥
ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

नन्तरकालिकवृत्तमाह—राजा सन् बहुवर्षसहस्राणि राज्यमकारयत् । स्वार्थे णिच् प्रयोजकाविवक्षा वा ॥ २० ॥

२१–२३ ] ति० टी०—वरूथिनीं चतुरङ्गबलम् । योजयित्वा सज्जमुपस्थाप्य तद्रूपाक्षौहिणीसंख्यसेनापरिवृतो भूत्वा ॥ २१–२३ ॥

रा० टी०—कदाचिदिति । महातेजाः अक्षौहिणीपरिवृतः विश्वामित्रः वरूथिनीमक्षौहिण्यतिरिक्तसेनां योजयित्वा पुररक्षायां नियुज्यैव कदाचित्कस्मिंश्चित्काले मेदिनीं पृथिवीं परिचक्राम । तुशब्द एवार्थे ॥ २१ ॥

गो० टी०—कदाचिदित्याद्यष्टौ श्लोकाः । वरूथिनी चतुरङ्गबलं योजयित्वा उपस्थाप्य प्रशान्तत्वविशेषणाय पुनर्हरिणोपादानम् । अब्भक्षैः अम्मात्रभक्षैः दान्तैर्नियतमनस्कैः वालखिल्याः ब्रह्मणो वालजा ऋषयः वैखानसास्तन्नखजाः "ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः" इति श्रुतेः । वसिष्ठाश्रमवैभववर्णनं एवंभूतेनापि संमानितो विश्वामित्र इति तस्य वैभवकथनार्थम् ॥ २१–२८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

रा० टी०—मेदिनीपरिक्रमणमेवाह—नगराणीति । राजा विश्वामित्रः नगरादीनि क्रमशो विचरन् वसिष्ठस्य अश्रमपदं श्रमनिवर्तकस्थानमाजगाम । स्थानमेव वर्णयन्नाह—नानापुष्पलताद्रुमं नानापुष्पलतायुता द्रुमाः यस्मिन् नानामृगगणाकीर्णं नानामृगगणैराकीर्णं व्याप्तं सिद्धचारणसेवितम् ॥ २२ ॥ २३ ॥

२४ ] ति० टी०—तपोतिशयात्प्रशान्तहरिणत्वम् ॥ २४ ॥

रा० टी०—देवादिभिः किन्नरैश्चोपशोभितं विनापि चं समुच्चयः । प्रशान्तहरिणाकीर्णं प्रशान्तहरिणैराकीर्णं व्याप्तं द्विजसंघनिषेवितं द्विजसंघैः पक्षिसमूहैः निषेवितम् ॥ २४ ॥

२५ ] ति० टी०—ज्ञानमात्राधिकृता नारदाद्या देवलोकसंचारिणो देवर्षयः । ज्ञानकर्मोभयाधिकृता ब्रह्मर्षयो भूप्रतिष्ठाः अग्नितुल्यैरृषिभिः संकुलं व्याप्तमित्यन्वयः ॥ २५ ॥

रा० टी०—ब्रह्मर्षिगणसंकीर्णं ब्रह्मर्षिगणैः संकीर्णं व्याप्तं देवर्षिगणसेवितं तपश्चरणसंसिद्धैः महात्मभिः अग्निकल्पैः अग्निं कल्पयन्ति प्रदिदिनं विधिना स्थापयन्ति ते अग्निहोत्रिण इति व्याप्तं श्रीमद्ब्रह्मकल्पैः श्रीमन्तो ये ब्रह्म वेदं कल्पयन्ति वेदशाखाविभागकर्तार इति यावत् तैः महात्मभिः सततं संकुलं अब्भक्षैः जलमात्रभक्षणकर्तृभिः वायुभक्षैः वायुमात्रभक्षणकर्तृभिश्च शीर्णपर्णाशनैः पतितपत्रमात्रभोजनकर्तृभिश्च । तथाशब्दश्चार्थे ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—तथा ब्रह्मकल्पैश्चतुर्मुखतुल्यैः । तस्यैव सहजतपोवैभवात् । अब्भक्षैस्तन्मात्रभक्षैः संकुलम् ॥ २६ ॥

२७ ] ति० टी०—ब्रह्मरोमनखजा वालखिल्या वैखानसाश्च । 'ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः' इति श्रुतेरिति कतकः ॥ २७ ॥

रा० टी०—फलेति । फलमूलाशनैः दान्तैः नियमितबहिरिन्द्रियैः जितरोषैः जितक्रोधैः जितेन्द्रियैः नियमितान्तःकरणैः ऋषिभिरुपशोभितं जपहोमपरायणैः वालखिल्यैः ब्रह्मरोमजातैरन्यैर्वालखिल्यविलक्षणैः वैखानसैः ब्रह्मनखजातैश्च समन्तादुपशोभितम् अपरं ब्रह्मलोकमिव वशिष्ठस्य अश्रमपदं श्रमनिवर्तकं स्थानं जयतां शत्रुपराभवं कुर्वतां श्रेष्ठः महाबलो विश्वामित्रः ददर्श च षण्णामकत्रान्वयः । वैखानसवालखिल्यनिर्वचनकर्त्री श्रुतिः "ये नखास्ते वैखानसा ये वालास्ते वालखिल्याः" इति ॥ २७ ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

२८ ] ति० टी०—परमकल्याणस्वभावाद्ब्रह्मलोकोपमाश्रमस्य । जयतां शूराणाम् ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

१ तथेति गो. रा. पाठः । २ रामेति गो. पाठः । ३ वृक्षसमाकुलमिति गो. पाठः । ४ अर्धमिदं गो. नास्ति । ५ अर्धमिदं रा. नास्ति ।

## द्विपञ्चाशः सर्गः ।

विश्वामित्रातिथ्यसंपादनार्थं वसिष्ठेन स्वकामधेन्वाः शबलायाः सोपस्कारान्नसर्जने नियोजनम् ।

तं[1] दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः । प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम् ॥ १ ॥
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना । आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥ २ ॥
उपविष्टाय च तदा विश्वामित्राय धीमते । यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥ ३ ॥
प्रतिगृह्य तु[2] तां पूजां वसिष्ठाद्राजसत्तमः । तपोग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४ ॥
विश्वामित्रो महातेजा वनस्पतिगणे तदा[3] । सर्वत्र कुशलं प्राह वसिष्ठो राजसत्तमम् ॥ ५ ॥
सुखोपविष्टं राजानं विश्वामित्रं महातपाः । पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६ ॥
कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् । प्रजाः पालयसे राजन्राजवृत्तेन धार्मिक ॥ ७ ॥
कच्चिते संभृता[4] भृत्याः कच्चित्तिष्ठन्ति शासने । कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८ ॥

१ ] ति० टी०—वसिष्ठं प्रणतो वसिष्ठेन स्वागतमित्युक्तश्चेति योजना ॥ १ ॥

रा० टी०—तमिति । जपतां वरं श्रेष्ठं तं वसिष्ठं दृष्ट्वा परमप्रीतः अतिप्रीतिविशिष्टः महाबलः विनयात् विनम्रतातः प्रणतः प्रणामं कर्ता वीरः विश्वामित्रः महात्मना वसिष्ठेन स्वागतं तवेत्युक्त आसीदिति शेषः । अत एव भगवान् सकलसामर्थ्यविशिष्टो वसिष्ठः अस्य विश्वामित्रस्य चकारेण तत्सहचरेभ्यश्च आसनं व्यादिदेश यथायोग्यं ददौ ह प्रसिद्धमेतत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—विश्वामित्रसंमानं द्विपञ्चाशे—स दृष्ट्वेत्यादि । वसिष्ठं दृष्ट्वा प्रणतः प्रणनाम ॥ १ ॥

२ ] ति० टी०—व्यादिदेशादापयत् ॥ २ ॥

गो० टी०—स्वागतमिति । उक्तः ऊचे व्यादिदेश दापयामासेत्यर्थः ॥ २ ॥

३-४ ] ति०टी०—फलमूलमिति जातित्वादेकवत्त्वम् ॥३॥४॥

रा० टी०—उपेति । तदा आसनदानोत्तरकाले उपविष्टाय आसने निविष्टाय धीमते विश्वामित्राय चशब्देन तत्सहचरेभ्यः यथान्यायं मुनिवरः वशिष्ठः फलमूलमुपाहरत् प्रापयत् ॥ ३ ॥

गो० टी०—उपविष्टायेत्यादि चत्वारः । फलमूलमिति "जातिरप्राणिनाम्" इत्येकवत्त्वं राजसत्तमं प्रतीति शेषः ॥ ३—६ ॥

रा० टी०—प्रतीति । राजसत्तमो महातेजा विश्वामित्रः वसिष्ठात् तां वसिष्ठकर्तृकां पूजां प्रतिगृह्य तपआदिषु त्रिषु तथा वनस्पतिगणे कुशलं पर्यपृच्छत् अत एव वसिष्ठः सर्वत्र विश्वामित्रपृष्टेषु कुशलं राजसत्तमं विश्वामित्रमाह । चशब्दो हेतौ । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

५ ] ति० टी०—वनस्पतिशब्देन वृक्षमात्रं न तु विनापुष्पं फलवन्त एव तद्विषयेऽपि कुशलं पर्यपृच्छत । सर्वत्र तत्पृष्टसर्वविषये ॥ ५ ॥

६ ] ति० टी०—जपतां तपस्विनाम् ॥ ६ ॥

रा० टी०—सुखेति । महातपाः अतितपोविशिष्टः जपतां श्रेष्ठः ब्रह्मणः सुतः वसिष्ठः सुखोपविष्टं सुखस्थितिमन्तं राजानं विश्वामित्रं पप्रच्छ ॥ ६ ॥

७ ] ति० टी०—कच्चिदिति प्रश्ने । हे धार्मिक, धर्मेण तदनुष्ठानेन प्रजा रञ्जयन् राजवृत्तेन 'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ।' इत्युक्तेन राजवृत्तेन पालयामास इत्यन्वयः ॥ ७ ॥

रा० टी०—तत्प्रश्नमेवाह—कच्चिदिति । हे राजन् ! हे धार्मिक धर्माचरणकर्तः! ते तव कुशलं कच्चिदस्ति । हे राजन् ! राजवृत्तेन चतुर्विधेन प्रजाः रञ्जयन्सन् कच्चित्पालयसे कच्चिदिति इष्टप्रश्ने । राजवृत्तस्य चतुर्विधत्वं तु 'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्' इत्यादिनोक्तम् ॥ ७ ॥

गो० टी०—कच्चिदित्यादित्रयः । कच्चिदिति कामप्रवेदनेऽव्ययं 'कच्चित्कामप्रवेदने' इत्यमरः । तव कुशलं ममेप्सितमित्यमुमर्थं द्योतयति राजवृत्तेन चतुर्विधेन उपलक्षितः यथाहुः 'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्' इति ॥ संभृताः पोषिताः तिष्ठन्तीति शेषः । बले चतुरङ्गबले कोशे अर्थसमूहे पुत्रपौत्र इति गवाश्वप्रभृतित्वादेकवत्त्वम् ॥ ७ ॥ ८ ॥ ९ ॥

८ ] ति० टी०—संभता वेतनदानादिना ॥ ८ ॥

रा० टी०—कच्चिदिति । हे रिपुसूदन विश्वामित्र ! ते तव सुभृताः सुपोषिताः भृत्याः कच्चित्सन्तीति शेषः । भृत्यास्ते तव शासने स्वत्कर्तृकशिक्षायां कच्चित्तिष्ठन्ति । ते भृत्या इत्युभयान्वयि । सर्वे रिपवः कच्चित्ते तव विजिताः । ते इति संबन्धसमान्ये षष्ठी ॥ ८ ॥

१ स इति गो. पाठः । २ चेति गो. रा. पाठः । ३ तथेति गो. रा. पाठः । ४ चाहेति गो. रा. पाठः । ५ सुभृता इति रा. पाठः ।

कच्चिद्बलेषु कोशेषु मित्रेषु च परन्तप । कुशलं ते नरव्याघ्र पुत्रपौत्रे तथानघ ॥ ९ ॥
सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् । विश्वामित्रो महातेजा वसिष्ठं विनयान्वितम् ॥ १० ॥
कृत्वा तौ सुचिरं कालं धर्मिष्ठौ ताः कथास्तदा । मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११ ॥
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन । विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२ ॥
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल । तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३ ॥
सत्क्रियां हि भवानेतां प्रतीच्छतु मया कृताम् । राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥
एवमुक्तो वसिष्ठेन विश्वामित्रो महामुनिः । कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥ १५ ॥
फलमूलेन भगवन्विद्यते यत्तवाश्रमे । पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥

---

९ ] ति० टी०—बलेषु चतुरङ्गेषु कोशेष्वर्थसमूहेषु । पुत्रपौत्रे गवाश्वप्रभृतित्वादेकवत्त्वम् ॥ ९ ॥

रा० टी०—कच्चिद्बलेष्विति । हे परंतप ! हे नरव्याघ्र ! हे अनघ ! ते तव बलेषु सैन्येषु कोशेषु मित्रेषु च तथा पुत्रपौत्रे कच्चित् कुशलमस्ति ॥ ९ ॥

१० ] ति० टी०—एको वसिष्ठशब्दो वरिष्ठवाची ॥ १० ॥

रा० टी०—सर्वत्रेति । महातेजाः अतिशयतेजोविशिष्टः राजा विश्वामित्रः सर्वत्र वसिष्ठकर्तृकप्रश्नविषयीभूतबलादिषु कुशलं वसिष्ठं श्रेष्ठं किंच आ वशिष्टमतिकान्तिमन्तं विनयान्वितं विनयो विश्वामित्रकर्तृकविनम्रता अन्वितः प्राप्तः यस्मै तम् कथयत् । आवशिष्ठशब्द आङ्पूर्वककान्त्यर्थकवशधातुप्रकृतिकौणादिकथन्प्रत्ययान्तः ॥ १० ॥

गो० टी०—सर्वत्रेति । सर्वत्र वसिष्ठपृष्टसर्वविषय इत्यर्थः वसिष्ठं धनिकम् ॥ १० ॥

११ ] ति० टी०—तावुक्तविशेषणकौ वसिष्ठविश्वामित्रौ । ताः कथा अन्योन्यकुशलप्रश्नोत्तरादिरूपाः । प्रीयेताम् अडभाव आर्षो लङि ॥ ११ ॥

रा० टी०—कृत्वेति । तदा समागमकाले धर्मिष्ठौ वेदविहितानुष्ठाननिष्ठौ परमया मुदा हर्षेण युक्तौ तौ प्रसिद्धावुभौ वशिष्ठविश्वामित्रौ ताः परस्परं कुशलप्रश्नोत्तररूपाः कथाः सुचिरं कालं बहुकालपर्यन्तं कृत्वा निष्पाद्य कथयित्वेत्यर्थः परस्परं प्रीयेताम् ॥ ११ ॥

गो० टी०—कृत्वेति । ताः कथाः अन्योन्यकुशलप्रश्नोत्तररूपाः प्रीयेतामप्रीणयताम् ॥ ११ ॥

१२ ] ति० टी०—प्रहसन्निवोत्तमातिथिलाभजहर्षेण ॥ १२ ॥

रा० टी०—तत इति । हे रघुनन्दन ! ततः परस्परतृप्त्यनन्तरं कथान्ते उभयोक्तवृत्तावसाने भगवान् अतिशयसामर्थ्यविशिष्टो वशिष्ठः प्रहसन् सन्नेव इदं वाक्यमुवाच । इवशब्द एवार्थे ॥ १२ ॥

गो० टी०—तत इत्यादित्रयः । प्रहसन्निव प्रसन्नमुख इत्यर्थः संप्रतीच्छ प्रतिगृहाण उद्यतां चिकीर्षिताम् ॥ १२ ॥ ॥ १३ ॥ १४ ॥

१३ ] ति० टी०—संप्रतीच्छ मे मत्कृतमातिथ्यमङ्गीकुरु ॥ १३ ॥

रा० टी०—तद्वाक्यमेवाह—आतिथ्यमिति । हे महाबल ! अप्रमेयस्य इयत्तारहितप्रभावस्य तवास्य प्रसिद्धस्य बलस्य सैन्यस्य यथार्हमेव आतिथ्यं कर्तुमिच्छामि अतो मे मम आतिथ्यं संप्रतीच्छ स्वीकुरु । चो हेतौ आतिथ्यमित्युभयान्वयि ॥ १३ ॥

१४ ] ति० टी०—हेतुगर्भं विशेषणमितिथिश्रेष्ठ इति ॥ १४ ॥

रा० टी०—मदातिथ्यमवश्यं स्वीकर्तव्यमित्यत्र हेतुं वदन्नाह—सदिति । मया कृतां संपादितामेतां सत्क्रियां भवान प्रतीच्छतु हि यतः हे राजन् ! त्वमतिथिश्रेष्ठः अतो मया प्रयत्नतः पूजनीयः अतिथित्वेन सत्करणीयः ॥ १४ ॥

१५ ] ति० टी०—पूजावाक्येनातिथ्यं करिष्यामीत्येवंरूपेणैव मम पूजनं कृतमिति राजाब्रवीत् ॥ १५ ॥

रा० टी०—एवमिति । वशिष्ठेन एवमनेन प्रकारेण उक्तो महामतिर्विश्वामित्रो राजा प्रियवाक्येन मे आतिथ्यं त्वया कृतं भवदुक्तवचनेनैवास्मत्संतोषो जात इत्यर्थः इत्यब्रवीत् ॥ १५ ॥

गो० टी०—एवमिति त्रयः । प्रियवाक्येन आतिथ्यं करिष्यामीत्यनेन वचनेन आतिथ्यं कृतं तवाश्रमे यद्विद्यते तेन फलमूलेन सुपूजित इत्यन्वयः पूजार्हेण त्वयेति शेषः । मैत्रेण स्नेहयुक्तेन मत्वर्थीयाजन्तः ॥ १५–१७ ॥

१६ ] ति० टी०—विद्यते यत्तवाश्रमे फलमूलं तेन पूजित इत्यनेन राजभोज्याभावादनेनैव वयं संतुष्टा इति ध्वनिः ॥ १६ ॥

रा० टी०—तदेव विशदयन्नाह—फलेति । हे भगवन् ! हे महाप्राज्ञ ! पूजार्हेण पूजायोग्येन यत्तवाश्रमे विद्यते तेन फलमूलेन पाद्येन आचमनीयेन च भगवद्दर्शनेन भगवतस्तव दर्शनेन च सर्वथा सर्वप्रकारेण पूजितोऽहं गमिष्यामि अतस्ते तुभ्यं नमः अस्तु मैत्रेण चक्षुषा त्वमीक्षस्व मां पश्य । द्वयोरेकत्रान्वयः ॥ १६ ॥ १७ ॥

---

१ तवानघेति गो. पाठः । २ उभाविति गो. रा. पाठः । ३ शुभा इति गो. पाठः । ४ भवाँस्त्वेतामिति रा. पाठः । ५ उद्यतामिति गो. पाठः । ६ राजा इति गो. पाठः । ७ महामतिरिति गो. रा. पाठः । ८ प्रियवाक्येनेति गो. रा. पाठः ।

सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः । नमस्तेऽस्तु गमिष्यामि मैत्रेणेक्षस्व चक्षुषा ॥ १७ ॥
एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि । न्यमन्त्रयत धर्मात्मा पुनःपुनरुदारधीः ॥ १८ ॥
बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह । यथाप्रियं भगवतस्तथास्तु मुनिपुङ्गव ॥ १९ ॥
एवमुक्तस्तथा तेन वसिष्ठो जपतां वरः । आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषाम् ॥ २० ॥
एह्येहि शबले क्षिप्रं शृणु चापि वचो मम । सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥
भोजनेन महार्हेण सत्कारं संविधत्स्व मे ॥ ॥ २१ ॥
यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् । तत्सर्वं कामधुग्दिव्ये अभिवर्ष कृते मम ॥ २२ ॥
रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् । अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१७ ] ति० टी०—पूजार्हेण त्वयेति शेषः । मैत्रेण स्नेहयुक्तेन । मत्वर्थीयाजन्तम् ॥ १७ ॥

१८ ] ति० टी०—निमन्त्रणं भोजनाङ्गीकाराय प्रार्थनम् १८

रा० टी०—एवमिति । एवमनेन प्रकारेण पुनःपुनर्ब्रुवन्तमेव राजानं विश्वामित्रमुदारधीः धर्मात्मा वशिष्ठः पुनरपि न्यमन्त्रयत । हिशब्दोऽप्यर्थे ॥ १८ ॥

गो० टी०—एवं ब्रुवन्तमिति द्वौ । पुनः न्यमन्त्रयत भोजनार्थं प्रार्थनमकरोत् पुनः पुनरित्यत्र न्यमन्त्रयतेत्यनुपज्यते बहुशः प्रत्युत्तरेऽपि पुनः पुनर्न्यमन्त्रयतेत्यर्थः । गाधेयः गाधिपुत्रः बाढमित्यस्यैव विवरणं यथेति ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—बाढमित्यस्य विवरणम्-यथाप्रियमित्यादि ॥ १९ ॥

रा० टी०—बाढमिति । गाधेयो विश्वामित्रः बाढं स्वीकृतमेवेति वशिष्ठं प्रति उवाच । स्वीकारप्रकारमाह—हे मुनिसत्तम ! भगवतस्तव यथाप्रियं तथैवास्तु । हशब्द एवार्थे ॥१९॥

२० ] ति० टी०—तेन विश्वामित्रेण कल्माषीं चित्रवर्णां होमधेनुम् ॥ २० ॥

रा० टी०—एवमिति । ततः आतिथ्यस्वीकारानन्तरमेवमुक्तः महातेजाः अतिशयतेजोविशिष्टः जपतां वरः प्रीतो वशिष्ठः धूतकल्मषां प्रक्षालितपङ्कादिकां कल्माषीं चित्रवर्णविशिष्टां स्वधेनुमाजुहाव ॥ २० ॥

गो० टी०—एवमिति । कल्माषीं चित्रवर्णां शबलामिति यावत् ‘ चित्रं किर्मीरकल्माष—’ इत्यमरः ॥ २० ॥

२१ ] ति० टी०—शबले तन्नामे, अस्य राजर्षेर्महार्हेण भोजनेन सत्कारं कर्तुं व्यवसितोऽस्म्युद्युक्तोऽस्मि । तं मे व्यवसायं संविधत्स्व संपादय तदुपयोगिपदार्थदानेनेति शेषः ॥ २१ ॥

रा० टी०—तत्प्रकारमाह—एहीति । हे शबले शबलाभिधे ! क्षिप्रं शीघ्रं त्वमेहि एहि मम वचोऽपि शृणु सबलस्य सैन्यसहितस्य अस्य राजर्षेर्विश्वामित्रस्य महार्हेणैव भोजनेन सत्कारं कर्तुमहं व्यवसितः उद्युक्तोऽस्मि अतः मे सत्कारं संविधत्स्व संसाधय । सार्धश्लोक एकान्वयी । चशब्द एवार्थे हिर्हेतौ सत्कारमित्युभयान्वयि ॥ २१ ॥

गो० टी०—एहीतिसार्धश्लोकः । सबलस्यास्य राजर्षेः सत्कारं कर्तुं व्यवसितोऽस्मि संविधत्स्व तदुपयोगिवस्तुजातं संपादय ॥ २१ ॥

२२ ] ति० टी०—षड्रसेषु मधुरादिषु यस्य यस्य यदभिपूजितमभीष्टम्, तत्सर्वं यथाकामं तत्प्रीत्यनतिक्रमेण मम कृते मत्तोषार्थम् ॥ २२ ॥

रा० टी०—तदेव विशदयन्नाह—यस्येति । हे कामधुक् ! हे दिव्ये ! यस्य यस्य राजसंबन्धिनः षड्रसेषु यत् यत् अभिपूजितं भोजनेच्छाविषयीभूतं तस्य तस्य तत् सर्वं यथाकामं यथेच्छं मम कृते मत्संतोषार्थमभिवर्ष ॥ २२ ॥

गो० टी०—यस्येति । षड्रसेषु यद्यस्य यस्य अभिपूजितमभिमतम् तत्सर्वं यथाकामं ममकृते अभिवर्षेत्यन्वयः ‘ अर्थे कृते च तादर्थ्ये निपातद्वयमव्ययम् ’ इति निघण्टुः ॥ २२ ॥

२३ ] ति० टी०—रसेनान्नेन रसयुतान्नेन भक्ष्यशष्कुल्यादिना । रसेनेति सर्वान्वयि । पानेन पानकरसादिना । लेह्यं जिह्वायाह्यं क्षौद्रादि चोष्यमधरपुटग्राह्यमाम्रफलादि अन्नानां शाल्यन्नादीनां निचयं राशिम् ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

रा० टी०—इच्छाविषयीभूतं नामतः परिगणयन्नाह—रसेनेति । हे शबले ! रसेन रसयुक्तेन अनेन अपूपादिना पानेन पानयोग्येन पानकरसादिना लेह्यचूष्येण लेह्येन जिह्वास्वादनीयक्षौद्रादिना चूष्येण आम्रफलादिना संयुतं सर्वमन्नाद्यनिचयमोदनादिसमूहमिहास्मिन्काले एव सृजस्व उत्पादय।तुशब्द एवार्थे॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१ सर्वथेति गो. पाठः । २ मुनिसत्तमेति गो. रा. पाठः । ३ एवमुक्तो महातेजा इति गो. रा. पाठः । ४ धूतकल्मष इति गो. पाठः । ५ अहमिति रा. पाठः । ६ क्षिप्रमिति गो. पाठः । ७ चूष्येणेति रा पाठः । ८ अन्नाद्यनिचयमिति रा. पाठः । ९ त्विहेति रा. पाठः ।

## त्रिपञ्चाशः सर्गः ।

तत्कल्पितविविधस्वाद्वन्नादिना सपरिजनेन प्राप्तपरितोषेण विश्वामित्रेणानेकधेन्वादिप्रतिनिधिनापि याच्यमानायाः शबलाया वसिष्ठेन विसर्जनानङ्गीकरणम् ।

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन । विदधे कामधुक्कामान्यस्य यस्येप्सितं यथा ॥ १ ॥
इक्षून्मधूंस्तथा लाजान्मैरेयांश्च वरासवान् । पानानि च महार्हाणि भक्ष्यांश्चोच्चावचानपि ॥ २ ॥
उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः । मृष्टान्यन्नानि सूपांश्च दधिकुल्यास्तथैव च ॥ ३ ॥
नानास्वादुरसानां च खाण्डवानां तथैव च । भोजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४ ॥
सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनायुतम् । विश्वामित्रबलं राम वसिष्ठेन सुतर्पितम् ॥ ५ ॥

---

**गो० टी०—रसेनेति** । रसेन रसायनभेदेन अन्नेन भक्ष्येण शुष्कुलीलाजादिना पानेन पेयेन पानकरसादिना लेह्यचोष्येण लेह्येन जिह्वास्वाद्येन क्षौद्रादिना चोष्येण अधरपुटग्राह्येण दध्यादिना च समन्वितं सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । अन्नानां शाल्यन्नादीनां निचयं राशिं अनेन भक्ष्यभोज्यलेह्यचोष्यपेयखाद्यरूपषड्विधाभ्यवहारा दर्शिताः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१ ] **ति० टी०—**यस्य यस्य यथा यथेप्सितम् तथा तथा सर्वान्कामान्विदधे इत्यर्थः ॥ १ ॥

**रा० टी०—एवमिति** । हे शत्रुसूदन ! एवमनेन प्रकारेण वशिष्ठेन उक्ता कामधुक् शबला वशिष्ठधेनुः यस्य यस्य यथा ईप्सितं तस्य तस्य कामान् तथा विदधे उत्पादयामास ॥ १ ॥

**गो० टी०—**कामधेनुप्रार्थनं त्रिपञ्चाशे—**एवमुक्तेत्यादि** । यस्य यस्य यथेप्सितं तथा कामान् काङ्क्षितान् विदधे ॥ १ ॥

२ ] **ति० टी०—**तदेव प्रपञ्चयति—**इक्षूनिति** । सविकारानिक्षून् मधूनक्षौद्राणि मैरेयं च धात्रीधातकीगुडवारिभिः कृतं मद्यं भक्ष्यानपूपादीन् उच्चावचाननेकविधान् ॥ २ ॥

**रा० टी०—**उत्पादितपदार्थानामशो निर्दिशन्नाह—**इक्षूनित्यादित्रिभिः** । इक्षून् मधून् क्षौद्रादीन् च पुंस्त्वमार्षम् । लाजांश्च मैरेयान् मैरेयाभिधधातकीपुष्पगुडधानावारिकृतमद्यविशेषांश्च वरासवान् अपक्वेक्षुरसकृतोत्तममद्यविशेषान् तथा हि 'सीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहतम्' इति माधवः । महार्हाणि बहुमूल्यकानि पानानि पानकरसादीनि च उच्चावचान् अनेकविधान् भक्ष्यांश्च विदधे इति पूर्वेणान्वयः । तथाशब्दौ चार्थे 'उच्चावचं नैकविधम्' इत्यमरः ॥ २ ॥

**गो० टी०—**उक्तमेव प्रपञ्चयति—**इक्षूनित्यादि** । मधूनिति पुल्लिङ्गत्वमार्षम् । मैरेयाः मद्यविशेषाः मैरेयाख्यानित्यर्थः 'मैरेयमासवो धात्रीधातकीगुडवारिभिः' इति वैजयन्ती । अत्र कृतमिति शेषः । पानानि पानकादीनि भक्ष्यान् अपूपविशेषान् उच्चावचान्नानाप्रकारान् 'उच्चावचं नैकभेदम्' इत्यमरः । विदध इत्यनुषज्यते ॥ २ ॥

३ ] **ति० टी०—**उष्णाढ्यस्योष्णत्वगुणयुक्तस्य राशयः आसन्निति शेषः । मृष्टान्यन्नानि पायसभेदाः । दधिकुल्या इत्युपलक्षणं दुग्धादेरपि ॥ ३ ॥

**रा० टी०—उष्णेति** । उष्णाढ्यस्य उष्णत्वगुणविशिष्टस्य ओदनस्य पर्वतोपमाः पर्वतसदृशाः राशयः अत्र अस्मिन्विश्वामित्रातिथ्ये आसन्निति शेषः । तथा तेन प्रकारेण मृष्टान्नानि पायसविशेषाश्च सूपाः परिपक्वाढकीद्विदलादयश्च दधिकुल्याश्चासन् । एवोऽनुक्तसमुच्चयार्थः तेन घृतकुल्यापयःकुल्यादेः संग्रहः ॥ ३ ॥

**गो० टी०—उष्णेति** । आसन्निति शेषः मृष्टान्नानि इष्टान्नानि पायसभेदा इति यावत् ॥ ३ ॥

४ ] **ति० टी०—**अनेकविधस्वादुरसयुतानां खाण्डवानां भक्ष्यविशेषाणाम् शेषे षष्ठी तैः पूर्णानि भोजनानि भोजनपात्राणि गौडानि राजतानि आसन्निति शेषः । 'रजते गुडः' इत्यभिधानमिति कतककृत् ॥ ४ ॥

**रा० टी०—नानेति** । नानास्वादुरसानामनेकविधस्वादुविशिष्टपुष्पादिरसविशेषाणां तथा तेन प्रकारेण खाण्डवानां भक्ष्यविशेषाणां च संबन्धीनि भोजनानि भोजनपात्राणि गौडानि गुडनिर्मितभक्ष्यविशेषपात्राणि च सहस्रशोऽपि सुपूर्णान्येवासन्निति शेषः एकश्चशब्दोऽप्यर्थे । किंच नानास्वादुरसानां तथैव खाण्डवानां च गौडानि रजतनिर्मितानि सहस्रश एव भोजनानि भोजनपात्राणि सुपूर्णान्येवासन्निति शेषः । चद्वयमेवार्थे 'रजते गुड' इत्यभिधानमिति कतककृदिति भट्टाः ॥४॥

**गो० टी०—नानेति** । नानाविधाः स्वादवो रुच्याः रसा माधुर्यादयो येषां तेषां षाडवाः षड्रसविकृताः भक्ष्यविशेषाः शैषिकोऽण् तेषां पूर्णानि तैः पूर्णानीत्यर्थः पूरणगुणेत्यादिना तृतीयार्थे षष्ठी । गौडानि गुडविकाराः अत्राप्यासन्निति शेषः ॥ ४ ॥

५ ] **ति० टी०—**हर्षश्चित्तसंतोषः पुष्टिर्देहपुष्टिस्तद्युक्तजनैरासमन्तायुक्तम् ॥ ५ ॥

**रा० टी०—सर्वमिति** । हे राम ! सुसंतुष्टं विश्वामित्रसत्कारहेतुकात्यन्तसंतोषविशिष्टं हृष्टपुष्टजनायुतं हृष्टपुष्टजनैरायुतं व्याप्तं सर्वं विश्वामित्रबलं वशिष्ठेन सुतर्पितमासीत् ॥ ५ ॥

---

१ तथेति गो. रा. पाठः । २ मृष्टान्नानिचेति गो. रा. पाठः । ३ सूपाश्चेति रा. पाठः । ४ षाण्डवानामिति गो. पाठः । ५ भाजनानीति गोः पाठः ।

विश्वामित्रो हि[1] राजर्षिर्हृष्टपुष्टस्तदाभवत् । सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६ ॥
सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा । युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥ ७ ॥
पूजितोऽहं त्वया ब्रह्मन्पूजार्हेण सुसत्कृतः । श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ॥ ८ ॥
गवां शतसहस्रेण दीयतां शबला मम । रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ॥ ९ ॥
तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज । एवमुक्तस्तु भगवान्वसिष्ठो मुनिपुङ्गवः[2] ॥ १० ॥
विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् । नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ॥ ११ ॥
राजन्दास्यामि शबलां राशिभी रजतस्य वा । न परित्यागमर्हेयं मत्सकाशादरिंदम ॥ १२ ॥

---

गो० टी०—सर्वमिति । पूर्वमेव हृष्टपुष्टजनायुतं विश्वामित्रबलं सर्वं सुसंतुष्टमासीदित्यन्वयः ॥ ५ ॥

६ ] ति० टी०—अन्तःपुरश्रेष्ठैः सहितः ॥ ६ ॥

रा० टी०—विश्वामित्र इति । तदा आतिथ्यकाले सान्तःपुरवरः वरान्तःपुरसहितः सब्राह्मणपुरोहितः ब्राह्मणपुरोहिताभ्यां सहितः सामात्यः अमात्यसहितः मन्त्रिसहितः मन्त्रियुक्तः सभृत्यः भृत्यसहितः हृष्टपुष्टः हृष्टेन स्वाभाविकहर्षेण पुष्टः प्रवृद्धो राजर्षिर्विश्वामित्रः पूजितोऽतिसत्कृतोऽभवत् अत एव परमहर्षेण युक्तो विश्वामित्रः तदा वशिष्ठमिदमब्रवीत् । श्लोकद्वयमेकान्वयि विश्वामित्र इत्यादस्या उभयत्रान्वेति । अपिहेतौ अमात्यः कर्मसाहाय्यकर्ता मन्त्री मन्त्रप्रद इति भेदः ॥६॥७॥

गो० टी०—विश्वामित्र इति । हृष्ट आदरेण पुष्टः भोजनादिना ॥ ६ ॥

७ ] ति० टी०—अमात्याः कर्मसचिवाः मन्त्रिणो मन्त्रस्य सचिवाः पूजित आतिथ्येन सत्कृतः ॥ ७ ॥

गो० टी०—सामात्य इति । अमात्याः कर्मणि सहायाः मन्त्रिणः मन्त्रसहायाः ॥ ७ ॥

८ ] ति० टी०—पूजार्हेण मादृशपूजाकरणयोग्येन । पूजित इत्यस्यैव विवरणमादरातिशयद्योतनाय सुसत्कृत इति । हर्षाद्वा पुनरुक्तिरदोषः ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—पूजित इतिसार्धश्लोकद्वयेन । हे ब्रह्मन् ! हे वाक्यविशारद ! पूजार्हेण अस्मत्कर्तृकपूजायोग्येन त्वया पूजितः भोजनादिना तोषितः अत एव सुसत्कृतः भवत्कर्तृकात्यन्तसत्कारविशिष्टोऽहं अभिधास्यामि कथयिष्यामि अतः वाक्यं मद्वचनं त्वया श्रूयताम् त्वयेत्युभयान्वयि ॥ ८ ॥

गो० टी०—पूजित इति । पूजार्हेण अस्मदादिभिरिति शेषः । पूजितः बहुकृतः सुसत्कृतः आतिथ्येन सत्कृतः ॥ ८ ॥

९ ] ति० टी०—शतसहस्रेण निष्क्रयभूतेनेति शेषः ॥ ९ ॥

रा० टी०—गवामिति । गवां शतसहस्रेण निष्क्रयीभूतशतसहस्रसङ्ख्याकगवीभिः मम योग्या इयं शबला दीयताम् । तत्र हेतुः हे भगवन् ! हि यतः एतत् शबला गौः रत्नं रत्नहारी रत्नग्रहणशीलः पार्थिव एव चशब्द एवार्थे । उपसंहरन्नाह—हे द्विज ! तस्मात् उक्तहेतोः मे मह्यं शबलां देहि यतः धर्मतः न्यायतः एषा शबला ममैव सर्वं वाक्यं सावधारणं भवतीतिन्यायादेवकारलाभः । सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गतेति सिद्धान्तादेतच्छब्दस्य नपुंसकत्वम् ॥ ९ ॥

गो० टी०—गवामिति । शतसहस्रेण निष्क्रयभूतेन । अर्धम् ॥ ९ ॥

गो० टी०—रत्नं हीति । हि यस्मादेतद्रत्नं स्वजातिश्रेष्ठम् 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । यतः पार्थिवो रत्नहारी तस्माद्धर्मतः न्यायतः ममैषा मे देहीत्यन्वयः ॥ १० ॥

१०–१२ ] ति० टी०—धर्मतो न्यायतः पार्थिवस्य रत्नस्वामित्वाद्रत्नहरत्वाच्च ममैषा योग्येति शेषः ॥ १०–१२ ॥

रा० टी०—एवमिति । भगवान् अतिशयसामर्थ्यविशिष्टः विश्वामित्रेण एवमनेन प्रकारेणोक्तः धर्मात्मा मुनिसत्तमो वशिष्ठः महीपतिं विश्वामित्रं प्रत्युवाच ॥ १० ॥

गो० टी०—एवमित्यादिपदम् । परित्यागं विश्लेषं प्राप्तुं नार्हा । आत्मवतः मनस्विनः कीर्तिरिव मह्यं मम शबला शाश्वती नित्यसंबन्धा हव्यं देवार्थं कव्यं पित्रर्थं प्राणयात्रा प्राणाग्निहोत्रं अग्निहोत्रं सायंप्रातःकर्तव्यो होमविशेषः बलिः भूतबलिः होमः दर्शपूर्णमासादिः एतत्सर्वमस्यामायत्तमेतदधीनं स्वाहाकारः स्वाहेतिमन्त्रः वषट्कारो वषडिति मन्त्रः विविधा विद्याः वेदाद्याश्च अस्यामायत्ताः एतत्पयआदिप्राशनेन चित्तशुद्धेः प्राणत्राणदेहबलादेश्च साध्यत्वात्तदेकमूलत्वम् अत्रार्थे न संशयः सत्येन वदामीत्यर्थः । कारणैरुक्तैरुक्तैश्च ॥ ११–१६ ॥

रा० टी०—तत्प्रतिवचनमेवाह—नेति । हे राजन् ! गवां शतसहस्रेण शतसहस्रसंख्याकगवीभिः गवां कोटिशतैः कोटिशतसंख्याकगवीभिर्वा रजतस्य राशीभिर्वा अहं शबलां न दास्यामि । अपिशब्दो वार्थे ॥ ११ ॥

रा० टी०—दानाभावे हेतुं वदन्नाह—न परीति । हे अरिंदम ! आत्मवतो मनस्विनः शाश्वती नित्या कीर्तिरिव मह्यं प्रिया इयं शबला मत्सकाशात्परित्यागं वियोगं प्राप्तुं नार्हा । प्रिया प्राप्तुमिति चाध्याहृतम् ॥ १२ ॥

---

१ अपीति गो. रा. पाठः । २ मुनिसत्तमः इति गो. रा. पाठः ।

शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा । अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ॥ १३ ॥
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च । स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ॥ १४ ॥
आयत्तमत्र राजर्षे सर्वमेतन्न संशयः । सर्वस्वमेतत्सत्येन मम तुष्टिकरी तथा ॥ १५ ॥
कारणैर्बहुभी राजन्न दास्ये शबलां तव । वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्तदा ॥ १६ ॥
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः । हैरण्यकक्षग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥ १७ ॥
ददामि कुञ्जराणां ते सहस्राणि चतुर्दश । हैरण्यानां रथानां चे श्वेताश्वानां चतुर्युजाम् ॥ १८ ॥
ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् । हयानां देशजातानां कुलजानां महौजसाम् ॥ १९ ॥

१३ ] ति० टी०–कुत इयं परित्यागं नार्हेत्यत्राह—शाश्वतीति । यथात्मवतो राजयोगवतो विद्यादिजा कीर्तिः शाश्वती नित्यसंबद्धा एवं मह्यं ब्रह्मदत्ता शबला नित्यं मत्संबद्धा । एवमादरे बीजमाह—हव्यं दैवं कव्यं पित्र्यं प्राणयात्रा जीवनम् ॥ १३ ॥

रा० टी०–एतत्त्यागे मम निर्वाहो नैव भविष्यतीति बोधयन्नाह–अस्यामित्यादिश्लोकत्रयेण । हव्यं देवतोद्देश्यकं कव्यं पित्रुद्देश्यकं च प्राणयात्रा शरीरनिर्वाहश्च तथा अग्निहोत्रं च तथाबलिर्भूतबलिश्च तथा होमश्च अस्यां शबलायामेवायत्तम् शबलाधीनमेवेत्यर्थः । एक एवशब्दस्तथार्थे ॥ १३ ॥

१४ ] ति० टी०–आयत्तमधीनम् बलिर्भूतबलिः होमो वैश्वदेवादिः आयत्त इत्यस्य सर्वत्रानुकर्षः स्वाहाकारवषट्कारौ तत्साध्ययज्ञौ विद्या इति एतत्पयःप्राशनेन चित्तशुद्धेः प्राणतृप्तेर्देहपाटवाच्च तत्साध्यविद्यानामेतदायत्तत्वम् ॥ १४ ॥

रा० टी०–स्वाहेति । हे राजर्षे ! स्वाहाकारवषट्कारौ मन्त्रविशेषौ तथा विविधा अनेकप्रकारा विद्याश्च एतत्सर्वं अत्र अस्यां गवि आयत्तं मन्त्रग्रहणमूलभूतानां प्राणतृप्तिबलादीनामेतज्जनितपयस्साध्यत्वेन सर्वमेतदधीनमित्यर्थः । अत्र अस्मिन्विषये संशयो न अत्रेत्युभयान्वयि ॥ १४ ॥

१५ ] ति० टी०–एतत्सर्वमातिथ्यादि । एतच्छबलारूपमेव मे सर्वस्वम् । सत्येन शपे इति शेषः । तथा दर्शनादिना मम तुष्टिकरी च ॥ १५ ॥

रा० टी०–तदेवोपसंहरन्नाह–सर्वस्वमिति । हे राजन् ! एतच्छबलारूपं वस्तु मम सर्वस्वं सत्येन ब्रवीमीति शेषः । तत्र हेतुः यतः सदा मम तुष्टिकरी अतो बहुभिरनेकविधैः कारणैः अहं शबलां तव न दास्ये । संबन्धसामान्यविवक्षया षष्ठी ॥ १५ ॥

१६ ] ति० टी०–कारणैरुक्तैः साभिप्रायं चैतद्बोध्यम् १६

रा० टी०–वसिष्ठेनेति । एवमनेन प्रकारेणैव वशिष्ठेन उक्तः वाक्यविशारदः वाक्यार्थज्ञाने निपुणः विश्वामित्रः तदा वसिष्ठोक्त्यनन्तरसमये एव संरब्धतरमत्यन्ताभिनिवेशसूचकं अत्यर्थं उत्कृष्टार्थकं वाक्यमब्रवीत् । तुशब्द एवार्थे ॥ १६ ॥

गो०टी०–वसिष्ठेनेति । संरब्धतरमत्यन्ताभिनिवेशयुक्तम् १७

१७ ] ति० टी०–संरब्धतरमत्याग्रहयुक्तम् । हैरण्या हिरण्यविकाराः कक्षा घण्टोपेतमध्यबन्धनार्थशृङ्खलाः ग्रैवेयं ग्रीवालंकारशृङ्खलादि ॥ १७ ॥

रा० टी०–तद्वचनमेवाह–हैरण्येत्यादिपञ्चभिः । हैरण्यकक्षाग्रैवेयान् हैरण्यानि हिरण्यनिर्मितानि कक्षाग्रैवेयानि मध्यबन्धनग्रीवाबन्धनरज्जवो येषां तान् सुवर्णाङ्कुशभूषितान् सुवर्णनिर्मिताङ्कुशसहितान् कुञ्जराणां सहस्राणि चतुर्दश चतुर्दशसहस्रसंख्यातकुञ्जरान् ते तुभ्यमहं दास्यामि ' कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । ग्रैवेयानित्यादौ पुँस्त्वमार्षम् १७

गो० टी०–हैरण्येति । हैरण्यानि हिरण्मयानि कक्ष्या ग्रैवेयाणि येषां ते कक्ष्या मध्यबन्धनार्था रज्जुः ' कक्ष्या प्रकोष्ठे हर्म्यादेः कांच्यां मध्येभबन्धने ' इत्यमरः । ग्रैवेयाणि ग्रीवाबन्धनरज्जवः " ग्रीवाभ्योऽण् च " इति चाङ्भ् । सहस्राणीत्यस्य पुँल्लिङ्गविशेषणमार्षम् ॥ १८ ॥

१८ ] ति० टी०–श्वेताश्वानां चतुर्युजाम् चतुःसंख्याकश्वेताश्वयुतानामित्यर्थः।आर्षः समासः।'रथानां च' इति पाठः१८

रा० टी०–हैरण्यानामिति । हैरण्यानां हिरण्यनिर्मितानां श्वेताश्वानां चतुर्भिश्चतुर्भिर्युक् योगो येषु तेषां किङ्किणीकविभूषितान् किङ्किणीकैर्विभूषितानां रथानामष्टौ शतान् ते तुभ्यं दास्याम्येव चतुर्युजामित्येतद्घटकीभूतचतुःशब्दस्य नित्यसापेक्षत्वेऽपि चैत्रस्य गुरुकुलमित्यादिवत्समासः । किङ्किणीकविभूषितानित्यत्र षष्ठ्यर्थे द्वितीया । चशब्द एवार्थे ॥ १८ ॥

गो० टी०–हैरण्यानामिति । चतुर्युजां चतुर्भिरश्वैर्युक्तानां गमकत्वात्समासः संख्यानियमपरत्वान्न पुनरुक्तिः । किंकिणीकैर्विभूषितान् ॥ १९ ॥

१९ ] ति० टी०–किंकिणीकविभूषितानिति षष्ठ्यर्थे द्वितीया रथानां विशेषणमेतत् । देशो बाह्लीकादिः । कुलमुच्चैःश्रवआदीनां गन्धर्वकुलं वा ' गन्धर्वकुलजातस्त्वम् ' इति पुराणवचनात् ॥ १९ ॥

रा० टी०–हयानामिति । हे सुव्रत ! देशजातानां काम्बोजबाह्लीकादिदेशोत्पन्नानां कुलजातानां गन्धर्वकुलप्रसूतानामत एव महौजसां हयानामेकं सहस्रं दश च दास्यामि तव तुभ्यम् ॥ १९ ॥

१ सदेति गो. रा. पाठः । २ तत इति गो. पाठः । ३ कक्ष्येति गो. पाठः । ४ दास्यामीति रा. पाठः । ५ ते इति गो. पाठ॰ मीति रा. पाठः ।

सहस्रमेकं दश च ददामि तव सुव्रत । नानावर्णविभक्तानां वयःस्थानां तथैव च ॥
ददाम्येकां गवां कोटिं शबला दीयतां मम ॥ ॥ २० ॥
यावदिच्छसि रत्नानि हिरण्यं वा द्विजोत्तम । तावद्ददामि ते[3] सर्वं दीयतां शबला मम ॥ २१ ॥
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता । न दास्यामीति शबलां प्राह राजन्कथंचन ॥ २२ ॥
एतदेव हि मे रत्नमेतदेव हि मे धनम् । एतदेव हि सर्वस्वमेतदेव हि जीवितम् ॥ २३ ॥
दर्शश्च पौर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः । एतदेव हि मे राजन्विविधाश्च क्रियास्तदा ॥ २४ ॥
[4]अतोमूलाः क्रियाः सवा मम राजन्न संशयः । बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुःपञ्चाशः सर्गः ।

कौशिकभटैर्हठान्नीयमानत्वाच्छबलाया वसिष्ठं प्रति किं मां त्यजसीति प्रश्नः, वसिष्ठप्रेरितशबलासृष्टसैनिकैर्विश्वामित्रसेनाविद्रावणं, संक्रुद्धविश्वामित्रेण च शस्त्रप्रक्षेपेण तत्सेनाया दूरोत्सारणम् ।

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः । तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत ॥ १ ॥
नीयमाना तु शबला राम राज्ञा महात्मना । दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २ ॥

---

गो० टी०—हयानामिति । देशाः काम्भोजबाह्लीकादयः कुलजानां गन्धर्वकुलजातानां गन्धर्वकुलजातस्त्वमिति पुराणवचनात् ॥ २० ॥

२० ] ति० टी०—अनेकवर्णैर्विभक्तानां प्राप्तभेदानाम् । वयःस्थानां तरुणीनाम् ‘ वयःस्थस्तरुणो युवा ’ इति कोशात् । एकां कोटिमित्यन्वयः ॥ २० ॥

रा० टी०—नानेति । नानावर्णविभक्तानां नानावर्णैर्विभक्तानां परस्परं भेदविशिष्टानां वयःस्थानां तरुणीनां गवामेकं कोटिं ददाम्येव अतः शबला ममैव दीयताम् । तथाशब्दो हेतौ । चशब्दः एवार्थे । ‘ वयस्थस्तरुणो युवा ’ इति कोशः ॥ २० ॥

गो० टी०—नानेति । नानावर्णैः विभक्तानामन्योन्यविलक्षणानाम् ॥ २१ ॥

२१-२२ ] ति० टी०—यावदिति । इतोऽप्यधिकं वा यावदिच्छसीत्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—उपसंहरन्नाह—यावदिति । हे द्विजोत्तम ! यावद्रत्नं हिरण्यं वेच्छसि तावत्सर्वं ददामि तव तस्मात् शबला ममैव दीयताम् । एको वाशब्द एवार्थे ॥ २१ ॥

गो० टी०—यावदिति । यावत्प्रमाणमिच्छसि तावत्प्रमाणं सर्वं ददामि ॥ २२ ॥

रा० टी०—एवमिति । धीमता विश्वामित्रेण एवमनेन प्रकारेणोक्तः भगवान्वशिष्ठः हे राजन् ! अहं शबलां कथंचनापि न दास्यामीति प्राह । तुशब्दोऽप्यर्थे ॥ २२ ॥

गो० टी०—एवमिति । हे राजन् ! शबलां न दास्यामीत्यन्वयः २२

२३ ] ति० टी०—एतच्छबलारूपं वस्तु ॥ २३ ॥

रा० टी०—दानाभावे हेतुं वदन्नाह—एतदित्यारभ्यासर्गम् । [राजन्] ! एतच्छबलैव मे रत्नं मण्यादि एतदेव मे धनं स्वर्णरजतादि एतदेव मे सर्वस्वं अन्नादि अत एव एतदेव मे जीवनम् । हिशब्दाः स्वस्वान्वयिनां प्रसिद्धिं द्योतयन्ति ॥ २३ ॥

गो० टी०—एतदित्यादित्रयम् । अदोमूलाः एतन्मूलाः प्रलापेन भवत इति शेषः । कामान् दोग्धुं शीलमस्त्यस्या इति कामदोहिनीं “सुप्यजातौ—” इति णिनिः ॥ २४-२६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

२४ ] ति० टी०—आप्तदक्षिणा इत्यनेन हव्यादिवद्दक्षिणाप्येतदधीनेति सूचितम् एतदेव क्रिया इत्यस्यैव विवरणम् ॥२४॥

रा० टी०—दर्श इति । दर्शादयः विविधाः अनेकप्रकाराः क्रियाश्च तथा तेन प्रकारेण एतच्छबलैव । श्लोकद्वयं संमिलितान्वयि । एतदिति सामान्ये नपुंसकम् ॥ २४ ॥

२५ ] ति० टी०—अतोमूलाः एतन्मूला इत्यर्थः । सर्वथा दानाभावे हेतुगर्भं विशेषणम् । कामदोहिनीमिच्छाविषयदोहनशीलाम् । काव्यलिङ्गमलंकारः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-आदिकाव्ये बालकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०—उपसंहरन्नाह—अद इति । हे राजन् ! अदः शबला मूलं यासां ताः मम सर्वाः क्रियाः अत्र संशयो न अतः कामदोहिनीं शबलामहं न दास्ये बहुना प्रलापेन किं एतेन अस्याः प्राप्तौ वाञ्छां त्यजेति ध्वनितम्, तेन पुनर्न याचेति व्यञ्जितम् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

१-२] ति० टी०—अथ दण्डोपायप्रवृत्तिमाह—कामधेनुमिति । न त्यजते नात्यजत् । अन्वकर्षत बलादिति शेषः ॥ १ ॥ २ ॥

---

[1] पीति रा० पाठः । २ रत्नं वेति गो० रा० पाठः । ३ तत्सर्वमिति गो० रा० पाठः । ४ अदोमूला इति गो० रा० पाठः ।

परित्यक्ता वसिष्ठेन किमहं सुमहात्मना । याहं राजभृतैर्दीना ह्रियेयं भृशदुःखिता ॥ ३ ॥
किं मयापकृतं तस्य महर्षेर्भावितात्मनः । यन्मामनागसं दृष्ट्वा भक्तां त्यजति धार्मिकः ॥ ४ ॥
इति संचिन्तयित्वा तु निःश्वस्य च पुनःपुनः । जगाम वेगेन तदा वसिष्ठं परमौजसम् ॥ ५ ॥
निर्धूय तांस्तदा भृत्याञ्छतशः शत्रुसूदन । जगामानिलवेगेन पादमूलं महात्मनः ॥ ६ ॥
शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् । वसिष्ठस्याग्रतः स्थित्वा रुदन्ती मेघनिःस्वना ॥ ७ ॥
भगवन्किं परित्यक्ता त्वयाहं ब्रह्मणः सुत । यस्माद्राजभृता मां हि नयन्ते त्वत्सकाशतः ॥ ८ ॥
एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् । शोकसंतप्तहृदयां स्वसारमिव दुःखिताम् ॥ ९ ॥
न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया । एष त्वां नयते राजा बलान्मत्तो महाबलः ॥ १० ॥

रा० टी०—कामधेनुमिति । हे राम ! मुनिः वशिष्ठः यदा कामधेनुं न त्यजते नात्यजत् तदापि विश्वामित्रः अस्य वशिष्ठस्य शबलामन्वकर्षत हठादनयत् ॥ १ ॥

गो० टी०—अथ बलात्कारकुपितवसिष्ठप्रहितकामधेनोर्बलसृष्टिश्चतुःपञ्चाशे । कामधेनुमित्यादि दशकम् ॥ १ ॥ २ ॥

रा० टी०—नीयमानेति । हे राम ! महात्मना राज्ञा विश्वामित्रेण नीयमाना बलादाकृष्यमाणा अत एव दुःखिता अत एव रुदन्ती शोककर्षिता शोकव्याकुलचित्ता शबला तु चिन्तयामास ॥ २ ॥

३ ] ति० टी०—राजभृतै राजसेवकैः । 'भटैः' इति क्वचित्पाठः । ह्रियेय कर्मणि लिङ् । भृशदुःखिता भृशेनातिशयेन दुःखिता अस्मीति शेषः । भृशशब्दो बहुपर्यायो वा ॥ ३ ॥

रा० टी०—तच्चिन्तामेवाह—परीति । या अहं राजभृतैः विश्वामित्रभृत्यैः ह्रियेय सा दीना भृशं दुःखिता अहं सुमहात्मना वशिष्ठेन किं किमर्थं परित्यक्ता ॥ ३ ॥

गो० टी०—ह्रियेयं कर्मणि संप्रश्ने लिङ् कथमपि ह्रियेयमित्यर्थः । भृशदुःखिता भृशं दुःखिता वृत्तिविषये मकारलोपो भृशमादिमान्ताव्ययस्येष्यते ॥ ३–५ ॥

४–५ ] ति० टी०—अपकृतमपराधं दृष्ट्वा ज्ञात्वापि भक्तां सेवापराम् ॥ ४ ॥ ५ ॥

रा० टी०—किमिति । भावितात्मनः चिन्तनीयस्वरूपस्य महर्षेः वशिष्ठस्य मया किमपकृतं यत् येनापकारेण अनागसं मज्ज्ञानविषयीभूतापराधरहितां भक्तां तत्सेवापरामत एव इष्टां तदिच्छाविषयीभूतां मां धार्मिकः धर्मनिरतो वशिष्ठः त्यजति ॥ ४ ॥

रा० टी०—इतीति । तदा स्वापकर्षणकाले इति अनेन प्रकारेण चिन्तयित्वा पुनः पुनः निश्वस्य च सा शबला वायुवेगेनैव परमौजसं वशिष्ठं जगाम । तुशब्द एवार्थे ॥ ५ ॥

६ ] ति० टी०—शतशो भृत्यान्स्वकर्षकान् । पादमूलं पादसमीपम् । महात्मनो वसिष्ठस्य ॥ ६ ॥

रा० टी०—गमनप्रकारं वर्णयन्नाह—निरिति । हे शत्रुसूदन ! तदा स्वापकर्षणकाले शतशस्तान् भृत्यान् निर्धूय निपात्य महात्मनो वशिष्ठस्य पादमूलं चरणसमीपं अनिलवेगेन जगाम शबलेति शेषः ॥ ६ ॥

७ ] ति० टी०—रोदनमश्रुपातः । क्रोशनमार्तशब्दः । रुदन्त्या एव ऋषिसमीपगमनं रुदन्त्यैव च कथनमित्येतदर्थं द्वी रुदन्तीति ॥ ७ ॥

रा० टी०—शबलेति । रुदन्ती रोदनं कुर्वती क्रोशन्ती हे ऋषे ! इत्याह्वानं कुर्वती रुदन्ती स्वरोदनहेतुककरुणोत्पादनेन अन्यानपि रोदयन्ती च मेघनिःस्वना गम्भीरनादा सा शबला वशिष्ठस्याग्रत एव स्थित्वा इदमब्रवीत् । एकश्चशब्द एवार्थे ॥ ७ ॥

गो० टी०—क्रोशन्ती आर्तस्वरं *कुर्वन्ती ॥ ६ ॥

८ ] ति० टी०—सकाशः समीपम् ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—भगवन्निति । हे भगवन् ब्रह्मणः सुत ! त्वयाऽहं किं किमर्थं परित्यक्ता यस्मात्परित्यागाद्धेतोः राजभृताः राजभटाः त्वत्सकाशतो मां नयन्ति ॥ ८ ॥

गो० टी०—राजभृताः राजभटाः त्वत्सकाशतस्त्वत्समीपतः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—स्वसा भगिनी ॥ ९ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण उक्तः शबलया प्रार्थित एव ब्रह्मर्षिः वशिष्ठः शोकसंतप्तहृदयां दुःखितां स्वसारमिव भगिनीसदृशीं शबलामिदं वचनमब्रवीत् । तुशब्द एवार्थे ॥ ९ ॥

१० ] ति० टी०—बलात्क्षात्रात् । मत्तोऽविवेकी ॥ १० ॥

रा० टी०—तद्वचनमेवाह—नेति । हे शबले ! त्वया मे नापकृतमतस्त्वामहं न त्यजामि महाबलः मत्तः उन्मत्त एषः राजा बलात् हठात् त्वां नयते । अपिर्हेतौ ॥ १० ॥

गो० टी०—मत्तः मत्सकाशात् । मह्यं मम तर्हि तपोबलेन किमिति न दण्ड्यते तत्राह—राजा त्वथाविशेषत इति । राजा तपोबलेन न दण्ड्य इत्यर्थः ॥ ९–१० ॥

१ भटैरिति गो. पाठः । २ ह्रियेयमिति गो. पाठः । ३ भक्तामिष्टामिति गो. रा. पाठः । ४ श्लोकोऽयं गो. नास्ति । ५ सेति रा. पाठः । ६ मेघदुन्दुभिराविणीति गो. पाठः । ७ त्वेति रा. पाठः । * कुर्वतीतियुक्तं भाति ।

नहि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः । बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ ११ ॥
इयमक्षौहिणी पूर्णा गजवाजिरथाकुला । हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥ १२ ॥
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् । वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् ॥ १३ ॥
न बलं क्षत्रियस्याहुर्ब्राह्मणो बलवत्तरः । ब्रह्मन्ब्रह्मबलं दिव्यं क्षात्राच्च बलवत्तरम् ॥ १४ ॥
अप्रमेयं बलं तुभ्यं न त्वया बलवत्तरः । विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १५ ॥
नियुङ्क्ष्व मां महातेजस्त्वं ब्रह्मबलसंभृताम् । तस्य दर्पं बलं यत्नं नाशयामि दुरात्मनः ॥ १६ ॥
इत्युक्तस्तु तया राम वसिष्ठस्तु महायशाः । सृजस्वेति तदोवाच बलं परबलार्दनम् ॥ १७ ॥

११ ] ति० टी०—मह्यं मम । नहि तद्बलेन तुल्यमित्यर्थः । तपोबलेन तर्हि दण्ड्यताम् तत्राह—राजा त्वित्यादि । राजत्वात्तपोबलेन न दण्ड्य इति भावः । तद्वक्ष्यति किष्किन्धायाम्—'दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च । राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् । देवा मानुषरूपेण चरन्त्येते महीतले ॥' इति । अद्य विशेषतः अवध्य इति शेषः । अद्य कृतातिथ्यके दिने तेनातिथित्वाद्विशेषतोऽवध्य इति भावः । बली राजेत्यनेन युद्धाजेयत्वमुक्तम् । पृथिवीपतिक्षत्रियत्वेन तद्वधस्य महापातकसमता बोधिता ॥ ११ ॥

रा० टी०—नहीति । विशेषतो बलं बलवदपि मह्यं पूजनीयं ब्राह्मणकुलमथ विवादसमये राजा राज्ञा तुल्यं नैव ब्राह्मणकुलस्य शान्तिगुणविशिष्टत्वेन युद्धानर्हत्वादिति भावः । अतो राजा प्रजाविषयकानुरागविशिष्टः पृथिव्याः पतिः क्षत्रिय एवास्मिन् विवादसमये बली । हिशब्दोऽप्यर्थे तुशब्द एवार्थे एकश्चशब्दो हेत्वर्थे द्वितीयश्चशब्दोऽस्मिन्नित्यर्थे पूर्वो राजा क्विबन्तप्रकृतिकस्तृतीयान्तः संज्ञापूर्वकविधेरनित्यत्वान्मह्यमित्यत्र टिह्विरहः ॥ ११ ॥

१२ ] ति० टी०—बलित्वमेवोपपादयति—इयमिति । हस्तिस्थैर्ध्वजैः समाकीर्णा ॥ १२ ॥

रा० टी०—तस्य सहेतुकं बलवत्तरत्वमाह—इयमिति । सवाजिरथसंकुला वाजिसहितरथैः संकुला व्याप्ता हस्तिध्वजसमाकीर्णा हस्तिश्रेष्ठैः समाकीर्णा पूर्णा इयं विश्वामित्राक्षौहिणी अस्तीति शेषः । तेन हेतुनाऽसौ विश्वामित्रो बलवत्तरः अतिबली अस्ति ॥ १२ ॥

गो० टी०—इयमित्यादिपञ्च । सवाजिरथसंकुला वाजिसहितरथैः संकुला तुभ्यं तव त्वया त्वत्तः त्वद्ब्रह्मबलेन त्वन्मन्त्रबलेन संभृतां संवर्धितप्रभावाम् ॥ ११–१६ ॥

१३ ] ति० टी०—विनीतवद्विनयोपेतम् ॥ १३ ॥

रा० टी०—एवमिति । एवं वर्णितप्रकारेण वशिष्ठेन उक्ता वचनज्ञा वचनतात्पर्यज्ञात्री सा शबला विनीतवद् विनम्रतायुक्तं वचनमतुलप्रभं ब्रह्मर्षिं वशिष्ठं प्रत्युवाच ॥ १३ ॥

१४ ] ति० टी०—न बलमल्पबलम् । बलवत्तराः क्षत्रियादिभ्यः । क्षात्रात्क्षत्रियबलादपि बलवत्तरमधिकम् ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—नेति । क्षत्रियस्य न बलं ब्राह्मणबलापेक्षया अल्पबलमाहुः तत्वज्ञा इति शेषः । अतो ब्राह्मणाः बलवत्तराः एतेन शान्तिगुणविशिष्टत्वेऽपि क्षत्रियादिकृतब्राह्मणापकृतिजनितदुरितध्वंसः स्वनिष्ठकरुणया ब्राह्मणैः कर्तव्य एवेति ध्वनितम् । सहेतुकं ब्राह्मणबलस्य बलवत्तरत्वं वदन्नाह—हे ब्रह्मन् ! ब्रह्मबलं ब्राह्मणस्य तव बलं दिव्यं प्राकृतविलक्षणमतः क्षत्रात् क्षत्रियबलात् बलवत्तरमस्तीति शेषः । ब्रह्मबलमित्युभयान्वयि । तुशब्दो हेत्वर्थे अल्पार्थको नञ् ॥१४॥

१५ ] ति० टी०—तुभ्यं तव । न त्वया सदृशोऽपीति शेषः । बलवत्तर इति दूरे इति शेषः । महावीर्यो महावीर्योऽपि । तत्र हेतुस्तेजस्तवेत्यादि ॥ १५ ॥

रा० टी०—ननु सैन्यबलेन तस्य बलवत्तरत्वमक्षतमेवेत्यत आह—अप्रमेयमिति । दुरासदं निवर्तयितुमशक्यं तव तेज तपोजनितप्रभाव एवमप्रमेयमियत्तारहितं तुभ्यं तव बलं सैन्यमस्तीति शेषः । अतः महावीर्यः सैन्यादिवीर्यविशिष्टः विश्वामित्रस्त्वया त्वत्तो बलवत्तरो न ॥ १५ ॥

१६–१७ ] ति० टी०—ननु त्वमेव तस्य बलं नाशय तत्राह—नियुङ्क्ष्वेति । कामधेनुत्वान्नियोगापेक्षापरकाम्यार्थसृष्टावेव तस्याः सामर्थ्यात् । ब्रह्मबलसंभृतां तादृशकार्यसमर्थत्वेन मां ध्यायस्वेत्यर्थः ॥ १६ ॥ १७ ॥

रा० टी०—राजपराभवोपायं वदन्ती आह—नियुङ्क्ष्वेति । हे महातेजः त्वद्ब्रह्मबलसंभृतां तव मन्त्रबलेन संपोषितां मां नियुङ्क्ष्व तद्बलनाशने नियोजय तेन दुरात्मनः दुष्टस्वभावस्य तस्य विश्वामित्रस्य यद्दर्पं बलं च तत् नाशयामि । विनापि चं समुच्चयः ॥ १६ ॥

रा० टी०—इतीति । हे राम ! तया शबलया इति अनेन प्रकारेण उक्त एव महायशाः वशिष्ठः परबलार्दनं शत्रुसैन्यनाशकं बलं सैन्यं सृजस्व इति तदा धेनुप्रार्थनोत्तरसमये एवमुवाच धेनुमिति शेषः । तुशब्दौ एवार्थौ ॥ १७ ॥

गो० टी०—इत्युक्त इत्याद्यष्टौ । आरुजति हिनस्तीत्यारुजं बलं सैन्यम् ॥ १६ ॥ १७ ॥

१ सवाजिरथसंकुलेति गो. रा. पाठः । २ ब्राह्मणो बलवत्तर इति गो. पाठः । ३ क्षत्रात्त्विति गो. रा. पाठः । ४ त्वद्ब्रह्मेति गो. रा. पाठः । यत्तादिति गो. रा. पाठः । ६ बलारुजमिति गो. पाठः ।

तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत्तदा । तस्या हुंभारवोत्सृष्टाः पह्लवाः शतशो नृप ॥ १८ ॥
नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः । स राजा परमक्रुद्धः क्रोधविस्फारितेक्षणः ॥ १९ ॥
पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि । विश्वामित्रार्दितान्दृष्ट्वा पह्लवाञ्शतशस्तदा ॥ २० ॥
भूय एवासृजद्घोराञ्छकान्यवनमिश्रितान् । तैरासीत्संवृता भूमिः शकैर्यवनमिश्रितैः ॥ २१ ॥
प्रभावद्भिर्महावीर्यैर्हेमकिंजल्कसंनिभैः । तीक्ष्णासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः ॥ २२ ॥
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः । ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोचह ॥
तैस्ते यवनकाम्बोजा बर्बराश्चाकुलीकृताः ॥ ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ।

वासिष्ठप्रेरितशबला निजावयवसृष्टबलेन विश्वामित्रसेनां निःशेषं बभञ्ज जिघांसयाऽऽपतद्विश्वामित्रसुतशतं वसिष्ठो हुंकारेणैव भस्मतां निनाय आलोच्येदं विश्वामित्रोऽवशिष्टमेकं पुत्रं राज्ये नियोज्य तपस्तप्तुं हिमवन्तं ययौ, ततो मृडात्प्राप्तसकलास्त्रत्वेन दृप्तः संप्राप्याश्रममस्त्रतेजसा मुनिजनान्समक्षोभयद्वासिष्ठोऽपि दण्डमुद्यम्याग्रे तस्थौ ।

ततस्तानाकुलान्दृष्ट्वा विश्वामित्रास्त्रमोहितान् । वसिष्ठश्चोदयामास कामधुक्सृज योगतः ॥ १ ॥
तस्या हुंकारतो जाताः काम्बोजा रविसंनिभाः । ऊधसश्चाथ संभूता बर्बराः शस्त्रपाणयः ॥ २ ॥

---

१८ ] ति० टी०—हुम्भानाम गवां शब्दाः । पह्लवशकयवनकाम्बोजबर्बरा म्लेच्छजातिविशेषाः ॥ १८ ॥

रा० टी०—तस्येति । तदा वशिष्ठोक्तिसमये तस्य वशिष्ठस्य तद्वचनं श्रुत्वा सा सुरभिः असृजत् राजबलविघातकानिति शेषः । सर्जनप्रकारं वर्णयन्नाह—हे नृप ! तस्याः धेनोः हुम्भारवोत्सृष्टाः हुंकारशब्दोत्पन्नाः शतशः पह्लवाः यवनविशेषाः तदुपलक्षितपह्लवकाम्बोजबर्बराः विश्वामित्रस्य सर्वं बलं सैन्यं विश्वामित्रस्य पश्यतः पश्यन्तं विश्वामित्रमनादृत्य नाशयन्ति अनाशयन्त वर्तमानसामीप्य इति भूते लट् । सार्धश्लोक एकान्वयी । पह्लवशकयवनकाम्बोजबर्बराख्या म्लेच्छविशेषा इति प्रसिद्धम् ॥ १८ ॥

गो० टी०—हुम्भारवः पशूनां हुम्भाशब्दः।उत्सृष्टाः निर्मिताः। पह्लवशकयवनादिशब्दाः म्लेच्छजातिविशेषवचनाः पश्यत इत्यनादरे षष्ठी ॥ १८ ॥

१९] ति०टी०-पश्यत इत्यनादरे षष्ठी।विस्फारितं विवृतम् १९॥

रा० टी०—स इति । परमक्रुद्धः अतिक्रोधविशिष्टः अत एव क्रोधविस्फारितेक्षणः क्रोधेन विस्फारिते ईक्षणे नेत्रे येन स राजा विश्वामित्रः ॥ १९ ॥

गो० टी०—विस्फारितं विवृतम् ॥ १९ ॥

२०-२१ ] ति० टी०—अर्दिताः पीडिताः ॥ २० ॥ २१ ॥

रा० टी०—उच्चावचैः न्यूनाधिकभावतामापन्नैः शस्त्रैः अपिना तर्जनादिभिः पह्लवान् नाशयामास तदा विश्वामित्रप्रहरणकाले शतशः पह्लवान् विश्वामित्रार्दितान्दृष्ट्वा अवलोक्य॥ २० ॥

गो० टी०—अर्दितान् हिंसितान् ॥ २० ॥

रा० टी०—घोरान् भयंकरान् यवनमिश्रितान् यवनसजातीयान् शकान् भूयोऽपि असृजत् शबलेति शेषः । तैः शबलासृष्टैः यवनमिश्रितैः शकैः संवृता भूमिः आसीत् ॥ २१ ॥

२२-२३ ] ति० टी०—प्रभा दुर्निरीक्ष्यं तेजः । हेम्नः किंजल्कस्य च सदृशैः । हेमवर्णाम्बरं पीताम्बरम् ॥२२॥२३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०—प्रभावद्भिरिति । प्रभावद्भिः अतिप्रभाविशिष्टैः महावीर्यैः अतिपराक्रमवद्भिः हेमकिञ्जल्कसन्निभैः चम्पककेशरतुल्यैः दीर्घासिपट्टिशधरैः बृहदस्यादिविशिष्टैः हेमवर्णाम्बरावृतैः हेमवर्णसदृशवर्णविशिष्टवस्त्रयुक्तैः पावकैरिव प्रदीप्तैः यवनमिश्रितैः शकैः सर्वं तद्बलं विश्वामित्रसैन्यं निर्दग्धं ततः स्वसैन्यनिर्दाहानन्तरमेव महातेजाः विश्वामित्रः अस्त्राणि मुमोच। हशब्द एवार्थे ॥ २२ ॥ २३ ॥

गो०टी०—हेमकिञ्जल्कसन्निभैः हेमशब्दश्चम्पकपरः तस्य कनकाह्वयत्वात् तत्केसरतुल्यैरित्यर्थः।पट्टिशः असिविशेषः २१—२३

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०—तैर्विश्वामित्रास्त्रैः ते प्रसिद्धाः यवनकाम्बोजाः पह्लवाश्च आकुलीकृताः व्याकुलतां प्रापिताः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुःपञ्चाशत्तमः सर्गः ॥ ५४ ॥

१-२ ] ति० टी०—आकुलान्पलायमानान् । कामधुगिति संबोधनम् योगतो योगमहिम्ना ॥ १ ॥ २ ॥

---

१ पप्लवा इति गो. पाठः । २ पप्लवानिति गो. पाठः । ३ पप्लवानिति गो. पाठः । ४ दीर्घैरिति गो. रा. पाठः । ५ पप्लवा इति गो. पह्लवा इति रा. पाठः । ६ हुम्भारवादिति गो. रा. पाठः । ७ एवेति रा. त्वथेति गो. पाठः । ८ पप्लवा इति गो. पह्लवा इति रा. पाठः ।

योनिदेशाच्च यवना शकृद्देशाच्छकाः स्मृताः । रोमकूपेषु म्लेच्छाश्च हारीताः सकिरातकाः ॥ ३ ॥
तैस्तान्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् । सपदातिगजं साश्वं सरथं रघुनन्दन ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना । विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥ ५ ॥
अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतां वरम् । हुंकारेणैव तान्सर्वान्निर्ददाह महानृषिः ॥ ६ ॥
ते साश्वरथपादाता वसिष्ठेन महात्मना । भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तथा ॥ ७ ॥
दृष्ट्वा विनाशितान्सर्वान्बलं च सुमहायशाः । सव्रीडं चिन्तयाविष्टो विश्वामित्रोऽभवत्तदा ॥ ८ ॥
समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥

रा० टी०—तत इति । ततः आकुलीभवनानन्तरं विश्वामित्रास्त्रमोहितान् अत एव आकुलान् व्याकुलचित्तान् तान् यवनादीन् दृष्ट्वा वशिष्ठश्चोदयामास धेनुमिति शेषः । तच्चोदनमेवाह—हे कामधुक् ! योगतः योगप्रभावात् त्वं सृज अन्यानपीति शेषः ॥ १ ॥

गो० टी०—अथ पुनर्दिव्यास्त्रलाभपूर्वं विश्वामित्रेण वसिष्ठाश्रमसंरोधः पञ्चपञ्चाशे—ततस्तानित्यादि । हे कामधुक् ! योगतः योगमहिम्ना तिरश्चोऽपि ब्रह्मप्रसादाद्योगशक्तिरस्तीति ज्ञेयम् ॥ १ ॥

रा० टी०—तस्या इति । तस्याः धेनोः हुम्भारवाद्धुंकारशब्दात् रविसंनिभाः सूर्यसदृशाः काम्बोजाः जाताः तस्याः ऊधसः स्तनदेशात्तु शस्त्रपाणयः एव पह्लवाः पुनः संभूताः । तुशब्दः पुनरर्थे ॥ २ ॥

गो० टी०—तस्या *इत्यादिचत्वारः । ऊधसः स्तनात् । हारीताः किरातजातिविशेषाः ॥ २ ॥ ३ ॥ ४ ॥

३ ] ति० टी०—रोमकूपेषु रोमकूपेभ्यः । म्लेच्छहारीतकिराता जातिविशेषाः ॥ ३ ॥

रा० टी०—योनीति । तस्याः योनिदेशात् यवनाः पुनर्जाताः तथा तेन प्रकारेण शकृद्देशात् गोमयनिःसरणस्थानात् शकाः यवनजातिविशेषाः जाताः । म्लेच्छाः यवनजातिविशेषाः हारिकाः किरातजातिविशेषाश्च किरातकाश्च तस्याः रोमकूपेषु जाताः । श्लोकद्वयमेकान्वयि तुश्चार्थे ॥ ३ ॥

४ ] ति० टी०—विश्वामित्रस्य तत्सैन्यम् ॥ ४ ॥

रा० टी०—तैरिति । तैः धेनूत्पादितकाम्बोजादिभिः सपदातिगजं पदातिगजसहितं साश्वमश्वसहितं सरथं रथसहितं विश्वामित्रस्य तत्सर्वं सैन्यं हे रघुनन्दन ! क्षणान्निषूदितं विनाशितम् ॥ ४ ॥

५ ] ति० टी०—विश्वामित्रसुतानां शतमृषिरेव धेनोर्बलम्, अतोऽयमेव नाशनीय इत्याशयेन वसिष्ठमभ्यधावत् ॥ ५ ॥

रा० टी०—दृष्ट्वेति । महात्मना वशिष्ठेन सैन्यं विश्वामित्रसेनां निषूदितं दृष्ट्वा नानाविधायुधं अनेकप्रकारायुधविशिष्टं सुसंक्रुद्धं मतिक्रोधविशिष्टं विश्वामित्रसुतानां शतं शतसंख्याकविश्वामित्र पुत्रा इत्यर्थः । जपतां मध्ये वरं श्रेष्ठं वशिष्ठमभ्यधावत् । सार्धश्लोक एकान्वयी ॥ ५ ॥

गो० टी०—दृष्ट्वेत्यादिषट् । वसिष्ठमभ्यधावत् तस्य सर्वविनाशमूलत्वादिति भावः । जपतांवरमिति हुंकारेण निरासे हेतुः ॥ ५ ॥ ६ ॥

६ ] ति० टी०—हुंकारेण तपोबलसंभृतेन । क्षत्रियत्वेऽपि पृथिवीपतित्वाभावात्तद्वधेऽल्पप्रायश्चित्तम् आततायित्वाच्चेति भावः ॥ ६ ॥

रा० टी०—महान् ऋषिः वशिष्ठः सर्वान् तान् विश्वामित्रसुतान् हुंकारेणैव निर्ददाह ॥ ६ ॥

७ ] ति० टी०—मुहूर्तेन भस्मीकृता इत्यपवर्गे तृतीया मासेनानुवाकोऽधीत इतिवत् ॥ ७ ॥

रा० टी०—दाहमेव विशदयन्नाह—ते इति । तदा धावनसमये साश्वरथपादाताः अश्वरथपदातिसहिताः ते विश्वामित्रसुताः महात्मना वशिष्ठेन मुहूर्तेन भस्मीकृताः भस्मतां प्रापिताः ॥ ७ ॥

गो० टी०—मुहूर्तेनेति । मासेनानुवाकोऽधीत इतिवदपवर्गे तृतीया ॥ ७ ॥ ८ ॥

८ ] ति० टी०—सर्वान्पुत्रान् । सव्रीडमिति क्रियाविशेषणम् ॥ ८ ॥

रा० टी०—दृष्ट्वेति । सुमहायशाः पूजनीयातियशोविशिष्टः । विश्वामित्रस्तदा पुत्रादिहननकाले सर्वान् पुत्रान् बलं सैन्यं च विनाशितान् दृष्ट्वा सव्रीडं यथा स्यात्तथा चिन्तया आविष्टः युक्तः अभवत् ॥ ८ ॥

९ ] ति० टी०—निर्वेगत्वे समुद्रोपमा निष्प्रभत्वे इतरे उपमे । उपरक्तो राहुग्रस्तः ॥ ९ ॥

रा० टी०—चिन्तास्वरूपं वर्णयन्नाह—समुद्र इति । निर्वेगः समुद्र इव भग्नदंष्ट्रः उरगः सर्प इव उपरक्तः राहुणा ग्रस्तः आदित्यः सूर्य इव सद्यः शीघ्रं निष्प्रभतां प्रभाराहित्यं गतः प्राप्तो विश्वामित्र आसीदिति शेषः ॥ ९ ॥

गो० टी०—निर्वेगः युद्धप्रवृत्तिरहितः उरग इव निःशक्तिरिति शेषः । उपरक्तः राहुग्रस्तः ॥ ९ ॥

१ तथेति गो. रा. पाठः । २ त्विति रा. पाठः । ३ हारिकास्तु किरातका इति रा. पाठः । ४ ददाह भगवानृषिरिति गो. पाठः । ५ तदेति गो. रा. पाठः । ६ पुत्रानिति गो. रा. पाठः । ७ सव्रीडश्चिन्तयेति गो. पाठः । * त्रय एवोपलभ्यन्ते ।

हतपुत्रबलो दीनो लूनपक्ष इव द्विजः। हतसर्वबलोत्साहो निर्वेदं समपद्यत ॥ १० ॥
स पुत्रमेकं राज्याय पालयेति नियुज्य च। पृथिवीं क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥ ११ ॥
स गत्वा हिमवत्पार्श्वे किन्नरोरगसेवितम्। महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२ ॥
केनचित्त्वथ कालेन देवेशो वृषभध्वजः। दर्शयामास वरदो विश्वामित्रं महामुनिम् ॥ १३ ॥
किमर्थं तप्यसे राजन्ब्रूहि यत्ते विवक्षितम्। वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयताम्॥ १४ ॥
एवमुक्तस्तु देवेन विश्वामित्रो महातपाः। प्रणिपत्य महादेवं विश्वामित्रोऽब्रवीदिदम् ॥ १५ ॥
यदि तुष्टो महादेव धनुर्वेदो ममानघ। साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥ १६ ॥
यानि देवेषु चास्त्राणि दानवेषु महर्षिषु। गन्धर्वयक्षरक्षःसु प्रतिभान्तु ममानघ ॥ १७ ॥
तव प्रसादाद्भवतु देवदेव ममेप्सितम्। एवमस्त्विति देवेशो वाक्यमुक्त्वा गतस्तदा ॥ १८ ॥
प्राप्य चास्त्राणि देवेशाद्विश्वामित्रो महाबलः। दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९ ॥
विवर्धमानो वीर्येण समुद्र इव पर्वणि। हतं मेने तदा राम वसिष्ठमृषिसत्तमम् ॥ २० ॥

१० ] ति० टी०—हतसर्वबलोत्साहः सर्वाणि बलानि शारीरबौद्धात्मादीनि तज्जन्योत्साहहीनः। निर्वेदं सर्वत्र निष्फलत्वबुद्धिजं चित्तखेदम् ॥ १० ॥

रा० टी०—हतेति। हतपुत्रबलः हताः पुत्रा बलानि च यस्य अत एव लूनः शातितः पक्षो यस्य स द्विजः पक्षी इव दीनः अत एव हतदर्पः विगतगर्वः अत एव हतोत्साहः विश्वामित्रः निर्वेदं अत्यन्तखेदं समपद्यत प्राप्नोत् ॥ १० ॥

गो० टी०—निर्वेदं दुःखम् ॥ १० ॥

११–१२ ] ति० टी०—एकम् अवशिष्टमिति शेषः। राज्याय राज्यं रक्षितुम्। पृथिवीं क्षत्रधर्मेण पालयेति नियुज्येत्यन्वयः ॥ ११ ॥ १२ ॥

रा० टी०—स इति। स विश्वामित्रः राज्याय राज्यं पालयितुं क्षत्रधर्मेणैव त्वं पृथिवीं पालयेति एकं पुत्रं नियुज्य वनमेव अभ्यपद्यत चशब्द एवार्थे ॥ ११ ॥

गो० टी०—स इत्यादिचत्वारः। एकमवशिष्टमिति शेषः। राज्याय राज्यं कर्तुं पृथिवीं क्षत्रधर्मेण पालयेत्यन्वयः॥११॥१२॥

रा० टी०—स इति। महातपाः स विश्वामित्रः किन्नरोरगसेवितं हिमवत्पार्श्वं गत्वा महादेवप्रसादार्थं तपस्तेपे ॥१२॥

१३–१५ ] ति० टी०—दर्शयामास आत्मानमिति शेषः ॥ १३–१५ ॥

रा० टी०—केनेति। अथ विश्वामित्रतपःप्रारम्भानन्तरमेव केनचित्कालेन वरदः निखिलाभीष्टदानसमर्थः देवेशः सकलदेवनियन्ता वृषभध्वजो महादेवः महाबलं विश्वामित्रं दर्शयामास स्वात्मानमिति शेषः। तुशब्द एवार्थे ॥ १३ ॥

गो० टी०—दर्शयामास आत्मानमिति शेषः॥ १३॥ १४॥

रा० टी०—शिवोक्तिमाह–किमिति। हे राजन्! किमर्थं त्वं तप्यसे यत्ते विवक्षितं वक्तुमिष्टं तद्ब्रूहि ननु त्वं कोसि इत्यत आह–वरदः अभीष्टदातास्मि अहमिति शेषः। अतः यः वरस्ते काङ्क्षितः इच्छाविषयीभूतः सः अभिधीयतां प्रोच्यताम्॥१४

रा० टी०—एवमिति। महातपाः विश्वामित्रः देवेन महादेवेन एवमनेन प्रकारेण उक्त आसीदिति शेषः। अनन्तरं महादेवं प्रणिपत्य विश्वामित्रः इदं वचनमब्रवीत् ॥ १५ ॥

गो० टी०—एवमित्यादिचत्वारः ॥ १५ ॥

१६–१७ ] ति० टी०—साक्षादुपकारकाण्यङ्गानि, आरादुपकारकाण्युपाङ्गानि, मन्त्रा उपनिषदः। समाहारद्वन्द्वे "द्वन्द्वाच्चुद्–"इति टच्। तेन सहितो धनुर्वेद इत्यर्थः। रहस्यमाचार्यमुखैकगम्यं विद्याजातम् ॥ १६ ॥ १७ ॥

रा० टी०—तद्वचनमेवाह–यदीति। हे महादेव! हे अनघ! यदि त्वं तुष्टः तर्हि साङ्गोपाङ्गोपनिषदः अङ्गोपाङ्गोपनिषत्सहितः सरहस्यः रहस्यसहितः धनुर्वेदः मम प्रदीयतां "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच्। उपनिषदशब्दोऽदन्तोवा रहस्यशब्दः आचार्योपदेशैकगम्यविद्याविशेषप्रतिपादकः एतेनोपनिषदशब्दे अदन्तत्वमार्षमिति भूषणोक्तिश्चिन्त्या ॥१६॥

गो० टी०—साङ्गोपाङ्गोपनिषद इत्यकारान्तत्वमार्षम्। अङ्गं सन्निपत्योपकारकमुपाङ्गमारादुपकारकम् उपनिषत् रहस्यमन्त्रः सरहस्यः उपदेशगम्यार्थसहितः प्रतिभान्तु तानीति शेषः। ममेप्सितमन्यदपीति शेषः ॥ १६ ॥ १७ ॥ १८ ॥

रा० टी०—यानीति। हे अनघ! देवादिषु यानि अस्त्राणि चकारेण शस्त्राणि तानि मम प्रतिभान्तु ॥ १७ ॥

१८ ] ति० टी०—प्रसादात् न तूपदेशापेक्षेति भावः॥१८॥

रा० टी०—तवेति। हे देवदेव! तव प्रसादात् मम ईप्सितं भवतु वाञ्छितं प्राप्नुयामित्यर्थः। विश्वामित्रप्रार्थनोत्तरकालिकवृत्तमाह–तदा विश्वामित्रप्रार्थनोत्तरकाले देवेशो महादेवः एवमस्तु इति वाक्यमुक्त्वा गतः स्वधामेति शेषः ॥ १८ ॥

१९–२०] ति० टी०—क्षत्रियत्वात्सहज एव दर्पस्तस्य पूर्तिरस्त्रलाभात् ॥ १९ ॥ २० ॥

१ हतदर्प इति गो. रा. पाठः। २ अन्वपद्यतेति गो. पाठः। ३ बलमिति गो. रा. पाठः। ४ इदं वचनमब्रवीदिति गो. पाठः। ५ राजर्षिरिति गो. रा. पाठः। ६ एवेति गो. रा. पाठः।

ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः । यैस्तत्तपोवनं नाम निर्दग्धं चास्त्रतेजसा ॥ २१ ॥
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः । दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥ २२ ॥
वसिष्ठस्य च ये शिष्या ये[2] च वै मृगपक्षिणः । विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥ २३ ॥
वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः । मुहूर्तमिव निःशब्दमासीदीरिणसंनिभम्[3] ॥ २४ ॥
वदतो वै वसिष्ठस्य मा भैरिति मुहुर्मुहुः । नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ॥ २५ ॥
एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः । विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥
आश्रमं चिरसंवृद्धं यद्विनाशितवानसि । दुराचारो हि यन्मूढस्तस्मात्त्वं न भविष्यसि ॥ २७ ॥

रा० टी०—प्राप्येति । महता दर्पेण अयुक्तः पुत्रादिविध्वंसहेतुकमहादर्पकर्तृकयोगाभाववान् महाबलो राजर्षिर्विश्वामित्रस्तदा वरप्राप्तिसमये अस्त्राणि चकारेण शस्त्राणि प्राप्य दर्पपूर्णः अभवत् ॥ १९ ॥

गो० टी०—प्राप्येत्यादिसार्धं । दर्पपूर्ण इति । क्षत्रियत्वादिदर्पयुक्तः विशेषास्त्रलाभादिदानीं दर्पपूर्णोऽभूदित्यर्थः॥१९॥२०॥

रा० टी०—विवर्धमान इति । तदा दर्पपूर्णतासमये वीर्येण पर्वणि समुद्र इव विवर्धमानो विश्वामित्रः ऋषिसत्तमं वशिष्ठं हतमिव मेने । एवशब्द इवार्थे ॥ २० ॥

२१ ] ति० टी०—यैरस्त्रैरस्त्रतेजसा स्वीयतेजसा तपोवनं निर्दग्धं भवेत्तान्यस्त्राणि मुमुचे इत्यन्वयः ॥ २१ ॥

रा० टी०—तत इति । अस्त्रतेजसा युक्तः पार्थिवो विश्वामित्रः अश्रमपदं श्रमनिवर्तकवशिष्ठस्थानं ततः स्वतपस्स्थानात् गत्वा यैः सर्वं तपोवनं निर्दग्धं स्यात् तानि अस्त्राणि चकारेण शस्त्राणि मुमोच ॥ २१ ॥

गो० टी०—यैरस्त्रैः अस्त्रतेजसा ॥ २१ ॥

२२ ] ति० टी०—विश्वामित्रस्य शेषे षष्ठी । तेनोदीर्यमाणं विसृज्यमानम् ॥ २२ ॥

रा० टी०—उदीर्यमाणमिति । धीमतः विश्वामित्रस्य उदीर्यमाणं तदस्त्रं दृष्ट्वा भीताः शतशो मुनयः दिशः पूर्वप्रभृतीः विप्रद्रुताः पलायिताः आसन्निति शेषः ॥ २२ ॥

गो० टी०—स्वतेजसा उदीर्यमाणं प्रयुज्यमानं भयात् भयदादस्त्रात् नानादिग्भ्य इति व्यत्ययेन द्वितीयार्थे चतुर्थी नानादिग्भ्यः स्वस्वस्थानेभ्य इति वा आश्रमपदं वनं शून्यं निस्तृणगुल्ममीरिणमूषरम् । वसिष्ठे रक्षके विद्यमाने कुतो विद्रवन्तीत्यत्राह—वदत इति भावलक्षणे षष्ठी अनादरे वा । गाधेयं नाशयामि माभैरिति वदतो वसिष्ठस्य वचनमनादृत्य विद्रवन्तीति पूर्वेणान्वयः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

२३ ] ति० टी०—भयाद्भयहेतोरस्त्रजालात् । नानादिग्भ्यः व्यत्ययेन द्वितीयार्थे चतुर्थी पञ्चमी वा ॥ २३ ॥

रा० टी०—वशिष्ठस्येति । ये वशिष्ठस्य सहस्रशः शिष्यास्तेऽपि तथा अन्यमुनय इव मृगपक्षिणश्च भयात् भयहेतुभूतास्त्रादेः भीताः सन्तः नानादिग्भ्यः प्राच्यादिभ्यः विद्रवन्ति अधावन् वर्तमानसामीप्य इति भूते लट् । एवोप्यर्थे नानादिग्भ्य इत्यत्र गत्यर्थानां द्वितीयाचतुर्थ्याविव्यनुशासनविहिता चतुर्थी । एतेन नानादिग्भ्य इति व्यत्ययेन द्वितीयार्थे चतुर्थी-पञ्चमी वेति भट्टादिव्याख्यानं चिन्त्यम् ॥ २३ ॥

२४ ] ति० टी०—शून्यं सर्वप्राणिपलायनात् । अत एव निःशब्दमिव । ईरिणमूषरम् निर्वृक्षनिर्मानुषकान्तारसदृशमिति यावत् ॥ २४ ॥

रा० टी०— वसिष्ठस्येति । अत एव महात्मनः वशिष्ठस्य अश्रमपदं शून्यमासीत् अत एव मुहूर्तं निःशब्दं शब्दरहितमत एव ईरिणसन्निभमूषरभूमिसदृशं तत्स्थानमासीत् । इवशब्दो हेत्वर्थे ॥ २४ ॥

२५ ] ति० टी०—वदतो वै वदतोऽपीत्यर्थः । तादृशस्यापि वसिष्ठस्य वचनमनादृत्य दुद्रुवुरित्यर्थः ॥ २५ ॥

रा० टी०—ननु वशिष्ठस्य तत्र सत्त्वे कथं तच्छिष्याः प्रदुद्रुवुरित्यत आह—वदत इति । नीहारं भास्कर इव सूर्य इव अद्य गाधेयमहं नाशयामि अतः मा भैरिति मुहुर्मुहुर्वदतो वशिष्ठस्य वदन्तमपि वसिष्ठमनादृत्य प्रदुद्रुवुरिति शेषः । "षष्ठी चानादरे" इत्यनुशासनविहितात्र षष्ठी । वैशब्दोऽप्यर्थे ॥ २५ ॥

२६ ] ति० टी०—एवमुक्त्वा पलायमानप्राणिजातं प्रतीति शेषः । इदं वक्ष्यमाणम् ॥ २६ ॥

रा० टी०—एवमिति । तदा विश्वामित्रास्त्रप्रयोगकाले महातेजाः जपतां वरो वशिष्ठः एवमुक्त्वा पलायनपरानिति शेषः। सरोषं रोषसहितमिदं वाक्यं विश्वामित्रमब्रवीत् ॥ २६ ॥

गो० टी०—एवमित्यादित्रयः । उक्त्वा स्वानिति शेषः२६

२७ ] ति० टी०—यद्यस्मान्म आश्रमं विनाशितवानसि, यद्यस्माच्च हि प्रसिद्धम् दुराचारो मूढस्त्वम्, तस्मान्न भविष्यसि नङ्क्ष्यसीत्यर्थः ॥ २७ ॥

रा० टी०—तद्वचनमेवाह—आश्रममिति । हे मूढ ! यद्यस्मात् चिरसंवृद्धमाश्रमं त्वं विनाशितवानसि यद्यस्मात् दुराचारः परवस्त्वपहरणरूपनिषिद्धाचरणमनाश्वासि तस्मात्त्वं न भविष्यसि नङ्क्ष्यसीत्यर्थः । हिशब्दश्चार्थे । किंच यन्मूढ ! यतः क्रोधादिनिवृत्तेः मूः बन्धनं प्रतिबन्धकत्वमिति यावत् वहति प्राप्नोति तत्संबोधनम् निवृत्तिप्रतिबन्धकेत्यर्थः । दुराचारस्त्वम् यद्यस्माद्धेतोः चिरसंवृद्धमाश्रमं विनाशितवानसि तस्मात्त्वं नैव भविष्यसि । हिशब्द एवार्थे ॥ २७ ॥

१ सर्वमिति गो. रा. पाठः । २ तथैवेति गो. रा. पाठः । ३ इरिणेति गो. पाठः ।

इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः । विधूम इव कालाग्निर्यमदण्डमिवापरम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ।

वसिष्ठब्रह्मदण्डेन विश्वामित्रास्त्रे निगीर्णे सति क्षत्रबलं विगर्ह्य विश्वामित्रेण ब्राह्मण्याधिगमाय तपश्चरणस्य निर्धारणम् ।

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः । आग्नेयमस्त्रमुद्दिश्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥
ब्रह्मदण्डं समुद्यम्य कालदण्डमिवापरम् । वसिष्ठो भगवान्क्रोधादिदं वचनमब्रवीत् ॥ २ ॥
क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय । नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज ॥ ३ ॥
क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् । पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ ४ ॥
तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुत्तमम् । ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा ॥ ५ ॥
वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा । ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६ ॥
मानवं मोहनं चैव गान्धर्वं स्वापनं तथा । जृम्भणं मोहनं चैव संतापनविलापने ॥ ७ ॥
शोषणं दारणं चैव वज्रमस्त्रं सुदुर्जयम् । ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८ ॥

---

गो० टी०— न भविष्यसि नशिष्यसीति यावत् । उद्यम्य तस्थाविति शेषः ॥ २७ ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

२८ ] ति० टी०—विधूमः कालाग्निरिव क्रोधाद्वसिष्ठोऽपरं यमदण्डमिव दण्डमुद्यम्य तस्थाविति शेषः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीयआदिकाव्ये बालकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण उक्त्वा परमक्रुद्धः अत एव सत्वरः अत एव विधूमः धूमरहितः कालाग्निरिव वसिष्ठः अपरं यमदण्डमिव दण्डमुद्यम्य आस्ते इति शेषः ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

१–२ ] ति० टी०—एवमुक्तो न भविष्यसीत्युक्तः ॥१॥२॥

रा० टी०—वशिष्ठवचनश्रवणानन्तरकालिकं वृत्तमाह—एवमिति । वशिष्ठेन एवं न भविष्यसीत्युक्तप्रकारेण उक्तः महाबलो विश्वामित्रः आग्नेयमग्निदेवताकमस्त्रमुत्क्षिप्य तिष्ठ तिष्ठेत्येवाब्रवीत् । चशब्द एवार्थे ॥ १ ॥

गो० टी०—अथ सर्वास्त्रबलसंपूर्णक्षत्रवीर्यादपि ब्रह्मबलं बलीय इत्याह षट्पञ्चाशे—एवमुक्त इत्यादि । तिष्ठ तिष्ठेति भयजननार्थोक्तिः ॥ १ ॥

रा० टी०—विश्वामित्रोक्त्यनन्तरकालिकां वशिष्ठोक्तिमाह—ब्रह्मेति । भगवान् अतिसामर्थ्यविशिष्टो वसिष्ठः अपरं कालदण्डमिव ब्रह्मदण्डं समुद्यम्य क्रोधादिदं वचनमब्रवीत् ॥ २ ॥

गो० टी०—ब्रह्मदण्डमित्यादित्रयोविंशतिः । ब्रह्मदण्डमिति । ब्रह्मदण्डं ब्राह्मणासाधारणं दण्डम् ॥ २ ॥

३–४ ] ति० टी०—तिष्ठ तिष्ठेति *भीषयन्तं प्रति स्वभीत्यभावमाह—स्थितोऽस्म्येष इति । तत्र शस्त्रस्य दर्पं त्वया लब्धं यदस्त्ररूपं शस्त्रं तत्प्राप्तिजं ते तव दर्पम् ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—क्षत्रेति द्वाभ्याम् । हे क्षत्रबन्धो हे गाधिज ! एषः अहं स्थितोऽस्मि यत्ते बलं त्वत्पराक्रमस्तद्दर्शय तव शस्त्रस्य दर्पं गर्वमद्यैवाहं नाशयामि । हिशब्द एवार्थे ॥ ३ ॥

गो० टी०—क्षत्रबन्धो क्षत्रियाधम ! ते दर्पं तव शस्त्रस्य दर्पं च नाशयामीत्यन्वयः । क्षत्रियपांसनेत्यनन्तरं वसिष्ठोऽब्रवीदिति अनुकृष्यते ॥ ३–१२ ॥

रा० टी०—क्व चेति । हे क्षत्रियपांसन क्षत्रियाधम ! ते तव क्षत्रियबलं क्व मम ब्रह्मबलं क्व द्वयोर्महानन्तराल इत्यर्थः । अतः महत्सर्वोत्कृष्टमेव दिव्यं प्राकृतविलक्षणं मम ब्रह्मबलं त्वं पश्य । एकश्चशब्द एवार्थे द्वितीयो हेत्वर्थे ॥ ४ ॥

५–८ ] ति० टी०—क्षत्रियपांसनेत्युक्त्वा स्थितस्य तस्य वसिष्ठस्य ब्रह्मदण्डेन गाधिपुत्रस्याग्नेयं शान्तमासीत् ॥५–८॥

रा० टी०—विश्वामित्रप्रयुक्ताग्नेयास्त्रपराभवं वर्णयन्नाह—तस्येति । घोरं शत्रुभयप्रदं गाधिपुत्रस्य तस्य प्रसिद्धस्य विश्वामित्रस्य तदाग्नेयमस्त्रमम्भसा अग्नेर्वेग इव ब्रह्मदण्डेन शान्तमासीदिति शेषः ॥ ५ ॥

---

१ कालाग्निमिति गो. पाठः । २ उत्क्षिप्येति गो. रा. पाठः । ३ समुत्क्षिप्योति गो. पाठः । ४ उद्यतमिति गो. पाठः । ५ रुषित इति रा. पाठः । ६ एतस्मात्पूर्वं दण्डास्त्रमित्यर्धपंक्तिं रा. पाठे । ७ मादनमिति गो. पाठः । * भीषयमाणमिति युक्तमिति भाति ।

पिनाकमस्त्रं दयितं शुष्कार्द्रे अशनी तथा । दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ॥ ९ ॥
धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च । वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥
शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा । वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥ ११ ॥
त्रिशूलमस्त्रं घोरं च कापालमथ कंकणम् । एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ १२ ॥
वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाभवत् । तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ १३ ॥
तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान्गाधिनन्दनः । तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ॥ १४ ॥
देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः । त्रैलोक्यमासीत्संत्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५ ॥
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा । वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १६ ॥
ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः । त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम् ॥ १७ ॥
रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः । मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १८ ॥

रा० टी०–वारुणमिति । दृषितो हिंसितप्रायः गाधिनन्दनो विश्वामित्रः वारुणादीन्यस्त्राणि चिक्षेप ॥ ६ ॥

रा० टी०–मानवमिति । मानवादीनि चिक्षेपेति पूर्वेणान्वयः ॥ ७ ॥

रा० टी०–जृम्भणमिति ॥ ८ ॥

रा० टी०–ब्रह्मेति ॥ ९ ॥

९-१२ ] ति० टी०–दयितम् शिवस्येति शेषः ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥

रा० टी०–धर्मेति ॥ १० ॥

रा० टी०–शक्तीति ॥ ११ ॥

रा० टी०–उपसंहरन्नाह–एतानीति । हे रघुनन्दन ! जपतां श्रेष्ठे वसिष्ठे एतानि सर्वाण्यस्त्राणि चिक्षेप तत् प्रक्षिप्तास्त्रमद्भुतं लक्ष्यस्पर्शाभाववत्त्वेनाश्चर्यसंपादकमेवाभवत् । अस्त्राणीति शस्त्राणामप्युपलक्षकम् । इवशब्द एवार्थे ॥ १२ ॥

१३ ] ति० टी०–ग्रसते स्म ॥ १३ ॥

रा० टी०–लक्ष्यास्पर्शित्वे हेतुं वदन्नाह–तानीति । ब्रह्मणः सुतो वशिष्ठः तानि विश्वामित्र *प्रत्युक्तानि सर्वाणि शस्त्रास्त्राणि दण्डेन ब्रह्मदण्डेन ग्रसते अग्रसत् । वर्तमानसामीप्य इति भूते लट् । अर्धं पृथगन्वयि ॥ १३ ॥

गो० टी०–वसिष्ठे जपतां श्रेष्ठ इत्यनेन जपवैभवमिदं ग्रसनमिति द्योतितं तत् अस्त्रक्षेपणमद्भुतमिवाभवत् कार्यलेशस्याप्यदर्शनादिति भावः ॥ १३ ॥

गो०टी०–अद्भुतमेवाह–तानीति । ग्रसते अग्रसत्॥१४–१५॥

१४ ] ति० टी०–अग्निपुरोगमो वायुस्तत्सहिताः अग्निसहितो वायुः पुरोगमो येषां युद्ध इति वा ॥ १४ ॥

रा० टी०–सर्वशस्त्रप्रध्वंसनोत्तरकालिकं विश्वामित्रवृत्तमाह–तेष्विति । गाधिनन्दनो विश्वामित्रः तेषु स्वप्रयुक्तशस्त्रास्त्रेषु शान्तेषु ब्रह्मदण्डेन विध्वंसितेषु ब्रह्मास्त्रं क्षिप्तवान् साग्निपुरोगमाः अग्निपुरोगमसहिताः समहोरगाः महोरगसहिताः देवाः देवर्षयश्च गन्धर्वाश्च उद्यतमुत्थितं तदस्त्रं दृष्ट्वा संभ्रान्ताः आसन्निति शेषः । अत एव ब्रह्मास्त्रे समुदीरिते सति त्रैलोक्यं संत्रस्तमासीत् ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–समुदीरिते प्रयुक्ते ॥ १५ ॥

गो० टी०–संभ्रान्ता आसन्निति शेषः ॥ १६ ॥ समुदीरिते प्रयुक्ते ॥ १७ ॥

१६ ] ति० टी०–ब्राह्मेण तेजसा ब्रह्मविद्याभ्यासजेन तेजसा युक्तेन ब्रह्मदण्डेन करधृतेन ग्रसते स्मेत्यन्वयः । ब्राह्मेणैव तेजसा ब्राह्मतेजःशमनस्य साध्यत्वादिति भावः ॥ १६ ॥

रा० टी०–तदिति । हे राघव ! महाघोरं शत्रुभयप्रदं तत्प्रसिद्धं ब्राह्ममस्त्रमपि सर्वं सावयवं ब्राह्मेण ब्रह्मविद्याजनिततेजसा विशिष्टो वशिष्ठो ब्रह्मदण्डेन ग्रसते अग्रसत् ॥ १६ ॥

गो० टी०–ब्राह्मेण तेजसा ब्रह्मविद्याभ्यासजनिततेजसा उपबृंहितेन ब्रह्मदण्डेनेत्यर्थः । अत्र ग्रासक्रियायां न दण्डस्यान्वयः पुत्रैर्गर्दभी भारं वहतीतिवत् अतो न वक्ष्यमाणेन विरोधः ॥ १८ ॥

१७ ] ति० टी०–त्रैलोक्यमोहनं भयात्त्रिलोकीचित्तमूर्च्छाकरं रौद्रं स्मरणेऽपि भयदं सुदारुणं दुर्दर्शं नृसिंहवीरभद्रादिवत् । 'घोरम्' इति पाठान्तरं तुल्योऽर्थः ॥ १७ ॥

रा० टी०–ब्रह्मेति । ब्रह्मास्त्रं ग्रसमानस्य महात्मनो वशिष्ठस्य त्रैलोक्यमोहनं त्रिलोकीविचित्तताजनकं तत्र हेतुः रौद्रं भयंकरमत एव सुदारुणं दर्शनानर्हं रूपमासीत् ॥ १७ ॥

गो० टी०–त्रैलोक्यस्य मोहनं भयान्मूर्छाजनकं रौद्रं स्मरणेऽपि भयंकरं सुदारुणं दुर्दर्शम् ॥ १९ ॥

१८ ] ति० टी०–रौद्रदारुणत्वे उपपादयति–रोमेत्यादि । रोमकूपेषु रोमकूपेभ्यः मरीच्यो विस्फुलिङ्गाः । ऋषेर्विश्वामित्रब्रह्मास्त्राकुलत्वाद्धूमाकुलार्चिष्ट्वमग्नेर्विशेषणम् ॥ १८ ॥

रा० टी०–रौद्रत्वमुपपादयन्नाह–रोमेति । महात्मना व-

१ पैनाकास्त्रं चेति गो. पाठः । २किंकिणीमिति रा.पाठः । *प्रयुक्तानीति भाति अग्रे चतुर्दशश्लोकटीकायां तेषु स्वप्रयुक्तशस्त्रास्त्रेष्विति तेनैव तथा प्रयुक्तत्वात्।

प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः । विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १९ ॥
ततोऽस्तुवन्मुनिगणा वसिष्ठं जपतां वरम् । अमोघं ते बलं ब्रह्मँस्तेजो धारय तेजसा ॥ २० ॥
निगृहीतस्त्वया ब्रह्मन्विश्वामित्रो महाबलः । अमोघं ते बलं श्रेष्ठ लोकाः सन्तु गतव्यथाः ॥ २१ ॥
एवमुक्तो महातेजाः शमं चक्रे महाबलः । विश्वामित्रो विनिकृतो विनिःश्वस्येदमब्रवीत् ॥२२॥
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३ ॥
तदेतत्प्रसमीक्ष्याहं प्रसन्नेन्द्रियमानसः । तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

शिष्ठस्य सर्वेषु रोमकूपेषु सर्वेभ्यः रोमकूपेभ्यः धूमाकुलार्चिषः धूमव्याप्ततेजसः अग्नेः मरीच्यो विस्फुलिङ्गा इव निष्पेतुः॥१८॥

गो० टी०—एतदेवाह—रोमेति । अग्नेरिव मरीच्यो विस्फुलिङ्गा निष्पेतुरिति योजना ॥ २० ॥

१९ ] ति० टी०—विधूमः कालाग्निरिव ब्रह्मदण्डश्च प्राज्वलत् तत्समर्पितब्रह्मतेजसेति भावः ॥ १९ ॥

रा० टी०—प्राज्वलदिति । वशिष्ठस्य करोद्यतः ब्रह्मदण्डः विधूमः धूमरहितः कालाग्निरिव अपरो यमदण्ड इव च प्राज्वलत् ॥ १९ ॥

गो० टी०—दण्डश्च प्राज्वलत् पूर्वोक्तयासेनेति शेषः ॥ २१ ॥

२० ] ति० टी०—ततोऽस्तुवन्साधु साध्वित्युपश्लोकितवन्तः । हे ब्रह्मन् ! ते बलममोघमस्तु अरातावविसर्जनेनाक्षीणमस्तु प्रतिब्रह्मास्त्रं मा प्रयुङ्क्ष्वेति यावत् । पारक्यं तेजः स्वतेजसा सहजेन धारय विलाप्यैकीकुरु ॥ २० ॥

रा० टी०—तत इति । ततः भयंकररूपविशिष्टदण्डदर्शनानन्तरं मुनिगणाः जपतां वरं वशिष्ठमस्तुवन् । स्तवनप्रकारमाह—हे ब्रह्मन् ! ते बलममोघं मिथ्यासंसर्गशून्यमतः तेजसा स्वशक्त्या तेजः ब्रह्मदण्डोज्ज्वलनं धारय उपशमय ॥ २० ॥

गो० टी०—तेजः ब्रह्मास्त्रतेजः तेजसा महिम्ना धारय उपशमय ॥ २२ ॥ २३ ॥

२१ ] ति० टी०—नन्वरौ स्थिते कथमप्रतियोगोऽत आह—निगृहीत इति । ब्रह्मास्त्रग्रासेन नष्टसामर्थ्यः स्वत एव मृतप्रायो जात इत्यर्थः ॥ २१ ॥

रा० टी०—निगृहीत इति । हे ब्रह्मन् ! महातपाः विश्वामित्रस्त्वया निगृहीतः अतः जपतां श्रेष्ठ हे वशिष्ठ ! त्वं प्रसीद लोकाः गतव्यथाः सन्तु तेज उपसंहरेत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—शमं चक्रे प्रतियोगतोऽरातिनाशनादुपरत इत्यर्थः । विनिकृतो निरस्तसर्वशक्तिः ॥ २२ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण उक्तः प्रार्थितः महातेजा महातपाः वशिष्ठः सामं तेजःशान्तिं चक्रे । निकृतः पराभूतः विश्वामित्रोऽपि विनिःश्वस्य इदमब्रवीत् । 'विनिकृत' इति भट्टसंमतः पाठः निरस्तसर्वशक्तिरिति तदर्थस्तैर्वर्णितः ॥ २२ ॥

गो० टी०—शमं कोपशान्तिम् ॥ २४ ॥

गो० टी०—निकृतः अपकृतः तिरस्कृत इति यावत् ॥२५॥

२३ ] ति० टी०—क्षत्रियबलं धिक् केवलं निन्द्यं बलमित्यर्थः ब्रह्मतेजोबलं प्रशस्तं बलम् ॥ २३ ॥

रा० टी०—तद्वचनमेवाह—धिगिति । क्षत्रियबलं बलं धिक् ब्रह्मतेजोबलमेव बलम् । तत्र कारणमाह एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि घटो नीलघट इतिवत् बलं क्षत्रियबलमिति प्रयोगः । सर्वं वाक्यं सावधारणं भवतीति एवकारलाभः॥२३॥

गो० टी०—धिगिति । क्षत्रियबलं बलं धिक् निन्द्यं बलमित्यर्थः । धिगुपर्यादिष्विति द्वितीया । ब्रह्मतेजसः ब्राह्मण्यरूपतेजसः बलं बलं तदेव प्रशस्तमिति यावत् सर्वास्त्राणि ब्रह्मास्त्रभिन्नानि ॥ २६ ॥

२४ ] ति० टी०—प्रसन्नेन्द्रियमानसः परित्यक्तक्षत्रस्वभाव इति यावत् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

रा० टी०—तदिति । तत्प्रसिद्धमेतद्ब्रह्मतेजःप्राबल्यं समवेक्ष्य दृष्ट्वा प्रसन्नेन्द्रियमानसः त्यक्तशोकवत्तया प्रसन्नोऽहं यद्ब्रह्मत्वकारणं महत्तपस्तदेव समास्थास्ये । वैशब्द एवार्थे ॥२४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षट्चत्वारिंशः सर्गः ॥ ५६ ॥

गो० टी०—ब्रह्मत्वकारणं ब्राह्मण्यापादकम् । प्रसन्नेन्द्रियमानसः परित्यक्तक्षत्ररोष इत्यर्थः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ महातपा इति गो. रा. पाठः । २ प्रसीद जपतां श्रेष्ठेति गो. रा. पाठः । ३ साममिति रा. पाठः । ४ ऽपि निकृत इति रा. पाठः ।

# सप्तपञ्चाशः सर्गः ।

विश्वामित्रे ब्राह्मण्यार्थं दक्षिणस्यां दिशि तपस्यति ब्रह्मा तत्रागत्य तस्मै राजर्षित्वमदात्तेनाप्यतुष्टमनसो विश्वामित्रस्य पुनस्तपश्चरणम् । अत्रान्तरे सशरीरं स्वर्गं जिगमिषोस्त्रिशंकुनामराजस्य तत्साधकयज्ञकरणार्थं वसिष्ठप्रार्थना तस्मान्न प्राप्ताधिक्षेपस्य तस्य वसिष्ठपुत्रसन्निधौ गत्वा तेषामपि तत्प्रार्थनम् ।

ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः । विनिःश्वस्य विनिःश्वस्य कृतवैरो महात्मना ॥ १ ॥
स दक्षिणां दिशं गत्वा महिष्या सह राघव । तताप परमं घोरं विश्वामित्रो महातपाः ॥ २ ॥
फलमूलाशनो दान्तश्चचार परमं तपः । अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ॥ ३ ॥
हविष्पन्दो मधुष्पन्दो दृढनेत्रो महारथः । पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ॥ ४ ॥
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् । जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ॥ ५ ॥
अनेन तपसा त्वां हि राजर्षिरिति विद्महे । एवमुक्त्वा महातेजा जगाम सह दैवतैः ॥ ६ ॥
त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः । विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किंचिदवाङ्मुखः ॥ ७ ॥
दुःखेन महताविष्टः समन्युरिदमब्रवीत् । तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ॥ ८ ॥
देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् । एवं निश्चित्य मनसा भूय एव महातपाः ॥ ९ ॥

---

१ ] ति० टी०—तत इति । कृतवैर इति इदमेव तपोनाशकमस्य ॥ १ ॥

रा० टी०—तत इति । ततः करणनिश्चयानन्तरं हे राघव ! आत्मनः स्वस्य निग्रहं वशिष्ठकर्तृकपराभवं स्मरन् सन्संतप्तहृदयः महात्मना वशिष्ठेन कृतवैरः महातपाः स विश्वामित्रः विनिःश्वस्य विनिःश्वस्य महिष्या कृताभिषेकया पत्न्या सह दक्षिणां दिशं गत्वा परममत्युत्कृष्टं घोरं शत्रुभयंकरं तपस्तताप द्वयोरेकत्रान्वयः ॥ १ ॥ २ ॥

गो० टी०—एवं पशुपतिवितीर्णसरहस्यसर्वास्त्रवैघट्यदर्शनेन रुद्रस्यापरत्वमुपपादितं, अथ पूर्वप्रस्तुतब्राह्मण्यस्यात्यन्तदुर्लभत्वं दर्शयति नवभिः सर्गैः । तत्र त्रिशङ्कुशरणागत्यनुगुणशक्तिमत्वं दर्शयति सप्तपञ्चाशे । ततः संतप्तहृदयः इत्यादिश्लोकद्वयमेकान्वयम् । महात्मना वसिष्ठेन कृतवैरः अनेनास्य तपोनाशमूलं दर्शितं ब्रह्मविदपचारो हि सर्वश्रेयोविनाशकः दक्षिणां शरावत्यपेक्षया महिष्येत्यनेन भावियाजकत्वानुगुणगार्हस्थ्यं दर्शितम् महत्तपः परमं यथा तथा ततापेत्यन्वयः ॥ १ ॥ २ ॥

२ ] ति० टी०—तताप तपश्चकारेत्यर्थः ॥ २ ॥

३ ] ति० टी०—तपसो घोरत्वं दर्शयति—फलेत्यादि । दान्तो जितेन्द्रियः । पुत्रा हविष्पन्दादयः ॥ ३ ॥

रा० टी०—फलेति । फलमूलाशनः फलमूलमात्रभोक्ता अत एव दान्तः नियमितोभयकरणः विश्वामित्रः परमं तपश्चकार। अथ तपःप्रारम्भानन्तरमस्य विश्वामित्रस्य सत्यधर्मपरायणाः हविष्यन्दादयः पुत्राः जज्ञिरे सार्धश्लोक एकान्वयी॥३॥

गो० टी०—कामक्रोधाद्यनुत्पत्तिं दर्शयति—अथेति ॥ ३ ॥

४–६ ] ति० टी०—ब्रह्मर्षित्वाय ब्रह्मविषयया तपःकरणात्तदधिदैवतत्वाद्ब्रह्माब्रवीत् ॥ ४–६ ॥

रा०टी०—पूर्ण इति । वर्षसहस्रे पूर्णे सत्येव लोकपितामहो ब्रह्मा तपोधनं विश्वामित्रं मधुरं वाक्यमब्रवीत्।तुशब्द एवार्थे॥४॥

गो० टी०—अत एव तपसो मन्दफलत्वं दर्शयति—पूर्ण इति ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—जिता इति । हे कुशिकात्मज ! ते तव तपसा राजर्षिलोका जिताः अतः अनेन राजर्षिलोकसंपादकेन तपसा त्वां राजर्षिरिति विद्महे ॥ ५ ॥

गो० टी०—जिता इति । विद्महे आर्षमात्मनेपदम् ॥ ५ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण उक्त्वा महातेजा लोकानां परमेश्वरः ब्रह्मा देवतैः सह त्रिविष्टपं सुरलोकं ब्रह्मलोकं स्वलोकं च जगाम । विनापि चं समुच्चयः । अत्र त्रिविष्टपं जगामेत्युक्त्या तत्र इन्द्रं संस्थापयामास इति ध्वनितम् । तेनेन्द्रस्य विश्वामित्रतपोभीतत्वं व्यञ्जितम् । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—एवमित्यादिचत्वारः । ब्रह्मा ब्रह्मलोकं जगाम त्रिविष्टपं देवा जग्मुरित्यर्थः ॥ ६ ॥

७ ] ति० टी०—देवैः सह त्रिविष्टपं स्वर्गं गत्वा तदनु स्वलोकं गतः । लोकानां भूरादीनाम् ॥ ७ ॥

रा० टी०—विश्वामित्र इति । तद्ब्रह्मवचनं श्रुत्वा ह्रिया लज्जया किंचिदवाङ्मुखः महता दुःखेन आविष्टः समन्युः क्रोधसहित इव विश्वामित्रः इदं वचनमब्रवीत् । अपिरिवार्थे ॥७॥

८–९] ति० टी०—समन्युः सदैन्यः स्वं प्रत्येवेदं वचः सुमहति तपसि कृतेऽपि सर्षिगणा देवा मां राजर्षिरित्येव विदुरवगच्छन्ति तस्मादस्य तपसस्तद्ब्राह्मणत्वं फलं नास्ति न भवतीति मन्ये ॥ ८ ॥ ९ ॥

---

१ इदमर्धं गो॰ पुस्तके नास्ति । २ चकारेति रा॰ पाठः ।

तपश्चचार धर्मात्मा काकुत्स्थ परमात्मवान् । एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ॥ १० ॥
त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्धनः । तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ॥ ११ ॥
गच्छेयं स्वशरीरेण देवतानां परां गतिम् । वसिष्ठं स समाहूय कथयामास चिन्तितम् ॥ १२ ॥
अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना । प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ॥१३॥
ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः । वासिष्ठा दीर्घतपसस्तपो यत्र हि तेपिरे ॥ १४ ॥
त्रिशङ्कुस्तु महातेजाः शतं परमभास्वरम् । वसिष्ठपुत्रान्ददृशे तप्यमानान्मनस्विनः ॥ १५ ॥

---

रा० टी०—तद्वचनमेवाह—तप इति । सर्षिगणाः ऋषिगणसहिताः सर्वे ब्रह्मप्रभृतयः देवाः येन मया सुमहत् अत्युत्कृष्टं तपस्तप्तं तं मां राजर्षिरिति विदुः अतस्तपःफलं मे नास्तीत्यहं मन्ये ॥ ८ ॥

गो० टी०—समन्युः सदैन्यः 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः ॥ ७ ॥

रा० टी०—एवमिति । हे काकुत्स्थ! महातपाः परमात्मवान् अतिप्रयत्नविशिष्टः विश्वामित्रः एवमनेन प्रकारेण मनसा निश्चित्य विचारपूर्वकनिश्चयमवगत्य भूयोऽपि परमं तपश्चकार । एवोऽप्यर्थे ॥ १० ॥

गो० टी०—नास्ति मन्ये तपःफलमेतन्मात्रं मत्तपःफलं न भवति ब्राह्मण्यस्यैव मदभिमतत्त्वादिति भावः ॥ ८ ॥

१०-११ ] ति० टी०—परमात्मवान्परमात्मध्यानवान्परमधीरश्च ॥ १० ॥ ११ ॥

रा० टी०—एतस्मिन्निति । हे राघव ! एतस्मिन्काले विश्वामित्रतपश्चरणसमय एव सत्यवादी जितेन्द्रियः नियमितोभयकरणः इक्ष्वाकुकुलवर्धनः यस्त्रिशङ्कुरिति विख्यात आसीत् तस्य बुद्धिः अहं यजेयं तेन स्वशरीरेणैव देवानां परमां गतिं स्वर्गमित्यर्थः गच्छेयमिति बुद्धिर्निश्चयः समुत्पन्ना । तुशब्द एवार्थे । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—परमं तपः पूर्वकृततपसोऽप्यतिशयितं तपः परमात्मवान् अतिशयितयत्नवान् ॥ ९ ॥

गो० टी०—एतस्मिन्निति । विख्यातः अभूदिति शेषः॥१०॥

गो० टी०—तस्येति । सशरीरेण आत्मनेति शेषः । परमां गतिं स्वर्गमिति यावत् ॥ ११ ॥

१२ ] ति० टी०—गच्छेयम् यज्ञबलेनेति शेषः । देवतानां परा गतिः स्वर्गः ॥ १२ ॥

रा० टी०—वसिष्ठमिति । स त्रिशङ्कुः वशिष्ठं समाहूय चिन्तितं स्वविचारितं कथयामास । अनन्तरं महात्मना वशिष्ठेनाशक्यमिदमिति त्रिशङ्कुरुक्तः । चशब्दोऽनन्तरार्थे अपिरिदमर्थे ॥ १३ ॥

गो० टी०—स इति । चिन्तितं सशरीरस्वर्गसाधनयज्ञमित्यर्थः । अशक्यं सशरीरं स्वर्गसाधनयज्ञकरणमिति शेषः । अशक्यत्वं च न ऋषेरसामर्थ्यान्नापि तादृशकर्मविधानाभावात् "सशरीर एव स्वर्गं लोकमेति" इति श्रुतेः । किंतु त्रिशङ्कोस्तादृशस्वर्गप्राप्तिर्नास्तीति पूर्वकल्पवृत्ततज्ज्ञानादिति मन्तव्यम् उक्तः अभूदिति शेषः ॥ १२ ॥

१३ ] ति० टी०—अशक्यत्वकथनपूर्वकं प्रत्याख्यानबीजं च प्रसिद्धं त्रिशङ्कुत्वमेवेति पुराणेषु स्पष्टम् ॥ १३ ॥

रा० टी०—प्रत्याख्यात इति । वसिष्ठेन प्रत्याख्यातः स नृपः त्रिशङ्कुः दक्षिणां दिशं ययौ । ततः दक्षिणदिग्गमनानन्तरं तत्कर्मसिद्ध्यर्थं तस्य चिकीर्षितस्य कर्मणः सशरीरस्वर्गप्रापकयागस्य सिद्ध्यर्थं तस्य वशिष्ठस्य पुत्रान् गतः प्राप्तः ॥ १४ ॥

गो० टी०—प्रत्याख्यात इति । तत्कर्मसिद्ध्यर्थं सशरीरस्वर्गसाधनकर्मसिद्ध्यर्थम् ॥ १३ ॥

१४ ] ति० टी०—तत्कर्म सशरीरस्वर्गप्रापकयज्ञकर्म । तस्य वसिष्ठस्य पुत्रा यत्र तेपिरे तत्र गत्वेति शेषः । तस्य पुत्रान्गतः प्राप्तः ॥ १४ ॥

रा० टी०—तत्स्थानं बोधयन्नाह—वाशिष्ठा इति । दीर्घतपसः शतं वाशिष्ठाः यत्र परमभास्वरं तपस्तेपिरे तस्मिन् स्थाने महातेजाः स त्रिशङ्कुर्गत इति पूर्वेणान्वयः ॥ १५ ॥

गो० टी०—वासिष्ठा इति सार्धः । यत्र तेपिरे तत्र गत्वेति शेषः । शतं वासिष्ठानिति 'बह्वर्थे शतम्' इति निपातनात् सामानाधिकरण्यम् ॥ १४ ॥

१५ ] ति० टी०—शतशब्दे न स्वावयवगतबहुत्वेन बहुवचनम् अनभिधानात् शतशब्दः संख्यावाची संख्येयवाची च विंशत्यादिवत् । अत्र तु संख्येयवाची शतं वसिष्ठपुत्रान् शतसंख्याकानित्यर्थः । अत्रावयवप्राधान्येन तद्बहुत्वेन बहुवचनं प्राप्तं तदनभिधानान्न भवति एकवचनमेव भवति यथा विंशतिर्ब्राह्मणाः । संख्यावाचिनोऽप्येकवचनं ब्राह्मणानां शतमिति यथा । अतो वसिष्ठपुत्रानित्यनेन शतमित्यनेन च सामानाधिकरण्यम् ॥ १५ ॥

रा० टी०—वाशिष्ठानिति । अथ वसिष्ठपुत्रतपस्थानगमनानन्तरं तप्यमानान्यशस्विनः वाशिष्ठान्स त्रिशङ्कुः ददर्श महात्मनः सर्वान् गुरोः सुतान् स त्रिशङ्कुरभिगम्य प्राप्यैव ववन्द इति शेषः ॥ १६ ॥

---

१ चकारेति गो. रा. पाठः । २ स्विति गो. स इति रा. पाठः । ३ यशस्विन इति गो. रा. पाठः ।

सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान् । अभिवाद्यानुपूर्वेण ह्रिया किंचिदवाङ्मुखः ॥ १६ ॥
अब्रवीत्स महात्मानः सर्वानेव कृताञ्जलिः । शरणं वः [1]प्रपन्नोऽहं शरण्याञ्शरणं गतः ॥ १७ ॥
प्रत्याख्यातो [2]ऽहि भद्रं वो वसिष्ठेन महात्मना । यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ॥ १८ ॥
गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये । शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥ १९ ॥
ते [3]मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः । सशरीरो यथाहं वै देवलोकमवाप्नुयाम् ॥ २० ॥
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः । गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांचन ॥ २१ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः । तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१६ ] ति० टी०—ह्रिया तत्पितृकृतप्रत्याख्यानजया । महात्मन इति द्वितीयार्थे महात्मान इत्यार्षम् ॥ १६ ॥

रा० टी०—अभिवाद्येति । ह्रिया किंचिदवाङ्मुखः कृताञ्जलिः स त्रिशङ्कुः महात्मानः महात्मनः सर्वान् गुरोः सुतान् आनुपूर्वेण ज्येष्ठादिक्रमेणाभिवाद्याब्रवीत् । महात्मान इत्यत्र प्रथमा आर्षा किंच महात्मनः आनयन्ते सत्कारादिना जीवयन्ते तानिति द्वितीयान्तमेव ॥ १७ ॥

गो० टी०—स इति सार्धः । ह्रिया वसिष्ठप्रत्याख्यानकृतया महात्मानः सुमहाभागानिति व्यत्ययेन प्रथमा ॥ १६ ॥

१७-१८ ] ति० टी०—शरण्यान्रक्षणसमर्थान् । शरणं गतोऽन्येषां रक्ष्याणां शरणं गतोऽपि शरणत्वं प्राप्तोऽपीत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०—तद्वचनमेवाह—शरणमिति । वो युष्माकं शरणं रक्षकत्वं गतो ज्ञातवानहं शरणं रक्षा यथा स्यात्तथा शरण्यान् शरणहितान् वो युष्मान् प्रपद्ये प्राप्तोस्मि । एकः शरणशब्दः भावप्रधानः । गत्यर्थानां ज्ञानार्थकत्वं गमिरत्रोपन इत्यादिव्याख्याने स्पष्टमेव व इत्युभयान्वयि शब्दाधिकारश्च । यद्वा शरणं स्वेप्सितप्रध्वंसेन वधप्रायं गतः प्राप्तोऽहं शरणं जीवनालम्बो यथा स्यात्तथा वो युष्मान्प्रपद्ये । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी ॥ १८ ॥

गो० टी०—शरणमिति । शरणं रक्षितारम् आगतः 'शरणं गृहरक्षित्रोः' इतिवचनात् रक्षित्रपेक्षया आगतोऽहं शरण्यान् शरणसमर्थान् शरणं प्रपद्ये रक्षितॄन् प्राप्नोमीत्यर्थः । यद्वा शरणागतः प्रत्याख्यात इत्युत्तरेणान्वयः तर्ह्याचार्य एव गन्तव्य इत्यत्राह—प्रत्याख्यात इति ॥ १६ ॥

रा० टी०—यष्टुकाम इति । महायज्ञं सशरीरस्वर्गप्राप्तिफलकयागं यष्टुकामः कर्तुमिच्छुरहमस्मीति शेषः । तत्तस्माद्धेतोः सर्वान् गुरुपुत्रानहं नमस्कृत्य प्रसादये अतः यूयम् आज्ञातुमर्हथ ॥ १९ ॥

गो० टी०—किमर्थं शरणागतिस्तत्राह—यष्टुकाम इति । तत् यज्ञाद्यनम् ॥ १७ ॥

१९ ] ति० टी०—ब्राह्मणानन्वर्थब्राह्मणान् ॥ १९ ॥

रा० टी०—शिरसेति । तपसि स्थितान् ब्राह्मणान् शिरसा प्रणतः अहं याचे प्रार्थये । ते मत्प्रार्थिताः भवन्तः समाहिताः सन्तः सशरीरोऽहं यथावत् देवलोकमवाप्नुयामिति सिद्ध्यर्थं मां याजयन्तु । हिरेवार्थे ॥ २० ॥

गो० टी०—शिरसेति सार्धः । ब्राह्मणान् ब्रह्मविदः समाहिताः अवहिताः ॥ १८ ॥

२० ] ति० टी०—सिद्ध्यर्थं सशरीरस्वर्गगमनसिद्ध्यर्थम् ॥ २० ॥

२१ ] ति० टी०—गुरुपुत्रानृते तान्विनान्यां कांचन गतिमहं न पश्यामीत्यन्वयः ॥ २१ ॥

रा० टी०—ननु सर्वयाजकशिरोमणिं गुरुं विहाय इह किमागतोऽसीत्यत आह—हे तपोधनाः ! अहं वसिष्ठेन प्रत्याख्यातः अतः सर्वान् गुरुपुत्रान् ऋते अन्यां काञ्चन गतिं न पश्यामि तत्र हेतुः सर्वेषा मिक्ष्वाकूणां पुरोधा वसिष्ठ एव परमा गतिः । हिशब्द एवार्थे ॥ २१ ॥ २२ ॥

गो० टी०—प्रत्याख्यात इति । गुरुपुत्रानृते अन्यां कांचन गतिं यजनोपायं न पश्यामीत्यन्वयः ॥ १९ ॥

२२ ] ति० टी०—अयं श्लोकः प्रक्षिप्त इति कतकस्वरसः । तस्मादिक्ष्वाकूणां परमगतिरूपात्पुरोधसो वसिष्ठादनन्तरमित्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा० टी०—वसिष्ठस्य परमगतित्वे हेतुं वदन्नाह—पुरोहिता इति । विद्वांसः पुरोहिता एव सदा नृपान् तारयन्ति । तुरेवार्थे । तस्मात् वसिष्ठानन्तरं भवन्त एव सर्वे मम दैवतम् ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

गो० टी०—इक्ष्वाकूणामिति । पुरोधाः पुरोहितः वसिष्ठः ॥ २० ॥

गो० टी०—तस्मादित्यर्धम् । तस्मात् वसिष्ठात् अनन्तरं पश्चात् तस्यारक्षकत्वे भवन्त एव रक्षका इति भावः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१ प्रपद्ये इति गो. रा. पाठः । २ ऽस्मीति गो. रा. पाठः । ३ मामिति गो. रा. पाठः ।

## अष्टपञ्चाशः सर्गः ।

पित्रतिक्रामित्वाद्वासिष्ठैस्त्रिशंकुयाजने प्रत्याख्याते गच्छामि तर्हि याजकान्तरमित्युक्तवति तस्मिन्नेवं त्रैलोक्ययाजकस्याप्यक्रमन्तास्यतो चाण्डालत्वं व्रजेति शप्तस्य त्रिशङ्कोश्चाण्डालत्वं संप्राप्य विश्वामित्रसमीपगमनं तद्वृत्तनिवेदनं तादृग्याजनप्रार्थना च ।

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् । ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥
प्रत्याख्यातोऽसि दुर्मेधो गुरुणा सत्यवादिना । तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः । न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥
अशक्यमिति सोवोच वसिष्ठो भगवानृषिः । तं वयं वै समाहर्तुं क्रतुं शक्ताः कथंचन ॥ ४ ॥
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः । याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५ ॥
अवमानं कथं कर्तुं तस्य शक्ष्यामहे वयम् । तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ॥ ६ ॥
स राजा पुनरेवैतानिदं वचनमब्रवीत् । प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव हि ॥ ७ ॥
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः । ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥ ८ ॥

---

१ ] ति० टी०—क्रोधसमन्वितमिति ऋषिपुत्रशतविशेषणम् ॥ १ ॥

रा० टी०—त्रिशङ्कुप्रार्थनानन्तरकालिकं वृत्तमाह—तत इति । ततः त्रिशङ्कुप्रार्थनानन्तरं हे राम ! त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितं क्रोधाविष्टमृषिपुत्रशतं राजानमिदमब्रवीत् ॥ १ ॥

गो० टी०—गुरुत्यागिनां फलं दर्शयत्यष्टपञ्चाशे—ततस्त्रिशङ्कोरित्यादि । क्रोधसमन्वितमिति शतविशेषणम् ॥ १ ॥

२ ] ति० टी०—दुर्मेधः दुर्बुद्धे ! शाखान्तरं याजनादिना रक्षकान्तरम् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—प्रत्याख्यात इति । हे दुर्बुद्धे ! सत्यवादिना मृषासंसर्गशून्येन गुरुणा प्रत्याख्यातस्त्वं तं गुरुमतिक्रम्य शाखान्तरमाश्रयान्तरं कथमुपेयिवान् प्राप्तोऽसि ॥ २ ॥

गो० टी०—प्रत्याख्यात इति । शाखान्तरम् आश्रयान्तरम् ॥ २ ॥

३ ] ति० टी०—न चातिक्रमितुं शक्यम् इक्ष्वाकुभिरिति शेषः ॥ ३ ॥

रा० टी०—तदतिक्रमस्यानौचित्यं बोधयन्नाह—इक्ष्वाकूणामिति । सर्वेषामिक्ष्वाकूणां पुरोधा एव परमो गुरुः अतः सत्यवादिनः पुरोधसः वचनमतिक्रमितुमुल्लङ्घितुं न शक्यम् । चशब्द एवार्थे ॥ ३ ॥

गो० टी०—इक्ष्वाकूणामिति । न शक्यं त्वयेक्ष्वाकुणेति शेषः । सत्यवादिनः तस्येति शेषः ॥ ३ ॥

४ ] ति० टी०—सोवाचेति सोऽचि लोपे चेदिति साधु । तं क्रतुम् यमशक्यमित्युवाच तं यज्ञमित्यर्थः । कथं च कथमपि न शक्ता इत्यर्थः ॥ ४ ॥

रा० टी०—तन्निवारितकार्यस्याशक्यत्वं बोधयन्त आहुः—अशक्यमिति । भगवान् सकलसामर्थ्यविशिष्टः ऋषिः सर्वज्ञः यमशक्यमेव उवाच तमेव तव क्रतुं समाहर्तुं कारयितुं वयं कथं समर्थाः । इतिशब्देनान्येऽपि कथं समर्थाः न कथंचिदित्यर्थः । चवैशब्दावेवार्थौ । एतेन तत्प्रत्याख्यातकार्यं प्रत्याशा न कर्तव्येति ध्वनितम् ॥ ४ ॥

गो० टी०—अशक्यमिति । यं क्रतुमिति शेषः ॥ ४ ॥

५ ] ति० टी०—बालिशोऽज्ञः । त्रैलोक्यस्यापि सिद्ध्यर्थं याजने इत्यर्थः । भगवान्वसिष्ठः ॥ ५ ॥

रा० टी०—तदेवोपसंहरन्नाह—बालिश इति । हे नरश्रेष्ठ! त्वं बालिशः समीचीनविचारयोग्यमत्यभाववानसि अतस्त्वया पुनः स्वपुरमेव गम्यताम् । एतेन वयं न याजयिष्याम इति ध्वनितम् । तत्र हेतुमाह—हे पार्थिव ! भगवान् परममाहात्म्यविशिष्टस्त्रैलोक्यस्यापि याजने शक्तः समर्थः यो वसिष्ठस्तस्यावमानं वयं कथं शक्ष्यामहे ॥ ५ ॥

गो० टी०—बालिश इति । बालिशः मूर्खः 'मूर्खवैधेयबालिशाः' इत्यमरः ॥ ५ ॥

६ ] ति० टी०—अवमानं तेनासाध्यतयोक्तार्थस्य साधनरूपम् ॥ ६ ॥

रा० टी०—तेषामिति । तेषां वासिष्ठपुत्राणां क्रोधपर्याकुलाक्षरं तद्वचनं श्रुत्वा स राजा त्रिशङ्कुः एतान् गुरुपुत्रान् पुनरपि इदं वचनमब्रवीत् । एवोऽप्यर्थे ॥ ६ ॥

गो० टी०—अवमानमित्यर्धम् । तत् असाध्यार्थसाधनरूपम् ॥ तेषामिति द्वौ । अन्यां गतिं याजकान्तरम् ॥ ६—८ ॥

७ ] ति० टी०—एतान्वासिष्ठान् ॥ ७ ॥

रा० टी०—तद्वचनमेवाह—प्रत्याख्यात इति । हे तपोधनाः ! भगवता गुरुणा तथा गुरुपुत्रैर्भवद्भिश्च प्रत्याख्यात एवाहमन्यां गतिमाश्रयं गमिष्यामि वो युष्मभ्यं स्वस्त्यस्तु ॥ ७ ॥

८ ] ति० टी०—अन्यां गतिं याजकान्तरम् । घोराभिसंहितं घोराभिप्रायसंयुक्तम् । कुलगुर्वतिक्रमेणान्याश्रयस्य कुलनाशहेतुतया तदभिप्रायस्य घोरत्वम् ॥ ८ ॥

---

१ दुर्बुद्धे इति गो. रा. पाठः । २ परमो गुरुरिति गो. रा. पाठः । ३ चेति गो. रा. पाठः । ४ तवेति गो. रा. पाठः । ५ चेति गो. रा. पाठः ।

शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि । इत्युक्त्वा ते महात्मानो विविशुः स्वं स्वमाश्रमम् ॥९॥
अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः । नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥ १० ॥
चित्यमाल्याङ्गरागश्च आयसाभरणोऽभवत् । तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम् ॥ ११ ॥
प्राद्रवन्सहिता राम पौरा येऽस्यानुगामिनः । एको हि राजा काकुत्स्थ जगाम परमात्मवान् ॥ १२ ॥
दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् । विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ॥ १३ ॥
चण्डालरूपिणं राम मुनिः कारुण्यमागतः । कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ॥ १४ ॥
इदं जगाद भद्रं ते राजानं घोरदर्शनम् । किमागमनकार्यं ते राजपुत्र महाबल ॥ १५ ॥
अयोध्याधिपते वीर शापाच्चण्डालतां गतः । अथ तद्वाक्यमाकर्ण्य राजा चण्डालतां गतः ॥ १६ ॥
अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् । प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ॥ १७ ॥

---

रा० टी०—ऋषीति । घोराभिसंहितं श्रुतिकटुताविशिष्टं तद्वाक्यं श्रुत्वैव परमसंक्रुद्धा ऋषिपुत्राः त्वं चण्डालत्वं गमिष्यसि प्राप्स्यसीति शेपुः । तुशब्द एवार्थे ॥ ८ ॥

गो० टी०—ऋषीति । घोराभिसंहितं साक्षात्कुलगुरुं ब्रह्मपुत्रं वसिष्ठमतिक्रम्य पुरोहितान्तराश्रयणरूपघोराभिप्राययुक्तमित्यर्थः । गमिष्यसीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ९ ॥

९ ] ति० टी०—चण्डालत्वं गमिष्यसीति शेपुरिति योजना । तादृशपापिष्ठदर्शनस्य पापजनकत्वात्स्वस्वाश्रमप्रवेशस्तेषाम् ॥ ९ ॥

रा० टी०—इतीति । महात्मानस्ते वशिष्ठपुत्रा इत्युक्त्वा स्वमाश्रमं विविशुः । अथ रात्र्यां निशायां व्यतीतायां राजा त्रिशङ्कुः चण्डालतां गतः प्राप्तः स्वं चाण्डालरूपमपश्यदित्यर्थः ॥९॥

गो० टी०—एवमित्यर्धम् ॥ १० ॥

१०] ति० टी०—परुषो रूक्षाङ्गः । ध्वस्तमूर्धजः खर्वकेशः १०॥

रा० टी०—चाण्डालतारूपमेव बोधयन्नाह—नीलेति । नीलवस्त्रधरः नीलः नीलदेहः पुरुषः रूक्षत्वविशिष्टः ध्वस्तमूर्धजः अदीर्घकेशः चित्यमाल्यानुलेपः चितिः श्मशानं तत्र भवं चित्यं भस्म तेन कृतः माल्यानुलेपः पुष्पाकारानुलेपो येन । किंच तेन युक्तौ माल्यानुलेपौ यस्य सः आयसाभरणः लोहभूषणयुक्तश्चाभवत् इति शेषः ॥ १० ॥

गो० टी०—अत्र चण्डालत्वं न तत्सादृश्यमात्रं किंतु क्षत्रियत्वप्रहाणेन चण्डालत्वजातिप्राप्तिः ब्राह्मणत्वादिजातेः कर्ममूलत्वेन तदपाये तदपायादित्याह—अथेत्यादिसार्धः । चण्डालतां गतः वक्षःस्थं यज्ञोपवीतमेव वध्र्यासीदित्यर्थः । नीलवस्त्रधरः कटिस्थपीताम्बरमेव चण्डालार्हनीलवस्त्रं जातमित्यर्थः । नीलः पूर्वस्थितराजतेज एव नीलवर्णोऽभवदित्यर्थः । एवमुत्तरत्रापि योज्यम् परुषः रूक्षाङ्गः ध्वस्तमूर्धजः ह्रस्वकेशः चित्यमाल्यानुलेपः चिता श्मशानं तत्र भवं चित्यं तादृशं माल्यमनुलेपः चिताभस्मरूपोऽङ्गरागश्च यस्य स तथा आयसाभरणः अयोविकाराभरणः ॥ ११ ॥

११ ] ति० टी०—चिता श्मशानं तत्र भवं पुष्पभस्मादि माल्याङ्गरागौ यस्य । अयोविकार आयसं तदाभरणः । त्यज्य त्यक्त्वा ॥ ११ ॥

रा० टी०—तमिति । हे राम ! चाण्डालरूपिणं तं राजानं सर्वे मन्त्रिणः ये अस्यानुगामिनस्ते सर्वे पौराश्च सहिताः सहैवेत्यर्थः । दृष्ट्वा त्यज्य त्यक्त्वा च प्राद्रवन् ततो भीताः द्रुतं देशान्तरमगच्छन् । विनापि चं समुच्चयः ॥ ११ ॥

गो० टी०—तमिति । स्पष्टम् ॥ १२ ॥

१२ ] ति० टी०—अनुगामिनः सहगताः । प्राद्रवंस्तं त्यक्त्वा गताः । परमात्मवान्धीरः ॥ १२ ॥

रा० टी०—एक इति । हे काकुत्स्थ ! दिवारात्रं दह्यमानः शोकव्याकुलचित्तः परमात्मवान् अतिधैर्यः राजा त्रिशङ्कुस्तपोधनं विश्वामित्रमेक एव जगाम । हिशब्द एवार्थे ॥ १२ ॥

गो० टी०—एक इति । परमात्मवान् परमधृतिमान् भूत्वा दह्यमानः दुःखेनेति शेषः । विश्वामित्रं वासिष्ठवैरिणं जगाम ॥१३॥

१३–१४ ] ति० टी०—दह्यमान इत्यस्य दुःखेनेत्यादि । विश्वामित्रं जगामेति पूर्वेणान्वयः । वसिष्ठवैरित्वाद्विफलीकृतं वसिष्ठतत्पुत्रैर्विनाशितैहिकामुष्मिकार्थम् ॥ १३ ॥ १४ ॥

रा० टी०—विश्वामित्र इति । हे राम ! विफलीकृतं यागप्रत्याख्यानशापाभ्यां विध्वंसितोभयलोकसुखं चण्डालरूपिणं तं राजानं त्रिशङ्कुं दृष्ट्वैव मुनिर्विश्वामित्रः कारुण्यमागतः प्राप्तः । तुशब्द एवार्थे ॥ १३ ॥

गो० टी०—विश्वामित्र इति । विफलीकृतं वासिष्ठविनाशितैहिकामुष्मिकसाधनमित्यर्थः ॥ १४ ॥

रा० टी०—कारुण्यादिति । महातेजाः परमधार्मिकः स विश्वामित्रः घोरदर्शनं राजानं त्रिशङ्कुं ते भद्रं कल्याणमस्तु इदं वाक्यं कारुण्यात् जगाद ॥ १४ ॥

गो० टी०—कारुण्यादिति । स्ववंशावमानप्रकटनेन रामस्य कोपो भविष्यतीति सान्त्वयति—भद्रं त इति ॥ १५ ॥

१५–१७ ] ति० टी०—यस्त्वं शापाच्चण्डालतां गतस्तस्य त इहागमनकार्यं किमित्यन्वयः ॥ १५–१७ ॥

---

१ एवमिति गो. पाठः । २ ते इति गो. पाठः । ३ पुरुष इति रा. पाठः । ४ माल्यानुलेपश्चेति गो. रा. पाठः । ५ आभरणान्वित इति रा. पाठः । ६ रूपिणमिति गो. पाठः ।

अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः । सशरीरो दिवं यायामिति मे सौम्यदर्शन ॥ १८ ॥
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् । अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ॥ १९ ॥
कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे । यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ॥ २० ॥
गुरवश्च महात्मानः शीलवृत्तेन तोषिताः । धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ॥ २१ ॥
परितोषं न गच्छन्ति गुरवो मुनिपुंगव । दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २२ ॥

रा० टी०—तद्वचनमेवाह—किमिति । हे राजपुत्र हे महाबल अयोध्याधिपते वीर ! यस्त्वं शापाच्चण्डालतां गतस्तस्य ते तवागमनकार्यमिहागमने प्रयोजनं किं तद्वदेति भावः। एतेन त्रिशङ्कुशापः पूर्वमेव विश्वामित्रेण श्रुत इति ध्वनितम् ॥१५॥

गो० टी०—किमिति । चण्डालतां गतः केन हेतुनेति शेषः १६॥

रा० टी०—अथेति । अथ विश्वामित्रोक्त्यनन्तरं तद्वाक्यं विश्वामित्रवचनमाकर्ण्य चण्डालतां गतः प्राञ्जलिः वाक्यज्ञः राजा त्रिशङ्कुः वाक्यकोविदं विश्वामित्रमब्रवीत् ॥ १६ ॥

गो० टी०—अथेति । आज्ञाय श्रुत्वेत्यर्थः ॥ १७ ॥

रा० टी०—तद्वचनमेवाह—प्रत्याख्यात इति । गुरुणा तथा गुरुपुत्रैश्चाहं प्रत्याख्यातोऽस्मि अतस्तं कामं स्वेच्छाविषयीभूतप्रयोजनमनवाप्यैव विपर्ययः इच्छाविषयीभूताद्विरुद्धोऽर्थो मया प्राप्तः । एक एवो हेतौ ॥ १७ ॥

गो० टी०—प्रत्याख्यात इति । तं कामं यमुद्दिश्य गुर्वाद्युपासनं कृतमित्यर्थः । विपर्ययः विपरीतप्रयोजनो हेतुविशेषः ॥ १८ ॥

१८ ] ति० टी०—यं काममुद्दिश्य गतस्तं काममनवाप्य नैतावदेव, अपि तु विपर्ययो जातिभ्रंश एवंवेषरूपः । काममाह—सशरीर इत्यादि । इतीत्यस्य काम इति शेषः । सौम्यदर्शनेति संबोधनम् ॥ १८ ॥

रा० टी०—ननु कस्ते कामो यं न प्राप्तोऽसि इत्यत आह—सेति । हे सौम्यदर्शन ! सशरीरोऽहं दिवं यायामिति हेतोः क्रतुशतं मे इष्टं मदिच्छाविषयीभूतं तत्क्रतुशतं मया नावाप्यते गुर्वादिभिः प्रत्याख्यातत्वान्न कृतमित्यर्थः । अत एव फलं सशरीरस्वर्गगमनं च नावाप्यते न प्राप्तमित्यर्थः । एकश्चशब्दो हेत्वर्थे नावाप्यत इत्युभयान्वयि ॥ १८ ॥

गो० टी०—कस्ते काम इत्यत्राह—सशरीर इति । सौम्येति संबुद्धिः दर्शनं बुद्धिः तच्च फलं क्रतुशतफलं सशरीरस्वर्गः ॥१९॥

१९ ] ति० टी०—तच्च तथापि । तत्फलं सशरीरस्वर्गप्राप्तिरूपं नावाप्यत इत्यन्वयः । क्रतुशतं न कृतं त्वयेति चेत्तत्राह—अनृतमिति ॥ १९ ॥

रा० टी०—गुरोर्गुरुपुत्राणां वाऽपराधान्तरं मया न कृतमिति बोधयितुमाह—अनृतमिति । मे मया अनृतं मिथ्या नोक्तपूर्वम् अत एव हे सौम्य कृच्छ्रेषु अपि गतः प्राप्तः क्षत्रधर्मेण स्थितोऽहं कदाचनानृतं न वक्ष्ये अत्र विश्वासार्थं ते तुभ्यमहं शपे । चो हेतौ ॥ १९ ॥

गो० टी०—वसिष्ठप्रत्याख्यानमूलं पापं मयि नास्तीत्याशयेनाह—अनृतमिति । यद्वा 'यज्ञोऽनृतेन क्षरति' इतिवचनात् क्रतुनाशकत्वेनावगतमनृतमपि मयि नास्तीत्याह—मे मया क्षत्रधर्मेण तत्साक्षितयेत्यर्थः । कृच्छ्रेष्वपि गतः आपद्गतोऽपि ते पुरत इति शेषः ॥ २० ॥

२० ] ति० टी०—कृच्छ्रेष्वपि गतोऽनृतं न वक्ष्य इत्यन्वयः क्षत्रधर्मेण तत्साक्षितया ॥ २० ॥

रा० टी०—सर्वकालं सद्वृत्तत्वात्पापान्तरस्यापि मयि संभावना न कर्तव्येति बोधयितुमाह—यज्ञैरिति । बहुविधैरनेकप्रकारैर्यज्ञैः राजोचितयागैर्मया इष्टं धर्मेण प्रजाः पालिताः महात्मानः पूज्यस्वरूपा गुरवश्च शीलयुक्तेन शीलवदाचरणेन तोषिताः ॥ २० ॥

गो० टी०—यज्ञैरिति । पूर्वं सशरीरत्वसाधनक्रतुशतमुक्तमत्र नित्यकर्मेति भिदा यद्वा पूर्वं क्रतुशतमिष्टं यद्युपक्रान्तमित्यर्थः । तच्च नावाप्यते तादृशक्रत्वनुष्ठानमनोरथो नावाप्यत इत्यर्थः । शीलवृत्तेन शीलयुक्तवृत्तेन शीलं सद्गुणः वृत्तमाचारः२१॥

२१ ] ति० टी०—शीलं सद्गुणः वृत्तमाचारः । इच्छत ममेति शेषः ॥ २१ ॥

रा० टी०—यदर्थं गुरवः पश्चादपरितुष्टास्तत्र हेतुं न विद्म इति बोधयितुं पूर्ववृत्तमाह—धर्मे इति । हे मुनिपुंगव ! धर्मे प्रयतमानस्य स्वधर्माचरणनिरतस्य यज्ञं सशरीरस्वर्गप्राप्तिफलकशतसंख्याकयागमाहर्तुं कर्तुं इच्छतो ममोपरि गुरवः परितोषं नैव गच्छन्ति अगच्छन् । एतेनापरितोषे हेतुरन्वेषणीय इति ध्वनितम् । चशब्द एवार्थे ॥ २१ ॥

गो० टी०—धर्म इति । प्रयतमानस्येति सप्तम्यर्थे षष्ठी ममेति शेषः ॥ २२ ॥

२२ ] ति० टी०—न गच्छन्ति न गच्छन्ति स्म । यदेवमतो दैवमत्र प्रारब्धफलमदृष्टमेव परं श्रेष्ठं हिताहितप्रापणे पौरुषमिदानींतनधर्मानुष्ठानं निरर्थकम् प्रारब्धतिरस्कारे दुर्बलमित्यर्थः ॥ २२ ॥

रा० टी०—स्वनिश्चितहेतुं वदन्नाह—दैवमिति । अहं दैवं भाग्यमेव परं हेतुं मन्येऽत एव पौरुषं निरर्थकमर्थाप्रापकं मन्ये-तत्र हेतुः यतः सर्वं दैवेनाक्रम्यते क्रियतेऽत एव परमा गतिर्दैवमेव । तुशब्दो हेत्वर्थे हिशब्द एवार्थे ॥ २२ ॥

गो० टी०—दैवमिति । अत इत्युपस्कार्यं दैवमत्र प्रारब्धफलमदृष्टं परं श्रेष्ठं पुरुषहिताहितप्रापकमित्यर्थः । पौरुष-

दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः । तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ॥
कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ॥ ॥ २३ ॥
नान्यां गतिं गमिष्यामि नान्यच्छरणमस्ति मे । दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ।

त्रिशङ्कुप्रार्थनामङ्गीकृत्य तस्मै सशरीरस्वर्गप्रापणं प्रतिज्ञाय विश्वामित्रः स्वशिष्यान्मुनिगणानयनार्थं प्राहिणोत् । वासिष्ठमहोदयवर्जं सर्वे ऋषयः समागच्छन् । शिष्यैर्विश्वामित्राय तत्कृतोपालम्भकथनं तच्छ्रवणप्राप्तक्रोधो विश्वामित्रो भस्मीभवतेति वासिष्ठान्निषादो भवेति च महोदयमशाप्सीत् ।

उक्तवाक्य तु राजानं कृपया कुशिकात्मजः । अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालतां गतम् ॥ १ ॥
इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम् । शरणं ते प्रदास्यामि मा भैषीर्नृपपुंगव ॥ २ ॥
अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः । यज्ञसाह्यकरान्राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ ॥

---

मिदानींतनधर्मानुष्ठानं निरर्थकं प्रारब्धकर्मतिरस्कारानर्हमित्यर्थः । आक्रम्यते अभिभूयते परमा गतिः इतरतिरस्कारेणैहिकसुखदुःखादिप्रापकमित्यर्थः ॥ २३ ॥

२३–२४ ] ति० टी०–दैवमुक्तम् । आक्रम्यतेऽभिभूयते । परमा गतिः साक्षादितरतिरस्कारेणैहिकसुखदुःखदम् । प्रसादं दैवानुकूल्यसमर्थं त्वदीयं प्रसादमिच्छतो मे प्रसादं कर्तुमर्हसि । दैवेनोपहतं तिरस्कृतमिहानुष्ठीयमानं कर्म यस्य ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०–इदानीं तत्कर्तव्यमाह–तस्येति । परमार्तस्यात्यन्तदुःखं प्राप्तस्य प्रसादं स्वचित्तप्रसन्नतामभिकाङ्क्षतस्तस्य गुरुपुत्रैः शप्तस्य मे मम प्रसादं कर्तुमर्हसि ते भद्रमस्तु । प्रसादस्यान्वयः एकत्र शाब्दः अपरत्रार्थः ॥ २३ ॥

गो० टी०–तस्येति । प्रसादं दैवानुकूल्यम् ॥ २४ ॥

रा० टी०–भवन्तमन्तरा गत्यन्तरं मे नास्तीति बोधयन्नाह–नेति । यतः मे शरणं रक्षकः अन्यः त्वद्भिन्नो नास्ति अतः अन्यां त्वद्भिन्नां गतिं रक्षकं न गमिष्यामि प्राप्स्याम्यतः पुरुषकारेण स्वपौरुषेण दैवं मम दुर्भाग्यं निवर्तयितुं त्वमर्हसि ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

गो० टी०–नेति । गतिं शरणं वसिष्ठेन स्वयमाहृतश्चेत्किं करिष्यसीत्यत्राह–नान्यः शरणमस्तीति । पुरुषकारेण स्वत्प्रसादरूपानुकूल्यकरणेन ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

१–२ ] ति० टी०–उक्तेति ॥ १ ॥ २ ॥

रा० टी०–त्रिशङ्कुप्रार्थनोत्तरकालिकं वृत्तमाह–उक्तेति । उक्तवाक्यं कथितस्ववृत्तं चाण्डालरूपिणं राजानं त्रिशङ्कुं कुशिकात्मजो विश्वामित्रः कृपया मधुरं वाक्यं साक्षादेवाब्रवीत् । साक्षादब्रवीदित्यनेन चाण्डालः साक्षादभिभाषणानर्ह इति निषेधस्यानर्हः स इति ध्वनितम् । तेनकर्मणा जात्या च स न चाण्डाल इति व्यञ्जितम् । अत एव चाण्डालरूपिणमिति विशेषणम् । तुशब्द एवार्थे ॥ १ ॥

गो० टी०–जातिचण्डालस्य कदाचित्तद्भावनिवृत्तिरस्ति न तु कर्मचण्डालस्येत्याह एकोनषष्टितमे–उक्तवाक्यमित्यादि । साक्षाच्चण्डालरूपिणं चण्डालचिह्नधारित्वात्र शास्त्रगम्यचण्डालभाव इत्यर्थः ॥ १ ॥

रा० टी०–तद्वचनमेवाह–इक्ष्वाको इति । इक्ष्वाको हे इक्ष्वाकुकुलोद्भव वत्स नृपपुंगव ! त्वां सुधार्मिकमहं जानाम्यतः स्वागतं समीचीनं तवागमनमतस्ते शरणं रक्षकोऽहं भविष्याम्यतो मा भैषीः भयं न प्राप्नुहि ॥ २ ॥

गो० टी०–ऐक्ष्वाकेत्यादि चत्वारः । यज्ञसाह्यकरान् यज्ञसाहाय्यकरान् गमिष्यसि स्वर्गमिति शेषः । अनेनेत्यनेन ऋषिशापकृतरूपस्य ब्रह्मणाप्यवार्यत्वेन जातिचण्डालताभावेन मत्तपोमहिमोपबृंहितयज्ञेन सशरीरः स्वर्गं गमिष्यसीति भावः । हस्तप्राप्तम् अनायासेन सर्वोलभ्यं तत्र हेतुः यस्त्वमिति ॥ २–६॥

३ ] ति० टी०–यज्ञसाह्यं यज्ञसाहाय्यम् ॥ ३ ॥

रा० टी०–अहमिति । हे राजन् ! पुण्यकर्मणः यज्ञसाह्यकरान् त्वच्चिकीर्षितयज्ञसाहाय्यकर्तॄन् सर्वान् महर्षीनहमामन्त्रये ततो निर्वृतः प्राप्तानन्दस्त्वं यक्ष्यसि ॥ ३ ॥

---

१ चण्डालरूपिणमिति गो. रा. पाठः । २ ऐक्ष्वाकेति गो. पाठः ।

गुरुशापकृतं रूपं यदिदं त्वयि वर्तते । अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४ ॥
हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप । यस्त्वं कौशिकमागम्य शरण्यं शरणागतः ॥ ५ ॥
एवमुक्त्वा महातेजाः पुत्रान्परमधार्मिकान् । व्यादिदेश महाप्राज्ञान्यज्ञसंभारकारणात् ॥ ६ ॥
सर्वाञ्शिष्यान्समाहूय वाक्यमेतदुवाच ह । सर्वानृषीन्सवासिष्ठानानयध्वं ममाज्ञया ॥ ७ ॥
सशिष्यान्सुहृदश्चैव सर्त्विजः सुबहुश्रुतान् । यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः ॥ ८ ॥
तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम् । तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ॥ ९ ॥
आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः । ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम् ॥ १० ॥
ऊचुश्च वचनं सर्वे सर्वेषां ब्रह्मवादिनाम् । श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः ॥ ११ ॥
सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयम् । वासिष्ठं यच्छतं सर्वं क्रोधपर्याकुलाक्षरम् ॥ १२ ॥
यैथाह वचनं सर्वं शृणु त्वं मुनिपुंगव । क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥ १३ ॥

---

४ ] ति० टी०—अनेन रूपेण गुरुपुत्रशापकृतेन चण्डालरूपेण ऋषिशापस्यान्यथाकर्तुमशक्यत्वात् । गमिष्यसि स्वर्गमिति शेषः । जातिचाण्डालत्वाभावाच यज्ञप्रवृत्तिः ॥ ४ ॥

रा० टी०—गुर्विति । गुरुशापकृतं यदिदं रूपं त्वयि वर्ततेऽनेन रूपेण सह सशरीरः शरीरसहितस्त्वं गमिष्यसि स्वर्गमिति शेषः । अनेन रूपेणेत्युक्त्या गुरुशापनिवारणे स्वाशक्यत्वं सूचितम् ॥ ४ ॥

५ ] ति० टी०—हस्तप्राप्तमनायासलभ्यम् । तत्र हेतुः—यस्त्वमित्यादि ॥ ५ ॥

रा० टी०—नन्वनेन रूपेण स्वर्गप्राप्तिर्दुर्लभेत्यत आह—हस्तेति । हे नराधिप ! यस्त्वं शरण्यं शरणहितं कौशिकमागम्य ज्ञात्वा शरणं रक्षा यथा स्यात्तथा गतः प्राप्तस्तस्य तव स्वर्गं हस्तप्राप्तमहं मन्ये निश्चिनोमि ॥ ५ ॥

६ ] ति० टी०—यज्ञसंभारकारणाद्यज्ञसामग्रीसंपादनार्थम् ॥ ६ ॥

रा० टी०—एवमिति । महातेजाः अतिशयतेजोविशिष्टो विश्वामित्रः एवमुक्त्वा त्रिशङ्कुमाभाष्य महाप्राज्ञान् पुत्रान् स्वात्मजान् यज्ञसंभारकारणात् यागसंपादकसामग्रीसंपादनहेतोः व्यादिदेश आज्ञापयामास ॥ ६ ॥

गो० टी०—एवमिति सार्धः । शिष्यान् भृत्यान् ॥ ६ ॥

७ ] ति० टी०—शिष्याणामृष्यानयन आज्ञा ॥ ७ ॥

रा० टी०—सर्वानिति । सर्वान्निखिलान् शिष्यान् समाहूयैतद्वाक्यमुवाच । तद्वचनमेवाह—सवासिष्ठान् वाशिष्ठसहितान् सशिष्यान् शिष्यसहितान् सर्वान् ऋषीन् सर्त्विजः ऋत्विक्सहितान् सुबहुश्रुतान् वेदशास्त्रसंपन्नान् सुहृदश्च ममाज्ञयैवानयध्वम् । सार्धश्लोक एकान्वयी । हशब्द एवार्थे ॥ ७ ॥ ८ ॥

गो० टी०—सर्वानिति । सुहृदः मत्सुहृदः शोभनहृदयान्वा ७

८–१० ] ति० टी०—सुहृदः स्वस्य । स्वस्वऋत्विक्सहितान् तद्विशेषणम्—सुबहुश्रुतानिति । यदिति । आहूतोऽन्यो वा अनादृतमुपेक्षारूपं चण्डालयाजनरूपं निन्दात्मकं वा यद्वाक्यं ब्रूयात्तत्सर्वमुक्तमखिलेन ममाख्येयम् ॥ ८–१० ॥

रा० टी०—यदिति । मद्वाक्यबलचोदितः मद्वाक्यरूपबलप्रेरितः मदाहूत इति यावत् । अन्यः अनाहूतो वा अनादृत उदासीनं निन्दाफलकं वा वचनं ब्रूयात् अखिलेनोक्तं तत्सर्वं ममाख्येयं सर्वैर्भवद्भिरागत्य ममाग्रे यथाश्रुतं वक्तव्यमित्यर्थः ॥ ९ ॥

गो० टी०—यदन्य इति । मद्वाक्यबलेन चोदितः आहूतः यः कश्चनान्यः अनादृतमुपेक्षारूपं चण्डालं याजयतीति निन्दारूपं वा [illegible]द्वाक्यं ब्रूयात् तेनोक्तं तत्सर्वमखिलेन ममाख्येयम् ॥ ८ ॥

रा० टी०—तस्येति । तस्य विश्वामित्रस्य तत् आह्वानार्थकं वचनं श्रुत्वा तदाज्ञया विश्वामित्राज्ञापनेन दिशो जग्मुः । अथ विश्वामित्रप्रेषिततच्छिष्यवचनश्रवणानन्तरं सर्वेभ्यो देशेभ्यो ब्रह्मवादिन आजग्मुः ॥ १० ॥

गो० टी०—तस्येति द्वौ । ब्रह्मवादिनः शिष्याः ब्रह्मवादिनां वचनमित्यन्वयः ॥ ९ ॥ १० ॥

रा० टी०—ते प्रेषिताः सर्वे शिष्यास्तु समागम्य आहूतमुन्यागमनात्पूर्वं विश्वामित्रसमीपं प्राप्यैव ज्वलिततेजसं मुनिं विश्वामित्रं सर्वेषां ब्रह्मवादिनां वचनमुक्तिमूचुः यथोक्तं कथयामासुरित्यर्थः । एकश्चकार एवार्थे द्वितीयस्त्वर्थे । श्लोकद्वयमेकान्वयि ॥ ११ ॥

११ ] ति० टी०—ते तव ॥ ११ ॥

रा० टी०—तद्वचनमेवाह—श्रुत्वेति । सर्वदेशेषु भवदाज्ञप्तेषु अगच्छन् अस्मदादय इति शेषः । ते वचनं अस्मदाद्युक्तत्वत्संदेशं श्रुत्वा महोदयं महोदयनामानमृषिं वर्जयित्वा सर्वे आहूताः द्विजातयः चकारेण सुहृदादयश्च समायान्ति । महोदयं वर्जयित्वेत्यनेन तस्य वशिष्ठपुत्रानुयायित्वं ध्वनितम् ॥ १२ ॥

गो० टी०—यदनादरवचनं मुनीनां तदपि वक्तव्यमित्युक्तत्वात्तदपि वदन्ति—श्रुत्वेत्यादिषट् । सर्वदेशेषु स्थिता इति शेषः । महोदयमिति तदाख्यं ऋषिमित्यर्थः । वासिष्ठशतं च वर्जयित्वेति द्रष्टव्यम् ॥ ११ ॥

१२–१३ ] ति० टी०—सर्वदेशेष्वित्यस्य स्थिता इति शेषः । आगच्छन्नित्यस्य केचिदिति शेषः । महोदयं तन्नामान-

---

१ तदिति गो. रा. पाठः । २ यदाहेति गो. रा. पाठः ।

कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः । ब्राह्मणा वा महात्मानो भुक्त्वा चाण्डालभोजनम् ॥ १४ ॥
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः । एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ॥ १५ ॥
वासिष्ठा मुनिशार्दूल सर्वे सहमहोदयाः । तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुंगवः ॥ १६ ॥
क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् । यद्दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ॥ १७ ॥
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः । अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ॥ १८ ॥
सप्तजातिशतान्येव मृतपाः संभवन्तु ते । श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ॥ १९ ॥

मृषिम् वासिष्ठं यच्छतं सर्वं तच्च वर्जयित्वेति योजना । तद्वासिष्ठशतं क्रोधपर्याकुलाक्षरं यथा येन प्रकारेण वचनमाह तत्सर्वं शृण्वित्यर्थः । क्षत्रिय इत्यादि । ब्राह्मणस्यैव याजनाधिकारात् चण्डालस्य यज्ञेऽनधिकाराच्च ॥ १२ ॥ १३ ॥

रा० टी०—वासिष्ठमिति । हे मुनिपुंगव ! शतं शतसंख्याकं सर्वं वाशिष्ठं वशिष्ठापत्यं यत् क्रोधपर्याकुलाक्षरं क्रोधव्याप्ताक्षरविशिष्टं वचनमाह तत् सर्वं त्वं शृणु ॥ १३ ॥

गो० टी०—वासिष्ठं यदाहेत्यत्र महोदयश्चेत्यपि बोध्यमुपसंहारे तथा दर्शनात् ॥ १२ ॥

रा० टी०—वाशिष्ठवचनमेवाह—क्षत्रिय इति । यस्य चाण्डालस्य विशेषतः प्राधान्यात् क्षत्रियो याजकः तस्य सदसि यागशालायां सुरर्षयः सुराश्च ऋषयश्च हविर्भोक्तारः कथं न भोक्तार इत्यर्थः ॥ १४ ॥

गो० टी०—क्षत्रियो याजको यस्येति । विप्रस्यैव याजनाधिकारात् चण्डालस्य याज्यत्वानधिकारात् तस्य सदसि देवताः कथं हविर्भोक्तारः सुद् ऋषयश्च कथमिष्टशिष्टभोक्तार इति भावः ॥ १३ ॥

१४ ] ति० टी०—सुराणां देवतात्वेन भोक्तृत्वम् ऋषीणामृत्विक्त्वेन यज्ञशिष्टभोक्तृत्वम् ॥ १४ ॥

रा० टी०—पूर्वमनधिकारियाजकप्रयुक्ताशुद्धिं हविष उक्त्वा इदानीमनधिकारियाज्यप्रयुक्ताशुद्धिंहविषो बोधयन्नाह—ब्राह्मणा इति । महात्मानो विश्वामित्रेण पालिता अपि ब्राह्मणाः चाण्डालभोजनं चाण्डालस्वामिकमन्नं भुक्त्वा स्वर्गं सुखविशेषं कथं गमिष्यन्ति प्राप्स्यन्ति न प्राप्स्यन्तीत्यर्थः । एतेन इयं यागप्रवृत्तिः अत्यनर्थहेतुरिति ध्वनितम् । वाशब्दोऽप्यर्थे ॥१५॥

१५ ] ति० टी०—पालिता इति व्यङ्ग्योक्तिः । वचननैष्ठुर्यम् अर्शआद्यजन्तम् नैष्ठुर्यवद्वचनमित्यर्थः ॥ १५ ॥

रा० टी०—उपसंहरन्नाह—एतदिति । हे मुनिशार्दूल ! संरक्तलोचनाः सहमहोदयाः महोदयसहिताः सर्वे वाशिष्ठाः एतद्वर्णितं वचननैष्ठुर्यं निष्ठुरवचनमूचुः नैष्ठुर्यशब्दः स्वार्थेष्यन्तः ॥ १६ ॥

गो० टी०—पालिता इति क्षेपोक्तिः । अयाज्ययाजयितारः ऋषयः कथं स्वर्गं गमिष्यन्तीति भावः ॥ १४–१६ ॥

१६ ] ति० टी०—वासिष्ठा इत्यायर्धं पूर्वान्वयि । सहमहोदया महोदयेन सहिताः ॥ १६ ॥

रा० टी०—तेषामिति । तेषां प्रसिद्धानां सर्वेषां समहोदयवाशिष्ठानां तद्वचनं श्रुत्वा स्वशिष्यमुखादवगत्य क्रोधसंरक्तनयनः मुनिपुंगवो विश्वामित्रः सरोषं रोषसहितमिदं वचनमब्रवीत् ॥ १७ ॥

१७ ] ति० टी०—अदुष्टत्वे हेतुः—तप उग्रमिति । तपस्तेजसा क्षत्रियस्य चण्डालयाजनमपि न दोषायेति ज्ञात्वापि यद्दूषयन्ति स्म ॥ १७ ॥

रा० टी०—तदुक्तिमेवाह—यदिति । उग्रं तपः समास्थितं कुर्वन्तमत एव अदुष्टं दोषस्पर्शानर्हं मां दुरात्मानः समहोदयवासिष्ठाः यत् यस्माद्दूषयन्ति तस्मात् भस्मीभूताः भविष्यन्ति अत्र संशयो न ॥ १८ ॥

गो० टी०—य इति । तेषां तेजोविशेषेण प्रत्यवायो न विद्यत इतिन्यायेन चण्डालयाजनमपि जीर्यतीत्यविज्ञाय ये दूषयन्ति ते भस्मीभूता भविष्यन्तीत्यर्थः ॥ १७ ॥

१८ ] ति० टी०—तस्माद्भस्मीभूता इत्यादि ॥ १८ ॥

रा० टी०—अद्येति । अद्य भस्मीभवनोत्तरकाले वैवस्वतक्षयं यमराजगृहं कालपाशेनैव नीतास्ते वाशिष्ठा भविष्यन्तीत्यनुकृष्यते । वैवस्वतभवनगमनोत्तरकालिकं वृत्तमाह—सप्त जातिशतानि सप्तगुणितजन्मशतम् सर्वशो वासिष्ठाः मृतपाः श्वपाकाः सन्तु ॥ १९ ॥

गो० टी०—अद्येत्यादिपद्यम् । क्षयं गृहं सप्तजातिशतानि सप्तजन्मशतानि मृतपाः शवभक्षकाः मुष्टिकाः हीनजातिविशेषाः विकृताः विकृतवचनव्यापारादयः विरूपाः विकृतवेषाः ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—सप्तजातिशतानि सप्तजन्मशतानि । मृतपाः शववस्त्रादिहारिणः मुष्टिका नाम तन्नामानः इदानीम् 'डोंबा' इति प्रसिद्धाः ॥ १९ ॥

रा० टी०—तदेव विशदयन्नाह—श्वमांसेति । श्वमांसनियताहाराः अत एव निर्घृणाः अत एव विकृताः विरुद्धप्रयत्नकाः विरूपाः विकृतरूपाः मुष्टिका चाण्डालजातिविशेषाः सन्तः इमान् लोकान् नाम प्रसिद्धमनुचरन्तु । चकारद्वयं हेत्वर्थकम् ॥ २० ॥

१ चण्डालेति गो. पाठः । २ ते समहोदया इति गो. रा. पाठः । ३ ये दूषयन्तीति गो. पाठः । ४ सन्तु सर्वश इति गो. रा. पाठः ।

विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् । महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ॥ २० ॥
दूषितः सर्वलोकेषु निषादत्वं गमिष्यति । प्राणातिपातनिरतो निरनुक्रोशतां गतः ॥ २१ ॥
दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति । एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ॥
विरराम महातेजा ऋषिमध्ये महामुनिः ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ।

तेभ्यः स्वाभिप्रायं निवेद्य विश्वामित्रो मुनिगणैः समं यज्ञं समारेभे । तत्र भागार्थमाहूतेऽपि देवगणेऽनायाते स्वतपोबलेनैव त्रिशङ्कुं स्वर्गं प्राहिणोत् । सांद्रन्द्रादिभिः कृतप्रतिबन्धो ऋषिं चुक्रोश । तं तत्रैव संस्तभ्य तत्रैव स्वर्गं स्रष्टुमारब्धवन्तं देवा विश्वामित्रं सान्त्वयित्वा तत्कृतं चानुमत्य स्वर्गं जग्मुः ।

तपोबलहताञ्ज्ञात्वा वासिष्ठान्समहोदयान् । ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥
अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः । धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥ २ ॥
स्वेनानेन शरीरेण देवलोकजिगीषया । यथायं स्वशरीरेण देवलोकं गमिष्यति ॥ ३ ॥

---

२० ] ति० टी०—विकृता विकृतव्यापाराः विरूपा विकृताकाराः । अदूष्यं ह्यदूषयदिति प्राग्वत् ॥ २० ॥

रा० टी०—महोदय इति । दुर्बुद्धिर्महोदयोऽपि अदूष्यं मां यददूषयत् तस्मात्सर्वलोकेषु दूषितः सन् निषादत्वं गमिष्यति प्राप्स्यति चोऽन्यर्थे ॥ २१ ॥

गो० टी०—अदूष्यमुक्तन्यायेनेति भावः ॥ २० ॥

गो० टी०—महोदयश्चेत्यनेन पूर्वं शप्ता वसिष्ठपुत्रा एवेति गम्यते। प्राणातिपातः बलात्प्राणनाशनं निरनुक्रोशतां निर्घृणतां वर्तयिष्यति प्राप्स्यति । ननूग्रतपस्वित्वेऽपि क्षत्रियस्य चण्डालयाजनं सर्वथा अन्याय्यमेवेति कथं यथार्थवादिषु शापप्रवृत्तिरिति चेदत्रोत्तरं वसिष्ठवैरनिर्यातनकामस्य विश्वामित्रस्य तपःफलमिदमिति ॥ २१ ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

२१ ] ति० टी०—प्राणातिपातनिरतः प्राणिनां प्राणनाशोद्यतः । अनुक्रोशो दया ॥ २१ ॥

रा० टी०—निषादत्वमेव प्रकटयन्नाह—प्राणेति । प्राणातिपातनिरतः प्राणानां प्राणिनां योऽतिपातो हिंसा तत्र निरतः अत एव निरनुक्रोशतां निर्दयत्वं गतः प्राप्तो महोदयः दुर्गतिं मम क्रोधात् दीर्घकालं बहुकालपर्यन्तं वर्तयिष्यति प्राप्स्यति ॥ २२ ॥

२२ ] ति० टी०—वर्तयिष्यति प्राप्स्यति । अत्रेदं बोध्यम्—क्षत्रियत्वेऽपि याजने प्रवृत्तिः, तत्रापि शापदूषितचण्डालयाजने प्रवृत्तिः, ब्राह्मणेषु वासिष्ठेषु वधादिकृत्याप्रवृत्तिः, एतत्सर्वं ब्राह्मणस्वेच्छया प्रवर्तमानतपसो विनाशाय दैवकृतमिति बोध्यम् २२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

रा० टी०—एतावदिति । महातपाः अत एव महातेजाः महामुनिर्विश्वामित्रः एतावद्वचनमृषिमध्ये उक्त्वा विरराम॥२३॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

१ ] ति० टी०—ज्ञात्वा योगबलेन ॥ १ ॥

रा० टी०—विरामोत्तरकालिकं वृत्तमाह—तप इति । महातेजाः स विश्वामित्रः समहोदयान् महोदयसहितान् वाशिष्ठान् वशिष्ठपुत्रान् तपोबलहतान् स्वतपःप्रभावप्रनष्टान् ज्ञात्वा ऋषिमध्येऽभ्यभाषत ॥ १ ॥

गो० टी०—अथ सशरीरस्य त्रिशङ्कोः स्वर्गप्रापणं षष्टितमे—तप इत्यादि ॥ १ ॥

२ ] ति० टी०—इक्ष्वाकुदायादस्तद्वंश्यः एवमादिगुणैर्यागाधिकारित्वं सूचितम् ॥ २ ॥

रा० टी०—तद्भाषणमेवाह—अयमिति । धर्मिष्ठः अत एव वदान्यः त्रिशङ्कुरिति विश्रुतः प्रख्यातः अयमिक्ष्वाकुदायादस्वेन स्वकीयेन अनेन चाण्डालरूपेण शरीरेणैव देवलोकजिगीषया देवलोकप्राप्तीच्छयेत्यर्थः शरणं रक्षकं मां गतः प्राप्तोऽतः स्वशरीरेणैव स्वर्गलोकं यथा येन प्रकारेणायं त्रिशङ्कुर्गमिष्यति तथा तेन प्रकारेणैव मया सह भवद्भिर्यज्ञः प्रवर्त्यताम् । सार्धश्लोकद्वयमेकान्वयि चकारद्वयमेवार्थकं तृतीयो हेत्वर्थकः ॥ २ ॥ ३ ॥

गो० टी०—अयमिति सार्धः । दायमत्तीति दायादः पुत्रपौत्रादिः पचाद्यच् वंश इति यावत् । तेन पूर्वं क्षत्रियरूपेण अनेन इदानीं चण्डालरूपेण शरीरेण देवलोकजिगीषया स्वर्गं स्ववशीकर्तुमिच्छया मां शरणं गतः ॥ २ ॥

३ ] ति० टी०—स्वं प्रति शरणमागमने हेतुमाह—स्वेनेत्यादि ॥ ३ ॥

---

१ स्वर्गलोकमिति गो. रा. पाठः ।

तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह । विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ॥ ४ ॥
ऊचुः समेता सहसा धर्मज्ञा धर्मसंहितम् । अयं कुशिकदायादो मुनिः परमकोपनः ॥ ५ ॥
यदाह वचनं सम्यगेतत्कार्यं न संशयः । अग्निकल्पो हि भगवाञ्शापं दास्यति रोषितः[1] ॥ ६ ॥
तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवि[2] । गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ७ ॥
ततः[3] प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत । एवमुक्त्वा महर्षयः संजहुस्ताः[4] क्रियास्तदा ॥ ८ ॥
याजकश्च महातेजा विश्वामित्रोऽभवत्क्रतौ । ऋत्विजश्चानुपूर्व्येण[5] मन्त्रवन्मन्त्रकोविदाः ॥ ९ ॥
चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि । ततः कालेन महता विश्वामित्रो महातपाः ॥ १० ॥
चकारावाहनं तत्र भागार्थं सर्वदेवताः । नाभ्यागमंस्तदा तत्र[6] भागार्थं सर्वदेवताः ॥ ११ ॥
ततः कोपसमाविष्टो[7] विश्वामित्रो महामुनिः । स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥

---

गो० टी०—यथेति पञ्च ॥ ३ ॥

४ ] ति० टी०—प्रवर्त्यतामारभ्यताम् ॥ ४ ॥

रा० टी०—विश्वामित्रेति । विश्वामित्रवचो वचनं श्रुत्वा सहसा शीघ्रमेव समेताः धर्मज्ञाः सर्वे महर्षयः धर्मसंहितं धर्मसहितं वचनमूचुः परस्परं कथयामासुः। पूर्वोत्तरार्धोत्तरपूर्वार्धयोरेकत्रान्वयः ॥ ४ ॥

५ ] ति० टी०—धर्मसंहितमिति क्रियाविशेषणम् । ऊचुरित्यस्यान्योन्यमिति शेषः । यदूचुस्तदाह—अयमित्यादि ॥५॥

रा० टी०—तद्वचनमेवाह—अयमिति।कुशिकदायादः कुशिकभागभोक्ता परमकोपनोऽयं मुनिः यद्वचनमाह तदेतत्सम्यक् कार्यमत्र संशयो न। अन्यथाकरणे दोषमाह—अग्निकल्पः अग्निसदृशः भगवान् सकलसामर्थ्यविशिष्टो विश्वामित्रः रोषतः अस्मदन्यथाचरितजनितक्रोधात् शापं दास्यत्येव । हिरेवार्थे ॥ ५ ॥ ६ ॥

गो० टी०—ऊचुः अन्योन्यमिति शेषः ॥ ४ ॥

६–७ ] ति० टी०—अग्निकल्पः अजितकामक्रोधत्वाच्छापं दास्यति यतस्तस्मादिति ॥ ६ ॥ ७॥

रा० टी०—तस्मादिति । तस्मात् विश्वामित्रकोपभयादिक्ष्वाकुदायादः त्रिशङ्कुः विश्वामित्रस्य तेजसा यथा येन प्रकारेण सशरीरो दिवं गच्छेत्तथा यज्ञः प्रवर्त्यताम् ॥ ७ ॥

गो० टी०—सम्यक्कार्यमित्यन्वयः । समधिष्ठत स्वस्वार्त्विज्यमिति शेषः ॥ ५–७ ॥

८ ] ति० टी०—ततः सशरीरस्य स्वर्गगमनाय यज्ञः प्रवर्त्यताम् सर्वे भवन्तः स्वस्वकृत्यमधितिष्ठत प्रारभध्वम् । ताः क्रियाः स्वस्वार्त्विज्यकर्माणि ॥ ८ ॥

रा० टी०—सर्वऋषीणां यागसंमतिं ज्ञात्वा विश्वामित्र आह—तत इति । ततः जातसंमतित्वाद्धेतोः सर्वे यूयं समधितिष्ठत यज्ञः प्रवर्त्यताम् भवद्भिरिति शेषः । एवमनेन प्रकारेण उक्ता विश्वामित्रेणाज्ञप्ता महर्षयस्ताः यागप्रसिद्धाः क्रियाः संचक्रुः। तदा तस्मिन्काले क्रतौ यागे महातेजा विश्वामित्र एव याजकोऽध्वर्युरभवत् । चशब्द एवार्थे । अध्वर्युत्वादेव अध्वर्युः स्रुवमुद्यम्येति वक्ष्यमाणं संगच्छते । अर्धत्रयमेकान्वयि ॥ ८ ॥

गो० टी०—एवमिति । तास्ताः क्रियाः स्वस्वार्त्विज्यकर्माणि याजकः अध्वर्युः स्रुवमुद्यम्येति वक्ष्यमाणत्वात् ॥ ८ ॥

९ ] ति० टी०—याजकः अध्वर्युरिति यावत् अत एव वक्ष्यति–स्रुवमुद्यम्येति ॥ ९ ॥

रा० टी०—ऋत्विज इति । मन्त्रवन्तः परस्परं कृतसंमतयस्ते एव मन्त्रकोविदा मन्त्रोपलक्षितयागनिपुणाः ऋत्विजः यथाकल्पं कल्पशास्त्रमनतिक्रम्य यथाविधि सर्वाणि कर्माणि आनुपूर्व्येण क्रमश एव चक्रुः । चशब्द एवार्थे ॥ ९ ॥

गो० टी०—ऋत्विज इति । मन्त्रवदिति क्रियाविशेषणम्। यथाकल्पं कल्पसूत्रमनतिक्रम्य यथाविधि यथाशास्त्रम् ॥ ९ ॥

१० ] ति० टी०—यथाकल्पं शास्त्रानुसारेण । यथाविधि यथासंप्रदायानुष्ठानम् । कल्पशास्त्रे नानापक्षोपन्यासस्थलेऽनुष्ठेयांशे संप्रदायस्यैव शरणत्वात् । महता कालेनाधिककालसाध्ययत्नपूर्वकमन्त्रपाठेन ॥ १० ॥

रा० टी०—तत इति । ततः यागप्रवृत्त्यनन्तरं महातपाः विश्वामित्रः तत्र तस्मिन् यागे भागार्थं तत्तद्भागं दातुं सर्वदेवताः निखिलदेवतायाः आवाहनं महता कालेन चकार । सर्वदेवता इति षष्ठ्येकवचनमागमशास्त्रस्यानित्यत्वाट्टाबभावः । महता कालेनेत्यनेन तद्यागदेवानां बाहुल्यं द्योतितम् ॥ १० ॥

गो० टी०—तत इति । महता कालेन द्विस्त्रिर्मन्त्रावृत्त्या सर्वदेवताः प्रतीति शेषः ॥ १० ॥

११ ] ति० टी०—सर्वदेवताः प्रतीति शेषः । तदा तथाप्यनधिकारिणा याजनाद्यजनाच्च ॥ ११ ॥

रा० टी०—नेति । ततः विश्वामित्रावाहनानन्तरं तत्र तस्मिन् यागे सर्वदेवता भागार्थं नाभ्यागमन् । इदमर्धमेव ॥११॥

गो० टी०—नेत्यर्धम् । नाभ्यागमन् अनधिकारिणा अन्यायेन च कृतमकृतमिति न्यायादिति भावः ॥ ११ ॥

१२ ] ति० टी०—उद्यम्योर्ध्वं क्रोधेन प्रक्षिप्य कोपस्यैवाधिकावस्था क्रोधः ॥ १२ ॥

---

१ रोषित इति गो. पाठः । २ दिवमिति गो. रा. पाठः । ३ तथेति गो. पाठः । ४ चक्रुस्तास्ता इति गो. संचक्रुस्ता इति रा. पाठः । ५ चानुपूर्वेणेति रा. पाठः । ६ आहूता इति गो. पाठः । ७ क्रोधेति गो. रा. पाठः ।

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥ १३ ॥
दुष्प्रापं स्वशरीरेण स्वर्गं गच्छ नरेश्वर । स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥ १४ ॥
राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज । उक्तवाक्ये मुनौ तस्मिन्सशरीरो नरेश्वरः ॥ १५ ॥
दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा । स्वर्गलोकं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६ ॥
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् । त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ॥ १७ ॥
गुरुशापहतो मूढ पत भूमिमवाक्शिराः । एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ॥ १८ ॥
विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् । तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ १९ ॥
रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् । ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ २० ॥

---

**रा० टी०—तत इति** । ततः आहूतदेवागमनाभावहेतोः क्रोधसमाविष्टः महामुनिः अतिमननशीलः सक्रः अतिक्रियासहितः अथः कोपान्तर्धारणासमर्थः विश्वामित्रः सुवक्षुवम्य त्रिशङ्कुमिदमब्रवीत् । क्रः इत्यत्र कृधातोर्घञर्थे कविधानमिति कः । नञ्पूर्वकधारणार्थकधाधातुप्रकृतिककप्रत्ययान्तोऽध इति अत एव क्रोधसमाविष्ट इत्यनेन न पौनरुक्त्यम् ॥ १२ ॥

**गो० टी०—तत इति** । सुवोयमनं कोपजचेष्टाविशेषः ॥ १२ ॥

**१३ ] ति० टी०—पश्य मे इति** । भागार्थं देवानामनागमनेनासाध्यत्वेऽपि स्वतपोव्ययेन त्वामभीष्टं स्वर्गं नयामीति भावः ॥ १३ ॥

**रा० टी०—तद्वचनमेवाह—पश्येति** । हे नरेश्वर ! स्वार्जितस्य मे तपसो वीर्यं पश्य । तद्वीर्यमेवाह—एषः अहमोजसा स्वतपःप्रभावेण स्वशरीरेण गुरुपुत्रशापात्मीयशरीरेण त्वां स्वर्गं नयामि ॥ १३ ॥

**गो० टी०—पश्येति** सार्धः । त्वदभिमतयागस्त्वास्तामिति भावः । एष इत्यव्यवधाने ओजसा तपोवीर्येण दुष्प्रापमन्यैरिति शेषः ॥ १३ ॥

**१४ ] ति० टी०—स्वशरीरेण** दुष्प्रापमित्यन्वयः । हि यदि मया स्वार्जितं यत्किंचिदपि तपसः फलं सुकृतमस्ति ॥ १४ ॥

**रा० टी०—दुरिति** । हे नराधिप ! दुष्प्रापं त्वद्भिन्नैर्दुर्गमं स्वर्गं स्वशरीरेण गच्छ । साधनमन्तरा कथं गच्छामीत्यत आह—हे राजन् ! मया स्वार्जितं स्वस्मै अर्जितं तपसः फलं किंचिदपि यद्यस्ति तर्हि तस्य तपसस्तेजसा प्रभावेण सशरीरस्त्वं दिवं व्रज । हिशब्दो यद्यर्थे । सार्धश्लोक एकान्वयी ॥ १४ ॥

**गो० टी०—स्वेति** । स्वार्जितं सुष्ठ्वार्जितं स्वतेजसा स्वासाधारणप्रभावेन ॥ १४ ॥

**१५ ] ति० टी०—तदाह—हे राजन्** ! त्वं तस्य तेजसा वैभवेन सशरीरो दिवं गच्छ । क्रुद्धत्वात्पुनरुक्त्यादि न दोषः ॥ १५ ॥

**रा० टी०—उक्तेति** । हे काकुत्स्थ ! तदा देवागमनाभावकाले तस्मिन्मुनौ विश्वामित्रे उक्तवाक्ये सति मुनीनां पश्यतां सतां नरेश्वरः त्रिशङ्कुः सशरीरो दिवं जगाम ॥ १६ ॥

**गो० टी०—उक्तेति** । मुनीनां पश्यतां मुनिषु पश्यत्सु सत्सु ॥ १५ ॥

**१६ ] ति० टी०—मुनीनां** पश्यतां मुनिषु पश्यत्सु ॥ १६ ॥

**रा० टी०—देवेति** । सर्वैः सुरगणैः सह पाकशासनः इन्द्रः देवलोकं गतं त्रिशङ्कुं दृष्ट्वा इदं वचनमब्रवीत् ॥ १६ ॥

**गो० टी०—देवेति** । चत्वारः ॥ १६ ॥

**१७ ] ति० टी०—स्वर्गकृतालयः** स्वर्गे निजपुण्यकर्मणा कृत आलयो यस्य तादृशः स्वर्गवासार्हो नासीत्यर्थः ॥ १७ ॥

**रा० टी०—तद्वचनमेवाह—त्रिशङ्को इति** । हे त्रिशङ्को ! त्वं भूयः पुनर्गच्छ पृथिवीमिति शेषः । सहेतुं गमनप्रकारं बोधयन्नाह—हे मूढ ! यतस्त्वं गुरुशापहतोऽतः स्वर्गे कृतः पुण्येन संपादितः आलयो गृहं येन स त्वं नासि अतो अवाक्शिराः त्वं भूमिं पत ॥ १७ ॥

**गो० टी०—स्वर्गकृतालयः** स्वर्गालयार्हः ॥ १७ ॥ १८ ॥

**१८-१९ ] ति० टी०—तत्र हेतुः—गुरुशापेत्यादि** १८-१९

**रा० टी०—एवमिति** । महेन्द्रेण एवमुक्तस्त्रिशङ्कुस्तपोधनं विश्वामित्रं त्राहीति विक्रोशमानः सन् पुनरपतत् ॥ १८ ॥

**रा० टी०—तदिति** । क्रोशमानस्य तस्य त्रिशङ्कोः तदाह्वानसूचकं वचनं श्रुत्वा तीव्रक्रोधमाहारयदकरोत् देवेशोपरीति शेषः । तिष्ठ तिष्ठेति अब्रवीच ॥ १९ ॥

**गो० टी०—आहारयत्** अकरोत् ॥ १९ ॥

**२० ] ति० टी०—आहारयदकरोत्** ॥ २० ॥

**रा० टी०—क्रोधमूलकत्रिशङ्कुभोग्यस्वर्गान्तरनिर्माणाय विश्वामित्रकर्तृकसप्तऋष्यादिसर्जनमाह—ऋषीत्यादिना** । ऋषिमध्ये स्थितः तेजस्वी अतिशयतेजोविशिष्टः क्रोधमूर्च्छितः अपरः प्रजापतिरिव स विश्वामित्रः दक्षिणमार्गस्थान् अपरान् सप्तर्षीन् सृजन् सन् अपरां नक्षत्रमालां नक्षत्रपङ्क्तिं पुनः असृजत् । सार्धश्लोक एकान्वयी ॥ २० ॥

**गो० टी०—ऋषीति** । सृजन् अभूदिति शेषः असृजदित्यर्थः ॥ २० ॥

---

१ दिवं गच्छ नराधिपेति गो. रा. पाठः । २ स्त्वेति गो. पाठः । ३ देवलोकमिति गो. रा. पाठः । ४ क्रोधमिति गो. रा. पाठः ।

सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः । नक्षत्रवंशमपरमसृजत्क्रोधमूर्च्छितः ॥ २१ ॥
दक्षिणां दिशमास्थाय ऋषिमध्ये महायशाः । सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ २२ ॥
अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः । दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ॥ २३ ॥
ततः परमसंभ्रान्ताः सर्षिसंघाः सुरासुराः । विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २४ ॥
अयं राजा महाभाग गुरुशापपरिक्षतः । सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ २५ ॥
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः । अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २६ ॥
सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः । आरोहणं प्रतिज्ञातं नानृतं कर्तुमुत्सहे ॥ २७ ॥
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः । नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ २८ ॥

२१ ] ति० टी०–सृजन्निति । यथोत्तरतो ध्रुवोऽचलस्तिष्ठति, एवं त्रिशंकुस्तिष्ठतु । तस्य ‡पारितो यथा सप्तर्षिमण्डलं तथास्यापि भवत्वित्याशयः । सृजन्निति हेतौ शतृप्रत्ययः सृष्टिं कुर्वंस्तद्धेतोर्दक्षिणमार्गस्थानपरानसृजत् पुनः सप्तविंशतिनक्षत्रमालामसृजत् ॥ २१ ॥

गो० टी०–नक्षत्रेति । मुनिमध्ये स्थित एव दक्षिणां दिशमास्थाय तामधिकरणं कृत्वा नक्षत्रमालां सप्तविंशतिनक्षत्रमालां यथोत्तरतो ध्रुवोऽचलस्तिष्ठति एवं त्रिशङ्कुस्तिष्ठतु तं परितो यथा सप्तर्षिमण्डलं तद्वदत्रापि भवतु तत्र यथा नक्षत्राणि तद्वदत्रापीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०–नक्षत्रवंशं क्षुद्रनक्षत्रगणम् ॥ २२ ॥

रा० टी०–दक्षिणामिति । महायशाः क्रोधेन कलुषीकृतः क्रोधव्याप्तचित्तः सन् अतिव्यापारसहितः अथ क्रोधान्तर्नियमनरहितः मुनिमध्ये स्थितः विश्वामित्रः दक्षिणां दिशमास्थाय नक्षत्रवंशं नक्षत्रपङ्क्तिं सृष्ट्वा अन्यमिन्द्रमहं करिष्यामि रचयिष्यामि वा सति प्रबलप्रतिबन्धे लोकः मद्रचितः स्वर्गः अनिन्द्रकः इन्द्ररहित एव स्यात् इति संकल्प्य दैवतान्यपि स्रष्टुं समुपचक्रमे । चशब्द एवार्थे द्वयोरेकत्रान्वयः ॥ २१ ॥ २२ ॥

गो० टी०–सृष्ट्वेति । सार्धः । नक्षत्रवंशं क्षुद्रनक्षत्रगणं द्वितीयार्धान्ते इति संकल्प्येत्युपस्कार्यम् । अन्यमिन्द्रं करिष्यामि विद्यमानलोकस्यान्येन्द्रं करिष्यामि अनिन्द्रको लोको वा स्यात् इन्द्ररहितं लोकान्तरं वा करिष्यामीत्यर्थः । अत एवाहुराचार्याः– ‘ अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदयमन्ववायः ’ इति । अस्मिन्नर्थे इन्द्रं नाशयिष्यामीत्यर्थः स्यात् सोऽनुचितः सृष्ट्यन्तरोपक्रमविरोधात् ‘ दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ’ इत्यनन्तरविरोधाच्च अत एवायमर्थो भवितुमर्हति । मया सृज्यमानस्य स्वर्गस्यान्यमिन्द्रं करिष्यामि अथवा मया सृज्यः स्वर्गलोकोऽनिन्द्रको वास्तु तत्र त्रिशङ्कुरेवेन्द्रो भवतु तत्परिवारान् सृजेयमिति तादृशदेवान् स्रष्टुमुपचक्रम इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०–अन्यमिन्द्रम् स्वसृज्यमानस्वर्गस्येति शेषः । अथवा मया सृज्यमानः स्वर्गोऽनिन्द्र एवास्तु त्रिशंकुरेव तत्रेन्द्रो भवत्वित्याशयः । एवमिन्द्रस्थाने त्रिशङ्कुं प्रतिष्ठाप्य तस्य परिवारभूतदैवतानि स्रष्टुमुपचक्रमे ॥ २३ ॥

२४ ] ति० टी०–तत इति । देवप्रतिस्वर्गवत्स्वस्यापि प्रतिस्वर्गं कुर्यादिति हेतोः सुरा असुराश्च संभ्रान्ताः पर्याकुलचित्ता इत्यर्थः ॥ २४ ॥

रा० टी०–तत इति । ततः सप्तऋष्यादिसर्जनात् परमसंभ्रान्ताः अत्युद्वेगं प्राप्ताः सर्षिसंघा ऋषिसंघसहिताः सुरासुराः देवदानवाः महात्मानं विश्वामित्रं सानुनयमनुनयसहितं वचः ऊचुः ॥ २३ ॥

गो० टी०–तत इति । परमसंभ्रान्ताः स्वप्रतिसृष्टेरतिदुःसहत्वादिति भावः । सानुनयं ससान्त्वम् ॥ २३ ॥

२५–२६ ] ति० टी०–अनुनयप्रकारमाह–अयं राजेत्यादि । गुरुशापेन परिक्षतश्चण्डालत्वं प्राप्तः । दिवं ब्रह्मसृष्टं त्वत्सृष्टं वा स्वर्गम् ॥ २५ ॥ २६ ॥

रा० टी०–तद्वचनमेवाह–अयमिति ।। हे महाभाग ! हे तपोधन अयं राजा त्रिशङ्कुः यतः गुरुशापपरिक्षतः गुरुशापकरणकपरिक्षयं प्राप्तः इति अतः सशरीरः दिवं यातुं नार्हति ॥२४॥

गो० टी०–अनुनयमेवाह–अयमित्यादि । नार्हति अदुष्टत्रैवर्णिकलभ्यत्वात्स्वर्गस्येति भावः ॥ २४ ॥

रा० टी०–तेषामिति । तेषामृष्यादिसहितानां देवानां तत् शान्तिकारकं वचनं श्रुत्वा मुनिपुंगवः कौशिकः सर्वदेवताश्च तद्वाक्यमब्रवीत् ॥ २५ ॥

गो० टी०–तेषामिति । चत्वारः ॥ २५ ॥

२७ ] ति० टी०–भद्रं व इत्यनेनानुनयः ॥ २७ ॥

रा० टी०–तद्वचनमेवाह–सशरीरस्येति । वो युष्मभ्यं भद्रं शान्तिवक्तृत्वाद्भवद्भिरुक्तं तथैवास्त्विति भावः । सशरीरस्य भूपतेरस्य त्रिशङ्कोः प्रतिज्ञातमारोहणं स्वर्गप्राप्तिमनृतं मिथ्याकर्तुं न उत्सहे एतेन मदुक्तमपि तथैवास्त्विति सूचितम् ॥२६॥

गो० टी०–भद्रं व इति प्रातिसान्त्वम् ॥ २६ ॥

२८ ] ति० टी०–स्वर्गोऽस्तु स्वर्गपदवाच्यसुखविशेषाद्भवोऽस्तु ॥ २८ ॥

१ मालामपरामिति गो. रा. पाठः । २ मुनिमध्ये इति गो. रा. पाठः । ३ सक्रोध इति गो. रा. पाठः । ४ इतीति गो. रा. पाठः । ५ एव इति रा. पाठः । ‡ तं परित इति युक्तमिति भाति ।

यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः । यत्कृतानि[1] सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २९ ॥
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुंगवम् । एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥ ३० ॥
गगने तान्यनेकानि वैश्वानरपथाद्बहिः । नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिःषु जाज्वलन् ॥ ३१ ॥
अवाक्शिरास्त्रिशङ्कुश्च तिष्ठत्वमरसंनिभः । अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ॥ ३२ ॥
कृतार्थं कीर्तिमन्तं च स्वर्गलोकगतं यथा[2] । विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ॥ ३३ ॥
ऋषिभिर्मध्ये[3] महातेजा बाढमित्येवं[4] देवताः । ततो देवा महात्मानो ऋषयश्च[5] तपोधनाः ॥
जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥ ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

रा० टी०—विरुद्धं धर्मद्वयमेकस्मिन्नेककालावच्छेदेन कथं स्यादित्यत आह—स्वर्ग इति । सशरीरस्य त्रिशङ्कोः एष मत्कल्पितः शाश्वतश्चिरकालस्थायी स्वर्गोऽस्तु । अथ अतः मामकानि मद्रचितानि सर्वाणि नक्षत्राणि ध्रुवाणि बहुकालस्थायीन्येव सन्तु एतेनास्मत्प्रतिज्ञातं भवदुक्तं च सेत्स्यतीति बोधितम् । चशब्द एवार्थे ॥ २७ ॥

गो० टी०—स्वर्गोऽस्तु अयं त्रिशङ्कुस्थितिदेश एवेति शेषः । मत्कृतानि मत्सृष्टानि अत एव मामकानि लोकाः भूरादयः यावद्धरिष्यन्ति स्थास्यन्ति सर्वशः सर्वप्रकारेण ध्रुवाणि भवन्तु प्रार्थनायां लोट् । तत्पूर्वोक्तमनुज्ञातुमङ्गीकर्तुम् ॥ २७ ॥ २८ ॥

२९-३० ] ति० टी०—लोका भूरादिसत्यान्ताः ॥ २९-३० ॥

रा० टी०—तदेवोपसंहरन्नाह—यावदिति । लोकाः ब्रह्मरचितभुवनानि यावत्कालं धरिष्यन्ति प्रजा इति शेषः तावत्कालमेतानि सर्वशः कृत्स्नानि मत्कृतानि तिष्ठन्तु । सर्वे सुराः ! तन्मत्प्रार्थितमनुज्ञातुं यूयमर्हथ ॥ २८ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेणोक्ताः सर्वे ऋष्यादिसहिताः सुराः मुनिपुंगवं विश्वामित्रं प्रत्यूचुः । तद्वचनमेवाह—ते भद्रं भवतु तानि प्रसिद्धानि अनेकानि एतानि भवत्कल्पितानि सर्वशःसकलानि नक्षत्राणि वैश्वानरपथात् ज्योतिःशास्त्रादिप्रतिपादितज्योतिश्चक्राध्वनो बहिरेवमेव गगने तिष्ठन्तु । हे मुनिश्रेष्ठ ! अवाक्शिराः अमरसंनिभः त्रिशङ्कुस्तु जाज्वलन् सन् तेषु भवत्कल्पितेषु ज्योतिष्षु तिष्ठतु । एतानि भवत्कल्पितानि ज्योतींषि कृतार्थं कृतो निष्पादितः अर्थः स्वर्गसुखप्राप्तिर्येन तमत एव कीर्तिमन्तं नृपसत्तमं त्रिशङ्कुं स्वर्गलोकगतं यथा ब्रह्मनिर्मितस्वर्गलोकं प्राप्तमिवानुयास्यन्ति । एकश्चस्त्वर्थे द्वितीय एवार्थे । सार्धश्लोकत्रयमेकान्वयि ॥२९॥३०॥३१॥

गो० टी०—एवमुक्ता इत्यादिसार्धाः पञ्च । सर्वशः सर्वाणि वैश्वानरपथात् वैश्वानरः ज्योतिस्तत्पथात्प्रसिद्धानादिज्योतिश्चक्रमार्गात् तेषु त्वत्सृष्टेषु जाज्वलन् अतिशयेन प्रकाशमानः अवाक्शिराः गुर्वपचारफलप्रकटनायाधोमुखः अमरसंनिभस्तेजसा अमरतुल्यः तिष्ठतु ध्रुव इवेति भावः । अनुयास्यन्ति स्वर्गनक्षत्राणि ध्रुवमिवेति भावः । स्वर्गलोकगतं यथा स्वर्गलोकगतमिव कृतार्थमित्यन्वयः ॥ २९-३२ ॥

३१ ] ति० टी०—वैश्वानरपथाज्ज्योतिःशास्त्रप्रसिद्धानादिज्योतिश्चक्रमार्गाद्बहिर्बहिर्देश एतानि तानि नक्षत्राणि तिष्ठन्त्विति पूर्वेणान्वयः । तेष्वदीयेषु ज्योतिःषु नक्षत्रेषु जाज्वलन्भृशं ज्वलन् ॥ ३१ ॥

३२ ] ति० टी०—अवाक्शिरा अस्मदुक्तावाक्शिरस्त्ववानेव त्रिशङ्कुर्देवतुल्यसुखवांस्तिष्ठतु । एतानि तव ज्योतींषि तमनुयास्यन्ति च ॥ ३२ ॥

३३ ] ति० टी०—स्वर्गलोकगतं यथा स्वर्गलोकगतमिवेत्यन्तं पूर्वान्वयि ॥ ३३ ॥

रा० टी०—विश्वामित्र इति । धर्मात्मा सर्वदेवैरभिष्टुतः ऋषिभिः सह स्थितः महातेजाः विश्वामित्रस्तु सर्वदेवताः बाढमित्येवावददिति शेषः । ऋषिभिरिति स्तुत्यन्वयि वा ॥३२॥३३॥

३४ ] ति० टी०—बाढमित्येव आहेति शेषः । दुराग्रहस्यानर्थहेतुतां प्रतिसंधाय देवतावचनमङ्गीचकार ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—तत इति । हे नरोत्तम राम ! ततः विश्वामित्रदेवतासंवादानन्तरं सर्वे देवाः महात्मानः तपोधनाः मुनयश्च यथागतं यज्ञस्य विश्वामित्रसमापितयागस्यान्ते जग्मुः ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षष्टितमः सर्गः ॥ ६० ॥

गो० टी०—बाढमित्यङ्गीकारद्योतकं वचनं यज्ञस्यान्त इत्यनेन विश्वामित्रेण यजमानप्रतिनिधिं कृत्वा यज्ञः समापितः देवैर्भागश्च गृहीत इति गम्यते ॥ ३३ ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

१ मत्कृतानीति गो. रा. पाठः । २ तथेति गो. पाठः । ३ ऋषिभिश्चेति गो. रा. पाठः । ४ आहेति गो. पाठः । ५ मुनय इति गो. रा. पाठः ।

# एकषष्टितमः सर्गः ।

अम्बरीषयजने गूढरूपेणेन्द्रेण पशावपहृते पुरोधास्तं प्रत्यनुकल्पतया नरपश्वानयनेऽचोदयत् । तदर्थं पर्यटन्नम्बरीषो भृगुतुङ्गे गोशतसहस्रनिष्क्रयेण स्वसुतं विक्रेतुमृचीकं प्रार्थयत । ततः पितृभ्यां ज्येष्ठकनिष्ठयोर्विक्रयनिषेध उक्ते मध्यमः शुनःशेफो नाम स्वविक्रयं स्वयमेवानुमेने तेन सहाम्बरीषश्च प्रतिष्ठत ।

विश्वामित्रो महातेजाः प्रस्थितान्वीक्ष्य तानृषीन् । अब्रवीन्नरशार्दूल सर्वांस्तान्वनवासिनः ॥ १ ॥
महाविघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशम् । दिशमन्यां प्रपत्स्यामस्तत्र तप्स्यामहे तपः ॥ २ ॥
पश्चिमायां विशालायां पुष्करेषु महात्मनः । सुखं तपश्चरिष्यामः सुखं तद्धि तपोवनम् ॥ ३ ॥
एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः । तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान् । अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥
तस्य वै यजमानस्य पशुमिन्द्रो जहार ह । प्रनष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६ ॥
पशुरभ्याहृतो[4] राजन्प्रनष्टस्तव दुर्नयात् । अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ७ ॥

१ ] ति० टी०—वनवासिनस्तपोवनवासिनस्तान्स्वाज्ञया यज्ञार्थमागतान्प्रस्थितान्वीक्ष्य सर्वांस्तानब्रवीदित्यन्वयः । वनवासिन इत्यस्य स्थाने 'विनयान्वितान्' इति पाठान्तरम् ॥ १ ॥

रा० टी०—देवादिप्रस्थानोत्तरकालिकं वृत्तमाह—विश्वामित्र इत्यादिना । नरशार्दूल हे राम! अथ प्रस्थानानन्तरं महात्मा विश्वामित्रस्तान् यज्ञार्थं समागतान् तान् चिरञ्जीविनः वनवासिनः सर्वानृषीन् प्रस्थितान् वीक्ष्य अब्रवीत् ॥ १ ॥

गो० टी०—अथ शरणागतशुनःशेपरक्षणोचितशक्तिं वक्तुं तपोऽन्तरमाहैकषष्टितमे—विश्वामित्र इत्यादि । तान् स्वाज्ञया समागतान् वनवासिनः स्वतपोवनवासिनः ॥ १ ॥

२ ] ति० टी०—दक्षिणां दिशमासमन्ताद्व्याप्यास्थितोऽयं त्रिशङ्कुरूपो महाविघ्नोऽस्माकं तपोनाशकत्वात्प्रवृत्तस्तच्छायाक्रान्तत्वाच्चायं देशोऽतःपरं तपोऽयोग्य इति भावः ॥ २ ॥

रा० टी०—तद्वचनमेवाह—महानिति । प्रवृत्तः प्रकृष्टं वृत्तं वृत्तान्तो यस्मिन्सोऽयं त्रिशङ्कुयाजनमूलकक्रोधावेशः महान्विघ्नः दक्षिणां दिशं आस्थितः प्राप्तः अतः अन्यां दिशं प्रवत्स्यामः तत्र तस्यां दिशि तपस्तप्स्यामहे ॥ २ ॥

गो० टी०—महानिति । योऽहं दक्षिणां दिशमास्थितः तस्य मे महान् विघ्नः प्रवृत्त इत्यर्थः ॥ २ ॥

३–५ ] ति०टी०—विशालायां विशालतपोवनवत्यां पश्चिमायां वर्तमानेषु पुष्करेषु तत्तीरे तपोवनेष्वित्यर्थः । महात्मन इति महात्मान इत्यर्थकमृषिसंबोधनम् । दीर्घत्वमार्षम् ॥ ३–५ ॥

रा० टी०—कां दिशं गमिष्यसीत्यत आह—पश्चिमायामिति । विशालायां विशालतपोभूमिमत्यां पश्चिमायां दिशि वर्तमानेषु पुष्करेषु तीर्थविशेषे महात्मनः अतिप्रयत्नशीलमुनीनां यद्वरं श्रेष्ठं तपोवनं तत्तस्मिंस्तपोवने एव सुखं यथा स्यात्तथा तपश्चरिष्यामः । पुष्करेष्विति बहुवचनमादरार्थं महात्मन इत्येकवचनं जात्यभिप्रायेण । हिरेवार्थे ॥ ३ ॥

गो० टी०—पश्चिमायामिति । विशालायां विशालतपोवनवत्यां पश्चिमायां दिशि वर्तमानेषु पुष्करेषु पुष्करतीर्थेषु तत्तीरेष्वित्यर्थः । महात्मनः हे महात्मानः ! ॥ ३ ॥

रा० टी०—एवमिति । महातेजाः महामुनिः विश्वामित्रः एवमनेन प्रकारेणोक्त्वा मूलफलाशनः सन्नुग्रमत्युत्कटं दुराधर्षं पराभवितुमशक्यं तपस्तेपे ॥ ४ ॥

गो० टी०—एवमित्यादि ॥ ४ ॥ ५ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्काले विश्वामित्रतपश्चरणसमये एव अम्बरीष इति ख्यातो महान् सर्वराजपूज्यः अयोध्याधिपतिस्तु यष्टुं यागं कर्तुं समुपचक्रमे ॥ ५ ॥

६ ] ति० टी०—विप्रः पुरोहितः ॥ ६ ॥

रा० टी०—तस्येति । यजमानस्य यागं कुर्वत एव तस्याम्बरीषस्य पशुमिन्द्रो जहार ह प्रसिद्धमेतत् । पशौ यागवृषे प्रनष्टे अदृश्यतां गते सत्येव विप्रस्तत्पुरोहितः राजानमम्बरीषमिदमब्रवीत् । वैतुशब्दौ एवार्थौ ॥ ६ ॥

गो० टी०—विप्रः पुरोहित इति यावत् ॥ ६ ॥

७ ] ति० टी०—अभ्याहृत इदानीमस्माभिरानीतः पशुस्तव दुर्नयात्स्वत्पापवशात्तावकरक्षिणां प्रमादाच्च प्रनष्ट इत्यन्वयः । राजपापमाह—अरक्षितारं प्रजानामिति शेषः ॥ ७ ॥

रा० टी०—तद्वचनमेवाह—पशुरिति । हे राजन् ! तव दुर्णयात् त्वदनवधानात् पशुः अथ हृतः केनचिदिति शेषः । अत एव प्रनष्टः अदृश्यतां प्राप्तः । ननु पश्वन्तरमानेष्यामीत्यत आह हे नरेश्वर ! अरक्षितारं सावधानतया यागपशुरक्षारहितं राजानं दोषाः रक्षानवधानताजनितपापानि घ्नन्ति 'पशुरभ्याहृतः' इति भट्टसंमतः पाठः । अरक्षितारमित्यत्र अल्पार्थको नञ् ॥ ७ ॥

गो० टी०—पशुरिति । दुर्नयात् अनवधानादित्यर्थः । हृतः केनापीति शेषः । *प्रणष्टः अदृष्टः णश अदर्शन इतिधातोर्निष्ठा । दोषाः पशुनाशादयः ॥ ७ ॥

१ महात्माथेति गो. रा. पाठः । २ वरमिति गो. रा. पाठः । ३ नृप इति गो. पाठः । ४ अथेति गो. रा. पाठः । *प्रनष्ट इति युक्तं भाति ।

प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ । आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ ८ ॥
उपाध्यायवचः श्रुत्वा स राजा पुरुषर्षभः । अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ९ ॥
देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च । आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १० ॥
स पुत्रसहितं तात सभार्यं रघुनन्दन । भृगुतुङ्गे समासीनमृचीकं संददर्श ह ॥ ११ ॥
तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च । महर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ॥ १२ ॥
पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः । गवां शतसहस्रेण विक्रीणीषे सुतं यदि ॥ १३ ॥
पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव । सर्वे परिगता देशा यज्ञियं न लभे पशुम् ॥ १४ ॥
दातुमर्हसि मूल्येन सुतमेकमितो मम । एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ॥ १५ ॥

८ ] ति० टी०—एतत्पशुनाशरूपं महत्प्रायश्चित्तं महत्प्रायश्चित्तस्य कारणम् । प्रक्रान्तं कर्म यावत्प्रवर्तते प्रवर्तिष्यते तावत्ततः प्रागेव नष्टं पशुमन्विष्यानय तत्प्रतिनिधित्वेन क्रीत्वा नरं वा पशुमानयेत्यर्थः ॥ ८ ॥

रा० टी०—ननु तदुरितशान्तिः कथं स्यादित्यत आह—प्राय इति । हे पुरुषर्षभ ! यावत्कर्म प्रवर्तते तावदेव नरं पुरुषं पशुं शीघ्रं झटिति आनयस्व एतदेवास्याघविशिष्टपुरुषस्य प्रायश्चित्तमनवधानताजनितपापशोधनम् 'प्रायः पापमितिप्रोक्तं चित्तं तच्छोधनं स्मृतम्' इत्यनुशासनम् । एतेनोपायान्तरं नास्तीति सूचितम् । हिवैशब्दौ एवार्थौ ॥ ८ ॥

गो० टी०—प्रायश्चित्तमिति । प्रायश्चित्तम् एतत् पशुनाशनिमित्तकं नरं वा आनयस्व गोभिः क्रीत्वा पशुप्रतिनिधित्वेनेति शेषः । यावत्प्रवर्तते प्रवर्तिष्यते " यावत्पुरानिपातयोः—" इति लट् तावत् ततःपूर्वमेव अश्वमेधे पशुविसर्जनानन्तरं कर्मकालस्य व्यवहितत्वादिति भावः । वाकारेण पशुं वान्विष्यानयस्वेति लभ्यते ॥ ८ ॥

९–१० ] ति० टी०—सहस्रशो गोभिः निष्क्रयभूताभिरित्यर्थः ॥ ९ ॥ १० ॥

रा० टी०—उपेति । पुरुषर्षभ हे राम ! महाबुद्धिः स राजा अम्बरीषः उपाध्यायवचः श्रुत्वा सहस्रशः गोभिः कर्तव्ययागपशुप्रतिनिधिभूतं क्रेतव्यपुरुषमूल्यरूपं सहस्रशः संख्याकगवीभिः सह सहितः सन् पशुं पशुत्वेन प्रकल्पनीयं पुरुषमन्वियेष ॥ ९ ॥

गो० टी०—उपाध्यायेति । सहस्रशः सहस्रसंख्याभिः मूल्यभूताभिरिति शेषः ॥ ९ ॥

रा० टी०—देशानिति । हे तात हे रघुनन्दन ! देशादीन् मार्गमाणः स महीपतिरम्बरीषः पुत्रसहितं सभार्यं भार्यासहितं भृगुतुङ्गे भृगुसंबन्धिस्थलविशेषे समासीनमृचीकं मुनिं संददर्श ह प्रसिद्धमेतत् । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—देशानित्यादि । देशानिति जनपदादिसर्वविशेषणं स इति छेदः भृगुतुन्दे भृगोर्गिरितटस्य तुन्दे अभ्यन्तरे भृग्वाख्यऋषिवासस्थानप्रदेशे वा ॥ १० ॥ ११ ॥

११–१२ ] ति० टी०—स पुत्रेति । स इति पृथक्पदम् । सोऽम्बरीषः । भृगुतुङ्गं पर्वतशृङ्गविशेषः ॥ ११ ॥ १२ ॥

रा० टी०—तमिति । महातेजाः महत्तेजो यस्मात्सः स्वानुगृहीतपुरुषतेजःसंपादक इत्यर्थः । अत एवामितप्रभः अमिता परिमातुमशक्या प्रभा यस्य स राजर्षिरम्बरीषः तपसा दीप्तं महर्षिं तं प्रसिद्धमृचीकं प्रणम्य अभिप्रसाद्य च सर्वत्र तपआदिषु कुशलं पृष्ट्वा चेदं वचः उवाच । सार्धश्लोक एकान्वयी । चकार उभयान्वयी ॥ १२ ॥ १३ ॥

गो० टी०—तमिति । सार्ध एकान्वयः । तं मुनिं इदं वक्ष्यमाणं वच उवाच । ब्रुवतिर्द्विकर्मकः ॥ १२ ॥

१३–१४ ] ति० टी०—तं प्रसिद्धतपसमृचीकमिदं वक्ष्यमाणं वचः अब्रवीदिति शेषः । यदि विक्रीणीषे तदा कृतकृत्योऽस्मि भवेयम्, यतो यज्ञियं यज्ञे पूर्वं परिकल्पितं पशुं क्वापि न लभे ॥ १३ ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—गवामिति । हे महाभाग हे भार्गव ! पशोरर्थे यागपशुकरणाय गवां शतसहस्रेण शतसहस्रसंख्याकगवीभिः सुतं स्वपुत्रं यदि विक्रीणीषे त्वमिति शेषः । तर्हि अहं कृतकृत्यः अस्मि भविष्यामि ॥ १४ ॥

गो० टी०—गवामिति । पशोः अर्थे प्रयोजनाय पशुप्रतिनिध्यर्थमित्यर्थः । यदि विक्रीणीषे विक्रीणीथाः तदा कृतकृत्योऽस्मि कृतार्थः स्याम् ॥ १३ ॥

रा० टी०—नन्वपहृतः पशुरेव कुतो नान्विष्यते इत्यत आह—सर्वे इति । सर्वे देशाः मया परिप्लुताः यज्ञपश्वन्वेषणाय परिगताः तेषु देशेषु यज्ञियं पशुं न लभे इतो हेतोः मूल्येन एकं सुतं मम मह्यं दातुमर्हसि ॥ १५ ॥

गो० टी०—सर्वे इति । परिसृताः संचरिताः याज्ञीयं यज्ञाय हितं "तस्मै हितम्" इति छः वृद्धिरार्षी । इतः एतेषु सुतेषु सार्वविभक्तिकस्तसिः ॥ १४ ॥

१५ ] ति० टी०—इत एतेषु । सार्वविभक्तिकस्तसिः॥१५॥

रा० टी०—एवमिति । एवमनेन प्रकारेणोक्तः अम्बरीषेण प्रार्थितः महातेजा ऋचीकः वचः अब्रवीत् । तद्वचनमेवाह—

१ अथस्यैतदिति रा. पाठः । २ पुरुषर्षभेति गो. रा. पाठः । ३ भृगुतुन्दे इति गो. पाठः । ४ महर्षिमिति गो. रा. पाठः । ५ परिसृता इति गो. परिप्लुता इति रा. पाठः । ६ याज्ञीयमिति गो. पाठः ।

नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन । ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम्॥ १६ ॥
उवाच नरशार्दूल[1]मम्बरीषमिदं वचः । [2]अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ॥ १७ ॥
ममापि दयितं विद्धि कनिष्ठं शुनकं प्रभो । तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥ १८ ॥
प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः । मातॄणां च कनीयांसस्तस्माद्[3]रक्ष्ये कनीयसम् ॥ १९ ॥
उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च । [4]शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥ २० ॥
पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् । [5]विक्रेयं मध्यमं मन्ये राजपुत्र नयस्व माम् ॥ २१ ॥
[6]अथ राजा महाबाहो वाक्यान्ते ब्रह्मवादिनः । हिरण्यस्य सुवर्णस्य कोटिभी रत्नराशिभिः ॥ २२ ॥
गवां शतसहस्रेण शुनःशेपं नरेश्वरः । गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २३ ॥
अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः । शुनःशेपं महातेजा जगामाशु महायशाः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

हे नरश्रेष्ठ ! ज्येष्ठं सुतमहं कथंचन न विक्रीणीयामेतेन ज्येष्ठे तस्य परमानुरागः सूचितः । तुशब्द एवार्थे ॥ १६ ॥

गो॰ टी॰—एवमिति । कथंचन बहुमूल्येनापि इतरयोरप्रतिषेधादनुमतिर्गम्यते 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात् ॥ १६ ॥

१६–१७ ] ति॰ टी॰—कथंचन बहुनापि मूल्येन । अनेनेतरयोरनुमतिः सूचिता अप्रतिषिद्धमनुमतमिति न्यायात् ॥ १६–१७ ॥

रा॰ टी॰—ऋचीकस्येति । तेषां महात्मनामृचीकपुत्राणां माता ऋचीकस्य वचः श्रुत्वा नरशार्दूलं नरश्रेष्ठमम्बरीषमिदं वचः उवाच ॥ १७ ॥

गो॰ टी॰—ऋचीकस्येत्यादि ॥ १६ ॥

रा॰ टी॰—तद्वचनमेवाह—अविक्रेयमिति । भगवान् अतिसामर्थ्यविशिष्टः भार्गवः ज्येष्ठं सुतमविक्रेयमाह शुनकं शुनकनामानं कनिष्ठं सुतं ममापि दयितं प्रियं त्वं विद्धि जानीहि तस्मात्कारणात् हे प्रभो हे पार्थिव ! कनीयसं पुत्रमहं तव तुभ्यं न दास्ये । सार्धश्लोक एकान्वयी ॥ १८ ॥

१८ ] ति॰ टी॰—शुनक इति कनिष्ठपुत्रनाम ॥ १८ ॥

गो॰ टी॰—शास्त्रेणापत्यदानविक्रययोर्निषेधेऽपि मूलावसादे धर्मायापत्यदानवद्यज्ञायापत्यविक्रयो न दोषायेति भावः । कनीयसमित्यकारान्तत्वमार्षम् ॥ १७–२२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

१९ ] ति॰ टी॰—पितृषु पितॄणाम् । रक्षिष्यामीत्यर्थे रक्ष्ये इत्यार्षम् ॥ १९ ॥

रा॰ टी॰—कापत्यभ्रमवारणाय तादृशानुरागे सदाचारं प्रमाणयन्ती आह—प्रायेणेति । हे नरश्रेष्ठ ! ज्येष्ठाः प्रायेण पितृषु वल्लभाः पितृनिष्ठानुरागविषयीभूताः भवन्तीति शेषः । मातॄणां च कनीयांसः वल्लभास्तस्मात् कनीयसं कनीयांसमेव अहं रक्षे न दास्ये इत्यर्थः ॥ १९ ॥

२० ] ति॰ टी॰—रामेति संबुद्धिः ॥ २० ॥

रा॰ टी॰—उक्तेति । हे राम ! तस्मिन्मुनौ ऋचीके उक्तवाक्ये सति तथा तेन प्रकारेण मुनिपत्न्यां च उक्तवाक्यायां सत्यां मध्यमः शुनःशेफः स्वयमेव वाक्यमब्रवीत् ॥ २० ॥

२१ ] ति॰ टी॰—मध्यमं मध्यमपुत्रं विक्रेयं मातापित्रोर्विक्रेयत्वेन संमतं मन्ये अर्थादिति शेषः ॥ २१ ॥

रा॰ टी॰—तद्वचनमेवाह—पितेति । ज्येष्ठं सुतमविक्रेयं पिता आह कनीयसमविक्रेयं माता चाह अतः मध्यममात्मानं विक्रीतमहं मन्ये । अतः हे राजपुत्र ! मां नयस्व ॥ २१ ॥

२२ ] ति॰ टी॰—ब्रह्मवादिनो मध्यमपुत्रस्य ॥ २२ ॥

२३ ] ति॰ टी॰—गृहीत्वा क्रीत्वा । यद्यप्यपत्यस्य दानक्रयौ शास्त्रनिषिद्धौ तथाप्यनेन कुलहानौ धर्मार्थमपत्यदानमिव यज्ञायापत्यक्रयो न विगीत इति सूचितम् । पुत्रस्य चैवं पित्रधीनतोचितेति च बोधितम् ॥ २३ ॥

रा॰ टी॰—गवामिति । हे रघुनन्दन ! परमप्रीतो नरेश्वरोऽम्बरीषः शुनःशेफं गवां शतसहस्रेण गृहीत्वा जगाम ॥ २२ ॥

२४ ] ति॰ टी॰—शुनःशेपं रथमारोप्येत्यन्वयः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

रा॰ टी॰—गमनप्रकारं वर्णयन्नाह—अम्बरीष इति । राजर्षिः महातेजाः सत्वरोऽम्बरीषः शुनःशेफमाशु रथमारोप्य जगाम स्वालयमिति शेषः । परमप्रमाणभूतमुनिकर्तृकानापत्कालिकपुत्रविक्रयणेन यज्ञार्थं पुत्रविक्रयणे पुण्याधिक्यं भवतीति ध्वनितम् ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

१ तपस्विनीति गो. पाठः । २ अर्धमिदं नास्ति रा. पाठे । ३ रक्षे इति रा. गो. पाठः । ४ शुनःशेफ इति रा. पाठः । ५ विक्रीतमिति गो. रा. पाठः । ६ नास्त्ययं श्लोको गो. रा. पाठयोः । ७ शुनःशेफमिति रा. पाठः ।

## द्विषष्टितमः सर्गः ।

अम्बरीषो: पुष्करक्षेत्रमेत्य विश्राम्यति विश्वामित्रं प्राप्य राज्ञोऽविरोधेन स्वरक्षामनुयाचन्तं शुनःशेपं विश्वामित्रो गाथाद्वयमुपादिश्य ताभ्यामिन्द्राविष्णू स्तोतुमुपदिदेश ततः प्राप्ताश्वासेन शुनःशेपेन कृतत्वरोऽम्बरीषो दीक्षां विवेश पशूकृतः शुनःशेपो गाथे संगाय पाशव्यान्मोचनं लेभे तुष्टश्चेन्द्रोऽम्बरीषं यज्ञफलेन समयोजयत् ।

शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः । व्यश्रमत्पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १ ॥
तस्य विश्रममाणस्य शुनःशेपो महायशाः । पुष्करं ज्येष्ठमागम्य विश्वामित्रं ददर्श ह ॥ ॥ २ ॥
तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः । विषण्णवदनो दीनस्तृष्णया च श्रमेण च ॥ ३ ॥
पपाताङ्के मुने राम वाक्यं चेदमुवाच ह । न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ॥ ४ ॥
त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुंगव । त्राता त्वं हि नरश्रेष्ठ सर्वेषां त्वं हि भावनः ॥ ५ ॥
राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः । स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ ६ ॥

---

१ ] ति० टी०—व्यश्रमत् । 'व्यश्राम्यत्' इति पाठान्तरम् ॥ १ ॥

रा० टी०—शुनःशेफानयनानन्तरकालिकं वृत्तमाह—शुनःशेफमिति । हे नरश्रेष्ठ हे रघुनन्दन ! महायशाः राजा अम्बरीषः शुनःशेफं गृहीत्वा ग्रहणपूर्वकमागमनं कृत्वैव मध्याह्ने काले पुष्करे तीर्थे व्यश्राम्यत् । तुशब्द एवार्थे 'व्यश्रमत्' इति भट्टसंमतः पाठः ॥ १ ॥

गो० टी०—अथ शुनःशेपस्य शरणागतिरुच्यते द्विषष्टितमे—शुनःशेपमित्यादि ॥ १ ॥

२ ] ति० टी०—विश्रममाणस्येति †विश्रामत इत्यर्थे आर्षम् ॥ २ ॥

रा० टी०—तस्येति । विश्रममाणस्य तस्य विश्राम्यमाणं तमम्बरीषमनादृत्य महायशाः शुनःशेफः श्रेष्ठं तीर्थवरं पुष्करमागम्य प्राप्य ऋषिभिः सार्धमेव तप्यन्तं मातुलं विश्वामित्रं ददर्श दर्शनानन्तरं परमातुरः अत्यन्तातुरताविशिष्टः विषण्णवदनः उदासीनमुखः तृष्णया श्रमेण च दीनः शुनःशेफः मुनेर्विश्वामित्रस्याङ्के पपात हे राम ! इदं वाक्यं च उवाच ह प्रसिद्धमेतत् । सार्धश्लोकद्वयमेकान्वयि । पूर्वो हकारोनन्तरार्थकः । एकश्चकार एवार्थकः । "षष्ठी चानादरे" इत्यनुशासनविहिता षष्ठी ॥ २ ॥ ३ ॥

गो० टी०—तस्य विश्रममाणस्य तस्मिन्विश्राम्यति सति । आगम्येत्यत्र "वा ल्यपि" इत्यनुनासिकलोपाभावः पक्षे । मातुलं ऋचीकाय कौशिकी प्रतिपादितेत्युक्तत्वात् ॥ २ ॥

३ ] ति० टी०—तृष्णया पिपासया जिजीविषया च श्रमेण चेति विषण्णवदनत्वे दीनत्वे परमातुरत्वे च हेतुः ॥३॥

गो० टी०—विवर्णेति । तृष्णया पिपासया प्राणपरित्राणलोभेन वा श्रमेण अध्वश्रमेण मातुलत्वादङ्कपतनम् ॥ ३ ॥

४ ] ति० टी०—अङ्के उत्सङ्गे मातुलत्वात्तत्र पातः । बान्धवाः कुतः दूरादेव सर्वथा न सन्त्येवेत्यर्थः ॥ ४ ॥

रा० टी०—तद्वाक्यमेवाह—नेति । मे माता नास्ति पिता च नास्ति तर्हि ज्ञातयो बान्धवाश्च कुतः स्युः मन्निरूपितमुख्यमातृत्वाद्यभावेन तन्मूलकज्ञात्यादीनामसंभव एवेति भावः ॥ ४ ॥

गो० टी०—नेति । नास्ति अरक्षकत्वादसत्प्राया इत्यर्थः । धर्मेण धर्मरूपप्रयोजनोद्देशेन ॥ ४ ॥

५ ] ति० टी०—धर्मेण स्वार्जितेन । सर्वेषां शरणागतानां भावनः सर्वेष्टसाधनम् । एको हिस्त्वर्थे ॥ ५ ॥

रा० टी०—त्रातुमिति । हे सौम्य ! हे मुनिपुंगव ! हे नरश्रेष्ठ ! हि यतः सर्वेषामापन्नानां त्राता त्वमसि अत एव सर्वेषां भावनः आपत्काले सर्वस्मृतिविषयीभूतस्त्वमसि । एतेन सर्वं स्वविक्रयादिवृत्तं कथितवान् इति व्यक्तम् ॥ ५ ॥

गो० टी०—त्रातेत्यर्धम् । भावनः हितप्रापकः ॥ ५ ॥

६ ] ति० टी—यथा च राजा कृतकार्यः स्यात्, अहं चाव्ययो धर्मलोपाभाववान्दीर्घायुस्तपस्तप्त्वा स्वर्गं प्राप्नुयाम् तथा कुर्विति शेषः ॥ ६ ॥

रा० टी०—राजकार्यसिद्धिमन्तरा स्वरक्षामहं न वाञ्छामीति बोधयितुं स्वेप्सितं §प्रार्थयन्नाह—राजेति । राजा अम्बरीषः कृतकार्यः संपादितयागसिद्धिकः यथा स्यात् अहं तु दीर्घायुः अव्ययः विकाररहितः सन् तपस्तप्त्वा अनुत्तमं सर्वोत्कृष्टं स्वर्गलोकमुपाश्नीयां पालयेयं. स्वर्गपतिर्भवेयमित्यर्थः । तथा साधयेति शेषः । भुज पालनाभ्यवहारयोरित्यनुशासनेन अश भोजने इत्येतद्घटकीभूतभोजनशब्देन पालनस्यापि ग्रहणात् अश्नीयामित्यस्य पालयेयमित्यर्थलाभः । चस्त्वर्थे हिर्येथार्थे ॥ ६ ॥

गो० टी०—राजेति । यथा च राजा कृतकार्यः स्यात् अहं च अव्ययः अविनाशः दीर्घायुः अनुत्तमं तपस्तप्त्वा स्वर्गलोकमुपाश्नीयां तथा कुरुष्वेति शेषः ॥ ६ ॥

---

१ शुनःशेफमिति रा. पाठः । २ व्यश्राम्यदिति गो. रा. पाठः । ३ तीर्थे इति रा. पाठः । ४ क्षेत्रमिति गो. रा. पाठः । ५ विवर्णेति गो. पाठः ।
† विश्राम्यत इति भाति । § प्रार्थयमान इति युक्तं भाति ।

स मे नाथो ह्यनाथस्य भव भव्येन चेतसा । पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः । सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८ ॥
यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः । परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति । अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥
सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः । पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११ ॥
नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नतो भवेत् । देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥
मुनेस्तद्वचनं श्रुत्वा मधुच्छन्दादयः सुताः । साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥
कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतं विभो । अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥
तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः । क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥

७-८ ] ति० टी०-किल्बिषाज्जीवविपत्तिरूपात् । भव्येन प्रसन्नेन । पुत्रं ज्येष्ठम् ॥ ७ ॥ ८ ॥

रा० टी०-स इति । अनाथस्य नाथराहितस्य मे मम नाथः भव्येन मङ्गलप्रदेनैव तेजसा स्वप्रभावेण त्वं भव । तदेव मङ्ग्यन्तरेण बोधन्नाह-हे धर्मात्मन् किल्बिषात् पापविशेषजनितविपत्तेः पितापुत्रमिव त्रातुं मां त्वमर्हसि । हिशब्द एवार्थे॥७॥

गो० टी०-त्वमिति । भव्येन शुभेन किल्बिषात् तन्मूलकविपत्तेरित्यर्थः ॥ ७ ॥

रा० टी०-तस्येति । महातपाः विश्वामित्रः तस्य शुनःशेफस्य तद्वचनं प्रार्थनावाक्यं श्रुत्वैव बहुविधमनेकप्रकारं शान्तयित्वा शुनःशेफमिति शेषः । पुत्रान् स्वसुतान् इदमुवाच । हशब्द एवार्थे ॥ ८ ॥

गो० टी०-तस्येति । स्पष्टम् ॥ ८ ॥

९ ] ति० टी०-यत्कृते यत्प्रयोजनाय । तदेव प्रयोजनमाह—परलोकहितार्थाय परलोकहितरूपप्रयोजनाय तस्य प्रयोजनस्य ॥ ९ ॥

रा० टी०-तद्वचनमेवाह-यदिति । हे परलोकहितार्थाः परलोकहितं परलोकप्राप्तिः अर्थः प्रयोजनं येषां ते हे परलोकप्रापकपुत्राः ! शुभार्थिनः पितरः यत्कृते यत्प्रयत्नार्थं पुत्रान् जनयन्ति तस्य प्रयत्नस्यायं कालः आगतः प्राप्तः ॥ ९ ॥

गो० टी०-यदिति । यस्य प्रयोजनस्य कृते यत्प्रयोजनाय तादर्थ्येऽव्ययम् । पुत्रान् जनयन्ति मम युष्माकं च परलोकहितार्थाय धर्माय तस्य वाक्यकरणस्य अयं काल आगतः 'जीवतोर्वाक्यकारणात्' इतिस्मृतेः ॥ ९ ॥

१० ] ति० टी०-परलोकहितं प्रयोजनमाह-अयमिति । शरणं रक्षणम् । जीवितमात्रेण जीवितप्रदानमात्रेण । प्रियमित्यस्य मम स्वस्य 'जीवतो वाक्यकरणात्' इति स्मृतेः । शुनकवत्परलोकसाधनत्वेन प्रियमित्यर्थः ॥ १० ॥

रा० टी०-तत्प्रयतनीयमाज्ञापयन्नाह-अयमिति । हे पुत्रकाः ! मुनिसुतः ऋचीकपुत्रः बालः अल्पवयस्कोऽयं शुनःशेफः मत्तः शरणं आत्मरक्षामिच्छति अतः जीवितमात्रेण जीवनप्रदानमात्रेणास्य बालस्य प्रियं कुरुत यूयमिति शेषः॥१०॥

गो० टी०-अयमिति । शरणं रक्षणं जीवितमात्रेण जीवनप्रदानमात्रेण ॥ १० ॥

११ ] ति० टी०-तत्र प्रवृत्त्यर्थं स्तौति-सर्वे इति । पशुभूता अस्य राज्ञा पशुत्वेन ग्रहणादेतत्प्रतिनिधित्वेन पशुभूता नरेन्द्रस्य यज्ञेऽग्नेस्तृप्तिं प्रयच्छतेत्यर्थः ॥ ११ ॥

रा० टी०-रक्षणप्रकारं वर्णयन्नाह-सर्वे इत्यादि-श्लोकद्वयेन । सुकृतकर्माणः सुकृतानि सुसाधितानि कर्माणि यैस्ते अत एव सर्वे धर्मपरायणाः सर्वेषां कर्मणाम् ईः पर्यवसानं यस्मिन् स एव धर्मः परमपुरुषाराधनरूपः तत्र परायणाः निरताः सर्वे यूयं नरेन्द्रस्याम्बरीषस्य पशुभूताः यागपशुत्वं प्राप्ताः सन्तः अग्नेस्तृप्तिं प्रयच्छत प्रापयतेत्यर्थः ॥ ११ ॥

गो० टी०-स्वनियोगकरणार्थमुपश्लोकयति-सर्वे इति । प्रयच्छतेति बहुवचनेन युष्मासु यः कश्चन भवत्विति सूच्यते॥११॥

१२ ] ति० टी०-नाथवान्मया रक्षकवान् । मम युष्मत्पितुर्जीवतो वाक्यकरणाद्वचः कृतं भवति ॥ १२ ॥

रा० टी०-नाथवानिति । अनाथः स शुनःशेफो नाथवान्भवेत् अविघ्नतः विघ्नराहित्यात् यज्ञश्च भवेत् देवतास्तर्पितास्तृप्तिं प्रापिताश्च स्युः मम वचो वचनं च कृतं सिद्धं भवेत् । स्यात् । अपिर्हेतौ ॥ १२ ॥

गो० टी०-नाथवानिति । मया रक्षितो नाथवान् भवत् कृतं स्यादिति शेषः ॥ १२ ॥

१३ ] ति० टी०-साभिमानं साहंकारम् । सलीलं सपरिहासम् ॥ १३ ॥

रा० टी०-विश्वामित्राज्ञापनोत्तरकालिकं वृत्तमाह-मुनेरिति । हे नरश्रेष्ठ! मुनेर्विश्वामित्रस्य वचनं श्रुत्वैव मधुस्यन्दादयः सुताः विश्वामित्रपुत्राः साभिमानमभिमानसहितं सलीलं लीलासहितमिदं वचनमब्रुवन् । तुशब्द एवार्थे ॥ १३ ॥

गो० टी०-मुनेरिति । साभिमानं सगर्वं सलीलं सपरिहासम् ॥ १३ ॥

१४-१५ ] ति० टी०-लोकतः शास्त्रतश्चाशुभत्वे दृष्टान्तमाह-श्वमांसमिवेति॥ १४ ॥ १५ ॥

१ त्वमिति गो.पाठः । २ तेजसेति रा.पाठः । ३ शान्तयित्वेति रा.पाठः । ४ स इति रा.पाठः । ५ तु वचनमिति गो.रा.पाठः । ६ ष्यन्देति गो. स्यन्दति रा.पाठः ।

निःसाध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् । अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥
श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु । पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७ ॥
कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तदा । शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयाम् ॥ १८ ॥
पवित्रपाशैराबद्धो रक्तमाल्यानुलेपनः । वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९ ॥
इमे च गाथे द्वे दिव्ये गायेथा मुनिपुत्रक । अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २० ॥
शुनःशेपो गृहीत्वा ते द्वे गाथे सुसमाहितः । त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१ ॥

---

रा० टी०–तद्वचनमेवाह–कथमिति । विभो हे सकलसामर्थ्यविशिष्ट ! आत्मसुतान् हित्वा मरणत्वप्रापणेन त्यक्त्वा मृत्युं प्रापय्येति वा अन्यसुतं कथं त्रायसे अत्र हेतुं वदेत्यर्थः । ननु स्वयमेव विचार्य हेतुरुच्यतामित्यत आहुः–भोजने प्राप्तपायसादिभोज्ये पतितं श्वमांसमिव अकार्यं कार्यध्वंसमेव पश्यामः । यथा अग्निहोत्रिणां भोज्ये पायसादौ पतितम् श्वमांसं भोजनरूपकार्यमात्रध्वंसकं तथा रक्षणीयस्वसुतरक्षासमये प्राप्तैषान्यसुतरक्षा अवश्यकार्यस्वसुतरक्षामात्रविघातिकेत्यर्थः । एक इवशब्द एवार्थे । किंच भोजने यज्ञपायसादौ प्राप्ते सति श्वमांसं श्वमांसभोजनं यथा अकार्यं वैदिकैर्न कर्तव्यं तथा प्राप्तस्वसुतरक्षणे तद्विरोध्यन्यसुतरक्षणमकार्यं न कर्तव्यमिति वयं पश्यामः निश्चिनुमः । एतेनाविवेकत एवास्य रक्षायां भवत्प्रवृत्तिरिति स्वनिश्चयः सूचितः । एक इवशब्द इत्यर्थकः ॥ १४ ॥

गो० टी०–कथमिति । भोजने भोज्ये प्राप्ते तत्परित्यागेन श्वमांसभक्षणमिवाकार्यमित्यर्थः । द्वितीय इवशब्दो वाक्यालंकारे ॥ १४ ॥

रा० टी०–तेषामिति । तेषां पुत्राणां तद्वचनं साभिमानसविलासवाक्यं श्रुत्वा क्रोधसंरक्तनयनः मुनिपुंगवो विश्वामित्रः व्याहर्तुं वक्तुमुपचक्रमे ॥ १५ ॥

गो० टी०–तेषामित्यादि ॥ १५ ॥

१६ ] ति० टी०–साध्वसं भयम् । पितृत्वप्रयुक्तभीतिरहितम् । जीवतो वाक्याकरणाद्धर्मादपि विगर्हितं भ्रष्टम्, एवं मद्वाक्यमतिक्रम्य यतो दारुणं परुषं रोमहर्षणं रोमाञ्चरूपविकारजनकमुक्तं तस्मादिति शेषः ॥ १६ ॥

रा० टी०–तद्वचनमेवाह–निरिति द्वाभ्याम् । निःसाध्वसं पितृभीतिरहितं यतो मद्वाक्यमतिक्रम्य प्रोक्तमुच्चारितमत एव धर्मादपि विगर्हितं प्रच्युतमत एव दारुणमतिपरुषं श्रोतुमनर्हमित्यर्थः । अत एव रोमहर्षणमिदं युष्मद्वचनमस्तीति शेषः । तुर्हेतौ ॥ १६ ॥

गो० टी०–निःसाध्वसं पितृप्रतिवचनभयरहितं धर्मात् जीवतोर्वाक्यकरणरूपधर्मात् विगर्हितं भ्रष्टं इदमुभयं क्रियाविशेषणं दारुणं पितृभक्तिराहितत्तया परुषमत एव रोमहर्षणं रोमाञ्चविकारकरम् ॥ १६ ॥

१७ ] ति० टी०–जातिषु मुष्टिकजातिषु ॥ १७ ॥

रा० टी०–पूर्णमिति । तस्मात् श्वमांसभोजिनः सन्तो जातिषु श्वपचजातिविशेषेषु पूर्णं वर्षसहस्रं वर्षसहस्रसमाप्तिपर्यन्तं वाशिष्ठा इव सर्वे यूयं पृथिव्यामनुवत्स्यथ । तुस्तस्मादित्यर्थे ॥ १७ ॥

गो० टी०–श्वमांसेत्यादि । अत्रादौ तस्मादित्युपस्कार्यं जातिषु मुष्टिकजातिषु ॥ १७ ॥

१८ ] ति० टी०–निरामयां सर्वदुःखनाशिकां रक्षां कृत्वा शुनःशेपमुवाच ॥ १८ ॥

रा० टी०–कृत्वेति । तदा पुत्रप्रत्युत्तरदानोत्तरकाले मुनिवरो विश्वामित्रः पुत्रान् शापसमायुक्तान् कृत्वा निरामयां विघ्नरहितां रक्षां शुनश्शेफकर्मकरक्षणं च कृत्वा आर्तं शुनश्शेफमुवाच ॥ १८ ॥

गो० टी०–कृत्वेति । निरामयं निर्भयं यथा भवति तथा रक्षां मन्त्रितभस्मधूल्यादिप्रक्षेपरूपाम् ॥ १८ ॥

१९ ] ति० टी०–वाक्यमाह–पवित्रेति । पवित्रपाशा दर्भरशनाः । वैष्णवं विष्णुदैवत्यम् "वैष्णवो वै देवतया यूपः" इति श्रुतेः । वाग्भिराग्नेयमन्त्रैरग्निमुदाहर स्तुहि ॥ १९ ॥

रा० टी०–तद्वचनमेवाह–पवित्रेति । हे मुनिपुत्रक ! पवित्रपाशैः विधिनिर्मितदर्भादिरज्जुभिः आबद्धः रक्तमाल्यानुलेपनस्त्वं वैष्णवं यूपमासाद्य प्राप्य वाग्भिरग्निं सुरश्रेष्ठौ तौ इन्द्राविष्णू च उदाहर स्तुहि । हे मुनिपुत्रक ! इमे प्रसिद्धे दिव्ये द्वे गाथे च गायेथाः । तुहिशब्दौ चार्थौ । ततः गाथाद्वयगानादस्मिन्नम्बरीषयज्ञे सिद्धिं त्वमवाप्स्यसि प्राप्स्यसि । सार्धश्लोकद्वयं संमिलितान्वयि ॥ १९ ॥ २० ॥

गो० टी०–पवित्रेति । पाशैः दर्भरशनादिभिः आसक्तः बद्धः वैष्णवं विष्णुदेवताकं "वैष्णवो वै देवतया यूपः" इति श्रुतेः । वाग्भिः वक्ष्यमाणगाथाद्वयरूपाभिः अग्निं प्रत्युदाहर स्तुहि अग्न्यभिमुखो भूत्वा इन्द्रमिन्द्रानुजं च स्तुहीत्यर्थः ॥१९॥

२०–२१ ] ति० टी०–इमे मयोपदिश्यमाने इन्द्रोपेन्द्रदैवत्ये । सिद्धिं जीवितसिद्धिम् ॥ २० ॥ २१ ॥

गो० टी०–गाथे दर्शयति–इमे इति । गाथे इन्द्रोपेन्द्रविषये एका इन्द्रविषया अन्या उपेन्द्रविषया ततः गाथाभ्यां सिद्धिं जीवितसिद्धिम् ॥ २० ॥

रा० टी०–शुनःशेफ इति । सुसमाहितः अत्येकाग्र-

---

१ तथेति गो. पाठः । २ निरामयमिति गो. पाठः । ३ स्विति गो. रा. पाठः ।

राजसिंह महाबुद्धे शीघ्रं गच्छावहे वयम् । निर्वर्तयस्व राजेन्द्र दीक्षां च समुदाहर ॥ २२ ॥
तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमन्वितः । जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥
सदस्यानुमते राजा पवित्रकृतलक्षणम् । पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ २४ ॥
स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ । इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥
ततः प्रीतः सहस्राक्षो रहस्यस्तुतितोषितः । दीर्घमायुस्तदा प्रादाच्छुनःशेपाय वासवः ॥ २६ ॥
स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् । फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७ ॥
विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः । पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

चित्तः शुनश्शेफः ते विश्वामित्रोपदिष्टे द्वे गाथे गृहीत्वा ज्ञात्वा तं राजसिंहमम्बरीषं त्वरया वेगेनैवोवाच। हशब्द एवार्थे ॥२१॥

गो० टी०–शुनःशेप इत्यादि ॥ २१ ॥

२२-२३ ]ति० टी०–गच्छावहे इत्यार्षस्तङ् । निर्वर्तयस्व यज्ञमिति शेषः । समुदाहर कुरु ॥ २२ ॥ २३ ॥

रा० टी०–तद्वचनमेवाह–राजेति । हे राजसिंह ! महाबुद्धे ! सदो यज्ञशालां वयं शीघ्रं गच्छामहे अतो हे राजेन्द्र ! दीक्षां निर्वर्तयस्व तत्सिद्धिं कुरु । तत्साधनमाह–मां समुपाहर पशुत्वेन प्रकल्प्य प्रापय । चो हेतौ । मामित्यध्याहृतम् ॥२२॥

गो० टी०–सदः यज्ञवाटमित्यर्थः ॥ २२ ॥ २३ ॥

रा० टी०–तदिति । ऋषिपुत्रस्य तद्वाक्यं श्रुत्वा हर्षसमन्वितः अतन्द्रितः आलस्यरहितः नृपतिः यज्ञवाटं शीघ्रं जगाम ॥ २३ ॥

२४ ] ति० टी०–पवित्रैर्दर्भरज्जुभिः कृतपशुत्वज्ञापनं पशुं कृत्वा यज्ञपशुत्वेन संपाद्याबन्धयत् राजेति शेषः ॥ २४ ॥

रा० टी०–सदस्येति । सदस्यानुमते सदस्यसंमतौ वर्तमानो राजाम्बरीषः पवित्रकृतलक्षणं पवित्रैर्दर्भरज्जुभिः कृतं संपादितं लक्षणं यागयोग्यपशुचिह्नं यस्मिन् तं पशुं रक्ताम्बरं कृत्वा यूपे समबन्धयत् ॥ २४ ॥

गो० टी०–सदस्यानुमते सदस्यानामुपद्रष्टृप्रभृतीनामनुमते अनुमतौ स्थित इति शेषः । पवित्रैर्दर्भरज्जुभिः कृतलक्षणं कृतलाञ्छनं कृतपशुत्वज्ञापनमित्यर्थः । पशुं कृत्वा उपाकरणादिसंस्कारसंस्कृतं कृत्वा ॥ २४ ॥

२५ ] ति० टी०–इन्द्रानुजो विष्णुर्यूपदेवः । अत्र पूर्वमाग्निं स्तुत्वा तत एतौ उपदेशकाले तथोक्तत्वात् ॥ २५ ॥

रा० टी०–स इति । बद्ध एव स मुनिपुत्रकः इन्द्रं इन्द्रानुजं विष्णुं च सुरौ अग्र्याभिः उत्कृष्टाभिः वाग्भिः यथावदभितुष्टाव । वैशब्दोऽग्निस्तवनसमुच्चायकः ॥ २५ ॥

गो० टी०–स इति । इन्द्रं पशुभोक्तारम् इन्द्रानुजं यूपदेवं तुष्टाव इन्द्रानुजं पुरुषकारीकृत्य फलप्रदमिन्द्रं स्तुतवानित्यर्थः ॥ २५ ॥

२६ ] ति० टी०–सहस्राक्ष इत्युपलक्षणं विष्णोरपि । रहस्यस्तुतिर्विश्वामित्रोपदिष्टा ॥ २६ ॥

रा० टी०–तत इति । ततः शुनःशेफकृतस्तुत्यनन्तरं रहस्यस्तुतितोषितः विश्वामित्रोपदिष्टरहस्यस्तुत्या शुनःशेफेन तोषं प्रापितः अत एव प्रीतः सहस्राक्ष इन्द्रोऽभवदिति शेषः । वासव इन्द्रः ततस्तस्मै शुनःशेफाय दीर्घमायुः प्रादात् । चतुर्थ्यन्तात्तसिः ॥ २६ ॥

गो० टी०–तत इन्द्रस्यैव फलप्रदत्वमाह–तत इति । प्रीतः स्वस्तुत्या तुष्टः रहस्यस्तुतितर्पितः स्वस्वामिभूतविष्णुरहस्यस्तुत्या तोषितः ॥ २६ ॥

२७ ] ति० टी०–समाप्तवान् फलं सम्यगाप्तवानित्यर्थः । यद्यपि बह्वृचब्राह्मणे, “ हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा ” इत्यादिना हरिश्चन्द्रयज्ञे शुनःशेपस्याजीगर्तिसुतस्य पशुत्वं प्राजापत्यादिस्तुत्या च मोक्षः श्रूयते, तथाप्यम्बरीषविषयमप्येतत् । एतत्प्रामाण्यात्तन्मूलश्रुतिश्चान्वेष्येति बहवः । केचित्तु–हरिश्चन्द्रपदं सादृश्यादम्बरीष एव प्रयुक्तम् । अजीगर्तिपदं च ऋचीके प्रयुक्तं श्रुतावस्मादेवोपबृंहणादित्याहुः ॥ २७ ॥

रा० टी०–स इति । नरश्रेष्ठ हे राम ! स राजा अम्बरीषस्तु सहस्राक्षप्रसादजं सहस्राक्षप्रसादजनितमेव बहुविधमनेकप्रकारं यज्ञस्य फलं समाप्तवान् समीचीनप्राप्तिविशिष्ट आसीदिति शेषः । एकश्चकारस्त्वर्थकः अपर एवार्थकः ॥ २७ ॥

गो० टी०–स चेति । समाप्तवान् प्राप्तवान् । ननु “ हरिश्चन्द्रो वैधस ऐक्ष्वाको राजपुत्र आस ” इत्यादिबह्वृचब्राह्मणोक्तेतिहासविरुद्धोऽयं कथमुपपद्यत इति चेत् अम्बरीषस्यैव हरिश्चन्द्र इति संज्ञान्तरमित्यविरोधस्य नेयत्वात् ॥ २७ ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

२८ ] ति० टी०–भूयः पूर्वतपसः पुत्रेषु क्रोधेन नाशात्क्रोधं न करिष्यामीति संकल्प्य पुनस्तपोऽकरोत् ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

१ गच्छामहे इति रा. पाठः । २ सदः इति गो.रा.पाठः । ३ समुपाहरेति रा. समुपाविशेति गो.पाठः । ४ समुत्सुक इति गो. पाठः । ५ तर्पित इति गो. पाठः । ६ तत इति रा. पाठः । ७ राघवेति गो. पाठः । ८ बहुविधमिति रा. पाठः ।

## त्रिषष्टितमः सर्गः।

पुष्करे तपस्यते विश्वामित्राय ब्रह्मागत्य ऋषित्वमदात्। तत्रैवागतमेनकादर्शनक्षुब्धमना गाधेयस्तया वत्सरदशकं सुखं विजहान्ते च तत्कृतपश्चात्तापः पुनस्तप्तुं हिमवन्तमगात्तत्राप्यागत्य ब्रह्मा तस्मै महर्षित्वमदात्तथाप्यपरितुष्टमनाः स पुनस्तपस्तेपे।

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम्। अभ्यगच्छन्सुराः सर्वे तपःफलचिकीर्षवः॥ १॥
अब्रवीत्सुमहातेजा ब्रह्मा सुरुचिरं वचः। ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः॥ २॥
तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात्। विश्वामित्रो महातेजा भूयस्तेपे महत्तपः॥ ३॥
ततः कालेन महता मेनका परमाप्सराः। पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे॥ ४॥
तां ददर्श महातेजा मेनकां कुशिकात्मजः। रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा॥ ५॥
कंदर्पदर्पवशगो मुनिस्तामिदमब्रवीत्। अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे॥ ६॥
अनुगृह्णीष्व भद्रं ते मदनेन विमोहितम्। इत्युक्ता सा वरारोहा तत्र वासमथाकरोत्॥ ७॥

रा० टी०—विश्वामित्र इति। धर्मात्मा धर्मस्वरूपः महातपाः विश्वामित्रोऽपि हे नरश्रेष्ठ! दश वर्षशतानि सहस्रत्रयवर्षपर्यन्तं पुष्करेष्वेव भूयस्तेपे तपश्चकार॥ २८॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्विषष्टितमः सर्गः॥ ६२॥

१ ] ति० टी०—व्रतस्नातं समाप्तव्रतम्। तपःफलचिकीर्षवस्तपःफलं दातुकामाः॥ १॥

रा० टी०—पूर्ण इति। वर्षसहस्रे वर्षाणि सहस्राणि यस्मिन् तस्मिन् त्रिसहस्रात्मके समये पूर्णे सत्येव व्रतस्नातं व्रतान्तस्नानविशिष्टं महामुनिं विश्वामित्रं तपःफलचिकीर्षवः विश्वामित्रतपःफलदानेच्छावन्तः सर्वे ब्रह्मादयः सुराः अभ्यगच्छन् विश्वामित्रसंमुखं प्राप्नुवन्। तुशब्द एवार्थे॥ १॥

गो० टी०—पुत्रविषयक्रूरशापदानेन क्रोधनिर्जयाभावान्न ब्रह्मर्षित्वसिद्धिरित्याह त्रिषष्टितमे—पूर्ण इत्यादि। व्रतस्नातं व्रतान्ते स्नातं समाप्तपुरश्चरणमिति यावत्। तपःफलचिकीर्षवः तपःफलं दातुमिच्छवः॥ १॥

२–३ ] ति० टी०—ऋषिस्त्वमसि अत्र राजशब्दानुपादानेन क्षत्रजातिविश्लेषः सूचितः॥ २॥ ३॥

रा० टी०—अब्रवीदिति। सुमहातेजाः ब्रह्मा सुरुचिरमतिरमणीयं वचोऽब्रवीत्। तद्वचनमेवाह—स्वार्जितैः स्वसंपादितैः शुभैः कर्मभिः त्वमृषिः असि अतस्ते भद्रं कल्याणं पूर्वं विश्वामित्रतपसि राजर्षिरित्युक्तमिदानीं ऋषिरित्येतावन्मात्रमुच्यते तेनैतत्तपसा त्वत्क्षत्रियत्वं विच्छिन्नमिति ध्वनितम्॥२॥

गो० टी०—अब्रवीदिति। ऋषिस्त्वमसि पूर्वतपसा राजर्षिरासि इदानीमृषिरेवासि अनेन राजपदाप्रयोगेण क्षत्रियत्वविश्लेषः कियान् कृत इति गम्यते॥ २॥

रा० टी०—तमिति। देवेशो ब्रह्मा तं विश्वामित्रमेवमुक्त्वा त्रिदिवं पुनरभ्यगात्। महर्षिर्विश्वामित्रस्तु भूयो महत्तपस्तेपे एतेन पूर्णा तदीप्सितसिद्धिर्न जातेति ध्वनितम्॥ ३॥

गो० टी०—विश्वामित्रो महातेजा भूयस्तेपे महत्तपः इत्यत्र गायत्रीतृतीयाक्षरम्॥ ३॥ ४॥

४ ] ति० टी०—परमा रूपादिभिः सर्वोत्तमा। अप्सरा इत्यार्षम्॥ ४॥

रा० टी०—तत इति। हे नरश्रेष्ठ! ततः विश्वामित्रमहातपःप्रारम्भानन्तरं मेनका तदभिधा परमाप्सराः पुष्करेषु महता कालेन स्नातुं समुपचक्रमे आजगाम! अप्सरश्शब्दस्यैकत्वं त्वेतत्प्रायोनिर्देशादेव साधु॥ ४॥

गो० टी०—अथास्य जितेन्द्रियत्वाभावख्यापनाय कथान्तरं प्रस्तौति—ततः कालेनेत्यादि। अप्सरःशब्द एकवचनान्तोऽप्यस्ति। देवप्रेषितेति सिद्धम्॥ ५॥

५ ] ति० टी०—तत्र सरसि। जलदे विद्युतमिव॥ ५॥

रा० टी०—तामिति। महातेजाः कुशिकात्मजो विश्वामित्रः रूपेणाप्रतिमामप्रतिमरूपविशिष्टां तां मेनकां तत्र पुष्करे जलदे मेघे विद्युतमिव ददर्श॥ ५॥

गो० टी०—तामिति। तत्र सरसि स्नान्ती मेनका जलदमण्डलमध्यवर्तिनी विद्युदिव स्थितेति भावः॥ ६॥ ७॥

६ ] ति० टी०—कन्दर्पकृतो दर्पो मदः॥ ६॥

रा० टी०—कन्दर्पेति। कन्दर्पदर्पवशगः कन्दर्पजनितमदवशं प्राप्तः मुनिर्विश्वामित्रस्तां मेनकामिदं वचनमब्रवीत्। तद्वचनमेवाह—हे अप्सरः! ते तव इदं स्वागतमस्तु अत एवेहास्मिन्ममाश्रमे एव त्वं वस। चशब्द एवार्थे॥ ६॥

७ ] ति० टी०—अनुगृह्णीष्व भोगदानेनेति शेषः। वरारोहा श्रेष्ठजघना॥ ७॥

रा० टी०—अन्विति। मदनेन विमोहितं मामनुगृह्णीष्व मदीप्सितं साधयेत्यर्थः। ते भद्रं कल्याणमित्यमेन प्रकारे-

१ महर्षिस्त्विति रा. पाठः। २ दृष्ट्वा कन्दर्पेति गो. पाठः।

तपसो[1] हि महाविघ्नो विश्वामित्रमुपागमत् । तस्या वसन्त्यां वर्षाणि[2] पञ्च पञ्च च राघव ॥ ८ ॥
विश्वामित्राश्रमे सौम्ये सुखेन व्यतिचक्रमुः । अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ॥ ९ ॥
सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः । बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ॥ १० ॥
सर्वं सुराणां कर्मैतत्तपोपहरणं महत् । अहोरात्रापदेशेन गताः संवत्सरा दश ॥ ११ ॥
काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः । स[3] निःश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ॥ १२ ॥
भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् । मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ॥ १३ ॥
उत्तरं पर्वतं राम विश्वामित्रो जगाम ह । स कृत्वा नैष्ठिकीं बुद्धिं जेतुकामो महायशाः ॥ १४ ॥
कौशिकीतीरमासाद्य तपस्तेपे दुरासदम्[4] । तस्य वर्षसहस्राणि घोरं तप उपासतः ॥ १५ ॥
उत्तरे पर्वते राम देवतानामभूद्भयम् । आमन्त्रयन्समागम्य सर्वे सर्षिगणाः सुराः ॥ १६ ॥

णोक्ता विश्वामित्रेण प्रार्थिता सा वरारोहा मेनका तत्र विश्वामित्राश्रमे एव वासमकरोत् । अथशब्द एवार्थे ॥ ७ ॥

गो० टी०—अनुगृह्णीष्व मत्काममतापं शमयेत्यर्थः ॥ ८ ॥ ९ ॥

८–९ ] ति० टी०—पञ्च पञ्च दशवर्षाणि ॥ ८ ॥ ९ ॥

रा० टी०—तपस इति । हे राघव ! हि अयं मेनकासमागमः तपसः विश्वामित्रतपश्चरणस्य महाविघ्नो विश्वामित्रमुपागमत् प्राप्नोत् अत एव हे राम ! विश्वामित्राश्रमे तस्यां मेनकायां वसन्त्यां सत्यां पञ्च पञ्च दशेति यावत् वर्षाणि सुखेन व्यतिचक्रमुः । सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०—तस्यामिति । पञ्च पञ्च चेति दशेत्यर्थः । सुखेन वसन्त्यामित्यन्वयः ॥ १० ॥

रा० टी०—अथेति । तस्मिन्दशवर्षात्मके काले गते सत्येव संवृत्तः सम्यक् वृत्तं वर्तनं यस्य स महामुनिर्विश्वामित्रः सव्रीडः अप्सरःसङ्गहेतुकव्रीडासहितः अत एव चिन्ताशोकपरायण आसेति शेषः । इवशब्द एवार्थे । हे रघुनन्दन ! अथानन्तरं मुनेर्विश्वामित्रस्य सामर्षा अमर्षसहिता बुद्धिः समुत्पन्ना । सार्धश्लोक एकान्वयी ॥ ९ ॥ १० ॥

गो० टी०—अथेति । सव्रीड इवेत्यत्र इवशब्दो वाक्यालंकारे ॥ ११ ॥

१० ] ति० टी०—सामर्षा देवेषु, विघ्नस्य तत्कृतत्वज्ञानात् ॥ १० ॥

गो० टी०—बुद्धिरित्यादिद्विकम् । अहोरात्रापदेशेन अहोरात्रतुल्यतया अन्ते इतिकरणमध्याहार्यम् इति बुद्धिरुत्पन्नेत्यन्वयः ॥ १२ ॥ १३ ॥

११–१२ ] ति० टी०—तदाह—सर्वमिति । अहोरात्रापदेशेनैकाहोरात्रतुल्यतया ॥ ११ ॥ १२ ॥

रा० टी०—अमर्षसूचकं विश्वामित्रवचनं वर्णयन्नाह—सर्वमिति । तपोपहरणं मत्तपोध्वंसकमेतत्सर्वं महत्कर्म सुराणामेव अत एव काममोहाभिभूतस्य कामजनिताविवेकाक्रान्तस्य मम दश संवत्सराः अहोरात्रापदेशेन एकाहोरात्रतुल्यतया गताः तपोध्वंसकस्त्रीसङ्गेन व्यतीताः । अयं स्त्रीसङ्गेन कालापगमः विघ्नः प्रत्युपस्थितः प्राप्तः एवं पश्चात्तापेन स निःश्वसन् मुनिवरो विश्वामित्रः दुःखित आसीदिति शेषः । श्लोकद्वयमेकान्वयि । सर्वं वाक्यं सावधारणं भवतीति न्यायादेवकारलाभः ॥ ११ ॥ १२ ॥

गो० टी०—विनिःश्वसन्नित्यादिद्विकम् । वेपन्तीं वेपमानां मधुरैस्त्वया किं कृतं कामपरतन्त्रस्य ममैवापराधोऽयमित्येवंरूपैरित्यर्थः । उत्तरं पर्वतं हिमवन्तम् ॥ १४ ॥ १५ ॥

१३ ] ति० टी०—वेपन्तीं वेपमानाम् । मधुरैर्मत्प्रार्थनया स्थितासीति तव न कश्चन दोष इत्यादिवाक्यैः । क्रोधस्य संकल्पपूर्वं त्यक्तत्वादत्र शापादानं तेनास्य क्रोधजयो जात इत्युक्तम् ॥ १३ ॥

रा० टी०—भीतामिति । हे राम ! भीतां संभावितमुनिशापभयविशिष्टामत एव वेपन्तीं प्रकम्पविशिष्टामत एव प्राञ्जलिं प्रणतिसूचकबद्धयुगुलकरां स्थितां मेनकामप्सरसं दृष्ट्वा मधुरैः वाक्यैः तव नापराध इत्यादिवचनैर्विसृज्य कुशिकात्मजो विश्वामित्रः उत्तरं पर्वतं जगाम ह प्रसिद्धमेतत् । सार्धश्लोक एकान्वयी ॥ १३ ॥

१४ ] ति० टी०—ततस्तत्र बहुविघ्नदर्शनादुत्तरगमनम् । नैष्ठिकीं कामस्याप्यकरणं संकल्प्यात्युत्कटब्रह्मचर्यविषयां बुद्धिं दृढनिश्चयम् । जेतुकामः काममिति शेषः ॥ १४ ॥

रा० टी०—स इति । जेतुकामः काममभिभवितुमिच्छुः महायशाः स विश्वामित्रः नैष्ठिकीमतिदृढां बुद्धिं कृत्वा कौशिकीतीरमासाद्य प्राप्य सुदारुणमतिदुष्करं तपस्तेपे । पूर्वोत्तरार्धोत्तरपूर्वार्धयोरेकत्रान्वयः ॥ १४ ॥

गो० टी०—स इति । नैष्ठिकीं व्रतसमापनपर्यन्तां जेतुकामः इन्द्रियाणीति शेषः ॥ १६–१९ ॥

१५ ] ति० टी०—कौशिकी विश्वामित्रभगिनी नदी ॥ १५ ॥

रा० टी०—तस्येति । हे राम ! उत्तरे पर्वते वर्षसहस्राणि घोरं तप उपासतस्तस्य विश्वामित्रस्य संबन्धि देवतानां देवताकर्तृकं भयमभूत् ॥ १९ ॥

१६ ] ति० टी०—उत्तरे पर्वते इत्येतत्पूर्वान्वयि । समागम्य ब्रह्माणेति शेषः ॥ १६ ॥

१ अर्धमिदं गो. नास्ति । २ रामेति गो. रा. पाठः । ३ विनिःश्वसन्निति गो. पाठः । ४ सुदारुणमिति गो. रा. पाठः ।

महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः । देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥ १७ ॥
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् । महर्षे स्वागतं वत्स तपसोग्रेण तोषितः ॥ १८ ॥
महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक । ब्रह्मणस्तु वचः श्रुत्वा विश्वामित्रस्तपोधनः ॥ १९ ॥
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् । [ [6]प्रत्युवाच ततो वाचं विश्वामित्रो महामुनिः ॥ ]
ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ॥ ॥ २० ॥
यदि मे भगवानाह ततोऽहं विजितेन्द्रियः । तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः ॥ २१ ॥
यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः । विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः ॥ २२ ॥
ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् । घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ॥ २३ ॥
शिशिरे सलिलेशायी रात्र्यहानि तपोधनः । एवं वर्षसहस्रं हि तपो घोरमुपागमत् ॥ २४ ॥
तस्मिन्संतप्यमाने तु विश्वामित्रे महामुनौ । संतापः [13]सुमहानासीत्सुराणां वासवस्य च ॥ २५ ॥

---

रा० टी०—अत एव सर्षिगणाः ऋषिगणसहिताः सर्वे सुराः आगम्य ब्रह्मसमीपं प्राप्य आमन्त्रयन् प्रार्थयन्त ॥१६॥

१७ ] ति० टी०—लभताम् भगवन्निति शेषः ॥ १७ ॥

रा० टी०—तत्प्रार्थनामेवाह—महर्षीति । अयं कुशिकात्मजः महर्षिशब्दं साधु यथा स्यात्तथा लभताम् एतेन महर्षिपदलाभमन्तरा एतत्तपोनिवृत्तिर्न भविष्यतीति देवतानां निश्चयो ध्वनितः । सर्वलोकपितामहो ब्रह्मा देवतानां वचः श्रुत्वा तपोधनं विश्वामित्रं मधुरं वाक्यमब्रवीत् ॥ १७ ॥

१८ ] ति० टी०—देवप्रार्थनया महर्षिशब्देनैव संबोधयति महर्षे इति ॥ १८ ॥

रा० टी०—तद्वचनमेवाह—हे महर्षे ! हे वत्स ! स्वागतं तवात्रागमनं समीचीनमित्यर्थः । अत एव हे कौशिक ! तवोग्रेण तपसा हर्षितो हर्षं प्रापितोऽहं महत्त्वं यदृषिमुख्यत्वं तत्तुभ्यं ददामि । तवेत्युभयान्वयि पूर्वश्लोकोत्तरार्धोत्तरश्लोकपूर्वार्धयोरेकत्रान्वयः । एवं पूर्वत्रोत्तरत्रापि बोध्यम् ॥ १८ ॥

१९ ] ति० टी०—महत्त्वस्य विवरणमृषिमुख्यत्वमिति ॥१९॥

रा० टी०—ब्रह्मण इति । तपोधनो महायशाः विश्वामित्रः ब्रह्मणो वचः श्रुत्वा प्राञ्जलिः प्रयतो नियतचित्तश्च भूत्वा पितामहं प्रत्युवाच पितामहमिति शेषः ॥ १९ ॥

गो० टी०—महत्त्वमित्यस्य विवरणमृषिमुख्यत्वमिति२०—२२

२०—२२ ] ति० टी०—प्रत्युवाचेति पितामहमिति शेषः । अतुलं सर्वोत्तमं ब्रह्मर्षिशब्दं मदभीष्टं स्वार्जितैः कर्मभिः प्राप्यं यदि यतो भगवानाह न वदति, ततो मन्येऽहं विजितेन्द्रियः । अत्र काकुः न विजितेन्द्रिय इत्यर्थः । न तावदिति विकारहेतुसंनिधाने विकाराभावे हि तत्त्वमिति भावः । न तावदिति लोकोक्तौ ॥ २०—२२ ॥

रा० टी०—तद्वचनमेवाह—महर्षीति । स्वार्जितैः स्वसंपादितैः शुभैः कर्मभिरतुलं महर्षिशब्दं मे मह्यं यदि भगवानाह ततस्तस्माद्धेतोः अहं विजितेन्द्रियोऽस्मीति शेषः । तेन तस्येन्द्रियजयजनितो गर्वो ध्वनितः ॥ २० ॥

रा० टी०—तद्गर्वनिरासहेतुकां ब्रह्मोक्तिं वर्णयन्नाह—तमिति। महातेजाः ब्रह्मा तं विश्वामित्रमुवाच । तद्वचनमेवाह—हे नरशार्दूल ! तावत्पूर्वं विषयसान्निध्यसमये त्वं जितेन्द्रियो न अतः त्वं यतस्व इत्युक्त्वा त्रिदिवं गतो ब्रह्मेति शेषः ॥ २१ ॥

गो० टी०—ततोऽहं विजितेन्द्रियः यदि महर्षित्वं भवता दत्तं ततोऽहं विजितेन्द्रियश्चास्मीत्यर्थः ॥ २३ ॥

गो०टी०—न तावत्त्वं जितेन्द्रियः विकारहेतुसंनिधानेऽपि यावन्न विकरोषि तावन्तं कालं तव जितेन्द्रियत्वं नास्तीत्यर्थः२४-२५

रा० टी०—विप्रेति । देवेषु ब्रह्मादिषु विप्रस्थितेषु सत्सु तपश्चरन् सन् ऊर्ध्वबाहुः निरालम्बः गृहाद्यालम्बरहितः वायुभक्षः वायुमात्रभक्षणकर्ता महामुनिर्विश्वामित्र आसीदिति शेषः ॥२२॥

२३—२५ ] ति० टी०—घर्मे ग्रीष्मे । आकाशं निरावरणदेशः ॥ २३ ॥ २४ ॥ २५ ॥

रा० टी०—तत्तप एव वर्णयन्नाह—घर्मे इति । तपोधनः विश्वामित्रः घर्मे ग्रीष्मे पञ्चतपाः भूत्वा वर्षासु आकाशसंश्रयः वृक्षाद्याश्रयरहित इत्यर्थः । भूत्वा शिशिरे सलिले स्थायी च भूत्वा रात्र्यहानि निनायेति शेषः ॥ २३ ॥

गो०टी०—आकाशसंश्रयः वर्षावरणरहितदेशस्थः ॥२६—२७॥

रा० टी०—एवमिति । एवमनेन प्रकारेण वर्षसहस्राणि त्रिसहस्रवर्षपर्यन्तं घोरं तप उपागमत् अकरोत् ॥ २४ ॥

रा० टी०—तस्मिन्निति । महामुनौ तस्मिन् विश्वामित्रे तपः संतप्यमाने सति सुराणां वासवस्येन्द्रस्य च महान् सन्ताप आसीत् ॥ २५ ॥

गो० टी०—संभ्रमः किमस्मत्पदं काङ्क्षत इति अस्थाने भयशङ्का ॥ २८ ॥

---

१ हर्षित इति रा. पाठः । २ स इति गो. रा. पाठः । ३ प्रयत इति गो. रा. पाठः । ४ सर्वलोकपितामहमिति गो. पाठः। ५ महायशा इति रा. पाठः । ६ अर्धमिदमधिकं गो. पाठे । ७ महर्षिशब्दमिति गो. रा. पाठः । ८ वान्नाहेति गो. रा. पाठः । ९ महातेजा इति रा. पाठः। १० नरेति रा. पाठः। ११ स्थायीति गो. रा. पाठः। १२ वर्षसहस्राणीति रा. पाठः । १३ संभ्रम इति गो. पाठः ।

रम्भामप्सरसं शक्रः सर्वैः सह मरुद्गणैः । उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ।

इन्द्रेण तपोभङ्गाय प्रेषितां रम्भां नामाप्सरसं शिलामयीं विधाय विश्वामित्रः क्रोधजयेन तपश्चरणं निश्चिकाय ।

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया । लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥
तथोक्ता साप्सरा राम सहस्राक्षेण धीमता । व्रीडिता प्राञ्जलिर्वाक्यं प्रत्युवाच सुरेश्वरम् ॥ २ ॥
अयं सुरपते घोरो विश्वामित्रो महामुनिः । क्रोधमुत्स्रक्ष्यते घोरं मयि देव न संशयः ॥ ३ ॥
ततो हि मे भयं देव प्रसादं कर्तुमर्हसि । एवमुक्तस्तया राम सभयं भीतया तदा ॥ ४ ॥
तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् । मा भैषी[3] रम्भे भद्रं ते कुरुष्व मम शासनम् ॥ ५ ॥
कोकिलो हृदयग्राही माधवे रुचिरद्रुमे । अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः ॥ ६ ॥

---

२६ ] ति० टी०—आत्महितमात्मा इन्द्रः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०—रम्भामिति । सर्वैर्मरुद्गणैः सह शक्रः इन्द्रः आत्महितं कौशिकस्य विश्वामित्रस्य अहितं हितभिन्नं च वाक्यमुवाच ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०—अहितं कौशिकस्य चेत्यनेन तद्विषयवैरनिर्यातनार्थं च रम्भाप्रेरणमित्यपि गम्यते ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

१ ] ति० टी०—लोभनं प्रतारणम् । काममोहेन कामज्वलितचित्तवैवश्येन समन्वितं युक्तम् ॥ १ ॥

रा० टी०—इन्द्रवचनमेवाह—सुरेति । हे रम्भे ! इहास्मिन् समये काममोहसमन्वितं कामजनितवैचित्यविशिष्टं यथा भवति तथा कौशिकस्य लोभनं वञ्चनमिदं सुमहत् सुरकार्यं त्वया कर्तव्यम् ॥ १ ॥

गो० टी०—अथ रम्भया तपोविघ्नश्चतुःषष्टितमे—सुरकार्यमित्यादि । लोभनं प्रलोभनं काममोहेन कामकृतवैचित्र्येन समन्वितं युक्तं इह अस्मिन्काले कौशिकप्रलोभनरूपं सुमहत् सुरकार्यं कर्तव्यमित्यन्वयः ॥ १ ॥

२ ] ति० टी०—व्रीडिता।असामर्थ्यवचननिमित्ता व्रीडा॥२॥

रा० टी०—तथेति । हे राम ! धीमता सहस्राक्षेण तथा तेन प्रकारेण उक्ता व्रीडिता अशक्यकार्यकर्मकाप्रत्याख्यातव्येन्द्राज्ञापनेन लज्जिता सा रम्भा अप्सराः अप्सरसः प्राञ्जलिर्भूत्वा सुरेश्वरं प्रत्युवाच ॥ २ ॥

गो० टी०—व्रीडिता अशक्यार्थवचननिमित्तलज्जावती ॥२॥

३ ] ति० टी०—'उत्सृज्यते' इति पाठेऽप्युत्स्रक्ष्यत इत्येवार्थः॥३

रा० टी०—तद्वचनमेवाह—अयमिति । हे सुरपते ! हे देव ! घोरः अतितीक्ष्णस्वभावोऽयं महामुनिर्विश्वामित्रः मयि घोरं क्रोधमुत्स्रक्ष्यते संशयः अस्मिन् विषये संदेहो न कार्यः। 'उत्सृजते' इति भूषणकृत्पाठः ॥ ३ ॥

गो० टी०—उत्सृजते उत्स्रक्ष्यति ततस्तस्मात् क्रोधोत्सर्जनात् मे मम भयं भीतिः प्रसादं नियोगनिवृत्तिरूपम् ॥ ३ ॥ ४ ॥

४–५ ] ति० टी०—हि यतोऽतः प्रसादमेवंनियोगाभावरूपम् ॥ ३ ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । हे देव ! ततस्तच्छापादेव मे भयमस्त्यतः प्रसादमकर्तव्यनियोगापनयनेन प्रसन्नतां कर्तुं त्वमर्हसि । हे राम ! भीतया तया रम्भया एवमनेन प्रकारेण सभयं यथा स्यात्तथोक्तः सहस्राक्षः इन्द्रः वेपमानां कृताञ्जलिं तां रम्भां तदा तत्प्रार्थनोत्तरसमये उवाच । सार्धः श्लोक एकान्वयी ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—मेति । हे रम्भे ! त्वं मम शासनं कुरुष्व मा भैषीः भयं न प्राप्स्यहि ते भद्रम् । भयाभावे हेतुं वदन्नाह—कोकिल इति। माधवे वसन्ते रुचिरद्रुमे रमणीयतरौ हृदयग्राही चित्तापकर्षकः कोकिलः स्थास्यतीति शेषः । एतेन वसन्तर्तुरपि तदानीं स्थितः प्राप्स्यति वेति ध्वनितम् । अर्धद्वयमेकान्वयि ॥ ५ ॥

गो० टी०—मा भैषि रम्भे इत्यत्र आर्षो ह्रस्वः ॥ ५ ॥

६ ] ति० टी०—माधवे वसन्ते कोलिलो भूत्वाहमित्यन्वयः ॥ ६ ॥

रा० टी०—अहमिति । कन्दर्पसहितोऽहं तव पार्श्वतः त्वत्समीपे स्थास्यामि अतः बहुगुणमनेकविधकटाक्षादिविशिष्टमत एव परमभास्वरं रूपं स्वशरीरं कृत्वा तपस्विनं तमृषिं

---

१ भूत्वेति गो. रा. पाठः । २ उत्सृजत इति गो. पाठः । ३ भैषि इति ह्रस्वपाठो गो. पुस्तके ।

त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् । तमृषिं कौशिकं रम्भे भेदयस्व तपस्विनम् ॥ ७ ॥
सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् । लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ८ ॥
कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनम् । संप्रहृष्टेन मनसा स चैनामन्ववैक्षत ॥ ९ ॥
अथ तस्य च शब्देन गीतेनाप्रतिमेन च । दर्शनेन च रम्भाया मुनिः संदेहमागतः ॥ १० ॥
सहस्राक्षस्य तत्सर्वं विज्ञाय मुनिपुंगवः । रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः ॥ ११ ॥
यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम् । दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥ १२ ॥
ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः । उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम् ॥ १३ ॥
एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः । अशक्नुवन्धारयितुं कोपं संतापमात्मनः ॥ १४ ॥

---

कौशिकं हे रम्भे त्वं भेदयस्व तच्चित्तापकर्षणं कुरुष्वेत्यर्थः । सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०—कोकिल इति । अहं कोकिलो भूत्वा माधवे वसन्ते सति स्थास्यामि ॥ ६ ॥

७ ] ति० टी०—बहुगुणं हावभावादिगुणोपेतम् । रूपं रूपपरिष्कारम् । भेदयस्व कामोत्पादनेन तपसश्चालय ॥ ७ ॥

गो० टी०—रूपं सौन्दर्यं बहुगुणं बहवः शृङ्गारचेष्टारूपा गुणा यस्य तथोक्तम् । भेदयस्व चलचित्तं कारय ॥ ७ ॥

८ ] ति० टी०—ललिता ललिताख्यभावयुक्ता ॥ ८ ॥

रा० टी०—सेति । तस्येन्द्रस्य वचनं श्रुत्वा अत एवानुत्तमं रूपं कृत्वा ललिता अतिसौन्दर्यविशिष्टा शुचिस्मिता सा रम्भा विश्वामित्रं लोभयामास ॥ ८ ॥

गो० टी०—सेति । ललिता सुन्दरी ॥ ८ ॥

९ ] ति० टी०—वल्गु मनोहरम् । कमनीयविषयलाभाच्चेतसो हर्षः ॥ ९ ॥

रा० टी०—कोकिलस्येति । व्याहरतः कूजतः कोकिलस्य वल्गुस्वनं मनोहरशब्दं स विश्वामित्रः शुश्राव । ततस्तच्छब्दश्रवणानन्तरमेनां रम्भां संप्रहृष्टेनात्यन्तहर्षविशिष्टेन मनसा अवैक्षत अपश्यत् ॥ ९ ॥

गो० टी०—वल्गु मनोहरं संप्रहृष्टेन कोकिलरवश्रवणजसंतोषवता ॥ ९ ॥

१० ] ति० टी०—तस्य कोकिलस्य । गीतेन रम्भाया इति शेषः । संदेहं स्वत एवास्या यदृच्छयागमनम्, उतेन्द्रप्रेरिताया मत्तपोभङ्गार्थमित्येवंरूपम् ॥ १० ॥

रा० टी०—अथेति । अथ रम्भादर्शनानन्तरमेव तस्य कोकिलस्य शब्देन अप्रतिमेनोपमारहितेन रम्भाया गीतेन च दर्शनेन च मुनिर्विश्वामित्रः संदेहं स्वतोऽस्या आगमनं परतो वेति संशयपूर्वकविचारम् आगतः प्राप्तः । एकश्चकार एवार्थे ॥ १० ॥

गो० टी०—अथेति । तस्य कोकिलस्य गीतेन रम्भाया इत्यनुषज्यते । संदेहं सहस्राक्षप्रेरिता स्वयमागता वेति ॥ १० ॥

११ ] ति० टी०—तत्सर्वं रम्भागमनं तत्कृतप्रलोभनं च सहस्राक्षप्रेरणामूलमिति युक्त्या ध्यानेन च विज्ञाय निश्चित्य रम्भां शशापेत्यन्वयः ॥ ११ ॥

रा० टी०—सहस्राक्षस्येति । सहस्राक्षस्य तद् रम्भाप्रेषणादि कर्म विज्ञाय क्रोधसमाविष्टः कुशिकात्मजः मुनिपुंगवो विश्वामित्रः रम्भां शशाप । एतेन रम्भावियोगे इन्द्रस्याऽप्यतिदुःखं भविष्यतीति हेतुर्ध्वनितः तेन रम्भाया इन्द्रप्राणप्रियात्वं व्यक्तम् ॥ ११ ॥

गो० टी०—तद् रम्भाप्रलोभनं सहस्राक्षस्य कर्मेति विज्ञाय संगीतादिप्रलोभनेन हेतुना निश्चित्य ॥ ११ ॥

१२ ] ति० टी०—शैली शिलाप्रतिमारूपा ॥ १२ ॥

रा० टी०—तच्छापमेवाह—यदिति । हे रम्भे ! हे दुर्भगे ! कामक्रोधजयैषिणं मां यत्त्वं लोभयसे तस्माद् दशवर्षसहस्राणि शैली शिलामूर्तिः सती त्वं स्थास्यसि ॥ १२ ॥

गो० टी०—शैली शिलाप्रतिमा दुर्भगे दुष्टप्रयत्ने 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः ॥ १२ ॥

१३ ] ति० टी०—यद्यपि स्वामिनियोगतः प्रवृत्ताया रम्भायाः शापदानमनुचितम्, इन्द्र एव तद्दानमुचितम्, तथापि क्रोधावेशेन युक्तायुक्तविवेकाभावः अत एव पश्चाद्विवेकं लब्ध्वा तामनुगृह्णाति—ब्राह्मण इति । वसिष्ठ इत्यर्थ इति कतकः । एतेन कामादपि क्रोधो दुर्जय इति सूचितम् ॥ १३ ॥

रा० टी०—शापदानोत्तरं शान्तिप्राप्त्या तामनुगृह्णन्नाह—तपोबलसमन्वितः अत एव महातेजाः स प्रसिद्धो ब्राह्मणो ब्रह्मपुत्रो वशिष्ठः हे रम्भे ! मत्क्रोधकलुषीकृतां मत्क्रोधाय कलुषीकृतं कलुषीकरणं पापाचरणमिति यावत् यस्यास्ताम् । किंच मत्क्रोधेन कलुषीकृतां पापाचरणफलं प्रापितां त्वामुद्धरिष्यति स्वत्स्वरूपं प्रापयिता ॥ १३ ॥

गो० टी०—स्वामिपरतन्त्रायाः किमस्याः शापेनेति पश्चात्तापेनानुगृह्णाति—ब्राह्मण इति । ब्राह्मणो ब्रह्मपुत्रो वसिष्ठ इत्याहुः ॥ १३ ॥

१४ ] ति० टी०—आत्मनः कोपं धारयितुमशक्नुवंस्तां शप्त्वा तपोव्ययजन्यदुःखेन संतापं पश्चात्तापमुपागत इति शेषः ॥ १४ ॥

रा० टी०—एवमिति । कोपं धारयितुं नियन्तुमशक्नुवन् महातपा विश्वामित्रः एवमुक्त्वा शप्त्वेत्यर्थः संतापं तपोध्वंसनहेतुकपश्चात्तापमागतः प्राप्तः ॥ १४ ॥

---

१ रम्भे इति गो. रा. पाठः । २ तत एनामुदैक्षतेति गो. रा. पाठः । ३ कर्मेति गो. रा. पाठः । ४ स इति रा. पाठः । ५ तपा इति रा. पाठः । ६ आगत इति गो. रा. पाठः ।

तस्य शापेन महता रम्भा शैली तदाभवत् । वचः श्रुत्वा च कन्दर्पो महर्षेः स च निर्गतः ॥ १५ ॥
कोपेन च महातेजास्तपोपहरणे कृते । इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १६ ॥
बभूवास्य मनश्चिन्ता तपोपहरणे कृते । [1]नैवं क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ॥ १७ ॥
अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि । अहं हि शोषयिष्यामि आत्मानं विजितेन्द्रियः॥ १८ ॥
तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् । अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ १९ ॥
नहि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः । एवं वर्षसहस्रस्य दीक्षां स मुनिपुंगवः ॥
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

गो० टी०—संतापं शापनिमित्तपश्चात्तापम् ॥ १४ ॥ १६ ॥

१५ ] ति० टी०—महर्षेर्वचः श्रुत्वा कन्दर्पः स च इन्द्रश्च निर्गत इत्यन्वयः ॥ १६ ॥

रा० टी०—तस्येति । तस्य विश्वामित्रस्य महता शापेन रम्भा तदा शापकाले शैली अभवत् । स कन्दर्पः चकारेण इन्द्रः महर्षेर्वचः श्रुत्वैव निर्गतः तदाश्रमात् पलायितः।एकश्च एवार्थे१६

गो० टी०—वचः रम्भाशापरूपम् । स च इन्द्रश्च ॥ १६ ॥

१६ ] ति० टी०—कोपेन चात्कामेन च तपोपहरणे कृते सति कामक्रोधहतत्वादेवाजितैरिन्द्रियैरित्यन्वयः । आपाततो रम्भादर्शनप्रवृत्त्या कामेनातितपःक्षयः । आत्मनो मनसः शान्तिं दुःखोपशमम् ॥ १६ ॥

रा० टी०—कोपेनेति । हे राम ! कोपेन तपोपहरणे कृते सति महातेजा अपि विश्वामित्रः अजितैः एतत्कर्तृकातिजयरहितैः इन्द्रियैः आत्मनः शान्तिं न लेभे ॥ १६ ॥

गो०टी०—इन्द्रियैरजितैरिति । उक्तरीत्या कामक्रोधाहतत्वादिति भावः । इन्द्रियैः हेतुभिः आत्मनः मनसः शान्तिं दुःखोपशमम् ॥ १७ ॥

१७ ] ति० टी—न च वक्ष्ये शापादिवचनमिति शेषः॥१७॥

रा० टी०—बभूवेति । तपोपहरणे कृते सति अस्य विश्वामित्रस्य मनश्चिन्ता विचारः बभूव । चिन्तोत्तरकालिकं स्वनिश्चयमाह—अहमेवं क्रोधं न गमिष्यामि प्राप्स्यामि अत एव कथंचनापि न वक्ष्ये दुर्वचनमिति शेषः । चोऽप्यर्थे ॥ १७ ॥

गो० टी०—बभूवेति । मनश्चिन्ता संकल्पः ॥ १८ ॥

गो० टी०—नैवेत्यादि । न च वक्ष्ये कथंचन मौनमेव करिष्यामीत्यर्थः । नोच्छ्वसिष्यामि केवलं कुम्भकं करिष्यामीत्यर्थः । उच्छ्वासेन खलु क्रोधादयो भविष्यन्तीति भावः ॥१९॥

१८ ] ति० टी०—आत्मानं शरीरम् ॥ १८ ॥

रा० टी०—अथेति । अथानन्तरं संवत्सरशतानि वर्षशतत्रयपर्यन्तं नैवोच्छ्वसिष्यामि अत एव विजितेन्द्रियोऽहमात्मानं क्रोधजनकस्वस्वभावं शोषयिष्याम्येव । अपिवाशब्दा एवार्थौ हिर्हेतौ ॥ १८ ॥

गो० टी०—अहमिति । यावत्पर्यन्तं ब्राह्मण्यं प्राप्तं भविष्यति तावत्पर्यन्तमात्मानं शरीरं शोषयिष्यामि ॥ २० ॥

१९ ] ति०टी०—यावद्यावता कालेन ब्राह्मण्यं प्राप्तं भवेत्तावच्छाश्वतीः समा बहून्वत्सरान् ॥ १९ ॥

रा० टी०—ननु वर्षशतत्रयपर्यन्तं तादृक्स्थित्यापि यदीप्सितसिद्धिर्न भविता तदा किं कर्तासीत्यत आह—तावदिति । यावत् कालं तपसोर्जितं मे ब्राह्मण्यं प्राप्तं स्यात्तावत्कालमनुच्छ्वसन् उच्छ्वासं निरुन्धन् अभुञ्जानोऽहं तिष्ठेयम् । ननु चिरकालं तादृक्स्थित्या देहपातः स्यात्तदा कथमीप्सितसिद्धिरित्यत आह—शाश्वतीः समास्तप्यमानस्य मे मूर्तयः देहाकृतयः क्षयं नैव यास्यन्ति एतेनास्य त्रिकालज्ञत्वं व्यक्तम् । हिरेवार्थे सार्धश्लोक एकान्वयी ॥ १९ ॥

२० ] ति० टी०—मूर्तयः शरीरावयवाः । तपोर्थत्वादनुच्छ्वासाभोजनयोस्तद्बलेन स्थास्यन्त्येवेति भावः । दीक्षामनुच्छ्वासभोजने उद्दिश्य । अप्रतिमां प्रतिज्ञां सर्वथैवं करिष्य इत्यध्यवसायम् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

रा० टी०—एवमिति । हे रघुनन्दन ! स मुनिपुंगवः एवमनेन प्रकारेण वर्षसहस्रस्य दीक्षां निर्वर्तयितुं लोके अप्रतिमामनुपमां प्रतिज्ञां चकार । शब्दाध्याहारान्न चतुर्थीप्रसक्तिः । किंच अप्रतिमां वर्षसहस्रस्य दीक्षां दीक्षाकारणीभूतां प्रतिज्ञां चकार ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुः षष्टितमः सर्गः ॥ ६४ ॥

गो० टी०—नहीति । मूर्तयः शरीरावयवाः क्षयं न यास्यन्ति तपःप्रभावादिति भावः ॥ २१ ॥

गो० टी०—एवमिति । वर्षसहस्रस्य वर्षसहस्रसंबन्धिनीं वर्षसहस्रानुयायिनीं दीक्षामनुच्छ्वासाभोजनसंकल्पं उद्दिश्येति

---

१ नैवेति गो. पाठः । २ स्वतपोर्जितमिति रा. पाठः ।

## पञ्चषष्टितमः सर्गः ।

पूर्वस्यां दुश्चरं तपश्चरते विश्वामित्राय ब्रह्मणा दत्तेऽपि ब्रह्मर्षित्ववरदाने नातिसंतोषात्तपसोऽनुपरमति गाधेये देवप्रार्थनया वसिष्ठस्तद्वरदानमन्वमंस्त । एवं शतानन्दप्रस्तुतप्राशस्तिकं विश्वामित्रं संपूज्य तदनुमतो जनकः स्वावासं जगाम ।

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः । पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥
मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् । चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २ ॥
पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् । विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥
स कृत्वा निश्चयं राम तप आतिष्ठताव्ययम् । तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ ४ ॥
भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम । इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥
तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः । निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ ६ ॥
न किंचिदवदद्विप्रं [1]मौनव्रतमुपास्थितः । तथैवासीत्पुनर्मौनमनुच्छ्वासं चकार ह ॥ ७ ॥

---

शेषः । अप्रतिमां निस्तुलां प्रतिज्ञामेवमेव सर्वदा करिष्यामीत्यध्यवसायं चकार ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

१ ] ति० टी०—अथ प्रतिज्ञोत्तरम् हैमवतीमुत्तराम् ॥१॥

रा० टी०—प्रतिज्ञाकारणानन्तरकालिकं वृत्तमाह—अथेति । हे राम! महामुनिः विश्वामित्रः अथ तपोनिश्चयानन्तरं हैमवतीमुत्तरां दिशं त्यक्त्वा पूर्वां दिशमनुप्राप्य सुदारुणं तपस्तेपे ॥ १ ॥

गो० टी०—अथ विश्वामित्रस्य ब्रह्मर्षित्वप्राप्तिः पञ्चषष्टितमे—अथ हैमवतीमित्यादि ॥ १ ॥

२ ] ति० टी०—मौनरूपं व्रतं वर्षसहस्रसंबन्धि । मौनं चात्र काष्ठमौनम् ॥ २ ॥

रा० टी०—तपःप्रकारं वर्णयन्नाह—मौनमिति । हे राम! अनुत्तमं सर्वोत्कृष्टं मौनं व्रतं वर्षसहस्रस्य सहस्रवर्षसंबन्धीत्यर्थः । मौनं व्रतं कृत्वा अप्रतिममनुपमं परमदुष्करं तपश्चकार ॥ २ ॥

गो० टी०—वर्षसहस्रस्य वर्षसहस्रसंबन्धि तत्साध्यमित्यर्थः। मौनव्रतं मौनरूपं व्रतं कृत्वा संकल्प्येत्यर्थः ॥ २ ॥

३ ] ति० टी०—आधूतमाकुलीकृतमप्यान्तरमन्तःकरणम् ॥ ३ ॥

रा० टी०—पूर्ण इति । हे राम! यो विश्वामित्रो निश्चयं कृत्वा अव्ययं तप आतिष्ठत तं काष्ठभूतमपराधादिसहनेन काष्ठसदृशं बहुभिर्विघ्नैराधूतमवधूतत्वेनेष्यमाणं महामुनिं विश्वामित्रं वर्षसहस्रे पूर्णे तुशब्देनापूर्णेऽपि स क्रोधः अन्तरं नाविशत् । सार्धश्लोक एकान्वयी ॥ ३ ॥ ४ ॥

गो० टी०—काष्ठभूतं काष्ठवदवस्थितं आधूतमाकुलीकृतमपि आन्तरमन्तरवन्तं दृष्टान्तःकरणवन्तमिति यावत् यद्वा तं प्रति क्रोधः अन्तरमवकाशं नाविशत् ॥ ३ ॥ ४ ॥

४ ] ति० टी०—निश्चयं क्रोधाकरणविषयकम् । वर्षसहस्रसंबन्धिनि व्रते पूर्णे सति ॥ ४ ॥

रा० टी०—तस्येति । हे रघूत्तम! तस्य विश्वामित्रस्य वर्षसहस्रस्य व्रते पूर्णे सति महाव्रतो विश्वामित्रोऽन्नं भोक्तुमारब्धवान् तस्मिन्काले भोजनप्रारम्भसमये द्विजातिर्भूत्वा इन्द्रस्तं विश्वामित्रं सिद्धमन्नमयाचत ॥ ५ ॥

गो० टी०—तस्य पूर्वसंकल्पितस्य वर्षसहस्रस्य संबन्धिनि व्रते पूर्णे तस्मिन् काले पारणकाले सिद्धं पक्वं याचिर्द्विकर्मकः ॥५॥

५ ] ति० टी०—तस्मिन्काले व्रतपारणाकाले ॥ ५ ॥

६ ] ति० टी०—सिद्धं पक्वम् । निःशेषिते निरवशेषतो दत्ते । अभुक्त्वैव पुनः पाकाकरणादभुक्त्वैव ॥ ६ ॥

रा० टी०—तस्मै इति । तदा याचनसमये विप्राय विप्ररूपाय तस्मै याचमानाय सर्वं सिद्धमन्नं दत्त्वा अन्ने निःशेषिते सति निश्चितः निर्गतं चितं संचयो यस्यान्नान्तरसंचयरहित इत्यर्थः । किंच निश्चितः याचको न प्रत्याख्येय इति निश्चयं प्राप्तः । अत एव अभुक्त्वैव विद्यमानो भगवान् अतिसामर्थ्यविशिष्टः महातपाः मौनं व्रतमुपास्थितो विश्वामित्रः विप्रं न किंचिदवदत् ॥ ६ ॥ ७ ॥

गो० टी०—निश्चितस्तपःसिद्धये सर्वथैवान्नं दातव्यमिति निश्चयवानित्यर्थः । निश्चितः अशङ्कितः इति वा निःशेषित इत्यनेन सर्वमन्नमिन्द्रेण याचितमिति गम्यते । अभुक्त्वेति पुनः पाकार्हतण्डुलासंपादनादिति भावः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—मौनं कृत्वासीदित्यन्वयः ॥ ७ ॥

रा० टी०—तथेति । मुनिपुंगवो विश्वामित्रः अनुच्छ्वासमुच्छ्वासरहितं मौनं पुनश्चकार आरेभे । अथ तादृशमौनव्रतप्रारम्भानन्तरं वर्षसहस्रं नोच्छ्वसन् उच्छ्वासरहितः सन्नेव तथैव वक्रोचारादिरहित एवासीत् । ह प्रसिद्धमेतत् । वैशब्द एवार्थे ॥ ८ ॥

---

१ मौनं व्रतमिति रा० पाठः । २ नास्तीदमर्धं गो० पुस्तके ।

अथ वर्षसहस्रं चै नोच्छ्वसन्मुनिपुंगवः । तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ॥ ८ ॥
त्रैलोक्यं येन संभ्रान्तमातापितमिवाभवत् । ततो देवर्षिगन्धर्वाः पन्नगोरगराक्षसाः ॥ ९ ॥
मोहितास्तेपसा तस्य तेजसा मन्दरश्मयः । कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ १० ॥
बहुभिः कारणैर्देव विश्वामित्रो महामुनिः । लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥ ११ ॥
नह्यस्य वृजिनं किंचिद्दृश्यते सूक्ष्ममप्युत । न दीयते यदि त्वस्य मनसा यदभीप्सितम् ॥ १२ ॥
विनाशयति त्रैलोक्यं तपसा सचराचरम् । व्याकुलाश्च दिशः सर्वा न च किंचित्प्रकाशते ॥ १३ ॥
सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः । प्रकम्पते च वसुधा वायुर्वातीह संकुलः ॥ १४ ॥
ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः । संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् ॥ १५ ॥

८ ] ति० टी०—नोच्छ्वसन् श्वासोच्छ्वासरहितः । धूम इति धूमकेतुरित्यर्थः । अग्निरिति यावत् । अत एवाग्रे 'आतापित मिव' इति वक्ष्यति । अयं शुद्धसत्त्वगुणप्रभवोऽग्निरितरेषां रजस्तमःप्रधानानां तन्मिश्रसत्त्वप्रधानानां च देवादीनां तापजनक इति बोध्यम् ॥ ८ ॥

रा० टी०—तस्येति । अनुच्छ्वसमानस्य उच्छ्वासराहित्यं प्राप्नुवतस्तस्य विश्वामित्रस्य मूर्ध्नि धूमो व्यजायत येन धूमेन संभ्रान्तमुद्वेगं प्रापितं त्रैलोक्यमादीपितं संतापितमेवाभवत् । इवशब्द एवार्थे ॥ ९ ॥

गो० टी०—आदीपितं तापितम् ॥ ८ ॥

९ ] ति० टी०—येन वह्निना । यथा तापितः पुमान्संभ्रान्तो व्याकुलो भवति, तद्वत्त्रैलोक्यं संभ्रान्तमभूदित्यर्थः ॥ ९ ॥

रा० टी०—तत इति । ततः विश्वामित्रमूर्धोत्थितधूमदर्शनानन्तरं तस्य विश्वामित्रस्य तपसा तपोजनितेन तेजसा मोहिताः वैचित्यं प्राप्ताः अत एव मन्दरश्मयः हीनतेजसः अत एव कश्मलोपहताः दुःखव्याप्तचित्ताः सर्वे देवर्षिगन्धर्वाः पन्नगोरगराक्षसाश्च पितामहं ब्रह्माणमब्रुवन् । अथशब्दश्चार्थे । सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—तत इत्यादि । तपसा तेजसा तपोरूपाग्निना मोहिता मूर्च्छिताः कश्मलोपहताः दुःखोपहताः ॥ ९ ॥

१० ] ति० टी०—तपसा तेजसा तपोरूपेण तेजसा मोहिता विषयाग्राहितचित्ताः कृताः । मन्दरश्मयः क्षीणतेजसः । कश्मलं दुःखम् ॥ १० ॥

११ ] ति० टी०—तत्तद्विषयैर्लोभितः क्रोधितोऽपि निर्विघ्नमेव तौ त्यक्त्वा तपसाभिवर्धत इत्यन्वयः ॥ ११ ॥

रा० टी०—बहुभिरिति । हे देव ! बहुभिः कारणैस्तपोध्वंसनहेतुभिः लोभितः क्रोधितश्च महामुनिर्विश्वामित्रस्तपसा स्वतपःप्रभावेणैव अभिवर्धते एव लोभादयस्तस्मिन्न याता इत्यर्थः । चशब्द एवार्थे ॥ ११ ॥

गो० टी०—लोभितः लोभकारणैः रम्भादर्शनादिभिः प्रलोभितः क्रोधितः क्रोधकारणैर्वर्षसहस्रान्तसिद्धकृतान्नयाचनादिभिः क्रोधितः वृजिनं पापं रागद्वेषादिलक्षणं सूक्ष्मं स्वल्पम्॥१०॥

१२ ] ति० टी०—सूक्ष्ममपि वृजिनमल्पमपि कामक्रोधरूपम् । यदभीप्सितं ब्रह्मर्षित्वम् ॥ १२ ॥

रा० टी०—नेति । अस्य विश्वामित्रस्य सूक्ष्ममल्पमपि किंचिद्वृजिनमस्मत्कृतविघ्नजनितदुःखं नैव दृश्यते अत एव अस्य मनसा यदभीप्सितं तद्यदि न दीयते तर्हि सचराचरं चराचरसहितं त्रैलोक्यं तपसा विनाशयति विनाशयिता । हिशब्द एवार्थे । अथशब्दो हेत्वर्थे । तुशब्दस्तर्हीत्यर्थे । सार्धश्लोक एकान्वयी ॥ १३ ॥

१३-१४ ] ति० टी०—अन्यथा लोकनाश इत्याह—विनाशयतीति । तैर्लघुतरपाठाच्छन्दोभङ्गः । नाशप्रकारमाह—व्याकुला इति ॥ १३ ॥ १४ ॥

रा० टी०—त्रैलोक्यविनाशहेतुं वर्णयन्त आहुः—व्याकुला इत्यादिभिः । सर्वाः दिशः व्याकुलाः अन्धकारादिव्याप्ताः अत एव किंचिदपि न प्रकाशते सर्वे सागराः क्षुभिताः क्षोभं प्राप्ताः सर्वे पर्वतास्तु विशीर्यन्ते स्फुटिता भवन्तीत्यर्थः । एकश्चो हेतौ द्वितीयोऽप्यर्थे तृतीयस्त्वर्थे । सर्वे इत्युभयान्वयि ॥ १४ ॥

गो० टी०—विनाशयति विनाशयेत् असाविति शेषः ॥११॥

गो० टी०—व्याकुला इत्यादि । न प्रतिजानीमः प्रतिक्रियामिति शेषः । नास्तिको जायत इति उक्तसंक्षोभवशान्नास्तिक इव कर्मानुष्ठानशून्यो जायत इत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—प्रकम्पते इति । पृथिवी प्रकम्पते भृशाकुलः अत्यन्ताकुलताविशिष्टः वायुश्च वाति अत एव नास्तिकः नास्ति कं सुखं यस्य सः अत्यन्तव्याकुलत्वेन सुखरहित इत्यर्थः । नरः सर्वो जनो जायते अतो हे ब्रह्मन् ! न प्रतिजानीमः एतद्दुःखप्रतिक्रियां न निश्चिनुमः । चस्त्वर्थे ॥ १६ ॥

१५ ] ति० टी०—प्रतिजानीमः प्रतिक्रियां न जानीम इत्यर्थः । नास्तिको जायते जगत्क्षोभवशान्नास्तिक इव कर्मानुष्ठानशून्य इत्यर्थः । तदाह—संमूढमिवेति । संप्रक्षुभितमानसं व्याकुलचित्तम् ॥ १६ ॥

रा० टी०—समिति । संप्रक्षुभितमानसमत्यन्तक्षोभविशिष्टमानसविशिष्टं त्रैलोक्यं संमूढं कर्तव्याकर्तव्यविवेकरहितमस्तीति शेषः । अतो हे देव ! हे भगवन् ! महामुनिः विश्वामि-

१ वै इति गो. रा. पाठः । २ आदीपितमिति गो. रा. पाठः । ३ देवाः सगन्धर्वा इति गो. पाठः । ४ देवताः इति रा. तेजसा तस्य तपसेति गो. पाठः । ५ अथेति गो. रा. पाठः । ६ भृशाकुल इति गो. रा. पाठः । ७ नर इति रा. पाठः ।

भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा । बुद्धिं न कुरुते यावन्नाशे देव महामुनिः ॥ १६ ॥
तावत्प्रसाद्यो भगवन्नग्निरूपो महाद्युतिः । कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् ॥ १७ ॥
देवराज्यं चिकीर्षेत दीयतामस्य यन्मनः । ततः सुरगणाः सर्वे पितामहपुरोगमाः ॥ १८ ॥
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् । ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥ १९ ॥
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक । दीर्घमायुश्च ते ब्रह्मन्ददामि समरुद्गणः ॥ २० ॥
स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् । पितामहवचः श्रुत्वा सर्वेषां त्रिदिवौकसाम् ॥ २१ ॥
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः । ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ॥ २२ ॥

श्रो नाशे जगत्क्षये यावद्बुद्धिं निश्चयं न कुरुते तावदेवाग्निरूपः प्रलयाग्निसदृशरूपविशिष्टः अत एव महाद्युतिः विश्वामित्रः प्रसाद्यः प्रसादयितुं योग्यः। सार्धश्लोक एकान्वयी । इवशब्द एवार्थे । मानसमित्येतदग्रे ' भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ' इतिश्लोकार्धमपि भट्टटीकाङ्कितपुस्तकेषु दृश्यते ॥ १६ ॥

गो० टी०—उक्तार्थानुवादपूर्वकमनुष्ठेयांश उच्यते—संमूढमिवेत्यादि ॥ १४ ॥

१६ ] ति० टी०—नाशे जगन्नाशे ॥ १६ ॥

गो० टी०—बुद्धिमिति । हे देव ब्रह्मन् ! अतःपरं विश्वामित्रः नाशे जगत्क्षये यावत् बुद्धिं न कुरुते तावत्प्रसाद्यः अनुग्राह्यः ॥ १६ ॥

१७ ] ति० टी०—पूर्वं युगान्तकाले ॥ १७ ॥

रा० टी०—प्रसादनविलम्बे दोषं वदन्त आहुः—कालेति । यथा येन प्रकारेणाखिलं त्रैलोक्यं पूर्वं कालाग्निना दह्यते तथाऽनेनापि धक्ष्यते इति शेषः । किंच अयथा यथोक्तप्रसादनाभावे कालाग्निना कालाग्निसदृशेन विश्वामित्रेण अखिलं सर्वं पूर्वं पौर्वकालिकं त्रैलोक्यं दह्यते धक्ष्यति " वर्तमानसामीप्ये " इति भविष्यति लट् ॥ १७ ॥

गो० टी०—कालाग्निनेति । पूर्वं प्रलयकाले कालाग्निना त्रैलोक्यं यथा अदह्यत तथैव त्रैलोक्यमनेन दह्यते धक्ष्यते अयं देवराज्यं चिकीर्षेतापि अतः अस्य यत् ब्रह्मर्षित्वं मतं तद्दीयतामित्यर्थः ॥ १६ ॥

१८ ] ति० टी०—यद्यसौ देवराज्यमपि चिकीर्षेत तदा तदप्यस्य दीयतामित्यर्थ इति केचित् । यतस्याभीष्टं न दीयते तदासौ देवराज्यं चिकीर्षेत, अतोऽस्य यन्मनस्तत्स्थं ब्रह्मर्षित्वं तद्दीयतामित्यर्थ इत्यन्ये ॥ १८ ॥

रा० टी०—नन्वदेयवस्त्वभिलाषश्चेदयं तददाने कथं प्रसादं प्राप्स्यतीत्यत आहुः—देवेति । यद्यस्मिन् ब्रह्मर्षित्वेऽस्य मनोभिलाषस्तद्दीयतां देवराज्यं चिकीर्षेत चेत्तदपि दीयताम् । ततो देवप्रार्थनानन्तरं पितामहपुरोगमाः सर्वे सुरगणाः महात्मानं विश्वामित्रं मधुरं वाक्यमब्रुवन् । पूर्वोत्तरार्धोत्तरपूर्वार्धयोरेकत्रान्वयः ॥ १८ ॥

गो० टी०—तत इत्यादि । ततः देवविज्ञापनानन्तरम् ॥ १७ ॥

१९ ] ति० टी०—स्वागतं भद्रम् । स्मेति विसर्गलोप आर्षः ॥ १९ ॥

रा० टी०—तद्वचनमेवाह—ब्रह्मर्षे इति । हे ब्रह्मर्षे ! ते तव अत्रागमनं स्वागतं शोभनमागमनमस्तु लडर्थे लोट् । तत्र हेतुः यतस्तपसा त्वत्कर्तृकतपश्चरणेन वयं सुतोषिताः स्म । विसर्गाभाव आर्ष इति भट्टः। किंच स्मेत्येवार्थकमव्ययम्। तपसैव तोषिता इत्यर्थः ॥ १९ ॥

२० ] ति० टी०—दीर्घायुर्दानं स्वदर्शनफलम् ॥ २० ॥

रा० टी०—ब्राह्मण्यमिति । हे कौशिक! उग्रेण तपसा ब्राह्मण्यं स्वेप्सितब्रह्मर्षिपदं त्वं प्राप्तवानसि तव प्रार्थितं ब्रह्मर्षिपदं भवत्तपस्तोषितेन मया दत्तमित्यर्थः। अप्रार्थितमपि ददामीत्याह—हे ब्रह्मन्! समरुद्गणः मरुद्गणसहितोऽहं ते तुभ्यं दीर्घमायुश्च ददामि। समरुद्गण इत्युक्त्या यावद्वायुसंचारमीदृक् ते ख्यातिर्भविष्यतीति सूचितम् ॥ २० ॥

गो०टी०—ब्राह्मण्यमित्यादि। ब्रह्मवचनं प्राधान्येन॥१८–१९॥

२१ ] ति० टी०—स्वस्ति सुखम् । यथासुखम् तपस उपरत इति शेषः ॥ २१ ॥

रा० टी०—स्वस्तीति । हे सौम्य ! स्वस्ति वाञ्छितप्राप्तिजनितसुखं प्राप्नुहि ते तव भद्रं कल्याणम् । अतः यथासुखं सुखमनतिक्रम्य गच्छ स्वगृहमिति शेषः । अर्धं पृथक् पितामहेति पितामहवचः श्रुत्वा सर्वेषां ब्रह्मसहितानां त्रिदिवौकसां प्रणामं च कृत्वा मुदितो महामुनिर्विश्वामित्रः व्याजहार कथयामास ॥ २१ ॥

२२ ] ति० टी०—यदि इत्यसंदिग्धवचनं, वेदाः प्रमाणं चेदितिवत् ॥ २२ ॥

रा० टी०—तद्वचनमेवाह—ब्राह्मण्यमिति । दीर्घं चिरकालिकमायुस्तथैव ब्राह्मण्यं ब्रह्मर्षिपदं च यदि मे मया प्राप्तं भवत्प्रसादाल्लब्धमित्यर्थः । तर्हि ॐकारः ॐ प्रणवं कारयति प्रकटयति स्वनियम्यब्रह्मद्वारेति ॐकारो रघुनाथः वषट्कारः वषडुपलक्षितस्वाहादेः कारः करणमुच्चारणमिति यावत् यस्मिन्स रामोद्देश्यकसाङ्गसकलयागः वेदाः उक्तोभयसूचकसाङ्गसामादयश्च मां वरयन्तु वसिष्ठादिष्विव मयि साक्षात्कारा भवन्त्वित्यर्थः । अथशब्दश्चार्थे ॥ २२ ॥

१ नास्तीदमर्धं रा० पुस्तके । २ मतमिति गो० पाठः ।

ॐकारोऽथ वषट्कारो वेदाश्च वरयन्तु माम् । क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ॥ २३ ॥
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः । यद्येवं परमः कामः कृतो यान्तु सुरर्षभाः ॥ २४ ॥
ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ २५ ॥
ब्रह्मर्षिस्त्वं न संदेहः सर्वं संपद्यते तव । इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ॥ २६ ॥
[3]विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् । पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ॥ २७ ॥
कृतकामो महीं सर्वां चचार तपसि स्थितः । एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ॥ २८ ॥

२३ ] ति० टी०—ओमिति ब्रह्मज्ञानसाधनम् वषडिति यज्ञसाधनम् वेदाश्च तदपेक्षिताङ्गोपाङ्गादिप्रतिपादकाः वरयन्तु यथा वसिष्ठादीन्सहजब्राह्मणान्वरयन्ति तथा वरणं चाध्यापनयाजनयोरनुमतिः । ब्रह्मत्वग्रहेऽपि जातिब्राह्मण्याभावाद्वसिष्ठेनानङ्गीकारे व्यर्थमेव सर्वम्, अत आह—क्षत्रेत्यादि । सूर्यवंशानादिपुरोहितत्वात्तदध्यापकत्वाच्च तेषां युद्धजयादिप्रयोजनसंपत्तये क्षत्रवेदविदामुक्तप्रयोजनधनुर्वेदविदां श्रेष्ठः । ब्रह्मवेदा वेदचतुष्टयी ब्रह्मप्रतिपादकोपनिषद्भागवत्त्वात् ॥ २३ ॥

रा० टी०—भवद्दत्तवरे वशिष्ठस्यापि संमतिः स्यादिति बोधयन्नाह-क्षत्रेति । हे देवताः ! क्षत्रवेदविदां धनुर्वेदादिज्ञातॄणां ब्रह्मवेदविदां ब्राह्मणैकवेद्यब्रह्मदण्डाभिधवेदाभिज्ञानामपि श्रेष्ठः ब्रह्मपुत्रो वशिष्ठः एवमनेन भवदुक्तब्राह्मण्येन रूपेण मां वदतु । एतेन परमाचार्यभूतवशिष्ठप्रसादमन्तरा रामप्रीतिर्न भवतीति ध्वनितम् । तेन रामप्रीतिकामैर्वसिष्ठोऽवश्यं प्रसादयितव्य इति व्यक्तम् । तत्र प्रमाणम् "आचार्यवान् पुरुषो वेद" इत्यादि ॥ २३ ॥

गो० टी०—वरयन्तु अध्यापनयाजनार्हा भवन्तु इत्यर्थः २० ॥

गो० टी०—ब्रह्मत्वग्रहेऽपि सजातीयपरिग्रहार्थमाह—क्षत्रेति । क्षत्रवेदाः क्षत्रियाणां शान्तिपुष्ट्यादिप्रयोजना आथर्वणवेदाः तद्विदां श्रेष्ठः सूर्यवंशानादिपुरोहितत्वादिति भावः । ब्रह्मवेदाः ब्रह्मप्रतिपादका वेदाः वेदान्ता इत्यर्थः । यद्वा ब्राह्मणमात्रप्रवचनार्हा वेदास्त्रयीरूपाः एवं वदतु ब्रह्मर्षिरिति वदतु । यदीति । अयं कामः वसिष्ठमुखेन ब्रह्मर्षित्ववादरूपः कामः यदि कृतस्तदैव मद्विषये कृतकृत्या यान्तु नान्यथेत्यर्थः ॥२१॥२२॥

२४ ] ति० टी०—अन्यदपि श्रैष्ठ्यबीजम्—ब्रह्मपुत्र इति । एवं ब्रह्मर्षे इति । एवं वसिष्ठमुखेन ब्रह्मर्षित्ववादरूपे मम परमः कामो मनोरथो यदि कृतस्तदा मद्विषये कृतकृत्याः सुरर्षभा यान्तु नान्यथेति भावः । अन्यथा पुनस्तपश्चरिष्यामीति तात्पर्यम् ॥ २४ ॥

रा० टी०—यदीति । परम उत्कृष्टः कामो मदिच्छाविषयीभूतः अयं मत्प्रार्थितो यदि कृतो भवद्भिः संपादितस्तर्हि हे सुरर्षभाः ! भवन्तो यान्तु । ततो विश्वामित्रप्रार्थनानन्तरं देवैः प्रसादितः प्रसन्नतां प्रापितः जपतां वरो ब्रह्मर्षिर्वसिष्ठः एवमस्तु इत्यब्रवीत् सख्यं च चकार विश्वामित्रेण सहेति शेषः । सार्धश्लोक एकान्वयी ॥ २४ ॥

२५ ] ति० टी०—ततो विश्वामित्रोक्त्यनन्तरम् । प्रसादितो विश्वामित्रस्य ब्रह्मर्षित्वानुमतये । एवं ब्रह्मर्षित्वम् । सख्यं विश्वामित्रेण ॥ २५ ॥

२६ ] ति० टी०—सर्वं ब्राह्मण्यप्रयोजकं ब्राह्मणाज्जन्म तत्संस्कारादि संपद्यते संपन्नम् । अनेन त्रिपुरुषपर्यन्तं विश्वामित्रस्य ब्राह्मण्यलाभः सूचितः एतच्च "अनृष्यानन्तर्ये" इति सूत्रे महाभाष्ये स्पष्टम् । इति वसिष्ठोक्तं देवता अप्युक्त्वा जग्मुरित्यन्वयः ॥ २६ ॥

रा० टी०—सख्यसंपत्त्युत्तरकालिकं देवतावचनमाह—ब्रह्मर्षिरिति । त्वं ब्रह्मर्षिः अत्र संदेहो न वशिष्ठसख्यप्राप्त्या संशयो ध्वस्त इत्यर्थः अतस्तव सर्वं कार्यं संपत्स्यते सेत्स्यति इति सर्वा देवताः पुनरुक्त्वा यथागतमेव जग्मुः । चशब्दः पुनरर्थे अपिरेवार्थे ॥ २६ ॥

२७ ] ति० टी०—पूजयामास सपरिवारस्य मम सत्कारकरणेन ब्रह्मर्षिताप्रापकसाधनौन्मुख्यसंपादनेन कृतार्थीकृतोऽस्मि भगवतेति पूजयामासेत्यर्थः ॥ २७ ॥

रा० टी०—धर्मात्मा विश्वामित्रोऽपि उत्तमं ब्राह्मण्यं लब्ध्वा जपतां वरं ब्रह्मर्षिं वशिष्ठं पूजयामास । तपसि स्थितः अत एव कृतकामो विश्वामित्रः सर्वां महीं चचार यथेच्छं गमनं चकारेत्यर्थः ॥ २६ ॥ २७ ॥

गो० टी०—एवमस्त्वित्यस्य विवरणम्—ब्रह्मर्षिस्त्वमिति । सर्वं ब्राह्मण्यं त्वत्कृतयाजनाध्यापनादिकं च ॥ २३ ॥

२८ ] ति० टी०—चचारेति विश्वामित्र इति शेषः । अथ प्रकृतशतानन्दवचनम्—एवं त्वित्यादि ॥ २८ ॥

रा० टी०—एवमिति । हे राम ! महात्मनानेन विश्वामित्रेण एवमुक्तप्रकारेणैव ब्राह्मण्यं प्राप्तमतो हे राम ! एष विश्वामित्रो मुनिश्रेष्ठः एष विग्रहवत् शरीरधारि तपश्च । तुशब्द एवार्थे ॥ २८ ॥

गो० टी०—अथ शतानन्दवचनम्—एवमित्यादि । तप इत्यकारान्तपुँल्लिङ्गत्वमार्षम् ॥ २४–२९ ॥

१ यद्ययमिति गो. रा. पाठः । २ संपत्स्यते इति गो. रा. पाठः । ३ सार्धोऽयं श्लोको गो. पुस्तके नास्ति ।

एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः । एष धर्मः परो नित्यं वीर्यस्यैष परायणम् ॥ २९ ॥
एवमुक्त्वा महातेजा विरराम द्विजोत्तमः । शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ॥ ३० ॥
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगवी ॥ ३१ ॥
यज्ञं काकुत्स्थसहितः प्राप्तवानसि कौशिक । पावितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने ॥ ३२ ॥
गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया । विस्तरेण च वै ब्रह्मन्कीर्त्यमानं महत्तपः ॥ ३३ ॥
श्रुतं मया महातेजो रामेण च महात्मना । सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥ ३४ ॥
अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम् । अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज ॥ ३५ ॥
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो । कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ॥ ३६ ॥
श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः । स्वागतं जपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ ३७ ॥
एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् । विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३८ ॥
एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः । प्रदक्षिणं चकाराशु सोपाध्यायः सबान्धवः ॥ ३९ ॥

---

२९-३१ ] ति० टी०—नित्यमिदानीमपि । वीर्यस्य तपोवीर्यस्य ॥ २९-३१ ॥

रा० टी०—एषः नित्यं धर्मपरः एषः वीर्यस्य पराक्रमस्य परायणम् अर्धं पृथक् । शतानन्दवचःश्रवणानन्तरकालिकं वृत्तमाह—शतानन्देति रामलक्ष्मणसन्निधौ शतानन्दवचः श्रुत्वा प्राञ्जलिर्जनकः कुशिकात्मजं वाक्यमुवाच ॥ २९ ॥

रा० टी०—तद्वाक्यमेवाह—धन्य इति । हे धार्मिक! हे ब्रह्मन्! हे महामुने! यस्य मे यज्ञं काकुत्स्थसहितः यो मुनिपुंगवस्त्वं प्राप्तवानसि तेन त्वया दर्शनेन सोऽहं पावितः अस्मि अत एव अनुगृहीतोऽस्मि अत एव धन्योऽस्मि ॥३०॥३१॥

३२ ] ति० टी०—पावितः पवित्रः कृतः ॥ ३२ ॥

३३ ] ति० टी०—गुणाः कर्मश्रैष्ठ्यज्ञातिश्रैष्ठ्यलक्षणाः ॥३३॥

रा० टी०—गुणा इति । हे ब्रह्मन्! हे महातेजः! तव संदर्शनात् त्वत्कर्मकसंदर्शनतः बहुविधाः अनेकप्रकाराः गुणाः चित्तप्रसादप्रतिष्ठितत्वखलादयः मया प्राप्ताः यतः सदः यागसभां प्राप्य महात्मना रामेण सदस्यैश्च सहितेन मया विस्तरेण कीर्त्यमानं शतानन्देन वर्ण्यमानं ते तव महत्तपः श्रुतं ते तव बहवोऽनेकविधा गुणाः तपोजनितप्रभावाश्च श्रुताः । एकश्चो हेतौ ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—महातेज इति संबुद्धिः । मया जनकेन रामेण च सदः प्राप्य स्थितैः सदस्यैश्च ते गुणाः श्रुताः ॥३४॥

गो० टी०—सदस्यैरिति। सदः प्राप्य स्थितैः सदस्यैः ॥३०॥

३५ ] ति० टी०—तुभ्यमिति तवेत्यर्थे अप्रमेयमियत्ताज्ञानाविषयम् ॥ ३५ ॥

रा० टी०—तत्तपआदीनां महत्त्वं बोधयन्नाह—अप्रमेयमित्यादित्रयेण । यद्यपि हे कुशिकात्मज! तुभ्यं तव तपः अप्रमेयं प्रमातुमशक्यमत एव ते बलं चाप्रमेयमत एव नित्यं विद्यमानास्ते गुणाश्चाप्रमेयाः अत एव हे विभो! हे मुनिश्रेष्ठ! आश्चर्यभूतानां ते कथानां शृण्वतो मे तृप्तिर्नास्ति अत एव स्वागतं तवागमनमतिमङ्गलप्रदमित्यर्थः । तथापि रविमण्डलं लम्बते अस्तं गच्छति अतः कर्मकालः संप्राप्त इति शेषः । अतः हे जपतां श्रेष्ठ! मामनुज्ञातुं गृहगमनायाज्ञापयितुं त्वमर्हसि मां तु श्वः प्रभाते द्रष्टुमर्हसि एतेन त्वमपि स्वस्थानं गच्छेति बोधितम् । एवो यद्यप्यर्थे । अत्र विवेकिशिरोमणिजनकस्य समस्तकर्मकाण्डफलभूतमहात्मकथाविरामप्रार्थनयाऽध्वश्रमविशिष्टरामचिरकालस्थित्यसहिष्णुत्वं सूचितं तेन रामस्य ‡सुकुमारातिशयः सूचितः । श्लोकत्रयं संमिलितान्वयि ॥ ३५ ॥ ३६ ॥

गो० टी०—अप्रमेयाः इयत्तया ज्ञातुमशक्याः ॥ ३१ ॥

३६ ] ति० टी०—कथानामिति । शृण्वत इति शेषः । कर्मकाल इति अतिवर्तत इति शेषः । तदेवाह—लम्बत इति ॥३६॥

गो० टी०—कथानामिति "पूरणगुण" इति तृतीयार्थे षष्ठी। तृप्तिः अलंबुद्धिः ॥ ३२ ॥

३७-३९ ] ति० टी०—स्वागतं भद्रम् । अनुज्ञातुम् कर्मण इति शेषः ॥ ३७-३९ ॥

गो० टी०—स्वागतमिति । त्वदागमनं शुभकृज्जातमित्यर्थः ॥३३-३५ ॥

रा० टी०—एवमिति । तदा जनकप्रार्थनाकाले एवमनेन प्रकारेण उक्तः मुनिवरः प्रीतमनाः विश्वामित्रः पुरुषर्षभं पुरुषश्रेष्ठं प्रीतं जनकं प्रशस्य अथ विससर्ज मङ्गलविसर्जनं चकारेत्यर्थः ॥ ३७ ॥

रा० टी०—विश्वामित्रोक्तिं संवर्ण्य जनकवृत्तमाह—एवमिति । मिथिलाधिपः सोपाध्यायः सबान्धवः वैदेहो जनकः मुनिश्रेष्ठं विश्वामित्रमेवमुक्त्वा आशु प्रदक्षिणं चकार । आशु इत्यनेन गृहं गत्वा कदा इमां कथां वर्णयिष्यामीत्यभिलाषातिशयः सूचितः ॥ ३८ ॥

---

१ विग्रहवत्तप इति रा. पाठः । २ धर्मपर इति गो. रा. पाठः । ३ अर्धमिदं रा. पुस्तके नास्ति । ४ पुंगवः इति रा. पाठः । ५ धार्मिकेति गो. रा. पाठः । ६ ते इति गो. रा. पाठः । ७ अथेति रा. पाठः । ‡ सुकुमारतातिशय इति युक्तम् ।

विश्वामित्रोऽपि धर्मात्मा सहरामः सलक्ष्मणः । स्ववासमभिचक्राम पूज्यमानो महात्मभिः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

परेद्युर्गाधेयो जनकं राघवयोर्धनुर्दिदृक्षामबोधयज्जनकोऽपि धनुःप्रभावं प्रस्तुत्य तत्प्राप्तिं सीताप्राप्तिं च निवेद्य तद्धनुरारोपणे रामाय सीताप्रदानं प्रतिजज्ञे ।

ततः प्रभाते विमले कृतकर्मा नराधिपः । विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥
तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा । राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥ २ ॥
भगवन्स्वागतं तेऽस्तु किं करोमि तवानघ । भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥ ३ ॥
एवमुक्तः स धर्मात्मा जनकेन महात्मना । प्रत्युवाच मुनिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ ४ ॥
पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ । द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥

---

४० ] ति० टी०—स्ववासं स्वनिवेशम् । 'स्ववाटम्' इति पाठेऽप्ययमेवार्थः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०—विश्वामित्र इति । धर्मात्मा सरामः रामसहितः सहलक्ष्मणः लक्ष्मणसहितः महर्षिभिः सह पूज्यमानः विश्वामित्रोऽपि स्ववाटं स्ववासस्थानमभिचक्राम ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०—स्ववाटं स्वनिवेशम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

१ ] ति० टी०—कृतकर्मा कृतनित्यक्रियः ॥ १ ॥

रा० टी०—राजवृत्तमाह—तत इति । ततः विश्वामित्रगमनोत्तरकालिकसांध्यकर्मपूर्वकशयनानन्तरं विमले अन्धकाररहिते प्रभाते कृतकर्मा समापितसांध्यवन्दनादिक्रियः नराधिपो जनकः सराघवं राघवसहितं महात्मानं विश्वामित्रमाजुहाव आह्वानेन स्वसमीपं प्रापयामास ॥ १ ॥

गो० टी०—एवं स्वमातृशापमोचनघटकत्वकृतोपकारस्मृत्या शतानन्दप्रतिपादितेन प्रासङ्गिकेन विश्वामित्रचरित्रेण उपकारकगुरुवैभवो ज्ञेयः। कामक्रोधौ सर्वदा दुर्निरोधौ जितकामक्रोध एव ब्राह्मणोत्तमः ब्राह्मण्यं च न सुलभम् ब्रह्मविदपचारः सर्वारम्भनिरोधकः इत्यादिव्यञ्जितमिति प्रबन्धगतवस्तुना वस्तुध्वनिः । अथ स्वयमेव समस्तजनरक्षणावसरप्रतीक्षो भगवान् देवशरणागतिं व्याजीकृत्य रावणवधायावतीर्णस्तदवान्तरोपायभूतां वेदवत्यवतारे स्वतः कृतसंकल्पां लक्ष्मीं तुल्यशीलवयोवृत्ताभिजनैव कन्या वरणीयेति अमुमर्थविशेषं प्रवर्तयिष्यन् जनककुलेऽवतार्य तत्परिणयनाय प्रवृत्तस्तत्प्रीणनाय ताटकाताटकेयादिदुष्टवधं कौशिकाध्वरत्राणाहल्याशापमोक्षादिरूपं शिष्टपरिपालनं च विधाय साक्षात्सीतालाभोपायाय यतत इत्याह—ततः प्रभात इत्यादिना सर्गद्वयेन ॥ १ ॥

२ ] ति० टी०—कर्मणा अर्घ्यपाद्यादिलक्षणेन राघवौ च संपूज्य वाक्यमुवाच विश्वामित्रं प्रतीति शेषः ॥ २ ॥

रा० टी०—तमिति । तदा विश्वामित्रागमनकाले एव धर्मात्मा जनकः शास्त्रदृष्टेन शास्त्रबोधितेन कर्मणा क्रियया तं विश्वामित्रं महात्मानौ राघवौ चार्चयित्वा वाक्यमुवाच । हशब्द एवार्थे ॥ २ ॥

गो० टी०—तमिति । राघवौ चार्चयित्वेत्यन्वयः । कर्मणा अर्घ्यप्रदानादिना ॥ २ ॥ ३ ॥ ४ ॥

३–४ ] ति० टी०—आज्ञाप्य आज्ञापयितुं योग्यः भवतेति कृत्यानां कर्तरि षष्ठीविकल्पात्तृतीया । आगमनप्रयोजनं बोधनीय इति तात्पर्यम् ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—भगवन्निति । हे भगवन् ! ते तव स्वागतमस्तु हे अनघ ! तव अहं किं करोमि मां भवान् आज्ञापयतु हि यतोऽहं भवता आज्ञाप्यः आज्ञापनार्हः ॥ ३ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेणैव महात्मना जनकेनोक्तः वाक्यविशारदो धर्मात्मा मुनिश्रेष्ठो विश्वामित्रो वाक्यं प्रत्युवाच । तुशब्द एवार्थे ॥ ४ ॥

५ ] ति० टी०—द्रष्टुकामौ आगताविति शेषः ॥ ५ ॥

रा० टी०—तद्वाक्यमेवाह—पुत्राविति । क्षत्रियौ नित्यं क्षत्रियत्वजातिविशिष्टौ लोकविश्रुतौ सर्वलोकविख्यातौ यदेतत् श्रेष्ठं धनुः त्वयि त्वत्सन्निधौ तिष्ठति तत् द्रष्टुकामौ इमौ दशरथस्य पुत्रौ आगच्छतामिति शेषः ॥ ५ ॥

गो० टी०—द्रष्टुकामौ भवत इति शेषः ॥ ५ ॥

---

१ स्ववाटमिति गो. रा. पाठः । २ महर्षिभिरिति गो. रा. पाठः । ३ त्विति गो. रा. पाठः । ४ मुनिर्वीरमिति गो. पाठः ।

एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ । दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥ ६ ॥
एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् । श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥
देवरात इति ख्यातो निमेर्ज्येष्ठो महीपतिः । न्यासोऽयं तस्य भगवन्हस्ते दत्तो महात्मनः ॥ ८ ॥
दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । विध्वस्य त्रिदशान्रोषात्सलीलमिदमब्रवीत् ॥ ९ ॥
यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः । वराङ्गानि महार्हाणि धनुषा शातयामि वः ॥ १० ॥
ततो विमनसः सर्वे देवा वै मुनिपुंगव । प्रसादयन्त देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११ ॥
प्रीतियुक्तस्तु सर्वेषां ददौ तेषां महात्मनाम् । तदेतद्देवदेवस्य धनूरत्नं महात्मनः ॥ १२ ॥

---

६ ] ति० टी०—कृतकामौ प्राप्तकामौ ॥ ६ ॥

रा० टी०—एतदिति । कृतकामौ प्रकटितधनुर्दर्शनविषयकेच्छावन्तौ नृपात्मजौ एतद्भवत्स्थापितं धनुर्दर्शय "दृशेश्च" इति कर्मत्वम् । अस्य धनुषो दर्शनात् इष्टमभीप्सितं यथा यथावत् प्रतियास्यतः प्राप्स्यतः ॥ ६ ॥

गो० टी०—अस्य दर्शनादेव कृतकामौ भूत्वा प्रतियास्यत इत्यन्वयः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—ततो धनुर्वृत्तान्तमाह जनकः—एवमिति । अस्य दिदृक्षितस्य धनुषः श्रूयताम् आगमनादिवृत्तान्त इति शेषः । यदर्थं यत्प्रयोजनाय तिष्ठति तच्च श्रूयताम् ॥ ७ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेणैवोक्तो जनकः महामुनिं विश्वामित्रं प्रत्युवाच । तत्प्रतिवचनमेवाह—यदर्थं यत्कारणात् इह तिष्ठति धनुरिति शेषः तत्कारणं तुना प्राप्तिप्रकारश्च श्रूयताम् ॥ ७ ॥

गो० टी०—श्रूयतामिति । धनुः यदर्थं यत्प्रयोजनाय इह अस्मद्गृहे तिष्ठति अस्य धनुषः तत्प्रयोजनं श्रूयतामित्यर्थः ॥८॥

८ ] ति० टी०—निमिः कूटस्थः । तस्य ज्येष्ठः पुत्रो देवरातः । न्यासो निक्षेपः अयं धनूरूपः । अपरे तु नितरामास्ते देवता यत्रेति व्युत्पत्त्या न्यासो देवपूजास्थानम् तत्पूजार्थं शत्रुवधार्थं च दत्त इत्यर्थः । निक्षेपपरतया व्याख्याने तु निक्षेपस्य शुल्कीकरणमनुचितम् भगवता तद्भङ्गे च निक्षेपारक्षणप्रयुक्तदोषभागिता जनकस्य स्यादिति प्राहुः ॥ ८ ॥

रा० टी०—देवरात इति । हे भगवन् ! निमेर्निमिवंशोद्भवस्य सुकेतोरित्यर्थः राज्ञो यो ज्येष्ठपुत्रः देवरात इति ख्यातो महीपतिः राजा तस्य महात्मनः हस्ते न्यासो निक्षेपभूतः अयं चापः दत्तः देवैः समर्पितः । किंच निमिपुत्रस्य मिथेरेव देवरात इति नामान्तरम् । 'निमेः षष्ठ' इति पाठे तु निमिं परित्यज्य षष्ठ इत्यर्थः अत एव देवरातस्य सप्तमत्वेपि न क्षतिः । यद्वा न्यासः नितरामासमन्ताद्भावेन अस्यन्ते रिपवो येन सः शत्रुनाशक इत्यर्थः अन्यत्पूर्ववत् । युक्तश्चायमर्थः अन्यस्वामिके वस्तुनि स्वातन्त्र्यानुपपत्तेः अत एव तद्धनुर्भञ्जनादिविषयिणी प्रवृत्तिर्नृपतेः संगच्छते ॥ ८ ॥

गो० टी०—निमेः जनककूटस्थस्य न्यासः निक्षेपरूपम् ॥९॥

९ ] ति० टी०—कैर्दत्तस्तत्राह—दक्षेत्यादि । दक्षयज्ञवध इति निमित्तसप्तमी । आयम्य नमनसज्जीकरणपूर्वमाकृष्य । सलीलमिति वधविषयाप्रयासो द्योत्यते ॥ ९ ॥

रा० टी०—दानमेव सकारणं प्रतिपादयन्नाह—दक्षेत्यादिभिः । पूर्वं पूर्वस्मिन् काले दक्षयज्ञवधे दक्षयागविध्वंसं कर्तुं वीर्यवान् रुद्रः रोषात् क्रोधात् सलीलमेव धनुः आयम्य आकृष्य त्रिदशान् देवान् इदमब्रवीत् तुशब्द एवार्थे । व वे इति हिंसार्थकवधधातुप्रकृतिकक्विबन्तप्रकृतिकचतुर्थ्यन्तम् सा च "क्रियार्थोपपद—" इति विहिता । सलीलमित्यनेन श्रमाभावः सूचितः ॥९॥

गो० टी०—उक्तमर्थं विवृणोति—दक्षेत्यादिना । आयम्य आकृष्य ॥ १० ॥

१० ] ति० टी०—भागार्थिनः स्विष्टकृदादियज्ञभागार्थिनो मम भागं यतो नाकल्पयन्त सुरा अतो वराङ्गानि शिरांसि । *अकल्पयतेत्येकवचनमार्षम् । महार्हाणि महापूजायोग्यानि ॥ १० ॥

रा० टी०—तद्वचनमेवाह—यस्मादिति । हे सुराः ! भागार्थिनो मे भागं यस्मात् नाकल्पयत अकल्पयन्त तस्मान्महार्हाण्यतिपूजनीयानि वो युष्माकं वराङ्गानि शिरांसि धनुषा शातयामि ॥ १० ॥

गो० टी०—भागार्थिनः स्विष्टकृदादिभागार्थिनः ममेत्यन्वयः । वराङ्गाणि शिरांसि अत्र तस्मादित्युपस्कार्यम् । शातयामि छिनद्मि ॥ ११ ॥

११ ] ति० टी०—विमनसो दीनाः । भवो रुद्रः ॥ ११ ॥

रा० टी०—तत इति । ततः रुद्रवचनश्रवणानन्तरं हे मुनिपुंगव ! विमनसः सर्वे देवाः देवेशं प्रसादयन्त प्रासादयन्त अतस्तेषां देवानामुपरि भवः प्रीतोऽभवत् ॥ ११ ॥

गो० टी०—विमनसः दीनाः । भवः रुद्रः ॥ १२ ॥

१२ ] ति० टी०—ददौ संहारार्थं गृहीतं धनुरिति शेषः । देवदेवस्य रुद्रस्य । देवैर्लब्धं धनूरत्नम् ॥ १२ ॥

रा० टी०—प्रीतीति । महात्मनां सर्वेषां सुराणां प्रीतियुक्तः तद्विषयकप्रीतिविशिष्टः सः रुद्रः ददौ देवविध्वंसनायोत्थापितं धनुरिति शेषः । अर्धं पृथक् । तदिति । हे विभो ! हे

---

१ उपतिष्ठतीति रा. पाठः । २ षष्ठ इति गो. पाठः । ३ महात्मनेति गो. पाठः । ४ रुद्रस्त्विति गो. रा. पाठः । ५ प्रसादयन्तीति गो. पाठः । ६ स इति गो. रा. पाठः । * सुरा इति संबोधनान्तमग्रे व इत्युक्तत्वादकल्पयतेति च लब्धे मध्यमपुरुषबहुवचनं चेद्बाधकमार्षत्वे साधकं च न पश्यामः ।

न्यासभूतं तदा न्यस्तमस्माकं पूर्वजे[1] विभौ । अथ मे कृषतः क्षेत्रं[2] लाङ्गलादुत्थिता ततः ॥ १३ ॥
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता । भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा[3] ॥ १४ ॥
वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा । भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ॥ १५ ॥
वरयामासुरागत्य[4] राजानो मुनिपुंगव । तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ॥ १६ ॥
वीर्यशुल्केति भगवन्न ददामि सुतामहम्[5] । ततः सर्वे नृपतयः समेत्य मुनिपुंगव ॥ १७ ॥

विश्वामित्र ! महात्मनः देवदेवस्य महादेवस्य न्यासभूतं नित-रामासः शत्रुविद्वंसानुकूलो व्यापारः तं भूतं प्राप्तं शत्रुसंहारक-मित्यर्थः । तदेतद्धनूरत्नं धनुःश्रेष्ठमस्माकं पूर्वके देवराते तदा धनुःप्राप्तेरुत्तरकाले आन्यस्तमपुनर्ग्रहाय स्थापितं तस्मै शिवाज्ञापितदेवैर्दत्तमित्यर्थः । एतदनुरोधेन ' प्रीतश्च भगवानी-शस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः' इत्येकविंशाध्यायपठितकूर्मवचनघटकीभूतददावित्यस्य देवैर्दा-पयामासेत्यर्थः अन्तर्भावितणिजर्थः । ' चापं शम्भोर्दया-दत्तं कन्याशुल्कीकृतं मया' इति पाद्मपद्यघटकीभूतदत्त-मित्यस्य दापितमित्यर्थः ॥ १२ ॥ १३ ॥

गो० टी०—ददौ धनुरिति शेषः । धनूरत्नं धनुःश्रेष्ठं पूर्वके देवराते न्यासभूतं न्यस्तं देवैरिति शेषः ॥ १३ ॥

१३ ] ति० टी०—अस्मत्पूर्वजे देवराते । तैः शिवसहि-तैर्देवैर्न्यासभूतं देवपूजास्थानभूतं न्यस्तं दत्तम् । तदुक्तं कौर्मे एकविंशेऽध्याये—'प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥ ' इति । पाद्मेऽपि च—'चापं शंभोर्दयादत्तं कन्याशुल्कीकृतं मया' इति । यदर्थ-मिह तिष्ठतीत्यस्याप्युत्तरं न्यासभूतमित्यन्तेन जातं पूजास्था-नत्वेन पूजार्थमित्यर्थलाभात् । अथेति । कृषत इति । अग्नि-चयनार्थमिति शेषः । 'षडङ्गेन कृषति' इत्यादिशास्त्रात् । लाङ्ग-लाल्लाङ्गलपद्धतेरुत्थिता कन्येति शेषः ॥ १३ ॥

रा० टी०—धनुरागमनप्रकारं संवर्ण्य तत्स्थापनप्रयोजनं बोधयितुमाह—अथेति । क्षेत्रं कृषतः चयनार्थं क्षेत्रकर्षणं कुर्वतः मे मम लाङ्गलात् लाङ्गलावयवपद्धतिभूसंबन्धादु-त्थिता प्रादुर्भूता कन्येति शेषः । अथानन्तरं क्षेत्रं शोधयता क्षेत्रतृणाद्यपसरणं कुर्वता मम मया लब्धा दर्शनमात्रतः स्वकन्यात्वेन स्वीकृतेत्यर्थः अत एव सीता इति नाम्ना वि-श्रुता प्रख्याता सा आसीदिति शेषः । तथाच शास्त्रम् षड्गवेन कृषति । वृषभेण कृषति ' इत्यादि । 'सीतालाङ्गलपद्धतिः' इति कोशः लाङ्गलशब्देन तदवयवपद्धतिभूसंबन्धलाभस्तु लक्षणया बोध्यः ॥ १४ ॥

गो० टी०—अथेति । अथ वृत्तान्तान्तरारम्भे क्षेत्रं याग-भूमिं मे कृषतः मयि कर्षतीत्यर्थः चयनार्थमिति शेषः । ' लाङ्गलं पवीरवम्' इति 'द्वाभ्यामृषभेण कृषति ' इत्यादिशास्त्रात् लाङ्गलात् लाङ्गलपद्धतेरित्यर्थः । उत्थितेति कन्येति शेषः । सा च क्षेत्रं शोधयता मया लब्धेति हेतोर्नाम्ना सीतेति विश्रुता आसीत् । 'सीता लाङ्गलपद्धतिः' सीतायां जातत्वात्सीतेत्युच्यते ॥ १४ ॥

१४ ] ति० टी०—यतः क्षेत्रं शोधयता सीताया लाङ्गल-पद्धतेर्मया लब्धातो नाम्ना सीतेति प्रसिद्धा भूतलाद-त्थियात् । व्यवर्धत वृद्धिं प्राप्ता । पाद्मेऽपि—'अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः । शुभक्षेत्रे हलोत्खाते तारे चोत्तर-फाल्गुने ॥ अयोनिजा पद्मकरा बालार्कशतसंनिभा । सीता-मुखे समुत्पन्ना बालभावेन सुन्दरी ॥ सीतामुखोद्भवात्सीता इत्यस्यै नाम चाकरोत् । ततोऽभूदौरसी तस्य उर्मिला नाम कन्यका ॥' इति ॥ १४ ॥

रा० टी०—भूतलादिति । भूतलादुत्थिता प्रादुर्भूता सा ममात्मजा तु व्यवर्धत विशेषेण प्राकृतविलक्षणबलसौन्दर्या-दिना वृद्धिं प्राप्नोत् इति हेतोः अयोनिजेयं मे कन्या वीर्य-शुल्का प्राकृतविलक्षणपराक्रममूल्या सती स्थापिता ॥ १५ ॥

गो० टी०—व्यवर्धत मत्कृतपोषणादिति शेषः अतो म-मात्मजा वीर्यं धनुरारोपणं तदेव शुल्कं मूल्यं यस्याः सा वीर्य-शुल्का इति हेतौ वीर्यशुल्कत्वात्स्थापिता न कस्मैचिद्दत्तेति भावः ॥ १५ ॥ १६ ॥ १७ ॥

१५–१६ ] ति० टी०—वीर्यशुल्का धनुःसज्जीकरणादिकर्म वीर्यमेव शुल्कं मूल्यं यस्याः ॥ १५ ॥ १६ ॥

रा० टी०—भूतलादिति । हे मुनिपुंगव ! भूतलादेव उत्थितां प्रादुर्भूतां वर्धमानां ममात्मजां तां सीतां राजानः आगत्य मत्समीपं प्राप्य वरयामासुः । तुशब्द एवार्थे ॥ १६ ॥

रा० टी०—तेषामिति । हे भगवन् ! कन्यां वरयतां सर्वेषां तेषां पृथिवीक्षितामग्रे इयं सुता वीर्यशुल्का इति हेतोः इमां सुतां कन्यामहं न ददामि दास्यामीत्युक्तं मयेति शेषः१७॥

१७ ] ति० टी०—न ददामि न प्रादाम् ॥ १७ ॥

रा० टी०—तत इति । ततः मदुक्तिश्रवणानन्तरं हे मुनि-पुंगव !सर्वे नृपतयः समेत्यैकीभूय मिथिलामभ्युपागम्य प्राप्य वीर्यं कन्यामूल्यभूतपराक्रमं जिज्ञासवः ज्ञातुमिच्छवः आस-न्निति शेषः । तदा तद्वीर्यजिज्ञासुत्वकाले वीर्यं जिज्ञा-समानानां तेषां राज्ञामग्रे शैवं धनुरुपाहृतमानीय स्थापितम् एतेन उत्थाप्य धनुस्थापनमेव कन्याशुल्कमिति ध्वनितम्। तस्य धनुषो ग्रहणे उत्थाप्य धारणे तोलने धनुर्भारविज्ञानाय हस्तेन चालने वा नैव शेकुः समर्था बभूवुः नृपतय इति शेषः । अपिरेवार्थे । द्वयोः संमिलितान्वयः ॥ १८ ॥ १९ ॥

1 पूर्वके विभो इति गो. रा. पाठः । 2 क्षेत्रलाङ्गलादिति रा. पाठः । 3 मयेति गो. ममेति रा. पाठः । 4 आगम्येति गो. पाठः । 5 इमामिति रा. पाठः।

मिथिलामभ्युपागम्य वीर्यं[1] जिज्ञासवस्तदा । तेषां जिज्ञासमानानां शैवं[2] धनुरुपाहृतम् ॥ १८ ॥
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा । तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ॥ १९ ॥
प्रत्याख्याता नृपतयस्तन्निबोध तपोधन । ततः परमकोपेन राजानो मुनिपुंगव ॥ २० ॥
अरुन्धन्मिथिलां[3] सर्वे वीर्यसंदेहमागताः । आत्मानमवधूतं मे[4] विज्ञाय नृपपुंगवाः ॥ २१ ॥
रोषेण महताविष्टाः पीडयन्मिथिलां पुरीम् । ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ॥ २२ ॥
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः । ततो देवगणान्सर्वांस्तपसाहं प्रसादयम् ॥ २३ ॥
ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः । ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ॥ २४ ॥
अवीर्या वीर्यसंदिग्धाः सामात्याः पापकारिणः । तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ॥ २५ ॥
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत । यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ॥
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

१८ ] ति० टी०—वीर्यं धनुषः सारम् । जिज्ञासव इत्यस्याभूवन्निति शेषः । उपाहृतम् दर्शितमानीयेत्यर्थः ॥ १८ ॥

गो० टी०—वीर्यजिज्ञासवः धनुःसारजिज्ञासवः अभवन्निति शेषः ॥ १८ ॥

गो० टी०—तेषामिति । वीर्यं जिज्ञासमानानां तेषां कृते धनुः उपाहृतमानीतं ग्रहणे धारणे तोलने भारपरीक्षार्थं हस्तेन चालने ॥ १९ ॥

१९ ] ति० टी०—ग्रहणं धारणम् तोलनं भारपरीक्षणार्थं हस्तेन चालनम् ॥ १९ ॥

रा० टी०—तेषामिति । हे मुन ! हे तपोधन ! वीर्यवतां पराक्रमगर्ववतां तेषां नृपतीनां वीर्यमल्पं ज्ञात्वा नृपतयः प्रत्याख्याताः भवद्भ्यः कन्यां न दास्यामीत्युक्ताः । तद् मद्वर्णितं सर्वं निबोध जानीहि ॥ २० ॥

गो० टी०—तेषामिति । तन्निबोधेति तदित्यव्ययं तस्मात्कारणाद् अनन्तरं यद्वृत्तं तन्निबोधेत्यर्थः ॥ २० ॥

२० ] ति० टी०—प्रत्याख्याताः कन्या न दत्तेति यावत् । तदित्यव्ययम् ततोऽनन्तरं यद्वृत्तं तन्निबोध जानीहि । तत इत्युत्तरान्वयि ॥ २० ॥

रा० टी०—तत इति । हे मुनिपुंगव ! ततो मत्कर्तृकप्रत्याख्यानश्रवणानन्तरं वीर्यसंदेहं मूल्यभूतस्वस्वपराक्रमातिवृद्धिमागताः तद्विषयकज्ञानं प्राप्ताः सर्वे राजानः परमकोपेन मिथिलामरुन्धन् ॥ २१ ॥

२१ ] ति० टी०—अरुन्धन्नुपरुद्धवन्तः । वीर्यसंदेहं धनुरारोपणलक्षणवीर्यविषयेऽन्येषां संदेहविषयत्वं गताः । अतो बलेनैव कन्यां ग्रहीष्याम इत्यरुन्धन्नित्यर्थः । ते च सर्वे नृपा आत्मानं स्वं स्वमात्मानं मे मयावधूतं वीर्यशुल्ककरणेन तिरस्कृत विज्ञाय ॥ २१ ॥

रा० टी०—आत्मानमिति । हे मुनिपुंगव ! आत्मानमवधूतं धनुर्गौरवेण पराभूतं विज्ञाय महता रोषेण आविष्टा युक्तास्ते नृपतयः मिथिलां पुरीं पीडयन् अपीडयन् । आगमशास्त्रस्यानित्यत्वादड्विरहः । एतेन तैर्युद्धमासीदिति व्यक्तम् ॥ २२ ॥

गो० टी०—वीर्यसंदेहं वीर्यशैथिल्यम् ॥ २१ ॥

गो० टी०—मिथिलावरोधे निमित्तान्तरमाह—आत्मानमिति । ते नृपाः आत्मानं स्वात्मानं मया अवधूतं वीर्यशुल्ककरणेन तिरस्कृतं विज्ञाय पीडयन् अपीडयन् ॥ २२ ॥

२२ ] ति० टी०—रोषेणाविष्टा मिथिलामपीडयन् । अडभाव आर्षः । क्षयं यातानि दुर्गस्थित्या युद्धवशादिति शेषः ॥ २२ ॥

रा० टी०—तत इति । ततः तद्रोधनकालानन्तरं संवत्सरे पूर्णे सति सर्वशः साधनानि निखिलयुद्धसामग्र्यः क्षयं जातानि ततः साधनक्षयात् हे मुनिश्रेष्ठ ! भृशं दुःखितोऽहं तपसा सर्वान् देवगणान् प्रसादयं प्रासादयम् । अड्विरहोऽनित्यत्वात् । ततः प्रसादमाद्धेतोः परमप्रीताः सुराः चतुरङ्गबलं ददुः । द्वयोः संमिलितान्वयः ॥ २३ ॥ २४ ॥

२३ ] ति० टी०—साधनानि दुर्गरक्षणसाधनानि । प्रसादयं प्रसादितवान् । लङ्यडभाव आर्षः ॥ २३ ॥

गो० टी०—साधनानि दुर्गरक्षणसाधनानि ॥ २३ ॥

गो० टी०—प्रसादयं प्रासादयम् ॥ २४ ॥

२४ ] ति० टी०—सुरा ददुः जगन्मातृ रक्षणार्थं स्वकार्यसिद्ध्यर्थं चेदं बलदानम् । दिशो ययुः संमूहं विसृज्येति शेषः ॥ २४ ॥

रा० टी०—तत इति । ततः तद्बलेन हन्यमाना अत एव भग्ना अवीर्या अल्पवीर्यवन्तः वीर्यसंदिग्धाः इदं वीर्यं मायाकृतं सत्यं वेति संदेहवन्तः सामात्याः अमात्यसहिताः पापकारिणः नृपतयो दिशो ययुः ॥ २५ ॥

२५–२६ ] ति० टी०—अवीर्या अल्पवीर्याः । वीर्यसंदि-

---

१ वीर्यजिज्ञासव इति गो. पाठः । २ वीर्यमिति गो. रा. पाठः । ३ न्यरुन्धन्निति गो. पाठः । ४ ते इति गो. रा. पाठः । ५ मुनिपुंगवा इति गो. मुनिपुंगवेति रा. पाठः । ६ कर्मण इति गो. पाठः ।

## सप्तषष्टितमः सर्गः ।

विश्वामित्रप्रेरणया जनकेन सभायां प्रापितं धनुरारोपणमिषेण रामो बभञ्ज विश्वामित्रानुमोदितश्च जनको विवाहमङ्गलसिद्धये दशरथमानेतुं दूतानयोध्यां प्रैषयत् ।

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः । धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥
ततः स राजा जनकः सचिवान्व्यादिदेश ह । धनुरानीयतां दिव्यं गन्धमाल्यानुलेपितम्[1] ॥ २ ॥
जनकेन समादिष्टाः सचिवाः प्राविशन्पुरम्[2] । तद्धनुः पुरतः कृत्वा निर्जग्मुरमितौजसः ॥ ३ ॥
नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् । मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४ ॥
तामादाय तुमञ्जूषामायसीं यत्र तद्धनुः । सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥
इदं धनुर्वरं राजन्पूजितं सर्वराजभिः । मिथिलाधिप राजेन्द्र दर्शनीयं यदीच्छसि ॥ ६ ॥

ग्धाः संदिग्धस्ववीर्याः आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । तदेतदुक्तवृत्तान्तकम् ॥ २५ ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०—तदिति । हे मुनिशार्दूल! हे सुव्रत! तदेतत्परमभास्वरं धनुः रामलक्ष्मणयोरपि दर्शयिष्याम्येव । चशब्द एवार्थे २६

रा० टी०—दर्शने हेतुं वदन्नाह—यदीति । हे मुने ! अस्य धनुष आरोपणं रामः यदि कुर्यात् तर्हि अयोनिजां दाशरथेरेव योग्यां सीतां सुतामहं दाशरथये दद्याम् । दाशरथय एवेति प्रत्यासत्त्या लब्धम् षष्ठीमहिम्ना योग्यामित्यध्याहृतम् संप्रदानत्वाविवक्षया षष्ठी वा ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

गो० टी०—वीर्यसंदिग्धाः संदिग्धवीर्याः पापकर्मणः पापकर्माणः ॥ २५ ॥ २६ ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

१ ] ति० टी०—रामाय इति इत्यसंधिरैच्छिकः । आरोपयिष्यति सीतां ग्रहीष्यति चेति भावः ॥ १ ॥

रा० टी०—जनकस्येति । महामुनिर्विश्वामित्रः जनकस्य वचः श्रुत्वा रामाय धनुर्दर्शय इति पार्थिवं जनकं हर्षतः उवाच । ह इति हर्षद्योतकम् ॥ १ ॥

गो० टी०—अथ धनुर्भङ्गादिवृत्तान्तः सप्तषष्टितमे—जनकस्येत्यादि ॥ १ ॥

२ ] ति० टी०—सचिवान्समीपे विद्यमानान् । अनुलेपितं युक्तम् ॥ २ ॥

रा० टी०—तत इति । ततः विश्वामित्राज्ञापनानन्तरं स राजा जनकः गन्धमाल्यविभूषितं दिव्यं धनुरानीयतामिति सचिवान् हर्षतो व्यादिदेश आज्ञापयामास । ह इति हर्षद्योतकम् ॥ २ ॥

गो० टी०—सामन्तान् कर्मसचिवान् ॥ २ ॥ ३ ॥

३ ] ति० टी०—प्राविशन्पुरम् यज्ञवाटादित्यर्थः ॥ ३ ॥

रा० टी०—जनकेनेति । जनकेन समादिष्टाः आज्ञप्ताः अमितौजसः सचिवाः पुरं प्राविशन् । तद्धनुः पुरतः अग्रतः कृत्वा निर्जग्मुः जनकसमीपं प्रापुः ॥ ३ ॥

४ ] ति० टी०—शतानि पञ्चाशत् पञ्च सहस्राणीत्यर्थः । अनेन धनुषो दुर्वहत्वादि दर्शितम् । आयता दीर्घाः महात्मानो हृष्टपुष्टशरीराः । अष्टचक्रां * रथाङ्गाष्टयुक्ताम् तां दृढत्वेन प्रसिद्धाम् । कथंचन तत्संख्या अपि महता प्रयत्नेनेत्यर्थः ॥ ४ ॥

रा० टी०—आनयनप्रकारं वर्णयन्नाह—नृणामिति । व्यायतानां दीर्घशरीराणां महात्मनां प्रशंसनीयप्रयत्नकानां नृणां पञ्चाशत् शतानि पञ्चसहस्रसंख्याकाः जना इत्यर्थः । अष्टचक्रामष्टसंख्याकचक्रविशिष्टां तां धनुरधिष्ठानभूतां मञ्जूषां ते पुण्यस्थाने कथञ्चन अतिप्रयत्नतः समूहुः 'तत्रैरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित् । अपुमांस्तरणे पुण्ये कथितः शब्दवेदिभिः' ॥ ४ ॥

गो० टी०—नृणामिति । व्यायतानां दीर्घदेहानां नृणां पञ्चाशत् शतानि पञ्चसहस्राणि अष्टचक्राम् अष्टचक्रवच्छकटारोपितामित्यर्थः मञ्जूषां धनुष्पेटिकां समूहुः आचकर्षुः । ते च पञ्चसहस्रसंख्याविशिष्टा अपि कथंचन महता प्रयत्नेन समूहुरिति योजना । अन्ये तु अष्टचक्रामष्टाधश्चक्ररक्षाबन्धवतीमूहुः हस्तैरिति शेष इत्याहुः ॥ ४ ॥

५ ] ति० टी०—आयसीमष्टलोहनिर्मिताम् । सुरोपममिति जनकविशेषणम् ॥ ५ ॥

रा० टी०—तामिति । यत्र यस्यां तन्माहेश्वरं धनुरस्ति तामायसीं लोहनिर्मितां मञ्जूषामादाय ते आज्ञप्ताः नृपतिमन्त्रिणः सुरोपमं जनकमूचुः ॥ ५ ॥

गो० टी०—यत्र मञ्जूषायाम् ॥ ५ ॥

६ ] ति० टी०—यदि दर्शनीयमितीच्छसि तदा दर्शयेत्यर्थः ॥ ६ ॥

१ विलेपितमिति गो. रा. पाठः । २ पुरीमिति गो. रा. पाठः । ३ पार्थिवाज्ञयेति गो. पाठः । ४ त्विति गो. रा. पाठः । ५ यदिच्छसीति गो. पाठः

* अष्टकेयुचितम् ।

तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत। विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ॥ ७ ॥
इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम्। राजभिश्च महावीर्यैरशक्तैः पूरितुं तदा॥ ८ ॥
नैतत्सुरगणाः सर्वे सासुरा न च राक्षसाः। गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः॥ ९ ॥
क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे। आरोपणे समायोगे वेपने तोलने तथा॥ १० ॥
तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुंगव। दर्शयैतन्महाभाग अनयो राजपुत्रयोः॥ ११ ॥
विश्वामित्रः सरामस्तु श्रुत्वा जनकभाषितम्। वत्स राम धनुः पश्य इति राघवमब्रवीत्॥ १२ ॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः। मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत्॥ १३ ॥
इदं धनुर्वरं दिव्यं संस्पृशामीह पाणिना। यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा॥ १४ ॥

---

रा० टी०—तद्वचनमेवाह—इदमिति। हे मिथिलाधिप राजेन्द्र! हे राजन् सर्वानुरागविषयीभूत! यदीच्छसि तर्हि सर्वराजभिः सर्वराजैः पूजितमिदं धनुर्वरमेनं राघवं दर्शय॥६॥

गो० टी०—इदमिति। यद्धनुर्दर्शनीयमिच्छसि तदिदं धनुः आनीतमिति शेषः॥ ६ ॥

७ ] ति० टी०—उभौ रामलक्ष्मणौ तदाश्रयं धनुःप्रदर्शनमुद्दिश्य विश्वामित्रमभाषतेति योजना॥ ७ ॥

रा० टी०—तेषामिति। नृपो जनकः तेषां स्वमन्त्रिणां वचः श्रुत्वा कृताञ्जलिः प्रणयसूचकबद्धयुगलकरः सन् महात्मानं विश्वामित्रं तौ प्रसिद्धौ उभौ युगलौ रामलक्ष्मणौ च अभाषत॥ ७ ॥

गो० टी०—तौ चोभाविति। उद्दिश्येति शेषः॥ ७ ॥

८ ] ति० टी०—पूरितुमशक्तैस्तोलनादिवक्ष्यमाणव्यापाराशक्तै राजभिस्तु जनकैर्देवरातातिरिक्तैः पूजितम्, ऐश्वरत्वादीश्वरवदेव केवलं पूजितमित्यर्थः॥ ८ ॥

रा० टी०—तद्वचनमेवाह—इदमिति। हे ब्रह्मन्! जनकैरभिपूजितं प्रतिदिनमर्चितमिदं धनुर्वरं महावीर्यैः पूरितुं सज्जीकर्तुं धनुश्चालनादियोग्यधैर्यं वर्धयितुं वाऽशक्तैः राजभिस्तथा पूजितमेवासीत्। चशब्द एवार्थे॥ ८ ॥

गो० टी०—राजभिः पूर्वं सीतार्थिभिः पूजितं अहो महासारमैश्वरं धनुरिति श्लाघितमित्यर्थः॥ ८ ॥

९ ] ति० टी०—नैतदिति। एतद्धनुः सुरादयो न सज्जीकर्तुं शक्ता इति शेषः॥ ९ ॥

रा० टी०—इदानीं कैमुतिकन्यायेन सर्वेषां धनुर्ग्रहणाय श...त्वं वर्णयन्नाह—नेत्यादिश्लोकद्वयेन। एतद्धनुः सुरादयो न प्रपूरयितुं शक्ताः इति शेषः। अतोऽस्य धनुषः प्रपूरणे नम्रतां प्रापणे आरोपणे सज्जीकरणे समायोगे शरमौर्वीसंयोजने वा वेपने प्रत्यञ्चाप्रकम्पने वा तोलने धनुर्भारविज्ञानाय हस्ताभ्यां चालने वा मानुषाणां क्व गतिः। चापिशब्दौ वार्थौ॥ ९ ॥ १० ॥

गो० टी०—नैतदित्यादि। एतद्धनुः सुरगणादयः प्रपूरणादिकं कर्तुं न शक्ता इत्यर्थसिद्धम्॥ ९ ॥

१० ] ति० टी०—गतिः शक्तिः सामर्थ्यम्। चस्त्वर्थे। प्रपूरणमाकर्णाकर्षणम्। आरोपणं सज्यीकरणम्। समायोगः शरेण योजनम्। वेपनं ज्यास्फालनम्। तोलनमुक्तम्॥ १० ॥

गो० टी०—क्वेति। प्रपूरणे नम्रीकरणे आरोपणे मौर्व्याः संयोजने समायोगे शरेण योजने वेपने मौर्व्याकर्षणे तोलने भारपरीक्षार्थं कम्पने च मानुषाणां मध्ये क्व पुरुषे गतिः शक्तिः॥ १० ॥

११-१२ ] ति० टी०—आनीतमथापि त्वदाज्ञयेत्यादिः॥ ११ ॥ १२ ॥

रा० टी०—तदिति। हे मुनिपुंगव! हे एतन्महाभाग! एतेषामत्रत्यानां महान्भागो भाग्यं यस्मात्तत्संबोधनम्। धनुषां श्रेष्ठमानीतमस्मदीयैरत्र प्रापितं तदेतत् धनुः अनयो राजपुत्रयोर्दर्शय राजपुत्रयोरित्यत्र दृशेश्चेति कर्मत्वाप्रवृत्तिस्तु संबन्धसामान्यविवक्षया। किंच राजपुत्रयोः राजपुत्रदर्शनार्थं यदानीतं तदेतत् दर्शय॥ ११ ॥

रा० टी०—विश्वामित्र इति। धर्मात्मा स विश्वामित्रः जनकभाषितं श्रुत्वा हे वत्स हे राम! त्वं धनुः पश्येति राघवमब्रवीत्॥ १२ ॥

गो० टी०—तथाप्यनयोर्दर्शयेत्याह—तदेतदिति॥११॥१२॥

१३ ] ति० टी०—यत्र धनुस्तिष्ठति तां मञ्जूषामपावृत्यापगतावरणां कृत्वा॥ १३ ॥

रा० टी०—महर्षीति। महर्षिवचनात् विश्वामित्राज्ञातः रामः यत्र यस्यां तद्धनुस्तिष्ठति तां मञ्जूषामपावृत्य उद्घाट्य धनुर्दृष्ट्वा अथाब्रवीत् मङ्गलवचनमकथयत्॥ १३ ॥

गो० टी०—अपावृत्य अपगतावरणं कृत्वा॥ १३ ॥ १४॥

१४ ] ति० टी०—स्पृशामीति दर्शनौत्सुक्यस्य निवृत्तेः। वा चार्थे। यत्नवान्भविष्यामि किमित्यब्रवीत् अपृच्छदित्यर्थः॥ १४ ॥

---

१ तौ चोभाविति गो.रा.पाठः। २ पुरेति गो. तथेति रा.पाठः। ३ नासुरा इति गो. रा. पाठः। ४ अपि वेति गो. रा. पाठः। ५ स धर्मात्मेति गो. रा. पाठः। ६ महर्षिवचनादिति रा. पाठः।

बाढमित्यब्रवीद्राजा मुनिश्च समभाषत । लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥ १५ ॥
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः । आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥ १६ ॥
आरोपयित्वा मौर्वीं च पूरयामास तद्धनुः । तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७ ॥
तस्य शब्दो महानासीन्निर्घातसमनिस्वनः । भूमिकम्पश्च सुमहान्पर्वतस्येव दीर्यतः ॥ १८ ॥
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः । वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९ ॥
प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः । उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥ २० ॥
भगवन्दृष्टवीर्यो मे रामो दशरथात्मजः । अत्यद्भुतमचिन्त्यं च अतर्कितमिदं मया ॥ २१ ॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता । सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२ ॥

रा० टी०–तद्वचनमेवाह–इदमिति । दिव्यमिदं धनुर्वरं पाणिना इहास्मिन् समये संस्पृशामि किम् । ननु संस्पर्शेन किमित्यत आह–स्पर्शानन्तरं तोलने पूरणे च यत्नवान् भविष्यामि । अपिश्चार्थे वाशब्दः प्रश्ने ॥ १४ ॥

१५ ] ति० टी०–तं राजा मुनिश्च बाढमित्येव चाब्रवीत् समभाषतेति प्रत्येकमन्वयः । मध्ये मध्यप्रदेशे लीलयानायासेन जग्राह पादाङ्गुलेनोन्नतं कृत्वा करेण जग्राह। तदुक्तं पाद्मे–' रामोऽपि तद्धनुःकोटिं स्पृष्ट्वा पादाङ्गुलात्ततः । उन्नतं चापमारोप्य बभञ्जे मोहिता जनाः ॥ ' इति । अतिभारवद्वस्तुनः पादाङ्गुल्या मध्यभागपर्यन्तमुन्नमनं मध्ये गृहीत्वोद्धारश्च महाबलसाध्य इति महाबलवत्त्वमनेन सूचितम् ॥१५॥

रा० टी०–बाढमिति । राजा जनको बाढमिति अब्रवीत् मुनिश्च बाढं समभाषत मुनेर्वचनात्स रामो धनुर्मध्ये लीलया जग्राह ॥ १५ ॥

गो० टी०–बाढमित्यादि ॥ १५ ॥

गो० टी०–लीलया अप्रयत्नेन ॥ १६ ॥

१६ ] ति० टी०–पश्यताम् अनादरे षष्ठी ॥ १६ ॥

रा० टी०–पश्यतामिति । बहूनां नृसहस्राणां पश्यतां सतां धर्मात्मा स रघुनन्दनः तद्धनुः सलीलमेवारोपयत् । इवशब्द एवार्थे ॥ १६ ॥

१७ ] ति० टी०–पूरणमाकर्षणम् ॥ १७ ॥

रा० टी०–आरोपयित्वेति । महायशाः नरश्रेष्ठो रामः मौर्वीमारोपयित्वा आरोप्य तद्धनुः पूरयामास तद्धनुर्मध्ये बभञ्ज च । विनापि चं समुच्चयः ॥ १७ ॥

गो० टी०–पूरयामास आकर्णमाकृष्टवान् । ननु उक्तरीत्या महोन्नतस्य धनुषः कथं बालेनारोपणं संभवति अग्रस्पर्शाभावादिति चेत् उच्यते आश्चर्यशक्तिकस्य रामस्य करस्पर्शादेवावनतं धनुः ॥ १७ ॥

१८ ] ति० टी०–निर्घातोऽशनिध्वनिस्तन्निःस्वनसमः शब्द आसीत् ! दीर्यतः पर्वतस्य समीपदेशे यथा भूमिकम्पस्तथा भूकम्प आसीत् ॥ १८ ॥

रा० टी०–तस्येति । दीर्यतः विदीर्णतां प्राप्नुवतः पर्वतस्य इव तस्य धनुषः निर्घातसमनिस्वनः अशनिध्वनिसदृशप्रतिध्वनिकारकः महान् शब्द आसीत् अत एव सुमहान् भूमिकम्पश्चासीत् ॥ १८ ॥

गो० टी०–निर्घातेति तल्लक्षणमुक्तं *ज्योतिषे 'वायुनाभिहतो वायुर्गगनात्पतति क्षितौ । यदा दीप्तः खगरुतः स निर्घातोऽतिदोषकृत् ' इति पर्वतस्येव दीर्यतः पर्वते दीर्यति भिद्यति यथा भूमिकम्पः तथा भूमिकम्पश्चासीदित्यर्थः ॥ १८ ॥ १९ ॥

१९ ] ति० टी०–मुनिवरो विश्वामित्रः । राजा जनकः ॥ १९ ॥

रा० टी०–निपेतुरिति । अत एव मुनिवरादीन् वर्जयित्वा तेन शब्देन मोहिताः सर्वे नरा निपेतुः ॥ १९ ॥

२० ] ति० टी०–विगतसाध्वसः । रामेण धनुरनारोपणे कन्याऽविवाहितैव स्थास्यतीति या भीः स्थिता सा गतेत्यर्थः ॥ २० ॥

रा० टी०–प्रत्याश्वस्त इति । तस्मिन् जने प्रत्याश्वस्ते सति विगतसाध्वसः विगतं निवृत्तं साध्वसं धनुर्भङ्गाभावमूलकविवाहाभावजनितभयं यस्य स प्राञ्जलिर्वाक्यज्ञो राजा मुनिपुंगवं विश्वामित्रं वाक्यमुवाच ॥ २० ॥

गो० टी०–विगतसाध्वस इत्यनेन रामजामातृकताप्रापकं धनुरारोपणमपि न भवेदिति पूर्वं भीतोऽभूदिति गम्यते ॥२०॥

२१ ] ति० टी०–अतर्कितमिदं मया एतदारोपणमित्यर्थः ॥ २१ ॥

रा० टी०–तद्वाक्यमेवाह–भगवन्निति । हे भगवन् ! दशरथात्मजो रामो मे दृष्टवीर्यः अवलोकितपराक्रमः । वीर्यमेवाह–अत्यद्भुतं प्राकृतविलक्षणमत एव अचिन्त्यं चिन्तयितुमशक्यमत एव मया अतर्कितं तर्काविषयीभूतमिदं वीर्यमस्तीति शेषः ॥ २१ ॥

गो० टी०–अत्यद्भुतमिति । अचिन्त्यमन्यत्रादर्शनात् न तर्कितं मनुष्येष्वसंभावितत्वात् अत्यद्भुतं बालेन कृतत्वात् इदं ईशधनुरारोपणम् ॥ २१ ॥

२२ ] ति० टी०–आहरिष्यति संपादयिष्यति ॥ २२ ॥

रा० टी०–स्वस्यातीव भाग्यवत्तां बोधयन्नाह–जनका-

१ एतदर्धं गो. नास्ति । *ज्यौतिष इति भाति ।

मम सत्या प्रतिज्ञा सा वीर्यशुल्केति कौशिक । सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३ ॥
भवतोऽनुमते ब्रह्मन्शीघ्रं गच्छन्तु मन्त्रिणः । मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४ ॥
राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम । प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५ ॥
मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै । प्रीतियुक्तं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥
कौशिकस्तु तथेत्याह राजा चाभाष्य मन्त्रिणः । अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥
यथावृत्तं समाख्यातुमानेतुं च नृपं तथा ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ।

जनकदूतास्त्वयोध्यां प्रविश्य रामकृतधनुर्भञ्जनादि निवेद्य विवाहोत्सवार्थं जनकसंदेशं दशरथाय न्यवेदयन् । दशरथोऽपि वसिष्ठादिभिः संमन्त्र्य सनिकृष्टाह एव प्रस्थानं निश्चिकाय ।

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः । त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ॥ १ ॥

नामिति । मे सुता सीता दशरथात्मजं रामं भर्तारमासाद्य प्राप्य जनकानां कुले कीर्तिमाहरिष्यति ॥ २२ ॥

गो० टी०—जनकानां कुले किर्तिमाहरिष्यति मे सुता । सीता भर्तारमासाद्य रामं दशरथात्मजम् । जनकानां 'अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन । मिथिलायां प्रदीप्तायां न मे किंचित्प्रदह्यते' इति प्रोक्तनिरतिशयकीर्तिमतामपि कुले 'कुलं तारयते तात सप्त सप्त च सप्त च ' इतिवत् कीर्तिमित्येकवचनेनैकरूपत्वं व्यज्यते । आहरिष्यति सद्यः प्रापयिष्यति सिद्धस्यादानं ह्याहरणं सुता सुतश्चेत्स्वार्जितामेव कीर्तिं प्रापयिष्यति मे सुता स्वसंबन्धप्रयुक्तातिशयः सीताजन्मप्रयुक्तातिशयः भर्तारमासाद्य भर्तृसंबन्धकृतातिशयः भर्तारं भरणदक्षं 'वित्तमिच्छन्ति मातरः' इत्युक्तधनवन्तमित्यर्थः । रामम् 'रूपमिच्छति कन्यका' इत्युक्तरूपवन्तं दशरथात्मजम् 'बान्धवाः कुलमिच्छन्ति' इत्युक्तरीत्या बन्धुकाङ्क्षितम् एवं सर्वसंमतवरप्राप्त्या किर्तिमाहरिष्यतीति भावः ॥२२॥

२३ ] ति० टी०—मम प्रतिज्ञा सत्या जातेति शेषः । प्राणैः प्राणेभ्यः ॥ २३ ॥

रा० टी०—ममेति । हे कौशिक ! मम प्राणैः प्राणेभ्यो बहुमता अतीप्सिता मे सुता सीता वीर्यशुल्केति मम प्रतिज्ञा सत्या यथा स्यात्तथा भवतोऽनुमते सति शीघ्रं देया अतो हे ब्रह्मन् हे कौशिक ! त्वरिता वेगवन्तो मम मन्त्रिणोऽयोध्यां रथैः शीघ्रं गच्छन्तु । श्लोकद्वयं संमिलितान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—सत्या जातेति शेषः । सीता वीर्यशुल्केति प्रतिज्ञा सत्या जाता प्राणैः प्राणेभ्यः बहुमता सीता देयेति सीतापदमुभयत्रान्वेति ॥ २३ ॥

२४ ] ति० टी०—मम मन्त्रिण इत्यन्वयः । अनुमते अनुमतकृत्यसाधननिमित्तमित्यर्थः । भवतोऽनुमत्येति वार्थः ॥२४॥

गो० टी०—भवतोऽनुमते भवदनुमत्या गच्छन्त्वित्यर्थः॥२४॥

२५ ] ति० टी०—प्रश्रितैर्विनयसहितैः । सर्वशश्च सर्वमप्यत्यं वृत्तान्तमित्यर्थः ॥ २५ ॥

रा० टी०—मन्त्रिप्रेषणप्रयोजनमाह—राजानमिति । सर्वशो मन्त्रिणः प्रश्रितैर्नम्रैर्वाक्यैर्वीर्यशुल्कायाः मत्कन्यायाः प्रदानं विधिना दानं कथयन्तु अत एव राजानं राजराजं दशरथं मम [1]पुरमानयन्तु । चो हेतौ ॥ २५ ॥

गो० टी०—प्रश्रितैः विनयान्वितैः सर्वशः सर्वमत्रत्यवृत्तान्तमित्यर्थः ॥ २५ ॥२६ ॥

२६ ] ति० टी०—गुप्तौ रक्षितौ । प्रीतियुक्तमिति क्रियाविशेषणम् ॥ २६ ॥

रा० टी०—मुनीति । काकुत्स्थौ रामलक्ष्मणौ मुनिगुप्तौ विश्वामित्ररक्षितौ इत्यपि नृपाय सुशीघ्रगा दूताः कथयन्तु अतोऽपि प्रीतियुक्तं राजानमानयन्तु । चकार इतीत्यर्थे वैशब्दः अप्यर्थे तुशब्दः अतोऽपीत्यर्थे ॥ २६ ॥

२७ ] ति० टी०—आभाष्याहूय । कृतशासनान्दत्तकल्याणसंदेशपत्रान् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०—कौशिक इति । कौशिकस्तथेत्याह अत एव धर्मात्मा राजा जनकः यथा वृत्तं तथैव समाख्यातुं नृपं दशरथमानेतुं च कृतशासनान्मन्त्रिणः आभाष्य संबोध्य अयोध्यां प्रेषयामास । तुशब्दो हेत्वर्थे एकश्च एवार्थे । सार्धश्लोक एकान्वयी ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

गो० टी०—आभाष्य आहूय कृतशासनान् दत्तकल्याणसंदेशपत्रिकानित्यर्थः । नृपं दशरथम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

१ ] ति० टी०—त्रिरात्रं रात्रित्रयमुषिता मार्गे कृतवासाः

[1] चेति गो. रा. पाठः ।

ते राजवचनाद्गत्वा राजवेश्म प्रवेशिताः । ददृशुर्देवसंकाशं वृद्धं दशरथं नृपम् ॥ २ ॥
बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः । राजानं प्रश्रितं वाक्यमब्रुवन्मधुराक्षरम् ॥ ३ ॥
मैथिलो जनको राजा साग्निहोत्रपुरस्कृतः । मुहुर्मुहुर्मधुरया स्नेहसंरक्तया गिरा ॥ ४ ॥
कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् । जनकस्त्वां महाराजा पृच्छते सपुरःसरम् ॥ ५ ॥
पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः । कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ॥ ६ ॥
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा । राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ७ ॥
सेयं मम सुता राजन्विश्वामित्रपुरस्कृतैः । यदृच्छयागतैर्राजन्निर्जिता तव पुत्रकैः ॥ ८ ॥

तावद्वासकरणे निमित्तं क्लान्तवाहनत्वम् । ते दूतकर्मणि नियुक्ता मन्त्रिणः तदनन्तरं तेऽयोध्यायां प्राविशन् ॥ १ ॥

रा० टी०—जनकेनेति । जनकेन समादिष्टाः अते निरन्तरगमनविशिष्टाधिकरणीभूते मार्गे त्रिरात्रमुषिताः क्लान्तवाहनाः ते दूताः अयोध्यां पुरीं प्राविशन् । अत इत्यत्र निरन्तरगमनार्थकाद्धातोरधिकरणे कः । अत एव ते इत्यनेन न पौनरुक्त्यम् ॥ १ ॥

गो० टी०—अथ जानकीविवाहाय दशरथाह्वानमष्टषष्टितमे—जनकेनेत्यादि । त्रिरात्रमिति । तिस्रो रात्रयस्त्रिरात्रं संख्यादित्वात् राज्यन्तादच् समासान्तः अत्यन्तसंयोगे द्वितीया ॥१॥

२ ] ति० टी०—राजवचनाज्जनकोऽस्मानिह प्रेषितवानिति स्वराजनामसंकीर्तनात् राजवेश्म दशरथवेश्म प्रवेशिताः तदीयैर्द्वारपालैरिति शेषः ॥ २ ॥

रा० टी०—ते इति । राजवचनात् राज्ञः जनकमन्त्रिणो भवत्संदर्शनार्थं समागता इति स्वदूतप्रार्थितदशरथस्य वचनात् शीघ्रं तानानयेत्याज्ञातः राजवेश्म प्रवेशिताः प्रतीहारैर्महाराजाधिराजदशरथगृहं प्रापिताः ते जनकदूताः देवसंकाशं देवसदृशं वृद्धं विलक्षणैश्वर्यवत्त्वेन परमवृद्धिं प्राप्तं दशरथं नृपं ददृशुः॥२॥

गो० टी०—राजवचनात् जनकोऽस्मानिह प्रेषितवानिति स्वराजसंकीर्तनात् ॥ २ ॥

३ ] ति० टी०—विगतसाध्वसाः महाराजदूतत्वेन तद्भृत्यवत्तत्संनिधौ भयरहिताः ॥ ३ ॥

रा० टी०—बद्धाञ्जलीति । बद्धाञ्जलिपुटाः विगतसाध्वसाः अतिहर्षप्रापकजनकसंदेशस्य वक्तव्यत्वेन विगतभयाः सर्वे दूताः प्रश्रितं नम्रतासूचकं मधुराक्षरं मनोहराक्षरविशिष्टं वाक्यं जनकसंदेशं राजानं दशरथमब्रुवन् ॥ ३ ॥

गो० टी०—विगतसाध्वसाः दशरथसौजन्येन विज्ञापने निर्भयाः ॥ ३ ॥

४ ] ति० टी०—साग्निहोत्रपुरस्कृतः पुरस्कृताग्निहोत्रसहितः आहिताग्न्यादिः । पुरस्कृता मन्त्र्यादयः अग्निहोत्रपदेन तत्साधनऋत्विजस्तैः सहित इत्यर्थ इत्यन्ये ॥ ४ ॥

५ ] ति० टी०—कुशलं क्षेमम् । अव्ययमनपायम् । हे महाराज ! आपृच्छते 'आङि नु पृच्छयोः' इत्यात्मनेपदम् । पुरःसरा भृत्यास्तत्सहितम् ॥ ५ ॥

रा० टी०—तद्वचनमेवाह—मैथिल इति । हे महाराज ! साग्निहोत्रपुरस्कृतः पुरस्कृतो योऽग्निहोत्रस्तत्सहितः एव मैथिलः मिथिलोद्भवः जनकः जनानां कं सुखं यस्मात्स प्रजासुखदातेत्यर्थः । जनकः जनकाभिधो राजा सोपाध्यायपुरोहितमुपाध्यायपुरोहितसहितं सपुरःसरं पुरःसरा भृत्यास्तत्सहितं त्वां स्नेहसंसक्तया अतिस्नेहसंमिलितयैव गिरा अव्ययं ध्वंसरहितं कुशलं मुहुर्मुहुरेव आपृच्छते अस्मद्वारेति शेषः । चकारद्वावेवार्थौ । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—मैथिल इत्यादि श्लोकत्रयमेकान्वयम् । मैथिलः मिथिलेश्वरः पुरस्कृताग्निहोत्रसहितः साग्निहोत्रपुरस्कृतः आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । पुरः सरन्तीति पुरःसराः भृत्याः तत्सहितम् एवंभूतं त्वां कुशलं क्षेममव्ययमनपायं योगमिति यावत् आपृच्छते मद्वचनादिति शेषः “ आङि नुपृच्छयोरुपसंख्यानम् ”इति आत्मनेपदम् । अत्र द्वितीयजनकशब्दोऽपि प्रकृष्टजनकशब्दाविस्मरणार्थः ॥ ४ ॥ ५ ॥

६ ] ति० टी०—अनुमतेऽनुमतकृत्यसाधननिमित्तम् ॥ ६ ॥

रा० टी०—पृष्ट्वेति । अव्यग्रः व्यग्रतारहितः वैदेहः विदेहकुलोद्भवः मिथिलाधिपो जनकः कौशिकानुमते विश्वामित्रसंमतौ सत्यां भवन्तं कुशलं पृष्ट्वा इदं वाक्यमब्रवीत् ॥ ६ ॥

गो० टी०—कौशिकानुमते कौशिकानुमत्या ॥ ६ ॥

७ ] ति० टी०—वीर्यशुल्केति प्रतिज्ञा पूर्वं युष्माकं विदितेत्यन्वयः । विमुखीकृता इत्यपि विदितम् ॥ ७ ॥

रा० टी०—तद्वाक्यमेवाह—पूर्वमित्यादिषड्भिः । ममात्मजा वीर्यशुल्का समाधिकरहितपराक्रममूल्या इति प्रतिज्ञा मत्कर्तृकनियोगः पूर्वं विदिता अत एव कृतामर्षाः निर्वीर्याः अल्पपराक्रमाः राजानो विमुखीकृताः तत्तदगम्यधनुर्ग्रहणादिनैव मत्कन्या लभ्येति मत्प्रतिज्ञया दूरीकृता इत्यर्थः । आसन्निति शेषः । चशब्द इत्यर्थे ॥ ७ ॥

गो० टी०—पूर्वमिति । वीर्यशुल्केति मम प्रतिज्ञा भवद्भिर्विदिता राजानश्च निर्वीर्याः धनुरारोपणासमर्थाः विमुखीकृता इत्यपि विदितमित्यन्वयः ॥ ७ ॥

८ ] ति० टी०—तव पुत्रकैरिति तव पुत्रेण रामेणेत्यर्थः । कप्रत्ययेनाल्पार्थकेन बाल्यद्योतनम् । जामातृबुद्ध्या महाबलत्वेनेश्वरबुद्ध्या च पूज्यत्वेन बहुवचनप्रयोगः ॥ ८ ॥

१ दूता इति गो. रा. पाठः । २ प्रयता इति गो. पाठः । ३ पुरस्कृतमिति गो. पाठः । ४ अव्ययम् इति रा. पाठः । ५ पुरःसरैरिति गो. रा. पाठः । ६ वीरैरिति गो. पाठः ।

तच्च रत्नं धनुर्दिव्यं मध्ये भग्नं महात्मना । रामेण हि महाबाहो महत्यां जनसंसदि ॥ ९ ॥
अस्मै देया मया सीता वीर्यशुल्का महात्मने । प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ १० ॥
सोपाध्यायो महाराज पुरोहितपुरस्कृतः । शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥ ११ ॥
प्रतिज्ञां मम राजेन्द्र निर्वर्तयितुमर्हसि । पुत्रयोरुभयोरेव प्रीतिं त्वमुपलप्स्यसे ॥ १२ ॥
एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् । विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १३ ॥
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः । वसिष्ठं वामदेवं च मन्त्रिणश्चैवमब्रवीत् ॥ १४ ॥
गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः । लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १५ ॥
दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना । संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥ १६ ॥
यदि वो रोचते वृत्तं जनकस्य महात्मनः । पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥ १७ ॥

रा० टी०—सेति । हे राजन् मदनुरागोत्पादक ! हे राजन् अतिप्रकाशविशिष्ट ! विश्वामित्रपुरःसरैः विश्वामित्रः पुरःसरः अग्रगन्ता येषां तैः यदृच्छया अस्मत्प्रारब्धवशेन आगतैस्तव पुत्रकैः अत्यनुकम्पितत्वत्सुतैः सा समाधिकरहितपराक्रममूल्या इयं मम सुता निर्जिता । अत्र पुत्रकैरिति बहुवचनेन रामलक्ष्मणौ परमपूज्याविति जनकराजनिश्चयः सूचितः ॥ ८ ॥

गो० टी०—सेयमिति । सेयमुक्तरीत्या सर्वैः प्रार्थनीया मम सुता त्वया सह संबन्धार्हस्य मे पुत्री । स्वपुरे तदागमनप्रसक्तिं दर्शयति—विश्वामित्रपुरःसरैरिति । यदृच्छया मद्भागधेयात् पुत्रकैः पूजायां बहुवचनं जामातृत्वाध्यवसायान्महाराजकुमारत्वाद्वा पूजा अल्पार्थेन कप्रत्ययेन बाल्यं द्योतितम् ॥ ८ ॥

९ ] ति० टी०—तच्च पूर्वं दक्षाध्वरध्वंससमये रुद्रेण यद्बकाच्छकादिपुरःसरसकलसुरजयः कृतस्तच्चेत्यर्थः । रत्नं धनुरुत्तमं धनुः ॥ ९ ॥

रा० टी०—निर्जयप्रकारमाह—तदिति । हे महाबाहो ! महात्मना रामेण तत् अन्यग्रहणाद्यशक्यं रत्नमुत्तमं दिव्यं धनुर्महत्यां जनसंसदि जनसभायामेव मध्ये भग्नम् । हिशब्द एवार्थे ॥ ९ ॥

गो० टी०—कथं निर्जितेत्यत्राह—तच्चेति । तच्च ऐश्वरमपि नेदमैन्द्रजालिकमित्याह—महात्मनेति । नेयं पक्षपातोक्तिरित्याह—महत्यामिति ॥ ९ ॥

१०–११ ] ति० टी०—प्रतिज्ञां वीर्यशुल्कतया सीतादानप्रतिज्ञां तर्तुं पूरयितुम् ॥ १० ॥ ११ ॥

रा० टी०—अस्मा इति । महात्मने अस्मै रामाय वीर्यशुल्का सीता देया अवश्यं दातुं योग्या । तत्र हेतुः प्रतिज्ञां स्वकृतनियोगमहं तर्तुमिच्छामि तस्माद्धेतोः अनुज्ञातुं त्वमर्हसि आगमशास्त्रस्यानित्यत्वादिडभावः ॥ १० ॥

रा० टी०—सेति । हे महाराज ! सोपाध्यायः उपाध्यायसहितः पुरोहितपुरस्कृतः पुरस्कृतपुरोहितस्त्वं शीघ्रं राघवौ द्रष्टुमर्हसि अतः शीघ्रमागच्छ ते भद्रम् । शीघ्रमित्युभयान्वयि ॥ ११ ॥

गो० टी०—प्रतिज्ञां प्रतिज्ञातं सीताप्रदानम् ॥ १०–११ ॥

१२ ] ति० टी०—उभयोरेवोभयोरपि पुत्रयोः न केवलं रामस्यैवेत्यर्थः । प्रीतिं विवाहजाम् एतेन लक्ष्मणायोर्मिलाप्रदानं सूचितम् ॥ १२ ॥

रा० टी०—प्रतिज्ञामिति । हे राजेन्द्र ! मम प्रतिज्ञां निर्वर्तयितुं संपालयितुं त्वमर्हसि तेनोभयोः पुत्रयोः प्रीतिं त्वमुपलप्स्यसे प्राप्स्यसि । एवो हेत्वर्थे ॥ १२ ॥

गो० टी०—प्रीतिं त्वद्दर्शनप्रीतिं सीताप्रदानप्रीतिं वा । पुत्रयोः पुत्री च पुत्रश्च तयोः एकशेषः । प्रीतिं तद्विषयप्रीतिं तदुभयकल्याणदर्शनप्रीतिमिति यावत् । मत्पुत्र्यां त्वत्पुत्रे चेत्यर्थः । यद्वा स्नुषा च पुत्रीत्येव गृह्यते । यद्वा लक्ष्मणायोर्मिलाप्रदानं सिद्धं कृत्वोच्यते—उभयोरिति ॥ १२ ॥ १३ ॥ १४ ॥

१३ ] ति० टी०—अभ्यनुज्ञातोऽभ्यनुज्ञातकन्याप्रदानकृत्यः

रा० टी०—एवमिति । विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः विदेहाधिपतिर्जनक एवं मधुरं वाक्यमब्रवीत् ॥ १३ ॥

१४ ] ति० टी०—एवं वक्ष्यमाणम् ॥ १४ ॥

रा० टी०—दूतेति । तत् दूतवाक्यं श्रुत्वा परमहर्षितः स राजा दशरथः वशिष्ठादीनब्रवीत् ॥ १४ ॥

१५–१६ ] ति० टी०—विदेहेषु विदेहानां निवासभूते जनपदे ॥ १५–१६ ॥

रा० टी०—तद्वचनमेवाह—गुप्त इति । कुशिकपुत्रेण गुप्तः रक्षितः कौशल्यानन्दवर्धनः असौ रामः भ्रात्रा लक्ष्मणेन सह विदेहेषु वसति ॥ १५ ॥

रा० टी०—दृष्टेति । महात्मना जनकेन दृष्टवीर्यः काकुत्स्थो रामोऽस्ति अतो राघवे एव सुतायाः संप्रदानं कर्तुमिच्छति । एकस्तुशब्दो हेतौ अपर एवार्थे ॥ १६ ॥

गो० टी०—गुप्त इत्यादि । विदेहेषु विदेहानां निवासभूते देशे "जनपदे लुप्" इति लुप् । असाविति बुद्धिसंनिकर्षेणोच्यते ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—यदि वो रोचते वृत्तम् यौनसंबन्धयोग्यमित्यर्थः । पर्ययोऽतिक्रमः ॥ १७ ॥

---

१ राजन्निति गो. पाठः । २ महाराज इति गो. पाठः । ३ प्रीतिं चेति गो. पाठः । ४ मन्त्रिणोऽन्यांश्च सोऽब्रवीदिति गो. रा. पाठः । ५ कालविपर्यय इति रा. पाठः ।

मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः । सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति च मन्त्रिणः ॥ १८ ॥
मन्त्रिणस्तु नरेन्द्रस्य रात्रिं परमसत्कृताः । ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ।

सपरिग्रहो दशरथो मिथिलांप्राप जनकस्तं प्रत्युद्गम्याभ्यपूजयत्तयोः संलापाः प्रादुरासन्सर्वेऽपि, स्वशिबिरेषु सुखमूषुः ।

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः । राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् । व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥
चतुरङ्गबलं चापि शीघ्रं निर्यातु सर्वशः । ममाज्ञासमकालं च यानं युग्यमनुत्तमम् ॥ ३ ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । मार्कण्डेयस्तु दीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४ ॥

**रा० टी०—यदीति** । महात्मनो जनकस्य वृत्तं यदि वो युष्मभ्यं रोचते तर्हि पुरीं मिथिलां वयं शीघ्रं गच्छामहे वृत्तान्तज्ञापनार्थमिति शेषः । तत्र हेतुः कालविपर्ययो विवाहसमयविलम्बो मा भूत् ॥ १७ ॥

**गो० टी०—यदि वो रोचत इति** । यौनसंबन्धयोग्यमिति शेषः । पर्ययः अतिक्रमः ॥ १७ ॥

१८ ] **ति० टी०—**श्वो यात्रेति मन्त्रिणोऽब्रवीदित्यन्वयः । तदर्थं उद्यमः क्रियतामिति शेषः ॥ १८ ॥

**रा० टी०—मन्त्रिण इति** । सर्वैर्महर्षिभिः सह मन्त्रिणो बाढमतिशोभनमेतदित्याहुः । अत एव सुप्रीतो राजा दशरथः श्व इतोऽव्यवहितागामिदिवसे एव यात्रेति मन्त्रिणः अब्रवीत् । एकश्चशब्दो हेतौ द्वितीय एवार्थे ॥ १८ ॥

**गो० टी०—मन्त्रिण इति** । श्वो यात्रेत्यब्रवीदिति तदर्थंसुयुद्ध्वमिति भावः ॥ १८ ॥

१९ ] **ति० टी०—**मन्त्रिणो जनकमन्त्रिणः । गुणैः सत्कारातिशयैः । 'नरेन्द्रश्च' इति पाठे स च मुदित उवासेति विपरिणामः । 'नरेन्द्रस्य' इति पाठे जनकस्येत्यर्थः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

**रा० टी०—मन्त्रिण इति** । परमसत्कृताः अत एव प्रमुदिताः सर्वैर्गुणैर्मन्त्रिधर्मैः समन्विता युक्ता नरेन्द्रस्य सर्वमन्त्रिणः तां रात्रिमूषुः ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

**गो० टी०—मन्त्रिणः** जनकमन्त्रिणः गुणैः सत्कारातिशयैः तां रात्रिं तस्यां रात्र्यामित्यर्थः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

१ ] **ति० टी०—तत इति** ॥ १ ॥

**रा० टी०—तत इति** । ततः तस्यां रात्र्यां व्यतीतायां सत्यां सोपाध्यायः उपाध्यायसहितः सबान्धवो बान्धवसहितः हृष्टो राजा दशरथः सुमन्त्रमिदमब्रवीत् ॥ १ ॥

**गो० टी०—**अथ दशरथस्य मिथिलागमनमेकोनसप्ततितमे—ततो रात्र्यामित्यादि ॥ १ ॥

२ ] **ति० टी०—**धनाध्यक्षाः कोशरक्षाधिकारिणः । पुष्कलं बहु श्रेष्ठं च । सुविहिताः सुरक्षिताः सुसंपादितकल्याणोचितकर्माणो वा ॥ २ ॥

**रा० टी०—तद्वचनमेवाह—अद्येति** । नानारत्नसमन्विताः अनेकविधरत्नयुक्ताः अत एव सुविहिताः अश्ववारादिभिः सुरक्षिताः सर्वे धनाध्यक्षाः कोशाधिकारिणः पुष्कलमधिकत्वादिना श्रेष्ठं धनमादाय गृहीत्वाग्रे व्रजन्तु 'श्रेयाञ्छ्रेष्ठश्च पुष्कलः' इत्यमरसिंहः ॥ २ ॥

**गो० टी०—धनाध्यक्षाः** कोशरक्षाधिकृताः पुष्कलं श्रेष्ठं 'श्रेयान् श्रेष्ठः पुष्कलः स्यात्' इत्यमरः । सुविहिताः सुसंपादितकल्याणोचितकर्माणः ॥ २ ॥

३–४ ] **ति० टी०—**यानं शिबिकादि युग्यमश्वादि अनुत्तमानि श्रेष्ठानि यानानि युग्यानि च यान्तु वसिष्ठाद्यर्थमिति शेषः ॥ ३ ॥ ४ ॥

**रा० टी०—चतुरङ्गेति** । चतुरङ्गबलं रथाद्यङ्गसहितसैन्यं सर्वशः कृत्स्नमनुत्तममतिश्रेष्ठं यानयुग्यं यानं शिबिकाप्रभृति युग्यमश्वप्रभृति च ममाज्ञासमकालमेव शीघ्रं निर्यातु अपिशब्द एवार्थे । यानयुग्यमिति सेनाङ्गत्वादेकवचनान्तम् ॥ ३ ॥

**गो० टी०—यानयुग्यमिति** यानं शिबिकान्दोलिकादि युग्यं रथादि सेनाङ्गत्वादेकवद्भावः ॥ ३ ॥

**रा० टी०—वसिष्ठ इति** । वसिष्ठादय एते द्विजा अग्रे एव प्रयान्तु दूताः जनकराजमन्त्रिणः मां त्वरयन्ति अतः काला

१ स इति गो. पाठः । २ तामिति गो. रा. पाठः । ३ ते इति गो. रा. पाठः । ४ यानयुग्यमिति गो. रा. पाठः । ५ काश्यप इति गो. रा. पाठः । ६ स्थिति गो. अपीति रा. पाठः ।

एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे । यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम्॥ ५ ॥
वचनाच्च नरेन्द्रस्य सेना च चतुरङ्गिणी । राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वयात् ॥ ६ ॥
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् । राजा च जनकः श्रीमाञ्श्रुत्वा पूजामकल्पयत्॥ ७ ॥
ततो राजानमासाद्य वृद्धं दशरथं नृपम् । मुदितो जनको राजा प्रहर्षं परमं ययौ ॥ ८ ॥
उवाच वचनं श्रेष्ठो नरश्रेष्ठं मुदान्वितम् । स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ॥ ९ ॥
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् । दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ॥ १० ॥
सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः । दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम्॥ ११ ॥
राघवैः सह संबन्धाद्वीर्यश्रेष्ठैर्महाबलैः । श्वः प्रभाते नरेन्द्र त्वं संवर्तयितुमर्हसि ॥ १२ ॥
यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसत्तमैः । तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ॥ १३ ॥

त्ययो यथा न स्यात् तथैव मे स्यन्दनं योजयस्व । श्लोकद्वयमेकान्वयि । हिशब्द एवार्थे ॥ ४ ॥ ५ ॥

गो० टी०—यथा कालात्ययः कालातिक्रमः न स्यात्तथा प्रयान्त्विति योजना ॥ ४ ॥ ५ ॥ ६ ॥

५ ] ति० टी०—अग्रे द्विजप्रयाणं प्रयाणे कल्याणाय । प्रयान्तु उक्तयानयुग्यैरिति शेषः । दूता जनकदूताः ॥ ५ ॥

६ ] ति० टी०—चद्वयं चिन्त्यफलं पादपूरणमात्रार्थम् ॥६॥

रा० टी०—वचनादिति । नरेन्द्रस्य महाराजाधिराजदशरथस्य वचनादेव चतुरङ्गिणी सेना ऋषिभिः सार्धमेव व्रजन्तं राजानं पृष्ठतोऽन्वगात् । चशब्दद्वयमेवार्थकम् ॥ ६ ॥

७ ] ति० टी०—दूतानां त्रिदिनगम्योऽपि मार्गश्चतुरङ्गबलोपेतप्रयाणत्वाच्चतुर्दिनं वासो मध्ये । श्रुत्वा दशरथागमनम् ॥ ७ ॥

रा० टी०—गत्वेति । चतुरहं चतुर्दिनपर्यन्तं मार्गं गत्वा विदेहानभ्युपेयिवान् महाराजाधिराजदशरथ इति शेषः । श्रीमान् राजा जनकः श्रुत्वा दूतादिद्वारा तदागमनमवगत्यैव पूजां सत्कृतिसामग्रीमकल्पयत् समपादयत् । चशब्द एवार्थे॥७॥

गो० टी०—चतुरहं चतुर्ष्वहःसु श्रुत्वा दशरथमागतं श्रुत्वा पूजाम् उपधाम् ॥ ७ ॥

८-९ ] ति० टी०—राजानमासाद्य मुदितो हर्षं ययौ । मोदस्यैवाधिकावस्था हर्ष इति भेदः ॥ ८ ॥ ९ ॥

रा० टी०—तत इति । ततः सामग्रीसंपादनानन्तरमेव वृद्धं विलक्षणैश्वर्यवस्त्रादिना वृद्धिं प्राप्तं राजानं परमानुरागविशिष्टं दशरथं नृपं आसाद्य प्राप्य मुदितः आगमनश्रुतिजनितहर्षविशिष्टः राजा जनकः परममवधिरहितं प्रहर्षं दर्शनजानितविलक्षणानन्दं ययौ प्राप । चशब्द एवार्थे ॥ ८ ॥

गो० टी०—राजानमासाद्य मुदितः विवाहः शीघ्रभावीति हर्षं ययौ ॥ ८ ॥

रा० टी०—उवाचेति । नरश्रेष्ठः महाराजाधिराजजनकः मुदान्वितं नरश्रेष्ठं महाराजाधिराजदशरथमुवाच । तद्वचनमेवाह—हे महाराज ! हे राघव रघुकुलप्रादुर्भूत ! दिष्ट्यास्मद्भाग्यवशेन त्वं प्राप्तोऽसि ते स्वागतमस्तु ॥ ९ ॥

गो० टी०—वीर्यनिर्जितां पुत्रयोर्वीर्येण धनुर्भङ्गादिना संभूतामित्यर्थः ॥ ९ ॥

१० ] ति० टी०—वीर्यं शौर्यम् ॥ १० ॥

रा० टी०—पुत्रयोरिति । वीर्यनिर्जितां वीर्येण प्रादुर्भूतसमाधिकरहितपराक्रमेण निर्जितामत्युत्कर्षं प्राप्तामुभयोः पुत्रयोः प्रीतिं कान्तिं त्वं लप्स्यसे द्रक्ष्यसि दिष्ट्या अस्मद्भाग्योदयेन महातेजा भगवान् अतिसामर्थ्यविशिष्टः ऋषिः सर्वज्ञो वशिष्ठः देवैः सह शतक्रतुरिन्द्र इव सर्वैर्द्विजश्रेष्ठैः सह प्राप्तः इह समागतः । सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—वसिष्ठस्य शतक्रतुसाम्यं पूर्णधर्मत्वेन ॥ १० ॥

११ ] ति० टी०—वसिष्ठे इन्द्रसादृश्यं पूर्णधर्मत्वेन । विघ्नाः कन्यादानप्रतिबन्धाः ॥ ११ ॥

रा० टी०—दिष्ट्येति । हे नरेन्द्रेन्द्र । मे विघ्नाः कन्याविवाहप्रतिबन्धकीभूतदुष्टनृपाः दिष्ट्या निर्जिताः दिष्ट्यैव वीर्यश्रेष्ठैर्महात्मभिः राघवैर्भवद्भिःसह संबन्धान्मे कुलं पूजितं भविष्यतीति शेषः । अतः श्वः आगामिनि प्रभाते हे नरश्रेष्ठ ! यज्ञस्य यागस्यान्ते ऋषिसंमतं विवाहं निर्वर्तयितुं संसाधयितुं त्वमर्हसि । अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—राघवैः सह संबन्धं प्राप्य पूजितं मे कुलम् । नरेन्द्र सर्वराजश्रेष्ठ । संवर्तयितुं निर्वर्तयितुम् विवाहमित्यग्रिमेणान्वयः ॥ १२ ॥

गो० टी०—विघ्नाः कन्याप्रदानप्रतिबन्धकाः पूजितत्वे हेतुमाह—राघवैरिति । यत इत्युपस्कार्यम् ॥ ११ ॥

१३ ] ति० टी०—यज्ञान्तेऽवभृथे ॥ १३ ॥

रा० टी०—तस्येति । नराधिपो दशरथः तस्य जनकस्य तद्वचनमृषिमध्ये श्रुत्वा वाक्यविदां श्रेष्ठं महीपतिं जनकं वाक्यं प्रत्युवाच ॥ १३ ॥ १४ ॥

गो० टी०—इक्ष्वाकुप्रथमवंशत्वेन नरेन्द्राणामिन्द्रत्वम् । यज्ञ-

१ त्विति गो. पाठः । २ हर्षं चेति गो. पाठः । ३ च नरश्रेष्ठ इति गो. पाठः । ४ मुदान्वित इति गो. पाठः । ५ महाराज इति गो. रा. पाठः । ६ महात्मभिरिति गो. रा. पाठः । ७ नरेन्द्रेन्द्र निर्वर्तयितुमिति गो. रा. पाठः । ८ संमतमिति गो. रा. पाठः ।

वाक्यं वाक्यविदां श्रेष्ठः[1] प्रत्युवाच महीपतिम् । प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ॥ १४ ॥
यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् । तद्धर्मिष्ठं[2] यशस्यं च वचनं सत्यवादिनः ॥ १५ ॥
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः । ततः सर्वे मुनिगणाः परस्परसमागमे ॥ १६ ॥
हर्षेण महता युक्तास्तां रात्रिमवसन्सुखम्[3] । [ अथ[4] रामो महातेजा लक्ष्मणेन समं ययौ ।
विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ॥ ] राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ॥ १७ ॥
उवास[5] परमप्रीतो जनकेनाभिपूजितः । जनकोऽपि महातेजाः क्रियां[6] धर्मेण तत्त्ववित् ॥
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥ ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

स्यान्त इति । त्रिचतुरदिनानन्तरभाविनीति शेषः । ऋषिसंमतं ब्राह्मं विवाहमित्यर्थः ॥ १२ ॥

१४ ] ति० टी०—प्रतिग्रहः कन्यागवादीनाम् दातृवशो यदि दाता ददाति तदा प्रतिग्राह्यं प्रतिग्रहीत्रेति स्थितः । एतद्वाक्यं मया श्रुतम् । क्षत्रियतया प्रतिग्रहधर्मस्याप्यज्ञानमेव सांप्रतमेवानुभवो भविष्यतीति श्रुतमित्युक्तम् ॥ १४ ॥

रा० टी०—तद्वचनमेवाह–प्रतीति । प्रतिग्रहः दातृवशः एतत् मया पुरा श्रुतमतः हे धर्मज्ञ ! यथा त्वं वक्ष्यसि तत्तथा वयं करिष्यामहे ॥ १९ ॥

गो० टी०—महीपतिं जनकम् ॥ १३ ॥

गो० टी०—प्रतिग्रह इति । कन्यागवादीनां प्रतिग्रहो दातृवश एव यदा दाता ददाति तदा प्रतिगृह्यते प्रतिग्रहीत्रेति वस्तुस्थितिः एतत् युष्मदीयं वीर्यशुल्ककन्याप्रदानमपि पूर्वमेव श्रुतं अतःपरं कन्याप्रदस्त्वं यथा वक्ष्यसि तथा वयं करिष्यामः ॥१४॥

१५ ] ति० टी०—अतो यथा त्वं वक्ष्यसि तद्वयं करिष्यामहे ॥ १९ ॥

रा० टी०—तदिति । सत्यवादिनो दशरथस्य धर्मिष्ठं यशस्यं च तद्वचनं श्रुत्वा विदेहाधिपतिर्जनकः परं विस्मयमतितेजःप्रतापैश्वर्यादिविशिष्टस्यातिविनयोक्त्यात्याश्चर्यमागतः प्राप्तः ॥ १६ ॥

गो० टी०—विस्मयमिति । प्रतिग्रहो दातृवश इत्यादिविनयोक्तेरिति भावः ॥ १९ ॥

१६ ] ति० टी०—विस्मयं कन्याया वीर्येण शुल्केन जितत्वान्मद्दुमत्यनपेक्षायामपि राज्ञो विनयेन तादृशवचनाद्विस्मयः ॥ १६ ॥

रा० टी०—तत इति । ततः उक्तिप्रत्युक्तिश्रवणानन्तरं परस्परसमागमे सति महता हर्षेण युक्ताः सर्वे मुनिगणास्तां निशां सुखं यथा स्यात्तथा अवसन् ॥ १७ ॥

गो० टी०—परस्परसमागमे संभूते सतीति शेषः ॥ १६ ॥

१७ ] ति० टी०—निशाम्य दृष्ट्वा ॥ १७ ॥

रा० टी०—अथेति । अथ महाराजद्वयसमागमानन्तरं महातेजा रामः पितुः पादौ उपस्पृशन्नुपस्प्रष्टुं विश्वामित्रं पुरस्कृत्य लक्ष्मणेन समं ययौ । "लक्षणहेत्वोः क्रियायाः" इति शतात्र ॥ १८ ॥

रा० टी०—राजेति । राघवौ रघुवंशभूषणौ पुत्रौ निशाम्यावलोक्यैव परिहर्षितः परितः हर्षिता हर्षं प्रापिताः पुत्रादयो येन सः जनकेनाभिपूजितः परमप्रीतो राजा दशरथः उवाच । चशब्द एवार्थे ॥ १९ ॥

गो० टी०—निशाम्य दृष्ट्वा " शमोऽदर्शने " इति मित्वनिषेधान्न ह्रस्वः ॥ १७ ॥

१८ ] ति० टी०—यज्ञस्यावशिष्टाः क्रियाः । सुताभ्यां दुहित्रोः कन्यादानशेषतया यत्कर्तव्यमङ्कुरारोपणादि लौकिकालौकिकं तत्सर्वं कृत्वोवास ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्ड एकोनसप्ततितमः सर्गः ॥ ६९ ॥

रा० टी०—जनक इति । महातेजास्तत्त्ववित् जनकोऽपि यज्ञस्य क्रियां कृत्यं सुताभ्यां दुहितृभ्यां धर्मेण सदाचारहेतुभूतेनैव कृत्वा कारयित्वैव रात्रिमुवास ह प्रसिद्धमेतत् । चावेवार्थौ ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

गो० टी०—जनकोऽपीति । यज्ञस्य क्रियामवशिष्टक्रियां सुताभ्यां पुत्र्योः क्रियामङ्कुरार्पणादिकम् ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनसप्ततितमः सर्गः॥६९॥

---

१ श्रेष्ठमिति रा. पाठः । २ धार्मिष्ठं च यशस्यं चेति गो. पाठः । ३ निशामिति गो. रा. पाठः । ४ श्लोकोऽयमधिको रा. पुस्तके । ५ उवाचेति गो. रा. पाठः । ६ क्रियामिति गो. रा. पाठः ।

## सप्ततितमः सर्गः ।

ततो जनकः सपरिजनमनुजं कुशध्वजं समानिनाय । मन्त्रिमुखाज्जनकाहूतो दशरथो विश्वामित्रादिभिः साकं संजवनमाजगाम राज्ञा प्रवर्तितश्च वसिष्ठो आराममिक्ष्वाकुवंशं प्रशशंस ।

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः । उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥
भ्राता मम महातेजा वीर्यवानतिधार्मिकः । कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २ ॥
वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् । सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥ ३ ॥
तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे तैतः । प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥ ४ ॥
एवैमुक्ते तु वचने शतानन्दस्य संनिधौ । आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥ ५ ॥
शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः । समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६ ॥
सैंकाश्यां ते समागम्य ददृशुश्च कुशध्वजम् । न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥ ७ ॥

१ ] ति० टी०—अथ ब्राह्मसंबन्धसदृशे यौनसंबन्धे वध्वपेक्षितः परस्परकुलाचारः सर्गाभ्याम्—तत इति । कृतकर्मा कृतनित्यक्रियः ॥ १ ॥

रा० टी०—रात्रिव्यतीतानन्तरकालिकं वृत्तमाह—तत इति । ततः तद्रात्रिव्यतीतानन्तरं प्रभाते प्रातःकाले महर्षिभिः कृतकर्मा वाक्यज्ञो जनकः पुरोहितं शतानन्दं वाक्यमुवाच॥१॥

गो० टी०—अथ जनकेन संबन्धार्हत्वायेक्ष्वाकुसंतानकीर्तनं सप्ततितमे । ततः प्रभात इत्यादि । कृतकर्मा समाप्तयज्ञादिक्रियः ॥ १ ॥

२ ] ति० टी०—पुरीमध्यवसत् "उपान्वध्याङ्—" इति कर्मत्वम् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—भ्रातेति । महातेजाः अतितेजस्वी वीर्यवान् अतिपराक्रमः अतिधार्मिकः कुशध्वज इति ख्यातः मम भ्राता इक्षुमतीं नदीं तज्जलं पिबन् सन् शुभां मङ्गलस्वरूपां वार्याफलकपर्यन्तां वार्यः शत्रागमवारणयोग्यः दृढप्राकारः तत्र युक्ताः ये आफलकाः यन्त्रविशेषाः तैर्युक्तः पर्यन्तः तटो यस्यास्तां पुण्यसंकाशां पुण्यानां पुण्यजनककर्मणां सकाशः प्रकाशो यस्यां पुष्पकं विमानमिव विपुलस्थलीकामित्यर्थः । सांकाश्यां सांकाश्याभिधां पुरीमध्यवसत् । द्वयोरेकत्रान्वयः ॥ २ ॥ ३ ॥

गो० टी०—भ्रातेत्यादि । अत्रत्यविशेषणानां शतानन्दपरिज्ञातानामप्युपदेशः परंपरया दशरथादिश्रोत्रं प्रापयितुम् वार्याफलकपर्यन्तां दुर्गसंरक्षणार्थं परिखारूपेणावस्थितायामिक्षुमत्यां वारिणि आकीर्णाः निखाताः फलकाः शूलानि येषु ते वार्याफलकास्तादृशाः पर्यन्तप्रदेशा यस्यास्ताम् । वार्यामलकपर्यन्तामिति पाठे वार्यामलका आमलकविशेषास्तत्पर्यन्तां पुण्यसंकाशां पुण्यतुल्यां पुण्यवत्स्ववासिनां स्वत एवाभीष्टप्रदामित्यर्थः । पुष्पकं विमानमिव स्थितां सांकाश्यां पुरीं इक्षुमतीं नदीं पिबन् तज्जलं पिबन्नित्यर्थः । अध्यवसत् अधिवसति "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वम् ॥ २ ॥ ३ ॥

३ ] ति०टी०—परबलं वारयितुमर्हो वार्यः प्राकारस्तत्तथा आफलका यन्त्रफलकास्तद्युक्तः पर्यन्तः परिसरो यस्याः सा तथा । इक्षुमतीं पिबंस्तज्जलं पिबन् । सांकाश्यां तदाख्यां नगरीम् । 'वार्यामलकपर्यन्ताम्' इति पाठे वार्यामलका आमलकविशेषाः पर्यन्तेषु यस्या इत्यर्थः । पुण्यसंकाशां पुण्यशब्देन तत्फलं स्वर्गस्तत्संकाशाम् तदुपमामित्यर्थः । पुष्पकं विमानं कौबेरं प्रसिद्धम् ॥ ३ ॥

४ ] ति० टी०—तमुक्तपुरवासिनम् । यज्ञगोप्ता मिथिलायां क्रियमाणयज्ञस्य सांकाश्यायामेव स्थित्वास्मयज्ञापेक्षितसामग्रीसंपादकत्वेन रक्षिता । इमां प्रीतिं जानकीपरिणयजाम् ॥ ४ ॥

रा० टी०—तमिति । तं कुशध्वजमहं द्रष्टुमिच्छामि यतो मे यज्ञगोप्ता एतद्यागसामग्रीसंपादकत्वादिनैतद्यागस्य रक्षकः महातेजाः कुशध्वजो मतोऽभिमतः अतः सोऽपि मया सह इमां प्रत्यक्षीभूतां प्रीतिं सीतारामविवाहजनितानन्दं भोक्ता अनुभविता ॥ ४ ॥

गो० टी०—यज्ञगोप्ता सांकाश्ये स्थित्वा यज्ञसामग्रीप्रेषणादिनेति भावः । इमां विवाहकल्याणजां भोक्तेति लुट् ॥ ४ ॥

५ ] ति० टी०—अव्यग्राः समर्थाः । समादिशच्छतानन्देन गन्तुं प्रेरयत् ॥ ५ ॥

रा० टी०—एवमिति । शतानन्दस्य संनिधौ एवमनेन प्रकारेण वचने वाक्ये उक्ते जनकेन कथिते सत्येव अव्यग्राः कार्यसाधने व्यग्रतारहिताः केचित् प्रेषणोचितपुरुषाः आगताः तान् जनकः समादिशत् कुशध्वजानयनार्थमाज्ञापयत् । तुशब्द एवार्थे ॥ ५ ॥

६–७ ] ति० टी०—नरेन्द्रशासनाच्छतानन्दप्रेरिताः प्रययुः दूता इति शेषः ॥ ६ ॥ ७ ॥

रा० टी०—शासनादिति । नरेन्द्रस्य जनकस्य शासनात् एव नरव्याघ्रं कुशध्वजमानेतुं शीघ्रवाजिभिः झटितिगमनशीलाश्वैः

१ यवीयानिति गो. रा. पाठः । २ मत इति गो. रा. पाठः । ३ नास्त्ययं श्लोको गो. पुस्तके । ४ अयं सार्धश्लोको गो. नास्ति ।

तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाजवैः । आज्ञया तु नरेन्द्रस्य आजगाम कुशध्वजः ॥ ८ ॥
स ददर्श महात्मानं जनकं धर्मवत्सलम् । सोऽभिवाद्य शतानन्दं जनकं चातिधार्मिकम् ॥ ९ ॥
राजार्हं परमं दिव्यमासनं सोऽध्यरोहत । उपविष्टावुभौ तौ तु भ्रातरावमितद्युती ॥ १० ॥
प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् । गच्छ मन्त्रिपते शीघ्रमिक्ष्वाकुममितप्रभम् ॥ ११ ॥
आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् । औपकार्यां स गत्वा तु रघूणां कुलवर्धनम् ॥ १२ ॥
ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् । अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ॥ १३ ॥
स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् । मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तथा ॥ १४ ॥
सबन्धुरगमत्तत्र जनको यत्र वर्तते । राजा च मन्त्रिसहितः सोपाध्यायः सबान्धवः ॥ १५ ॥
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् । विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ॥ १६ ॥
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः । विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ॥ १७ ॥
एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् । तूर्ष्णींभूते दशरथे वसिष्ठो भगवानृषिः ॥ १८ ॥

---

प्रययुः तत्र दृष्टान्तः विष्णुमुपेन्द्रमानेन्तुमिन्द्राज्ञया यथा तत्पुरुषा इति शेषः । तुशब्द एवार्थे ॥ ६ ॥

गो० टी०–नरेन्द्रस्य शासनात् शतानन्दवचनद्वारकादित्यर्थः । विष्णुमुपेन्द्रम् ॥ ५ ॥ ६ ॥

रा० टी०–सांकाश्यामिति । ते जनकप्रेषिताः पुरुषाः सांकाश्यां संकाश्यनिर्मितनगरीं समागम्य संप्राप्य कुशध्वजं ददृशुः वृत्तं जनकोक्तवृत्तान्तं जनकस्य चिन्तितं च यथावन्न्यवेदयंश्च ॥७॥

८ ] ति० टी०–नृपतिः कुशध्वजः ॥ ८ ॥

रा० टी०–तदिति । महाबलैर्दूतश्रेष्ठैर्वर्णितं तद्वृत्तं श्रुत्वैव नृपतिः कुशध्वजः नरेन्द्रस्य जनकस्याज्ञया दूतोक्ताज्ञापनेन जगाम मिथिलामिति शेषः । तुशब्द एवार्थे ॥ ८ ॥

९ ] ति० टी०–पूर्वं शतानन्दमभिवाद्य ततो जनकं चाभिवाद्येत्यर्थः ॥ ९ ॥

रा० टी०–स इति । महात्मानं शतानन्दं धर्मवत्सलं जनकं च स कुशध्वजो ददर्श स कुशध्वजः शतानन्दं धार्मिकं राजानं जनकं चाभिवाद्य प्रणम्य राजार्हं राजोचितं परममुत्कृष्टं दिव्यमासनमध्यरोहत तयोराज्ञया तत्रोपाविशदित्यर्थः । अपिश्चार्थे ॥ ९ ॥

१० ] ति० टी०–अध्यरोहत । पुरोहितजनकयोराज्ञमस्येति शेषः ॥ १० ॥

रा० टी०–उपेति । अमितौजसौ वीरौ उपविष्टौ तावुभौ भ्रातरौ सुदामनं सुदामनाख्यं मन्त्रिश्रेष्ठं प्रेषयामासतुः । प्रेषणप्रकारमाह–गच्छेति । हे मन्त्रिपते अमितप्रभमिक्ष्वाकुं त्वं शीघ्रमेव गच्छ समन्त्रिणं मन्त्रिसहितं दुर्धर्षं दशरथमात्मजैः सहानयस्व । श्लोकद्वयमेकान्वयि । तुशब्द एवार्थे ॥१०॥११॥

गो० टी०–अध्यरोहत पुरोहितराजानुज्ञयेत्यर्थः ॥७॥८॥९॥

११ ] ति० टी०–सुदामनं सुदामनाख्यम् ॥ ११ ॥

१२–१५ ] ति० टी०–औपकार्याम् । उपकार्याशब्दात्स्वार्थेऽण् । दशरथशिबिरसंनिवेशमित्यर्थः ॥ १२—१५ ॥

रा० टी०–औपकार्यामिति । अथ तदाज्ञापनवचनश्रवणानन्तरं स सुदामनः औपकार्यां महाराजाधिराजदशरथशिबिरसन्निवेशं गत्वा रघूणां कुलवर्धनं दशरथं ददर्श एनं दशरथं शिरसा अभिवाद्य इदं वचनमब्रवीच्च । औपकार्याशब्दः स्वार्थष्यञन्तः ॥ १२ ॥

गो० टी०–औपकार्यां दशरथशिबिरनिवेशम् उपकार्याशब्दात्स्वार्थे ष्यञ् ॥ १०–१३ ॥

रा० टी०–तद्वचनमेवाह–अयोध्येति । हे अयोध्याधिपते हे वीर! सः भवत्सबन्धी मिथिलाधिपो वैदेहः सोपाध्यायपुरोहितं त्वां द्रष्टुं व्यवसितः कृतनिश्चयोऽस्तीति शेषः ॥ १३ ॥

रा० टी०–मन्त्रीति । सर्षिगणः सबन्धुः राजा मन्त्रिश्रेष्ठवचः श्रुत्वैव यत्र जनको वर्तते तत्रागमत् । तथाशब्द एवार्थे ॥ १४ ॥

रा० टी०–स इति । मन्त्रिसहितः सोपाध्यायः सबान्धवो वाक्यविदां श्रेष्ठो राजा दशरथः वैदेहं जनकमिदं वाक्यमब्रवीत् ॥ १५ ॥

१६–१८ ] ति० टी०–इदं वाक्यं वक्ष्यमाणम् । वसिष्ठमुखेन कन्यां वरयितुम् इक्ष्वाकुकुलदैवतं भगवान्वसिष्ठः इक्ष्वाकूणां सर्वेषु कृत्येषु वक्तेति ते विदितमित्यन्वयः अतो विश्वामित्राभ्यनुज्ञया ऋषिभिः सह कुलप्रभवधर्मक्रममनतिक्रम्य क्रमं ज्येष्ठानुक्रमं चानतिक्रम्य दशपूरुषविख्यातादिति न्यायेन यौनसंबन्धापेक्षितवंशपारंपर्यमेष वक्ष्यति ॥ १६—१८ ॥

रा० टी०–तद्वाक्यमेवाह–विदितमिति । हे महाराज जनक ! इक्ष्वाकुकुलदैवतमिक्ष्वाकुकुलदेवः समर्थः ऋषिः सर्वज्ञो वशिष्ठः सर्वेषु कृत्येषु वक्तास्तीति ते विदितम् ॥ १६ ॥

---

१ बलैरिति रा. पाठः । २ अथेति गो. पाठः । ३ राजानं चापीति गो. राजानमपीति रा. पाठः । ४ चाध्यरोहतेति गो. रा. पाठः । ५ अतितेजसाविति गो. अमितौजसाविति रा. पाठः । ६ ऐक्ष्वाकमिति गो. पाठः । ७ स्वमन्त्रिणामिति गो. पाठः । ८ स राजेति गो. रा. पाठः ।

उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् । अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ॥ १९ ॥
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः । विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ॥ २० ॥
मनुः प्रजापतिः पूर्वमिक्ष्वाकुश्च मनोः सुतः । तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ २१ ॥
इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव विश्रुतः । कुक्षेरथात्मजः श्रीमान्विकुक्षिरुदपद्यत ॥ २२ ॥
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् । बाणस्य तु महातेजा अनरण्यः प्रतापवान् ॥ २३ ॥
अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोरपि । त्रिशङ्कोरभवत्पुत्रो धुन्धुमारो महायशाः ॥ २४ ॥
धुन्धुमारान्महातेजा युवनाश्वो महारथः । युवनाश्वसुतश्चासीन्मान्धाता पृथिवीपतिः ॥ २५ ॥
मान्धातुस्तु सुतः श्रीमान्सुसंधिरुदपद्यत । सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ॥ २६ ॥
यजस्वी ध्रुवसंधेस्तु भरतो नाम नामतः । भरतात्तु महातेजा असितो नाम जायत ॥ २७ ॥

---

गो० टी०—विदितमिति । "मतिबुद्धि" इत्यादिना वर्तमाने क्तः "क्तस्य च वर्तमाने" इति षष्ठी त्वया विदितमित्यर्थः । दैवतं परमगुरुरित्यर्थः ॥ १४ ॥

रा० टी०—ततः किमित्यत आह—विश्वामित्रेति । विश्वामित्राभ्यनुज्ञातः सर्वैर्महर्षिभिः सह विद्यमान इति शेषः । धर्मात्मा एष वशिष्ठः मे वंशं यथाक्रमं क्रममनतिक्रम्य वक्ष्यति वंशमिति शेषः । विश्वामित्राभ्यनुज्ञात इत्यनेन तयोरतिमैत्रीति सूचितम् ॥ १७ ॥

रा० टी०—तूष्णीमिति । दशरथे तूष्णींभूते सति वाक्यज्ञो भगवानृषिर्वशिष्ठः सपुरोहितं वैदेहं वाक्यमुवाच ॥ १८ ॥

गो० टी०—मे वक्ष्यति कुलमिति शेषः विश्वामित्रस्य कोपपरिहाराय विश्वामित्राभ्यनुज्ञात इत्युक्तम् । दशपुरुषविख्याताादितिशास्त्रेण यौनसंबन्धापेक्षितां वंशशुद्धिं वक्ष्यतीत्यर्थः ॥ १५ ॥ १६ ॥

१९–२० ] ति० टी०—अव्यक्तशब्देन मायाशबलं ब्रह्म । ब्रह्मा चतुर्मुखः । शाश्वतत्वनित्यत्वाव्ययत्वान्यस्यापेक्षिकाणि द्रष्टव्यानि ॥ १९ ॥ २० ॥

रा० टी०—तद्वाक्यमेवाह—अव्यक्तेत्यादि यावत्सर्गसमाप्ति । अव्यक्तप्रभवः न व्यक्तः कैश्चिद् ज्ञातः प्रभवो जन्मकारणीभूतमात्रादिर्यस्य स स्वयंभूरित्यर्थः । किंच आह्लादशब्दवाच्यक्तं प्राकट्यं यस्य तदव्यक्तं कमलं तस्मात्प्रभवः प्राकट्यं यस्य अयोनिज इत्यर्थः । किंच अव्यक्तं प्रधानं प्रभवति प्रकटितगुणवत्त्वेन प्रकटयति स प्रधानगुणक्षोभहेतुरित्यर्थः । किंच अव्यक्तं परमात्मतत्प्रकाशभूतं परं ब्रह्म तस्मात् प्रभवो यस्य सः प्रजासर्जनार्थं गृहीतरजोगुणकं परमात्मप्रकाशभूतं परब्रह्मैवेत्यर्थः । अत एव शाश्वतः स्वतः सिद्धः अत एव नित्यः ध्वंसाप्रतियोगी अत एवाव्ययः परिणामरहितः यो ब्रह्मा तस्मान्मरीचिः मरीच्यभिधप्रजापतिः संजज्ञे । मरीचेः कश्यपः सुतः संजज्ञे । 'अव्यक्तं शंकरे विष्णावव्यक्तं महदादिषु । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्' इति कोशः ॥ १९ ॥

गो० टी०—अव्यक्तं प्रत्यक्षाद्यगोचरं वस्तु प्रभवः कारणं यस्य सोऽव्यक्तप्रभवः अव्यक्तं किं नाम वक्ष्यत्ययोध्याकाण्डे—'आकाशप्रभवो ब्रह्म' इति अथ कोऽयमाकाशोऽपि तमपि वक्ष्यत्युत्तरकाण्डे—'संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम्' इत्यादिना । शाश्वतः बहुकालस्थायी नित्यः द्विपरार्धकालं विनाशरहितः अव्ययः प्रवाहरूपेण प्रतिकल्पमवस्थायी अस्तीति शेषः ॥ १७ ॥

रा० टी०—विवस्वानिति । कश्यपाद् विवस्वान् जज्ञे वैवस्वतः विवस्वतः सुतो मनुः स्मृतः कथितः मनुः पूर्वं प्रजापतिरभवदिति शेषः । मनोः सुतस्तु इक्ष्वाकुरभवत् ॥ २० ॥

गो० टी०—वैवस्वतः विवस्वत्पुत्रः प्रजापतिः राजा आसीदिति शेषः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

२१–२७ ] ति० टी०—मनोः प्रजापतित्वं प्रजासर्गाधिकारित्वेन । पूर्वकमाद्यम् ॥ २१—२७ ॥

रा० टी०—तमिति । तमिक्ष्वाकुमयोध्यायां पूर्वकं पौर्वकालिकं प्रथममित्यर्थः । राजानं त्वं विद्धि जानीहि । इक्ष्वाकोस्तु कुक्षिरित्येव विश्रुतः श्रीमान् सुतः आसीत् ॥ २१ ॥

रा० टी०—कुक्षेरिति । अथ अनन्तरं विकुक्षिरितिविश्रुतः श्रीमान् कुक्षेरात्मज आसीत् । विकुक्षेस्तु महातेजाः प्रतापवान् बाणः पुत्र आसीत् ॥ २२ ॥

रा० टी०—बाणस्येति । बाणस्य तु महातेजाः प्रतापवान् अनरण्यो जज्ञे । अनरण्यात्तु पृथुर्जज्ञे । पृथोस्तु त्रिशङ्कुर्जज्ञे । अपिस्त्वर्थे ॥ २३ ॥

रा० टी०—त्रिशङ्कोरिति । महायशा धुन्धुमारः त्रिशङ्कोः पुत्रोऽभवत् । महातेजाः महारथो युवनाश्वो धुन्धुमारादभवत् ॥ २४ ॥

रा० टी०—युवनाश्वेति । पृथिवीपतिर्मान्धाता तु युवनाश्वसुत आसीत् । श्रीमान् सुसंधिस्तु मान्धातुः सुत उदपद्यत अभवत् ॥ २६ ॥

---

१ पुरोहितमिति रा. पाठः । २ सुत इति गो. रा. पाठः । ३ स्त्विति गो. रा. पाठः । ४ इति विश्रुत इति रा. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ यौवनाश्वसुतस्त्विति गो. पाठः ।

यस्यैते प्रतिराजान उदपद्यन्त शत्रवः । हैहयास्तालजङ्घाश्च शूराश्च शैशबिन्दवः ॥ २८ ॥
तांश्चै स प्रतियुध्यन्वै युद्धे राजा प्रवासितः । हिमवन्तमुपागम्य भार्याभ्यां सहितस्तदा ॥ २९ ॥
असितोऽल्पबलो राजा कालधर्ममुपेयिवान् । द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः ॥ ३० ॥
एका गर्भविनाशार्थं सपत्न्यै सगरं ददौ । ततः शैलवरे रम्ये बभूवाभिरतो मुनिः ॥ ३१ ॥
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः । तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ ३२ ॥
ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमुत्तमम् । तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत् ॥ ३३ ॥
स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि । तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः ॥ ३४ ॥

गो० टी०—धुन्धुमारः युवनाश्वापरनामधेयः ॥ २२–२४ ॥

रा० टी०—सुसंधेरिति । सुसन्धेस्तु द्वौ पुत्रौ जातौ । तावेवाह ध्रुवसंधिरेकः प्रसेनजिद् द्वितीयः । ध्रुवसंधेस्तु यशस्वी प्रशस्तयशोविशिष्टः भरतो नाम आसीत् नामतः प्रसिद्धमेतत्। अपिस्त्वर्थे ॥ २६ ॥

रा० टी०—भरतादिति । भरतात्तु महातेजाः असितः नाम जायत अजायत । आगमशास्त्रस्यानित्यत्वादड्विरहः । यस्य असितस्य शत्रवः शातनकर्तारः एते हैहयादिशशबिन्द्वन्ताः प्रतिराजानः प्रतिपक्षभूता नृपतयः उदपद्यन्त तान् हैहयादीनेव युधि संग्रामे प्रतियुद्ध्यन् सः असितः राजा प्रवासितः राज्यान्निःसारित एव आसीदिति शेषः । तुहिशब्दावेवार्थौ द्वयोरेकत्रान्वयः ॥ २७ ॥

गो० टी०—मध्ये असितवृत्तान्तकथनं सगरवैभवातिशयप्रकटनाय । प्रतिराजानः प्रतिपक्षाः शत्रवः शातयितारः। प्रतिराजानेव तान् विशेषयति हैहया इत्यादि ॥ २९ ॥

२८ ] ति० टी०—यस्यासितस्य । प्रतिराजानः शत्रुभूता राजानः ॥ २८ ॥

२९ ] ति० टी०—सोऽसितः प्रतियुध्यन्प्रतिपक्षतया युध्यन् । प्रवासितो राज्यान्निःसारितः ॥ २९ ॥

रा० टी०—प्रवासनोत्तरकालिकासितवृत्तमाह—हिमवन्तमित्यादिभिः । तदा प्रवासनकाले अल्पबलः अल्पसेनाविशिष्टः भार्याभ्यां सहितः राजा असितः हिमवन्तमुपागम्य प्राप्य कालधर्मं पञ्चत्वमुपेयिवान् प्राप ॥ २८ ॥

गो० टी०—प्रतियुध्यन् अभिमुखतया युद्धं कुर्वन् प्रवासितः राज्याद्भ्रंशितः ॥ २६ ॥

गो० टी०—भृगुप्रस्रवणे भृगुमहामुनिसांनिध्यवन्निर्झरोपान्तप्रदेशे इदमेव पूर्वं भृगुतुन्द इत्युक्तम् ॥ २७ ॥

३० ] ति० टी०—इति श्रुतिः पुरातनकथा इत्यर्थः ॥३०॥

रा० टी०—असितवृत्तं समाप्य तत्पत्नीवृत्तमाह—द्वे इत्यादिभिः । अस्य असितस्य द्वे भार्ये गर्भिण्यौ बभूवतुः इति श्रुतिः प्रसिद्धिरित्यर्थः । तयोर्मध्ये एका पत्नी गर्भविनाशार्थमेव सपत्न्यै सगरं गरसहितं भक्षणद्रव्यं ददौ । चशब्द एवार्थे ॥२९॥

३१ ] ति० टी०—सगरं गरसहितं भक्ष्यम् । शैलवरे हिमवत्यभिरतो बभूव ॥ ३१ ॥

रा० टी०—तत इति । ततः सगरभक्ष्यभक्षणानन्तरमेव महाभागा परमभाग्यवती पद्मपत्राक्षी उत्तमं सुतं काङ्क्षन्ती एका भक्षितविषा सा कालिन्दी पत्नी यः आभिरतः आसमन्तात्सर्वव्यापि भं दीप्तिरस्यास्तीत्याभी रघुनाथः तत्र रतः हिमवन्तमुपाश्रितः हिमवति विद्यमान इत्यर्थः । भार्गवो भृगुवंशोद्भवश्च्यवनो नाम मुनिर्बभूव तं तत्र तस्मिन्नेव रम्ये हिमवति शैलवरे विद्यमानं देववर्चसं भार्गवमृषिमभ्युपागम्य अभ्यवादयत् प्राणमत् ॥ ३० ॥ ३१ ॥

गो० टी०—सगरं गरं विषं तत्सहितं भक्ष्यमित्यर्थः ॥२८॥

गो० टी०—तत इति । अभिरतः प्रीतः सन् हिमवन्तमुपाश्रितोऽभूत् स्वदेशवासाभिमानेन प्रीतः सन् तद्वरप्रदानाय सन्निहितोऽभूदित्यर्थः ॥ २९ ॥ ३० ॥

३२ ] ति० टी०—तत्र हिमवति । एका प्राशितगरा॥३२॥

३३ ] ति० टी०—कालिन्दी तस्या नाम । अभ्युपागम्य शरणं गत्वाभ्यवादयच्च । चेन शुश्रूषणमप्यकरोत् ॥ ३३ ॥

गो० टी०—कालिन्दीति सगरमुपयुक्तवत्या नाम । उपागम्य शरणं गत्वा अभ्यवादयत् शुश्रूषते स्म ॥ ३१ ॥

३४] ति० टी०—पुत्रजन्मनि तद्विषयेऽभ्यवददुक्तवान्॥३४॥

रा० टी०—स इति । स एव ऋषिर्विप्रः पुत्रेप्सुं तामभिवादनकर्त्रीं पुत्रजन्मनि पुत्रजन्महेतवे अभ्यवदत् अकथयत् । चशब्द एवार्थकः । श्लोकत्रयमेकान्वयि । चशब्दावेवार्थौ पाठक्रमादर्थक्रमो बलीयान् ॥ ३२ ॥

रा० टी०—तद्वचनमेवाह—तवेति । हे महाभागे ! सुमहाबलः अतिपराक्रमवान् महावीर्यः महाप्रतापः महातेजा अतितेजोयुक्तशरीरविशिष्टः श्रीमान् गरेण सहितः तव सुपुत्रः अचिरात् झटिति संजनिष्यति अतो हे कमलेक्षणे त्वं मा शुचः गर्भध्वंसकविषभक्षणहेतुकशोकं मा कुरु विषवीर्यमेव नङ्क्ष्यतीति भावः । सार्धोऽयं श्लोकः ॥ ३३ ॥

गो० टी०—सः पुत्रेप्सुमप्रतिबन्धपुत्रेप्सुम् । पुत्रजन्मनि पुत्रोत्पत्तिविषये ॥ ३२ ॥

१ शशिरिति गो. पाठः । २ तांस्त्विति गो.रा. पाठः । ३ भृगुप्रस्रवणेऽवसदिति गो. पाठः । ४ मन्त्रिभिः सहितस्तदेति गो. पाठः । ५ श्रुतमिति गो. पाठः । ६ विनाशायेति गो. पाठः । ७ वरं रम्यमिति गो. पाठः । ८ आत्मन इति गो. पाठः । ९ चाभ्युपागम्येति रा. पाठः ।

महावीर्यो महातेजा अचिरात्संजनिष्यति । गरेण सहितः श्रीमान्मा शुचः कमलेक्षणे ॥ ३५ ॥
च्यवनं चै नमस्कृत्य राजपुत्री पतिव्रता । पत्यौ विरहिता तस्मात्पुत्रं देवी व्यजायत ॥ ३६ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया । सह तेन गरेणैव संजातः सगरोऽभवत् ॥ ३७ ॥
सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् । दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ ३८ ॥
भगीरथात्ककुत्स्थश्च ककुत्स्थाच्च रघुस्तथा । रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ॥ ३९ ॥
कल्माषपादोऽप्यभवत्तस्माज्जातस्तु शङ्खणः । सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ ४० ॥
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः । मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥ ४१ ॥
अम्बरीषस्य पुत्रोऽभून्नहुषश्च महीपतिः । नहुषस्य ययातिस्तु नाभागस्तु ययातिजः ॥ ४२ ॥
नाभागस्य बभूवाज अजाद्दशरथोऽभवत् । अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् । इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥ ४४ ॥
रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप । सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

३५ ] ति० टी०—गरेण सहितो जनिष्यतीत्यन्वयः । मा शुचः पतिमरणजं गरदानजं च शोकं त्यज पुत्रेणैव सुखिनी भविष्यसीति भावः ॥ ३५ ॥

गो० टी०—गरेण सपत्नीप्रयुक्तेन मा शुचः गरप्रयोगनिमित्तं शोकं मा कुर्वित्यर्थः ॥ ३३ ॥

३६ ] ति० टी०—' पतिना रहिता ' इति पाठे नाभाव आर्षः । तस्माच्च्यवनप्रसादात् । व्यजायतासूत ॥ ३६ ॥

रा० टी०—च्यवनवरप्रदानौत्तरकालिकं वृत्तमाह—च्यवनमिति । पतिव्रता अत एव शोकातुरा राजपुत्री देवी च्यवनं नमस्कृत्यैव तस्मात् च्यवनवरप्रदानात् पुत्रं व्यजायत अजनयत् । तुशब्द एवार्थे ' पतिना रहिता' इति पाठे नाभाव आर्ष इति भट्टाः ॥ ३४ ॥

गो० टी०—पतिशोकेति । अनेन तदनन्तरमेव दैवात्पतिर्मृत इति गम्यते । तस्मात् च्यवनानुग्रहात् ॥ ३४ ॥

३७–३८ ] ति० टी०—यतो गरेण सह जातोऽतः सगरो नाम्नाभवत् ॥ ३७ ॥ ३८ ॥

रा० टी०—स इति । गर्भजिघांसया यो गरः सपत्न्या तस्यै दत्तः तेनैव गरेण सह जातः अत एव सः सगरः सगरनामाऽभवत् । तुशब्दो हेत्वर्थकः ॥ ३५ ॥

गो० टी०—सपत्न्येति । अत्र य इत्यनुसंधेयं, जात इत्यनन्तरं तेनेत्यनुसंधेयम् ॥ ३५–३७ ॥

रा० टी०—सगरस्येति । सगरस्यासमञ्जः पुत्रोऽभवत् अथ अनन्तरमसमञ्जादंशुमान् अनन्तरमंशुमतो दिलीपः पुत्रः दिलीपस्य भगीरथः । तुशब्दोऽनन्तरार्थकः ॥ ३६ ॥

३९–४३ ] ति० टी०—प्रवृद्धस्तन्नामा पुरुषादकः वसिष्ठशापवशाद्राक्षसोऽभवत् । वसिष्ठाय प्रतिशापं दातुमुद्धृतं जलं स्वपत्न्यनुनयेन स्वपादयोर्विसृष्टवान् । ततः कल्माषवर्णपादस्तदाख्यश्चाभवत् ॥ ३९–४३ ॥

रा० टी०—भगीरथादिति । भगीरथात्ककुत्स्थः अनन्तरं ककुत्स्थात् तथा रघुः अनन्तरं रघोः पुत्रः तेजस्वी प्रवृद्धः प्रवृद्धनामाभवत् । अनन्तरं पुरुषादकः स एव वशिष्ठशापवशात् राक्षसोऽभवदित्यर्थः । तुशब्दश्चशब्दौ चानन्तरार्थकाः ॥ ३७ ॥

गो० टी०—प्रवृद्ध इति । पूर्वं प्रवृद्धाख्यः ततो वसिष्ठशापात् पुरुषादकः राक्षसभूतः ततः वसिष्ठं प्रति शापायोद्धृतजलस्य स्वभार्यानुनयात् स्वपदप्रक्षेपेण कल्माषपादाख्यः ॥ ३८ ॥ ३९ ॥

रा० टी०—स एव कल्माषपादः कल्माषपादाभिधोऽभवत् तत्र हेतुस्तु दत्तशापं वशिष्ठं प्रतिशप्तुमञ्जलौ जलं जग्राह अनन्तरं स्वपत्नीप्रार्थनया तज्जलं स्वपादे एव चिक्षेप तेन तस्य पादः कल्माषतां प्राप्त इति ग्रन्थान्तरादवगन्तव्यम् । अनन्तरं तस्मात्कल्माषपादात् शङ्खणो जातः । अनन्तरं शङ्खणस्य पुत्रः सुदर्शनो जातः सुदर्शनादग्निवर्णो जातः । हिचशब्दावनन्तरार्थकौ ॥ ३८ ॥

रा० टी०—शीघ्रग इति । अग्निवर्णस्य सुतस्तु शीघ्रगः शीघ्रगस्य सुतः मरुः मरोः सुतस्तु प्रशुश्रुकः आसीत् प्रशुश्रुकादम्बरीषः आसीत् । चशब्दस्त्वर्थकः ॥ ३९ ॥

रा० टी०—अम्बरीषस्येति । अम्बरीषस्य पुत्रः पृथिवीपतिर्नहुषोऽभूत् । नहुषस्य तु पुत्रो ययातिः ययातिजस्तु नाभागोऽभूत् । चशब्दस्त्वर्थकः ॥ ४० ॥

रा० टी०—नाभागादिति । नाभागात्तु अजो बभूव । अजाद्दशरथोऽभवत् । अस्माद्दशरथात् । भ्रातरौ रामलक्ष्मणौ जातौ ४१ ।

गो० टी०—नहुषययाती चन्द्रवंश्याभ्यामन्यौ । अत्र पुराणे क्रमवैषम्यं कल्पभेदादिति ज्ञेयम् ॥ ४० ॥ ४१ ॥

४४–४५ ] ति० टी०—यद्यपि वंशपरंपरा पुराणादिष्व-

---

१ ष्विति गो. रा. पाठः । २ पतिशोकातुरेति गो. रा. पाठः । ३ जातः स इति गो. रा. पाठः । ४ ककुत्स्थस्य रघुः सुत इति गो. पाठः । ५ चेति गो. रा. पाठः । ६ पृथिवीपतिरिति गो. रा. पाठः । ७ चेति गो. रा. पाठः । ८ नाभागात्त्विति रा. पाठः ।

## एकसप्ततितमः सर्गः ।

जनकः स्ववंशं प्रस्तुत्य रामलक्ष्मणाभ्यां सीतोर्मिलयोर्दानं प्रतिजज्ञे ।

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः । श्रोतुमर्हसि भद्रं ते कुलं नः परिकीर्तितम् ॥ १ ॥
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः । वक्तव्यं कुलजातेन तन्निबोध महामते ॥ २ ॥
राजाभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा । निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥ ३ ॥
तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः । प्रथमो जनको राजा जनकादप्युदावसुः ॥ ४ ॥
उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः । नन्दिवर्धसुतः शूरः सुकेतुर्नाम नामतः ॥ ५ ॥
सुकेतोरपि धर्मात्मा देवरातो महाबलः । देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥ ६ ॥
बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् । महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः ॥ ७ ॥
सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्मिकः । धृष्टकेतोश्च राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८ ॥
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः । प्रतीन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९ ॥
पुत्रः कीर्तिरथस्यापि देवमीढ इति स्मृतः । देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १० ॥
महीध्रकसुतो राजा कीर्तिरातो महाबलः । कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥
महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत । स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥

न्यथा दृश्यते, तथापि तत्र कल्पभेदेन विरोधपरिहारः एकस्यानेकनामकत्वाद्वा । आदीति आदितो ब्रह्माणमारभ्य वंशेन शुद्धानां वीराणां सत्यवादिनां संबन्धिनो रामलक्ष्मणयोरित्यर्थः ॥ ४५ ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

रा० टी०—वंशवर्णनप्रयोजनं वदन्नाह—आदीति । आदयः सोमवंशापेक्षया ज्येष्ठा वंशः विशुद्धो येषां ते एव ते इति कर्मधारयः तेषां परमधर्मिणामधर्मसंसर्गशून्यानामत एव सत्यवादिनामिक्ष्वाकुकुलजातानां वीराणां राज्ञां संबन्धिनोः रामलक्ष्मणयोः अर्थे नृपो दशरथस्त्वत्सुते वरयेत् अतः हे नरश्रेष्ठ ! सदृशाभ्यां रामलक्ष्मणाभ्यां सदृशे स्वसुते दातुं त्वमर्हसि । द्वयोरेकत्रान्वयः ॥ ४२ ॥ ४३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

गो० टी०—आदिवंशविशुद्धानामादित आरभ्य वंशेन विशुद्धानां राज्ञामिति संबन्धे षष्ठी । वरय इति । वरणस्य पुरोहितकृत्यत्वादिति भावः । सदृशे इति क्लीबभाव आर्षः ॥४२॥४३॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

१ ] ति० टी०—अथ जनकः कन्यापितृत्वाज्जामातृवर्गे प्रभुताया अनौचित्येन स्ववंशं स्वयमेवाह—एवमिति । ब्रुवाणं वसिष्ठम् । अस्माभिः परिकीर्तितं नोऽस्माकं कुलं श्रोतुमर्हसि ॥१॥

२–३ ] ति० टी०—कुलजातेन सत्कुलप्रसूतेन प्रदाने कन्यादानविषये कुलं वक्तव्यमित्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०—एवमिति । कृताञ्जलिः प्रणयसूचकबद्धयुगलकरः जनकः एवं ब्रुवाणं वशिष्ठं प्रत्युवाच । तद्वचनमेवाह—हे मुनिश्रेष्ठ ! परिकीर्तितं कथ्यमानं नः अस्माकं कुलं त्वं श्रोतुमर्हसि ते भद्रम् ॥ १ ॥

गो० टी०—एवं वसिष्ठेन वरवंशकीर्तनपूर्वकं वधूवरणे कृते जनकः स्ववंशविशुद्धताज्ञापनपूर्वकं कन्याप्रदानं प्रतिजानीते एकसप्ततितमे—एवंब्रुवाणमित्यादि ॥ १ ॥ २ ॥

रा० टी०—तत्र हेतुं वदन्नाह—प्रदान इति । हे मुनिश्रेष्ठ हे महामते ! प्रदाने कन्याप्रदानसमये कुलजातेन सत्कुलोद्भवेन पुंसा कुलं निरवशेषत एव वक्तव्यं तत्तस्माद्धेतोः निबोध उच्यमानमस्मत्कुलं शृणु हिरेवार्थे ॥ २ ॥

रा० टी०—राजेति । स्वेन कर्मणा त्रिषु लोकेषु विश्रुतः परमधर्मात्मा सर्वसत्त्ववतां वरः श्रेष्ठः निमिः राजा अभूत् ॥३॥

गो० टी०—सत्त्ववतां बलवताम् ॥ ३ ॥

४ ] ति० टी०—तस्य निमेः । मिथिनाम्ना च मिथिलेति । प्रथमो जनकः सर्वेषामस्माकं जनकशब्दव्यवहारार्थत्वे मूलभूतः ॥ ४ ॥

रा० टी०—तस्येति । तस्य निमेःपुत्रः मिथिर्नामाभूत् । प्रथमः अस्मत्पूर्वजः जनकः अस्मासु जनकशब्दव्यवहारप्रयोजकः मिथिपुत्रकः राजा जनकोऽभूत् । प्रशंसायां कन् । जनकादपि उदावसुः अभूत् ॥ ४ ॥

गो० टी०—प्रथम इति । मिथिमारभ्यास्माकं जनकसंज्ञेति भावः ॥ ४–६ ॥

५–१२ ] ति० टी०—नाम प्रसिद्धम् । नामतः सुकेतुरित्यर्थः ॥ ६–१२ ॥

१ आसीदिति रा० पाठः । २ मिथिला येन निर्मितेति गो० पाठः । ३ नामेति गो० पाठः । ४ त्विति गो० रा० पाठः । ५ प्रतिन्धक इति गो० पाठः ।

तस्य पुत्रद्वयं राज्ञो धर्मज्ञस्य महात्मनः। ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥
मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य पिता मम। कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४ ॥
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम्। भ्रातरं देवसंकाशं स्नेहात्पश्यन्कुशध्वजम् ॥ १५ ॥
कस्यचित्त्वथ कालस्य सांकाश्यादागतः पुरात्। सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥ १६ ॥
स च मे प्रेषयामास शैवं धनुरनुत्तमम्। सीता च कन्या पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥
तस्याप्रदानान्महर्षे युद्धमासीन्मया सह। स हतो विमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥
निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम्। सांकाश्ये भ्रातरं शूरमभ्यषिञ्चं कुशध्वजम् ॥ १९ ॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने। ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥ २० ॥

रा० टी०—उदावसोरिति। उदावसोस्तु धर्मात्मा नन्दिवर्धनो जातः। नन्दिवर्धनसुतः नन्दिवर्धनपुत्रस्तु शूरः सुकेतुर्नाम जातः नामतः प्रसिद्धमेतत्। वैशब्दस्त्वर्थे ॥ ५ ॥

रा० टी०—सुकेतोरिति। सुकेतोरपि धर्मात्मा महाबलो देवरातो जातः। राजर्षेर्देवरातस्य तु बृहद्रथः स्मृतः। इतिस्त्वर्थे॥६॥

रा० टी०—बृहद्रथस्येति। शूरः प्रतापवान् महावीरः महावीरनामा बृहद्रथस्य पुत्रोऽभूत्। धृतिमान् सत्यविक्रमः महावीरस्य पुत्रः सुधृतिः सुधृतिनामाभूत्॥ ७ ॥

रा० टी०—सुधृतेरिति। धर्मात्मा धर्मबुद्धिः अत एव सुधार्मिकः सुधृतेरपि पुत्रः धृष्टकेतुः राजर्षेर्धृष्टकेतोस्तु पुत्रः हर्यश्व इति विश्रुतः ॥ ८ ॥

गो० टी०—सुधृतिरित्यन्वर्थसंज्ञाज्ञापनार्थं विशेषणद्वयम् ७-१३

रा० टी०— हर्यश्वस्येति। श्रुतो विख्यातः हर्यश्वस्य पुत्रो मरुरभूत्। मरोः पुत्रः प्रतीन्धकः धर्मात्मा प्रतीन्धकस्य सुतः राजा कीर्तिरथः श्रुतः ॥ ९ ॥

रा० टी०—पुत्र इति। कीर्तिरथस्यापि पुत्रः देवमीढ इति स्मृतः देवमीढस्य विबुधः स्मृतः विबुधस्य पुत्रः महीध्रकः स्मृतः ॥१०॥

रा० टी०—महीध्रकेति। महाबलः राजा महीध्रकसुतः कीर्तिरातो व्यजायत। राजर्षेः कीर्तिरातस्य पुत्रो महारोमा व्यजायत ॥ ११ ॥

रा० टी०—महारोम्ण इति। महारोम्णस्तु स्वर्णरोमा व्यजायत। राजर्षेः स्वर्णरोम्णस्तु ह्रस्वरोमा व्यजायत ॥१२॥

१३ ] ति० टी०—तस्य ह्रस्वरोम्णः। ज्येष्ठोऽहम्। ममानुजः कुशध्वजः ॥ १३ ॥

रा० टी०—तस्येति। धर्मज्ञस्य महात्मनस्तस्य ह्रस्वरोम्णो राज्ञः पुत्रद्वयं जातं ज्येष्ठः तत्र पूर्वजोऽहं वीरः कुशध्वजो ममानुजो भ्राता ॥ १३ ॥

१४ ] ति० टी०—स मम पिता मां ज्येष्ठं तु राज्येऽभिषिच्य कुशध्वजं भारं भरणीयम्, यद्वा कुशध्वजं भारं राज्यभारं च मयि समावेश्य स्थापयित्वा वनं गत इत्यन्वयः ॥१४॥

रा० टी०—मामिति। नराधिपः पिता स ह्रस्वरोमा ज्येष्ठं मां राज्येऽभिषिच्य भारं राज्यपालनादि कुशध्वजं च मयि समावेश्य वनं गतः। तुश्चार्थे ॥ १४ ॥

गो० टी०—भारं भरणीयं पोषणीयमिति यावत् ॥ १४ ॥

१५ ] ति० टी०—धुरं राज्यभारम्। स्नेहात्पश्यन्पालयन् १५॥

रा० टी०—वृद्ध इति। वृद्धे पितरि स्वर्याते प्राप्ते सति देवसंकाशं भ्रातरं कुशध्वजं स्नेहात्पश्यन् सन् धर्मेण धुरं राज्यभारमहमावहम् ॥ १५ ॥

गो० टी०—धुरं राज्यभारम् ॥ १५ ॥

१६ ] ति० टी०—सांकाश्यमिति सुधन्वनगरनाम। अवरोधकोऽगमत् अवरोद्धुमागतवानित्यर्थः ॥ १६ ॥

रा० टी०—कस्येति। अथ अनन्तरं कस्यचित्कालस्यापगमे सति वीर्यवान् राजा सुधन्वा सांकाश्यात् सांकाश्याभिधात् पुरात्स्वनगरात् अवरोधकः सन्नेव मिथिलामगमत्। तुशब्द एवार्थे ॥ १६ ॥

गो० टी०—कस्यचित्कालस्य कस्मिंश्चित्काले गते अवरोधकः अवरोद्धुमित्यर्थः। "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल् ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—शैवं धनुः सीता च कन्या मह्यं दीयतामिति दूतान्प्रेषयामास मे इत्यन्वयः ॥ १७ ॥

रा० टी०—स इति। स मत्पुरावरोधक एव सुधन्वा अनुत्तमं शैवं धनुः पद्माक्षी सीता कन्या च मह्यमेव दीयतामिति वचनं प्रेषयामास दूतद्वारा कथयामासेत्यर्थः। चवैशब्दावेवार्थौ ॥१७॥

१८] ति० टी०—तस्योक्तवस्तुद्वयस्य। विमुखो युद्धविमुखः१८

रा० टी०—तस्येति। हे भगवन्! तस्य याचितपदार्थद्वयस्य अप्रदानान्मया सह युद्धमासीत्सुधन्वन इति शेषः। विमुखः पराजितः स राजा सुधन्वा मयैव रणे हतः। तु शब्दएवार्थे ॥१८॥

गो० टी०—तस्य सुधन्वनः अप्रदानात् सीताधनुषोरप्रदानात् ॥ १८ ॥ १९ ॥

१९-२० ] ति० टी०—सांकाश्ये सुधन्वनगरे ॥१९॥२०॥

रा० टी०—निहत्येति। हे मुनिश्रेष्ठ! नराधिपं तं सुधन्वानं निहत्य सांकाश्ये सुधन्वनगरे शूरं भ्रातरं कुशध्वजमहमभ्यषिञ्चम् ॥ १९ ॥

१ नराधिप इति गो. रा. पाठः। २ अगमादिति गो. रा. पाठः। ३ पुरेति रा. पाठः। ४ महर्षे इति गो. भगवन्निति रा. पाठः। ५ अभिमुख इति गो. पाठः। ६ वीरमिति गो. पाठः।

सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय वै[1] । वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ २१ ॥
द्वितीयामूर्मिलां चैव त्रिर्वदामि न संशयः । ददामि[2] परमप्रीतो वध्वौ ते मुनिपुंगव ॥ २२ ॥
रामलक्ष्मणयो राजन्गोदानं कारयस्व ह । पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३ ॥
मघा ह्यद्य महाबाहो तृतीयदिवसे प्रभो । फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु ॥
रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम् ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

रा० टी०–हे महामुने ! एष कुशध्वजः कनीयान् मे भ्राता अहं ज्येष्ठः । प्रासङ्गिकं समाप्य प्रकृतमाह–ददामीति । हे मुनिपुंगव ! परमप्रीतः स्वेप्सितप्राप्त्यातिप्रमोदविशिष्टोऽहं ते तुभ्यं वध्वौ स्नुषे ददामि तव समीपे वध्वौ स्नुते इति वा ॥ २० ॥

गो० टी०–ते वध्वौ ददामि स्नुषात्वेन ददामि वसिष्ठेन वरणात्ते ददामीत्युक्तम् ॥ २० ॥

२१ ] ति० टी०–ऊर्मिलां योनिजां निजपुत्रीम् ॥ २१ ॥

रा० टी०–दानकर्मीभूते विभजन्नाह–सीतामिति । सीतां रामाय ददामि ऊर्मिलां तु लक्ष्मणाय ददामि ते भद्रम् । वैत्वर्थे । अर्धं पृथक् भङ्ग्यन्तरेण पुनस्तदेव राजानं प्रत्याह–वीर्यशुल्कामिति । रघुनन्दन हे दशरथ ! वीर्यशुल्कां सुरसुतोपमां मम सुतां सीतां द्वितीयामूर्मिलां च परमप्रीतोऽहं त्रिर्ददामि अत्र संशयो नैव यतः परमप्रीतोऽहं ददामि अतस्ते वध्वौ । एवशब्दो हेत्वर्थे । सार्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

गो० टी०–वध्वावित्युक्तं व्यवस्थया दर्शयति–सीतामित्यर्धेन ॥ २१ ॥

गो० टी०–उक्तमर्थं सनिमित्तमुपपादयति–वीर्येति । वीर्यशुल्कामित्येतदूर्मिलाया अपि विशेषणं यद्यपि रामेणैव धनुर्भङ्गः कृतस्तथापि तादृशशक्तेर्लक्ष्मणेऽपि दर्शनात्तद्वीर्यमेव ऊर्मिलाया अपि शुल्कमित्यर्थः ऊर्मिला जनकस्यौरसपुत्री त्रिः त्रिवारं त्रिभिः करणैर्वा ॥ २२ ॥

२२ ] ति० टी०–त्रिर्वदामि उक्तमपि दार्ढ्यायेत्याशयः ॥ २२ ॥

२३ ] ति० टी०–गोदानं समावर्तनम् । वैवाहिकं विवाहादौ कर्तव्यम् । पितृकार्यं नान्दीमुखश्राद्धम् ॥ २३ ॥

रा० टी०–विवाहोचितक्रियाप्रवृत्त्यै राजानं प्रार्थयन्नाह–रामेति । हे राजन् ! रामलक्ष्मणयोर्गोदानं तदुपलक्षितसमावर्तनोचितं कर्म कारयस्व ततोऽनन्तरं वैवाहिकं विवाहोचितं पितृकार्यं च कुरु । ह अतीव हर्षः ॥ २३ ॥

गो० टी०–गोदानं नाम विवाहपूर्वसमयनियतं किंचित्कर्म गावः केशाः दोःपादमूलरोमाणि च यत्र खण्ड्यन्ते तदेतद्गोदानं नाम समावर्तनाख्यं कर्मेत्याहुः वैवाहिकं पितृकार्यं नान्दीश्राद्धम् ॥ २३ ॥

२४ ] ति० टी०–अद्य तृतीयदिवसे तव मिथिलाप्रवेशात्तृतीयदिवसे यज्ञसमाप्तेस्तृतीयदिवसे वाद्य मघानक्षत्रम् । फल्गुन्यां पूर्वफल्गुनीनक्षत्रे । उत्तरे श्रेष्ठे । अत एव ' भगो यत्र प्रजापतिः ' इत्यनेनाविरोधः । भगो हि पूर्वफल्गुनीदेवः, उत्तरफल्गुन्यास्त्वर्यमेति बोध्यम् । वैवाहिकं विवाहम् विनयादित्वाट्ठक् । " मघानक्षत्रं पितरो देवताः, फल्गुनीनक्षत्रमर्यमा देवता, फल्गुनीनक्षत्रं भगो देवता " इति तैत्तिरीयसंहितायाम् । " अर्यम्णः पूर्वे फल्गुनी भगस्योत्तरे " इति तद्ब्राह्मणे चोक्तत्वेन यथाश्रुतमेव सम्यगिति तत्त्वम् । उत्तरे इति पुंस्त्वमार्षम् । यद्यप्युत्तराफल्गुनी सीताया जन्मर्क्षं तथापि तदृक्षे प्रथमचरणं विहाय तज्जन्मसत्त्वेन तस्याः कन्याराशित्वात्तृतीयैकादशरूपभकूटशुद्धेस्तस्य न दोषः भकूटशुद्धौ तत्र दुष्टमिति ज्योतिःशास्त्रे प्रसिद्धम् । किंच पूर्वास्तु तस्या द्वादशश्चन्द्र इति तत्र विवाहोऽनुचित एव । एकनाडीदोषेण च रामसीतयोर्वियोग इति ध्येयम् । रामलक्ष्मणयोरर्थे तदभ्युदयाय । सुखोदर्कं सुखोदर्कम् दानं गोभूतिलहिरण्यादेर्दानं कार्यम् त्वयेति शेषः २४ ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

रा० टी०–विवाहोचितमुहूर्तं बोधयन्नाह–मघेति । हे महाबाहो हे राजन् ! अद्यास्मिन् समये मघानक्षत्रमस्ति अतः तृतीयदिवसे तस्मिन् विवाहोचिते उत्तरे फल्गुन्यामुत्तराफल्गुनीनक्षत्रे वैवाहिकं विवाहं कुरु विनयादित्वात् स्वार्थे ठक् । अत्र ' भगो यत्र प्रजापतिः ' इति वक्ष्यमाणानुरोधेन फल्गुन्यां पूर्वफल्गुनीनक्षत्रे उत्तरे श्रेष्ठे इत्यर्थौ भट्टैर्व्याख्यातः तस्यात्र त्यागस्तु पूर्वफल्गुन्याः वैवाहिकत्वाभावात् ' भगो यत्र प्रजापतिः' इत्यनेन यथा न विरोधस्तथा तत्रैव वक्ष्यामः अत्र राजकर्तृकवंशकथनात् हर्षातिशयः सूचितः ॥ २४ ॥

रा० टी०–रामेति । रामलक्ष्मणयोरर्थे सुखोदयं दानं कार्यम् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

गो० टी०–तृतीये भाविनि फल्गुन्यां फल्गुन्याख्याके उत्तरे उत्तरनक्षत्रे वैवाहिकं विवाहप्रयोजनं " तदस्य प्रयोजनम् " इति ठक् । दानं गोभूतिलहिरण्यादिदानं सुखोदयं सुखोदर्कं वधूवरयोरतिशयावहमित्यर्थः कार्यमिति सामान्योक्त्या मयापि कन्यार्थं क्रियत इति सूचितं, कन्यादाने उत्तरफल्गुन्याः

---

१ चेति गो. पाठः । २ ददामीति गो. रा. पाठः । ३ नैतदर्धं गो. पाठे । ४ रघुनन्दन इति रा. पाठः । ५ तृतीये इति गो. रा. पाठः ।

## द्विसप्ततितमः सर्गः ।

वसिष्ठविश्वामित्रौ कुशध्वजसुते भरतशत्रुघ्नार्थं वरयामासतुः जनकस्तदनुमत्य प्राशंसद्दशरथश्च सुतानां गोदानादिकाः क्रियाश्चकार ।

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः । उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥
अचिन्त्यान्यप्रमेयाणि[1] कुलानि नरपुंगव । इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥
सदृशो धर्मसंबन्धः सदृशो रूपसंपदा । रामलक्ष्मणयो राजन्सीता चोर्मिलया सह ॥ ३ ॥
वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम । भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ॥ ४ ॥
अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि । सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५ ॥
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः । वरये[2] ते सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥

प्रशस्तत्वमुक्तं ज्योतिषे 'त्रीण्युत्तराण्यपि तथार्कमघानुराधामूलान्यसोमकमलोद्भवभान्युडूनि' इति ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

१ ] ति० टी०—वीरं जनकम् ॥ १ ॥

रा० टी०—जनककर्तृकवृत्तकथनानन्तरकालिकं वृत्तमाह—तमिति । वशिष्ठसहितो महामुनिर्विश्वामित्रः उक्तवन्तं कथितवाक्यं वीरं वैदेहं तं नृपं वचनमुवाच ॥ १ ॥

गो० टी०—अथ विश्वामित्रेण भरतशत्रुघ्नार्थे कुशध्वजसुतावरणं गोदानकरणं च द्विसप्ततितमे—तमुक्तवन्तमित्यादि । नृपं जनकम् ॥ १ ॥

२ ] ति० टी०—एषां तुल्यः परस्परव्यतिरेकेणापरो नास्ति २॥

रा० टी०—तद्वचनमेवाह—अचिन्त्यानीति । हे नरपुंगव ! इक्ष्वाकूणां विदेहानां च कुलानि अचिन्त्यानि अतिशुद्धत्वेन विवाहार्थं संदेहानर्हाणि अप्रमेयाणि इयत्तारहितप्रभावविशिष्टानि च अतः एषां वंशद्वयोद्भवानां तुल्यः अन्यः कश्चन नास्ति एषामेव परस्परं सादृश्यमिति तात्पर्यम् तेनावश्यमयं विवाहः कर्तव्य इति व्यञ्जितम् ॥ २ ॥

गो० टी०—अचिन्त्यानीत्यादि । अचिन्त्यानि आश्चर्यभूतानि अप्रमेयानि अपरिच्छेद्यमहिमानि एषामिक्ष्वाकुविदेहानां तुल्यः कश्चन नास्ति यतः अतः कारणादचिन्त्यत्वमप्रमेयत्वं चेति भावः ॥ २ ॥

३ ] ति० टी०—धर्मसंबन्धो युवयोर्विवाहसंबन्धः सदृशोऽनुरूपः । किं च ऊर्मिलया सह वर्तमाना या सीता तस्या *यथायोग्ययो रामलक्ष्मणयोर्यः संबन्धः स्वरूपसंपदा सदृशः । 'सीतयोर्मिलया' इति पाठस्तु सुगम एव ॥ ३ ॥

रा० टी०—वंशयोः सादृश्यमुक्त्वा कन्यावरयोः सादृश्यं बोधयन्नाह—सदृश इति । हे राजन् ! या सीतास्ति तया ऊर्मिलया च रूपसंपदा रूपेण संपदा च सदृशस्तुल्ययोः रामलक्ष्मणयोः धर्मसंबन्धो धर्महेतुको विवाहः सदृशः वंशद्वयविवाहानुरूपः अत एव ह हर्षावहः ॥ ३ ॥

गो० टी०—सदृश इति । सीता ऊर्मिलया सह रामलक्ष्मणयोर्दीयते इति यत् अयं धर्मसंबन्धः धर्मेण संबन्धः यौनसंबन्धः इति यावत् सदृशः रूपसंपदा च सदृशः यद्वा अयं करिष्यमाणो धर्मसंबन्धः सदृशः उभयकुलसदृशः रूपसंपदा च सदृशः तुल्यरूपयोर्विवाह इत्यर्थः । अत्र हेतुमाह—रामेति । सीता-ऊर्मिलया सह रामलक्ष्मणयोः यतः सदृशीत्यनुषङ्गः । यद्वा सीता ऊर्मिलया सह रामलक्ष्मणयोः चकाराद्रामलक्ष्मणौ च सीतोर्मिलयोः रूपसंपदा सदृशः शकारान्ते बहुवचनमतः सदृशो धर्मसंबन्ध इत्यर्थः ॥ ३ ॥

४–५ ] ति० टी०—किंचिदन्यद्वक्तव्यमस्ति तच्छ्रूयतामित्यन्वयः ॥ ४ ॥ ५ ॥

रा० टी०—वक्तव्यमिति । हे नरश्रेष्ठ जनक ! वक्तव्यं वचनाहं मम वचनं त्वया श्रूयताम् । किंतद्वचनमित्यत आह—हे राजन् धर्मज्ञ ! एष राजा कुशध्वजो यतो यवीयान् कनिष्ठस्ते भ्राता अतो हे नरश्रेष्ठ ! भुवि रूपेण अप्रातिममसदृशं धर्मात्मनोऽस्य कुशध्वजस्य सुताद्वयं पत्न्यर्थं वरयामहे ॥ ४ ॥ ५ ॥

गो० टी०—वक्तव्यं चेति । अन्यद्वक्तव्यं किंचिदस्ति तदपि श्रूयतामित्यर्थः ॥ ४ ॥ ५ ॥

६ ] ति० टी०—कयोः पत्नीत्वार्थं तत्राह—भरतस्येत्यादि । आद्यार्धं पूर्वान्वयि । तथा ते सुते सीतोर्मिले तयोरर्थे रामलक्ष्मणयोरर्थे ॥ ६ ॥

रा० टी०—कस्य पत्न्यर्थमित्यत आह—भरतस्येति । हे राजन् ! तयोः प्रसिद्धयोर्महात्मनोः धीमतः कुमारस्य भरतस्य शत्रुघ्नस्य च अर्थे ते सुते वरये ॥ ६ ॥

गो० टी०—पत्न्यर्थमित्युक्तं कयोरित्याकाङ्क्षायां तदुपपादयन्नाह—भरतस्येति । भरतस्य शत्रुघ्नस्य च तयोरुभयोरर्थे इत्यन्वयः ॥ ६ ॥ ७ ॥

१ अप्रमेयानीति गो. पाठः । २ वरयाम सुते इति गो. पाठः । * अव्ययीभावे कथं षष्ठी ।

पुत्रा दशरथस्येमे[1] रूपयौवनशालिनः । लोकपालसमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥
उभयोरपि राजेन्द्र संबन्धेनानुबध्यताम् । इक्ष्वाकुकुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा । जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ॥ ९ ॥
कुलं धन्यमिदं मन्ये येषां तौ मुनिपुंगवौ । सदृशं कुलसंबन्धं यदाज्ञापयतः स्वयम् ॥ १० ॥
एवं भवतु भद्रं वः कुशध्वजसुते इमे । पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥
एकाह्ना राजपुत्रीणां चतसृणां महामुने । पाणीन्गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२ ॥
उत्तरे दिवसे ब्रह्मन्फल्गुनीभ्यां मनीषिणः । वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३ ॥

७ ] ति० टी०—दशरथपुत्रेषु न कस्मिन्नपि वरगुणन्यूनतेत्याह—पुत्रा इति ॥ ७ ॥

रा० टी०—चतुर्णामपि विवाहयोग्यतेत्याह—पुत्रा इति । रूपयौवनशालिनः लोकपालसमाः देवाः ब्रह्मादयः तुल्यपराक्रमा येषामत एव लोकपालाः ब्रह्मादयः समा येषां ते सर्वे एते दशरथस्य पुत्राः सन्तीति शेषः । एतेनैष्वेव भवत्सुताविवाहयोग्यतेति परिसंख्यालंकारो ध्वनितः ॥ ७ ॥ ८ ॥

८-९ ] ति० टी०—उभयोर्भ्रात्रोः संबन्धेनेक्ष्वाकुकुलं संबध्यताम् तत्र च संबन्धे पुण्यकर्मणो भवतोऽव्यग्रं चित्तं भवत्विति शेषः । कथमीदृशेन महाराजेन युगपन्मया संबन्धचतुष्टयं कार्यमिति व्यग्रता मास्त्वित्यर्थः ॥ ८ ॥ ९ ॥

गो० टी०—उभयोरिति । उभयोर्द्वयोः संबन्धेन कुलद्वयमप्यनुबध्यतामित्यर्थः भवतः कुलमित्यनुकर्षः अव्यग्रं निर्दोषं अन्योन्यसंबन्धेनान्योन्यमुत्कर्षं प्राप्नुयादित्यर्थः ॥ ८ ॥

रा० टी०—विश्वामित्रेति । तदा विश्वामित्रोक्तिकाले वसिष्ठस्य मते विद्यमानं विश्वामित्रवचो वचनं श्रुत्वा प्राञ्जलिर्जनको मुनिपुंगवौ वसिष्ठविश्वामित्रौ वाक्यमुवाच ॥ ९ ॥

गो० टी०—वसिष्ठस्य मते वसिष्ठानुमत इत्यर्थः ॥ ९ ॥

१० ] ति० टी०—स्वयम्, न तु शिष्यादिमुखतः, यद्यस्मादाज्ञापयतस्तस्मादिदं कुलं धन्यं मन्ये ॥ १० ॥

रा० टी०—तद्वाक्यमेवाह—कुलमिति । यद्यस्मात् येषां नोऽस्माकं कुलसंबन्धं सदृशमिक्ष्वाकुवंशानुरूपं मुनिपुंगवौ युवां स्वयमाज्ञापयतस्तस्मात् तेषां नः इदं कुलं धन्यं मन्ये ॥ १० ॥

गो० टी०—कुलमिति । यद्यस्मात् मुनिपुंगवौ युवां येषां नः कुलसंबन्धमिक्ष्वाकुवंशेन यौनसंबन्धं स्वयं शिष्यमुखं विना आज्ञापयथः तस्मात्तेषां नः इदं कुलं धन्यं भाग्यशालीति मन्ये १०॥

११ ] ति० टी०—सहितौ नित्यसहचरौ । अत्र क्रमे न तात्पर्यम् ॥ ११ ॥

रा० टी०—एवमिति । इमे कुशध्वजसुते पत्न्यौ सहितौ नित्यसाहित्यविशिष्टौ उभौ शत्रुघ्नभरतौ भजेताम् एवं वो भद्रं भवतु ॥ ११ ॥

गो० टी०—पत्न्यौ भजेतां पत्नीत्वेन भजेतां सहितौ सदा सहचरौ ॥ ११ ॥

१२ ] ति० टी०—एकाह्नेति टजभावोऽनित्याः समासान्ता इति । सप्तम्यर्थे तृतीया एकदिवसे इत्यर्थः । चतसृणामिति दीर्घत्वमार्षम् ॥ १२ ॥

रा० टी०—एकेति । हे महामुने ! चतसृणां राजपुत्रीणाम् पाणीन् महाबलाः चत्वारो राजपुत्राः एकाह्ना एकस्मिन्नेव दिने इत्यर्थः गृह्णन्तु । समासान्तविधेरनित्यत्वाट्टजभावः न तिसृचतसृ निषेधाप्रवृत्तिस्त्वत एव ज्ञापकात् ॥ १२ ॥

गो० टी०—एकाह्नेति । *एकाह्नेत्यजभाव आर्षः । सप्तम्यर्थे तृतीया । चतसृणामिति "छन्दस्युभयथा" इति पक्षे दीर्घः॥१२॥

१३ ] ति० टी०—फल्गुनीभ्यामुत्तरफल्गुनीभ्यामुपलक्षिते उत्तरे दिवसे द्वितीये दिवसे । प्रजापतिर्देवता । प्राशस्त्यं च विवाह [प्रयोजन] प्रजोत्पत्तिसाधनयोनिलिङ्गाधिष्ठातृभगदैवत्यत्वेनेति कतकः ॥ १३ ॥

रा० टी०—वैवाहिकदिवसनियममाह—उत्तरे इति । हे ब्रह्मन् ! यत्र ययोः भगः प्रजापतिरर्यमा च स्थितः ताभ्यां फल्गुनीभ्यां पूर्वफल्गुन्युत्तरफल्गुनीभ्यां विशिष्टयोर्दिवसयोरुत्तरे उत्तरफल्गुनीविशिष्टे दिवसे वैवाहिकं विवाहं मनीषिणो ज्योतिःशास्त्राभिज्ञाः प्रशंसन्ति । विनापि चं समुच्चयः । विशिष्टयोर्दिवसयोरित्यध्याहृतम् ॥ १३ ॥

गो० टी०—उत्तरे फल्गुनीभ्यामुपलक्षितयोरुत्तरस्मिन् दिवसे उत्तरफल्गुन्यामित्यर्थः । यद्वा फल्गुनीभ्यामिति सप्तम्यर्थे चतुर्थी फल्गुन्यामुत्तरे फल्गुन्याख्ये उत्तरनक्षत्र इत्यर्थः । प्रशस्ततायां हेतुः—भग इति भगः प्रजापतिः प्रजोत्पत्तिस्थानयोनिलिङ्गाधिष्ठाता देवता । ननु 'एकस्मिंस्तु गृहे कुर्यादेकामेव शुभक्रियाम् । अनेकां यस्तु कुरुते स नाशमधिगच्छति' इति ज्योतिःशास्त्रे एकगृहे अनेकोत्सवनिषेधो दृश्यत इति चेत् मतान्तरे एकगृहे भ्रातॄणामेकदोत्सवस्य विहितत्वात् । उक्तं हि दैवज्ञविलासे 'भिन्नोदरोदयवतामुद्वाहे कल्पयेत्पृथग्वेदिम् । एकगृहे जगुरार्या मण्डपमेकं पराशरेणोक्तम्' इति नन्वेवमपि लक्ष्मणशत्रुघ्नयोः कथमेकदा विवाहः 'एकमातृप्रसूतानामेकस्मिन्नेव वत्सरे । विवाहं मौञ्जिबन्धं च चूडाकर्म न कारयेत्' इति निषेधादिति चेत् सत्यं एकस्मिन् दिने तु कर्तव्य एव । उक्तं हि दैवज्ञविलासे—'भ्रातृद्वये स्वसृयुगे भ्रातृस्वसृयुगे तथा । स-

१ एते इति रा. पाठः । २ इक्ष्वाकोरिति गो. पाठः । ३ नो इति गो. रा. पाठः । ४ ज्ञापयथ इति गो. पाठः । ५ ते इति रा. पाठः । * टजभाव इति युक्तम् ।

एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः । उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४ ॥
परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोस्तथा । इमान्यासनमुख्यानि आस्यतां मुनिपुंगवौ ॥ १५ ॥
यथा दशरथस्येयं तथाऽयोध्या पुरी मम । प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥ १६ ॥
तथा ब्रुवति वैदेहे जनके रघुनन्दनः । राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥
युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ । ऋषयो राजसंघाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामः स्वमालयम् । श्राद्धकर्माणि [4]विधिवद्विधास्य इति चाब्रवीत् ॥ १९ ॥
तमापृष्ट्वा नरपतिं राजा दशरथस्तदा । मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥
स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः । प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥

मानाश्च क्रियाः कुर्युर्मातृभेदे तथैव च ॥ एकस्मिन् दिवसे त्वेकलग्ने भिन्नांशके तयोः । एकगर्भोदयवतोर्विवाहः शुभकृद्भवेत्' इति एकोदरयोरप्येकगृहे विवाहकरणवचनं द्रष्टव्यम् ॥ १३ ॥

१४ ] ति० टी०—प्रत्युत्थायासनादुत्थाय ॥ १४ ॥

रा० टी०—एवमिति । एवं सौम्यं वच उक्त्वा कृताञ्जलिः राजा जनकः प्रत्युत्थाय उभौ मुनिवरौ वाक्यमब्रवीत् ॥१४॥

गो० टी०—प्रत्युत्थाय आदरातिशयेनेति भावः ॥ १४ ॥

१५ ] ति० टी०—परो धर्मः कन्यादानरूपः । अहं भवतोः शिष्योऽस्मि तथा यथा दशरथश्च युवयोः शिष्यः । स्वस्य शिष्यत्वे कनीयसः कुशध्वजस्य शिष्यत्वमर्थसिद्धम् । आसनमुख्यानि त्रयाणां त्रीणि सिंहासनानि । आस्यतामित्यार्षं परिपालयेतामित्यर्थकम् । राज्यत्रयमपि युष्मदीयमित्यर्थः ॥ १५ ॥

रा० टी०—तद्वाक्यमेवाह—पर इति । मह्यं परः अत्युत्कृष्टः धर्मः रामादिविवाहरूपः कृतः संपादित उपदिष्ट इत्यर्थः । अतः सदा इतःप्रभृति सर्वस्मिन् काले भवतोः शिष्योऽस्मि अत इमानि मत्समर्पितानि आसनमुख्यानि गुरूचितासनानि मुनिपुंगवौ युवाम् आस्येताम् । गुरुत्वादासनयोर्बहुत्वम् आसनबाहुल्याद्वा । 'आस्यताम्' इति भट्टसंमतः पाठः । एकत्वमार्षमिति तैरुक्तम् ॥ १५ ॥

गो० टी०—परो धर्मः कन्याप्रदानरूपः ॥ १५ ॥

गो० टी०—इमानीति । सार्धश्लोक एकान्वयः । मद्भ्रातुर्मम दशरथस्य च यान्यासनमुख्यानि सिंहासनानि तानि युवामासातां पुरुषव्यत्यय आर्षः विनयाय प्रथमपुरुषो वा । राज्यत्रयमपि युष्मदीयमित्यर्थः । ननु दशरथसिंहासनं कथं त्वया शक्यं दातुं तत्राह—यथेति । इयं मिथिला यथा दशरथस्येष्टविनियोगार्हा तथा अयोध्या च मम तथा च युवयोः प्रभुत्वे संदेहो नास्ति अतो यथार्हं यथोचितं प्रभुत्वं कर्तुमर्हथ पूजायां बहुवचनम् वयं सर्वे भवदधीनाः यूयमेवास्माक त्रयाणां हितमुपदिश्य यथोचितं प्रकृतकार्यं कर्तुमर्हथेत्यर्थः ॥ १६ ॥

१६ ] ति० टी०—ननु दशरथसिंहासनं कथं त्वया शक्यदानमत आह—यथेति । यथेयं मिथिला दशरथस्य यथेष्टविनियोगार्हा, एवमयोध्यापुरी मम अतो युष्माकं त्रिसिंहासनप्रभुत्वे नास्ति संदेहः अतो यथायोग्यं प्रभुत्वं कर्तुमर्हथ । पूजायां बहुवचनम् वयं सर्वे भवदधीना इत्याशयः ॥ १६ ॥

रा० टी०—यथेति । यथा दशरथस्य पुरी अयोध्या तथा दशरथस्य पुरी ममेयं मिथिला अतः प्रभुत्वे पुरीद्वयनिरूपितदशरथस्वामित्वे संदेहः संशयो नास्ति अतः यथार्हं यथायोग्यं कर्तुमर्हथ यूयमिति शेषः पूजार्थं बहुवचनम् ॥ १६ ॥

१७ ] ति० टी०—हृष्टः एवमैक्यवादेनेति शेषः ॥ १७ ॥

रा० टी०—तथेति । वैदेहे जनके तथा ब्रुवति सति हृष्टो रघुनन्दनो राजा दशरथः महीपतिं जनकं प्रत्युवाच ॥१७॥

गो० टी०—हृष्ट इति । एवमेकवाक्यवादेनेति शेषः॥१७—२०॥

१८ ] ति० टी०—ऋषिरूपा भवद्वंश्या राजसंघास्ते भवद्भ्यामभिपूजिता अनेन विनयेन सर्वोत्कर्षं प्रापिताः भवद्वंशे एवैवं विनीतो नायमपूर्वोऽर्थस्त्वयीति भावः ॥ १८ ॥

रा० टी०—तत्प्रतिवचनमेवाह—युवामिति । हे मिथिलेश्वरौ ! युवां भ्रातरौ असंख्येयगुणौ अत एव ऋषयो राजसंघाश्च भवद्भ्यामभिपूजिता अतिसत्कृतिं प्राप्ताः ॥ १८ ॥

१९ ] ति० टी०—क्षत्रियत्वेऽपि प्रतिग्रहीतृत्वाद्दातरि जनके आशीः स्वस्तीत्यादि ॥ १९ ॥

रा० टी०—स्वस्तीति । त्वं स्वस्ति प्राप्नुहि स्वसुतादानेन मङ्गलं प्रापय अन्तर्भावितणिजर्थः । ते भद्रम् स्वमालयं निवासस्थानं गमिष्यामि । स्वालयगमने प्रयोजनमाह—श्राद्धकर्माणि विधिवदेव विधास्ये इत्यब्रवीत् दशरथ इति शेषः । चशब्द एवार्थे किंच त्वं स्वस्ति प्राप्नुहि अहं ते दत्तं स्वमालयं गमिष्यामि ॥ १९ ॥

२० ] ति० टी०—आपृष्ट्वापृच्छ्य ॥ २० ॥

रा० टी०—तमिति । तदा तस्मिन् समये महायशाः राजा दशरथः तं नरपतिं जनकमापृष्ट्वा आपृच्छ्य तौ मुनीन्द्रौ वशिष्ठविश्वामित्रौ पुरस्कृत्य आशु जगाम ल्यबभाव आर्षः॥२०॥

२१ ] ति० टी०—प्रभात उत्थाय काल्यं प्रातःकालकर्तव्यं गोदानाख्यं कर्म चक्रे ॥ २१ ॥

रा० टी०—स इति । स राजा दशरथः निलयं गत्वा

१ तदेति गो. रा. पाठः । २ आसातामिति गो. आस्येतामिति रा. पाठः । ३ गमिष्यामीति गो. रा. पाठः । ४ सर्वाणि विधास्यामीतीति गो. पाठः ।

गवां शतसहस्रं च ब्राह्मणेभ्यो नराधिपः । एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥
सुवर्णशृङ्ग्यः संपन्नाः सवत्साः कांस्यदोहनाः । गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥
वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः । ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥
स सुतैः कृतगोदानैर्वृतः सैन्नृपतिस्तदा । लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः ।

जनकः कृतमाङ्गलिकवेषैः कुमारैः सह दशरथं विवाहमण्डपं निनाय । वसिष्ठो विश्वामित्रशतानन्दौ पुरस्कृत्य वैवाहिकमुपचक्राम । धृतदानोदका रामादयः सीतादिपाणीञ्जगृहुः प्राप्तमोदाश्च देवाः नृत्यगानपुरःसरं सुरतरुकुसुमानि ववृषुः ।

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् । तस्मिंस्तु दिवसे वीरो युधाजित्समुपेयिवान् ॥ १ ॥
पुत्रः केकयराजस्य साक्षाद्भरतमातुलः । दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥
केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् । येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३ ॥

---

विधानतः श्राद्धं कृत्वा प्रभाते उत्थाय काल्यं प्रातःकालकर्तव्यमुत्तमं गोदानाभिधं कर्म चक्रे ॥ २१ ॥

गो० टी०—काल्यं काले कर्तव्यं गोदानं समावर्तनम् ॥२१॥

२२ ] ति० टी०—तदङ्गत्वेन प्रसिद्धगोदानमाह—गवामित्यादि । एकैकश इत्यार्षम् ॥ २२ ॥

रा० टी०—तत्कर्माङ्गीभूतं गोदानं वदन्नाह—गवामिति । राजा पुत्रात्यनुरागविशिष्टो नराधिपो दशरथः एकैकशः पुत्रानुद्दिश्य ब्राह्मणेभ्यो धर्मतः गवां शतसहस्राणि ददौ । एकैकश इत्यत्र उक्तार्थानामितिन्यायाप्रवृत्तिस्तु द्वौ ब्राह्मणावित्यादाविव द्विर्बद्धं सुबद्धं भवतीति स्वीकारात् आर्ष इत्युक्तिस्तु तदविचारमूलका ॥ २२ ॥

गो० टी०—तदङ्गदानान्याह—गवामित्यादि ॥ २२ ॥

२३ ] ति० टी०—संपन्ना बहुदुग्धाः । ईदृश्यो या गावस्तासां गवां चत्वारि लक्षाणि ददावित्युत्तरेणान्वयः ॥ २३ ॥

२४ ] ति० टी०—गोदानं तदाख्यं कर्मविशेषम् । 'गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते । अङ्कोपवेशनं नास्ति श्मश्रूणां मुण्डनं भवेत् ॥ स्नात्वा च वाग्यतस्तिष्ठन्नहःशेषं नयेदथ । आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः ॥ अहं वरं ददामीति दद्याद्गोमिथुनं ततः ॥' इत्याश्वलायनकारिकायाम् । इदं समावर्तनपूर्वाङ्गम् ' वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा । गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ॥' इति याज्ञवल्क्यात् ॥ २४ ॥

रा० टी०—गोदानप्रकारं वदन्नाह—सुवर्णेति । पुत्रवत्सलः पुरुषर्षभो रघुनन्दनो दशरथः सुवर्णशृङ्गाः संपन्नाः सवत्साः वत्ससहिताः कांस्यदोहनाः या गावः तासां गवां चत्वारि शतसहस्राणि ददौ पुत्राणां गोदानमुद्दिश्य सुबहु वित्तमन्यच्च द्विजेभ्यो ददौ । द्वयोरेकत्रान्वयः ॥ २३ ॥ २४ ॥

गो० टी०—संपन्नाः क्षीरसंपन्नाः कांस्यदोहनाः कांस्यमयदोहनपात्राः सुबहु अन्यद्वित्तं च ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—सौम्यः सोम इव सोम्यः सोम्य एव सौम्यः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

रा० टी०—स इति । तदा गोदानोत्तरकाले कृतगोदानैः सुतैर्वृतः सन् स नृपतिः लोकपालैर्वृतः सौम्यः सोमः प्रजापतिरिवाभाति । सौम्यशब्दः स्वार्थष्यञन्तः ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

गो० टी०—सौम्यः सुप्रसन्नचित्तः ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

१–२] ति० टी०—समुपेयिवान् दशरथमिति शेषः ॥१–२॥

रा० टी०—यस्मिन्निति । यस्मिन्दिवसे राजा दशरथः उत्तमं गोदानं चक्रे तस्मिन्नेव दिवसे समुपेयिवान् आगतः वीरः केकयराजस्य साक्षादेव पुत्रः भरतमातुलो युधाजित् राजानं दशरथं दृष्ट्वा कुशलं पृष्ट्वा चेदं वचनमब्रवीत् । श्लोकद्वयमेकान्वयि तुशब्दावेवार्थौ ॥ १ ॥ २ ॥

गो० टी०—अथ सीताविवाहस्त्रिसप्ततितमे—यस्मिन्नित्यादि ॥ १ ॥

गो० टी०—साक्षात्पदेन भिन्नोदरमातुलोऽप्यस्तीति गम्यते ॥ २ ॥

३ ] ति० टी०—केकयाधिपतिर्युधाजित्पिता कुशलमब्रवीदिति युष्मान्प्रतीति शेषः । येषामस्माकं त्वं कुशलकामोऽसि तेषामस्माकं संप्रत्यनामयमिति चाब्रवीत् ॥ ३ ॥

---

१ शतसहस्राणीति गो. रा. पाठः । २ शृङ्गा इति गो. रा. पाठः । ३ स्विति गो. पाठः ।

स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः । तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४ ॥
श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् । मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५ ॥
त्वरयाभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् । अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥ ६ ॥
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् । ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ॥ ७ ॥
प्रभाते पुनरुत्थाय कृत्वा कर्माणि तत्त्ववित्[1] । ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ८ ॥
युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः । भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९ ॥
वसिष्ठं तु[2] पुरस्कृत्वा महर्षीनपरानपि । वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ॥ १० ॥
राजा दशरथो राजन्कृतकौतुकमङ्गलैः । पुत्रैर्नरवरश्रेष्ठो[3] दातारमभिकाङ्क्षते ॥ ११ ॥
दातृप्रतिग्रहीतृभ्यां सर्वार्थाः संभवन्ति हि । स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ॥ १२ ॥

---

रा० टी०—तद्वचनमेवाह—केकय इति । केकयाधिपतिः राजा स्नेहात्कुशलं भवत्कुशलमहमाकाङ्क्षे इत्यादिवचनमब्रवीत् । येषां केकयानां अस्माकं त्वं कुशलकामोऽसि तेषां संप्रतीदानीमनामयं कुशलमस्ति । 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफावहा' इतिवत् सर्वनाम्ना विशेषणीभूतकेकयपरामर्शः ॥ ३ ॥

गो० टी०—केकयाधिपतिः स्वपिता अनामयं कुशलं विषयत इति शेषः ॥ ३ ॥

४-५] ति० टी०—आगमनप्रयोजनमाह—स्वस्रीयमिति । स्वस्रीयं भरतम् ॥ ४ ॥ ५ ॥

रा० टी०—स्वस्रीयमिति । हे रघुनन्दन ! हे राजेन्द्र ! महीपतिर्मत्पिता मम स्वस्रीयं मद्भगिनीपुत्रं भरतं द्रष्टुकामस्तदर्थं तदानयनार्थमहमयोध्यामुपयातः प्राप्तः ॥ ४ ॥

गो० टी०—स्वसुरपत्यं स्वस्रीयः ॥ ४ ॥ ५ ॥ ६ ॥

रा० टी०—श्रुत्वेति । हे महीपते ! विवाहार्थं त्वया तुशब्देन विश्वामित्रेण सह मिथिलामुपयातान्प्राप्तांस्तवात्मजानयोध्यायां श्रुत्वैव अहं न जहाति चित्तं तत्रैव सर्वदा तिष्ठतीत्यर्थः तं स्वसुः सुतं द्रष्टुकामोऽहं त्वरया अभ्युपयातः । सार्धश्लोक एकान्वयी तुशब्द एवार्थे नञ्पूर्वकजहातेः कर्तरि कः । न हीयते चित्तेन त्यज्यतेऽसावित्यर्थे तु कर्मणि को बोध्यः अत एवाहमित्यनेन न पौनरुक्त्यम् ॥ ५ ॥

६-७ ] ति० टी०—अयोध्यायामदृष्ट्वा भरतं द्रष्टुकाम इहाभ्युपयात इत्यन्वयः ॥ ६ ॥ ७ ॥

रा० टी०—अथेति । अथ युधाजित्संभाषणानन्तरं राजा दशरथः उपस्थितं प्राप्तं पूजनार्हं प्रियातिथिं युधाजितं दृष्ट्वा परमसत्कारैरपूजयत् ॥ ६ ॥

रा० टी०—तत इति । ततः कृतयुधाजित्सत्कृत्यनन्तरं महात्मभिः पुत्रैः सह तां रात्रिमुषित आसीदिति शेषः ॥ ७ ॥

८ ] ति० टी०—यज्ञवाटं यज्ञशालाद्वारम् ॥ ८ ॥

रा० टी०—प्रभाते इति । तदा तस्मिन्प्रभाते काले पुनः उत्थाय कर्माणि कृत्वा ऋषीन्पुरस्कृत्य तत्त्वविद्दशरथः यज्ञवाटमुपागमत् ॥ ८ ॥

गो० टी०—यज्ञवाटं यज्ञवाटसमीपम् । अत्र यज्ञवाटशब्देनोत्सवशालोच्यते पूर्वं यज्ञस्यान्त इत्युक्तत्वेन यज्ञस्य समाप्तत्वात् उत्तरसर्गे दशरथानुयानोक्तेश्च ॥ ७ ॥

९ ] ति० टी०—युक्ते इत्यादि सार्धश्लोकस्योपागमदिति पूर्वेणान्वयः । युक्ते शुभलग्नादियुक्ते विजये तदाख्ये ॥ ९ ॥

रा० टी०—युक्ते इति । युक्ते विवाहयोग्ये विजये मुहूर्ते सति सर्वाभरणभूषितैः भ्रातृभिः सहितः कृतकौतुकमङ्गलः कृतं कौतुकमङ्गलं यस्य सः रामः वशिष्ठमपरान्महर्षीनपि पुरतः अग्रे कृत्वोपागमादिति पूर्वेणान्वयः ॥ ९ ॥

गो० टी०—युक्ते विवाहानुरूपे विजये विजयावहे न तु विजयाख्ये तस्यापराह्णिकत्वात् मुहूर्तशब्दस्य घटिकाद्वयपरत्वे विजयः पूर्वाह्ण एव भवति पुरतः कृत्वा उपागमदिति शेषः । कृतकौतुकमङ्गलः कृतविवाहसूत्रबन्धनरूपमङ्गलाचारः 'कौतुकं विषयाभोगे हस्तसूत्रे' इत्यमरः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—एत्य यज्ञवाटान्तर्वर्तिनं वैदेहम् ॥ १० ॥

रा० टी०—वशिष्ठमिति । भगवान्समर्थो वशिष्ठः वैदेहमेत्य प्राप्य इदमब्रवीत् ॥ १० ॥

११ ] ति० टी०—दातारं दातुस्तवाज्ञां प्रवेष्टुमाकांक्षते ॥ ११ ॥

रा० टी०—तद्वचनमेवाह—राजेति । हे राजन् ! कृतकौतुकमङ्गलैः पुत्रैः सहितः नरवरश्रेष्ठो राजा दशरथः दातारं कन्यादानकर्तारं भवन्तमभिकाङ्क्षते द्रष्टुमिति शेषः ॥ ११ ॥

गो० टी०—दातारमिति त्वामिति शेषः ॥ १० ॥

१२ ] ति० टी०—दातृप्रतिग्रहीतृभ्याम् योगे इति शेषः । सर्वार्थाः दानधर्माः हि यतोऽत उत्तमं वैवाह्यम् । आर्षः ष्यञ् । विवाहोपयोगिलौकिकालौकिकं कर्म कृत्वा ततः स्वधर्मं प्रवेशाज्ञादानरूपं प्रतिपद्यस्व । तावद्द्वार्येव तिष्ठाम इति भावः ॥ १२ ॥

रा० टी०—अभिकाङ्क्षणे हेतुं वदन्नाह—दात्रिति । दातृप्रतिग्रहीतृभ्यामेव सर्वार्थाः दानसंतानाः संभवन्ति अतः उत्तमं वैवाह्यं विवाहं कृत्वा स्वधर्मं परमदातृत्वं प्रतिपद्यस्व प्राप्नुहि । हिशब्द एवार्थे ब्राह्मणादित्वात्स्वार्थे ष्यञ् ॥ १२ ॥

---

१ कर्मविदिति गो. पाठः । २ पुरतः कृत्वेति गो. रा. पाठः । ३ श्रेष्ठे इति गो. पाठः ।

इत्युक्तः परमोदारो वसिष्ठेन महात्मना । प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ॥ १३ ॥
कः स्थितः प्रतिहारो मे कस्याज्ञां संप्रतीक्षते । स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥ १४ ॥
कृतकौतुकसर्वस्वा वेदिमूलमुपागताः । मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः ॥ १५ ॥
सद्योऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः । अविघ्नं क्रियतां सर्वं किमर्थं हि विलम्ब्यते ॥ १६ ॥
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा । प्रवेशयामास सुतान्सर्वानृषिगणानपि ॥ १७ ॥
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् । कारयस्व ऋषे सर्वामृषिभिः सह धार्मिक ॥ १८ ॥
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो । तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ॥ १९ ॥

गो० टी०—दातृप्रतिग्रहीतृभ्यामिति योग इति शेषः। सर्वार्थाः दानप्रतिग्रहादयः विवाह एव वैवाह्यं कृत्वा स्वधर्मं प्रतिज्ञारूपम् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—परमोदारः परमदाता ॥ १३ ॥

रा० टी०—इतीति । महात्मना वशिष्ठेन इति अनेन प्रकारेणोक्तः परमोदारः महातेजाः परमधर्मवित् जनकः वाक्यं प्रत्युवाच ॥ १३ ॥

१४ ] ति० टी०—प्रतिहारो द्वारपालः । येन राजागमनं प्रतिबध्यते इति शेषः । यथेदं मम राज्यं तथा तव तत्र स्वगृहे प्रवेशे को विचार इत्यर्थः ॥ १४ ॥

रा० टी०—तद्वाक्यमेवाह—क इति । मे मम प्रतिहारो द्वारपालः कः स्थितः यन्निवारितो नेहायातीति शेषः । न प्रतिहारः कश्चिदिति चेत् तर्हि कस्याज्ञां संप्रतीक्षते इहागमनायेति शेषः । ननु विचारमन्तरा कथमत्रागमनं स्यादित्यत आह—स्वगृहे विचारः कोऽस्ति स्वगृहागमनाय विचारो न कर्तव्य इत्यर्थः । स्वगृहत्वं प्रतिपादयति—इदं राज्यं यथावत्तवास्ति एतेन यदि राज्यं तव तर्हि गृहं तवेति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥ १४ ॥

गो० टी०—प्रतिहारः द्वारपालः किमर्थं द्रुतमागमनं परिह्रियत इति भावः । यथेति त्वदीयं राज्यमिव मदीयमपि राज्यं तवैव तथाच मद्गृहमात्रस्य स्वीयत्वे को विचार इत्यर्थः ॥ १३ ॥

१५ ] ति० टी०—अपि च कृतस्वकर्तव्येन मयैव युष्मत्प्रतीक्षा क्रियत इत्याह—कृतेति । कृतं कौतुकसर्वस्वं वैवाहिककृत्यमङ्गलानुष्ठानं यासां ताः । वेदिमूलं वेदिसमीपम् ॥ १५ ॥

रा० टी०—स्वस्यातीव विवाहापेक्षितत्वं बोधयन्नाह—कृतेति । हे मुनिश्रेष्ठ ! कृतकौतुकसर्वस्वाः कृतं कौतुकं कौतुकोपलक्षितविवाहोचितबद्धहस्तसूत्राण्येव सर्वस्वं याभिः ता वेदीमूलमुपागताः प्राप्ताः वह्नेरर्चिषा प्रकाशेनेव दीप्ता प्रकाशिता मम कन्याः सन्तीति शेषः ॥ १५ ॥

गो० टी०—कृतकौतुकसर्वस्वाः अनुष्ठितविवाहोपयोगिसर्वमङ्गलाचाराः ॥ १४ ॥

१६ ] ति० टी०—सद्योऽस्मिन्काले । त्वां प्रतीक्षत इति त्वत्प्रतीक्षः । अविघ्नमविलम्बं यथा तथा सर्वं विवाहकर्म भवता क्रियताम् । किमर्थं द्वार्यवस्थानेन विलम्ब्यते भवतेति शेषः ॥ १६ ॥

रा० टी०—सद्य इति । सद्योऽस्मिन् काले अस्यां वेद्यां प्रतिष्ठितः स्थितः त्वत्प्रतीक्षः त्वत्कर्मकप्रतीक्षावानहमास्मि अतः अविघ्नं यथा भवति तथा सर्वं विवाहसंबन्धि कर्म क्रियतामेव किमर्थं विलम्ब्यते भवद्भिरिति शेषः । हिशब्द एवार्थे ॥ १६ ॥

गो० टी०—अविघ्नमविलम्बम् अवलम्बते विलम्बते ॥ १५ ॥

१७ ] ति० टी०—श्रुत्वा वसिष्ठमुखात् ॥ १७ ॥

रा० टी०—तदिति । तदा जनकोक्त्युत्तरकाले जनकेनोक्तं तद्वाक्यं दशरथः श्रुत्वा दूतमुखादवगत्य सर्वान् सुतान् ऋषिगणानपि प्रवेशयामास जनकगृहे इति शेषः ॥ १७ ॥

गो० टी०—श्रुत्वेति वसिष्ठप्रेरितपुरुषमुखादित्यर्थः ॥ १६ ॥

१८ ] ति० टी०—सर्वां वैवाहिकीमित्युत्तरेणान्वयः ॥१८॥

रा० टी०—तत इति । ततः दशरथागमनानन्तरं विदेहानां राजा जनकः वशिष्ठमिदमब्रवीत् । अर्धं पृथक् । तद्वाक्यमेवाह—कारयस्वेति । हे ऋषे ! हे धार्मिक ! हे प्रभो ! लोकरामस्य रामस्य वैवाहिकीं सर्वां क्रियामृषिभिः सह त्वं कारयस्व ॥ १८ ॥

गो० टी०—तत इति । लोका रमन्तेऽस्मिन्निति लोकरामः तस्य ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—लोकरामस्य लोकप्रियस्येति यावत् ॥१९॥

रा० टी०—तथेति । भगवान् ऋषिर्महातपा वशिष्ठः जनकं तथा इत्युक्त्वा धार्मिकं विश्वामित्रं शतानन्दं च पुरस्कृत्य प्रपामध्ये प्रपासदृशशैत्यादिविशिष्टमण्डपं तन्मध्ये एव विधिवत् वेदीं कृत्वा समन्ततः चतुर्दिक्षु गन्धपुष्पैः सुवर्णपालिकाभिश्च साङ्कुरैः छिद्रकुम्भैः करकैश्च अङ्कुराढ्यैः अङ्कुरपूर्णैः शरावैश्च सधूपकैर्धूपपात्रैश्च शङ्खपात्रैः शङ्खान्येव पात्राणि तैश्च स्रुवैः आज्यहवनसाधनभूतपात्रविशेषैश्च स्रुग्भिः तत्पात्रविशेषैश्च अर्घ्याभिपूरितैः अर्घजलपूर्णैः लाजपूर्णैः पात्रैश्च पात्रीभिस्तत्रोपयुक्ताल्पपात्रैश्च संस्कृतैर्दध्यादिकृतसंस्कारविशिष्टैरक्षतैरपि तां वेदीमलंचकार । श्लोकचतुष्टयमेकान्वयि ॥ १९–२२ ॥

गो० टी०— तथेति । प्रपी पनीयशालिका अभिनव-

१ अर्चिषेति रा० पाठः । २ कुरुतां राजामिति रा० राजेति गो० पाठः ।

विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् । प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ॥ २० ॥
अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः । सुवर्णपालिकाभिश्च चित्रकुम्भैश्च साङ्कुरैः ॥ २१ ॥
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः । शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्यादिपूजितैः ॥ २२ ॥
लाजपूर्णैश्च पात्रीभिरक्षतैरपि संस्कृतैः । दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ॥ २३ ॥
अग्निमाधाय तं वेद्यां विधिमन्त्रपुरस्कृतम् । जुहावाग्नौ महातेजा वसिष्ठो मुनिपुंगवः ॥ २४ ॥
ततः सीतां समानीय सर्वाभरणभूषिताम् । समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥ २५ ॥
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् । इयं सीता मम सुता सहधर्मचरी तव ॥ २६ ॥

नालिकेरादिपत्ररचितमण्डप इत्यर्थः । सुवर्णपालिकाभिः साङ्कुराभिरितिलिङ्गविपरिणामेनानुकृष्यते छिद्रकुम्भैः करकैः शङ्खपात्रैः शङ्खरूपपात्रैः स्रुक्स्रुवावाज्यहोमसाधनपात्रविशेषौ अर्घ्याभिपूरितैः अर्घ्यार्थजलपूरितैः लाजपूर्णैः पात्रैरित्यनुषज्यते पात्रीभिः कार्यान्तरोपयुक्तपात्रान्तरैः अभिसंस्कृतैः हरिद्रालेपनादिसंस्कारवद्भिः अलंचकारेति पूर्वेणान्वयः ॥ १९–२१ ॥

२० ] ति० टी०–प्रपामध्ये यज्ञशालामध्ये इति कतकः प्रपा मण्डप इत्यन्ये । तृष्णाशामकत्वेन प्रपात्वारोपः । वेदिं विवाहवेदिम् । इयं वेदिरन्यर्था ॥ २० ॥

२१ ] ति० टी०–सुवर्णपालिकाभिः साङ्कुराभिरित्यनुकर्षः । चित्रकुम्भैर्नानावर्णादियुतकुम्भैः 'अच्छिद्रकुम्भैः' इति पाठे स्फुटनादिदोषरहितैः स्वर्णकुम्भैरित्यर्थ इति कतकः । अच्छिद्रकुम्भैः करकैरिति तीर्थः ॥ २१ ॥

२२ ] ति० टी०–अर्घ्यादिपूजितैस्तद्युक्तैः ॥ २२ ॥

२३ ] ति० टी०–लाजपूर्णैश्च पात्रीभिरित्यार्षम् । संस्कृतैर्हरिद्रालेपादिसंस्कारवद्भिः समैः समप्रमाणैः समास्तीर्य वेदिमिति शेषः ॥ २३ ॥

रा० टी०–दर्भैरिति । समैर्न्यूनाधिकरहितैः शास्त्रोक्तपरिमाणविशिष्टैरित्यर्थः । दर्भैः विधिवन्मन्त्रपूर्वकमेव समास्तीर्य वेद्यां विधिमन्त्रपुरस्कृतं यथा स्यात्तथा अग्निमाधाय महातेजा ऋषिसत्तमो वशिष्ठः अग्नौ जुहाव । तुशब्द एवार्थे ॥ २३ ॥ २४ ॥

गो० टी०–समैः समपरिमाणैः अत्र पाणिग्रहणात्पूर्वं होमः आभ्युदयिकः ॥ २२ ॥ २३ ॥

२४ ] ति० टी०–विधिना कल्पोक्ततन्त्रकलापेन मन्त्रैश्च पुरस्कृतम् हविरिति शेषः । विवाहहोमादीनां वरकृत्यत्वात्तत्पुरोहितो वसिष्ठो जुहाव ॥ २४ ॥

२५ ] ति० टी०–अग्नेः समक्षं राघवाभिमुखदेशे संस्थाप्येत्यन्वयः ॥ २५ ॥

रा० टी०–तत इति । तदा हवनानन्तरकाले सर्वाभरणभूषितां सीतां समानीय राघवाभिमुखे रामसंमुखे अग्नेः समक्षं संस्थाप्य ततः वैवाहिककर्मविस्तारकारयिता राजा जनकः कौसल्यानन्दवर्धनं राममब्रवीत् ॥ २६ ॥

२६ ] ति० टी०–इयं त्वद्भुजवीर्यनिर्जिता मम सुतेत्याभिजात्यसूचनम् । सहधर्मचरी अनेन यत्कर्तव्यं तदनया सहेति स्मारितम् ॥ २६ ॥

रा० टी०–तद्वचनमेवाह–इयमिति । मम सुता इयं सीता तव सहधर्मचरी सहैव धर्मं चरति सा स्यादिति शेषः । अतः एनां प्रतीच्छ स्वकीयात्वेन स्वीकुरु । स्वीकारप्रकारमाह–पाणिना स्वकरेण पाणिमस्याः करं गृह्णीष्व ते भद्रम् । चो हेतौ ॥ २६ ॥

गो० टी०–अथ सौन्दर्याभिजात्यादिना सीतायाः प्रतिग्रहार्हत्तां वदन् प्रतिग्रहमनुजानाति–इयमिति । इयं अपरिच्छेद्यसौन्दर्यसौकुमार्यलावण्यादिकं प्रत्यक्षेण निर्दिशति न केवलं प्रत्यक्षं सौन्दर्यादिकं प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्समानस्यायोनिजत्वेनानुमेयं चेत्याह–सीता 'सीता लाङ्गलपद्धतिः' तज्जन्यतया तथाव्यपदेशः इयं सीता या सिद्धाश्रमात्प्रभृति धनुर्भङ्गादिना कुतूहलगोचरतामासादिता सेयं सीता, यद्वा सीतादर्शनदशायां विद्युत्स्फुरणसमय इव क्वचिदप्यवयविप्रतिपत्त्यभावेन ससंभ्रमं रामं प्रत्याह–इयं सीतेति, यद्वा 'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा' इत्युक्तरीत्या अनवरतभावनाप्रकर्षेण सर्वत्र सीतायाः प्रतीयमानत्वादाह–इयं सीतेति, यद्वा यथा राम आत्मानं मानुषं मन्यते एवं सीतापि अतो राघवत्वेऽभवत्सीतेत्याह–इयं सीतेति । न केवलं सौन्दर्यमस्मदपेक्षितं किंत्वाभिजात्यं चेत्यत्राह–मम सुतेति । आचारप्रधानजनककुलजातायाः किं वक्तव्यमाभिजात्यमिति भावः । यद्वा मम सुता महता तपसा राम इतिवत् तुभ्यं दातुं विरचितविविधव्रतोपवासादिकस्य मम कन्येत्यर्थः । अस्त्वियं सुन्दरी भोगार्था धर्माचरणार्थमन्यया भवितव्यमिति मन्येतेत्यत्राह–सहधर्मचरी तवेति भोगार्थेयमेव धर्माचरणार्थापीति भावः । समानो धर्मः सहधर्मः तं चरतीति सहधर्मचरी । 'दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्' इतिवत्कुलत्वाल्लक्ष्यपेयम् 'न कश्चिन्नापराध्यति' इति वक्तीति भावः । एवं सौन्दर्याभिजात्यधर्माचरणशीलत्वादिमत्त्वेऽपि त्वदनुमत्यभावान्नैनां प्रतिगृह्णामीत्यत्राह–प्रतीच्छ चैनामिति । प्रतीच्छ गृहाण सीतायाः रामाविनाभूततया तस्याः प्रदानानर्हत्वात् ददामीत्यनुक्तिः । भद्रं ते स्वतः-

१ वेदीमिति रा. पाठः । २ छिद्रकुम्भैरिति गो. रा. पाठः । ३ अर्घ्याभिपूरितैरिति गो. रा. पाठः । ४ वेद्यां त्विति गो. रा. पाठः । ५ वसिष्ठ ऋषिसत्तम इति गो. पाठः ।

प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना । पतिव्रता महाभागा छायेवानुगता सदा ॥ २७ ॥
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा । साधु साध्विति देवानामृषीणां वदतां तदा ॥ २८ ॥
देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् । एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ॥ २९ ॥
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः । लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ॥ ३० ॥
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः । तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ॥ ३१ ॥
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन । शत्रुघ्नं चापि धर्मात्मा अब्रवीन्मिथिलेश्वरः ॥ ३२ ॥
श्रुतकीर्तेर्महाबाहो[1] पाणिं गृह्णीष्व पाणिना । सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥ ३३ ॥
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः । जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ॥ ३४ ॥

---

सिद्धायाः कस्त्वं दातुमिति रामः कुप्येदिति सान्त्वयति, यद्वा निरतिशयकन्यालक्षणशालिन्या अस्याः प्रतिग्रहे भवतः सर्वाणि मङ्गलानि भविष्यन्तीत्यर्थः । यद्वा अनुरूपवधूवरयोः संयोगे दृष्टिदोषो भविष्यतीति मङ्गलमाशास्ते भद्रं त इति । एवं मयानुज्ञाते गान्धर्वराक्षसाभ्यामुद्वहेदिति भीतः प्राह पाणिं गृह्णीष्वेति 'यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात्' इत्याद्युक्तकामव्यावृत्तये पाणिमित्युक्तं प्रणयधारायां पादग्रहणमस्तु संप्रति पाणिं गृह्णीष्व पाणिनेति साहित्यकृतशोभाविशेषदर्शनाभिलाषेणोक्तं ब्राह्मणस्यैव पाणिग्रहणं क्षत्रियादेः शरादिग्रहणं विहितमतः कथमिदं संगच्छत इति न शङ्कनीयं तस्यासवर्णविषयत्वात् । आह मनुः–'पाणिग्रहणसंस्कारः सवर्णासु प्रदृश्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥ शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने' इति । अतः सर्ववर्णानामपि सवर्णासु पाणिग्रहोऽस्त्येव । पतिव्रतेत्यादि भविष्यतीति शेषः । प्राक्षिपत् रामहस्त इति शेषः ॥ २५ ॥ २६ ॥

२७ ] ति० टी०–प्रतीच्छ प्रतिगृहाण । तदुपयोगित्वेन पाणिना पाणिं गृह्णीष्व पाणिगृहीती हि सर्वथानतिक्रमणीयेत्येवमुक्तम् । छायेवानुगता भविष्यतीत्यन्वयः ॥ २७ ॥

रा० टी०–पतिव्रतेति । पतिव्रता महाभागा तव छाया इवानुगता सदा भविष्यतीति शेषः । राजा जनकः तदा तस्मिन्काले इत्युक्त्वा मन्त्रपूतं कन्यादानमन्त्रेण पूततां प्राप्तं जलं प्राक्षिपद्रामकरे दत्तवान् ॥ २७ ॥

२८ ] ति० टी०–मन्त्रपूतं कन्यादानमन्त्रेण पूतं जलं प्राक्षिपत् रामहस्ते इति शेषः । वदताम् शब्द आसीदिति शेषः ॥ २८ ॥

रा० टी०–साध्विति । तदा जनककृतकन्यादानोत्तरकाले साधु साधु इति वदतां देवानामृषीणां च देवदुन्दुभिनिर्घोषैः देवसंबन्धिदुन्दुभिनिःस्वनैः सह महान् पुष्पवर्षोऽभूत् ॥ २८ ॥

गो० टी०–शुभनिमित्तमाह–साध्विति । वदतां वदत्सु पुष्पवर्षः पुष्पवर्षश्च ॥ २६ ॥ २७ ॥

२९ ] ति० टी०–दानीयमन्त्रोदकाभ्यां पुरस्कृताम् ॥ २९ ॥

रा० टी०–एवमिति । मन्त्रोदकपुरस्कृतां दानकालोचितमन्त्रयुक्तोदकेन पुरस्कृतां तां सीतां सुतामेवमुक्तप्रकारेण दत्त्वा हर्षेण अभिपरिप्लुतः व्याप्तः राजा जनकः अब्रवीत् ॥ २९ ॥

३० ] ति० टी०–उद्यतां दातुं कृतनिश्चयाम् ॥ ३० ॥

रा० टी०–तद्वचनमेवाह–लक्ष्मणेति । हे लक्ष्मण ! त्वमागच्छ ते भद्रं मया मत्प्रेरणया उद्यतां भवन्तं स्वीकर्तुमुद्युक्तां ऊर्मिलां प्रतीच्छ स्वकीयात्वेन स्वीकुरु अत एव पाणिं गृह्णीष्व स्वीकारसूचकपाणिग्रहणं कुरु कालस्य पर्ययः विलम्बो मा भूत् ॥ ३० ॥

३१-३२ ] ति० टी०–प्रतीच्छेत्यादि प्राग्व्याख्यातम् । ज्येष्ठाद्भरतात्पूर्वं लक्ष्मणपाणिग्रहस्तु भिन्नोदरत्वान्न दोषाय ॥ ३१ ॥ ३२ ॥

रा० टी०–तमिति । तं लक्ष्मणमेवमुक्त्वा जनकः भरतमप्यभ्यभाषत । तद्भाषणमेवाह–हे रघुनन्दन ! माण्डव्याः पाणिं पाणिना स्वहस्तेन गृहाण । चोऽप्यर्थे ॥ ३१ ॥

गो० टी०–पर्ययः विलम्ब इत्यर्थः । भिन्नमातृकत्वात् भरतात्पूर्वं लक्ष्मणविवाहो न दुष्यति 'पितृव्यपुत्रे सापत्ने परनारीसुतेषु वा । विवाहदानयज्ञादौ परिवेदो न दूषणम्' इति स्मरणात् ॥ २८ ॥ २९ ॥ ३० ॥

रा० टी०–शत्रुघ्नमिति । धर्मात्मा मिथिलेश्वरो जनकः शत्रुघ्नमप्यब्रवीत् । तद्वचनमेवाह–हे महाबाहो ! श्रुतकीर्त्याः पाणिं पाणिना त्वमपि गृह्णीष्व । चोऽप्यर्थे ॥ ३२ ॥

३३ ] ति० टी०–सुचरितं व्रतं ब्रह्मचर्यादि यैः ॥ ३३ ॥

रा० टी०–उपसंहरन्नाह–सर्वे इति । हे काकुत्स्थाः ! यतः सर्वे भवन्तः सौम्याः सर्वे सुचरितव्रताश्च ततः पत्नीभिः सहिताः सन्तु कालस्य पर्ययो मा भूत् ॥ ३३ ॥

३४ ] ति० टी०–पत्नीभिः सहिताः सन्तु भवन्तु इत्यप्यर्थः ॥ ३४ ॥

रा० टी०–जनकस्येति । जनकस्य वचो वचनं श्रुत्वा पाणीन् स्वस्वपत्नीकरान् पाणिभिः स्वस्वकरैः अस्पृशन् लक्ष्मणादय इति शेषः । ततः पाणिस्पर्शानन्तरं सहभार्याः भार्यासहिताः महात्मानः रघूत्तमाः यथोक्तेन विधिना अग्निं

---

[1] श्रुतकीर्त्या इति गो. रा. पाठः ।

चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः । अग्निं प्रदक्षिणं कृत्वा [2]वेदिं राजानमेव च ॥ ३५ ॥
ऋषींश्चापि महात्मानः सहभार्या [3]रघूद्वहाः । यथोक्तेन [4]ततश्चक्रुर्विवाहं विधिपूर्वकम् ॥ ३६ ॥
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा । दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ३७ ॥
ननृतुश्चाप्सरःसंघा गन्धर्वाश्च जगुः कलम् । विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ३८ ॥
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते । त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ३९ ॥
अथोपकार्यं जग्मुस्ते सभार्या रघुनन्दनाः । राजाप्यनुययौ पश्यन्सर्षिसंघः सबान्धवः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

वेदीं च राजानं च ऋषींश्च प्रदक्षिणं कृत्वा विधिपूर्वकं विवाहमवशिष्टविवाहक्रियां चक्रुः । श्लोकद्वयमेकान्वयि ॥ ३५ ॥

गो० टी०—पत्नीभिः सहिता इति शेषः । अत्रोदकप्रदानमर्थसिद्धं जनकेनानुज्ञामात्रं कृतं ज्येष्ठत्वात् उदकप्रक्षेपणं तु माण्डवीश्रुतकीर्त्योः कुशध्वजेनैव । तदाह याज्ञवल्क्यः—'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः' इति ॥ ३१ ॥ ३२ ॥

३५ ] ति०टी०—वेदिं विवाहवेदिम् । राजानं जनकम् ॥ ३५ ॥

गो० टी०—अग्निमिति । अत्रैकस्यां वेदिकायां एकस्मिन्नेवाग्नौ वसिष्ठो जुहाव तेनैवमेकमग्निं सर्वे स्वस्वभार्यापाणीन् गृहीत्वा प्रदक्षिणीकृत्य चक्रुरित्युत्तरत्रान्वयः । राजानं जनकं यथोक्तेन शास्त्रोक्तप्रकारेण विधिपूर्वकं कल्पसूत्रपूर्वकं विवाहं विवाहकर्म तदा तस्मिन्काले चक्रुः स्वसूत्रानुरोधेन प्रत्येकं पाणिग्रहणहोमं चक्रुरित्यर्थः । पूर्वं वसिष्ठेन होमवचनमाभ्युदयिककर्मपरं अग्निप्रतिष्ठापनपूर्वकं विवाहहोमोऽत्रोच्यते पाणिग्रहणानन्तरमग्निं ब्राह्मणान् दातारं जनकं च प्रदक्षिणीकृत्य स्वकल्पोक्तविधानेन प्रत्येकमाग्निं प्रतिष्ठाप्य विवाहहोमांश्चक्रुरित्यर्थः ॥ ३३ ॥

३६–३७ ] ति० टी०—ऋषींश्चापि प्रदक्षिणं कृत्वेति शेषः । यथोक्तेन शास्त्रोक्तेन प्रकारेण । विवाहं तत्कृत्यशेषं होमादि ॥ ३६ ॥ ३७ ॥

रा० टी०—पुष्पेति । दिव्यदुन्दुभिनिर्घोषादिभिः सह सुभास्वरा महती पुष्पवृष्टिः अन्तरिक्षादासीत् ॥ ३९ ॥

गो० टी०—सीताप्रदानकालिकशुभनिमित्तमुक्तं अथसर्वसाधारण्येन विवाहकर्मकालिकशुभनिमित्तानि दर्शयति—पुष्पवृष्टिरिति । तत्पुष्पवृष्ट्यादिकम् ॥ ३४ ॥ ३९ ॥

३८ ] ति० टी०—तदद्भुतं दुन्दुभिनिर्घोषादिसहितपुष्पवृष्ट्यादि ॥ ३८ ॥

रा० टी०—ननृतुरिति । रघुमुख्यानां विवाहे अप्सरःसंघाः ननृतुः गन्धर्वाश्च कलं मनोहरं जगुः । तत्पुष्पवृष्ट्यादि सर्वमद्भुतं विलक्षणमेवाभवत् । इवशब्द एवार्थे ॥ ३६ ॥

३९ ] ति० टी०—तूर्याणां यदुद्घुष्टं घोषस्तन्निनादिते काले । त्रिरग्निमित्युपसंहारेण पुनर्वादः ॥ ३९ ॥

रा० टी०—विवाहविधिमुपसंहरन्नाह—ईदृश इति । तूर्योद्घुष्टनिनादिते तूर्योद्घुष्टं तूर्यशब्दः निनादितं तत्प्रतिध्वनिश्च तयोः समाहारः तस्मिन् ईदृशे वर्तमाने सत्येव अग्निं त्रिः परिक्रम्य महौजसः ते रामादयः भार्याः स्वस्वनित्यपत्नीः ऊहुः स्वस्ववामभागं निन्युः । तुशब्द एवार्थे ॥ ३७ ॥

गो० टी०—अथ लाजहोमपूर्वकं स्वस्वाग्निप्रदक्षिणात्रयं दर्शयति—ईदृश इति । ईदृशे पूर्वोक्तरूपे तूर्याणां नृत्यगीतवाद्यानां उद्घुष्टेन उद्घोषणेन निनादिते नादे प्रतिध्वनिरूपे वर्तमाने अग्निं स्वस्वाग्निं त्रिः परिक्रम्य ऊहुः विवाहं निर्वर्तयामासुः ॥ ३६ ॥

४० ] ति० टी०—उपकार्यं शिबिरम् । पश्यन्वधूवरसंबन्धकल्याणम् ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

रा० टी०—अथेति । सभार्याः ते रघुनन्दनाः उपकार्यां पटरचितगृहमथ जग्मुः मङ्गलगमनं चक्रुः, सर्षिसंघः सबान्धवो राजा दशरथोऽपि पश्यन् सदारपुत्रान् अवलोकमानः अनुययौ ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०—राजा दशरथः पश्यन् सभार्यान्पुत्रानित्यर्थः ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

१ अर्धमेतत् रा. नास्ति । २ वेदीमिति रा. पाठः । ३ रघूत्तमा इति गो. रा. पाठः । ४ तदेति गो. पाठः । ५ इवाभवदिति रा. पाठः । ६ उपकार्यामिति गो. रा. पाठः । ७ सदारा इति रा. पाठः ।

# चतुःसप्ततितमः सर्गः ।

विश्वामित्रो जनकदशरथावापृच्छ्य स्वाश्रमं जगाम आहितपारिबर्हको दशरथोऽपि दारकैः सममयोध्यां प्रतस्थे । मार्गे जातदुःशकुनो दशरथो वसिष्ठं प्रति तत्फलं पप्रच्छ । उपस्थितमपि भयमचिरेणैवोपशममेष्यतीति वसिष्ठः आश्वासयति तावत्स्कन्धे परशुमासज्य क्रोधनो जामदग्न्यः प्रादुरास वसिष्ठादयो ऋषिगणास्तमर्घ्यादिभिः समपूजयन् ।

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः । आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ॥ १ ॥
विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् । आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम् ॥ २ ॥
[ गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः । ]
अथ राजा विदेहानां ददौ कन्याधनं बहु । गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥ ३ ॥
कम्बलानां च मुख्यानां क्षौमान्कोट्यम्बराणि च । हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् ॥ ४ ॥
ददौ कन्याशतं तासां दासीदासमनुत्तमम् । हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥ ५ ॥
ददौ राजा सुसंहृष्टः कन्याधनमनुत्तमम् । दत्त्वा बहुविधं राजा समनुज्ञाप्य पार्थिवम् ॥ ६ ॥
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः । राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ॥ ७ ॥

१ ] ति० टी०—आपृष्ट्वापृच्छ्य । तौ दशरथजनकौ । उत्तरपर्वतं कौशिकीतटावच्छिन्नम् ॥ १ ॥

रा० टी०—उपकार्यागमनानन्तरकालिकं वृत्तमाह—अथेति । अथ उपकार्यागमनानन्तरं रात्र्यां व्यतीतायां सत्यां महामुनिर्विश्वामित्रः राजानौ तौ दशरथजनकौ आपृष्ट्वा आपृच्छ्य अनुमतिं गृहीत्वैव उत्तरपर्वतं जगाम । ह्रिरेवार्थे ॥ १ ॥

गो० टी०—अथायोध्याप्रस्थाने मध्येमार्गं जामदग्न्यागमनं चतुःसप्ततितमे—अथ रात्र्यामित्यादि । आपृष्ट्वा आपृच्छ्य उत्तरपर्वतं स्वावासं हिमवन्तम् ॥ १ ॥

२ ] ति० टी०—जगाम गन्तुमुद्यतोऽभूत् ॥ २ ॥

रा० टी०—विश्वामित्र इति । विश्वामित्रे गते सति राजातिदीप्त्या उपलक्षितो राजा दशरथः मिथिलाधिपं वैदेहमापृच्छ्य पुरीमयोध्यामाशु अथ जगाम मङ्गलगमनं चकार ॥ २ ॥

गो० टी०—विश्वामित्र इति । आपृष्ट्वा जगामेतिक्रियावृत्त्या राजपदावृत्तिः ॥ २ ॥ ३ ॥ ४ ॥

३ ] ति० टी०—कन्याधनं विवाहकाले कन्यायै देयं धनं यौतकाख्यम् । तस्यैव प्रपञ्चो गवामित्यादि ॥ ३ ॥

रा० टी०—अथेति । अथ राजप्रस्थानानन्तरं बहु अत्यधिकं कन्याधनं कन्याविवाहोचितदेयद्रव्यादि विदेहानां राजा जनको ददौ । तदेव विशदयन्नाह—पृथिवीपतिर्जनकः बहूनि गवां शतसहस्राणि मुख्यानां च बहूनि शतसहस्राणि ददौ क्षौमकोट्यम्बराणि च ददौ स्वलंकृतं दिव्यरूपं बहु हस्त्यश्वरथपादातं च ददौ । वचनविपरिणामेन बहुशब्दोऽत्राप्यनुकृष्यते । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—कन्याधनमेव विवृणोति—गवामित्यादि । कम्बलानामित्यत्रापि शतसहस्राणीत्यनुषज्यते क्षौमकोट्यम्बराणि क्षौमाश्च कोट्यम्बराणि चेति द्वन्द्वः क्षौमानामपि बहुत्वमर्थसिद्धं क्षौमरूपकोट्यम्बराणीति वा कोट्यम्बराणि उत्कृष्टवस्त्राणीति वा हस्तीत्यादि सेनाङ्गत्वादेकवद्भावः । कन्यापिता जनकः गवाश्वादित्वाद्दासीदासमित्येकवद्भावः ॥ ५ ॥ ६ ॥

४ ] ति० टी०—मुख्यानां कम्बलानां नेपालादिभवानां कम्बलानां बहूनीति संबन्धः । क्षौमान्बहूनिति विपरिणामः । कोट्यम्बराणि कोटिसंख्यानि सामान्यवासांसि ॥ ४ ॥

५ ] ति० टी०—कन्याशतं सखीत्वेन । तासां राजकुमारीणाम् प्रत्येकमिति शेषः । दासीदासमिति गवाश्वादित्वादेकत्वम् । हिरण्यं रजतम् । सुवर्णं हेम । षष्ठ्यन्तानां कोटिपदाध्याहारेणान्वयः ॥ ५ ॥

रा० टी०—ददाविति । तासां ताभ्यः स्वकन्याभ्यः अनुत्तमं कन्याशतं दासीदासं च ददौ । हिरण्यादींश्च ददौ । अत्र कर्मणां संप्रदानस्य च शेषत्वविवक्षया षष्ठ्यः ॥ ५ ॥

गो० टी०—हिरण्यस्य रजतस्य शतमिति शेषः ॥ ७ ॥ ८ ॥

६–७ ] ति० टी०—पार्थिवं दशरथम् ॥ ६ ॥ ७ ॥

रा० टी०—ददाविति । परमसंहृष्टः जनकः अनुत्तमं परमोत्कृष्टं कन्याधनं ददौ । अर्धं पृथक् । दानोत्तरकालिकं मिथिलाधिपवृत्तमाह—दत्त्वेति । मिथिलेश्वरो राजा जनकः बहुविधमनेकप्रकारकं द्रव्यादि दत्त्वा पार्थिवं दशरथं समनुज्ञाप्य स्वनिलयं मिथिलाम् प्रविवेश ॥ ६ ॥

रा० टी०—राजेति । सबलानुगः बलानुगसहितः अयोध्याधिपतिः राजापि सर्वान् ऋषीन् पुरस्कृत्य महात्मभिः पुत्रैः सह जगाम स्वपुरमिति शेषः ॥ ७ ॥

१ ईति रा. पाठः । २ अपृष्ट्वाथेति गो. अपृच्छ्याथेति रा. पाठः । ३ अर्धमिदमधिकं गो. पाठे । ४ पृथिवीपतिरिति रा. पाठः । ५ क्षौमकोट्यम्बराणीति गो. रा. पाठः । ६ परमसंहृष्ट इति गो. रा. पाठः ।

ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलानुगः । गच्छन्तं तु नरव्याघ्रं सर्षिसंघं सराघवम् ॥ ८ ॥
घोरास्तु पक्षिणो वाचो व्याहरन्ति समन्ततः । भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ ९ ॥
तान्दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत । असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥ १० ॥
किमिदं हृदयोत्कम्पि मनो मम विषीदति । राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ ११ ॥
उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् । उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥ १२ ॥
मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् । तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ १३ ॥
कम्पयन्मेदिनीं सर्वां पातयंश्च महाद्रुमान् । तमसा संवृतः सूर्यः सर्वे नावेदिषुर्दिशः ॥ १४ ॥
भस्मना चावृतं सर्वं संमूढमिव तद्बलम् । वसिष्ठ ऋषयश्चान्ये राजा च ससुतस्तदा ॥ १५ ॥

---

८ ] ति० टी०—बलैश्चतुरङ्गैरनुगैः किंकरैश्च सहितस्तथा गच्छन्तम् । दशरथमिति शेषः ॥ ८ ॥

रा० टी०—गच्छन्तमिति । सर्षिसंघं सराघवं रामसहितं गच्छन्तं नरव्याघ्रं तं दशरथं ततस्ततः एव घोराः क्रूराः पक्षिणो वाचः घोरवचनानि व्याहरन्ति भौमाः सर्वे मृगा अपि प्रदक्षिणमेव गच्छन्ति स्म । चशब्दोऽप्यर्थे तुशब्द एवार्थे सार्धश्लोक एकान्वयी ॥ ८ ॥ ९ ॥

गो० टी०—सबलानुगः बलैश्चतुरङ्गैः अनुगैः किंकरैश्च सहितः ॥ ९ ॥

९ ] ति० टी०—पक्षिणः करटादयः । तत्र पक्षिणां घोरव्याहरणमादौ दुर्निमित्तं ततो मृगप्रदक्षिणगमनं सुनिमित्तम् ॥ ९ ॥

१० ] ति० टी०—तान् शुभाशुभसूचकोत्पातान् । असौम्याः पक्षिणो घोराः घोरशब्दा इत्यर्थः ॥ १० ॥

रा० टी०—तानिति । राजशार्दूलो राजश्रेष्ठो दशरथः तान् घोरशब्दकर्तॄन् पक्षिणः प्रदक्षिणकर्तॄन् मृगांश्च दृष्ट्वा वसिष्ठं पर्यपृच्छत । प्रश्नाकारं वदन्नाह—असौम्या घोराः पक्षिणः घोराः मृगाश्च प्रदक्षिणाश्चरन्तीति शेषः । अपिरेवार्थे ॥ १० ॥

गो० टी०—नरव्याघ्रं प्रतीति शेषः । घोरा इत्यनेनाशुभसूचकत्वमुक्तम् पक्षिणः वायसादयः प्रदक्षिणमिति शुभसूचनम् । अन्तरिक्षे अशुभसूचनं भूमौ शुभसूचनमित्यर्थस्य द्योतनार्थं भौमा इतिपदम् ॥ १० ॥ ११ ॥

११ ] ति० टी०—इदं हृदयकम्पजनकम् किमिदं दुःखोदर्कं सुखोदर्कं वेति प्रश्नः । अनिश्चयान्मे मनो विषीदति ॥ ११ ॥

रा० टी०—किमिति । हृदयोत्कम्पि हृदयोत्कम्पनकारकमिदं सर्वं किं किमर्थमयमुत्पात इति न विद्म इत्यर्थः । अत एव मम मनो विषीदति । राज्ञ इति । राज्ञः दशरथस्यैतद्वाक्यं श्रुत्वा महानृषिर्वसिष्ठः अस्य दृष्टोत्पातस्य यत्फलं तत् श्रूयतामिति मधुरां वाणीमुवाच ॥ ११ ॥

गो० टी०—हृदयमुत्कम्पयितुं शीलमस्येति हृदयोत्कम्पि इदं किं सुखोदर्कं दुःखोदर्कं वेति मनो विषीदति शुभाशुभसूचनदर्शनेनोभयत्र निर्णयकारणाभावादिति भावः ॥ १२ ॥ १३ ॥

१२ ] ति० टी०—दिवि खे भवं दिव्यम् । पक्षिमुखाच्च्युतं वचनम् । घोरं भयमुपस्थितं प्राप्तम् आशु वेदयतीति शेषः ॥ १२ ॥

रा० टी०—तद्वचनमेवाह—उपेति । दिव्यं स्वप्नतुल्यं पक्षिमुखाच्च्युतं वचनमुपस्थितं समीपं प्राप्तं घोरं भयं बोधयतीति शेषः । दिव्यमिति स्वप्नार्थकदिविधातुप्रकृतिकण्यत्प्रत्ययान्तं संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः । अर्धं पृथक् ॥ १२ ॥

गो० टी०—पक्षिमुखाच्च्युतं पक्षिमुखेन सूचितमित्यर्थः । प्रशमयन्ति प्रशमं सूचयन्तीत्यर्थः ॥ १४ ॥

१३ ] ति० टी०—प्रशमयन्ति प्रशमं सूचयन्तीत्यर्थः । तेषां संवदतामित्यस्य पुर इति शेषः ॥ १३ ॥

रा० टी०—तद्भयमपि द्रुतं विनङ्क्ष्यतीति बोधयन्नाह—मृगा इति । एते प्रदक्षिणगमनशीलाः मृगाः प्रशमयन्ति हृदयोत्कम्पि घोरपक्षिरावसूचितभयं निवर्तयन्तीत्यर्थः । अतः अयं कुशकुनदर्शनजनितः संतापस्त्यज्यताम् भवतेति शेषः । अर्धं पृथगन्वयि—तेषामिति । तत्र मार्गे संवदतां तेषां दशरथादीनां संवदत्सु दशरथादिषु सर्वां पृथिवीं कम्पयन्महाद्रुमान् पातयंश्च वायुः प्रादुर्बभूव ह प्रसिद्धमेतत् । "षष्ठी चानादरे" इत्यनुशासनविहितात्र षष्ठी । अत एव तमसा अन्धकारेण सूर्यः संवृतः अत एव सर्वे जनाः दिशो नावेदिषुः अत एव भस्मना आवृतं सर्वं तद्बलं संमूढं कार्याकार्यविवेकरहितमेवासीदिति शेषः । चशब्दो हेत्वर्थकः श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—संवदतां संवदत्सु ॥ १६ ॥

१४-१५ ] ति० टी०—तमो भस्म चोभयमप्युत्पातजम् ॥ १४ ॥ १६ ॥

रा० टी०—वसिष्ठ इति । तदा प्रचण्डवायुप्रादुर्भावोत्तरकाले वशिष्ठः अन्ये ऋषयश्च ससुतो राजा च सशङ्का इव आसन् । तत्र तच्छङ्काकाले अन्यत् राजसाहित्यवद्भिर्न सर्वे

---

१ स बलान्वित इत्यपि क्वचिद्दृश्यते । २ तमिति गो. रा. पाठः । ३ स्मेति गो. पाठः । ४ ततस्तत इति गो. रा. पाठः । ५ पृथिवीमिति गो. रा. पाठः । ६ द्रुमान्छुभानिति गो. पाठः । ७ सर्वां न प्रबभुरिति गो. पाठः ।

ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम् । तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥ १६ ॥
ददर्श भीमसंकाशं जटामण्डलधारिणम् । भार्गवं जामदग्न्येयं राजा राजविमर्दनम् ॥ १७ ॥
कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम् । ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ १८ ॥
स्कन्धे चासज्ज्य परशुं धनुर्विद्युद्गणोपमम् । प्रगृह्य शरमुग्रं च त्रिपुरघ्नं यथा शिवम् ॥ १९ ॥
तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् । वसिष्ठप्रमुखा विप्रा जपहोमपरायणाः ॥ २० ॥
संगता मुनयः सर्वे संजजल्पुरथो मिथः । कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २१ ॥
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः । क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २२ ॥
एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् । ऋषयो रामरामेति मधुरं वाक्यमब्रुवन् ॥ २३ ॥
प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान् । रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

तत्रत्यप्रजाजातं विचेतनमास वचनविपरिणामेन आसन्नित्यस्यात्रापि संबन्धः ॥ १६ ॥

गो० टी०—भस्मना चाद्दतमभूदिति शेषः ॥ १६ ॥ १७ ॥

१६ ] ति० टी०—ससंज्ञा इव ईषत्संज्ञा इत्यर्थः । अन्यत्तु बलं निःसंज्ञमेव । भस्मच्छन्नेव अभूदिति शेषः ॥ १६ ॥

रा० टी०—तस्मिन्निति । तस्मिन् घोरे तमस्येव भस्मच्छन्ना भस्मोपलक्षितरजोभिराच्छादिता सा चमूः सेनाजनः राजा दशरथश्च भीमसंकाशं भयंकरप्रकाशविशिष्टं जटामण्डलधारिणं राजविमर्दनं क्षत्रियध्वंसकं भार्गवं भृगुगोत्रोत्पन्नं जामदग्न्येयं जमदग्निपुत्रं परशुरामं ददर्श । तुशब्दार्थे इव एवार्थे सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—भीमसंकाशं भयंकरदर्शनम् ॥ १७ ॥

गो० टी०—जामदग्न्यमिति अनन्तरापत्येपि यञ् गोत्रत्वारोपात् । 'जामदग्न्येयम्' इति पाठे 'इतश्चानिञः' इति ढक्चत्वेऽप्यार्षत्वाड्ढक् । पृथग्जनैः पामरैः विद्युद्गणोपममिति तेजस्वितायां दृष्टान्तः त्रिपुरघ्नमिति *तृन् "अमनुष्यकर्तृके च" इति हन्तेष्टक् ॥ १८ ॥ १९ ॥ २० ॥

१८ ] ति० टी०—कैलासमिवेत्यनेन महाकारत्वम् । दुर्धर्षमशक्यातिक्रमम् । पृथग्जनः पामरजनः ॥ १८ ॥

रा० टी०—जामदग्न्येयस्वरूपं वर्णयन्नाह—कैलासमित्यादिभिः । कैलासमिव दुर्धर्षं कैलासदुर्धर्षत्वसदृशदुर्धर्षत्वविशिष्टं कालाग्निमिव दुःसहं तेजोभिरेव ज्वलन्तमत एव पृथग्जनैः तेजोवद्भिन्नप्राणिभिर्दुर्निरीक्ष्यम् । किंच जनैः तेजोभिः पृथक् दुर्निरीक्ष्यम् तेजोभ्योऽतिरिक्तत्वेन द्रष्टुमशक्यमित्यर्थः । अस्मिन्पक्षे तेजोभिरित्युभयान्वयि ॥ १८ ॥

१९ ] ति० टी०—प्रभातिशयेन विद्युद्गणोपमम् । धनुरुग्रं शरं च प्रगृह्य त्रिपुरघ्नं शिवमिव स्थितमित्यर्थः ॥ १९ ॥

रा० टी०—विद्युद्गणोपमं स्कन्धे परशुमासाद्य संधार्य धनुः शरमुख्यं च प्रगृह्य त्रिपुरघ्नं शिवमिवावलोक्यमानम् ॥ १९ ॥

२० ] ति० टी०—जपहोमपरायणाः आसन्निति शेषः । यद्यपि होमोऽन्यविकरणस्तदा पथि चलनसमये बाधितस्तथाप्यपाने जुह्वति प्राणमित्यादिर्बोध्य इति केचित् । परे तु—जपहोमपरायणत्वमुपलक्षणम् । अतएवाग्रे संजजल्पुरिति संगच्छते अन्यथा तादृशहोमादिपरायणानां जल्पासंभवादित्याहुः ॥ २० ॥

रा० टी०—ज्वलन्तं पावकमिव भीमसंकाशमतिप्रकाशं तं जामदग्न्येयं जपहोमपरायणाः वशिष्ठप्रमुखाः सर्वे विप्रा मुनयः दृष्ट्वा संगताः संमिलिताः सन्तः मिथः परस्परम् अथो संजजल्पुः मङ्गलहेतुकजल्पनं चक्रुः । सार्धश्लोकत्रयमेकान्वयि ॥ २० ॥

गो० टी०—होमः मानसः ॥ २१ ॥

२१–२४ ] ति० टी०—ऋषीणां परस्परं जल्पमाह—कच्चिदित्यादि । श्लोकद्वयेऽपि नशब्दो ननुशब्दैकदेशो नन्वित्यर्थः वितर्के ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

रा० टी०—कच्चिदिति । यद्यपि पितृवधामर्षी क्षत्रियकृतपितृवधहेतुकामर्षविशिष्ट आसीदिति शेषः । तथापि क्षत्रं क्षत्रियवंशं नोत्सादयिष्यति नाशयिष्यति । कच्चिच्छब्दो यद्यपीत्यर्थे ॥ २१ ॥

रा० टी०—तत्र हेतुं वदन्नाह—पूर्वमिति । पूर्वं पितृवधानन्तरकाले गतमन्युर्गतज्वरोऽयमासीदिति शेषः । अतः भूयः क्षत्रस्योत्सादनमस्य न चिकीर्षितं खलु निश्चितमेतत् ॥ २२ ॥

रा० टी०—एवमिति । एवमुक्त्वा परस्परं संभाष्य अर्घ्यमादाय ऋषयो वसिष्ठप्रभृतयः राम रामेति मधुरं वाक्यं भीमदर्शनं भार्गवमब्रुवन् ॥ २३ ॥

रा० टी०—प्रतीति । ऋषिदत्तां वसिष्ठप्रभृतिसमर्पितां तां

---

१ ससंज्ञा इति गो. रा. पाठः । २ आसाद्येति गो. रा. पाठः । ३ शरमुख्यमिति गो. रा. पाठः । ४ वचो मधुरमिति गो. रा. पाठः । *अस्यात्रानुपयोगः ।

# पञ्चसप्ततितमः सर्गः ।

प्रार्थयमानं दशरथमनादृत्यैव भार्गवः शैववैष्णवधनुषोः पुरावृत्तं निवेद्य वीर्यपरीक्षणाय रामं वैष्णवधनुरारोपणेऽचोदयत् ।

राम दाशरथे [1]वीर वीर्यं ते श्रूयतेऽद्भुतम् । धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥
तदद्भुतमचिन्त्यं च भेदनं धनुषस्तथा । तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्या[3]परं शुभम् ॥ २ ॥
तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः । पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥
तदहं ते बलं दृष्ट्वा धनुषो[4]ऽप्यस्य पूरणे । द्वन्द्वयुद्धं प्रदास्यामि वीर्य[5]श्लाघ्यमहं तव ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा । विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥
क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्[6]च महातपाः । बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥

---

प्रसिद्धां पूजां प्रतिगृह्यैव प्रतापवान् जामदग्न्यो रामः दाशरथिं राममभ्यभाषत । तुशब्द एवार्थे ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

**गो॰ टी॰—कच्चिदिति** ॥ २२ ॥

**गो॰ टी॰—**मनसो विमर्शे नोत्सादयिष्यतीत्यत्र हेतुमाह—**पूर्वमिति** ॥ २३ ॥ २४ ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

१ ] **ति॰ टी॰—**किमभाषतेत्यत्राह—**रामेति** । निखिलेन कार्त्स्न्येन । चेन ताटकावधादिसमुच्चयः ॥ १ ॥

**रा॰ टी॰—**तद्भाषणमेवाह—**रामेत्यादिभिः** । हे राम ! हे दाशरथे हे वीर ! ते तवैव वीर्यमद्भुतमीश्वराणामप्याश्चर्योत्पादकं श्रूयते । तत्र हेतुमाह—यतः धनुषोऽमेयेश्वरचापस्य भेदनं त्वत्कर्तृकद्वैधीकरणं निखिलेन जनेन कथितमिति शेषः । किंच निखिलेन निश्शेषतो मया श्रुतम् । चशब्दो हेत्वर्थे ॥ १ ॥

**गो॰ टी॰—**पूर्वमवतारप्रस्तावे जगत्पतित्वेन विष्णोः परत्वमुक्तमहं वेद्मि महात्मानमितिविश्वामित्रवचनेन पुरुषसूक्तं तत्र मानत्वेन सूचितं, काश्यपस्तुतौ च 'शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो । त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः' इति सर्वजगत्कारणत्वादिकमुक्तम् रुद्रस्य च गङ्गाधारणधातुमोक्षणादिवृत्तान्तेन कर्मवश्यत्वेन प्राकृतशरीरवर्तित्वेनाचापरत्वं सूचितं संप्रत्यल्पशक्तिकत्वेन तस्यापरत्वमाह पञ्चसप्ततितमे—**रामेत्यादि** । रोषातिरेकेण रामेति द्विः संबोधनम् । भेदनं चेति चकारेण ताटकावधादि समुच्चीयते ॥ १ ॥

२ ] **ति॰ टी॰—**यत्त्वया तथानायासेन धनुषो भेदनं कृतं तदद्भुतमचिन्त्यं चान्येन मनसाप्यशक्यम् अतस्तच्छ्रुत्वेत्यादि । गृह्य गृहीत्वा ॥ २ ॥

**रा॰ टी॰—तदिति** । अद्भुतं ईश्वराणामप्याश्चर्यसंपादकमत एव चिन्तयितुमशक्यं तत् प्रसिद्धं धनुषः अमेयेश्वरचापस्य त्वया भेदनं त्वत्कर्तृकद्वैधीकरणं श्रुत्वा अपरं विदारितेश्वरधनुःप्रतियोगिकभेदविशिष्टं शुभं तत् प्रसिद्धं धनुर्गृह्य गृहीत्वा अहं अनुप्राप्तः । त्वयेत्यत्र "उभयप्राप्तौ कर्मणि" इति नियमात्षष्ठ्यभावः ॥ २ ॥

**गो॰ टी॰—**अचिन्त्यं च भवतीति शेषः तच्छ्रुत्वेत्यतः पूर्वमत इत्युपस्कार्यम् ॥ २ ॥

३ ] **ति॰ टी॰—**जामदग्न्यं जमदग्नेः स्वपितुरागतम् । अत्रार्थे ष्यञ् आर्षः । शरेण युक्तं पूरयस्वैवाकर्षयस्व ॥ ३ ॥

**रा॰ टी॰—**अपरधनुरानयने प्रयोजनं वदन्नाह—**तदिति** । तत्तस्मादीश्वरधनुर्भेदनसामर्थ्यवत्त्वादेव हेतोः घोरसंकाशं भयंकरप्रकाशविशिष्टं जामदग्न्यमिदं महद्धनुः स्वशरेण पूरय तेन स्वबलं दर्शयस्व च एतेनैतत्कृतमहेश्वरधनुर्भङ्गे परशुरामस्य विश्वासाभावः सूचितः तेनैतत्कृत्यस्यासाध्यत्वं व्यञ्जितम् तेनेश्वरेश्वरेच्छायाः ईश्वरबुद्धिमोहकत्वं व्यक्तम् तेन रघुनाथस्य स्वनिष्ठेश्वरनियन्तृत्वगुणप्रकटनेच्छा व्यक्ता । च शब्दो हेत्वर्थे ॥३॥

**गो॰ टी॰—**जमदग्नेरागतं जामदग्न्यम् आगतार्थे यञार्षः ॥३॥

४ ] **ति॰ टी॰—**अस्यापि धनुषः पूरणे सति । वीर्यश्लाघ्यं वीर्यवच्छ्लाघ्यं च । वीर्येण तद्वत्तया श्लाघ्यमित्यन्ये ॥ ४ ॥

**रा॰ टी॰—तदिति** । अस्य मदानीतस्य धनुषः प्रपूरणे ते तव अहं न जहाति कदाचित् त्यजति नित्यस्थायीत्यर्थः । तत्प्रसिद्धं बलं दृष्ट्वा वीर्यश्लाघ्यं वीर्यप्रशंसाहेतुभूतं द्वन्द्वयुद्धमहं तव प्रदास्यामि । पूर्वपठिताहशब्दः नञ्पूर्वकहाधातुप्रकृतिक आतोऽनुपसर्गे इतिविधिबोधितकप्रत्ययान्तः श्लाघ्यमिति भावण्यदन्तम् ॥ ४ ॥

**गो॰ टी॰—**तत् तदा ॥ ४ ॥ ५ ॥

५ ] **ति॰ टी॰—**तद्वचनं द्वन्द्वयुद्धवचनम् ॥ ५ ॥

**रा॰ टी॰—तस्येति** । तदा परशुरामसंभाषणकाले तस्य परशुरामस्य तत् व्यामोहविशिष्टं वचनं श्रुत्वा अदीनः त्रैकालिकदीनताभावविशिष्टः प्राञ्जलिः प्रणयसूचकबद्धयुगलकरः विषण्णवदनः मोहहारकेश्वरव्यामोहदर्शनेनोदासीनचित्तः राजा दशरथः वाक्यमब्रवीत् ॥ ५ ॥

६ ] **ति॰ टी॰—**क्षत्ररोषात्तज्जक्षत्रवधात् ॥ ६ ॥

---

१ रामेति गो. पाठः । २ त्वयेति गो. रा. पाठः । ३ परमिति गो.रा. पाठः । ४ धनुषोऽस्य प्रपूरणे इति गो. रा. पाठः । ५ श्लाघ्यस्य राघवेति गो. पाठः । ६ त्वं महायशा इति गो. रा. पाठः ।

भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् । सहस्राक्षे प्रतिज्ञाय शस्त्रं [1]प्रक्षिप्तवानसि ॥ ७ ॥
स त्वं धर्मपरो भूत्वा कश्यपाय वसुंधराम् । दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८ ॥
मम सर्वविनाशाय संप्राप्तस्त्वं महामुने । न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ ९ ॥
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् । अनादृत्य तु तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥
इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभि[2]पूजिते । दृढे [3]बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११ ॥
[4]अनुसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे । त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२ ॥
[5]इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः । तदिदं वैष्णवं राम धनुः [6]परपुरञ्जयम् ॥ १३ ॥

रा० टी०—तद्वाक्यमेवाह—क्षत्रेत्यादिभिः । क्षत्ररोषात् क्षत्रियकृतपितृवधजनितक्षत्रियविषयकक्रोधं परित्यज्य प्रशान्तस्त्वमसीति शेषः । अतो महातपा ब्राह्मणस्त्वं बालानां मम पुत्राणामभयमेव दातुमर्हसि लीलयापि भयं दातुं नार्हसीत्यर्थः । चशब्द एवार्थे ॥ ६ ॥

गो० टी०—संप्रत्यस्थाने भयशङ्कितया दशरथो रामे प्रेमभराक्रान्तो रामवैभवं ताटकाताटकेयनिरसनादिना जानन्नपि मङ्गलाशासनमारचयति—क्षत्रेति ॥ ६ ॥

७ ] ति० टी०—सहस्राक्षे तत्संनिधौ प्रतिज्ञायातः परं शस्त्रं न ग्रहीष्यामीत्येवम् । प्रक्षेपस्त्यागः ॥ ७ ॥

रा० टी०—त्वत्कर्तृकभयदानं सर्वथाऽनुचितमिति बोधयन्नाह—भार्गवाणामित्यादिश्लोकत्रयेण । स्वाध्यायव्रतशालिनां भार्गवाणां कुले जातः प्रादुर्भूतस्त्वं सहस्राक्षे तत्समीपे प्रतिज्ञाय इतः प्रभृति शस्त्रग्रहणं न करिष्यामीति प्रतिज्ञां कृत्वा शस्त्रं निःक्षिप्तवानसि ॥ ७ ॥

गो० टी०—सहस्राक्षे तत्संनिधावित्यर्थः । निक्षिप्तवान् त्यक्तवानित्यर्थः ॥ ७ ॥

८ ] ति० टी०—तपसे महेन्द्रकृतकेतनत्वम् ॥ ८ ॥

रा० टी०—स इति । सः कृतप्रतिज्ञस्त्वं धर्मपरो भूत्वा अत एव कश्यपाय वसुंधरां दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः कृतमहेन्द्राचलनिवासः अभव इति शेषः ॥ ८ ॥

गो० टी०—महेन्द्रकृतकेतनः महेन्द्रपर्वते कृतनिवासः ॥८॥

९–१० ] ति० टी०—त्वं तथा त्यक्तशस्त्रादिर्मम सर्वविनाशाय कुतः संप्राप्त इत्यन्वयः । सर्वनाशमेवोपपादयति—न चेत्यादि ॥ ९ ॥ १० ॥

रा० टी०—ननु स्वतन्त्रत्वात् स्वप्रतिज्ञामपहाय युद्धं करिष्याम्येवेत्यत आह—ममेति । हे महामुने ! मम सर्वविनाशाय मत्संबन्धिशरीरादिनिखिलध्वंसाय त्वं संप्राप्तः । ननु द्वन्द्वयुद्धे सर्वविनाशः कथमित्यत आह—रामे रामनिष्ठे एकस्मिन् अल्पेऽपि हते भवत्कर्मकप्राणवियोगानुकूलव्यापारे सति वयं सर्वे न जीवामहे प्राप्तब्रह्महत्याप्रयुक्तापकीर्त्या विनष्टा इव भविष्याम इत्यर्थः । हतशब्दः गत्यर्थाकर्मकेति भावनिष्ठान्तः अकर्मकत्वं च कर्माविवक्षया ॥ ९ ॥

रा० टी०—ब्रुवतीति । दशरथे एवं ब्रुवति सति प्रतापवान् जामदग्न्यः तद्वाक्यं दशरथवचनमनादृत्यैव राममेव अभ्यभाषत ॥ १० ॥

गो० टी०—सर्वविनाशाय संप्राप्त इत्येतदुपपादयति—न चेति ॥ ९ ॥ १० ॥

११ ] ति० टी०—इमे वक्ष्यमाणलक्षणे यत्त्वया भग्नं यच्च मया धृतं ते इत्यर्थः । बलवती बलवन्नाम्न्ये सुकृते यत्ननिर्मिते ॥ ११ ॥

रा० टी०—तद्भाषणमेवाह—इमे इति । दिव्ये देवलोकोद्भवे अत एव दृढे विनाशभयरहिते बहुबले बहुबलसाध्योत्थापने अत एव श्रेष्ठे अत एव लोकाभिपूजिते अत एव मुख्ये इमे द्वे धनुषी विश्वकर्मणा सुकृते देवार्थं निर्मिते अभवतामिति शेषः ॥ ११ ॥

गो० टी०—लोकाभिविश्रुते लोके सर्वतः प्रसिद्धे बलवती इति नपुंसकद्विवचनम् सुकृते प्रयत्नेन निर्मिते ॥ ११ ॥

१२ ] ति० टी०—युयुत्सवे त्रिपुरवासिभिरिति शेषः । त्रिपुरघ्नं तद्धननसाधनम् ॥ १२ ॥

रा० टी०—अतीति । युयुत्सवे त्रिपुरासुरेण योद्धुमिच्छवे त्र्यम्बकाय शिवाय यदेकं धनुः सुरैरतिसृष्टं दत्तं हे नरश्रेष्ठ ! हे काकुत्स्थ ! तत्त्रिपुरघ्नं धनुस्त्वया भग्नम् ॥ १२ ॥

गो० टी०—अतिसृष्टं दत्तं युयुत्सवे त्रिपुरवासिभिर्योद्धुमिच्छवे यत्त्वया भग्नं तत्त्र्यम्बकाय दत्तमिति पूर्वेणान्वयः ॥ १२ ॥

१३ ] ति० टी०—वैष्णवं विष्णवे दत्तम् तदिदं वैष्णवं वैष्णवत्वेन प्रसिद्धम् ॥ १३ ॥

रा० टी०—इदमिति । दुर्धर्षमिदं द्वितीयं धनुः सुरोत्तमैर्विष्णोर्विष्णवे दत्तम् संबन्धसामान्याविवक्षया षष्ठी । हे राम ! वैष्णवं परपुरंजयं तद्धनुः इदं मत्करस्थम् विद्धीति शेषः ॥ १३ ॥

१ निक्षिप्तवानिति गो. रा. पाठः । २ विश्रुते इति गो. पाठः । ३ बहुबले इति रा. पाठः । ४ अतिसृष्टमिति गो. रा. पाठः । ५ अर्धमिदं गो. नास्ति । ६ परमभास्वरामिति गो. पाठः ।

समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् । तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ॥ १४ ॥
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया । अभिप्रायं तु विज्ञाय देवतानां पितामहः ॥ १५ ॥
विरोधं जनयामास तयोः सत्यवतां वरः । विरोधे तु महद्युद्धमभवद्रोमहर्षणम् ॥ १६ ॥
शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः । तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ॥ १७ ॥
हुंकारेण महादेवः स्तम्भितोऽथ त्रिलोचनः । देवैस्तदा समागम्य सर्षिसंघैः सचारणैः ॥ १८ ॥
याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ । जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ १९ ॥

---

१४ ] ति० टी०—रौद्रेण शैवेन । शैवस्येदानीमसारत्वमाह—तदा त्विति ॥ १४ ॥

रा० टी०—समानेति । हे काकुत्स्थ ! रौद्रेण धनुषा इदं वैष्णवं धनुः समानसारं तुल्यदृढताविशिष्टमेव । समानसारत्वे हेतुं वदन्नाह—तदा त्रिपुरविजयोत्तरसमये एव शितिकण्ठस्य नीलकण्ठशिवस्य विष्णोश्च बलाबलनिरीक्षया बलाबलयोः परीक्षया हेतुना सर्वाः देवताः पितामहं ब्रह्माणं पृच्छन्तिस्म तुशब्दावेवार्थौ सार्धश्लोक एकान्वयी ॥ १४ ॥

गो० टी०—समानसारं समानबलम् ॥ १३ ॥

गो० टी०—समानसारत्वे किमिदानीं परीक्ष्यमित्याशङ्क्य रौद्रस्य धनुषो वैकल्यादिति वक्तुं प्रस्तावान्तरमुपक्षिपति—तदेत्यादि । तदा दुष्करत्रिपुरदहनानन्तरकाले बलाबलनिरीक्षया बलाबलनिरीक्षणेच्छया कोऽनयोर्बलवानित्यपृच्छन्नित्यर्थः ॥१४॥

१५ ] ति० टी०—विष्णोस्त्रिपुरसंहारे शरत्वेन रुद्रपरिकरान्तर्भावश्रवणात् । अयं रुद्राद्दुर्बल उत सम इत्येवं शितिकण्ठविष्ण्वोर्बलाबलज्ञानाय देवताः पितामहं पृच्छन्ति स्म । स च पितामहस्तेषां देवानामुक्तमभिप्रायं विज्ञाय ॥ १५ ॥

रा० टी०—अभिप्रायमिति । सत्यवतां वरः पितामहो देवतानामभिप्रायं विज्ञायैव तयोर्विष्णुशिवयोर्विरोधं जनयामास । तुशब्द एवार्थे ॥ १५ ॥

गो० टी०—अभिप्रायं त्विति । पूर्वं वराहादिरूपेण भूम्युद्धरणादिकरणेन विष्णुरधिक इति स्तुवतस्त्वत्तः श्रुतं, अधुना विष्णुमुपसर्जनीकृत्य त्रिपुरदहनाद्रुद्रस्याधिकबलत्वं प्रतीयत इत्यभिप्रायमित्यर्थः । सत्यवतां वर इत्यनेन बहुश उपदेशेऽपि नैषां चित्तं समाधत्ते अतः क्रिययैव बलतारतम्यं दर्शयिष्यामीत्यभिप्रेत्य विरोधं जनयामासेति गम्यते । अहं धर्मिप्रधानः विष्णुस्तु ममोपसर्जन इत्युक्तं रुद्रेणेति विष्णुं प्रत्युक्त्वा शराग्रतया मयावस्थानान्मयैव त्रिपुरदहनं कृतमिति विष्णुनोक्तमिति रुद्रं प्रत्युक्त्वा च विरोधजननमित्यवगम्यते ॥१५॥१६॥

१६ ] ति० टी०—सत्यवतां वरः सत्यसंकल्पः । स्वसंकल्पेन देवानां मोहं निरसितुमेकात्मनोरपि रुद्रविष्ण्वोर्विरोधं जनयामास । तावपि तत्संकल्पसिद्ध्यर्थमेव विरोधं चक्रतुः । इदं युद्धं दक्षयज्ञवधे बोध्यमतः पूर्वेण न विरोधः ॥ १६ ॥

रा० टी०—विरोध इति । परस्परजयैषिणोः शितिकण्ठस्य विष्णोश्च विरोधे सत्येव रोमहर्षणं महत् युद्धमभवत् । तुशब्द एवार्थे ॥ १६ ॥

१७-१८ ] ति० टी०—तदा हुंकारेण विष्णुना शैवं धनुर्विजृम्भितं शिथिलीकृतं महादेवश्च स्तम्भितः ॥ १७ ॥ १८ ॥

रा० टी०—तदेति । तदा तयोर्युद्धसमये भीमपराक्रमं शैवंधनुः हुंकारेणैव विष्णोरिति शेषः । जृम्भितं शैथिल्यं प्राप्तम् । अथ धनुर्विजृम्भणानन्तरं त्रिलोचनो महादेवः स्तम्भितः व्यापाररहित आसीदिति शेषः । एतेन सत्त्वगुणस्य तदानीं प्राबल्यं सूचितम् ॥ १७ ॥

गो० टी०—जृम्भितमित्यत्रापि हुंकारेणेत्यनुषज्यते जृम्भितं भग्नमिति यावत् । हुंकारेण नत्वभिमन्त्रितबाणेन महादेवः महादेवशब्दो महत्त्वसमाख्यायिन इति भावः । त्रिलोचन इत्यनेन तृतीयं लोचनमपि निरर्थकं कृतमिति भावः ॥ १७ ॥

रा० टी०—देवैरिति । तदा निर्व्यापारशिवस्थितिकाले सर्षिसंघैः ऋषिसंघसहितैः सचारणैः चारणसहितैः समागम्य हरिहरसमीपं प्राप्य स्थितैः देवैः प्रशमं शान्तिं याचितौ सुरोत्तमौ तौ विष्णुशिवौ तत्र शान्तियाचनसमये प्रशमं जग्मतुः । प्रशममित्युभयान्वयि । अत्र शिवस्तम्भनानन्तरं तत्प्रशान्तियाचनया तमोगुणोद्रेकसमये स्वीकृततमोगुणस्य विजयो भविष्यति पुनः सत्त्वगुणोद्रेकसमये स्वीकृतसत्त्वगुणस्य विजयो भविष्यतीत्यनवस्था स्यादिति देवाभिप्रायः सूचितः ॥ १८ ॥

गो० टी०—याचितौ प्रशमं जग्मतुः विष्णुः किमनेन बालेन अनुकम्प्यतामिति याचितस्तन्निग्रहान्निवृत्तः रुद्रस्तु स्वामितः पराजयो नास्माकं दोषायेति सान्त्वितस्तत्तुल्यत्वाभिमानान्निवर्तित इत्यर्थः ॥ १८ ॥

१९] ति० टी०—याचिताविति । एतावत्यर्थे दृष्ट्वा प्राप्तनिश्चयैर्देवैर्युद्धादुपरतिं याचितौ देवतानुग्रहाय प्रशमं जग्मतुः॥१९

रा० टी०—जृम्भितमिति । विष्णुपराक्रमैः तथा जृम्भितं तच्छैवं धनुर्दृष्ट्वा सर्षिगणाः देवा विष्णुमधिकं मेनिरे स्वीकृततत्सत्त्वगुणस्य तत्काले आधिक्यं स्वीचक्रुरित्यर्थः । अत एव त्रिपुरविजयकाले शिवबलस्याधिक्यदर्शनेऽपि नैतेषां संशयोत्पत्तिः शिखी नष्टः स्वर्गी ध्वस्त इतिवत् सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायादाधिक्यन्यूनतयोः तद्विशेषणीभूतगुणयोरेव पर्यवसानं 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः' इत्याद्युक्त्या हरिहरयोरैक्यात् तत्तन्न्यूनाधिकतयोः वक्तव्यत्वस्याशक्यत्वात् अत एव एको ह वै रुद्रः । एको ह वै नारायणः" इतिश्रुत्योर्न विरोधः 'अहं

अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तथा । धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ॥ २० ॥
देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् । इदं च वैष्णवं राम धनुः परपुरञ्जयम् ॥ २१ ॥
ऋचीके भार्गवे प्रादाद्विष्णुः स न्यासमुत्तमम् । ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ॥ २२ ॥
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः । न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ॥ २३ ॥
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः । वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ॥
क्षत्रमुत्सादयं रोषाज्जातं जातमनेकशः ॥ ॥ २४ ॥

---

ब्रह्मा च शर्वश्च जगतः कारणं परम्। धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु' इत्यादिवचनं संगच्छते । एतेन तमउद्रेकेण कदाचिद्रुद्रस्य पराजयो न दोषायेति केनचिदुक्तं प्रत्युक्तमिति भूषणकारोक्तमेव प्रत्युक्तम् त्रिपुरविजयकाले विष्णोरल्पबलवत्त्वे अस्यैव यत्नस्य तैरपि वक्तव्यत्वात्समानप्रमाणश्रुत्योरेकत्रानपेक्षितत्वकल्पनायाः अन्याय्यत्वात्प्रमाणाभावाच्च ॥ १९ ॥

गो० टी०–अथ स्वाभिमतसिद्धिमाह–जृम्भितमिति। तत् विष्ण्वधिष्ठानेन पूर्वं त्रिपुरघ्नं जृम्भितं विष्ण्वधिष्ठानाभावेन जृम्भितं दृष्ट्वा नत्वाप्तवाक्याच्छ्रुत्वा शैवं शिवाभिमानमात्रविषयभूतं विष्णुपराक्रमैः पूजायां बहुवचनं हुंकारेणेति पूर्वमुक्तेः । आधिक्यावबोधनं न पक्षपातमूलमित्याह–सर्षिगणा इति। अतीन्द्रियार्थद्रष्टार ऋषयस्तेषां गणाः वैखानसवालखिल्यादयः 'भूयसां स्याद्बलीयस्त्वम्' इति न्यायेन तज्ज्ञानं न पक्षपातमूलं न वा भ्रान्तिमूलमिति भावः। एतेन "एक एव रुद्रो न द्वितीयाय तस्थे" इत्यादिश्रुतिः'न किरिन्द्र त्वदुत्तरः' इत्यादिवदितरापेक्षया श्रेष्ठत्वाभिप्राया "एको ह वै नारायण आसीत्" इत्यादिश्रुत्युक्तो नारायणापरपर्यायो विष्णुरेव परं तत्त्वमित्यभिहितम्। एतेन तमउद्रेकेण कदाचिद्रुद्रस्य पराजयो न दोषायेति केनचिदुक्तं प्रत्युक्तं तमोभिभवस्यैवापरत्वनियामकत्वात् इन्द्रजिता रामपराजयस्तु अदृश्यो न शब्दवेधेन वध्यत इतिधर्मप्रवर्तनाय धर्मसंस्थापनाय हि तदवतार इत्युक्तम्, अत्र तु स्वरूपत एव रुद्रस्य पराजयः किंच रुद्रपराजयस्य तमःकृतत्वे देवानामधिकत्वबुद्धिर्न स्यादेव अयं च धनुर्भङ्गो दक्षयज्ञान्त इति बोध्यम्, अन्यथा दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवानित्यादिना दक्षयज्ञान्ते रुद्रो देवानां धनुर्ददावित्युक्तं विरुध्येत अत्रेदमेव धनुस्त्रिपुरघ्नमित्युक्तत्वादेतद्विरुद्धं मेरुधनुष्टं पुराणान्तरोक्तमनादरणीयम् । ननु पूर्वं दक्षयज्ञान्ते रुद्रो देवेभ्यो धनुर्दत्तवानित्युक्तं पुनश्च देवराताय रुद्रो दत्तवानित्युक्तं विश्वामित्राश्रमे मुनिभिर्यज्ञे जनकाय देवा ददुरित्युक्तमनसूयासमीपे सीतया जनकाय वरुणेन दत्तमित्युक्तं कथमिदं संगच्छते। श्रूयतां पूर्वं देवास्त्रिपुरवधाय विश्वकर्मणा निर्मितं धनू रुद्राय ददुः तद्दक्षयज्ञान्ते विरोधे विष्णुहुंकारेण जृम्भितं देवैः प्रार्थितो रुद्रो देवरातस्य हस्ते दत्तवान् ततः प्रभृति न्यासभावेन मैथिलेषु वर्तमानं तत्स्वत्वेन देवा वरुणेन जनकायादापयन्निति क्रमः तेन दक्षयज्ञान्ते धनुर्दानवचनं देवैर्जनकस्य यज्ञफलत्वेन दानवचनं वरुणेन दत्तत्ववचनं च समंजसं भवति ॥ १९-२२ ॥

२० ] ति० टी०–विष्णुमधिकं श्रेष्ठं सेव्यत्वेन मेनिरे ज्ञातवन्तः । वस्तुतस्तु प्रकृतयुद्धे विष्णोराधिक्यदर्शनात्त्रिपुरवधे शिवस्याधिक्यदर्शनात्तयोः साम्यग्रहणमिति तात्पर्यम् । अधिकमित्यस्य स्वीयपूर्वज्ञानविषयस्वरूपापेक्षयाधिकमित्यर्थः । धनू रुद्रस्त्विति । एवं युद्धदशायां क्रुद्धः पश्चाद्देवप्रार्थनया प्रसन्नः शिवो देवेभ्यो दत्त्वा ततः सर्वैर्देवैः सह युद्धार्थं धनुरिच्छतो देवरातस्य ददौ । अत एव वरुणेन दत्तमिति वक्ष्यमाणेन रुद्रेण देवानां दत्तमित्युक्तग्रन्थेन च न विरोध इत्याहुः॥२०॥

रा० टी०–धनुरिति । संक्रुद्धः संक्रुद्धं संग्रामजनितातिकोपं जहाति संग्रामं त्यजति स महायशा रुद्रः विदेहेषु जातस्य राजर्षेर्देवरातस्य हस्ते एव ससायकं सायकसहितं धनुर्ददौ देवैर्दापयामास अन्तर्भावितणिजर्थो ददातिः। तुशब्दः एवार्थे ॥२०॥

२१ ] ति० टी०–एवं च शिवस्य धनुषस्तदारभ्य शिथिलत्वेन तद्भङ्गकृतं न ते वीर्याधिक्यमिति भार्गवाभिप्रायः । अथ स्वधनुष आगममाह–इदं चेत्यादि । परपुरंजयमित्यार्षमसंज्ञायाम् ॥ २१ ॥

रा० टी०–इदमिति । हे राम ! परपुरंजयमत एव संन्यासं सम्यक् न्यासः शत्रूणामैश्वर्यत्यागः यस्मात्तदुत्तममिदं वैष्णवं धनुस्तु भार्गवे ऋचीके विष्णुः प्रादात्। चस्त्वर्थे ॥२१॥

२२ ] ति० टी०–भार्गवे भृगुपुत्रे स उक्तरूपो विष्णुः न्यासं प्रादात् । अप्रतिकर्मणः स्वहन्तर्यपि शापादिप्रतिक्रियारहितस्य ॥ २२ ॥

रा० टी०–ऋचीक इति । महातेजा ऋचीकस्तु अप्रतिकर्मणः प्रतिक्रियारहितक्रियाविशिष्टस्य पुत्रस्य स्वसुतस्य मम पितुर्महात्मनो जमदग्नेर्दिव्यं धनुर्ददौ संप्रदानस्य शेषत्वविवक्षया षष्ठी ॥ २२ ॥

२३ ] ति० टी०–न्यस्तशस्त्रे न्यस्तं त्यक्तं विष्णुधनूरूपं शस्त्रं येन तथाभूते तपोबलयुतेऽपि पितरि प्राकृतां बुद्धिमास्थितोऽर्जुनः कार्तवीर्यो मत्पितुर्मृत्युं विदधे ॥ २३ ॥

रा० टी०–न्यस्तेति । न्यस्तशस्त्रे परित्यक्तास्त्रशस्त्रे तपोबलसमन्विते मे पितरि जमदग्नौ प्राकृतां बुद्धिमास्थितः अर्जुनः मृत्युं विदधे ॥ २३ ॥

गो० टी०–अर्जुनः कार्तवीर्यः ॥ २३ ॥

२४ ] ति० टी०–तमयोग्यं पितुर्वधं श्रुत्वाहं रोषात्क्षत्रमुत्सादयमुत्सादितवान् अडभाव आर्षः ॥ २४ ॥

---

१ उत्पाटयन्निति रा. पाठः ।

पृथिवीं चाखिलां प्राप्य कश्यपाय महात्मने । यज्ञस्यान्तेऽददं राम दक्षिणां पुण्यकर्मणे ॥ २५ ॥
दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः । श्रुत्वा तु धनुषो भेदं ततोऽहं द्रुतमागतः ॥ २६ ॥
तदेवं वैष्णवं राम पितृपैतामहं महत् । क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २७ ॥
योजयस्व धनुःश्रेष्ठे शरं परपुरञ्जयम् । यदि शक्तोऽसि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ।

दाशरथिर्धनुषि शरमारोप्य स्वशरस्य चामोघत्वं प्रतिपाद्य ब्राह्मणत्वाद्भार्गवस्य लक्ष्यत्वमपनीय कुत्रेमं मुञ्चामीति भार्गवं पप्रच्छ कृतानुमतिश्च भार्गवस्य तपोर्जितलोकान्बभञ्ज । भार्गवोऽपि दाशरथिं विष्णुं मत्वा तत्कृतानुमतिस्तपस्तप्तुं महेन्द्रपर्वतं जगाम ।

श्रुत्वा तु[6] जामदग्न्यस्य वाक्यं दाशरथिस्तदा । गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १ ॥
कृतवानसि यत्कर्म श्रुतवानस्मि भार्गव । अनुरुं[7]ध्यामहे ब्रह्मन्पितुरानृण्यमास्थितः ॥ २ ॥

रा० टी०—वधमिति । हे राम ! अप्रतिरूपं वधानर्हं सुदारुणं पितुर्वधं श्रुत्वा रोषात् जातं जातं क्षत्रमब्रह्मण्यक्षत्रकुलमनेकशस्त्रिःसप्तवारमुत्पाटयन् सन् अखिलां हततत्तत्क्षत्रियस्वामिकां पृथिवीं प्राप्य यज्ञस्य प्रारब्धवधप्रायश्चित्तरूपयागस्य अन्ते अवसाने पुण्यकर्मणे महात्मने कश्यपाय दक्षिणां दत्त्वा महेन्द्रनिलयः कृतमहेन्द्राचलनिवासः तपोबलसमन्वितः अहं धनुषो भेदं भवत्कृतधनुर्भङ्गं श्रुतवान् ततः धनुर्भङ्गश्रवणात् तदा धनुर्भङ्गोत्तरकाले द्रुतमागतोऽहमस्मीति शेषः । श्लोकत्रयमेकान्वयि ॥ २४–२६ ॥

गो० टी०—अनेकशः त्रिःसप्तकृत्वः ॥ २४–२६ ॥

२५ ] ति० टी०—प्राप्य स्वबलेनेति शेषः । पुण्यकर्मणे यज्ञरूपपुण्यसाद्गुण्यार्थम् ॥ २५ ॥

२६ ] ति० टी०—दत्त्वा भूमिमिति शेषः । महेन्द्रो महेन्द्रपर्वतः । धनुषः शैवस्य ॥ २६ ॥

२७ ] ति० टी०—पितृपैतामहं पितृपितामहक्रमादागतम् उत्तरपदवृद्धिरार्षी । क्षत्रधर्मं मद्वर्तिनं मया पूर्वमङ्गीकृतं क्षत्रधर्मम् न तु ब्राह्मणधर्ममाश्रित्य त्यजेत्यर्थः । ब्राह्मणवच्छान्तिमास्थाय नाहं शक्त इति मा ब्रूहीत्यर्थं इति कतकः ॥ २७ ॥

रा० टी०—तदिति । हे राम ! तत् वर्णितप्रभावमुत्तममिदं वैष्णवं धनुः महत् अतिप्रशंसनीयं पितृपैतामहं क्षत्रधर्मं पुरस्कृत्य संस्मृत्येत्यर्थः गृह्णीष्व ॥ २७ ॥

गो० टी०—तदिदमिति । उत्तममशिथिलमित्यर्थः । पितृपैतामहं पितृपितामहक्रमायातम् उत्तरपदवृद्धिरार्षी । क्षत्रधर्ममिति ब्राह्मणवन्न शक्त इति मा ब्रूहीत्यर्थः ॥ २७ ॥

२८ ] ति० टी०—शक्तोऽसि शरयोजने इति शेषः । तावतापि न त्वां त्यक्ष्यामि, अपि तु द्वन्द्वं दास्यामीत्यर्थः, अन्यथा मां शरणं व्रजेति तात्पर्यम् ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

रा० टी०—योजयस्वेति । हे काकुत्स्थ ! यदि त्वं शक्नोषि तर्हि धनुःश्रेष्ठं परपुरञ्जयं शत्रुपुरञ्जयकर्तारं शरं योजयस्व ततो योजनानन्तरं द्वन्द्वं द्वन्द्वयुद्धं दास्यामि एतेन युद्धमन्तरावकाशं न प्राप्स्यसीति ध्वनितम् ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

गो० टी०—यदि शक्नोषि तावतापि न त्वां मुञ्चामि अपि तु ततः अनन्तरं द्वन्द्वयुद्धं दास्यामि वीर्यपरीक्षणार्थमिदमिति भावः ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

१ ] ति० टी०—पितुर्गौरवात्पितृसंनिधिवशात् यन्त्रिता नियमिता कथोच्चैःकथनं येन सः ॥ १ ॥

रा० टी०—श्रुत्वेति । जामदग्न्यस्य परशुरामस्य तद्वाक्यं श्रुत्वा पितुर्गौरवात् पितृनिष्ठगुरुत्वात् यन्त्रिता नियमिता कथा भाषणं यस्य पितृभिया मितभाषणविशिष्ट इत्यर्थः । किंच गौरवात् स्वनिष्ठसर्वगुरुत्वं संस्मृत्य यन्त्रितकथो दाशरथिः पितुः समीपे विद्यमानं रामं परशुराममथाब्रवीत् मङ्गलवाक्यमकथयत् ॥ १ ॥

गो० टी०—अथ जामदग्न्यगर्वनिर्वापणं षट्सप्ततितमे—श्रुत्वेत्यादि । पितुर्गौरवादिति पितुः सन्निधिगौरवादित्यर्थः । यन्त्रिता नियमिता कथा उच्चैःकथनं येन स तथा ॥ १ ॥

२ ] ति० टी०—पितुरानृण्यं पितृहन्तृक्षत्रवधेन पितृवैरशुद्धिमास्थितः सन्, यत्कर्म त्रिःसप्तकृत्वः क्षत्रियवधरूपं कृतवानसि तदनुरुध्यामहेऽङ्गीकुर्मः शरेणावश्यं वैरशुद्धेः कर्तव्यत्वात् ॥ २ ॥

रा० टी०—तद्वाक्यमेवाह—कृतवानिति । हे भार्गव !

१ त्विति रा. पाठः । २ काश्यपायेति गो. पाठः । ३ तदेति गो. रा. पाठः । ४ श्रुतवानिति गो. रा. पाठः । ५ तदिदमिति गो. रा. पाठः । ६ तदिति गो. रा. पाठः । ७ अनुरुन्ध्यामहे इति गो. रा. पाठः ।

वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव । अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३ ॥
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम् । शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥
आरोप्य सधनू रामः शरं सज्यं चकार ह । जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीदिदम् ॥ ५ ॥
ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च । तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ ६ ॥
इमां वा त्वद्गतिं राम तपोबलसमर्जितान् । लोकानप्रतिमान्वापि हनिष्यामीति मे मतिः ॥ ७ ॥
नह्ययं वैष्णवो दिव्यः शरः परपुरंजयः । मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥

हे ब्रह्मन् ! पितुः आनृण्यम् अवश्यकर्तव्यपितृविघातिवधरूपमृणापनयनबुद्धिमास्थितस्त्वं यत्कर्म पितृविघातिवधरूपक्रियां कृतवानसि तत् अहं श्रुतवानस्मि अतः वयमनुरुन्ध्यामहे त्वत्कर्म अतिप्रशस्तत्वेन वदाम इत्यर्थः ॥ २ ॥

गो० टी०—श्रुतवानिति । पितुरानृण्यं पितृघातिक्षत्रवधेन पितृवैरशुद्धिमास्थितः सन् यत्कर्म त्रिःसप्तकृत्वः क्षत्रवधरूपं कृतवानसि तच्छ्रुतवानस्मि तदनुरुन्ध्यामहे अनुरुन्ध्मः अवश्यं शरेण वैरशुद्धेः कर्तव्यत्वात् कर्तरि यगार्षः ॥ २ ॥

३ ] ति० टी०—यन्मां क्षत्रधर्मेण युक्तं वीर्यहीनमशक्तमिव मन्यमानोऽवजानासि तन्नानुरुन्ध्यामहे अतोऽद्य मे तेजः पराभिभवासहनं तन्मूलं मे पराक्रमं च पश्य ॥ ३ ॥

रा० टी०—वीर्येति । हे भार्गव ! क्षत्रधर्मेण स्थितमत एव अशक्तं ब्राह्मणोद्देश्यकातिभाषणसंबन्धिसामर्थ्यरहितं मां त्वं वीर्यहीनमिवावजानासि अतो मे तेजः पराक्रमं चाद्य त्वं पश्य । विनापि चं समुच्चयः ॥ ३ ॥

गो० टी०—वीर्येति । वीर्यहीनमत एव क्षत्रधर्मेण प्राप्तधनुर्ग्रहणयुद्धादौ अशक्तमिव मन्यमानो यन्मामवजानासि क्षत्रधर्मं पुरस्कृत्येत्यादिना अवमानं कृतवानसि तन्नानुरुन्ध्यामहे "अस्मदो द्वयोश्च" इतिचकारादेकस्मिन् बहुवचनं अतस्तेजः परपरिभावासहनं पराक्रमं स्वशक्त्या पराभिभवनं च पश्य ॥ ३–६ ॥

४ ] ति० टी०—क्रुद्धः प्रागुक्तरूपावमानवचनेन क्रोधादेव तद्धस्तात्स्वयमेव धनुः, चाद्भार्गवनिष्ठां वैष्णवीं शक्तिं जग्राह । तदुक्तं पाद्मे—'इत्युक्त्वा देवि वैष्णव्या शक्त्या तद्गतया सह । जग्राह वैष्णवं चापं विनयेन च लीलया ॥' इति । अत्राप्यग्रे वक्ष्यति—'निर्वीर्यो जामदग्न्योऽसौ' इति । लघुः शीघ्रः पराक्रमो यस्य सः ॥ ४ ॥

रा० टी०—इतीति । क्रुद्धः क्रुधं स्वाश्रितकोपं जहाति हापयतीति राघवः स रामः इत्युक्त्वा भार्गवस्य हस्ताल्लघुपराक्रमः सन् वरायुधं चापं शरं च प्रतिसंगृह्य गृहीत्वा धनुः आरोप्य शरं सज्यं ज्यासंयुक्तं चकार ह प्रसिद्धमेतत् । सार्धश्लोक एकान्वयी ॥ ४ ॥

५ ] ति० टी०—आरोप्य ज्यारोपं कृत्वा शरं सज्यं ज्यायुक्तं चकार ॥ ५ ॥

रा० टी०—जामदग्न्यमिति । ततः सज्यीकरणानन्तरं क्रुद्धः स्वाश्रितकोपनिवर्तको रामः जामदग्न्यं रामं वचोऽब्रवीत् ॥ ५ ॥

६ ] ति० टी०—जमदग्निपुत्रत्वेन ब्राह्मणोऽसीति विश्वामित्रभगिन्याः पौत्रोऽसीति पूज्यस्त्वं मेऽसि वधानर्होऽसि अतस्ते प्राणहरं शरं मोक्तुं न शक्तः अस्मीति शेषः ॥ ६ ॥

रा० टी०—तद्वचनमेवाह—ब्राह्मण इति । ब्राह्मणोऽसि इतिहेतुना विश्वामित्रकृतेन विश्वामित्रात् अस्मद्गुरुविश्वामित्रभगिनीपुत्रात् कृतेन जातत्वेन च हेतुना त्वं मे पूज्योऽसि तस्माद्धेतोः हे राम परशुराम ! प्राणहरं शरं ते तुभ्यं मोक्तुं न शक्तोऽस्मीति शेषः ॥ ६ ॥

गो० टी०—विश्वामित्रकृतेन विश्वामित्रकृतस्नेहेन विश्वामित्रभगिन्यां सत्यवत्यामृचीकाज्जातो जमदग्निस्तस्य पुत्रः परशुराम इति विश्वामित्रसंबन्धेनेत्यर्थः ॥ ६ ॥

७ ] ति० टी०—इमां प्रत्यक्षसिद्धां गतिं साधनं पादौ तच्छक्तिं चाकाशगमनादिरूपाम् । लोकांल्लोकप्राप्तिसाधनं धर्मम् । 'त्वत्पादकमले हन्मि ब्रूहि तेऽथाथवा तपम्' इति पाद्मोक्तेः । तपो धर्मः । उभयोर्मध्ये यदिच्छसि यत्तवेष्टं तद्वदेत्यर्थः ॥ ७ ॥

रा० टी०—इमामिति । राम हे परशुराम ! यत् यदि त्वमिच्छसि तर्हीमां प्रसिद्धां त्वद्गतिं त्वत्कर्तृकं कामचारगमनं तपोबलसमर्जितान् तपोबललभ्यान् अप्रतिमान् प्राकृतोपमारहितान् लोकान् त्वन्निवासान् वा हनिष्यामि अपिना उभयविनाशमिच्छसि चेत्तर्ह्युभयं हनिष्यामि एतेन ब्राह्मणनिष्टं न करोमीति स्वमर्यादा व्यञ्जिता। एको वाशब्दस्तर्हीत्यर्थे ॥७॥

गो० टी०—ते तुभ्यं पादयोर्गतिं गमनं लोकान् लोकप्राप्तिं यदिच्छसि अनयोर्मध्ये यदिच्छसि तद्वदेत्यर्थः । यदीच्छसीतिपाठो युक्तः उभयथा प्रतिबद्धः क्वचित्तिष्ठेन्न लोकं पीडयेदिति रामस्य हृदयम् ॥ ७ ॥

८ ] ति० टी०—कुत एवमत आह—नहीति । वीर्येण स्वशक्त्या शत्रूणां बलदर्पविनाशनो मोघो व्यर्थः ॥ ८ ॥

रा० टी०—ननु विकल्पितं सर्वं नेच्छामीत्यत आह—नेति । परपुरंजयः वीर्येण बलदर्पविनाशनः दिव्योऽयं वैष्णवः शरः मोघः निष्फलः नैव पतति एतेन यत्रास्य शरस्य पातः सफलस्तद्वक्तव्यमिति सूचितम् ॥ ८ ॥

१ संगृह्येति रा. पाठः । २ वच इति गो.रा.पाठः । ३ पादगतिमिति गो.पाठः । ४ समार्जितानिति गो.पाठः । ५ ते हनिष्यामि यदिच्छसीति गो. पाठः ।

वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः । पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः ॥ ९ ॥
गन्धर्वाप्सरसश्चैव सिद्धचारणकिंनराः । यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥
जडीकृते तदालोके रामे वरधनुर्धरे । निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११ ॥
तेजोभिर्गतवीर्यत्वाज्जामदग्न्यो जडीकृतः । रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥
काश्यपाय मया दत्ता यदा पूर्वं वसुंधरा । विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ १३ ॥
सोऽहं गुरुवचः कुर्वन्पृथिव्यां न वसे निशाम् । तदाप्रभृति काकुत्स्थ कृता मे काश्यपस्य हि ॥ १४ ॥
तामिमां मद्गतिं वीर हन्तुं नार्हसि राघव । मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५ ॥
लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया । जहि ताञ्छरमुख्येन मा भूत्कालस्य पर्ययः ॥ १६ ॥

गो० टी०—वीर्येण स्वशक्त्या मोघो न पतति लक्ष्यमभित्वा न तूष्णीं पततीत्यर्थः ॥ ८ ॥

९ ] ति० टी०—वरायुधं वैष्णवं धनुः । समेता मिलिताः॥९॥

रा० टी०—रघुनाथोक्त्यनन्तरकालिकं वृत्तमाह—वरेति । वरायुधधरं सज्यीकृतवैष्णवधनुर्बाणधारिणं रामं रघुनाथं द्रष्टुं सर्षिगणाः सर्वशः सुराः पितामहं ब्रह्माणं पुरस्कृत्य तत्र रघुनाथसमीपे समेताः प्राप्ताः पितामहं पुरस्कृत्येत्युक्त्या सुराणां रामबाणभीतत्वं सूचितं तेन रामबाणस्य तेजोऽतिशयः सूचितः ॥ ९ ॥

गो० टी०—वरायुधेत्यादि । रामं तन्महदद्भुतं कर्म च द्रष्टुं समेता इत्यन्वयः ॥ ९ ॥ १० ॥

१० ] ति० टी०—तद्द्रष्टुम् आगता इति शेषः ॥ १० ॥

रा० टी०—गन्धर्वेति । महत्पूज्यं अद्भुतमाश्चर्यं तद्रघुनाथस्य कर्म द्रष्टुं गन्धर्वादयश्च समेता इति पूर्वेणान्वयः ॥१०॥

११ ] ति० टी०—वरधनुर्धरे रामेऽधिकरणे तस्य भार्गवस्यालोके तेजसि संक्रान्ते सतीति शेषः । 'ततः परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपागमत् ॥' इति नृसिंहपुराणात्, पूर्वोक्तपाठाच्च । अत एव भार्गवे जडीकृते सति निर्वीर्यः स रामो राममुदैक्षत उद्भूतविष्णुतेजस्कमपश्यदित्यर्थः ॥ ११ ॥

रा० टी०—जडीकृत इति । वरधनुर्धरे रामे दाशरथौ तदालोके परशुरामतेजसि जडीकृते आलोकनिष्ठजडीभवनानुकूलव्यापारवति सति निर्वीर्यो हतपराक्रमः असौ जामदग्न्यो रामः रामं दाशरथिमुदैक्षत तेजसो जडीभवनं विध्वंस एवेति भावः ॥ ११ ॥

गो० टी०—जडीकृत इति । लोके जने जडीकृते स्तब्धे निर्वीर्यः निर्गतवैष्णवतेजाः तथा च पुराणान्तरम् 'ततः परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपाविशत्' इति । उदैक्षत विस्मित इति शेषः ॥ ११ ॥

१२ ] ति० टी०—तदेव विवृणोति—तेजोभिरित्यादि । रामसंक्रान्तैस्तेजोभिर्हेतुभिर्गतवीर्यतया जडीकृतः परशुराम उवाच शरवध्यप्रश्नोत्तरमिति शेषः ॥ १२ ॥

रा० टी०—तेजोभिरिति । तेजोभिः रघुनाथप्रभावैर्हतवीर्यत्वाद्धेतोः जडीकृतो जामदग्न्यः कमलपत्राक्षं रामं मन्दं मन्दमेवोवाच । हशब्द एवार्थे ॥ १२ ॥

गो० टी०—उवाच प्रश्नोत्तरमिति शेषः ॥ १२ ॥

१३ ] ति० टी०—विषये देशे । एवमुक्तिश्च क्षत्रभीत्यादिनिवृत्तये ॥ १३ ॥

रा० टी०—तद्वचनमेवाह—कश्यपायेति । पूर्वं कश्यपाय वसुन्धरा मया यथा यथावद्दत्ता अत एव मे विषये देशे न वस्तव्यमिति मां कश्यपोऽब्रवीत् ॥ १३ ॥

गो० टी०—काश्यपायेत्यादि । यदाब्रवीत्तदाप्रभृति न वसे इत्यन्वयः गुरुवचः काश्यपवचः कुर्वन् परिपालयन् कुत इत्यत्राह—कृतेति । हिशब्दः प्रसिद्धौ यतः सर्वप्रसिद्धतया भूः काश्यपस्य स्वत्वेन कृता त्वद्विषये न वत्स्यामीति प्रतिज्ञा च कृता तस्मादित्यर्थः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—गुरुवचः काश्यपवचः । निशां रात्रिं न वसे तत्कार्षः । तदा यदा दत्ता यदा च न वस्तव्यमित्युक्तं तदाप्रभृतीति शेषः पृथिव्यां न वसे इत्यर्थः । यतो ह प्रसिद्धं काश्यपस्याग्रे प्रतिज्ञा कृता इति शेषः । पृथिव्यां रात्रौ न वसामीत्येवंरूपा प्रतिज्ञा कृता ॥ १४ ॥

रा० टी०—स इति । हे काकुत्स्थ! सः कश्यपेनोक्तोऽहं गुरुवचः कुर्वन् सन् यदाप्रभृति मे मया कश्यपस्य कृता कश्यपाय समर्पितेत्यर्थः इयं पृथिवीति शेषः तदाप्रभृति अस्यां पृथिव्यां निशां न वसे वसामि ह प्रसिद्धमेतत् ॥ १४ ॥

१५ ] ति० टी०—यदेवमतः—तामिमामित्यादि । तां मद्गतिमाकाशगमनसाधनौ पादौ चेन्न हनिष्यसि, तदा मनोजवं पादमास्थाय काश्यपेन समुद्रेण च दत्तं महेन्द्रं गमिष्यामि अन्यथा प्रतिज्ञाहान्या महत्संकटं स्यादिति भावः ॥ १५ ॥

रा० टी०—तदिति । हे राघव ! हे राम ! तत्तस्माद्धेतो इमां कामचारां गतिं गमनं हन्तुं त्वं नार्हसि अतः पर्वतोत्तमं महेन्द्रं मनोजवं यथा स्यात्तथा गमिष्यामि ॥ १५ ॥

गो० टी०—तदिमामिति । गतिः गमनम् ॥ १५ ॥

१६ ] ति० टी०—तपसा यज्ञादिरूपेण निर्जिता अर्जिताः । अत्र पुण्यार्जितलोकहननाभ्यनुज्ञया स्वस्य तत्त्वज्ञत्वं

१ हतेति गो. रा. पाठः । २ यथेति गो. पाठः । ३ हीति गो. पाठः । ४ तदिमां त्वमिति गो. रा. पाठः । ५ रामेति रा. पाठः । ६ तपसा निर्जिता इति रा. पाठः ।

अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम् । धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥ १७ ॥
एते सुरगणाः सर्वे निरीक्षन्ते समागताः । त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥
न चेयं तव काकुत्स्थ व्रीडा भवितुमर्हति । त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥
शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत । शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २० ॥
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् । रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१ ॥
स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् । जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा । सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २३ ॥

व्यङ्ग्यम् । रामस्य लोकदानप्रतिबन्धयोः स्वातन्त्र्यदर्शनेन परेशत्वबोधनं च । पाद्मेऽपि—'शतयज्ञकृतं पुण्यं तदस्त्राय न्यवेदयत्' इति ॥ १६ ॥

रा० टी०—लोका इति । हे राम ! मया तपसैव निर्जिताः समर्जिता येऽप्रतिमा लोकाः तान् शरमुख्येन जहि कालस्य पर्ययो विलम्बो मा भूत् । तुशब्द एवार्थे ॥ १६ ॥

गो० टी०—लोकहननं नाम लोकदानप्रतिबन्धः मूर्तस्य वा अमूर्तस्य वा कार्यस्य प्रतिहननमेव रामशरस्यापेक्षितमिति भावः ॥ १६ ॥

१७ ] ति० टी०—यतः "उतामृतत्वस्येशानः" इति श्रुतिप्रसिद्धं ब्रह्मैव त्वमित्याह—अक्षय्यमिति । अक्षय्यमनाद्यन्तं केनापि पराजयं नेतुमशक्यं च । एवं निश्चये हेतुर्धनुष इत्यादि। अस्य वैष्णवस्येतरदुरारोपस्य परामर्शो ग्रहणाकर्षणादि ॥ १७ ॥

रा० टी०—त्वं मया तत्त्वतो ज्ञातोऽसीति बोधयन्नाह—अक्षयमिति । न क्षयो विनाशः आश्रितानां यस्मात् तं मधुहन्तारं मधुं दैत्यं हन्ति विष्णुना घातयति तं विष्णोर्नियन्तारमित्यर्थः । किंच मधुहं मधौ चैत्रे जिहीते प्रादुर्भावं प्राप्नोति तं तारं तारः प्रणवः अस्ति बोधकत्वेनास्येति तारः तं, किंच तारं भवसागरपारकर्तारं सुरोत्तमं ब्रह्मादित्रिदेवेभ्यः श्रेष्ठं दानिश्रेष्ठं वा त्वामहं जानामि अतो हे परंतप ! अस्य वैष्णवस्य धनुषः परामर्शात् ग्रहणसज्यीकरणाकर्षणादेः ते स्वस्त्यस्तु ॥ १७ ॥

गो० टी०—अक्षयमिति । अक्षयं निर्विकारं मधुहन्तारं विरोधिनिरसनशीलम् अनेन न ब्रह्मा सेशान इतिमहोपनिषदुपबृंहिता । परामर्शात् ग्रहणात् ॥ १७ ॥ १८ ॥

१८ ] ति० टी०—अप्रतिद्वन्द्वं प्रतिभटरहितम् ॥ १८ ॥

रा० टी०—एत इति । समागताः एते सर्वे सुरगणाः अप्रतिमकर्माणमुपमारहितकर्मविशिष्टमत एव आहवे अप्रतिद्वन्द्वं त्वां निरीक्षन्ते ॥ १८ ॥

१९ ] ति० टी०—इयं त्वद्विषयेऽशक्तिर्व्रीडा व्रीडार्हा । तत्र हेतुस्त्वयेत्यादि । विमुखीकृतः स्वशक्तेः स्वस्मिन्योजनेनाशक्तः कृतः एतेन स्वस्य भगवदंशत्वं रामस्य च पूर्णभगवदवतारत्वं सूचितम् । स्वातिरिक्तेन विमुखीकरणे हि व्रीडा न तु स्वात्मना मायया तथाकरणे इति भावः । एतद्व्यवहारप्रयोजनं च दयया दशरथादीन्प्रति स्वरूपबोधनं रामस्य पूर्णतेजोवत्त्वसंपादनं चेति भाति वैष्णवतेजसोंऽशेनान्यत्र सत्त्वे रावणवधस्य दुष्करत्वात् एतदर्थमेव रावणवधेच्छुदेवगन्धर्वादीनां द्रष्टुमागमनं पूर्वमुक्तम् ॥ १९ ॥

रा० टी०—नेति । हे काकुत्स्थ ! इयं पराभूतिः मम व्रीडा तद्धेतुर्भवितुं नार्हति यद्यस्माद्धेतोः त्रैलोक्यनाथेन सर्वस्वामिना त्वया अहं विमुखीकृतः ॥ १९ ॥

गो० टी०—इयं त्वया विमुखीकृतः व्रीडा लज्जा ॥ १९ ॥

२०–२१ ] ति० टी०—शरमोक्षे गमिष्यामि पापस्य तपसा दग्धत्वात्पुण्यस्य च शरमोक्षेण फलप्रतिबन्धे जीवन्मुक्तो भूत्वा गमिष्यामीत्यर्थः अनेन लोकावरोधः स्वेष्ट एवेति दर्शितम् ॥ २० ॥ २१ ॥

रा० टी०—शरमिति । हे राम हे सुव्रत ! अप्रतिममुपमारहितं शरं मोक्तुं त्वमर्हसि शरमोक्षे सति पर्वतोत्तमं महेन्द्रमहं गमिष्ये ॥ २० ॥

रा० टी०—तथेति । जामदग्न्ये रामे तथा ब्रुवति सत्येव प्रतापवान् श्रीमान् दाशरथिः रामः उत्तमं शरं चिक्षेप ॥ २१ ॥

गो० टी०—शरमोक्षे सति । अहं दृष्टशरलक्ष्यस्वार्जितलोकगतिः ॥ २० ॥ २१ ॥

२२–२३ ] ति० टी०—दृश्य दृष्ट्वा ॥ २२ ॥ २३ ॥

रा० टी०—स इति । जामदग्न्यः स परशुरामः रामेण हतान् तपसार्जितान् लोकान् दृश्य दृष्ट्वा पर्वतोत्तमं महेन्द्रमाशु जगाम ॥ २२ ॥

रा० टी०—तत इति । ततः परशुरामगमनानन्तरं वितिमिराः अन्धकाररहिताः सर्वाः दिशः तथोपदिशश्च आसन्निति शेषः । अत एव मुदान्विताः सर्षिगणाः सुराः रामं प्रशशंसुः ॥ २३ ॥

गो० टी०—दृश्य दृष्ट्वा लोकान् हतान् लोकप्राप्तिहेतुकर्माणि विफलीकृतानीत्यर्थः ॥ २२ ॥ २३ ॥

१ अक्षयमिति गो. रा. पाठः । २ सुरोत्तममिति गो. रा. पाठः । ३ रामेति रा. पाठः । ४ गमिष्येऽहमिति रा. पाठः । ५ मुदान्विता इति रा. पाठः ।

रामं दाशरथिं रामो जामदग्न्यः प्रपूजितः । ततः प्रदक्षिणीकृत्य जगामात्मगतिं प्रभुः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ।

गते भार्गवे रामस्तद्धनुर्वरुणहस्ते ददौ । भार्गवनिर्गमनं श्रुत्वा हृष्टो दशरथश्चतुरङ्गिणीं सेनां प्रस्थाप्य स्वयं च पौरैरनुगम्यमानोऽयोध्यां प्रविवेश सपरिजनश्च यथासुखं विजहार । ततः कतिपयैरहोभिर्मातुलो युधाजिद्भागिनेयौ भरतशत्रुघ्नौ स्वपुरं निनाय । रामस्तु पित्राज्ञानुपालनपरः पौरकार्याणि कुर्वन् सीतया सुखं रेमे ।

गते 'रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते महायशाः ॥ १ ॥
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् । पितरं विकलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी । अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३ ॥
रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् । बाहुभ्यां संपरिष्वज्य मूर्ध्न्युपाघ्राय राघवम् ॥ ४ ॥
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः । पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५ ॥

२४ ] ति० टी०–रामो दाशरथिना ब्राह्मणत्वात्पूजितो नमस्कृतश्च । 'प्रशस्य ह' इति पाठान्तरम् । दाशरथिं प्रदक्षिणीकृत्य अन्तर्यामित्वेन ज्ञानात्प्रदक्षिणकरणं क्षत्रियत्वाच्च तस्य प्रणत्यकरणं कायेनेति बोध्यम् । आत्मगतिं तत्त्वज्ञानं स्वस्थानं जगामेत्यर्थः प्रभुरिति ब्रह्मत्वेन सर्वलोकप्रभुत्वम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

रा० टी०–राममिति । ततः महेन्द्राचलप्राप्त्यनन्तरं प्रभुर्जामदग्न्यो रामः दाशरथिं रामं प्रशस्य तदयालुत्वादिप्रशंसां कृत्वा प्रदक्षिणं प्रकृष्टा सर्वोत्तमा दक्षिणा आत्मसमर्पणरूपा यस्मिन् तत् कर्म कृत्वा आत्मगतिमात्मनः स्वस्य गतिं प्राप्य रघुनाथनियम्यत्वं जगाम प्राप ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

गो० टी०–आत्मगतिं स्वस्थानम् ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

१ ] ति० टी०–रामे परशुरामे प्रशान्तो गतक्रोध आत्मा चित्तं यस्य । हस्ते स्वहस्ते स्थितं धनुर्वरुणाय देवैः सह कौतुकदर्शनार्थमन्तरिक्षे स्थिताय ददौ न्यासात्मनेति शेषः । वरुणस्याप्रमेयत्वं भृगवे साक्षाद्ब्रह्मविद्याप्रदत्वात् इदं च तैत्तिरीयोपनिषदि स्पष्टम् ॥ १ ॥

रा० टी०–गते इति । रामे परशुरामे गते सति प्रशान्तात्मा महायशाः दाशरथी रामः अप्रमेयाय अन्यैरयं वरुण इति तस्मिन्काले प्रमातुमशक्याय वरुणाय हस्ते स्वकरे स्थितं धनुः वैष्णवचापं ददौ ॥ १ ॥

गो० टी०–अथ स्वपुरं प्राप्य सीतया रामः सुखमुवासेत्याह सप्तसप्ततितमे–गत इत्यादि । रामे परशुरामे वरुणाय न्यासत्वेनेति शेषः । अप्रमेयाय अदृश्यायेत्यर्थः ॥ १ ॥

२–४ ] ति० टी०–विकलं परशुरामभयेन । धनुर्दानवृत्तान्तस्य मायया तिरोधानमन्यान्प्रति ॥ २–४ ॥

रा० टी०–अभिवाद्येति । ततः चापदानानन्तरं रघुनन्दनो रामः वशिष्ठप्रमुखान् ऋषीन् पितरं चाभिवाद्य विकलं वीनां पक्षिणां कलं स्वस्वनीडगमनं यस्मिन् तं सायंकालं दृष्ट्वा प्रोवाच ॥ २ ॥

गो० टी०–विह्वलं परवशम् अनेन परशुरामेण कृतां परत्वसूचिकां स्तुतिं वरुणाय धनुर्दानं च दशरथो न ज्ञातवानिति गम्यते ॥ २ ॥

रा० टी०–तद्वचनमेवाह–जामदग्न्य इति । जामदग्न्यो रामो गतः अतो नाथेन त्वया पालिता चतुरङ्गिणी सेना अयोध्याभिमुखी सती प्रयातु सायंकालं दृष्ट्वापि चतुरङ्गिणी प्रयात्वित्युक्त्या अयोध्यादर्शनाभिलाषातिशयः सूचितः ॥ ३ ॥

गो० टी०–चतुरङ्गिणीति "प्रातिपदिकान्तनु–" इत्यादिना णत्वम् ॥ ३ ॥

रा० टी०–रामस्येति । राजा दशरथः रामस्य तद्वचः श्रुत्वा राघवं सुतं बाहुभ्यां संपरिष्वज्य मूर्ध्नि आघ्राय प्रमुमुदे इति शेषः ॥ ४ ॥

गो० टी०–रामस्येत्यादि । श्लोकद्वयमेकान्वयम् । रामस्य वचनं श्रुत्वा विह्वलतया अस्पष्टं वचनं श्रुत्वा गतो राम इति श्रुत्वा क्रमेण पुनः स्पष्टं श्रुत्वेत्यर्थः हृष्टः पुलकितः ॥ ४ ॥ ५ ॥ ६ ॥

५ ] ति० टी०–हर्ष एवाधिकावस्थः प्रमोदः ॥ ५ ॥

रा० टी०–गत इति । तदा रामोक्तिकाले रामः परशुरामो

१ प्रशस्य चेति गो. रा. पाठः । २ ससायकमिति गो. पाठः । ३ विह्वलमिति गो. पाठः । ४ तद्वच इति गो. पाठः । ५ मूर्ध्नि चाघ्रायेति गो. रा. पाठः ।

चोदयामास तां सेनां जगामाशु ततः पुरीम् । पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥ ६ ॥
सिक्तराजपथारम्यां प्रकीर्णकुसुमोत्कराम् । राजप्रवेशसुमुखैः पौरैर्मङ्गलपाणिभिः ॥ ७ ॥
संपूर्णां प्राविशद्राजा जनौघैः समलंकृताम् । पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ८ ॥
पुत्रैरनुगतः श्रीमाञ्छ्रीमद्भिश्च महायशाः । प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ॥ ९ ॥
ननन्द स्वजनै राजा गृहे कामैः सुपूजितः । कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥ १० ॥
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः । ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥ ११ ॥
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः । मङ्गलालापनैर्होमैः शोभिताः क्षौमवाससः ॥ १२ ॥
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् । अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥ १३ ॥

---

गतः इति श्रुत्वैव आहृष्टः परमहर्षं प्राप्तः प्रमुदितः प्रमुत् प्रकृष्टो हर्षः इता जनान् प्रापिता येन सः नृपो दशरथः पुत्रमात्मानं च पुनर्जातं मेने अत एव तां सेनां चोदयामास गन्तुं प्रेरयामास ततः प्रेरणानन्तरमेव पुरीमयोध्यामाशु जगाम॥५॥

६ ] ति० टी०—तां सेनाम् । प्रथमं क्षुभितां पश्चात्प्राप्ताश्वासां चत्यर्थः । जगाम *सेनेति शेषः । पताका ध्वजपटः ध्वजो दण्डः पताकायुक्तध्वजवतीम् । पताकाः क्षुद्रध्वजाः । ध्वजा महान्त इत्यन्ये । रम्यां स्वभावतः । उद्घुष्टं घोषः ॥ ६ ॥

रा० टी०—पताकेति । पताकाध्वजिनीं पताकया ध्वजवस्त्रेण युक्तो यो ध्वजः पताकादण्डः तद्वतीं रम्यां तूर्योद्घुष्टनिनादितां तूर्यजनितशब्दपूरिताम् ॥ ६ ॥

७–८ ] ति० टी०—सिक्तेन राजपथेना समन्ताद्रम्याम् ॥ ७ ॥ ८ ॥

९ ] ति० टी०—श्रीमद्भिर्दारपरिग्रहादाधिकलक्ष्मविद्भिः पुत्रैः । सुधालेपजधावल्यादौन्नत्याच्च हिमवत्सादृश्यं गृहे ॥ ९ ॥

रा० टी०—सिक्तैः राजपथैः रम्यां रमणीयां प्रकीर्णकुसुमोत्करां प्रकीर्णाः विस्तृताः कुसुमोत्कराः पुष्पसमूहा यस्यां तां राजप्रवेशसुमुखैः राजप्रवेशेन शोभनानि प्रफुल्लितानि मुखानि येषां तैः मङ्गलपाणिभिः पौरैः संपूर्णां जनौघैः समलंकृतामयोध्यां राजा प्राविशत् ॥ ७ ॥

रा० टी०—पौरैरिति । पौरैः अयोध्यापुरोद्भवैः पुरवासिभिः स्वाभीष्टसिद्ध्यर्थं तत्पुरनिवसनशीलैश्च द्विजैः दूरं प्रत्युद्गतः श्रीमद्भिः पुत्रैरनुगतः युक्तः महायशाः राजा दशरथः हिमवत्सदृशं प्रियं गृहं प्रविवेश ॥ ८ ॥ ९ ॥

गो० टी०—रम्यामिति पुनरुक्तिस्तत्तद्विशेषणकृतरमणीयत्वाभिप्रायेण पताका ध्वजपटः ध्वजः दण्डः पताकान्विता ध्वजा अस्यां सन्तीति पताकाध्वजिनीं ह्रस्वदीर्घध्वजभेद इत्यप्याहुः । उद्घुष्टमिति भावे निष्ठा तूर्योद्घोषेण संजातनिनादामित्यर्थः राजप्रवेशेन सुमुखैः विकसन्मुखैः मङ्गलमाशीर्वचनं वक्तुं शीलमेषामस्तीति मङ्गलवादिभिः ॥ ७–९ ॥

१० ] ति० टी०—कामैर्विषयभोगपरिकरस्रक्चन्दनादिभिः सुपूजितः प्राप्तपूजो ननन्द ॥ १० ॥

रा० टी०—ननन्देति । स्वजनैः कामैः इच्छाविषयीभूतपदार्थैः सुपूजितः राजा गृहे ननन्द ॥ १० ॥

रा० टी०—कौशल्येति । सुमध्यमा कौशल्यादिः अन्या कौशल्यादिभिन्ना या राजयोषितः ताश्च वधूप्रतिग्रहे वधूनां स्नुषाणां प्रतिग्रहः आचारपूर्वकस्वस्वगृहनयनं तत्र युक्ताः संसक्ता अभवन्निति शेषः ॥ ११ ॥

गो० टी०—जनः संबन्धिजनः गृहे स्थितैरिति शेषः । काम्यन्त इति कामाः विषयभोगपरिकरास्तैः ॥ १० ॥

११ ] ति० टी०—वधूनां स्नुषाणां प्रतिग्रहे मङ्गलाचरणपूर्वकं दर्शनस्पर्शने ॥ ११ ॥

रा० टी०—तत इति । ततः वधूप्रतिग्रहसंसक्त्यनन्तरं यशस्विनीं महाभागां सीतामूर्मिलां च उभे कुशध्वजसुते च नृपयोषितः कौशल्यादयः जगृहुः ॥ १२ ॥

गो० टी०—वधूनां स्नुषाणां प्रतिग्रहे उपचारे स्वस्वान्तःपुरानयने वा 'वधूर्जाया स्नुषा' इत्यमरः । युक्ता आसक्ताः आसन्निति शेषः ॥ ११ ॥

१२ ] ति० टी०—मङ्गलालापनैर्मङ्गलार्थमालापनैराशीर्वादैः उपलक्षिता इति शेषः । होमैर्गृहप्रवेशनीयहोमैः प्राप्तशोभनाः ॥ १२ ॥

रा० टी०—मङ्गलेति । मङ्गलालापनैः स्वस्तिवचनोच्चारणैः होमैश्च शोभिताः क्षौमवाससः पट्टवस्त्रवत्यः ताः सर्वाः देवतायतनानि प्रत्यपूजयन् ॥ १३ ॥

गो० टी०—जगृहुः अन्तःपुरं प्रावेशयन् ॥ १२ ॥

गो० टी०—मङ्गलालापनैः स्वस्तिवाचनैः शोभिताः 'मङ्गलालम्भनैः' इतिपाठे आलम्भनं चन्दनचर्चा देवतायतनानि गृहदेवतानामर्चागृहाणि प्रत्यपूजयन् गन्धपुष्पादिभिरपूजयन् आयतनपूजामात्रे स्त्रीणामधिकारादिति भावः ॥ १३ ॥

१३ ] ति० टी०—देवतायतनानि पुरगृहदेवतायतनानि ताः सर्वा राजसुताः स्नुषाः सर्वा राजपत्न्यः प्रत्यपूजयन्प्रणामयन्ति स्म । अभिवाद्यानभिवादनार्हानभिवाद्य नमस्कार्य ॥ १३ ॥

---

१ यद्यपि राजपथामिति गो. रा. पाठस्तथापि शिरोमणिटीकायां विरुद्धमिव दृश्यतेः । २ वादिभिरिति गो. पाठः । ३ पुनरिति गो. पाठः । ४ स्वजनो इति गो. पाठः । ५ कौशल्येति रा. पाठः । ६ उर्मिलामिति गो. पाठः । ७ पत्न्य इति गो. पाठः । ८ चैवेति गो. रा. पाठः । ९ तयेति रा. पाठः । *सेनयेति भाति ।

रेमिरे मुदिताः सर्वा भर्तृभिर्मुदिता रहः । [कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ॥]
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः । ॥ १४ ॥
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः । कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥ १५ ॥
भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः । अयं केकयराजस्य पुत्रो वसति पुत्रक ॥ १६ ॥
त्वां नेतुमागतो वीरो युधाजिन्मातुलस्तव । श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥ १७ ॥
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा । आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ॥ १८ ॥
मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ । युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ॥ १९ ॥
स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह । गते च भरते रामो लक्ष्मणश्च महाबलः ॥ २० ॥
पितरं देवसंकाशं पूजयामासतुस्तदा । पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ॥ २१ ॥
चकार रामः सर्वाणि प्रियाणि च हितानि च । मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ॥ २२ ॥

---

रा० टी०—अभीति । तदा पूजनकाले अभिवाद्यान् अभिवादनार्हान् अभिवाद्य भर्तृभिः सहिता एव मुदिताः सर्वा राजसुताः रहो रेमिरे। चशब्द एवार्थे ॥ १४ ॥

गो० टी०—अभिवाद्येति । सर्वा अभिवाद्य सर्वा रेमिरे इत्यन्वयः ॥ १४ ॥

१४ ] ति० टी०—कृतास्त्राः लब्धास्त्राः । 'कृताज्ञा' इति पाठेऽनुष्ठितपितृनियोगाः ॥ १४ ॥

रा० टी०—कृतेति । कृतदाराः प्राप्तभार्याः कृतास्त्राः प्राप्तशस्त्रास्त्राः सधना नित्यधनविशिष्टाः ससुहृज्जनाः पितरं शुश्रूषमाणाः नरर्षभाः रामादयः वर्तयन्ति वर्तन्ते णिजर्थोऽविवक्षितः ॥ १५ ॥

१५–१६ ] ति० टी०—वर्तयन्ति पितृक्तं कुर्वन्ति नरर्षभा रामादयः । कस्यचित्कालस्य अत्यये इति शेषः ॥ १५ ॥ १६ ॥

रा० टी०—कस्यचिदिति । अथ अनन्तरं कस्यचित्कालस्यापगमे सतीति शेषः । रघुसत्तमो राजा दशरथः केकयीपुत्रं सुतं स्वपुत्रं भरतमब्रवीत् ॥ १६ ॥

गो० टी०—वर्तयन्ति अनुवर्तयन्ति स्म ॥ १५ ॥

गो० टी०—कस्यचित्त्वथ कालस्य कस्मिंश्चित्काले गते सति ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—अयमिति । हे पुत्रक ! हे वीर ! त्वा त्वामानेतुमागतः केकयराजस्य पुत्रः तव मातुलोऽयं युधाजित् वसति । अत्र गच्छेत्यनुक्त्या पुत्रवियोगासहिष्णुत्वं राज्ञः सूचितम् ॥ १७ ॥

१७ ] ति० टी०—मातुलस्तवेति । अतस्तन्नगरं गत्वा गच्छेति शेषः । एतद्वाक्यम् ॥ १७ ॥

रा० टी०—श्रुत्वेति । तदा राजोक्तिकाले दशरथस्य एतद्वचनं श्रुत्वा शत्रुघ्नसहितः केकयीसुतो भरतः गमनाय अभिचक्राम ॥ १८ ॥

गो० टी०—मातुलस्तवेति अतो गच्छेति व्यञ्जनाद्दरथोक्तिः पुत्रविरहकातर्यात् ॥ १७ ॥ १८ ॥

१८–२१ ] ति० टी०—अक्लिष्टं कस्यापि दुःखं यथा न भवति तथा कर्तुं शीलमस्य तं रामम् ॥ १८–२१ ॥

रा० टी०—आपृच्छ्येति । वीरः नरश्रेष्ठः शत्रुघ्नसहितो भरतः पितरमक्लिष्टकारिणं रामं च मातृश्च आपृच्छ्यैव ययौ ॥१९॥

रा० टी०—युधाजिदिति । भरतं शत्रुघ्नं च प्राप्य प्रहर्षितो वीरो युधाजित्स्वपुरं प्राविशत् तेन तस्य पिता तुतोष । हो हेतौ ॥ २० ॥

रा० टी०—गत इति । भरते गते सति महाबलो रामो लक्ष्मणश्च देवसंकाशं पितरं तदोचितकाले पूजयामासतुः॥२१॥

रा० टी०—पितुरिति । पितुः आज्ञां पुरस्कृत्यैव प्रियाणि मनोहराणि हितानि उपकारकाणि सर्वशः पौरकार्याणि धर्मात्मा रामो नित्यं चकार । एकश्चकार एवार्थे एकश्चकारो नित्यार्थः ॥ २२ ॥

गो० टी०—अक्लिष्टं कस्यापि दुःखरहितं यथा भवति तथा कर्तुं शीलमस्यास्येति तथा ॥ १९–२१ ॥

२२ ] ति० टी०—प्रियाणि इहितानि । हितानि पर्यन्ते इष्टजनकानि पौराणाम् । परमत्यन्तं यन्त्रितः श्रुतिस्मृतिमर्यादाऽलङ्घी ॥ २२ ॥

रा० टी०—मातृभ्य इति । परमयन्त्रितः शास्त्रानुरोधित्वादतिसंकुचितवृत्तिः रामः मातृकार्याणि काले काले कृत्वा गुरूणां गुरुकार्याणि महान्त्यपि कृत्यानि अन्ववैक्षत विचार्याकरोदित्यर्थः ॥ २२ ॥

गो० टी०—परमयन्त्रितः परममत्यन्तं यन्त्रितः श्रुतिस्मृतिमर्यादानतिलङ्घी गुरुकार्याणि गुरूचितशुश्रूषादिकार्याणि अन्ववैक्षत परिपालयति स्मेत्यर्थः ॥ २२ ॥

---

१ सहिता इति गो. रा. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ वीरेति गो. रा. पाठः । ४ वीर इति रा. पाठः । ५ एतदर्धद्वयं गो. नास्ति । ६ धर्मात्मेति गो. रा. पाठः ।

गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत । एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ॥ २३ ॥
रामस्य शीलवृत्तेन सर्वे विषयवासिनः । तेषामतियशा लोके रामः सत्यपराक्रमः ॥ २४ ॥
स्वयंभूरिव भूतानां बभूव गुणवत्तरः । रामश्च सीतया सार्धं [1]विजहार बहूनृतून् ॥ २५ ॥
मनस्वी तद्गत[2]मनास्तस्या हृदि समर्पितः । प्रिया तु सीता रामस्य दाराः पितृकृता [3]इति ॥ २६ ॥
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभि[4]वर्धते । तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ॥ २७ ॥

२३ ] ति० टी०—गुरूणां तद्विषये परमयन्त्रितः । गुरुकार्याणि गुरुसंबन्धिशुश्रूषादीनि । नैगमा वणिजः ॥ २३ ॥

रा० टी०—एवमिति । रामस्य शीलवृत्तेन दशरथः प्रीतः एवं नैगमा ब्राह्मणाः प्रीताः तथा सर्वे विषयवासिनः प्रीताः ॥ २४ ॥

गो० टी०—एवमेतादृशेन शीलवृत्तेन नैगमाः वणिजः ॥ २३ ॥

२४ ] ति० टी०—विषयवासिनः प्रीता इति शेषः । तेषां चतुर्णां पुत्राणां मध्ये सत्यपराक्रमो राम एवातियशाः भूतानां मध्ये स्वयंभूरिव गुणवत्तरो बभूवेत्युत्तरेणान्वयः ॥ २४ ॥

रा० टी०—तेषामिति । सत्यपराक्रमः स्वयं भवति प्रादुर्भूततां प्राप्नोतीति स्वयंभूः रामः लोके भूतानां प्रादुर्भावं प्राप्तानां मध्ये अतियशाः गुणवत्तरश्च बभूव । इवश्चार्थे ॥ २५ ॥

गो० टी०—न केवलं शीलवृत्तेन किंतु सर्वैरपि गुणैरित्याशयेनाह—तेषामिति । तेषां ब्राह्मणादीनां मध्ये ॥ २४ ॥

२५ ] ति० टी०—बहूनृतून् द्वादशवर्षाणीत्यर्थ इति बहवः ॥ २५ ॥

रा० टी०—राम इति । रामः सीतयैव साकं बहून् ऋतून् विजहार । चशब्द एवार्थे ॥ २६ ॥

गो० टी०—एवं धर्मपरतां रामस्योक्त्वा धर्माविरुद्धकामाभिरतिं दर्शयति—रामस्त्वित्यादिना श्लोकचतुष्टयेन । रामस्तु तुशब्देन पूर्वस्माद्वैलक्षण्यमुच्यते पितृशुश्रूषणधर्मप्रवर्तनदेवताराधनादिकं हि पूर्वमुक्तं स एवंकर्ता संप्रति वात्स्यायनमभ्यस्य कामतन्त्रपरोऽभूत् सीतया अयोनिजया "सह युक्तेऽप्रधाने" इति तृतीया स्वाभाविकसौन्दर्यसमृद्ध्यैवावतीर्णापि भोगस्रोतस्यप्रधानाभूदिति रामस्य प्रावण्यातिशयः प्रदर्शितः विजहार परस्मैपदेन फलापर्यवसायितोच्यते "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति विहाररूपक्रियाफलस्य कर्तृगामित्वे ह्यात्मनेपदमेव भवेत् तथाच चिरतरविहारोऽपि भोगोपोद्घातकेलितां नातिशेत इति भावः । बहूनृतून् अत्यन्तसंयोगे द्वितीया तया भोगनैरन्तर्यं सूच्यते बहून् ऋतूनित्युक्तं नतु वत्सरानिति तेन तत्तदृतूचितभोगोपकरणैर्भोगान् स बुभुज इत्युक्तं मनोऽस्यास्तीति मनस्वी भूमार्थे मत्वर्थीयः तथाच संश्लेषदशायां सीतासंकल्पमप्यतिशय्य भोगस्रोतःप्रवर्तयितेत्यर्थः । नित्यं तद्गतः तस्यां गतः सप्तमीति योगविभागात्समासः । जातिगुणवदपृथक्सिद्धतया तदेकरसोऽभूदित्यर्थः । सर्वदा तदासक्तचित्तोऽभूदिति भावः । तस्या हृदि नित्यं समर्पितः सीतापि रामकृततत्तद्व्यापारेण वशीकृता तदायत्तचित्तासीत् नित्यं सुचिरं भोगेऽपि सद्यः संगतेव निरवधिकप्रेमभारभरिताभूदित्यर्थः । नित्यं तद्गत इत्यत्र हेतुमाह—प्रिया त्विति । तुरवधारणे पितृकृता दारा इतिहेतोरेव रामस्य सीता प्रियासीत् । तर्हि सीतावैलक्षण्यमकिंचित्करं नेत्याह—गुणात् भर्तृशुश्रूषणादिगुणात् रूपस्य देहस्य गुणात् सौन्दर्याच्च अपिशब्दोऽनुक्तसमुच्चयार्थः । आभिजात्यादिभिश्च प्रीतिर्भूयोऽभ्यवर्धत रामस्य सीतायामित्यर्थसिद्धम् अतो बहूनृतून्विजहारेत्यन्वयः ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—मनस्व्यनुकूलमनस्कः अत एव तद्गतमना नित्यं सीतागतमनाः । तस्या हृदि समर्पितः संबन्धसामान्ये षष्ठी तयेत्यर्थः एतेन परस्परानुरागो दर्शितः । पितृकृता ब्राह्मविवाहसदृशविवाहेन पितृदत्ताः स विवाह एव सर्वथा श्लाघ्य इति भावः ॥ २६ ॥

रा० टी०—विहाराकारमाह—मनस्वीति । तस्यां सीतायामेव गतं नित्यं संलग्नं मनो यस्य अत एव मनस्वी निश्चलचित्तो रामः तस्याः तया सीतया हृदि समर्पितः संस्थापित इवेत्यर्थः । पितृकृताः पित्रा समर्पिताः प्रिया अतिप्रीतिविषयीभूता रामस्य दाराः सीतापि रामस्य रामेण इत्यनेन प्रकारेण हृदि समर्पितेति लिङ्गविपरिणामेनात्रान्वयः । तुशब्दोऽप्यर्थे ॥ २७ ॥

२७ ] ति० टी०—नैतावदेव किंतु गुणाद्धितकारित्वपातिव्रत्यादिरूपात्, रूपं सौन्दर्यं तद्रूपाद्गुणाच्च, भूयोऽधिकं रामस्य प्रीतिर्वर्धते स्म । तस्याश्च हृदये गुणाद्रूपगुणाच्च भर्ता द्विगुणं परिवर्तते स्म ॥ २७ ॥

रा० टी०—गुणादिति । गुणात् परस्परमतिशयसौशील्यसौन्दर्यादेः रूपगुणात् परस्परनिष्ठरूपस्वरूपगुणाच्च प्रीतिः परस्परं प्रेम भूयोऽत्यन्तमभिवर्धते अत एव भर्ता रामः तस्याः सीतायाः हृदये द्विगुणं द्वयोरुक्तगुणयोः समाहारः परिवर्तते । गुणवत्त्वेनैव रूपेण परिवर्तते चशब्देन सापि तस्य हृदि गुणवत्त्वेनैव रूपेण परिवर्तते इत्यर्थः ॥ २८ ॥

गो० टी०—अथ रामस्येव सीताया अपि रामे निरन्तरानुरागं दर्शयन् तस्या हृदि नित्यं समर्पित इत्युक्तं विवृणोति—तस्याश्चेति । तस्या भर्ता रामश्च हृदये सीताया हृदये द्विगुणं यथा भवति तथा परिवर्तते रामाद्विगुणा प्रीतिः सीताया रामेऽभूदित्यर्थः । यथा रामस्य सीतायां प्रीतिः पितृकृतदारत्वकृता सौन्दर्यकृता च एवं रामेऽपि सीतायाः प्रीति-

१ तदेति गो. पाठः । २ तद्गतस्तस्य नित्यं हृदीति गो. पाठः । ३ इवेति रा. पाठः । ४ ऽभ्यवर्धतेति गो. पाठः ।

अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा । तस्य भूयो विशेषेण मैथिली जनकात्मजा ॥
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ ॥ २८ ॥

तया स राजर्षिसुतोऽभिकामया समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभे मुदान्वितो विभुः श्रिया विष्णुरिवामरेश्वरः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

र्नोभयकृता किंतु भर्तृस्वमात्रकृता वक्ष्यत्यनुसूयां प्रति सीता 'यद्यप्येष भवेद्भर्ता ममार्ये वृत्तवर्जितः । अद्वैधमुपचर्तव्यस्तथाप्येष मया भवेत्' इत्यादि अनेन गुणादित्युक्तरामविषयानुरागो विवृतः । एतादृशानुरागो रामेण कथं विज्ञायत इत्यत्राह-अन्तरिति । अन्तर्गतं सीताहृद्गतमपि हृदयगूढभावमनुरागमिति यावत् हृदा तर्केण अनुभावैरिति यावत् । व्यक्तमाख्याति जानाति चक्षिङः ख्याञादेशः सार्वधातुकेऽप्यार्षः । तस्य दर्शनार्थत्वं चक्षुरित्यादौ सिद्धम् । परकीयहृदयं कथं व्यक्तीभवतीत्यपेक्षायां तत्रैव सर्वदा परिवर्तमानत्वादित्युक्तं पूर्वार्धे । रामवत् सीतापि रामहृदयं विशेषेण व्यक्तं वेत्तीत्याह-तस्येति । तस्य रामस्य हृदयं सीता भूयो विशेषेण रामादतिरिक्तं जानातीत्यर्थः । रामो यादृशभोगमभिलषति तदिङ्गितेन ज्ञात्वा स्वयं तदनुरूपा भवति न तु तदतिरिक्तभोगमभिलषते एवं रामोऽपीति भावः । रामादप्यतिशयेन सीतायाः कान्तेङ्गितपरिज्ञाने हेतुचतुष्टयमाह-मैथिलीत्यादि । देशस्वभावाद्वंशस्वभावाच्च सूक्ष्मज्ञा देवताभिः समेतिप्रागल्भ्यमुच्यते रूपे विषये रूपिणी सर्वैर्दृश्यमानरूपवती श्रीरिव स्थिता । अनेन सहजबुद्धिविशेषो दर्शितः ॥ २७ ॥ २८ ॥

२८ ] ति० टी०-तस्य रामस्यान्तर्गतं हृदयं हृदयाभिप्रायं मैथिली हृदा स्वहृदयेन भूयोऽधिकं विशेषेण मैथिली जनकात्मजा रूपिणी श्रीरिव रूपे देवताभिः समा सीताख्याति जानाति । अतो ज्ञायते भर्ता तद्धृदयस्थ इति ॥ २८ ॥

रा० टी०-अन्तर्गतमिति । विशेषेण विशिष्टगुणादिना विशिष्टा सीता किंच या विशेषेण लक्ष्म्यादितोऽपि परतया विद्यमाना मैथिली मिथिलोद्भवा जनकात्मजा सीता रूपे देवताभिः समा श्रीरिव रूपिणी कविभिर्वर्ण्यत इति शेषः । सा हृदा बुद्ध्या अन्तर्गतं हृदये निवेशितमप्यभिप्रायं तस्य रामस्य समीपे व्यक्तं यथा भवति तथा भूयोऽत्यन्तमाख्याति कथयति । हृद् आश्रितसंतापनाशकोऽयं रामोऽपि आख्याति । सार्धश्लोक एकान्वयी ॥ २९ ॥

२९ ] ति० टी०-अभिकामया स्वविषयेच्छावत्या स्वेच्छाविषयया च, समेयिवान्संयुक्तः विभुर्विभुत्वशक्तिमान् अमरेश्वरो विष्णुः श्रियेव । 'तत्र द्वादशवर्षाणि राघवः सह सीतया । रमयामास धर्मात्मा नारायण इव श्रिया ॥' इति पाद्म उक्तम् । एकोनषोडशवर्षस्य विश्वामित्रेण नयनात्पञ्चदशवर्षसमाप्तौ विवाह इति बोध्यम् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

रा० टी०-तयेति । अभिकामया अभितः कामो यस्यास्तयोत्तमराजकन्यया तया सीतया समेयिवान् रामोऽतीव शुशुभे तत्र दृष्टान्तः अतिकामया श्रिया अमरेश्वरो विभुर्विष्णुरिव ॥ २९ ॥

श्रीमन्मैथिलराजराजतनयासंसेव्यमानं विभुं
सीतापद्ममुखालिमार्यमयतामाध्यात्मजं यः स्वभाः ।
सर्वव्यापकसच्चिदात्मकमयं ब्रह्माव्ययं तं मनो
नित्यं येन तदीयनित्यचरणान् द्रक्ष्यामि मे चक्षुषा ॥ १ ॥
वाल्मीकिरामायणबालकाण्डे टीका समाप्ता सविधे त्रिवेण्याः ।
रामायणादिर्हि शिरोमणिः सा श्रीरामहर्षाय सदैव भूयात् ॥ २ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

गो० टी०-एवमनवधिकमन्योन्यानुरागमुपपाद्य तदनुरूपभोगं दर्शयति-तयेति । राजर्षिसुतः महाराजसुतत्वेन निरवधिकभोगोपकरणवान् उत्तमराजकन्यया ततोऽप्यधिकतदुपकरणवत्या रामः रमयिता अभिरामया ततोऽप्यतिशयेन रमयित्र्या सः अतिशयितकामः अतिकामया रामादप्यधिककामयेत्यर्थः । तया सीतया समेयिवान् सम्यग्गेयिवान् एकीभावेन संश्लिष्टः स्वयंग्रहाश्लेषविषयीभूतः सन् 'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया' इतिवत् । विभुः प्रत्यालिङ्गनादिसमर्थः । अमरेश्वरो विष्णुः आदिविष्णुः श्रियेव मूर्तिभेदेनोपमानत्वं अतीव अतिशयेन शुशुभे रेजे तुल्यानुरागस्यातिशयितश्रीकामस्य भोगसमृद्धिहेतुत्वादिति भावः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

नेदे शास्त्रेषु वादेऽप्यनितरसुलभां कीर्तिमाटीकमानः
काव्यालंकारनाट्यप्रभृतिषु पटुधीः कोऽपि टीकाविधाने ।
शुद्धान्तःपद्मशुद्धान्तितमधुमथनः शुद्धसत्त्वैकमूर्तिगोविन्दार्यो विचार्य व्यतनुत विमलां बालकाण्डस्य टीकाम् ॥

**इति श्रीरामायणे बालकाण्डं समाप्तम् ।**

१ जातमिति गो. पाठः । २ ऽभिरामयेति गो, रा. पाठः । ३ ऽतिकामयेति गो. पाठः ।